दशोपनिषद्भाष्यकार - श्रीरङ्गरामानुजमुनिविरचिता

श्रीभाष्यव्याख्याश्रुतप्रकाशिकाव्याख्या

# भावप्रकाशिका






सम्पादिता

शिरोमणि - उत्तमूर् ति. वीरराघवाचार्येण

१९५८

श्रीः

भावप्रकाशिकायाः

# भूमिका

अर्थोपपन्नाद्भुतनैकरूपसुवर्णसंस्थानविशेषगुप्ते ।
विमान आनन्दगृहे यथैष श्रीभाष्य एवं परमो विभाति ॥

श्रीभाष्यव्याख्यायाः सुप्रसिद्धायाः श्रुतप्रकाशिकायाः व्याख्यारूपेयं भावप्रकाशिका संप्रति तिरुपति - तिरुमलै - श्रीवेङ्कटेश्वरदेवस्थानशासनमनुरुध्य संमुद्य प्राकाश्यं प्राप्यत इति नूनमिदं वेदान्तिनां विशेषतः प्रमोदस्थानम् । प्रथमतः श्रीमदुभयवेदान्तप्रवर्तकप्रकाण्डैः (ओप्पिलियप्पन् नवनीतं) श्रीकृष्णमाचार्यैः श्रीशारीरकशास्त्रार्थदीपिकाम् उपनिषद्भाष्याणि अन्यांश्च बहून् ग्रन्थान् अत्यन्तश्रद्धया मुद्रयित्वा प्रकाशितवद्भिरियं भावप्रकाशिकापि ग्रन्थलिपौ मुद्रितैव । पश्चात् वृन्दावने नागर्यां मुद्रिता केवलमंशतः । संप्रति तद्दौर्लभ्यात् दक्षिणोत्तरसर्वदेशप्रचारानुरूपं पुनर्मुद्रणमेतस्याः कार्त्स्न्येनेदानीमपेक्षितमासीदिति विभाव्य एतन्मुद्रणमुपक्रान्तम् । विश्वप्रसिद्धानां विशिष्टग्रन्थनिर्माणालंकर्मीणानां परमहंसपरिव्राजकाचार्याणामस्मदाचार्याणां श्रीरङ्गरामानुज (श्री कोलियालं स्वामि) महादेशिकानामाध्यक्ष्ये तदाश्रमे संमिलितायां सभायां यत् प्राक् उभयवेदान्तग्रन्थमालामुद्रणमवश्यकर्तव्यमवधारितमिति, यच्च वात्स्यैः सिद्धान्तप्रचारचक्रवर्तिभिः श्रीमदुभयवेदान्तप्रवर्तकाचार्यैः (कृताण्डकुप्पम्) श्रीरङ्गरामानुजचक्रवर्तिभिः विशेषद्रविणवितरणारम्भेण मूलभूतोपनिषद्भाष्यमुद्रणोपक्रमणं संविहितमिति, यच्च तन्मालामुद्रणकार्यनिर्वर्तनाय उदारमहापुरुषैरुत्तमनाड्विवाकैः संप्रदायप्रचारैकपरायणैः प्रसिद्धतमैः देशिकदर्शनरत्नदीप—श्री V. V. श्रीनिवासअय्यङ्गार् महाशयैः श्रीमन्तः राव्बहुदूर् जि. रङ्गस्वामिअय्यङ्गार् महाशयाः विदितपरमार्थाः आचारास्तिक्यसंपन्नाः सर्वकार्यनिर्वाहसमर्थाः एतत्कार्यदर्शिपदमध्यासिताः इतस्ततो द्रविणसंभरणेन अष्टोपनिषद्भाष्यमुद्रणं विनिवर्त्य परमेण प्रयत्नेन परिशिष्टा उपनिषदो भाष्यपरिष्कारोपस्कारेण यथापूर्वं

मुद्रयितुं श्रीवेङ्कटेश्वरदेवस्थानसमितेः स्वयं विनिश्चित्य सर्वं यथावन्निरवर्तयन्निति — तत् सर्वं तदनन्तरमेतां भावप्रकाशिकामपि मुद्रयितुमास्थामभ्यवर्धयत । श्रीभाष्यस्य श्रुतप्रकाशिकाभावप्रकाशिकाभूषितस्य मुद्रणं श्रीदेवस्थानेन सङ्कल्पितचरमेवासीत् । अथापि महीशूरश्रीपरकालमठे श्रीस्वामिपादैः मुद्रणं प्रारब्धमाकर्ण्य तत्रोद्यमो न न्यधायि । अथ तत्र भावप्रकाशिकाया अमुद्रणमभिज्ञाय श्रीमद्भिः पूर्वकार्यदर्शिभिः श्री जि. रङ्गस्वामि अय्यङ्गार् महाशयैः तथा तावत् प्रयत्नः पर्यग्राहि, यथासति देवस्थानसमितिरनेकमहापुरुषप्रार्थनमधिगम्य तं फलेग्रहिं कर्तुमादरकृताध्यवसाया भवेत् । तदेवमियमिदानीं प्रथममुद्रणा प्राकाश्यमधिगच्छति ।

सनातनधर्मस्थापनाय संवर्धने ब्रह्मणि श्रीनिवासे भक्तिसंधुक्षणाय च परमं प्रचारमादधतोऽस्य श्रीविष्णुदेवस्थानस्य भक्तिमार्गप्रवर्तकपरमाचार्यप्रचारित-विशिष्टाद्वैतसिद्धान्तग्रन्थानां सर्वेषां मुद्रणादावुत्साहः खलु प्राप्तरूपः । श्रीभगवद्रामानुजस्वामिपादाः वेदार्थसंग्रहमादौ विधाय श्रीश्रीनिवासस्यानुमतिमधिगम्य श्रीभाष्यमभाषिषतेति च संप्रदायः । स्वयमेतेऽपि श्रीभाष्यप्रारम्भे, "श्रुतिशिरसि विदीप्ते ब्रह्मणि श्रीनिवासे भवतु मम परस्मिन् शेमुषी भक्तिरूपा" इति । श्रीनिवासवैभवं यथावत् प्रतिष्ठापयितुमेव वेदान्तभाष्यं विधीयत इति खल्वत्राभिप्रायमाविष्कृतम् । इममाशयमनुरुन्धानाः श्रीरङ्गरामानुजमुनिर्भावप्रकाशिकायामन्येषु चात्मनः प्रबन्धेषु, "अनसीगुच्छसच्छायमश्रितोरःस्थलं श्रिया । अञ्जनाचल-शृङ्गारमञ्जलिर्मम गाहताम्" इति श्रीनिवासविषयमेव मङ्गलं न्यबध्नात् ।

अयञ्च विशिष्टाद्वैतसिद्धान्तो महर्षिकालतः प्रभृति पारम्पर्येण ब्रह्मनन्दिद्वारा तदनन्तरैरप्याहृतो विशेषभगवत्कटाक्षलक्ष्यभूतस्य श्रीमन्नाथमुनेर्योगिनाथस्यागाध-भक्तिसिन्धोः योगसाक्षात्कृतश्रीवकुलभूषणसूरिवरोपदिष्टसर्ववेदान्तद्रमिडप्रबन्धतदर्थस्य काले प्रकृष्टं प्रचारं प्राप — यस्य पौत्रं श्रीभगवद्यामुनमुनिम् आलवन्दार् इति विख्यातमधिकृत्य प्राञ्च इमं श्लोकं तत्कालकृतं पठन्ति ( यामुनवैभवे ) —

" षट्सप्ततिशतं पुनश्चदधिकं संन्यासिनो विंशतिः
  द्वात्रिंशत् गृहिणां परश्शतजनाः श्रीयामुनेयं श्रिताः ।

पञ्चाशत् प्रतिवादिनो युधि जिताश्चाऽऽसेतुहैमाचलं
प्रख्यातामलदिव्यकीर्तिविभवो जेजीयते यामुनः ॥"

इति। सोऽयं यौवने स्वपुत्रादिभिरुत्तरदेशप्रसिद्धं सरस्वतीभाण्डारं सर्वभाषाक्षरात्मक-सर्वकोशस्थानं शोधयितुं प्रस्थाय गोवर्धन-बृन्दावन-सालग्रामादिसर्वपुण्यक्षेत्रसञ्चारपूर्वं सरस्वतीस्थानं प्राप्य तत्र प्राचीनां ब्रह्मसूत्रवृत्तिं भगवद्बोधायनकृतां तदनुबन्धिनश्च बहून् द्रमिडभाष्यादीन् अवेक्ष्य आनन्दभरितान्तरङ्गः अवधारणीयान् अंशांश्चावधाय प्रतिनिवृत्तः श्रीवेङ्कटाचलमासाद्य श्रीनिवासं संसेव्य तत्र शिष्येभ्यः स्वदृष्टान् स्वसिद्धान्तान्तरभूतान् विशेषार्थान् सानन्दमुपदिदेशेति च तद्वैभववेदिनः। श्रीभगवन्नाथमुनिप्रणीतन्यायतत्त्वाख्यशास्त्रप्रकरणभूतेषु सिद्धित्रयादिषु चादसीय-ग्रन्थेषु अवगाढहृदामस्य सर्वपरमतपरिमर्दनप्राभवं प्रत्यक्षम्। नूनं तद्दर्शितैकदेशानु-वादमात्रं परमतखण्डनविषये श्रीभगवद्रामानुजग्रन्थेष्वपीति चानपलप्यम्।

तमिममनुरुध्य तच्छिष्यश्रीमहापूर्णमूलसमधिगतसर्वार्थः श्रीभगवद्रामानुजमुनिः स्वयमपि स्वशिष्यश्रीवत्साङ्कमिश्रसनाथ उत्तरदेशं प्राप्य बोधायनवृत्तिग्रन्थादिक-मवलोक्यावधार्य प्रतिनिवृत्य श्रीभाष्यादीन् ग्रन्थान् प्रणीय विशिष्टाद्वैतं दर्शनयामास। अत इदं भगवद्रामानुजमतमिति प्रथते। श्रीभगवद्यामुनमुनिसमय एव तत्पुत्रेष्व-न्यतमेन शोट्टैनम्बिनामधेयेन सह वादे प्रवृत्तो भास्करभट्टो नाम विद्वान् पराजितः स्वमतं परित्यज्य तदाश्रयणेन कृतकृत्यः संन्यास्थदिति च यामुनवैभवे उक्तम्। सोऽयं भास्करभट्टः शाङ्करमतखण्डको भास्कराचार्यः सूत्रभाष्यकृद्द्वैती, उतान्य इति विचार्यम्। दर्शनस्थापकस्य स्वबलादुद्धृतयादवप्रकाशाख्यार्वाचीनाद्वैताचार्यस्य श्रीभगवद्रामानुजस्वामिनः शिष्यवर्गश्चैवमगण्यत —

"संसेवितः संयमिसप्तशत्या पीठैश्चतुःसप्ततिसंख्यकैश्च।
अन्यैरनन्तैरपि विष्णुभक्तैः श्रीरङ्ग आस्ते यतिसार्वभौमः"॥ इति।

एतत्स्थापितेषु चतुःसप्ततिसंख्यातेषु पीठाधिपतिषु ये चत्वारः श्रीभाष्य-सिंहासनाधिपतयः, तेष्वन्यतमस्य नडादूर्सूरिरिति प्रसिद्धस्याचार्यस्य भगवद्रामानुजमुनि-

भागिनेयस्य पुत्रात् देवराजाचार्यादाविर्भूतः नडादूर् अम्माल् इति प्रसिद्धः श्रीवरदगुरुर्विष्णुचित्तार्यस्य विष्णुपुराणं व्याख्यातवतः शिष्यः श्रीकरिशैलशिखर एव श्रीभाष्यादिप्रवचनपरायण आसीदिति सुप्रसिद्धम् । तच्छिष्याश्च श्रीव्यासार्य-श्रीवादिहंसाम्बुवाहादयः, येष्वन्यतमस्यैव श्रीपराशरभट्टार्यपौत्रस्य श्रीव्यासार्यस्य श्रीसुदर्शनभट्टसूरेः कृतिषु श्रीभाष्यव्याख्या श्रुतप्रकाशिकाऽप्येका । अथ श्रीवरद-गुरुसन्निधौ बहुकृत्वः श्रीभाष्यं शृण्वन् प्रत्यहं तदानदा नवनवमुपदिश्यमानमर्थं पत्रारूढं विदधन् उत्तरवाराध्ययनप्रारम्भे पूर्वानेकवारोपदिष्टतत्तद्वाक्यार्थपरिशीलन-पूर्वमेवाचार्यमुपसन्नः स्थितः कदाचिद्विषयचर्चायां गोष्ठ्यां पृष्टः प्रतिपर्यायमुपदिष्टान् अर्थान् सर्वान् विज्ञाप्याचार्यानुग्रहविशेषमधिगम्य, तदातदा विलिख्य रक्षितं कोशमप्यवलोकितवता तेन 'भवत्त्वया: टीकायाः श्रुतार्थप्रकाशकत्वात् श्रुतप्रकाशिकेति नाम' इत्यादिष्टः तथनाम्नैव तां टीकां परिष्कृत्य प्रकाशनार्हां चकारेति, अथ तुरुष्का-क्रमणवशादात्मनो जीवितात्ययमासन्नमवबुध्य श्रीमन्निगमान्तमहादेशिकहस्ते टीकामिमां स्वपुत्रद्वयञ्च संरक्ष्यत्वेन समर्पयामासेति, अथ चाचार्यः महत्या श्रद्धया पुत्रद्वयं सम्यगध्यापयन् टीकाञ्च सर्वतःप्राप्तप्रचारामकार्षीदिति च निश्चप्रचमेतत् । श्रीहस्तिगिरे-रुपत्यकायामेव यादवप्रकाशः स्वशिष्यस्तोमसहितः प्रत्यहं कृतप्रवचन आसीदिति प्राग्भागे मण्टपमेकमद्याप्यैतिह्यविदः प्रदर्शयन्ति । श्रीवरदगुरुस्तु तस्याधित्यकायामेव श्रीभाष्यं प्रब्रुवन्नासीदिति तत्र गुरुशिष्यगोष्ठीप्रतिमादर्शनादपि सुग्रहम् । कुतस्तत्रैव प्रवचनमरोचतेत्यत्र कारणमपि कदाचिदाचार्यो वरदगुरुः शिष्यान् प्रति श्लोकेनैकेना-ऽऽह स्मेति कथयन्ति; य एषः —

"परं तत्त्वं श्रीमानहम्, अपि च भेदो मम मतम्<br>
प्रपत्तिस्तूपायश्चरमसमये न स्मृतिरपि ।<br>
शरीरान्ते मोक्षो गुरुरपि महापूर्ण इति तान्<br>
अवादीदर्थान् षड् वरद इह पूर्णाय हि पुरा ॥" इति ।

विशिष्टाद्वैतमित्यस्मत्सिद्धान्तस्य नाम तावत् अद्वैतश्रुतिनिर्वाहप्रकारप्रति-बुबोधयिषया पश्चात् प्रवर्तितम् । तत्त्वस्थितौ भेद एवास्मन्मते । अनेन

श्रीवरदगुरुणापि तत्त्वसार - तत्त्वनिर्णय - प्रमेयमालादयो विशिष्टाद्वैतग्रन्था विरचिता: समुल्लसन्ति ।

अस्य नडादूर् आल्वानितिप्रसिद्धश्रीभाष्यकारप्रियभागिनेयपौत्रस्य नडादूर्-अम्मालिति प्रसिद्धस्य श्रीवरदगुरोर्वंश्य एव घटिकाशतमम्माळ् इति प्रतीत: श्रीवात्स्यवरददेशिको यतिराजविजयादिविविधग्रन्थनिर्माणख्यापितनिजकविताप्राण्डित्य-प्रकर्ष: श्रीमदादिवण्शठकोपयतीन्द्रमहादेशिकस्य सामग्र्येणाचार्य: । एतत्प्रवर्तित-श्रीलक्ष्मीनृसिंहास्थानधुरन्धरतामास्तिकलोकाभ्यर्थनया स्वीकृतवत: तत: षष्ठस्य श्रीषष्ठपरांकुशस्वामिन: प्रियभागिनेय: पञ्चमतभञ्जनतातदेशिक:, 'शुकतातं त्रयीमार्गे तत्तातं तत्त्वनिर्णये । तत्ततातमाचारे ताताचार्यमहं भजे ' इति प्रख्यात: प्रकृतस्य भावप्रकाशिकाकर्तु: श्रीरङ्गरामानुजस्वामिन: पञ्चसंस्कारगुरुरिति, श्रीतातगुरुसेवात्त-वेदान्तयुगलाशय: वात्स्यानन्तगुरु: श्रीमान् वेदान्तार्थोपदेष्टेति च अदसीयच्छान्दोग्य-भाष्योपक्रमगतश्लोकादितो विदितमेव । अयं श्रीरङ्गरामानुजस्वामी ब्रह्मचर्यादेव प्राप्तसन्यास इति कैश्चिदुक्तमुपनिषद्भाष्यमुद्रणावसरे एतद्वृत्तान्तप्रस्तावे भूमिकायामन्व-वादिषम् । अनेन गार्हस्थ्यमलंकृत्य क्रमेणैव संन्यासोऽप्याद्रियतेति संप्रति विज्ञायते । यत: पञ्चमतभञ्जनतातगुरुणा स्वानुजपुत्राय स्वस्वीकृतपुत्राय श्रीलक्ष्मी-कुमारतातदेशिक इति प्रसिद्धाय श्रीमद्रङ्गरामानुजस्वामिकुमार्येव प्रतिगृहीताऽऽसीदिति दिनमण्यनुबन्धे ताताचार्यवृत्ते ( 8-12-57 ) प्रकाशितमुपलभ्यते । एवन्त्वे श्रीकाञ्चीदेवराजस्वामिवाहनमण्टपानन्तरे श्रीमद्वेदान्तदेशिकसंनिधौ प्रतिमारूपेण विराजत: सपत्नीकस्य श्रीलक्ष्मीकुमारतातदेशिकस्य धर्मपत्नी सव्यपार्श्वे स्थिता नूनमियं श्रीरङ्गरामानुजस्वामिकुमार्येव भवितुमर्हति । अस्य स्वामिन: पूर्वाश्रमनामधेयं **श्रीवरदविष्ण्वाचार्य** इतीति एतदीयभावप्रकाशिकातालकोशे क्वचित् मुद्राङ्कन-वाक्यादवगम्यते । एतदर्थमेव च प्रकृतमुद्रणे भावप्रकाशिकाप्रथमाध्यायावसाने यथातालकोशोपलब्धं मुद्राङ्कनवाक्य (६३० पु.) मिह मुद्रितरक्षितमस्ति ।

अयं दोड्डयाचार्य इति प्रसिद्धान्महाचार्यादर्वाचीन इति तत्कृतस्य पाराशर्य-विजयग्रन्थस्यात्र (३०८ पु.) उल्लेखात् निरणायि । अत एव तत्समसामयिकत्वेन प्रसिद्धादप्पय्यदीक्षितादप्यर्वाचीन इत्यनुक्तिसिद्धम् । विशिष्य च न्यायरक्षामणिशिवार्क-

मणिदीपिकादितदीयग्रन्थगतानां विषयाणां तथैवानुपूर्व्याऽत्रानुवदनात् अपेक्षितस्थले अंशतस्तत्परिष्करणात् तद्विवरणात् तत्खण्डनात् वादनक्षत्रमालायां तदुक्तहिंसाशब्दार्थस्य, 'अशुद्धमिति चेन्न शब्दात्' इत्यत्र खण्डनाच्च विशदमिदम्। नूनमत्र मुद्रणे तादृशस्थलेषु तदीयग्रन्थसाक्षाद्दर्शनेनैवास्माभिरपेक्षितशोधनं व्यधायि। क्वचिदेतद्ग्रन्थगतानुपूर्वीदर्शनेनोन्नीयते, तदीयग्रन्थेषु तदीयैर्मुद्रितेष्वपि अंशोऽशुद्धश्च तत्रतत्र स्त इति। सर्वथा स्वयमाचार्यः व्याकरणे मीमांसायाञ्चापि तत्परामर्शं तत्रतत्रानूद्य प्रायेण खण्डयति। गुणस्य सर्वतोग्राह्यतया बहु चोपजीव्यं तथैवानुपूर्व्याऽनुवदन् आद्रियते।

अर्थतः शब्दतो वाऽपि पूर्वैरुक्तार्थसंग्रहान्।
अनुक्तापेक्षितोक्त्या च ग्रन्थाः श्रोतुर्हितावहाः॥
स्वपूर्वाचार्यसूक्तीनामलाभे परसूक्तयः।
अद्वेषादनुवाद्याः स्युरयुक्तांशो निरस्यताम्॥
इत्युदारोऽयमाचार्य उपयुक्ता उदाहरेत्।
पूर्वोक्तैरेतत्तन्त्रस्थाः परोक्तीर्बाधिकाः क्षिपेत्॥

सर्वत्र गुरुपरम्परायामीदृशाः सर्वेष्वपि शास्त्रेषु समग्रं सर्वतोमुखं वैदुष्यं प्राप्य सर्वसुगमया विशदया वाक्सरण्या स्वाभिमतमर्थं वाचकहृदयेषु व्यक्तमेवार्पयन्त आचार्यतल्लजा नूनं विरला एव। श्रीमतो न्यायसिद्धाञ्जनस्यैतदाचार्यकृतं व्याख्यानं यदि नाभविष्यत्, नूनमेकमप्यक्षरं यथावद्वेदितुं न कश्चिदपारयिष्यदिति तद्व्याख्यानकृतौ विश्वप्रसिद्धस्य सर्वशास्त्रप्रवचनप्राप्तयशसः श्रीतिरुप्पक्कुलिस्वामिनः सुभाषितमिति आचार्या आहुः स्म। न्यायसिद्धाञ्जनव्याख्यानादय एभिर्विरचिताः ग्रन्थाः षष्टिरिति प्रसिद्धिः। ज्ञाता ग्रन्था उपनिद्भाष्यभूमिकायामेव निरदेशिषत। अत्र भावप्रकाशिकायां पदेपदे श्रीभाष्यश्रुतप्रकाशिकादौ यथावस्थितपाठपरिशीलनं शब्दसौष्ठवनिर्धारणाय व्याकरणसूत्रतद्व्याख्यानादिगतिनिरूपणञ्च विशिष्टमस्य वैयाकरणत्वं व्यक्तमेव कथयति। यथैतत्, तथैव पूर्वमीमांसान्यायोदाहरणमप्यधिकमत्र। ऐकशास्त्र्यमभ्युपगम्य जैमिनीयं षोडशलक्षणमादृत्य शिष्यसहितेन स्वेन कृत्स्नो

वेदो मीमांसित इति कृतकृत्यभूतेन वेदव्यासेन भगवता बादरायणेन तत्रतत्र
तदुक्तमिति पूर्वमीमांसोदाहरणात्, तदनुसारात् तथाऽपेक्षितत्वात् अद्वैतिनोऽपि
पूर्वमीमांसान्यायान् अन्तेवासिहृदयेष्वभिसंहितार्थव्यक्तविन्याससौकर्यमत्या सरसमुपन्य-
बध्नन्। तत्राधिकं प्रवृत्तो भामतीकारः, अधिकतरं कल्पतरुकारः, अधिकतमञ्च
परिमलकारो मीमांसकमूर्धन्योऽप्पय्यदीक्षितः। तदुक्तार्थयुक्तायुक्तविमर्शवैयग्र्यात
तत्तन्निन्यायप्रविवर्तविषया चायमप्याचार्यः तत्रतत्र पूर्वमीमांसामनूद्य परिष्कृत्य
एकशाख्यावलम्ब्यात्मसम्प्रदायानुगुणमेव तत्र भागेऽप्यन्यादृशं वैदुष्यमात्मीयमा-
विष्करोति।

भगवता भाष्यकृता आनन्दमयाधिकरणे स्वयमरुणाधिकरणपरिष्करणेन
अर्वाचां पूर्वमीमांसाव्याख्यातॄणां क्वचित् क्वचित् स्खालित्यमस्तीत्यदर्शि। श्रुत-
प्रकाशिकायामप्याकृत्यधिकरणादौ तत्कृतः सिद्धान्तो न हृद्य इति न्यरूपि।
सामग्र्येण पूर्वमीमांसां परिष्कृत्य प्रतिसूत्रं यथावस्थितमर्थमधिगमयितुं सेश्वरमीमांसा
श्रीमन्निगमान्तमहादेशिकावतारिता नूनमस्मद्भाग्यक्षयादेवादर्शनमगच्छत्। उपक्रमांश-
मात्रमुपलभ्यते। एवमप्ययं भावप्रकाशिकाकारः स्वयं सूक्ष्मया धिया सिद्धान्तानुगुणं
तत्तदधिकरणार्थं शिक्षयित्वा निबध्नातीतीदमनुभवतामदसीयपाण्डित्यप्रकर्षानुभवा-
नन्दस्तावदवर्जनीयः। एतावत्तन्त्रान्तरज्ञानोपस्कृतं प्रकृष्टमस्य तर्कशास्त्रज्ञानं सुरभि-
सुवर्णायते।

ईदृशोऽयं श्रुतप्रकाशिकां व्याकुर्वन् श्रीभाष्यश्रुतप्रकाशिकयोरद्वैतग्रन्थोक्तार्थ-
विचारात्मकत्वात्, विशिष्य च श्रुतप्रकाशिकायां प्रत्यधिकरणं परापरेतरशब्दैः
शांकरभास्करयादवप्रकाशावलम्बिनां निर्देशेन तदुक्ताधिकरणार्थखण्डनात् तादृशेषु
स्थलेषु पुरोवादग्रन्थानुपूर्वीदर्शनेन तदर्थशोधनेन तदनुवादयाथार्थ्यविमर्शनेन
तद्विषयखण्डनसौष्ठवपरिशीलनेन च, पक्षपातं विना माध्यस्थ्ये स्थित्वा तत्त्वपरीक्षणेन
स्वसिद्धान्तार्थस्थापनं यथैष आचार्यः करोति, न तथा कश्चिदन्यः कुर्यात्, न
वा प्रभवेदिति निश्चिनुमः। तदिदं (२३१ पुटे अथवा पूर्वं पश्चाच्च) पदेपदे
सुव्यक्तम्। तत्र श्रुतप्रकाशिकाया आपातार्थत्यागेन परग्रन्थार्थानुवादरूपतया

तदनुगुणमर्थशिक्षणमपि विद्यते । मन्ये समुद्रत्वात् श्रुतप्रकाशिकायाः आनुपूर्व्या पुरोवादपरिशीलनपूर्वकपठनप्रयासशान्तिः प्रायेण नाभवदिति कालक्रमेण तत्तत्राऽऽनुपूर्व्यंऽप्यन्यथात्वमापतितम् । लघुसिद्धान्ते, 'अथ योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति, न स वेद अकृत्स्नो ह्येष' इति श्रुत्यानुपूर्वी अभिमतेव व्याख्यानेपि लक्ष्यते । तदनुसारिणी भावप्रकाशिकापि । तथापि तत्र पाठान्तरमस्तीति भावप्रकाशिकाकर्तुरेव छान्दोग्यभाष्याद् ज्ञायते । एवं बहुत्र । श्रीभाष्येपि श्रुतिपाठः भाष्यकृदनुदितक्रमेणार्वाचीनैर्न रक्षितः । सर्वत्र शुद्धपाठनिर्धारण सौकर्यार्थं । प्रथमतो मूलग्रन्थभूतानामुपनिषदां यथावन्मुद्रणमस्माभिरुपक्रान्तम् ; भगवतः श्रीवेङ्कटेश्वरस्यानुग्रहात् निष्पादितञ्च । एतदनुरोधेन श्रीभाष्यश्रुतप्रकाशिकयोर्यथावत् बहुतालकोशदर्शनपूर्वं विशोधनेन मुद्रणं विधेयमिति या तावदस्मदाचार्योपदेशमूला बहुसुहृज्जनप्रेरणपोषिता चास्माकमास्था, सा किं यथावत् पूरिता भविष्यतीति स एव श्रीनिवासो जानाति । संप्रति तु भावप्रकाशिकामुद्रणं स एष निरवर्तयदिति महानेवायमुपकारः । तालकोशाश्चैतदर्थं शोधिताः । श्रीभाष्ये 'श्रुतिरेव न व्यभांक्ष्यत, व्यभांक्षीत्तु सा' इति दृश्यमानः पाठो न समीचीनः, विभजनस्यैव प्रकृतत्वात् ( विभञ्जनस्याप्रकृतत्वादिति यावत् ) इति विमृश्य शुद्धपाठं भावप्रकाशिका दर्शयति. तत्र मुद्रयितारः शुद्धपाठं मुद्रणीयमशुद्धपाठमत्यैव मुद्रयन्ति चेत, भावप्रकाशिकाकार्यं किं निर्वृत्तं स्यात् । तदेवमादितोऽनेकम् । तदियं भावप्रकाशिका बहुस्वतन्त्रविचारगर्भा परमतयाथार्थ्यप्रदर्शिनी संपन्नार्जवा श्रुतिसूत्रभाष्यश्रुतप्रकाशिकार्थान् सम्यग् व्युत्पादयतीति एतद्ग्रन्थकर्तृविषये अस्माकमाधमर्ण्यमपरिहार्यम् ।

वेदान्त-सूत्र-भाष्यस्थवाक्यानामपि लक्ष्यते ।
श्रुतप्रकाशिकायाश्च सेयं भाव-प्रकाशिका ॥

प्रत्यधिकरणं विचारणीयविषयवाक्यानि यथावदनूद्य तदर्थमपि संगृह्य दर्शयति भावप्रकाशिका । अन्यथा खल्वधिकरणपूर्वपक्षोत्तरपक्षगमनिका — तद्बलाबलविज्ञानं कथमपि न भविष्यति । एवमुपनिषत्पाठः कश्चिन्महते उपकारायाप्यासीत् ; यतः अदृश्यत्वादिगुणकाधिकरणे श्रीभाष्ये श्रुतप्रकाशिकायाञ्चोक्ताः केचिद् विषयाः

यादृशमुण्डकपाठावलम्बनेन, स पाठ उपनिषत्तद्भाष्यदर्शनेनापि नोपलब्धुं पार्यते। अस्माभिस्तु एतद्दर्शनेनैव यथावस्थितमुण्डकोपनिषत्पाठमुद्रणं प्राग् व्यधायि। अत्र भावप्रकाशिकायां पाठरीतिरेव तदर्थग्रहणानुगुणाऽऽसीत्। यद्यपि भावप्रकाशिका-निर्माणानन्तरमेवोपनिषद्भाष्यरचनम्। तदिदमत्र बहुलं शाङ्करीत्यैवोपनिषद्वाक्यार्थ-वर्णनात् उपनिषद्भाष्येषु अन्यादृशपूर्वोत्तरसंदर्भानुरूपार्थान्तरवर्णनाच्च ज्ञायते— अथापि मुण्डकविषये एतदीयभाष्यव्याख्यातात् पाठादेतदीयभावप्रकाशिकादर्शितो मुण्डकषट्कपाठ एव श्रीभाष्यश्रुतप्रकाशिकानुरोधीति प्रतिपत्तव्यम्॥ तत्रतत्र मूलं किं श्रुतप्रकाशिकादर्शितरीत्यैव व्याख्येयम, उतान्यथापि व्याख्यातुं शक्यम्, अन्यथैव वा व्याख्येयमिति मूलाक्षराणि टीकाक्षराणि च सावधानं विमृश्यानु-चिन्तयतोऽस्याचार्यस्य तदेकव्यग्रता वेदान्तार्थविज्ञानैकभोगता चानुसंधीयमाना, तथाऽस्माभिर्वर्तितव्यमित्याशामवश्यमेव रसिकेषु विज्ञानार्थिषु विदध्यात।

श्रुतप्रकाशिकातः पूर्वमेव श्रीभाष्यस्य बहूनि व्याख्यानान्यासन्। तथापि तेषां प्रतिभाष्याक्षरविहितविवरणत्वाभावात् कचिद् गहनत्वात् कचित स्वतन्त्र-प्रासङ्गिकविचारबहुलत्वाच्च तद्विलक्षणा तत्सर्वोपजीविनी सेयं टीकैव कथञ्चित् सुरक्षि-ताऽऽसीत्। श्रुतप्रकाशिकाचार्येणैव श्रुतप्रदीपिकेति लघ्वी काचित् टीकापि न्यबन्धि। एवं भावप्रकाशिकातः पूर्वमपि तूलिकेति किञ्चित् टीकाव्याख्यानमासीदिति तूलिका-नाम्नाऽत्र ग्रन्थोल्लेखादप्यवगम्यते। नूनं सा तूलिका वाधूलश्रीनिवासाचार्यविरचिता श्रीवेङ्कटेश्वरकोशालये अमुद्रिता दृश्यमानैव स्यात्। अस्त्यपरं व्याख्यानं तात्पर्यदीपिकाख्यम्, यस्य कर्ता क इति न ज्ञायते। गुरुभावप्रकाशिका लक्ष्मणार्यकृता काचिदस्ति। तत्र गुरुशब्दाधिक्यादेतदुत्तरकालकृतत्वं तर्क्यते। एवं चम्पकेशीयं चम्पकेशाचार्यकृतमप्यस्ति। विस्तृतत्वात् श्रुतप्रकाशिकायाः प्रत्यक्षरविवरणे वर्तते ग्रन्थ इति व्याख्यातारः सर्वेऽपि गच्छद्व्याख्यानमेव चिकीर्षन्ति स्म। तस्माद् बहु परित्यक्तमपि भवति। अतः सर्वमपि व्याख्यानं सर्वमवगाह्य समग्रसभ्यवसायवताभावश्यकमेव भवति, यदि इतः परमपि केचिद् व्याख्यातुं व्यवस्येयुः। के नु धार्मिकाः तथा प्रवर्तिष्यन्ते, यथा सर्वेऽपि

विशिष्टाद्वैतग्रन्थाः संशोध्य संमुद्य सिद्धान्तरक्षार्थे प्रकाशिताः भवेयुः । अर्थं व्यर्थमेव व्यययन्ति प्रायः । विवेको हन्त दुर्लभः ।

भावप्रकाशिकाया अस्या अपि भावप्रकाशनार्थं टीका तत्तत्रापेक्षितैव । स्थालीपुलाकनीत्या किञ्चिदत्र निदर्श्यते — आरम्भ एव 'वरदं द्विरदाद्रीशमिति पदद्वयप्रतीकधारणं कृतमस्ति । प्रथमपदमात्रस्य धारणे पर्याप्तेऽपि पदद्वयधारणं भावप्रकाशिकेयं श्रीभाष्यव्याख्ययोर्व्यासार्थविरचितयोः श्रुतप्रकाशिकाश्रुतप्रदीपिकयोः प्रथमव्याख्याया एव व्याख्यानरूपेति ज्ञापनस्फूर्तये । उत्तरवाक्यारम्भ एव तन्निर्धारण-संभवेऽपि प्रथमवाक्यत एव तदवगमनं चिकीर्षितमिति । श्रुतप्रदीपिकायां पुनरेवं मङ्गलश्लोकः —

"वरदं द्विरदाद्रिशेखरं कमलाया दयितं दयानिधिम् ।
सकलार्थिजनार्थितप्रदं प्रणमामि प्रणतार्तिहारिणम् ।" ॥ इति ।

अत्र शरण्यमित्युक्तं तत्र सकलार्थिजनार्थितप्रदमिति विवृतम् । शरणं यामीत्येतत् प्रणमामीति संगृहीतम् । हरिमिति विशेष्यसमर्पकं पदम् । वरद-मित्यादीनि विशेषणानि तत्रत्यानां पञ्चानां वेराणां नामधेयानीति संप्रदायविदः । स्वाचार्यवरदगुरुरूपेणायं वरद एवावतीर्ण इति च हृदयम् । श्लोकोऽयं हरि-गुरूभयविषयकस्ततो भवति । वरद इति स्वाचार्यग्रहणम् । द्विरदाद्रीशमित्यनेन स्वगुरुः द्विरदाद्रिशिखर एव वेदान्तप्रवचनं वितन्वन्नास्तेति ज्ञाप्यते । श्लोकान्तरेऽपि द्विरदाद्रिशेखरमिति पदम् । हरिमिति गुरोर्भगवदवतारत्वदर्शि । श्रीरङ्गाभिजनस्यास्य वरदविषयकमङ्गलाचरणं वरदगुरोरिष्टदेवतामूर्तिरिति मत्या, मङ्गलमिदमुभयविषयकं भवतीति पर्यालोचनया च । विशिष्यापि स्वगुरुविषयकं मङ्गलं वर्तयिष्यति ।

पु. २. **प्रणवाकारं प्रणवसदृशमिति** । श्रीभाष्यस्य अकारेणोपक्रमः मकारे-णोपसंहारश्च स्पष्टावेव । प्रथमचतुर्थारम्भगतम् उकारं मध्यमं कृत्वा आदिमध्यावसानेषु प्रणवघटकाकारोकारमकारशालितया श्रीभाष्यस्य प्रणवाकारत्वं श्रीमतो रामायणस्य गायत्र्यात्मकत्वमिवेति संप्रदायः । श्रीरङ्गविमानस्यापि प्रणवाकारता प्रणवसमानाकार-

स्वम् । श्रीरङ्गश्रीभाष्ययोरेवं प्रणवाकारत्वविधानञ्च शेषिभूतब्रह्मप्रकाशयितृत्वस्य तन्मुखेन प्रणवलभ्यफललम्भकत्वस्य च प्रणव इवात्र स्थितिप्रदर्शनाय । सर्वमिदमत्राभिसंहितं मन्तव्यम् । स्वयं प्रणवाकारं स्थितम्, प्रणवसदृशञ्च स्थितम्, यत् प्रणवाकारं प्रणवसदृशञ्च रङ्गम् तदिव च स्थितं श्रीभाष्यमिति ।

पु. ६. मङ्गलाचारयुक्तानामिति वचनस्य तत्त्वचिन्तामणिकृता प्रत्यक्षखण्डे उक्तमर्थमाशङ्क्य परिहरति **न चेदं वचनमिति** ।

पु. १०. भनक्तीति । भञ्जो आमर्दने इति धातुनिष्पन्नो भङ्गशब्दः नाशरूपफलावच्छिन्नं व्यापारमेव पुरुषगतं स्वरसतो वक्तीति इह तद्ग्रहणे लीलात्वमुपपन्नमिति ।

पु. २४. **सुधाशब्दस्य तत्सदृशपरत्वादिति** । ननु सादृश्यस्यैवं बोधने उपमैवात्र स्यात्, न रूपकम् । अतः सुधाशब्दस्य सुधात्वेन रूपितविषयपरत्वादिति वक्तव्यमिति चेत् – उच्यते । रूपकसमासे 'शक्यतावच्छेदकप्रकारकाहार्यारोप एव क्रियते' इति पक्षं केचित्तु इत्यादिना वक्ष्यत्येव । अत्र त्वयमाशयः — "उपमानानि सामान्यवचनैः" इति सूत्रे शस्त्रीव श्यामा शस्त्रीश्यामेतिवत्, "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" इति प्रकृतसूत्रेपि पुरुषो व्याघ्र इव पुरुषव्याघ्र इत्येव महाभाष्यादौ विवरणप्रदर्शनात् सर्वत्र समानाधिकरणसमासत्वार्थं लक्षणायां क्रियमाणायां शस्त्रीपदे शस्त्रीसदृशेत्यर्थस्य पूर्वसूत्र इवात्र व्याघ्रपदे व्याघ्रसदृशेत्यर्थस्य वर्णनमेव युक्तम् । न हि शस्त्रीश्यामेत्यादौ सादृश्यं नार्थः ; तत्रोपमालङ्कारस्य सर्वसंमतत्वात् । तेन, अन्नं वै प्राणाः इत्येवमसादृश्यमूलकारोपस्थलेऽनेन सूत्रेण समाससिद्धिरप्याञ्जस्येनार्थमुखेनोपपादिता भवति । न हि समान्याप्रयोगे इत्यस्य सादृश्याविवक्षायामित्यर्थः सुवचः । येन सादृश्यत्यागः स्यात् । न च तावता रूपकभङ्गः ; सादृश्यप्रतिपत्तेः रूपकोपजीव्यत्वेन तस्य तदनुकूलत्वात् । उपमितसमासेऽस्मिन् उपमैवालङ्कार इति वैयाकरणा मन्येरन् । प्राञ्चस्त्वालङ्कारिकाः इह रूपकमाश्रयन्ते । अर्वाञ्चस्तूपमालङ्कारम् । नैयायिकास्तु रूपके व्यस्तप्रयोगेऽपि चन्द्रपदस्य चन्द्रसदृशे लक्षणामातिष्ठन्ते । तेषामिदमाकूतम् – चन्द्रसदृशरूपार्थ-

लाक्षणिकत्वाभावे कथं मुखं चन्द्र इति सामानाधिकरण्यम्? न तावत् आरोपितत्व-संबन्धेन चन्द्रत्वविशिष्टमुखरूपार्थपरत्वस्वीकारेण । मुखे चन्द्रत्वारोपो हि जातः चमत्कारमादध्यात्, न तु मुखे चन्द्रत्वमारोपितमिति ज्ञातः । एवमनुभवापलापात् वरं चन्द्रसदृशरूपार्थलाक्षणिकत्वं स्वीकृत्य सादृश्यविषयकशाब्दबोधानन्तरं जातो मानस आहार्यारोपो रूपकं निर्वहतीति । न च तर्हि मुखे चन्द्रत्वारोपात्मक एव बोधो जायतामिति शङ्क्यम्--तर्हि चन्द्रपदस्य मुख्यार्थैकनिष्ठतया सामानाधिकरण्य-भङ्गात् । वास्तवसामानाधिकरण्यप्रयुक्तो हि समासः साधुः; न तु सामानाधिकरण्य-कल्पनाकृतः । तार्किकैरस्माभिः आहार्यपरोक्षज्ञानस्यानङ्गीकाराच्च न तथा बोधः संभवति । अनुभवस्य तु शब्दोत्पादितात् रूपकापेक्षितात् सादृश्यबोधात् पश्चाज्जातं मानसमाहार्यारोपमादाय निर्वाहः । यथा च गङ्गातीरे घोष इत्यप्रयुज्य गङ्गायां घोष इति प्रयोगात् तीरलक्षणास्वीकारेऽपि तादृशप्रयोगस्य शैत्यपावनत्वादिव्यञ्जकत्वम्—तथा मुखं चन्द्रसदृशमित्यप्रयुज्य मुखं चन्द्र इति प्रयोगस्य सादृश्यपरस्यैव सतः अभेदारोपसंपादकत्वमिति । ततश्च मुखचन्द्र इति समासे मुखं चन्द्र इवेत्यर्थे अनुशासनसिद्धत्वात् लक्षणायाः शक्तितुल्यतया, समस्तप्रयोगस्योपमानपदोत्तरस्यात एवान्यादृशेऽर्थेऽभावावधारणात् अभेदव्यञ्जननिर्बन्धाभावात् उपमैवालङ्कार इति । अयमुपमापक्षपातिनामाशयः ।

समासस्य रूपकव्यापकत्वाभावेऽपि उपमारूपकयोर्मध्ये रूपकस्य चमत्काराति-शयाधायकत्वात् यत्र वाक्ये रूपकस्य न किञ्चिद्गमकम्, तत्रोपमामात्रे विश्रमेऽपि, यत्र वाक्ये आदावन्ते वा यत्र क्वापि किमपि रूपकप्राणनोपयोगि लक्ष्यते, तत्र सर्वस्य सादृश्यबोधस्य वाक्योत्पादितस्य रूपककल्पकत्वस्वीकारेण मुखं चन्द्र इत्यत्रेव रूपकमेवालङ्कारः स्वीकर्तुमुचितः । तदत्र **सुमनस** इति, **पिबन्तु** इति च श्लोके रूपकगमकदर्शनात् रूपकमेव । एवञ्च मयूरव्यंसकादिसमासस्यात्राश्रयणेऽपि समानाधिकरणसमासत्वनिर्वाहार्थं सदृशलक्षणा न रूपकभङ्गायेत्याशयेन मयूरव्यंसकादयश्चेति सूत्रमप्यत्र गृहीतम् । टीकायाम्, **'उपमितं व्याघ्रादिभिः'** **इत्यादिसमासमित्यत्र** आदिपदेन मयूरव्यंसकसमासग्रहणं केचिन्मन्यन्ते । तदानीमपि सदृशलक्षणा अवर्जनीयेति अत्र ज्ञापितं भवति । मूलभावप्रकाशिकायां

मयूरव्यंसकादिसमास एवोक्तो नव्यवैयाकरणाविरोधाय । उपमितसमास एव तु टीकाकृतां संमतः । आदिपदं तु पूर्णसूत्रानुसंधापनार्थम् । मयूरव्यंसकसूत्रं तु उपमानपदोपसर्जनकोपमेयपदसमासपरमिति केचित् । विशेषणवचनतयाप्रसिद्धोत्तरपदकसमासपरमित्यन्ये । अयं कलङ्किनश्चन्द्रान्मुखचन्द्रोऽतिरिच्यत इत्यादौ मुखत्वेन प्रतीयमान इत्यर्थे मुखशब्दस्य लक्षणेति, विशेषणं विशेष्येणेत्येव समास इति । उपमितसमासगम्यमिदं साहश्यं भेदाघटितमेव, 'उपमैव तिरोभूतभेदा रूपक' मिति दण्ड्युक्तेरिति केचित् । इवार्थभूतभेदगर्भसादृश्यमेव तथा । तावताऽपि अरोपात्मकरूपकस्याभङ्गादिति परे ।

पृ. १५. सुधाशब्दविवक्षितभोग्यत्वरूपधर्माप्रयोगादिति । **शेखरकाराद**यस्तु 'पुरुषव्याघ्रोऽभिरूपः', 'भाष्याब्धिः क्वातिगम्भीरः' इत्यादौ मयूरव्यंसकादिसमासमेव मन्यन्ते, 'सामान्याप्रयोगे' इति सूत्रकृदुक्त्या अत्रोपमितसमासो न भवतीति । विवक्षिताविवक्षितभेदेन सामान्यद्वैविध्यकल्पनमयुक्तमिति चाहुः । 'सकलकलः पुरचन्द्र' इत्यादौ प्रयुक्तसामान्यधर्मातिरिक्तसामान्यधर्मस्फूर्त्यभावात् प्रयुक्तमेव सामान्यं विवक्षितमिति च वदन्ति । अत्रायं भाष्याशयः -- सत्यं सामान्यधर्माप्रयोगे इति सौत्रं पदं सामान्यधर्मप्रयोगे समासवारणायैव । पुरुषो व्याघ्र इवेत्यर्थे पुरुषव्याघ्र इति समासमाचक्ष्महे । तत्र यथा व्यासे पुरुषो व्याघ्र इव शूर इति सामान्यधर्मप्रयोगः, तथा पुरुषव्याघ्रः शूर इत्यपि भवतु । न च व्यासे शूरपदार्थस्य व्याघ्रे पुरुषे चान्वयवत् इहोभयत्रान्वयः कथम्; व्याघ्रपदस्य विशेषणतया व्याघ्रसदृशार्थपरतया च एकदेशे शूरपदार्थान्वयायोगात् इति मन्तव्यम्--अनुशासनबलादेकदेशान्वयस्याप्यत्र संमतिसंभवादिति केचिन्मन्येरन् । अतः सामान्यधर्मप्रयोगे समासो नास्मदिष्ट इति पाणिनिर्दर्शयतीति वक्तव्यम् । तेन सर्वथा प्रधानानन्वयिनि उपसर्जनमात्रान्वयिनि वृत्त्यघटके वर्तमाने यथा न समासः असामर्थ्यात्, तथा प्रधानान्वयिनोऽपि अप्रधानेऽप्यन्वयेष्टौ न समासः । प्रधानान्वयमात्रं वृत्त्यघटकस्य भवतीति विशदव्युत्पादनं कृतं भवति । अत्रैव भाष्यादिग्रन्थतात्पर्यम् । एवञ्च सामान्यधर्मप्रयोगे यदि पुरुषव्याघ्र इति प्रयोगोऽसाधुरिति पाणिनिर्मन्यते, तर्हि मयूरव्यंसकादिनापि समासो न युक्त एव ।

तथा सति तत्प्रयोगसाधुता स्यात् । अथ सामान्यधर्मस्य विशेषणेऽप्यन्वयेष्टौ न समासः, प्रधानमात्रेऽन्वयेष्टौ च समासः साधुरिति चेत् — तर्हि अस्यैव सूत्रस्य तावान् अर्थ उच्यताम् । सामान्याप्रयोगे = धर्मस्य साधारणतया अप्रयोगे उभयान्वयविवक्षया प्रयोगाभावे उपमितसमास इति । तत् किं सूत्रान्तरेण तन्निर्वाहप्रयासेन ।

वस्तुतः सामान्यपदेन किं ग्रहीतुमुचितमिति विवेचनीयम् । सामान्या प्रयोगे = सादृश्यार्थकेवशब्दाप्रयोगे इति केचित् । तन्न युक्तम् । 'उपमानानि सामान्यवचनै 'रिति सूत्र इवात्रापि समानाधिकरणसमासत्वादेव तदप्रयोगस्य सिद्धेः । अतः यद्धर्मप्रयुक्तमिह प्रथमतः सादृश्यस्फुरणम्, स एव धर्मः सामान्यम् । यत् पुरुषबुद्धिकौशलकल्पितादन्यत् लौकिकपरीक्षकोभयसंप्रतिपन्नं क्षिप्रस्फूर्तिकं सादृश्यस्य निबन्धनम्, तदेव सामान्यम् । अन्यत्तु कविप्रतिभाविश्रान्तं तत्रापि श्लेषाद्युपस्कृतं सर्वथा सादृश्यप्रतिपत्तिप्रयोजकं न भवति । तथाच यत्रोपमानोपमेयस्थले श्रोता सादृश्यप्रयोजकाकारं कञ्चित् अनुक्तमपि झडिति गृहीत्वा इवशब्दस्य तस्य चाप्रयोगेऽपि सादृश्यं बोद्धुं प्रभवति, तत्रोपमितसमासः, यथा व्याघ्रादुपमाने इति सूत्रार्थः । न च सकलकलः पुरुचन्द्र इत्यादौ तदभावः । तथासति श्रोता पुरस्य चन्द्रः पुरचन्द्र इत्येवार्थं गृह्णीयात् । यत्रोत्कृष्टवस्तुरूपणम्, तत्रोत्कर्षप्रतीतिः; यत्र निकृष्टवस्तुरूपणम, तत्र निकर्षप्रतीतिरित्यस्यानुभवसिद्धतया सामान्यत उत्कृष्टत्वेन वा उत्कर्षप्रयोजकसंकीर्णनत्वाद्याकारेण वा प्रथमतः सादृश्यप्रतीतिरित्येव वक्तव्यम् । अन्यथा प्रयुक्तधर्मातिरिक्तस्य सादृश्यप्रयोजकस्य ग्रहणे मानाभाव इति तदग्रहणे समर्थ्यमाने, 'महिषीसंगमसक्तो जयति महीपाल! महिषराजोऽयम् । इति कथिते कुपितो नृप उपशान्तोऽभूत् विगृह्य षष्ठ्यन्तम् ' इति महिषो राजेवेति विग्रहमत्या कोपः षष्ठीतत्पुरुषकल्पनया राजमहिषसाम्यासंभावनयोपशमश्चेति क्रमो न युक्तः स्यात् ।

तस्मात् सामान्यधर्मकथनमन्तरा सादृश्यप्रतिपत्तिर्यत्र न संभाव्यते, तत्रा-त्यन्तापूर्वे कविकल्पितेऽर्थे सामान्यधर्मरूपप्रयोजकाकारस्य वक्तव्यतया तस्य चोपमा-नेऽप्यन्वयस्यावश्यकतया तत्रासामर्थ्यात् न समास इत्येव पाणिनिमहर्षेर्भाव इति । यत्र

सादृश्यप्रतिपत्तिप्रयोजकं सर्वसुगममन्यत् संभाव्यते. तत्र तदप्रयोगेणोपमितसमासकरणे, प्रकारान्तरप्रतीतसादृश्योपष्टम्भकतया दुर्गमत्वेनाध्यवसितानामन्येषां धर्माणां निबन्धनं नेषदपि दुष्यति। भाष्याब्धिः कातिगम्भीर इत्यत्रापि यदि अतिगम्भीरत्वं न ब्रूयात्, तर्हि विततत्वमात्रं केवलगभीरत्वं वा कश्चिन्मन्येत। अतः पारदर्शनस्येव प्रतिबद्धं तलस्पर्शस्याप्यशक्यत्वबुबोधयिषया तदुक्तिः। अत एव तत्त्वटीकायां प्रथमतः साधर्म्यपक्षं पश्चाद् वैधर्म्यपक्षञ्चोपवर्ण्य पुनः साधर्म्यपक्षमेवोक्तरीत्या संभवन्तमभिसंधाय विवक्षिताविवक्षितसामान्यद्वैविध्यपक्ष एव समादृतः। प्रयुक्तस्य सामान्यस्याविवक्षितत्वं कथमिति न शंक्यम् — उपमानश्रवणमात्रगम्यतया समासनिर्वाहाय विवक्षितम, अतथाभूतञ्चेति द्वैविध्यस्याभिमतत्वात्। तदत्र दर्शितं सुधाशब्दविवक्षितेति सुधाशब्दघटनेन। भोग्यत्वरूपसाधर्म्यं सर्वसुगमम्। अमृतत्वहेतुत्वं तु किञ्चिद्विशिष्टबुद्धिगम्यम्। उपनिषद्दुग्धाब्धीत्याद्युक्तं तु सादृश्यपरिपोषकवचोमूलमेव विज्ञेयमिति वैलक्षण्यमिह भाव्यम्। कथमेतेषां धर्माणां परमुभयत्रान्वय इति चेत् — न तु प्रधानम्, तत्रैव शब्दान्वयः। आरोपितत्वसंबन्धेन सुधात्वविशिष्टस्य सुधापदार्थत्वेऽपि वास्तवसुधाविशेषणानां हि वस्तुतोऽनन्वय एव। वस्तुतस्तु दुग्धाब्धिसदृशोपनिषन्मध्योद्धृतत्वादिधर्माणां वचोमात्रनिष्ठत्वात् न सामान्यत्वम्। आनीतत्वमपि उक्तधर्मसामानाधिकरण्यार्हमेव मुख्यं विवक्षितम्। पश्चात्तु सर्वत्र उपनिषत्सु दुग्धाब्धित्वारोपणादिना शब्दमहिमप्रतीतत्तद्धर्माभेदकल्पनया सामान्यत्वकल्पना। तदत्र नोभयान्वयि सामान्यमस्ति। 'सकलकलः पुरचन्द्रः' इत्यादावपि पुरनिष्ठसकलकलत्वमेव प्रथमं बोधेऽन्वेतीत्याद्यपि भाव्यम्। अतो वस्तुतः सामान्यभूतस्याप्युभयान्वयेन बोधाभावात् सामान्यत्वेन रूपेण तदप्रयोग एवेति न सूत्रविरोध इत्यलम्। सोऽयं टीका — तत्त्वटीकानुसारिभावप्रकाशिकाशयः।

पु. १६. मन्त्रे चेति। अत्रैवं नयप्रकाशिका, "कद्रूश्च वै सुपर्णी च" इत्यनुवाके गायत्र्या सोम आहृत इति प्रतीतेः। "तृतीयस्यामितो दिवि सोम आसीत्। तं गायत्री आहरत्" इति चान्यत्र श्रूयते इति। ननु गायत्र्या सोमाहरणे सुधायाः किमायातमिति चेत् — एवमेवाशङ्क्य नयप्रकाशिकायामेवैवं

परिहृतम् — "सोमशब्दस्य सुधापर्यायत्वात् । महाभारतादौ वेदमयेन सुपर्णेन विनतायाः स्वजनन्याः दासीत्वमोक्षणाय भूलोकं प्रति स्वर्गलोकादमृतमानीतमिति प्रसिद्धम् । सुपर्णी च विनता । गायत्रीशब्दश्च छन्दोधिदैवतपक्षिराजपरः । 'दिवं सुपर्णो गत्वा सोमं वज्रिण आहरत्' इति चान्यत्र श्रूयते" इति । अमृतस्य सोमलतात्मना परिणामाद्देवामृतकिरणचन्द्रपरः सोमशब्दः सोमलतायां प्रयुज्यते । अमृतपानादमृतप्राप्तिरित्यौचित्याशयेनैव, 'अपाम सोममृता अभूम' इत्युच्यते । अत्र भाष्यकारैः सुपर्णसमाधिरिति तत्त्वटीका । गरुडानीतस्यामृतस्य काद्रवेयदुर्लभता तेषां सुमनस्त्वाभावात् । सुमनसाममृतमिन्द्रगरुडोभयेष्टमिति ।

पृ.२७. **शब्दार्थगतचोदनेति** । यजिधात्वर्थभूतदेवतोद्देशविशिष्टद्रव्यत्याग-विषयकविधीत्यर्थः । विधिरयं सदृशविध्यन्तरं गवेषयन् स्वान्वयित्यागरूपमुख्यार्थसाक्षाद्विशेषणभूतद्रव्यवत्तया सदृशं विधिमेव गृह्णाति, न तु त्यागे उद्देशद्वारान्वितव्यवहित-देवतामूलकसादृश्यविशिष्टविधिमिति भावः । **तस्याप्यर्थस्येति** । सोऽपि ग्राह्यः, अयमपीति । अयमाशयः — सूत्रे, "कर्मणस्तदुपलम्भनात्" इत्यस्य, कर्मणः हविषि उपलभ्यमानत्वादिति वाच्यार्थः । तस्य, कर्मणः साक्षात् हविर्निरूप्यत्वादित्यर्थे पर्यवसाने कृते, "तेन च कर्मसंयोगात्" इति द्वितीयसूत्रार्थवर्णने क्लेशो भवति । अतैव सोऽर्थः स्वीकार्यः । हविषैव साक्षात् कर्मणः संबद्धत्वात् हविर्निरूप्ये कर्मणि हविर्घटितसादृश्यं ग्राह्यमिति । एवञ्चौचित्याय प्रथमसूत्रे प्रत्यक्षत्वरूपं प्राबल्यमेव विवक्षितम् । अतः कर्मप्रत्यक्षस्य हविःप्रत्यक्षाधीनत्वात् कर्मणः सदृशकर्मापेक्षायां प्रत्यक्षभूतहविर्घटितसादृश्यं पुरःस्फूर्तिकम्; प्रत्यक्षस्य प्रबलत्वादित्यर्थवर्णनमिह युक्तमिति ।

---

एवं तावत् व्याकरणालङ्कारपूर्वतन्त्रादिसंबद्धानेकविचारव्याप्तेयं भावप्रकाशिकेति ज्ञापनाय प्रथमदृष्टकतिपयनिदर्शनमकारि । एवमियं सर्वत्र टिप्पणीनिवेशपूर्वमेव मुद्रणीया, यथोपनिषद्भाष्याणि मुद्रितानीत्येव नः समीहितमासीत् । परन्तु एतावद्भिः पुटैर्भावप्रकाशिकाग्रन्थमुद्रणं समापनीयमिति प्राक्कृतव्यव-

स्थानिकमशङ्कया प्रतिरुद्धं टिप्पणम् । अत एवात्यावश्यकस्थलेष्वपि न किञ्चिद् व्यलेखि । अत्यल्पमेव किमपि पाठानुरोधि ग्रन्थान्तरानुबन्धि च सूचितमितस्ततः । पूर्वमीमांसाधिकरणानि यत्र यत्र गृहीतानि तत्रतत्र सुग्रहत्वायाऽऽकरनिर्देशः परं सहैव कृतः । व्याकरणसूत्राणामुपनिषद्वाक्यादीनाञ्चावधारणे नातीव श्रम इति तदाकरनिर्देश उपेक्षि ।

ग्रन्थाक्षरमुद्रितकोशमवलोक्य नागर्यां लिपौ मुद्रणाय विलिख्य दत्तेन नावल्पाक्काभिजन - न्यायशिरोमणिपरीक्षोत्तीर्ण - विशिष्टपण्डित श्रीरामानुजताताचार्य-प्रभृतिभिर्बहुभिः । आ शोधनारम्भात आ च मुद्रणपूर्तेरत्र महति कार्ये प्रवृत्तानां विषयेऽपि यथोचितं किञ्चित्कारं सर्वसंरक्षणक्षमात् श्रीवेंकटेश्वरदेवस्थानतो वा आस्तिक-लोकतो वा संपाद्यार्पयितुं परमोत्साहं बिभ्रति श्री उ. वे. कूताण्डकुप्पं श्रीरङ्ग-रामानुजचक्रवर्तिस्वामि — श्रीगूडलूर् — रङ्गस्वाम्यार्यमहाशयादय इति निरन्तरायमेवेदं निर्वर्त्यते । अस्याः तालकोशानां बहूनामवलोकनेन पाठभेदविज्ञानविषये साहाय्यकमादावुभाभ्यां श्री वेङ्कटेश्वरसंस्कृतविद्याशालाध्यापकाभ्यां शिरोमणिभ्यां न्यायवेदान्तादिनिष्णाताभ्यां श्रीमद्भ्यां नावल्पाक्काभिजनराजगोपालताताचार्य - कोलि-यालाभिजनशठकोपाचार्याभ्यां सम्यगाचरितम् । अथास्मन्निकटे वेदान्ताध्ययन-प्रवृत्ताभ्यां न्यायशिरोमणिभ्यां श्रीपेय्यम्बाडि - वेङ्कटवरदाचार्य — वासुदेवश्रीवत्साङ्का-चार्याभ्यामुपरितनभागपरिशोधने आवश्यकांशलेखने च महदुपकृतम् । तत्र श्रीवत्साङ्काचार्यः शोधनिकाशोधनेऽपि कञ्चित् कालं सहायोऽभूत् । कदाचित् कोत्तिमङ्गलाभिजनः तालकोशप्रदाता न्यायशिरोमणिरधीतवेदान्तः श्रीगोपालचक्रवर्त्या-चार्योऽपि सहायोऽभूत् ।

महाप्रसिद्ध-असन्न्यायशास्त्रगुरु श्रीस्वच्छन्द श्रीनिवासाचार्यवर्यवेदान्तगुरुपरमै-कान्तिसार्वभौम कोत्तिमङ्गलगोपालाचार्यस्वामिपादस्वहस्तलिखितशुद्धतालकोशसाहाय्येनैव बहूनि मुद्रितकोशेष्वदृष्टानि वाक्यान्यपि , यथोपक्रमे श्रुतप्रकाशिकाश्लोकानां व्याख्यान-संदर्भे] तत्रतत्र योजितानि। पदानि चाक्षराणि च तथा न्यवेशिषतेत्यत्र कः संदेहः । श्रीवेङ्कटेश्वरविद्यालयकोशा अप्येवमनेकं पाठमदर्शयन् । यथाशक्ति सर्वमवलोक्य

युक्तायुक्तविमर्शनेन बाधितपाठपरित्यागेन च परिष्कृतवानस्मि। एवमपि कार्य-बाहुल्यात्, मुद्रणालयासांनिध्यात्, संस्कृतग्रन्थाक्षरसंयोजनक्लेशाधिक्यात्, संयोजित-भ्रंशात्, शोधनकालापतितानवधानाच्च सन्त्येवाशुद्धय इति सम्यग् जानामि। अथापि बह्वशुद्धिपरिहारदर्शनप्रमुदितान्तरङ्गाः स्वपाण्डित्यबलेन सुखमेव सहृदयाः शोध-यिष्यन्तीति शोधनिका पृथङ् न न्यबन्धि। विषयानुसारेण प्रघट्टकविभागोऽपि यथामति कृतोऽस्ति। तत्रतत्र श्रुतप्रकाशिकायां धृतप्रतीकसदसद्भावनिरीक्षणेन यथार्हं प्रतीकनिवेशोऽप्यकारि। क्वचित् टीकादृष्टपाठादन्यथात्वे ज्ञातेऽपि उद्धृतप्रतीक एवौचित्यविमर्शेन यथास्थितमेव रक्षितम्। सर्वत्र सन्तः सहृदयाः प्रमाणम्।

एवं सर्वमपि शोधनादि सह सम्यगेव निर्वर्तितवद्भ्यः सुहृद्भ्यः, मुद्रणमपि महतोत्साहेन निष्पादितवद्भ्यः श्रीदेवस्थानसंबन्धिभ्यः, सर्वमिदं संविधाय प्रोत्साह-विधायिभ्योऽन्तरङ्गेभ्यश्च कृतज्ञतामाविष्कुर्वन् अनघगुणनिधिरयमस्मत्कुलदैवं श्रीनिवासः प्रीयतामिति निवेदयन् भावप्रकाशिकाकृतोऽस्याऽऽचार्यस्य वृत्तमवगतमन्ते एवं संगृह्णामि —

भारद्वाजकुले काञ्चीवेलामूराग्रहारतः।
कन्यामासोत्तरप्रोष्ठपदाख्योडुन्यवातरत्॥
श्रीमद्वरदविष्ण्वार्यनामा सामगतल्लजः।
श्रीतातार्यसंसेवी शिष्योऽनन्तार्यसद्गुरोः॥
रङ्गरामानुजस्वामीत्याख्याख्यातो यतीश्वरः।
षष्टिप्रबन्धनिर्माणप्रसिद्धोऽयं गुरुर्महान्॥

25, Nathamuni St.,
Madras–17.
10-12-1958.

उत्तमूर् - ति. वीरराघवाचार्यः

॥ श्रीः ॥

## ॥ भावप्रकाशिका विषयसूची ॥

## १. चतुर्थः पादः

## २. प्रथमः पादः



## २. द्वितीयः पादः



## २. तृतीयः पादः



## २. चतुर्थः पादः

## ३. द्वितीयः पादः



## ३. तृतीयः पादः

## ३. चतुर्थः पादः



श्रीः

श्रीनिवासपरब्रह्मणे नमः

श्रीमते भगवद्रामानुजाय नमः

श्रीमते निगमान्तमहादेशिकाय नमः

श्रीमते रङ्गरामानुजमहादेशिकाय नमः

येनोपनिषदां भाष्यं रामानुजमतानुगम् ।
रम्यं कृतं प्रपद्ये तं रङ्गरामानुजं मुनिम् ॥

श्रीरङ्गरामानुजमुनिविरचिता श्रुतप्रकाशिकाव्याख्या

# भावप्रकाशिका



अतसीगुच्छसच्छायमञ्चितोरःस्थलं श्रिया ।
अञ्जनाचलशृङ्गारमञ्जलिर्मम गाहताम् ॥

प्रारिप्सितस्य ग्रन्थस्य [1]अविघ्नपरिसमाप्त्यर्थं प्रचयगमनार्थञ्च स्वाचार्यस्य वरदगुरोरिष्टदेवतारूपं हस्तिगिरीश्वरं भगवन्तं वरदप्रणतार्तिहरनामभ्यां प्रख्यापितेष्टप्राप्त्यनिष्टपरिहारलक्षणपुरुषार्थदातृभावम् अत एव शरण्यं शरणमुपगच्छति **वरदं द्विरदाद्रीशमिति** । **द्विरदाद्रीशमि**त्यनेन सौलभ्यमुक्तम् ;

'दिङ्नागैरर्चितस्तत्र पुरा विष्णुः सनातनः ।
ततो हस्तिगिरिर्नाम ख्यातिरासीन्महागिरेः ॥'

इति पुराणवचनेन दिङ्नागानां तिरश्चामप्यर्चनीयोऽभूत् तत्रेति प्रतीतेः । **श्रीनिधिं करुणानिधिमिति** पदद्वयेन शरण्यत्वोपयुक्ते सामर्थ्यकारुणिकत्वे [2]अभिहिते । [3]श्रीनिधेर्हि देयद्रव्येषु न दुर्लभं किञ्चिद्वस्त्वस्तीति नेष्टप्रापणे देयद्रव्याभावकृतमसामर्थ्यमस्ति । 'अप्रमेयं हि तत्तेजो यस्य सा जनकात्मजा' इति श्रीनिधेरप्रमेयतेजोनिधित्वेन अनिष्टनिरसनेपि[4] तेजोविरहलक्षणमसामर्थ्यं न संभवति । **हरिमि**त्यनेन

श्रीः । मुद्रितग्रन्थाक्षरकोशः क. देवनागरीकोशः ख. श्रीवेंकटेश्वर प्राच्यविद्याकोशालयस्थः २४३४ तालकोशः ग. कोत्तिमङ्गलामहारतालकोशः घ.

1. अयं घ. पाठः अन्यत्र 'अविघ्नेन'। 2. दर्शिते घ. । 3. श्रियःपतेः क. श्रियः पत्युः ख. । 4. निरासे घ. ।

आश्रितानां दुरितं हरतीत्यर्थसिद्धिः[1] । *एवं[2] परदेवतां प्रणम्य स्वाभीष्टां स्वस्य एतत्प्रबन्धनिर्माणौपयिकज्ञानशक्त्यादिगुणप्रदायिनीं सुदर्शनाख्यामपि देवतां प्रणमति **बहिरिति** । **उपबृंहितवेदाय** व्याख्यातवेदाय* । **अन्तर्ज्वरम्** = 'बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति' इति न्यायेन विपरीतार्थप्रतिपादनसमुद्भूतं व्याकुलत्वम् । **अशीशमत्** शमयति [3]स्मेत्यर्थः । शमेर्ण्यन्तात् कर्तरि लुङि चङि [4][च] रूपम् । यथा योगी स्वशक्तिवैभवेन परेषां ज्वरं निवर्तयति, एवमयमपि स्वशक्तिवैभवेन श्रुत्यादीनामन्तर्ज्वरं शमयति स्मेति सूच्यते । **प्रपद्ये प्रणवाकार**मिति । **प्रणवाकारं** प्रणवसदृशं रङ्गमिव च स्थितमित्यर्थः । पूर्वार्धप्रतिपादितं भाष्यस्य रङ्गप्रणवाभ्यां सादृश्यमुत्तरार्धेन [5]उपपादयति । **परस्येति** ।

> "अकारार्थो विष्णुर्जगदुदयरक्षाप्रळयकृत्
> मकारार्थो जीवस्तदुपकरणं वैष्णवमिदम् ।
> उकारोऽनन्यार्हं नियमयति सम्बन्धमनयोः
> त्रयीसारः त्र्यात्मा प्रणव इममर्थं समदिशत् ॥"

इत्युक्तरीत्या प्रणवस्य शेषित्वप्रकाशकत्वम् । भाष्यस्य परम[6]शेषित्वप्रकाशकत्वं स्पष्टमेव । श्रीरङ्गस्यापि परब्रह्म[7]शेषशायित्वप्रकाशकत्वेन शेषित्वप्रकाशकत्वम् । [8]यद्यपि श्रीरङ्गस्य शेषशायित्वलक्षणशेषित्वप्रकाशकत्वम्; भाष्यप्रणवयोस्तु स्वामित्वलक्षणशेषित्वप्रकाशकत्वमिति नैकः साधारणो धर्मः — तथापि, 'सकलकलं पुरमेतत् संप्रति जातं सुधांशुबिम्बमिव' इत्यत्रेव श्लेषभित्तिकाभेदाध्यवसायमूलया भेदे अभेदः इत्येवंरूपया अतिशयोक्त्यैव साधारणधर्मैक्यलाभः । **श्रुत्यन्तेष्विति** *[9]श्रवणमननयोरुभयोरपि श्रुत्यन्तादिसंबन्धाविशेषेऽपि प्राधान्यात् प्रणवे? (श्रवणे?) श्रुत्यन्तस्य प्रतिपादकत्वेन प्रतिपत्तिस्थानतया, मनने भाष्यस्य च व्यपदेशः । यथा 'श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः' इति । **दृष्टं** विशदध्यानविषयीकृतम् । न तु

---

1. अयं ख. पाठः । अन्यत्र 'सिद्धेः' । 2. * *एतन्मध्यस्थं घ. कोशे । 3. घ. कोशे इत्यर्थ इति न । 4. चकारोऽधिकः घ. कोशे । 5. प्रतिपादयति घ. । 6. परशेषित्व घ. 7. परब्रह्मपदं कादि 8. अत्र क. कोशे वाक्यभ्रंशः । 9. * *एतन्मध्यस्थितं घ. कोशे ।

स्वमते ध्यानदर्शनयोर्भेदोऽस्ति* । '[1]रङ्गधामनि यो भगवत्साक्षात्कारः सः, 'परात्परं पुरिशयं पुरुषमीक्षते' इति श्रुतिप्रतिपन्नो यो मुक्तिकालीन (नः ?) श्रवणमनननिदिध्यासनफलीभूतः सः' इत्यपि वदन्ति। अत्र श्रुत्यन्तहृदम्बुजरङ्गधामतुल्यतया भगवदभिव्यक्तिस्थानत्वं भाष्यस्य व्यज्यते । **प्रमाणश्च प्रमेयश्चे**ति । प्रमाणं वेदः प्रमेयं तत्प्रतिपाद्योऽर्थः । *[2]अथ चिकीर्षितौपयिकनया प्रकृतं व्याख्येयतात्पर्यज्ञानमाशास्ति—**अविस्तृता** इति। **गिरः** । दीपादिसङ्ग्रहार्थं सामान्येन ग्रहणम् । अत एव तदेककण्ठ्येन भाष्यं व्याख्यायते । **अखिलं** पदगतं वाक्यगतं प्रबन्धगतञ्च । **इदं** कुतर्कानभोद्यम् ।

एवं मङ्गलमनुष्ठाय चिकीर्षितं प्रतिजानीते **श्रीरङ्गे**ति । प्रथमविशेषणेन स्वस्य धीविशेषः, द्वितीयेन सर्वोत्तरत्वञ्च आप्त्यर्थं प्रदर्शितम् । **अचूचुदत्** । श्रुतप्रकाशिकायामिति शेषः । अत्र भाष्यं मया व्या .... —[ख्यायत इ]ति [प्रति] ज्ञातं भवति । तत्र विन्यासविशेषात् भगवत्कैङ्कर्यबुध्यैव स्वस्य प्रवृत्तिः; न तु पाण्डित्यख्यापनायेति व्यज्यते । अथ तत्प्रीणनार्थमपि ग्रन्थकरणम्, "बोधयन्तः परस्पर" मिति वचनानुसारेण परप्रत्यायनार्थनयैवार्थेन । ननु शिष्याः स्वयमेव जानन्ति, किं त्वया यत्नः क्रियते इत्याशङ्क्याऽऽह **गुरुभ्य** इति । **सौकर्याये**ति प्रकृतचोद्यपरिहारः । अथापि संप्रदायविरहाद्भ्रमसंभवे कथं परानुग्रहः स्यात् ? तत्राऽऽह **गुरुभ्य** इति । एवमपि शब्दरचनायामन्यथा प्रतिपादनसंभवेन भ्रमसंभव इत्यत उक्तं **तत्प्रयुक्तैः** इति । एवं तर्हि ते यत्नः किमर्थं इत्यत्राऽऽह **सङ्कलय्येे**ति । वरदगुरुभिरुपन्य .... र्थं ष्वर्थेषु यावदपेक्षितम्, तथा सङ्कलनमसत्कृतमित्यभिसन्धिः । अथापि कृत्स्नोपदेशाभावात् स्वग्रन्थस्यानुपादेयतामाशङ्क्याऽऽह **क** इति । इदं चोद्यं न्यायसुदर्शनादिष्वपि समानमित्यर्थः । अथापि तैः पूर्वकृतैरेवालम् । किं भवद्यत्नेन कतिपयार्थग्राहिणेति चोद्यं परिहरति **श्रुतांशे**ति । **भाष्यवित्तमैः** सुदर्शन—विवरणादिभिः भाष्यार्थं प्रतिपद्यमानैरपि इयं कृतिः

1. अयं घ. पाठः । कादौ तु, 'अत्र श्रुत्यन्तहृदम्बुज रङ्गधामतुल्यतया भगवदभिव्यक्तिस्थानत्वं भाष्यस्य व्यज्यते । तथा रङ्गधाम्नि यो भगवत्साक्षात्कारः, सः 'परात् परं पुरिशयं पुरुषमीक्षत इति श्रुतिप्रतिपन्नो यो मुक्तिकालीनश्रवणमनननिदिध्यासनफलीभूतः स इति क्रमवशाद् व्यज्यते' इति । ख. कोशे तु प्रथमं स इत्यत्र स एव इत्यस्ति उपरि यः सः इति द्वयमपि न । 2. * * एतन्मध्यस्थमनेकश्लोकव्याख्यानं घ. कोशमात्रे ।

आश्रितानां दुरितं हरतीत्यर्थसिद्धिः[1] । *एवं[2] परदेवतां प्रणम्य स्वाभीष्टां स्वस्य एतत्प्रबन्धनिर्माणौपयिकज्ञानशक्त्यादिगुणप्रदायिनीं सुदर्शनाख्यामपि देवतां प्रणमति **बर्हिरिति । उपबृंहितवेदाय** व्याख्यातवेदाय* । **अन्तर्ज्वरम्** = 'बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति' इति न्यायेन विपरीतार्थप्रतिपादनसमुद्भूतं व्याकुलत्वम् । **अशीशमत्** शमयति [3]स्मेत्यर्थः । शमेर्ण्यन्तात् कर्तरि लुङि चङि [4][च] रूपम् । यथा योगी स्वशक्तिवैभवेन परेषां ज्वरं निवर्तयति, एवमयमपि स्वशक्तिवैभवेन श्रुत्यादीनामन्तर्ज्वरं शमयति स्मेति सूच्यते । **प्रपद्ये प्रणवाकार**मिति । **प्रणवाकारं** प्रणवसदृशं रङ्गमिव च स्थितमित्यर्थः । पूर्वार्धप्रतिपादितं भाष्यस्य **रङ्गप्रण**वाभ्यां सादृश्यमुत्तरार्धेन [5]उपपादयति । **परस्ये**ति ।

"अकारार्थो विष्णुर्जगदुदयरक्षाप्रळयकृत्
मकारार्थो जीवस्तदुपकरणं वैष्णवमिदम् ।
उकारोऽनन्यार्हं नियमयति सम्बन्धमनयोः
त्रयीसारः त्र्यात्मा प्रणव इममर्थं समदिशत् ॥"

इत्युक्तरीत्या प्रणवस्य शेषित्वप्रकाशकत्वम् । भाष्यस्य परम[6]शेषित्वप्रकाशकत्वं स्पष्टमेव । श्रीरङ्गस्यापि परब्रह्म[7]शेषशायित्वप्रकाशकत्वेन शेषित्वप्रकाशकत्वम् । [8]यद्यपि श्रीरङ्गस्य शेषशायित्वलक्षणशेषित्वप्रकाशकत्वम्; भाष्यप्रणवयोस्तु स्वामित्वलक्षणशेषित्वप्रकाशकत्वमिति नैकः साधारणो धर्मः — तथापि, 'सकलकलं पुरमेतत् संप्रति जातं सुधांशुबिम्बमिव' इत्यत्रेव श्लेषभित्तिकाभेदाध्यवसायमूलया भेदे अभेदः इत्येवंरूपया अतिशयोक्त्यैव साधारणधर्मैक्यलाभः । श्रुत्यन्तेष्विति *[9]श्रवणमननयोरुभयोरपि श्रुत्यन्तादिसंबन्धाविशेषेऽपि प्राधान्यात् प्रणवे ? (श्रवणे ?) श्रुत्यन्तस्य प्रतिपादकत्वेन प्रतिपत्तिस्थानतया, मनने भाष्यस्य च व्यपदेशः । यथा 'श्रोतव्यः श्रुतिवाक्येभ्यो, मन्तव्यश्चोपपत्तिभिः' इति । **दृष्टं** विशदध्यानविषयीकृतम् । न तु

1. अयं ख. पाठः । अन्यत्र 'सिद्धेः' । 2. **एतन्मध्यस्थं घ. कोशे । 3. घ. कोशे इत्यर्थ इति न । 4. चकारोऽधिकः घ. कोशे । 5. प्रतिपादयति घ. । 6. परशेषित्व घ. 7. परब्रह्मणः कादि 8. अत्र क. कोशे वाक्यभ्रंशः । 9. **एतन्मध्यस्थितं घ. कोशे ।

स्वमते ध्यानदर्शनयोर्भेदोऽस्ति* । '[1]रङ्गधामनि यो भगवत्साक्षात्कारः सः, 'परात्परं पुरिशयं पुरुषमीक्षते' इति श्रुतिप्रतिपन्नो यो मुक्तिकालीन (नः ?) श्रवणमनननिदिध्यासनफलीभूतः सः' इत्यपि वदन्ति । अत्र श्रुत्यन्तहृदम्बुजरङ्गधामतुल्यतया भगवदभिव्यक्तिस्थानत्वं भाष्यस्य व्यज्यते । **प्रमाणञ्च प्रमेयञ्चे**ति । प्रमाणं वेदः प्रमेयं तत्प्रतिपाद्योऽर्थः । *[2]अथ चिकीर्षितौपयिकनया प्रकृते व्याख्येयतात्पर्यज्ञानमाशास्ति—**अविस्तृता** इति । **गिरः** । दीपादिसङ्ग्रहार्थं सामान्येन ग्रहणम् । अत एव तदेककण्ठ्येन भाष्यं व्याख्यायते । **अखिलं** पदगतं वाक्यगतं प्रबन्धगतञ्च । **दृढं** कुतर्कानभिभाव्यम् ।

एवं मङ्गलमनुष्ठाय चिकीर्षितं प्रतिजानीते **श्रीरङ्गे**ति । प्रथमविशेषणेन स्वस्य धीविशेषः, द्वितीयेन सर्वोत्तरत्वञ्च आप्त्यर्थं प्रदर्शितम् । **अचूचुदत्** । श्रुतप्रकाशिकायामिति शेषः । अत्र भाष्यं मया व्या....—[ख्यायत इ]ति [प्रति] ज्ञातं भवति । तत्र विन्यासविशेषात् भगवत्कैङ्कर्यबुध्यैव स्वस्य प्रवृत्तिः; न तु पाण्डित्यख्यापनायेति व्यज्यते । अथ तत्प्रीणनार्थमपि ग्रन्थकरणम्, "बोधयन्तः परस्पर" मिति वचनानुसारेण परप्रत्यायनार्थनयैवार्थेन । ननु शिष्याः स्वयमेव जानन्ति, किं त्वया यत्नः क्रियते इत्याशङ्क्याऽऽह **गुरुभ्य** इति । **सौकर्याये**ति प्रकृतचोद्यपरिहारः । अथापि संप्रदायविरहाद्भ्रमसंभवे कथं परानुग्रहः स्यात् ? तत्राऽऽह **गुरुभ्य** इति । एवमपि शब्दरचनायामन्यथा प्रतिपादनसंभवेन भ्रमसंभव इत्यत उक्तं **तत्प्रयुक्तैः** इति । एवं तर्हि ते यत्नः किमर्थं इत्यत्राऽऽह **सङ्कलय्ये**ति । वरदगुरुभिरुपन्य ....र्थ ष्वर्थेषु यावदपेक्षितम्, तथा सङ्कलनमसत्कृतमित्यभिसन्धिः । अथापि कृत्स्नोपदेशाभावात् स्वग्रन्थस्यानुपादेयतामाशङ्क्याऽऽह **क** इति । इदं चोद्यं न्यायसुदर्शनादिष्वपि समानमित्यर्थः । अथापि तैः पूर्वकृतैरेवालम् । किं भवद्यत्नेन कतिपयार्थग्राहिणेति चोद्यं परिहरति **श्रुतांशे**ति । **भाष्यवित्तमैः** सुदर्शन—विवरणादिभिः भाष्यार्थं प्रतिपद्यमानैरपि इयं कृतिः

1. अयं घ. पाठः । कादौ तु, 'अत्र श्रुत्यन्तहृदम्बुज रङ्गधामतुल्यतया भगवदभिव्यक्तिस्थानत्वं भाष्यस्य व्यज्यते । तथा रङ्गधाम्नि यो भगवत्साक्षात्कारः, सः 'परात् परं पुरिशयं पुरुषमीक्षत इति श्रुतिप्रतिपन्नो यो मुक्तिकालीनश्रवणमनननिदिध्यासनफलीभूतः स इति क्रमवशाद् व्यज्यते' इति । ख. कोशे तु प्रथमं स इत्यत्र स एव इत्यस्ति उपरि यः सः इति द्वयमपि न । 2. * * एतन्मध्यस्थमनेकश्लोकव्याख्यानं घ. कोशमात्रे ।

श्रुतप्रकाशिका नोपेक्ष्या ; किन्तु उपादेया । किमर्थं ? मया आचार्यसकाशात् श्रुतानामर्थानां श्रुतप्रकाशिकया प्रतिपाद्यमानानां सुदर्शनादिष्वनुक्तानां भाष्यार्थांशानां स्थितये । तत्र दृष्टान्तः आढ्यैरिति । *" मन्त्रे तद्देवतायाञ्च", " यस्य देवे परा भक्तिः यथा देवे तथा गुरौ " इत्यादिप्रमाणानुसारेण भाष्यार्थाधिगमस्य[1] भाष्य—तत्कर्तृ-तत्प्रतिपाद्यभगवत्प्रसादलभ्यत्वम्[2]—कृत्स्नभाष्यार्थवेदितुः भाष्यकारस्य तत्प्रतिपाद्यस्य भगवतो वा, ' अस्य वाक्यस्यायमर्थः ' इत्येवंरूपात् वचनात् भाष्यार्थः सुबोधो[3] भविष्यति इत्याशङ्कयाऽऽह[4] भाष्यञ्चेद्व्यवृणोदित्यादिना । ननु व्यवृणोदित्यत्र " हेतुहेतुमतोर्लिङ् " इति लिङो भविष्यद्विषयत्वात् लिङ् मा भून्नाम । मा च भूत्, " लिङ्निमित्ते लृङ् क्रियातिपत्तौ " इति लृङ् । तस्यापि भविष्यद्विषयकत्वात् । " भूते च " इत्यनेन भूते काले, [5]" लिङ्निमित्ते लृङ् क्रियातिपत्तौ ' इति विधीयमानो लृङ् कस्मान्न भवतीति चेत्—अत्राहुः । सत्या अपि क्रियातिपत्तेरविवक्षितत्वाद्वा, सतोऽपि हेतुहेतुमद्भावस्याविवक्षितत्वाद्वा लृङ् न भवति । सतोऽप्यविवक्षा दृश्यते, यथा - " अनुदरा कन्ये " ति । केचित्तु " गाम्भीर्यादनवस्थिते " रिति गाम्भीर्यहेतुकत्वोक्तेः अनवस्थाने विवरणं न हेतुरिति वर्णयन्ति । *केचित्तु — ननु स्वयमेव भाष्यकारैः भाष्यस्य व्याख्यातत्वात्किमिति भवता यत्नः क्रियते इति चोद्यं परिहर्तुमनुवदति भाष्यञ्चेदिति । अत्र चेच्छब्दः न यद्यर्थे, किंतु असन्दिग्धे सन्दिग्धवद्वचने, वेदाश्चेदितिवत् । भाष्यञ्चेदिदम्, स्वयं व्यवृणोदेव । भाष्य........भाष्यं स्वयमेव स्वव्याख्यानं भवति । तथा हि भाष्यलक्षणं कुर्वन्ति, "स्वपदानि च वर्ण्यन्ते " इति । परिहरति व्याख्यानेति । तथा ; अत्र अपिरध्याहार्यः । तथापि व्याख्यानवाचां भाष्यान्तर्गतानां गाम्भीर्यादनवस्थितिः = तात्पर्यं परिनिष्ठा न लब्धुं शक्येत्यर्थः । ? अथा कैरिव ? (अन्यथा कैयट ?) वार्तिकादेरनारंभापत्तेरिति भावः । अनवस्थितिमुपपादयति मितमतिरित्यादि । नर (नारद) नारायणन्यायेन भगवानेव अर्चारूपी (?) भाष्यपरिज्ञानार्थिभिरुपसर्पणीयः इति किं युष्मत्कृत्या ? नेत्याह प्रष्टव्य इति । अर्चारूपी ईश्वरः कथं प्रष्टव्यः ? कुत इत्यत

---

1 धिगमस्य क. 2. लभ्यत्वं मन्यमानः कादि. 3. भाष्यार्थबोधो क. ख.
4. आशङ्कां [च] परिहरति क. ख. 5. लिङ्निमित्ते क्रियातिपत्तौ विधीयमानः कादि ।
* * एतन्मध्यस्थितं घ. कोशमात्रे ।

आह - **स हि** इति । स हि नारायणादिरूप ईश्वरः **नः** इदानीन्तनानामस्माकं प्रत्यक्षरूपो न । इदानीमर्चारूपेणावस्थानात् नारदादिवत् नास्माकमुपदेष्टेत्यर्थः—इति व्याचक्षते । तदेवं **श्रीरङ्गेशाज्ञयेत्यारभ्य** श्रुतप्रकाशिकारम्भप्रतिज्ञा । तस्याः भाष्यं विषयः ; सङ्कल्प्य तदर्थज्ञापनं प्रयोजनम् ; तच्च न पूर्वव्याख्यानैरन्यथासिद्धम् ; न वा भ्रमप्रमादादिदोषमिश्रम् ; तदर्थिनश्चात्र अधिकारिणः इति स्वग्रन्थे प्रेक्षावत्प्रवृत्त्यौपयिकं अनुबन्धचतुष्टयं प्रदर्शितं भवति * ।

अष्टादशविद्यास्थानेषु शारीरकशास्त्रे[1] भगवतो भाष्यकारस्य व्याचिख्यासायां निमित्तमाह **सर्वेषामित्यादिना** । स्वत एव भगवत्साक्षात्कारसमर्थानां मुक्तानां[2] वेदस्या[3]लौकिकपुरुषार्थप्रतिपत्त्यर्थमनादरणीयत्वादाह-**प्रमाणाधीनप्रमेयनिश्चयाना**-मिति । [4]भ्रान्तान् प्रति वेदस्यानादरणीयत्वादाह **उपादित्सिते**ति । [5]उपादित्सित-जिहासितालौकि (तलौकि) केष्टानिष्टतत्साधनानामित्यर्थः । अलौकिकपुरुषार्थतत्साधन-प्रत्यायकत्वाविशेषेण सांख्याद्यागमवैलक्षण्ये वेदस्य निमित्तमाह **तत्राप्यपुरुषे**ति । पूर्वभागे कुतो न व्याचिख्यासेति शङ्कामपाकरोति - **तत्र चे**त्यादिना । पूर्वभागे अर्वाचीनफलतत्साधनपरे अवगते इति योजना । असन्दिग्धतयाऽवगतेत्यर्थः । पूर्वभागेऽनुपप्लुत इति यावत् । अत्र **अर्वाचीने**ति विशेषणेन वेदान्तभागप्रतिपाद्यार्थ-विप्लवे महाफलहानिवत् तदंशे तन्नास्तीत्यपि सूचितम् । **तदुज्जिजीवयिषया व्याचिख्यासित**मित्यन्वयः । **निष्कण्टकीकृत्य कृतार्थयितुं भवभयाभितप्ते**-त्यन्वयः । तेन उज्जिजीवयिषया, कृतार्थयितुमित्यनयोः न पौनरुक्त्यमिति वदन्ति । केचित्तु उज्जिजीवयिषायाः सदसद्विवेचनचतुरपूर्वाचार्यविरचितमित्यनेनान्वय इति उज्जिजीवयिषां पूर्वाचार्यगतामाहुः । अपरे तु उज्जीवनकृतार्थीकरणयोः द्वारद्वारि-भावेन भेदमाहुः । **कुपथप्रवृत्तिनी**ति । कुत्सितः पथः कुपथः । पथशब्देन समासः । न पथिन्शब्देन । तेन "कापथ्यक्षयोः" इति न भवति । पठितश्च त्रिकाण्डशेषे "पथः पन्थाश्च मार्गः स्यात्" इति पथिन्शब्दसमानार्थः पथशब्दोऽकारान्तः ।

---

1. अयं घ. पाठः । पा० शारीरकस्यैव शास्त्रस्य । 2. 'मुक्ताना' मिति घ. कोशे 3. घ. आमुष्मिक कादौ 4. इयमवतारिका घ. मात्रे 5. इदमर्थवर्णनं घ. कोशे न । ग. कोशे अलौकिकेति । अन्यत्र लौकिकेति ।

शङ्करादिकृतानां शारीरकव्याख्यानानामनादरणीयत्वे हेतुमाह **परमर्षिप्रणीतानी**ति । यत्तदोर्नित्यसम्बन्धात् अत्र यानीति शेषः । यानि परमर्षिप्रणीतानि शास्त्राणि, तेषां महर्षिप्रणीतानि व्याख्यानानि सन्ति चेदित्यर्थः । **व्याख्येयानी**ति गहनार्थत्वसूचकम् । **सन्त्यपि तान्यनादृत्य व्याख्येयान्तराणि** इत्यत्र व्याख्येयान्तरकथनं दृष्टान्तार्थम् । यथा व्याख्येयान्तराणां शारीरकविरुद्धानामप्रामाणिकत्वम्, तथा बोधायनव्याख्यानविरुद्धानां शङ्करादिकृतव्याख्यानानामप्रामाणिकत्वमित्यर्थः । यद्वा **तेषाञ्च महर्षिप्रणीतानी**त्यत्र **च**शब्दो भिन्नक्रमः । परमर्षिप्रणीतानि व्याख्येयानि, तेषां महर्षिप्रणीतानि व्याख्यानानि च सन्ति चेत्, तान्येव व्याख्येयानि, व्याख्यानानि च अनुरोद्धव्यानीत्यर्थः । **बाधकानुपलम्भादि**ति । "सर्वत्र प्रसिद्धोपदेशा" दित्यत्र व्याख्यानान्तरवर्णनं परमतानुसारेण कृतम् । अनन्तरमेव वृत्तिकारोक्तार्थवर्णनात् । अतो न तद्विरोधः । **पूर्वभागार्थानां शिक्षणीयत्वमि**ति । अरुणाधिकरणादिष्विति भावः ।

## अखिलेतिश्लोकार्थविचारः

**इष्टदेवतोपासनरूपं मङ्गलमि**ति । उपासनाशीरूपं मङ्गलमित्यर्थः । अत एव वक्ष्यति, "वस्तुनिर्देशः, **भवत्वि**त्याशीर्वादश्च कृतौ भवतः" इति । केचित्तु भक्तिप्रार्थनमपि भक्तिरूपमिति मन्यन्ते । यद्वा उपासनस्य स्वतोऽनुकूलत्वमवगम्य तत् प्रार्थयमानेन तस्याप्यनुष्ठितत्वसम्भवादेवमुक्तमिति द्रष्टव्यम् । **मङ्गलाचारयुक्तानामि**ति । न च इदं वचनं जपहोमादितुल्यतया आदर्शदर्शनादिमङ्गलाचारस्य विनिपातनिवृत्तिहेतुत्वावगमकम् ; न त्वारम्भकाले मङ्गलकर्तव्यतायां प्रमाणम् । अत एव मङ्गलानुष्ठाने आचारमेव प्रमाणयन्ति इति वाच्यम् — समाप्तिप्रतिबन्धकविघ्नस्यापि विनिपातशब्दार्थत्वेन मङ्गलाचरणस्य विघ्ननिवारकत्वावगमकत्वेन प्रामाण्यसम्भवात् । **यथा चोदनासूत्रे इ**ति* । "चोदनालक्षणोऽर्थो धर्मः" (पू. मी १-१-२) इति सूत्रे यश्चोदनालक्षणः स धर्म इति धर्मस्वरूपे कथिते, यथा चोदनैव प्रमाणमिति अर्थादुक्तं भवति—तथेत्यर्थः । **प्रह्वीभावावगमात् प्रणतिरपि फलिते**ति । प्रणतिरप्यनुष्ठिता भवतीत्यर्थः । ननु **विनते**त्युक्तिमात्रेण कथं [1]प्रणतिरनुष्ठितेत्यवसीयते ।

---

1. प्रणतिरपि ग.. ।

तथासति, उपासकानां भगवान् मोक्षप्रद: इत्युक्तिमात्रेण [1]तद्वाक्यप्रयोक्तॄणां सर्वेषामपि अनुष्ठितोपासन[2]कत्वप्रसङ्गेन मोक्षप्रसङ्गः इति चेन्न — अतिसुकरस्य प्रणामस्य रक्षा-दीक्षारूपेष्टसाधनत्वमवगम्य तत अन्येषामप्युपदिशता भाष्यकृता साप्यनुष्ठितेत्युक्ते[3] विरोधाऽभावात् । **णमु प्रह्वत्वे इति हि धातुरिति** । ननु भक्तिविनतशब्दयोः प्रह्वीभावावगमकत्वमुपन्यस्य भक्तिशब्दस्य प्रह्वीभावावगमकत्वोपपादकानुपन्यासेन नमेः तदुपन्यासोऽसङ्गतः । न च भक्तिशब्दे प्रह्वीभावावगमकत्वस्योपपादकनिरपेक्षतया तदनुपन्यास इति वक्तुं शक्यम् । प्रत्युत भक्तिशब्दस्यैव प्रह्वीभावार्थकत्वस्य अप्रसिद्धत्वेन तदुपपादकसापेक्षतया तदुपन्यास एव [हि] युक्त इति चेत्—मैवम् — भक्तिविनतशब्दयोरैकार्थ्यमवश्यं वक्तव्यम् । इतरथा रक्षाहेतुत्वं विनतेरुपन्यस्य तदतिरिक्तायाः भक्तेः प्रार्थने किं केन सङ्गतं स्यात् । अतो भक्तिविनतशब्द-योरैकार्थ्यात् प्रक्रमस्थविनतशब्दस्य, 'णमु प्रह्वत्वे' इति स्मृत्यनुसारेण अर्थे कथिते भक्तिशब्दस्याप्यर्थः कथितः । यथा,

" विदितः स हि धर्मज्ञः शरणागतवत्सलः ।
तेन मैत्री भवतु ते यदि जीवितुमिच्छसि ॥ " (श्रीमद्रामा—)

इत्यत्र मैत्र्याः शरणागतिरूपत्वसिद्धिः इति मत्वा, 'णमु प्रह्वत्वे इति हि धातु'रित्यु-क्तम् । न च नमेः प्रह्वीभावार्थकत्वे विनतशब्दस्य न्यासोपासनाख्यविद्याविशेषनिष्ठपरत्वं न स्यादिति वाच्यम् — उपसर्गवशेन ज्ञानविशेषविशिष्टप्रह्वीभाववाचकत्वसम्भवेन विद्या-विशेषवाचित्वसम्भवात् ।

**विषयविषयिरूपेति** । विषयो ब्रह्म ; उपासनफले विषयिणी । न च उपासनस्य तृतीयाध्यायप्रतिपाद्यस्य विषयित्वेऽपि कथं फलस्य चतुर्थाध्यायप्रतिपाद्यस्य विषयित्वमिति वाच्यम् — फलभूतायाः मुक्तेरपि भगवदनुभवरूपतया विषयित्वेन क्रोडीकारसंभवेनादोषात् । **भवतीति भुवनमिति** । यद्यपि भुवनशब्दः, " भू सू धू भ्रस्ज् जिभ्यश्छन्दसि " इति छन्दसि क्युन्नन्तो [4]व्युत्पादितः । तथापि, " वा

1. एतद्वाक्यं. ग. । 2. अनुष्ठितोपायत्वप्रसङ्गे. ग. ख. । 3. उक्तेः. ख. । 4. अयं घ. पाठः. ग. कोशे, छन्दसि निपातितः इति. । अन्यत्र, छन्दसि क्युन्नन्तो निपातित इति ।

भुवन" मित्यत्र 'बहुलस्मरणात् [1]भाषाविषयत्वमप्यस्ती' ति वैयाकरणोक्तेरदोषः । **रूढिशक्त्या कुलालादिव्यावृत्तिरिति** । यद्यपि योगोऽतिप्रसक्तः — तथापि रूढ्या तन्निरास इति भावः । यद्यपि रूढ्यनभ्युपगमेऽपि अखिलशब्देनैव कुलालादिव्यावृत्तिसिद्धिः ; तस्याखिलकार्यहेतुत्वाभावात् । किञ्च लीलापदेनापि व्यावृत्तिसिद्धि । प्रयोजयरूपघटगतजन्मादिव्यापारस्य कुलाललीलात्वाभावात्— तथापि इतरपद निरपेक्षस्यापि केवल[2]भुवनशब्दस्य कुलालादिव्यावर्तकत्वसिद्धिरित्यभिप्रेत्य तथोक्तमिति द्रष्टव्यम् । **अण्डजातानीति** । अण्डान्तर्वर्तीनि भुवनानि विवक्षितानीत्यर्थः ; न त्वण्डसमूहाः इति । भुवनशब्दस्याण्डवाचित्वाप्रसिद्धेः । किञ्च ब्रह्मणोऽण्डोत्पादकत्वगन्धाभावेन तद्व्यावृत्त्यर्थं साकल्यस्याप्यविवक्षणीयत्वापातात् । केचित्तु **अण्डजातानि** अण्डसमूहा अपीत्यर्थः । [3]तेषामपि विपुलतरकार्यविशेषरूपत्वेन भुवन[4]शब्दवाच्यत्वसम्भवात् । न चैवं ब्रह्मणोऽण्डानुत्पादकत्वेन तत एव तद्व्यावृत्ति[5]सिद्धिरिति वाच्यम् — अखिलपदाभावे भूलोकादिलक्षणयत्किञ्चिद्भुवनजनकत्वस्य चतुर्मुखादावपि सम्भवेन तद्व्यावृत्त्यर्थत्वेन अखिलपदस्या[6]र्थवत्त्वात् । **निषेध्यगतात् शुभत्वाशुभत्वे इति** । ननु यद्यत्र भुवनवैकल्यस्य निषेध्यस्याशुभत्वात् तन्निषेधस्य शुभत्वम्, तर्हि अखिलहेयप्रत्यनीकेत्यत्र अखिलशब्दस्य भगवच्छरणागतिवाक्योपक्रमगतस्य हेयवैकल्यनिषेधवाचिनः शुभत्वं न स्यात्, निषेध्यस्य हेयवैकल्यस्य शुभत्वादिति चेन्न— तत्रापि अखिलहेयप्रत्यनीकेत्यत्र निवर्तकवाचिप्रत्यनीकशब्देन निवृत्तिक्रियाव्यापाराविषयत्वं हेयगतं [7]हि निषिध्यते ; हेयगतं च निवृत्तिक्रियाव्यापाराविषयत्वमशुभमेवेति तन्निषेधस्यापि शुभत्वात् । **चिदचिद्भेदोऽप्यभिप्रेत इति** । अखिलशब्दस्य सर्वशब्दपर्यायतया सर्वत्वस्य बहुष्वेव वृत्तेः, "पृथक्त्वनिवेशात् संख्यया कर्मभेदः स्यात्" (पूर्वमी - २-२-२१) इति न्यायेन बहुत्वस्य भेदगर्भतया भुवनानां भेदः सिद्धो भवति । भुवनशब्दश्चिदचित्संकलनात्मकविपुलतरकार्यविशेषवाचीति चिदचिद्भेदश्च सिद्धो भवति । न च सर्वशब्दस्य बहुत्वसापेक्षत्वमसंप्रतिपन्नमिति वाच्यम् ; "विश्वजित् सर्वपृष्ठः" इत्यत्र सर्वपृष्ठशब्दस्य

---

1. अयं ग. पाठः । अन्यत्र वा भुवनमिति स्मरणात् इति । 2. केवल इति क. बोधे न । 3. तस्यापि. क घ. 4. 'शब्द' पदं ग. घ. 5. 'सिद्धि' पदं घ. 6. सप्रयोजनत्वात् ख. 7. 'हि' घ.

चोदकप्राप्तज्योतिष्टोमिकपृष्ठानुवादित्वं न संभवति, ज्योतिष्टोमे द्वयोरेव पृष्ठयोः सत्त्वेन तत्र बहुत्वसापेक्षस्य सर्वशब्दस्याप्रवृत्तेः; अपितु षाडहिकानां बृहद्रथन्तर-वैरूपवैराजशाक्वररैवतानां विधिरिति सप्तमे (पू. मी. ७-३-३) स्थितत्वात्। **स्थेमा स्थितिरिति**। न स्थिरत्वमित्यर्थः। अयमाशयः — यद्यपि स्थिरशब्दात् इमनिच् न संभवति, पृथ्वादिष्वस्य पाठाभावात्; अत एवोक्तं वृत्तौ प्रियस्थिरेति सूत्रे, "स्थिर[1]-शब्दस्य पृथ्वाद्यपाठादिमनिच् नोदाह्रियते[2]" इति — तथापि तिष्ठतेरौणादिक इमनिच्-प्रत्ययो बहुलवचनात् जनिमवेमादिवद् द्रष्टव्यः। प्रसिद्धश्चायं शब्दः शिष्टप्रयोगेषु, "द्राघीयांसः संहताः स्थेमभाजः" इत्यादिषु। **निखिलजगदुदयविभवविलये-**त्यत्र **विभव**पदेन स्थितिरुच्यते। ननु मोक्षस्य पृथङ्निर्देशं सिद्धवत्कृत्य खलु तस्य **भङ्गादि**शब्दार्थयोरनन्तर्भाव उक्तः; स न युक्तः, पृथक्कीर्तनस्यास्मिन् श्लोके अदर्श-नात्, रक्षापदस्य स्वर्गादिफलप्रदत्वप्रतिपादकत्वादित्याशङ्क्य रक्षापदस्य [पृथक्] स्वर्गादिफलप्रदत्वप्रतिपादनानौचित्यं दर्शयति — **विनतेत्यादिपदेनेति**। **अध्यास-परिणामपक्षयोरिति**। अध्यासपक्षः शांकरः, परिणामपक्षो यादवभास्करीय इति द्रष्टव्यम्। **तस्यार्थत्वाभावेनेति**। अभेदे अन्तःप्रवेशाद्यसिद्धेः स्वमत एवान्तः-प्रवेशनियमनश्रुतिस्वारस्यसंभवात् स्वमते अध्यासपरिणामपक्षवैलक्षण्यसिद्ध्यर्थमन्तः-प्रवेशनियमनसंभवस्य पृथग्वक्तव्यत्वादित्यर्थः। **विस्तरेणोक्तस्येति**। "जगदुद्भव-स्थितिसंहारान्तःप्रवेशनियमनादिलीलम्" इति ग्रन्थकृतैवान्यत्र विस्तरेणोक्तस्य, आदिपदेन संक्षेपेणोक्तौ विवक्षितत्वोपपत्तेरित्यर्थः। **प्रयोजकव्यापारो हि लीलेति**। ननु स्वतन्त्रकर्तृप्रयोजकराजव्यापाररूपप्रेषणादेः लीलात्वादर्शनात् बाललीलाप्रयोजक-तत्पितृव्यापारभूतप्रार्थनादेर्लीलात्वाभावाच्च प्रत्युत प्रयोज्यभूतबालव्यापारस्यैव लीलात्व-दर्शनाच्च कथमेतदिति चेत् - न; तद्व्यापारस्तस्य लीला, नान्यव्यापारः इत्यत्र तात्पर्यात्। न चैवं नटविटविदूषकादिव्यापारस्य परिहासादेः राजलीलात्वं न स्यादिति वाच्यम्; इष्टापत्तेः। तत्र लीलारसनिष्पादकत्वेन लीलापदस्य औपचारिकत्वात्। न च, "लोकवत्तु लीलाकैवल्यम्" इति सूत्रे भगवता भाष्यकृता जगज्जन्मस्थिति-ध्वंसादेर्लीलैव प्रयोजनमिति जन्मादेर्लीलाप्रयोजनकत्वोक्त्या लीलात्वाभावस्य सूचि-

1. प्रिय. 2. हृतः।

तत्वात् इह जन्मादिषु प्रयुज्यमानो लीलाशब्द औपचारिक एव स्यादिति वाच्यम् - परिपूर्णानन्दैश्वर्यस्वच्छन्दपुरुषकार्यचेष्टाविशेषे लीलाशब्दस्य प्रचुरप्रयोगसत्त्वेन जन्मस्थित्यादेरपि मुख्यलीलात्वस्य सिद्धान्त्यभिमतत्वात्; "लोकवत्तु लीलाकैवल्यम्" इति मूलभाष्यस्यापि जगज्जन्मादेर्लीलात्वपरतया व्याख्यास्यमानत्वाच्च । **भङ्गस्य लीलात्वे युक्तेऽपीति** । न च भङ्गस्य नाशरूपत्वात् नाशस्य च जन्मस्थित्यादिवत् प्रयोज्यगतत्वाविशेषात् कथमर्धवैशसेन भङ्गस्य लीलात्वाभ्युपगम इति वाच्यम्; घटो विनश्यतीतिवत् घटो भनक्तीति प्रयोगाभावेन तयोर्भिन्नत्वात् । अत एव घटो जायते, घटस्तिष्ठतीतिवत् घटो भनक्तीति प्रयोगाभावः । तथाच घटकर्तृकव्यापारौ जन्मस्थिती, भङ्गस्तु न तद्व्यापार इति विवेक । **लीलात्वकथनेनोपादानत्वं फलितमिति** । जगज्जन्मस्थित्योः परमात्मलीलात्वकथनेन परमात्मसमवेतव्यापारत्वोक्त्या परमात्मन एव भाव्यवस्थावत्त्वेन उपादानत्वलाभादिति भावः ।

ननु भूतशब्दस्य लब्धसत्ताकार्थकत्वे लब्धसत्ताकानां तेषां परमात्मसाध्या रक्षा कीदृशीत्याशङ्क्याह---**लब्धस्वरूपाणां चेति** । ननु लब्धस्वरूपाणां स्वरूपाप्रच्युतेर्भगवद्धरत्ववत् अलब्धस्वरूपाणां स्वरूपलाभरूपरक्षाया अपि भगवद्धरत्वात् कथं 'लब्धस्वरूपाणां रक्षैकदीक्ष' इति पृथक्कृत्योच्यत इति चेत्, आनुकूल्यावस्थायां तद्रक्षाया निमित्तान्तरनैरपेक्ष्येण तत्र विशिष्योक्त्युपपत्तेः । **षष्ठ्याः संबन्धमात्रविषयत्वादिति** । ननु यद्यपि संबन्धवाचिनी षष्ठी, तथापि यस्य विशेषस्याभिव्यञ्जकमस्ति, तत्रैव पर्यवस्यति; यथा देवदत्तस्येत्यभेदेन प्रवृत्ता षष्ठी पुत्रः, पाणिः, कम्बल इति प्रतिसंबन्धिवशेन पितृत्वावयवित्वस्वामित्वरूपविशेषेषु पर्यवस्यति; न हि देवदत्तस्य पुत्र इत्युक्ते देवदत्तस्वामिकमन्यपितृकं पुत्रं प्रतियन्ति । ततश्च भूतव्रात इत्युक्ते भूतव्रातयोरेव समुदायसमुदायिभावलक्षणः संबन्धः प्रतीयते । ततश्च भूताभूतव्राते भूतव्रातशब्दस्य, सापेक्षमसमर्थमिति न्यायेन अग्नीषोमीये आग्नेयशब्दवदसामर्थ्यादप्रवृत्तिः, [1]अथवा छत्रिन्यायेन लक्षणा वा समाश्रयणीया स्यात् । राजपरिषदित्यादौ तु परिषत्सेनादिशब्दानां समुदायिविशेषविशिष्टसमुदायवाचिनां नैकान्ततः समुदाय्यपेक्षा; यथा वनघटादिशब्दानां तरुगजादिसमूहवाचिनामन्तर्भावित-

1. अथवेति पक्षान्तरे; वेति अनादरे ।

समुदायिकतया न समुदाय्यपेक्षा, यथा वा पुत्रीयतिजीवतीत्यादीनामन्तर्भावितेषिधारण-कर्मकाणां न कर्मापेक्षा। ततश्च परिषदादिशब्देषु स्वाम्याकाङ्क्षामात्रम्, 'किंस्वामिका परिषत्' इति। ततश्च राजपरिषदित्यत्र राज्ञः स्वामित्वेनान्वयः, राजस्वामिका परिषदिति। ततश्च तत्राप्यराज्ञां स्वामित्वमेव वार्यते। न च परिषच्छब्दतुल्य एवायं व्रातशब्दः, न समूहादिशब्दवदिति वाच्यम् - तर्हि तथैव वक्तव्यत्वेन संबन्ध-मात्रस्य षष्ठ्यर्थत्वप्रसाधनवैफल्यादिति चेत् — सत्यम्; समूहशब्दपर्याय एवायं व्रातशब्दः, "समूहनिकरव्रात" इति कोशपाठात् – तथापि तस्यानर्थक्यप्रसङ्गात् विवक्षितविशेषसिद्धिरित्यत्र तात्पर्यात्। इतरथा **विनतविविधभूते**त्यनेनैव विवक्षि-तार्थसिद्धौ व्रातपदेनातिरिक्तार्थालाभात् **व्रात**शब्दवैयर्थ्यप्रसङ्गात्। अत एव वक्ष्यति - "एवं च व्रातशब्द (पद) प्रयोगस्यार्थवत्त्वं स्यात्" इति। ब्रह्मजिज्ञासेति सूत्रे संबन्धसामान्यषष्ठीपरिग्रहे ब्रह्मसंबन्धिनामपि जिज्ञास्यत्वं सिध्यतीति सर्वैरपि भाष्यकृद्भिर्व्यवहृतत्वाच्च। अत्र व्रातशब्दस्य "पशुर्मनुष्यः पक्षी वा" इत्यादि-प्रमाणानुसारेणानियतवृत्त्युत्सेधजीविवाचित्वं केचिन्मन्यन्ते; उक्तं च काशिकायां वृत्तौ "व्रातच्फञोरस्त्रियाम्" इत्यत्र - "व्राता अनियतवृत्तय उत्सेधजीविनः" इति; उत्सेधजीविनः = शरीरप्रयासजीविन इत्यर्थः। "आममात्मानम्" इत्यादि-स्मृतेर्भगवदाज्ञारूपायाः संसारिचेतनमात्रविषयत्वात् कथमनया स्मृत्या भगवतोऽपि संश्रितरक्षणानुष्ठानस्याभिमतत्वसिद्धिरित्यत आह - **ईदृशीति**।

**परत्वसौलभ्ये च संश्रयणीयतानिमित्ततये**ति। ननु अखिलेत्यादि-प्रथमपादप्रतिपाद्यस्य जगत्कारणत्वस्य परत्वपर्यवसितत्वेऽपि **विनतविविधे**ति द्वितीय-पादप्रतिपाद्यस्य मोक्षप्रदत्वस्य कथं सौलभ्यपर्यवसितत्वम्? न हि पुरुषार्थप्रदत्वमात्रेण सौलभ्यं सिध्यति; तथा सति कल्पवृक्षकनकाचलादेरपि सौलभ्यप्रसङ्ग इति चेत् - नैवम्; दातृत्वस्यापि सौलभ्यपर्यवसितत्वात्। उक्तं हि अभिगम्यत्वमोक्षप्रदत्वलक्षणं सौलभ्यमिति। वक्ष्यति च ग्रन्थकारः, "अन्तस्तद्धर्मोपदेशात्" इत्यत्र - (कारुण्य-सौशील्यादीत्यत्र) "कारुण्यसौशील्यवात्सल्यौदार्याणि सौलभ्योपयुक्तानि" इति। ततश्च नानुपपत्तिः। **य एनं विदुरमृतास्ते भवन्ति** इति। मोक्षप्रदत्वलक्षणं सौलभ्यमित्यर्थः। **सं बाहुभ्यां नमतीत्यादि**। **पतत्रैः** = कर्मभिः द्यावापृथिवी

संजनयन् परमात्मा स्वाश्रितविषये बाहुभ्यां **संनमति** सम्यक् प्रह्वीभवति ; "प्रह्वीभवति नीचे हि परो नैच्यं विलोकयन्" इत्यादिस्मृतेरित्यर्थः ।

**विदीप्त** इत्यत्र विशब्दस्य दीप्तिमात्रव्यावर्तकत्वस्य स्वरसतः प्रतीयमानत्वात् पूर्वभागप्रतिपाद्यत्वरूपविशेषणविशिष्टतया दीप्तमित्यस्यार्थस्य स्वरसतोऽप्रतीतेराह - **यद्वा क्षुद्रसुखेति** । केचित्तु द्वितीयपक्षे दीप्तिविदीप्त्योर्भिन्नविषयतया अस्वारस्यं मन्यमानाः प्रथममेव पक्षं रोचयन्ते । ते च तद्वाक्यमेवं योजयन्ति - अग्न्यादिरूपतया पूर्वभागेऽपि ब्रह्मणः प्रतिपाद्यत्वमस्त्येव; "तदेवाग्निस्तद्वायुः" इति उपनिषद्वाक्येन तथैव ज्ञायमानत्वात् । वेदान्तभागे तु विशेषेण दीप्तमिति । विशेषेण=अद्वारकतयेत्यर्थः । **व्युत्पत्तिलक्षणसौष्ठवाभाव इति** । व्युत्पत्तिसमर्थनं प्रथमाधिकरणे ; लक्षणसौष्ठवसमर्थनं जन्माद्यधिकरणे । **रूढिशक्त्येति** । श्रीनिवासशब्दस्य नारायणे रूढत्वात् **श्रीनिवासे ब्रह्मणी**त्यनेन नारायणस्यैव ब्रह्मत्वाविष्करणादिति भावः । **ब्रह्मणस्तदुत्तीर्णत्वं चेति** । भेदाभेदवादिपक्ष इत्यर्थः । वक्ष्यति हि श्रीनिवासशब्दं प्रस्तुत्य - "अनेनैवेश्वरोत्तीर्णब्रह्मवादिनो भेदाभेदवादिनो व्युदस्ताः" इति । **परस्मिन्नि**त्यनेन "ब्रह्मविदाप्नोति परम्" इति श्रुतिगतपरशब्दार्थसूचनमुखेन, "परमतः सेतून्मानसंबन्धभेदव्यपदेशेभ्यः" इत्यधिकरणार्थस्य प्राप्यान्तरव्युदासस्य, परशब्दप्रत्यभिज्ञया, "न स्थानतोऽपि परस्य" इत्यधिकरणार्थस्य उभयलिङ्गत्वस्य वा स्मरणं संभवतीत्यभिप्रयन्नाह - **परस्मिन्नित्यादि** । वस्तुतोऽर्थद्वयसूचनमपि संभवतीति ध्येयम् । **अविशेषेण भक्तिरूपेत्युक्तत्वादिति** । न च "अत्रापि, 'छागो वा मन्त्रवर्णात्' इति न्यायोऽभिप्रेतः" इति पूर्ववाक्येन च, "शेमुषी भक्तिरूपेति भक्तिरूपज्ञानस्योपायत्वं प्रागुक्तम् ; कथमिदानीं प्रीतिरूपध्रुवानुस्मृतेरुपायत्वं प्रतिपाद्यत इत्यत्राह - एवंरूपेति ; एवंरूपा साक्षात्कारप्रीतिरूपत्वपर्यन्ता ध्रुवानुस्मृतिरेव भक्तिशब्दवाच्येत्यर्थः" इति लघुसिद्धान्तग्रन्थेन च विरोधः शङ्कनीयः ; एतस्य मतान्तरत्वेनादोषात् । **रक्षैकदीक्षे परस्मिन्नित्यन्तैरिति** । अत्र रक्षैकदीक्ष इत्यस्मात् परम् 'इति' शब्दोऽध्याहर्तव्यः ; ततश्चेत्थं योजना - परस्मिन्नित्यन्तैः प्रतिपादित उपेयभूत एव रक्षैकदीक्ष इति सिद्धोपाय उक्त इति । ततश्च रक्षैकदीक्ष इति पदोपादानवैयर्थ्यं न चोदनीयमिति द्रष्टव्यम् । **भाट्टप्राभाकरा व्यावर्तिता इति** ।

**भुवन**शब्दस्य विपुलतरकार्यविशेषवाचितया तत्सर्गस्य, "न कदाचिदनीदृशं जगत्" इति वदद्भिरनभ्युपगतत्वादिति भावः ।

( पाराशर्येत्यादिश्लोकार्थविचारः )

**अथ द्वितीयेन श्लोकेन स्वप्रबन्धस्यावान्तरविषय** इति । पाराशर्यवचोरूपसूत्रसमुदाय इत्यर्थः । **इत्यादिभिराचार्योपसत्तेरिति आदि**शब्देन, "विष्णोः कटाक्षमद्वेष आभिमुख्यं च सात्त्विकैः । संभाषणं षडेतानि ह्याचार्यप्राप्तिहेतवः ॥" इत्यादिर्विवक्षितः । **भगवत्कटाक्षहेतुकत्वावगमादिति** । उपदेशकटाक्षादिभिर्भगवत आचार्यलम्भकत्वेन प्राथमिकोपकारकत्वावगमादित्यर्थः । ततश्च "तद्विद्धि" इत्यादीनां भगवत्कटाक्षहेतुकत्वावगमकत्वं नास्तीति चोद्यस्य नावकाशः । **यस्य देवे परा भक्तिरिति** । भक्तिर्हि उपकारकत्वकृतः स्नेहविशेषः । तत्र भगवद्भक्तेरुपमानकोटौ निवेशादाधिक्यं व्यज्यते । तदाधिक्यं चोपकारकत्वाधिक्याधीनम् । अतो भगवत आचार्यापेक्षयोपकाराधिक्यलाभ इति भावः । **पाराशर्यशब्देन जन्मोत्कर्ष इति ।** ननु गोत्राधिकारे, "गर्गादिभ्यो यञ्" इति यञो विधानादनन्तरापत्ये कथं यञ्प्रत्ययः ? उच्यते - गोत्रत्वोपचारात् 'जामदग्न्यो रामः' इतिवत् । ननु शारीरकसूत्रकारो बादरायण इति हि प्रसिद्धिः ; कथं तत् पाराशर्यस्योच्यत इत्याशङ्क्याह - **तस्यैव बादरायणसंज्ञत्वं च विवक्षित**मिति ।

**वचःशब्दस्यार्थे तात्पर्य**मिति । यद्यपि वचस एव सुधात्वं सुनिरूपम् । तथाहि - उपनिषत्पर्यालोचननिष्पन्नत्वलक्षणमुपनिषद्दुग्धाब्धिमध्योद्धृतत्वमर्थस्येव शब्दस्यापि सुवचम् । संसाराग्निविदीपनव्यपगतप्राणात्मसंजीवनत्वमपि तादृशज्ञानविषयतयार्थस्येव शब्दस्यापि तादृशसंजीवनज्ञानजनकत्वेन सुवचम् । पूर्वाचार्यसुरक्षितत्वमपि अर्थस्यान्यथाप्रतीतिलक्षणपीडापरिहारमुखेन शब्दस्यापि सुवचम् । दूरस्थितत्वानीतत्वे अप्यनभिव्यक्ताभिव्यक्तार्थकत्वरूपे शब्देऽपि संभवतः । उपक्रमगतवचस्सुधात्वानुसारेणोपसंहारगतं चास्वारस्यं सोढव्यम् - तथापि रक्षितत्वानीतत्वादिकमर्थद्वारा शब्द इत्यौपसंहारिकबहुस्वारस्यापेक्षया भूयोनुग्रहन्यायेनोपक्रमगतवचश्शब्दस्यैकस्यैवार्थलक्षकत्वं न्याय्यमिति भावः । **वेदादिशब्दाना**मिति । ननु 'वेदवित्'

इत्यादौ विच्छब्दस्यैवार्थतो ज्ञानपरत्वमाश्रित्य वेदशब्दस्यार्थपरत्वाभावोऽपि वक्तुं सुशकः; यथा, "यः सर्वज्ञः सर्ववित्" इत्यत्र सर्वं प्रकारतो वेत्तीत्यर्थाश्रयणम्; न हि तत्र सर्वपदस्य लक्षणा - तथा 'वेदं वेत्ति' इत्युक्ते वेत्तीति शब्दात् न वेदस्य स्वरूपेण ज्ञानमात्रं प्रतीयते, अपितु तत्तदर्थविशेषप्रतिपादकत्वप्रकारेणापि वेत्तीति ह्यर्थः प्रतीयते। अत एव "तदधीते तद्वेद" इति सूत्रे, "यस्तु सामपाठं पठति नासौ वेदेत्युच्यते" इति, "अर्थाभिज्ञ एव वेदेत्युच्यते" इति चोक्तं महाभाष्य इति चेत् - न; "सोऽहं भगवो मन्त्रविदेवास्मि, नात्मवित्" इत्यादौ विच्छब्दस्यार्थप्रतीतिपरत्वाभावेन विच्छब्दादर्थप्रतीत्यदर्शनात्। किंच यदि (यत्र) 'वेदवित्' इत्यादावसंप्रतिपत्तिः, तदा 'नोदाहरणमादर्तव्यम्' इति न्यायेन 'मन्त्रसाक्षात्कारवानयम्' इत्यादिकं संप्रतिपन्नमुदाहरणान्तरं भविष्यतीत्यदोषः। न ह्यत्र मन्त्रशब्दस्य मन्त्रार्थपरत्वे विप्रतिपत्तिरस्ति।

लक्षणाबीजभूतं वचश्शब्दमुख्यार्थभूतवाक्यस्य लक्ष्यमाणार्थसंबन्धमुपपादयति- **अर्थाभिधायकं हि वाक्यमिति। सुधाशब्दलक्षणाभयाच्चेति।** सुधासदृशार्थे लक्षणाया अभ्युपगन्तव्यत्वादिति भावः। ननु रूपकपक्षेऽपि वचश्शब्दस्यार्थे लक्षणा आवश्यकीति तुल्यमिति चेत् --सत्यम्; त्वन्मते सुधाशब्दे लक्षणा, वचसः सुधा वचःसुधेति वचश्शब्दस्य षष्ठ्यर्थलक्षणाप्यभ्युपगन्तव्या; अस्मन्मते तु वचःशब्दमात्रे लक्षणेति भावः। ननु स्वाभिमते, "उपमितं व्याघ्रादिभिः", "मयूरव्यंसकादयश्च" इति वा सूत्रानुशिष्टरूपकसमासेऽपि सुधाशब्दलक्षणा अविशिष्टा; सुधाशब्दस्य तत्सदृशपरत्वात्; "विशेषणं विशेष्येण" इत्यनियमे प्राप्ते आरभ्यमाणस्यास्य सूत्रस्य विशेषणविशेष्यत्वनियमार्थत्वात् (ष्यविषयत्वात्); भिन्नार्थयोर्वचःसुधाशब्दयोर्विशेषणविशेष्यभावस्य सुधाशब्दे सदृशलक्षणामन्तरेणायोगात्; आपादपरिसमाप्तेः, "समानाधिकरणेन" इत्यधिकाराभ्युपगमाच्च; सुधाशब्देन भोग्यत्वमभिप्रेतमिति वक्ष्यमाणत्वाच्चेति चेत् —

सत्यम्; अस्त्येव स्वपक्षेऽपि लक्षणा; तथापि सा, "उपमितं व्याघ्रादिभिः" इति सूत्रानुशिष्टा। षष्ठीसमासपक्षे तु सुधाशब्दस्यार्थे लक्षणा न शास्त्रीया; अपि त्वैच्छिकी। अत एव, "इन्द्रपीतस्य" इति भक्षमन्त्रे बहुव्रीहौ लक्षणाद्वय-

सद्भावेऽप्यैच्छिकलक्षणाद्वययुक्ततत्पुरुषपक्षपरित्यागेन शास्त्रानुशिष्टलक्षणाद्वययुक्तबहुव्रीहिपक्ष एवाश्रितः । इन्द्रेण पीत इति तत्पुरुषाश्रयणे पूर्वपद एका लक्षणा ; तथा पीतपदे पीतावयवलक्षणा । वक्ष्यति चाचार्यः "अन्तस्तद्धर्मोपदेशात्" इत्यत्र, "हृदयपुण्डरीकमिति प्रयोगस्तु 'उपमितं व्याघ्रादिभिः' इति सूत्रविहितसमासत्वात् मुख्य एव" इति ।

केचित्तु रूपकसमासे शक्यतावच्छेदकप्रकारकस्याहार्यारोपस्यैवोत्पत्तेस्तत्र मुख्यत्वमेव । अत एव अन्नमयादावात्मशब्दस्य मुख्यत्वमिति, "अन्वयादिति चेत् स्यादवधारणात्" इत्यादौ क्रियासमभिहारेण ग्रन्थकृद्व्यवहार इति वदन्ति ।

ननु "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" इति सामान्यधर्माप्रयोग एव समासविधानात् पूर्वाचार्यसुरक्षितत्वादेश्च सामान्यधर्मस्य प्रयुज्यमानत्वात् कथं समास इत्याशङ्क्य, 'पुरुषव्याघ्रोऽभिरूपः' इत्यादिषु व्याघ्रशब्दविवक्षितशूरत्वरूपसामान्यधर्माप्रयोगेणाभिरूपशब्दप्रयोगेऽपि समासवत् सुधाशब्दविवक्षितभोग्यत्वरूपधर्माप्रयोगात् समास उपपद्यत इत्यभिप्रयन्नाह - **सुधाशब्देन भोग्यत्वमभिप्रेतमिति** । **आनन्त्यादीति** आदिशब्देन गाम्भीर्याद्युच्यते । **आध्यात्मिकादीति** आदिशब्देनाधिदैविकाधिभौतिकयोर्ग्रहणम् ।

**समिति कैवल्यव्यावृत्तिरिति** । नन्वेतद्वाक्यपर्यालोचनायां कैवल्यस्यापि संसारोन्मोचनकोटावनुप्रवेश एवाचार्याणामभिमत इति प्रतीयत इति चेत् - मैवम् ; समिति कैवल्यव्यावृत्तिरिति वदद्भिः कैवल्यस्य समीचीनसंसारनिवृत्तित्वाभावकथनेन संसारानुवृत्तेरेवाभ्युपेतत्वात् । प्राणशब्दस्य परमात्मपरत्वसमर्थनपूर्वकं परमात्मालाभे संसारस्य हेतुत्वं कथयतामाचार्याणां कैवल्ये संसाराभावस्याभिमतत्वे, "निमित्तापाये नैमित्तिकस्याप्यपायः" इति न्यायात् कैवल्ये संसाराभावेन परमात्मलाभस्यैवाभ्युपगन्तव्यत्वप्रसङ्गात् । वस्तुतस्तु व्यपगतप्राणात्मसंजीवनीमित्युक्ते व्यपगतप्राणानां संजीवनीं प्राणधारिकामित्येवार्थः प्रतीयते ; जीवनशब्दस्य प्राणधारणार्थत्वात् । ततश्च यः प्राणो व्यपगतः, तत्प्राणलम्भिकामित्यर्थः पर्यवस्यति । ततश्च व्यपगतपरमात्मरूपप्राणलम्भकत्वं कैवल्यस्याप्रसक्तमेव । कथं तर्हि, **समिति कैवल्यव्यावृत्तिरित्युच्यत** इति चेत् ; इत्थम् - प्राणशब्दो जीवपरमात्मोभयपरः ; भूम-

विद्यायां प्राणशब्दस्य जीवेऽपि प्रयोगात् । ततश्च संसाराग्निविदीपनेन व्यपगतप्राणानां जीवपरमात्मानुभवशून्यानां जीवनमित्युक्ते कैवल्यस्यापि तदन्यतरजीवरूपप्राणलम्भकत्वमस्तीति तद्व्यावृत्त्यर्थं समित्युपसर्गः । ततश्च व्यपगतयावत्प्राणलम्भकत्वं समित्युपसर्गसिद्धमिति ग्रन्थाभिप्रायो द्रष्टव्यः ।

निपातस्यपत्यधिकरणन्यायेन कर्मधारयमभिप्रेत्याह - **बह्व्यो मतय इति** । एककर्तृकमतिभेदस्य परस्परव्याहत्यसंभवात् कर्तृभेदोऽवश्यं वाच्य इत्यभिप्रायेणाह - **बह्वीनां मतयो** वेति । **गायत्र्यवयवभूतैरिति** । "कद्रूश्च वै सुपर्णी च" इत्यनुवाके, "तृतीयस्यामितो दिवि सोम आसीत्" इति मन्त्रे च गायत्र्या अमृताहरणस्य प्रसिद्धेरिति भावः । **पिबन्तित्यनेन** रस्यतायाः स्वरसतः प्रतीतेः **अन्वहमित्यस्य** तदतिशयद्योतकत्वं युक्तमिति मत्वाऽऽह - **रस्यतातिशयादिति** । ग्रन्थस्य तृप्तिकरत्वप्रतिपादनस्य मन्दफलत्वादाह - **यद्वा गभीरत्वादिति** ।

**पूर्वाचार्यशब्दोऽपीति** । पूर्वाचार्यसुरक्षितामिति श्लोकस्थपूर्वाचार्यशब्दोऽपीत्यर्थः । **विस्तीर्णां संचिक्षिपुरित्यनेनेति** । भवदीयस्य शारीरकव्याख्यानस्य कथं सांप्रदायिकत्वम्? मूलानुपलम्भात्; न च टङ्कद्रमिडादिभाष्यग्रन्थ एव मूलमिति वाच्यम्, तस्यापि सांप्रदायिकत्वे प्रमाणाभावादित्याशङ्कापरिहारोऽप्यर्थात् सूच्यत इति भावः । भाष्यव्याख्याने प्रवृत्तस्य (भवतः?) भगवत आचार्यस्य भाष्यान्तर्गतश्लोकव्याख्यानमनुचितमित्यभिप्रायेणाशङ्कते - **ननु सूत्रार्थ** इत्यादिना । **मङ्गलाचरणमिति**; अखिलेत्यादि श्लोकद्वयमित्यर्थः । **अविघ्नपरिसमाप्त्याद्यर्थतयेति** । आदिशब्देन विषयप्रयोजनाधिकारिणः कथ्यन्ते । **तदन्तर्भाव्येवेति** । महाभाष्ये पस्पशाह्निकवदिति भावः ।

**प्रस्तोतव्यत्वमुच्यत इति चेदिति** । यथा "त्वामस्मि (हं) वच्मि विदुषां समवायोऽत्र तिष्ठति" इत्यत्र वच्मीत्युक्त्या उच्यमानस्यार्थस्य उपदेश्यत्वमवसीयते, एवमारभ्यत इत्यर्थेन अथेत्यनेनारम्भयोग्यत्वमुच्यत इत्यर्थः स्यादिति शङ्काभिप्रायः । **उपदेशार्थज्ञापनपरत्वाभावादिति** । प्रस्तोतव्यत्वमित्यत्र तव्यप्रत्ययस्य, "प्रैषातिसर्ग" इति सूत्रविहितप्रैषार्थककृत्यप्रत्ययत्वासंभवात्, "अर्हे कृत्यतृचश्च" इत्यर्हार्थविहितकृत्यप्रत्ययत्वं वाच्यमित्यर्थः । **योग्यत्वमशाब्दमिति** । ननु प्रस्तोतव्यत्वस्य

वाच्यत्वमभ्युपगम्य कथं योग्यत्वस्य शाब्दत्वं प्रत्याख्यायते? "अर्हे कृत्यतृचश्च" इत्यनुशासनेन प्रस्तावार्हत्वस्यापि प्रस्तोतव्यशब्दार्थत्वात्। न च प्रस्तोतव्यत्वस्यापि ाच्यत्वं नाभ्युपगतमिति वाच्यम् — **तदानीमपी**त्यपिशब्देन तदभ्युपेत्यैव प्रवृत्तेरिति चेत् - न — **तदानीमपी**त्य**पि**शब्देन न वाच्यत्वमभ्युपेतम्, अपि तु तत्पदप्रयोज्य-प्रतीतिविषयत्वमात्रं प्रस्तोतव्यत्वस्याभ्युपेतम्। ततश्च, यथा धूमे बोधिते स्वयमेवासौ वह्निमनुमास्यतीति बुद्ध्या प्रयुक्ते 'धूमोऽस्ति' इति वाक्ये वह्न्यस्तित्वं न शाब्दम्, मुख्यार्थानुपपत्त्यभावेन वह्नौ लक्षणाया धूमशब्दे (ब्दस्य) अभावात् - तद्वत् प्रारम्भ-योग्यत्वस्य कथंचिदथशब्दप्रयोज्यप्रतीतिविषयत्वे सत्यपि न शाब्दत्वमिति भावः। ननु वह्नितात्पर्यके 'धूमोऽस्ति' इति वाक्ये वह्न्यस्तित्वस्य शाब्दत्वमपि संभवत्येव, तात्पर्यस्यापि लक्षणाबीजत्वात्। 'अब्भक्षः' इत्यादौ यथाश्रुतार्थप्रतिपादनमात्रेण प्रयोजनानवाप्तेस्तन्मात्रभक्षणस्य शाब्दत्वाङ्गीकारात्। नद्यां सिष्णासुं प्रति प्रयुक्ते, 'नद्यां ग्राहाः सन्ति' इति वाक्ये, 'तत्र मा स्नासीः' इत्यादिवाक्यार्थलक्षकत्वस्य तान्त्रिकैरभ्युपेतत्वादिति चेत् - न। आरम्भयोग्यत्वस्य व्यङ्ग्यार्थतया शक्तिलक्षणान्य-तरमूलकत्वाभावेन शाब्दत्वाभावात्; प्रसिद्धानन्तर्यार्थप्रतिपादनमुखेन वक्ष्यमाण-प्रयोजनसंभवे अप्रसिद्धमन्दप्रयोजनकप्रारम्भार्थकत्वस्यायुक्तत्वाच्च। अथवा, **अशाब्दम्** अवाच्यम् अशक्यमित्यर्थः। योग्यत्वस्य कथंचिदमुख्यया वृत्त्या प्रतिपाद्यत्वसंभवेऽपि मुख्यत्वासंभवात् मुख्यार्थग्रहणे संभवति तत्त्यागस्यानुचितत्वादिति भावः। **एव-मथयोग्येत्युक्ते** इति। यद्यपि, 'अथातो ब्रह्मजिज्ञासा योग्या' इत्यध्याहारे अथेत्यस्याधिक्रियत इत्यर्थः; ततश्च 'अधिक्रियते ब्रह्मजिज्ञासा योग्या' इत्यर्थः स्यात्। योग्यत्वं च संनिधानात् अधिकार एव लभ्यते। यथा, 'योग्या ब्राह्मणा आनीयन्ताम्' इत्युक्ते आनयनयोग्या इत्येव प्रतीयते। ततश्च 'प्रारभ्यते योग्या ब्रह्मजिज्ञासा' इत्युक्ते प्रारम्भयोग्येति प्रतीतिः सिध्यति - तथापि अधिक्रियते योग्येति न शाब्दप्रतीतिः स्यादिति भावः। अत एव वक्ष्यति — "अधिकृतमित्यपि फलि-तार्थकथनम्; न वाचनिकोक्तिः" इति। **चादीनां द्योतकत्वादिति**। निपा-तानां द्योतकत्वस्य वाक्यपदीये निर्णीतत्वादिति भावः। नन्विदमानन्तर्यार्थकत्व-पक्षेऽपि समानमित्याशङ्क्य सप्रयोजनत्वाप्रयोजनत्वाभ्यां वैषम्यमित्याह — **अत्र त्वित्यादिना**।

**माङ्गलिकावुभाविति** । प्रयोजनार्थे टक्प्रत्यय इति भावः । यद्यपि सूत्रादिसूत्रे अन्वयप्रतियोग्यनुपस्थापकस्यापि वाक्यारम्भ मङ्गलार्थत्ववचन सप्रयोजनत्वं संभवति - तथाप्यन्वयप्रतियोग्युपस्थापकत्वेन वाक्यार्थान्वयित्वसंभवे गत्यभावस्वीकार्यमङ्गलमात्रप्रयोजनत्वस्यायुक्तत्वमिति भावः । **प्रकृताद्दर्थादर्थान्तरपरत्वमित्यत्र** प्रकृतादिति पञ्चमी ल्यब्लोपे । न तु "अन्यारादितर" इत्यन्यार्थे इत्याह - **तद्धि प्रकृतमपेक्ष्येति** । अथशब्देन वक्ष्यमाणस्य कल्पान्तरस्य प्रकृतविषयत्वं हि ज्ञाप्यते । 'किं ब्रह्म सगुणमथ निर्गुणम्' इत्युक्ते प्रकृतं ब्रह्मापेक्ष्यैव निर्गुणत्वरूपकल्पान्तरमुपन्यस्यत इति प्रतीयते; न तु तद्व्यतिरिक्तं जातं जडं वापेक्ष्येति । यथा वा, "अथाध्यात्मम्" इत्यादि । ततश्च प्रकृतापेक्षत्वमथशब्दार्थः । अत एवोत्तरत्रापि, "न ह्यमङ्गलत्वप्रकृतानपेक्षत्वाकात्स्न्यैः पूर्वपक्षोत्थानम्" इति वक्ष्यति ।

**हेतोः साध्याविशिष्टत्वं स्यादिति** । नन्वानन्तर्यार्थत्वपक्षेऽपि नाथशब्दोपस्थापितमानन्तर्यं हेतूकर्तुं शक्यम् । न ह्यानन्तर्यात् ब्रह्मजिज्ञासा कर्तव्येति वक्तुं शक्यते-अपि तु ब्रह्मजिज्ञासाक्षिप्तः कर्मविचार एव अतश्शब्देन हेतुतया परामृश्यते । स एवाथशब्दनिर्दिष्टानन्तर्यप्रतियोगितयाप्यन्वेतीति वाच्यम् । तद्वदिहापि ब्रह्मजिज्ञासाक्षिप्तकर्मविचार एवातःशब्देन हेतुतया परामृश्यताम्, न त्वथशब्दोपस्थापितमाधिकृतत्वमिति चेत् - न; "उत्तरार्थादिशब्दानां सापेक्षार्थाभिधायिनाम् । नापेक्षणीयसंबन्धात् प्रागर्थोऽध्यवसीयते ॥" इति न्यायेनाथशब्दस्य केवलानन्तर्यप्रतिपादकत्वेन पूर्ववृत्तकर्मविचारविशिष्टानन्तर्यप्रतिपादकतया कर्मविचारस्याप्यथशब्दोपस्थापितत्वेनानन्तर्यार्थत्वपक्षे अथशब्दोपस्थापितस्य कर्मविचारस्य अतःशब्देन हेतुतया परामर्शः संभवेत् । अधिकारार्थत्वपक्षे तु न तथेति वैषम्यादिति भावः । ननु "मङ्गलानन्तरारम्भप्रश्नकात्स्न्र्येष्वथो अथ" इत्यानन्तर्यादिवत् मङ्गलस्यापि सहपाठात् वाच्यत्वमेव स्यादित्यस्वरसादाह - **वाच्यत्वाभ्युपगमेऽपीति** । **पूर्वपक्षयुक्तिप्रत्यनीकत्वाभावादिति** । आनन्तर्यपक्षे तु कर्मणामल्पास्थिरफलत्वप्रतीतिसहितानन्तस्थिरफलब्रह्मप्रतीतिनिरूपाधिकारिविशेषणसंभवरूपपूर्वपक्षयुक्तौ कर्मविचारहेतुत्वोपन्यासस्य प्रत्यनीकत्वादिति भावः । न ह्यमङ्गलत्वप्रकृतानपेक्षत्वाकात्स्न्यैः

1. घटं । षण्ढं ।

**पूर्वपक्षोत्थान**मिति । यद्यप्ययमङ्गलत्वादिना पूर्वपक्षे न मङ्गलत्वादीनां हेतुतया परामर्शः संभवति । मङ्गलत्वादेस्तु पूर्वपक्षिभिरनभ्युपेतत्वात् । उभयसंप्रतिपन्नस्यैव हेतूकरणीयत्वात् - तथापि क्षित्यादिषु सकर्तृकत्वसाधने सावयवत्वसाधितस्य कार्यत्वस्य प्रसाध्याङ्गकस्य हेतुत्ववत् प्रसाध्याङ्गकानां मङ्गलत्वादीनां हेतुत्वं संभवतीति भावः ।

**प्रश्नवाक्यगतप्रश्न**स्त्विति । नन्वथशब्दोपस्थापितत्वेन प्रश्नस्यातःशब्दपरामर्शयोग्यत्वात् कुतो नातःशब्देन परामर्शः? न च तस्यासिद्धत्वात् न हेतुतया परामर्श इति वाच्यम् । न हि हेतुतया परामर्शदशायां हेतुतया परामृश्यस्य तादात्विकसिद्धत्वमपेक्षितम्, 'भाविनो वर्गात् फलम्' इत्यादिप्रयोगदर्शनात, 'प्रश्नेनार्थो ज्ञायते किम्?' इति प्रश्नवाक्य एव प्रश्नस्य तृतीयया हेतुत्वदर्शनात् । अन्यत्र (अत्रत्य) प्रश्नशब्दस्य प्रश्नसामान्यपरतया क्रियमाणप्रश्नादन्य एव प्रश्नस्तृतीयया हेतुत्वेन परामृश्यत इति वक्तुं (क्तुम) शक्यत्वादिति चेत् - न - अथकिंशब्दादौ प्रश्नस्य प्रयोक्तृधर्मत्वेन सूचने सत्यपि वाक्यार्थान्वयित्वाभावात; 'हा, हन्त' इत्यादौ विषादवत् । न तु प्रश्नादिशब्दवत् प्रश्नस्य वाच्यत्वमित्यत्र तात्पर्यात् । **भवतीति पदेने**ति । केचित्तु अथशब्द इत्यनेनैव स्वस्वारस्यं सूच्यत इति वदन्ति । **इत्यादिसूत्रान्तरे**ति । "अथशब्दानुशासनम्" इत्यादौ सूत्रत्वोक्तिरौपचारिकीति द्रष्टव्यम् ।

**अथशब्दस्यानन्तर्ये स्वारस्यं ही**ति । अस्मिन् प्रयोगे तदर्थकत्वस्य सापेक्षत्वेऽपि स्वारस्यमात्रस्य न सापेक्षत्वमिति भावः । यथा गुरुभार्गवावित्यादिषु परस्परसाहचर्यात ग्रहयोरेव प्रतीतिः; नाचार्यपरशुरामयोः । यथा च रामकृष्णाविति बलकेशवयोरेव प्रतीतिः; न तु दाशरथ्यर्जुनयोः - एवमिहापीतरेतरसाहचर्यादर्थनिर्णायकत्वेऽपि न दोष इति परिहारान्तरं द्रष्टव्यम् । **इमे चाभ्युच्चययुक्ती** इति । **इमे** अथातःशब्दस्वारस्ये । **अत्रपदाभिप्रेते**ति । ब्रह्मजिज्ञासापदाक्षिप्तपूर्ववृत्तसापेक्षत्वादिति भावः ।

( अथातःपदद्वयकृत्यविचारः )

ननु, 'अथातःशब्दयोरन्यतरेणालं' मित्यस्य कोऽभिप्रायः? किमेकाकारप्रतीतिजनकत्वादिति, उत 'भूतले घटः', 'घटवत् भूतलम्' इतिवत् प्रयोजनैक्यादिति वेति विकल्पं हृदि निधाय जिज्ञासाविशेष्यकोत्तरकालकर्तव्यता-

प्रकारकज्ञानजनकस्य अथशब्दस्य, पूर्ववृत्तविशेष्यकहेतुत्वप्रकारकज्ञानजनकस्य चातः-शब्दस्य नैकाकारप्रतीतिजनकत्वमिति प्रथमपक्षं दूषयति - **अथशब्दस्यानन्तरकालमुपस्थापयत** इत्यादिना । द्वितीयं दूषयति - **प्रतिज्ञाहेतुरूपेणेति** । **न कर्तव्यतामात्रं साध्यधर्म** इति । ब्रह्मजिज्ञासा विचारितकर्मभिः पुरुषैरनुष्ठेया, कर्मणामल्पास्थिरफलत्वप्रतीतिसहितानन्तस्थिरफलप्रतीतेर्विचारितकर्मसु पुरुषेषु संभवादिति प्रदर्शनं सुचितम् । ततश्च विचारितकर्मत्वरूपपुरुषविशेषणप्रतिपत्त्यर्थमथशब्दोऽपेक्षितः । तस्मिंश्च सति उक्तार्थो लभ्यत इति भावः । **शास्त्रान्तरश्रवणेन विना संपादयितुमशक्यत्वादिति** । नित्यानित्यवस्तुविवेकादीनामिति शेषः । **अथशब्दाक्षिप्तेति** । अथशब्दाक्षिप्तकर्मविचारहेतुत्वाक्षिप्तस्य विशिष्टहेतोरसिद्धिशङ्कापरिहारार्थत्वादित्यर्थः ।

( अधीतसाङ्गेति भाष्यविषयः )

**अधिगताल्पास्थिरफलकेवलकर्मज्ञानतयेति भाष्यस्यायमर्थः** -- अधिगतम् = प्राप्तम् अल्पास्थिरफलं केवलकर्मेति ज्ञानं यस्य सोऽधिगताल्पास्थिरफलकेवलकर्मज्ञानः, तत्त्वेनेति । **उपनीय तु यश्शिष्यमिति** । ननु श्रोत्रियोपाध्यायगुर्वादिनामविधानवत् तत्प्रकरणस्थमिदं वाक्यमुपनीयाध्यापयितुराचार्यनामविधानपरमिति ग्रन्थकृतैव वक्ष्यमाणत्वात् कथमस्य वाक्यस्य साङ्गसशिरस्कवेदाध्ययनकर्तव्यतायां प्रमाणतयोपन्यास इति चेत् - मैवम् । " कार्यकालं संज्ञापरिभाषम् " इति न्यायेनास्य वाक्यस्य, ' आचार्यवान् भवेत् ' इति विधिवाक्यैकवाक्यतया तद्वाक्यैकदेशस्यास्य तदेकवाक्यतया प्रामाण्यसंभवात् । ततश्च कंचिद्गुरुमुपेत्य तस्य सकाशात् सकल्पं सरहस्यं च वेदं स्वीकुर्वीतेति हि तस्य वाक्यस्यार्थ इति भावः । गुरुमताभिप्रायेण वा बोध्यम् । गुरुमते हि, ' सकल्पं सरहस्यं वेदमध्यापयेदाचार्यककामः ' इति श्रुत्युन्नायकत्वादस्य वाक्यस्याध्यापनविधिप्रयुक्तवेदाध्ययनवत् कल्परहस्याध्ययनस्यापि सिद्धत्वोपपत्तेः । **आगमोत्थेति** । विचारसहकृतवाक्यजन्यमागमोत्थम् । विवेकविमोकादिजन्यं तु ध्यानादिरूपम् । **कर्मविचारस्य हेतुतयोक्तत्वात्** इत्यनन्तरं ' सिद्धः ' इति शेषः । सिद्धिप्रकारः कथमित्याशङ्क्य, कारणतया कार्यतया च [अङ्ग] सिद्धिरित्याह - **कर्मविचारस्येत्यादिना** । **आवृत्तिनिधानादिभिरिति** ।

यदि चातुर्मास्यादीनामक्षयफलत्वम्, तदा पुनस्तदनुष्ठानवैयर्थ्यात् प्रत्यब्दं चातुर्मास्याद्यावृत्तिविधानं व्यर्थं स्यादिति भावः।

ननु — [1]आवृत्तिविधानस्य न कर्मणामल्पास्थिरफलत्वावगमहेतुत्वम्; "आवृत्तिरसकृदुपदेशात्" इत्यधिकरणे, "आ प्रयाणात्तत्रापि हि दृष्टम्" इत्यधिकरणे च ज्ञानस्याप्यावृत्तिप्रतिपादनेन तत्फलस्य मोक्षस्याप्यनित्यत्वप्रसङ्गात्। यद्याप्रयाणमहरहरावृत्तिविशिष्टस्यैव ज्ञानस्य मोक्षः फलम्, तदा अत्रापि तथास्तु। यदि 'प्रतिवसन्तं सोमयागस्य; पञ्चाब्दपर्यन्तं वा पञ्चदशाब्दपर्यन्तं वा प्रत्यब्दं वा चातुर्मास्यानाम्' इति विहितावृत्तिवैशिष्ट्येन फलजनकत्वाभ्युपगमे तत्तदावृत्तितारतम्यात् फलतारतम्यं स्यादित्युच्येत, तदा ज्ञानावृत्तेरप्याप्रयाणमनुवर्तनीयायाः प्रयाणकालस्याव्यवस्थितत्वात् तारतम्येन फलतारतम्यं स्यादिति तुल्यम्। न च "कर्मण्यारम्भभाव्यत्वात् कृषिवत् प्रत्यारम्भं फलानि स्युः" इत्येकादशाध्यायाधिकरणे (११-१-३) कर्मणां कृषिन्यायेन प्रत्यारम्भं फलभेदव्युत्पादनादनित्यफलत्वमिति वाच्यम् - आवृत्तिवैशिष्ट्येन येषां कर्मणां फलजनकत्वम्, तदतिरिक्तविषयत्वात् तस्य। अवश्यं च तथाभ्युपगन्तव्यम्। इतरथा दाक्षायणयज्ञे फलभेदः स्यात्। न च, "फलस्य कर्मनिष्पत्तेस्तेषां लोकवत् परिमाणतो विशेषः स्यात्" इत्यर्थवादाधिकरणसूत्रे (१-२ १७) बह्वल्पाङ्गकर्मगुरुलघुभावानुसारेण फलतारतम्यस्योक्तत्वात्, "हिरण्यदा अमृतत्वं भजन्ते", "अपाम सोमममृता अभूम", "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतम्" इत्यादिना अमृतत्वसाधनतयोक्तानां हिरण्यदानसोमयागचातुर्मास्यानामतुल्यत्वावगत्या अल्पास्थिरफलत्वं सिध्येदिति शङ्कनीयम् - "विकल्पोऽविशिष्टफलत्वात्" इत्यधिकरणे बह्वल्पगुणविद्यानां प्रपत्तेश्च गुरुलघुभावे सत्यप्येकरूपमुक्तिफलताया वक्ष्यमाणत्वात् तद्वदेव कर्मण्युपपत्तेः। ननु उपासनानामाप्रयाणमावृत्तिविशिष्टतया फलसाधनत्वम्, बह्वल्पगुणकोपासनानां प्रपत्तेश्च विकल्पेन साधनत्वं च तृतीये वक्ष्यत इत्येतत् सत्यम् - तथापि ब्रह्मविचारारम्भदशायां वक्ष्यमाणन्यायापरिज्ञानादावृत्तिविधानादिमात्रेण कर्मणामल्पास्थिरफलत्वं ज्ञायत इति

---

1. शिवार्कमणिदीपिको (८२ पु.) क्तरीत्या पूर्वपक्षः स्वयं परिष्कृत्य प्रवर्त्यते स्वयमेव समाधानव्युत्पादनाय।

चेत् - सत्यमनेन ज्ञायते । तथापि वक्ष्यमाणविरोधादावृत्तिविधानादियुक्त्यभासत्वात् तन्मूला कर्मफलानित्यत्वबुद्धिरप्याभासीभवेत् । किंच, आरम्भदशायामपि वक्ष्यमाणार्थानां श्रुतशास्त्रेभ्योऽवगतिसंभवात् तादृशवक्ष्यमाणन्यायावगतिमतां पुरुषाणां कर्मणामल्पास्थिरफलत्वावगत्यभावेन ब्रह्मविचारे प्रवृत्त्यभावप्रसङ्गात् । किंच, अवहननवत् विचारस्य दृष्टार्थत्वेन यावत्फलोदयमावर्तनीयतया पुनर्विचारारम्भदशायाम् "विकल्पोऽविशिष्टफलत्वात्" इति तृतीयाध्यायसूत्रन्यायावगतिसंभवात् । एतेन, "ज्योतिष्टोमेन स्वर्गकामो यजेत" इति स्वर्गार्थत्वेन विहितस्य सोमयागस्योत्तरवेद्या विकल्पितमन्यावारस्थण्डिलरूपाग्निमाश्रित्य, "श्येनचितं चिन्वीत स्वर्गकामः" इति स्वर्गार्थश्येनाकृतिरूपगुणविधानसामर्थ्येन तद्गुणयुक्तसोमयागजन्यस्वर्गात् केवलतज्जन्यस्वर्गस्य न्यूनतावश्यम्भावात् अल्पास्थिरफलत्वावगमः सिध्यतीत्यपि शङ्का परास्ता । "ए (एकै ?) कस्मै वा अन्ये यज्ञक्रतवः कामायाह्रियन्ते, सर्वेभ्यो ज्योतिष्टोमः" इति सर्वफलार्थतया विहितस्य सोमयागस्य - "यो वृष्टिकामो योऽन्नाद्यकामो यः स्वर्गकामः स सौभरेण स्तुवीत" इति फलत्रयसाधनतया विहितस्य सौभरस्य तत्तत्फलविशेषार्थप्रयोगे, "हीषिति वृष्टिकामाय निधनं कुर्यात्, ऊर्गित्यन्नाद्यकामाय, ऊ इति स्वर्गकामाय" इति निधनविशेषव्यवस्थावत् स्वर्गार्थसोमयागप्रयोगे गुणविशेषव्यवस्थैत्युपपत्तेः । न च, "अपाम सोममसृता अभूम", "अक्षय्यं ह वै" इत्यादिमन्त्रार्थवादवर्णितानां फलत्वाभावनियमः, सूक्तवाकमन्त्राम्नातानामायुरादीनां रात्रिसत्रार्थवादाम्नातायाः प्रतिष्ठायाश्च फलत्वदर्शनात् । न च सोमयागस्य विध्युद्देशे फलश्रवणात् मन्त्रोक्तफलं न ग्राह्यमिति वाच्यम्—विध्युद्देशश्रुत एव स्वर्गे नित्यत्वरूपविशेषणस्य, "सप्तर्षीणां सुकृतां यत्र लोकस्तत्रेमं यज्ञं यजमानं च धेहि" इति मन्त्रेण लोकविशेषभोग्यत्वस्येव समर्पणोपपत्तेः । "दिवि ज्योतिरजरमारभेताम्" इत्यैष्टिक एव मन्त्रान्तरे पत्नीयजमानाभ्यां प्राप्यस्य फलस्य नित्यत्वोक्तेश्च । "फलवत्तां [च] दर्शयति" इति पत्न्यधिकरणसूत्रे (पू. मी. ६ - १ - २१) विशिष्यास्य मन्त्रस्य फलसमर्पकतायाः प्रदर्शितत्वात् - इति चेत् ।

उच्यते — यत्तावदुक्तं ज्ञानस्याप्यावृत्तिश्रवणादिति । तन्न, ज्ञानस्यासाधनत्वात् ध्यानस्यैव साधनत्वात् । तस्य चावृत्तिविशिष्टत्वात् । यद्यपि "आप्रयाणात्" इत्यत्र

ध्यानस्याप्यावृत्तिरुक्ता, तथापि "प्रायणान्तमोंकारमभिध्यायीत" इति प्रायणान्तमनुष्ठितस्यैव ध्यानस्य मोक्षसाधनत्वात्। कर्मणि, तादृशावृत्तिविशिष्टस्य कर्मणो मुक्तिसाधनत्वप्रतिपादकवाक्यादर्शनात्। "स खल्वेवं वर्तयन् यावदायुषम्" इत्यस्य ध्यानविषयत्वात्। कर्मसु तु पञ्चाब्दपञ्चदशाब्दाद्यावृत्तितारतम्यात् फलभेदस्यावश्यम्भावात्। न हि ध्यानादावीदृशमावृत्तितारतम्यमस्ति, प्रायणान्तावृत्तस्यैव साधनत्वात्। न हि प्रायणान्तावृत्तं (त्ति) साधनं कस्यचित् शीघ्रमासीदित्येतावता फललाघवं कल्पयितुमुचितम्। तथा हि सति कस्यचिद् दृढाङ्गस्य सहकारिपौष्कल्यवतः किंचित् कर्म शीघ्रं निर्वृत्तमिति तत्र फललाघवं कल्प्येत। न हि सेतुदर्शनं कस्यचित् रोग (चोर) पीडादिकमन्तरेण निष्पन्नमित्यतादृशापेक्षया फलवैषम्यं कल्प्यते। उपसंहार्यगुणाल्पभूयस्त्वादिकमपि न फलवैषम्यकल्पकम्; यथाकथंचिदाप्रयाणं निरन्तरकर्तव्यत्वाविशेषेणानुष्ठाने सौकर्यदौष्कर्यासंभवात्। तस्मादावृत्तितारतम्येन फलतारतम्यस्यावश्याभ्युपेयत्वात् मुक्तौ च तदभावात् मुक्तेरन्यदेव कर्मणः फलं वाच्यम्। किंच अनेकजन्मानुष्ठितनित्यनैमित्तिककर्मनिर्मलीकृतान्तःकरणसंपाद्यायाः शान्त्याद्यङ्गिकाया भक्तेः सर्वतो गरीयस्त्वेन तत्साध्यमुक्तेः कर्मसाध्यत्वे गुरुतरभक्तिरूपसाधनविधेर्महाविश्वासानुबद्धप्रपत्तिविधेश्चाननुष्ठानलक्षणाप्रामाण्यप्रसङ्गात् न कर्मणां भक्तिप्रपत्तिसाध्यमोक्षफलकत्वमिति कर्मफलानित्यत्वनिश्चयः कृतकर्मविचाराणां सुलभ इति **आवृत्तिविधानादिभि**रित्यस्य ग्रन्थस्याभिप्रायः।

**कर्मणः फलद्वारा हानायेति**। फलद्वारा हानम् = फलस्यानित्यत्वज्ञानमिति यावत्। **ज्ञातव्यत्वम्** विचार्यत्वमित्यर्थः। कर्मविचारस्य कर्मफलानित्यत्वज्ञानफलकत्वं कण्ठोक्तमित्यर्थः। **स्वरूपेणोपादानायेति**। तृतीयाध्यायकरिष्यमाणविचारापेक्षितकर्मस्वरूपपरिज्ञानायेत्यर्थः। एतेन - कर्मविचारस्य ब्रह्मविचारोपयोगदशायां कर्मज्ञानस्य हानोपादानोपयोगसमर्थनमसंगतम्। न हि हानोपादानयोर्विचारोपयोगोऽस्ति, येन तद्द्वारा कर्मविचारो ब्रह्मविचारोपयुक्तः स्यात्। उपादेयस्य नित्यनैमित्तिककर्मणो ध्यानाङ्गत्वेन विचाराङ्गत्वाभावात्। न च विचारे प्रवर्तमानस्यापि चित्तशुद्ध्यर्थं कर्मानुष्ठानमपेक्षितम्, काम्यानां च कर्मणां त्यागोऽपेक्षित इति वाच्यम्। तर्हि कर्मविचारानन्तरं किंचित्कालं कर्मानुष्ठाय विशुद्धचित्तो विचारे प्रवर्तत इत्यन्य-

वधानेन प्रवृत्तिर्न स्यात् - इति शङ्का परास्ता। हानोपादानशब्दयोरनित्यत्वनित्यत्वद्वारा हेयत्वोपादेयत्वज्ञापनपरत्वात्। अत एव हि वक्ष्यति - **स्वरूपेणोपादेयत्वप्रतीते-(ति?) रनन्तस्थिरफलापातप्रतीत्यन्तर्भावादिति** ( भूमेति? )। ननु कर्मविचारात् कर्मणामल्पास्थिरफलत्वनिश्चयसद्भावेऽपि न हेयत्वनिश्चयः। उत्तरभागे अनन्तस्थिर-फलनिश्चयाभावेन सर्वेलाप्यल्पास्थिरफलत्वसंभावनावतः पूर्वभागप्रतिपन्ने कर्मणि हेयत्वनिश्चयानिष्पत्तेरिति चेत् — न; उत्कटकोटिकहेयत्वज्ञाननिर्वाहसंभवेनादोषात्। **ग्रन्थाविरोध** इति। " अपेक्षितकर्मस्वरूपज्ञानं केवलकर्मणामल्पास्थिरफलत्वज्ञानं च " इति प्रयोजनद्वयसूचकग्रन्थेन कर्मफलानित्यत्वज्ञानरूपैकप्रयोजनप्रदर्शकस्यास्य न विरोध इत्यर्थः। **कर्मानुष्ठानभावप्रसङ्ग** इति। अकृतकर्मविचाराणां त्वनुष्ठा-नौपयिकार्थनिश्चयाभावेनानुष्ठानाप्रसक्तेः अनुष्ठानस्य कृतकर्मविचारपुरुषविषयतया तेषां च ब्रह्मविचारप्रवृत्तत्वादनुष्ठानभावप्रसङ्ग इत्याक्षेपाभिप्रायः। **श्रुत्वापि ये स्वर्गार्थिन** इति। ननु कृतकर्मविचाराणां सर्वेषां ब्रह्मविचारे प्रवृत्ततया वैराग्यपादश्रवणेन स्वर्गार्थित्वमेव न स्यादित्याक्षिपन्तं प्रति नेदमुत्तरमिति चेत् - न; श्रुत्वापि ये स्वर्गार्थिनो दृश्यन्ते, तेषामिति तदर्थत्वात्। **ब्रह्मविचारसामग्रीति**। कृतेऽपि ब्रह्मविचारे अदृष्टवैगुण्येनाशुद्धचित्ततया स्वर्गार्थकर्मानुष्ठानसंभवादित्यपि द्रष्टव्यम्।

## ( षष्ठ्यर्थविचारः )

**कर्मत्वकरणत्वादिसंबन्धविशेषेष्विति**। नन्वेतद्वाक्यपर्यालोचनायां षष्ठ्यर्थभूतसंबन्धसामान्यावान्तरविशेषरूपत्वं कर्मत्वकरणत्वादेः प्रतीयते। न च तद् युज्यते वक्तुम्; " षष्ठी शेषे " इति कर्माद्यतिरिक्ते प्रातिपदिकार्थव्यतिरिक्ते षष्ठ्या अनुशिष्टत्वेन, द्वितीयातृतीयार्थयोः सामान्यविशेषभावाभाववत् द्वितीयार्थस्य षष्ठ्यर्थस्य च सामान्यविशेषभावाभावात्।

" संबन्धः कारकेभ्योऽन्यः क्रियाकारकपूर्वकः।<br>श्रुतायामश्रुतायां वा क्रियायां सोऽभिधीयते॥ "

इति हरिणोक्तत्वेन, 'नटस्य शृणोति', 'माषाणामश्नीयात्', 'अनुकरोति भगवतो नारायणस्य' इत्यादावपि कर्मत्वाद्यतिरिक्तस्य क्रियाकारकसंबन्धपूर्वकस्य शेषशेषि-भावादिलक्षणस्य संबन्धस्य सत्त्वादिति चेत् - न; 'माषाणामश्नीयात्' इत्यादौ

कर्मत्वाद्यतिरिक्तकल्पने प्रमाणाभावात्, द्वितीयादीनां षष्ठ्यपवादतया विधानाभ्युपगमेन सामान्यविशेषभावनियमोपपत्तेः । **इतरा विभक्तयः — विहिता** इति । यद्यपि "कर्तृकर्मणोः कृति" इति षष्ठ्यपि विहिता - तथापि कर्मादिषु संबन्धविशेषेष्वेवेतरविभक्तयो विहिताः ; षष्ठी तु संबन्धसामान्ये, विशेषेऽपि विहितेत्येवकारम्, अपिशब्दं चाध्याहृत्य योजना कार्या । **परिणा ब्रह्मानुबन्धिनाम्**इति । ननु 'संबन्धसामान्यपरिग्रहे' इति पठ्यते । तत्र परिणा संबन्धसामान्यपरितःस्थितानां तदनुबन्धिनामेव ग्रहणं स्यात् । न तु ब्रह्मानुबन्धिनाम् । न हि 'ब्रह्मपरिग्रहे' इति पठ्यते, येन ब्रह्मानुबन्धिनः परिणा प्रतीयेरन् । अत एवोत्तरत्र 'षष्ठी गृह्यते' इत्युक्तम्, न तु परीत्यपि । 'कर्मणि षष्ठी परिगृह्यते' इत्युक्तेऽपि न ब्रह्मानुबन्धिनां ग्रहणं सिध्येत् । अपि तु षष्ठ्यनुबन्धिनामेवेति चेत् - न— ब्रह्मानुबन्धिनामपि परंपरया संबन्धसामान्यानुबन्धित्वस्य कथंचित्संभवादित्यभिप्रायात् । **प्रधानसंबन्धा**दिति । यथा 'राजाऽसौ निर्गतः' इत्युक्ते स रिवारस्य निर्गमनं प्रतीयते, तद्वदिति भावः । **समासनिषेधस्य सावकाश**त्वमिति । "कृद्योगलक्षणा च षष्ठी समस्यते" इति प्रतिप्रसवानवरुद्धोऽवकाश इत्यर्थः । ननु "कर्मणि च" इति समासनिषेधः कस्मान्न भवतीति चेत् - न ; तस्य, "उभयप्राप्तौ कर्मणि" इति सूत्रविहितषष्ठीविषयत्वात् । यथा, 'आश्चर्यो गवां दोहोऽशिक्षितेन गोपालेन' इति । एतदभिप्रेत्योक्तं भगवता भाष्यकृता - "**कर्तृकर्मणोः कृति**" इति । **यद्यपि ज्ञानपदं कृदन्त**मिति । ततश्च प्रतिप्रसवावरुद्धत्वान्नावकाश इति भावः । **सर्पिषो जानीत इति तिङन्तपदान्वयार्ह**त्वादिति । तिङन्तयोग इवेयमपि शेषलक्षणा षष्ठीत्यर्थः । न च शेषषष्ठीत्वे, "ज्ञोऽविदर्थस्य" इति विधानवैयर्थ्यं शङ्कनीयम् ; समासनिषेधार्थत्वात् पुनर्विधानस्य - षष्ठी श्रूयत एव ; न लुप्यत इति । लोपश्च समासे । उक्तं च हरिणा —

"साधनैर्व्यपदिष्टे च श्रूयमाणक्रिये पुनः ।
प्रोक्ता प्रतिपदं षष्ठी समासस्य निवृत्तये ॥" इति ।

**धातोर्विभक्तेश्च प्रवृत्तितत्करणार्थत्वा**दिति । ततश्च सर्पिषः कर्तृकर्मान्यतरत्वाभावात न कृद्योगलक्षणा षष्ठीति भावः । यद्यपि "ज्ञोऽविदर्थस्य करणे"

इति षष्ठ्याः शेषषष्ठीत्वेन न करणत्वमर्थः — तथापि करणस्य शेषतया विवक्षितत्वार्थत्वात् कर्तृकर्मान्यतरार्थत्वाभावान्न कृद्योगलक्षणषष्ठीसमत्र इत्यत्र तात्पर्यम्। ननु धातोः प्रवृत्त्यर्थकत्वकथनमनुपयुक्तमिति चेत् - न; ज्ञाधातोर्ज्ञानार्थत्वे सकर्मकत्वात् कर्मसंभावनाप्यस्ति, प्रवृत्त्यर्थत्वे तु सापि नास्तीति प्रदर्शनार्थत्वात्।

**ननु नेयं षष्ठीति।** ननु सूत्रकृता प्रयुक्तत्वाभावेऽपि स्वप्रयुक्तत्वात् स्वप्रयुक्तव्याख्यानस्य च भाष्यलक्षणत्वान्न तद्व्याख्याने दोषः। इतरग्रन्थेष्वपि 'शक्तिः सामर्थ्यं कारणत्वमिति यावत्' इति पर्यायतया स्वप्रयुक्तमपि शब्दं यावत्परप्रतीति व्याकुर्वाणा दृश्यन्त इति सर्वजनीनमेतत्। अतः समासव्याख्यानाय स्वप्रयुक्तविग्रहवाक्यगतायाः षष्ठ्याः संदिग्धार्थाया व्याकरणकोशादिना अर्थे कथनीये विभक्तिविषये कोशादेरभावात् व्याकरणेनैव व्याख्यानं युक्तमिति चेत् - मैवम् — समासपदव्याख्यानं विग्रहेणैव कर्तव्यमिति नियमाभावेन 'ब्रह्मजिज्ञासा = ब्रह्मकर्मकजिज्ञासा कर्तव्या। ब्रह्मशब्दो ब्रह्मकर्मकपरः' इत्येव व्याख्यायताम्; किमिति संदिग्धार्थकव्याख्यानसापेक्षविग्रहवाक्योपन्यासेनेति तात्पर्यात्। **विभक्त्यर्थस्य प्रातिपदिकेन लक्षणा हि समास इति।** इदं तु कर्मधारयभिन्नलुप्तविभक्तिकतत्पुरुषाव्ययीभावविशेषविषयं द्रष्टव्यम्। **लक्ष्यार्थविशेषनिर्णयायेति।** 'अस्या विभक्तेरयमर्थोऽनेन प्रातिपदिकेन लक्ष्यते' इति प्रतिपादनायेत्यर्थः।

ननु 'नानुशासनेन' इत्यस्याः शङ्कायाः कथमुत्थानम्? विभक्तेर्व्याख्येयत्वे सिद्धे कोशादीनां तद्विषय उदासीनत्वादनुशासनेन व्याख्यानमुचितम्। ततश्चास्या विभक्तेरयमर्थ इति निर्णये सति योग्यतावशेन कर्मत्वरूपोऽर्थो लक्ष्यत इति निर्णयाय युक्तमेव विभक्त्यर्थकथनम्। अत एव हि, 'न गङ्गायां घोषः' इत्युत्तरवाक्यमपि न युक्तम्। न खलु लक्षकपदस्य लक्ष्येऽनुशासनमुपन्यस्यते; किंतु योग्यतादिवशेन लक्षणीयस्य कर्मत्वस्य विभक्त्यर्थत्वकथनायानुशासनमुपन्यस्यते। अत एव, 'स तु नियमः प्रातिपदिकेन प्रातिपदिकान्तरार्थलक्षणायामेव' इति परिहारग्रन्थोऽपि न युक्तः, ब्रह्मणः कर्मत्वकर्तृत्वादीनां मध्ये कर्मत्वस्यैव लक्षणीयत्वाय योग्यतादिप्रतिसंधानस्येहाप्यपेक्षितत्वादिति चेत् - न - अनभिज्ञो भवान् वाक्यार्थस्य। न खलु "कर्तृकर्मणोः कृति" इत्यनुशासनबलेन षष्ठीव्याख्यानप्रसंगत-

मिति चोद्यते; येनायमुपालम्भः स्यात्। किंतु "कृद्योगलक्षणा षष्ठी समस्यते" इत्यनेन कृद्योगलक्षणषष्ठ्यन्तपदस्य लुप्तायां विभक्तौ तदर्थे लक्षणायाः साधुत्वान्वाख्यानपरेण व्याख्यानं किमर्थं क्रियते? न हि गङ्गापदस्य तीरे लक्षणाया प्रयोगे साधुत्वमस्तीत्यत्रानुशासनमपेक्षितमित्याक्षेपस्य, क्वचिदर्थविशेषे लक्षणया प्रयोगस्य साधुत्वमनुशासनसापेक्षमिति परिहारस्य च संभवेनादोषात्।

ननु लुप्तविभक्त्यर्थस्य लुप्तविभक्तिकशब्दमुख्यार्थत्वे निषादस्थपत्यधिकरणविरोधः, षष्ठीतत्पुरुषे लक्षणाया अप्रसक्तेरित्यरुचेराह - **अमुख्यत्वे वा का नः क्षतिरिति**। ननु पदान्तरयोगविहितविभक्तेरर्थसद्भावे, "नमस्करोति देवान्" इत्यत्र नमःशब्दयोगनिमित्तचतुर्थ्यपेक्षया कर्मणि द्वितीयायाः प्राबल्यं न स्यादित्याशङ्क्याह – **कारकविभक्तेरिति। पदान्तरयोगविहितत्वरूपमस्त्येवेति**। ननु "कर्तृकर्मणोः" इति विहितस्य कृदन्तपदयोगनिमित्तत्वेऽपि न कारकविभक्तित्वक्षतिः, तत्र शाब्दिकानां कारकषष्ठीत्वस्य व्यवहारात्। अत एव, "गतिकारकोपपदात् कृत्" इति कारकस्वरो भवति। इतरथा स न प्राप्नुयादिति चेत् — सत्यम्; अस्त्येव कारकविभक्तित्वम्। उपपदयोगनिमित्ततयोपपदविभक्तित्वमप्यस्ति। तस्याश्चोपपदयोगनिरपेक्षकारकविभक्त्यपेक्षया दौर्बल्यमप्यनुभवसिद्धम्। 'घटं करोति' इत्यत्रेव. 'घटस्य कृतिः' इत्यत्र कर्मत्वस्य शीघ्रप्रतीत्यभावात्। न चैवम्, "कर्तृकर्मणोः कृति" इति षष्ठ्या उपपदविभक्तित्वे षष्ठीं बाधित्वा द्वितीया प्राप्नोतीति वाच्यम् - तद्विषय एवारभ्यमाणत्वेन तदपवादत्वात्। न चैवम्, 'कन्याया अलंकर्ता' इत्यादौ कृद्योगषष्ठ्या अप्युपपदविभक्तित्वाविशेषात् अलंयोगनिमित्तचतुर्थीबाधकत्वं न स्यादिति वाच्यम् - परत्वेन बाधकत्वोपपत्तेः। कर्मणि षष्ठ्या अपि कारकविशेषविहितत्वेन कारकविभक्तित्वस्याप्यभ्युपेतत्वेन अलंपदयोगनिमित्तविभक्तेः केवलोपपदविभक्तित्वेन तद्बाधकत्वोपपत्तेश्च। **पदान्तरपरामर्शसापेक्षत्वेनेति**। उक्तं च - "सूक्तवाके च कालविधिः परार्थत्वात्" (३-२-५) इत्यत्र तृतीये, "सूक्तवाकेन प्रस्तरं प्रहरति" इत्यत्र सूक्तवाकेनेति तृतीया इत्थंभूतलक्षणे भविष्यतीति पूर्वपक्षे, 'सर्वत्र क्रियाकारकसंबन्धस्यान्तरङ्गत्वात् सूक्तवाकस्य प्रस्तरप्रहरणक्रियायां कारकत्वेनैव संबन्धो वक्तुमुचितः। इत्थंभूतलक्षणाश्रयणे तु न कारकत्वेन संबन्धः

सिध्येत् । न च लक्षणक्रियायां करणत्वेनान्वयो युक्तः; सूक्तवाक्येन लक्षितं प्रस्तरमिति लक्षणक्रियाया वाचकपदाभावेन तद्वाचकपदान्तरापेक्षत्वात् । तस्मा-त्वित्थंभूतलक्षणे तृतीया । अपि तु करणे तृतीयैवेति — उक्तरीत्या उपपदविभक्तेः कारकविभक्त्यपेक्षया दुर्बलत्वादिति । **अमुख्यत्वं तु परिहृतमिति** । "का नः क्षति" रिति परिहृतमित्यर्थः ।

( ब्रह्मशब्दार्थविचारः )

**पुरुषोत्तमशब्दस्य रूढ्येति** । यद्यपि यौगिकार्थस्यातिप्रसक्तौ समुदाय-शक्तिलक्षणरूढ्यभ्युपगमः; न तु (हि) शचीपतिवाक्पति (पार्वतीपति) श्रीवत्सवक्षः-प्रभृतिषु पौन्द्रात्वहीनधार्यादिशब्देष्विव रूढिरभ्युपगन्तव्या तथापि पुरुषोत्तमशब्दस्य नारायणपर्यायतया पाठात् समानप्रवृत्तिनिमित्तत्वाभ्युपगमयोक्तं द्रष्टव्यम् । **चेतन-वैलक्षण्यमुक्तमिति** । यद्यप्युत्तमशब्दस्योद्गतार्थत्वाच्युपगमात् समाधनक्रियावचनात् तमप्प्रत्यये निष्पन्नस्य न वैलक्षण्यमात्रमर्थः । अव्युत्पत्तिपक्षेऽपि न वैलक्षण्यमर्थः; वैलक्षण्यमात्रेणोत्तमशब्दप्रयोगाभावात् । अत एव, 'स्वेतरवैलक्षण्यं तृणादेरप्यस्ति' इति ग्रन्थोऽपि न युक्तः - तथापि "अक्षरादपि चोत्तमः" इति प्रमाणानुसारेण पञ्चमीसमासस्य वा, "सप्तमी" इति योगविभागात् सप्तमीसमासस्य वा आश्रय-णीयतया, "यतश्च निर्धारणम्", "पञ्चमी विभक्ते" इति सूत्राभ्यामेव पञ्चमी-सप्तम्योर्विधेयत्वेन निर्धारणस्यावश्यकत्वान्निर्धारणस्य च वैलक्षण्यापरपर्यायपृथक्करण-वाचित्वाद्वैलक्षण्यमर्थं इत्येतदभिप्रेत्यैतदुक्तमिति द्रष्टव्यम् । **प्रतिपादनोपयोगित-येति** । पुरुषोत्तमस्य निर्दोषत्वकल्याणगुणाकरत्वाश्रयतया निरतिशयबृहत्त्वरूपप्रवृत्ति-निमित्तं संभवतीति प्रतिपादनार्थमित्यर्थः । **न तु प्रवृत्तिनिमित्ततयेति** । ततश्च ब्रह्मशब्दस्य बृहत्त्वव्यतिरिक्तं स्वभावतो निरस्तदोषत्वमपि प्रवृत्तिनिमित्तान्तरमिति न भ्रमितव्यमिति भावः । अर्थसामर्थ्यमाह - **मुमुक्षोरशेषदोषेति** । **वाङ्मनसा-गोचरतयानवधिकत्वमुक्तमिति** । ननु ब्रह्मगुणानां सर्वातिशायितया अतिशयस्य सर्वावधिकत्वेन कथमनवधिकत्वम्? इन्द्राद्यानन्दातिशयो हि मनुष्यानन्दावधिकः । ब्रह्मानन्दातिशयो हि मनुष्यादिप्रजापत्यन्तसर्वानन्दावधिकः । अत एव सर्वेषामव-धित्वात् सर्वेभ्योऽतिशयित इत्यवध्यर्थपञ्चमीति चेत् - न; अवधिशब्दस्येयत्तार्थ-

कत्वात् । ततश्च ब्रह्मानन्दातिशयोऽपरिच्छिन्न इत्यर्थः । यद्वा स्वसमानाधिकरणापकर्षावधिशून्यत्वमेवानवधिकत्वम् । स्वशब्देनोत्कर्षः परामृश्यते । इन्द्रानन्दादिगतस्य देवाद्यानन्दापेक्षयातिशयस्य बृहस्पत्यानन्दावधिकापकर्षसमानाधिकरणतया स्वसमानाधिकरणापकर्षावधिमत्त्वम् ; ईश्वरगुणनिष्ठोत्कर्षस्य तु स्वसमानाधिकरणापकर्षाभावेन तादृशावधिशून्यत्वमिति विशेषात् । अथवा इतरेषामतिशयस्य देवमनुष्याद्यवधिसापेक्ष (निरूप्य) त्वेन सावधिकत्वम् ; ईश्वरविषये तु उपपदादिनिरपेक्षतया अतिशयितः इति प्रत्ययप्रयोगयोर्दर्शनात् तद्गतातिशयस्यावधिप्रतीत्यधीनप्रतीतिकत्वाभावेन निरवधिकत्वम् । अत एव 'अयोध्येश्वरः', 'मिथिलेश्वरः' इतीतरत्रैश्वर्यस्य निर्देशः ; ईश्वरविषये तु मर्यादोपन्यासमन्तरेण 'ईश्वरः' इत्येव प्रतीतिप्रयोगौ । अत एव, "शब्दादेव प्रमितः" इत्यत्र ईशानपदस्यैव निरपेक्षस्य परमात्मप्रतिपादकत्वम्; न तु प्रतिसंबन्धिसापेक्षस्येति श्रुतित्वमुपपादितम् ।

"मुख्यस्य निर्विशेषेण शब्दोऽन्येषां विशेषतः ।
इति वेदविदः प्राहुः शब्दतत्त्वार्थवेदिनः ॥"

इत्यभियुक्तोक्तेश्च ।

**अन्तर्भावाभिप्रायो गणशब्द** इति । एकैकस्यैव सत्यसंकल्पत्वादेर्गुणगणत्वे सत्येव तस्य वक्ष्यमाणरीत्या तद्विशेषणभूतमसंख्येयत्वमुपपद्यते । इतरथा सर्वेषां गुणानां गण एक एव स्यादित्यसंख्येयत्वविशेषणमनन्वितं स्यात् । इदं च, 'नन्वनवधिकातिशयशब्दस्य गणविशेषणत्वे' इत्यादिग्रन्थेनाक्षेपसमाधानाभ्यां व्यवस्थाप्यमानमनवधिकातिशयत्वस्यासंख्येयत्वस्य च कल्याणगुणगणविशेषणत्वं सिद्धवत्कृत्योक्तमिति द्रष्टव्यम् । **सामानाधिकरण्याभावाद्बहुव्रीहिर्न स्यादिति** । अनवधिकातिशयासंख्येयकल्याणगुणानां गणो यस्येति विग्रहे समस्यमानपदसामानाधिकरण्याभावाद् बहुव्रीहिर्न स्यात्, "समानाधिकरणानां बहुव्रीहिरिष्यते" इत्यनुशासनादिति भावः । **तदन्तर्गतानामेवे**ति । अत्र दृष्टान्तदार्ष्टान्तिकयोरयं विशेषः - दृष्टान्ते श्रुतशीलादिकं समूहगतमेव ; दार्ष्टान्तिके त्वनवधिकातिशयत्वं श्रुत्यर्थाभ्यामुभयान्वितं प्रतीयत इति । **ततो निर्गताना**मिति । इदमुपलक्षणम् । श्रुतशीलादेः समूहान्वयित्वे तदन्तर्गतानां समूहिनां श्रुताद्यभावप्रसङ्ग इत्यपि द्रष्टव्यम् ।

**श्रुताद्यभावप्रसङ्गा**दिति । श्रुताद्यन्वयप्रतीतिर्न स्यादित्यर्थः । **भगवद्गुणापेक्षया सातिशयत्वा**दिति । भगवद्गुणापेक्षया निकृष्टत्वादित्यर्थः । **प्रतिज्ञातमर्थं शब्द-सामर्थ्या**दिति । बृहत्त्वगुणनिष्पन्नस्य ब्रह्मशब्दस्य बृहत्त्वगुणयोगनिमित्ततया प्रवृत्तिनिमित्तपौष्कल्यं यत्र, तत्रैव मुख्यवृत्तत्वम् ; इतरत्र तु अमुख्यवृत्तत्वमित्युप-पादयतीति भावः । व्याख्यान्तरमाह — **तत्त्वार्थान्तरेष्वि**ति । **ब्रह्मशब्द-प्रयोगविषयेषु सर्वेष्वि**ति । पुरुषोत्तमव्यतिरिक्तेष्विति शेषः । **बृहत्त्वगुण-योगोऽस्तीत्यर्थ** इति । अतस्तत्र गौण इत्येतावत्पर्यन्तो वाक्यार्थः । अत एव, 'पुरुषोत्तमे गौणत्वम्, अन्यत्र मुख्यत्वं च किं न स्यात्' इत्याक्षेपग्रन्थसामञ्ज-स्यम् ; अन्यथा "सर्वत्र बृहत्त्वगुणयोगेन हि" इति वाक्येनैव पुरुषोत्तमे मुख्यत्व-प्रतिपादनस्यान्यत्र गौणत्वप्रतिपादनस्य च पर्यवसिततया, पुरुषोत्तमे गौणत्वमित्याक्षेप-ग्रन्थासामञ्जस्यात् 'ततः किम् ?' इत्येवोत्तरग्रन्थस्यावतरणीयत्वात् । अस्मिन् पक्षे "सर्वत्र बृहत्त्वगुणयोगेन हि ब्रह्मशब्दः" इति भाष्यस्य पूर्वग्रन्थशेषत्वम् ; पूर्व-स्मिंस्तु पक्षे उत्तरग्रन्थशेषत्वम् । अत एव, '**सर्वत्रेत्यादिना**' इत्यादिशब्देनो-पादानं कृतम् । यद्वा, ततः किमित्येवावतारिका । 'ततः किम् ?' इत्यस्य हि 'तावता कथं तव पुरुषोत्तम एव मुख्यवृत्त्याभिधीयत इति प्रतिज्ञातार्थसिद्धिः ? विप-रीतं किं न स्यात् ?' इति अभिप्रेतोऽर्थः । स एवार्थः **पुरुषोत्तमे गौणत्व**मित्यादि-ग्रन्थेनोच्यत इति न दोषः ; नापि व्याख्याद्वयाश्रयणमिति द्रष्टव्यम् ।

**ब्रह्मगुणादेरपी**ति । ननु "बृहत्त्वाद्बृंहणत्वाच्च" इति प्रमाणानुसारेण द्वयमपि प्रवृत्तिनिमित्तमित्यभ्युपगमेन ब्रह्मगुणादौ नातिप्रसङ्गः । अवश्यं च तथाभ्युपगन्तव्यम् । इतरथा ब्रह्मगुणादावतिप्रसङ्गस्य तादवस्थ्यात् । प्रवृत्ति-निमित्तस्य सत्त्वात् । न हि — लाक्षादिरञ्जकद्रव्येण रक्तस्य स्वतश्च रक्तत्वाश्र-यस्य जपाकुसुमादेरेवासंकोचात् रक्तपदवाच्यत्वम्, न तु केवलजपाकुसुमादे-रित्यस्ति । न वा — पर्वताश्रयस्यैव पर्वतस्य पर्वतशब्दवाच्यत्वम्, न तु पर्वतानाधारपर्वतस्य, तस्य स्वरूपतः पर्वतत्वाश्रयत्वेऽपि धर्मतः पर्वतत्वानाश्र-यत्वादित्यस्तीति चेत् — न ; "कस्मादुच्यते ब्रह्म" इति, "बृहन्तो ह्यस्मिन् गुणाः" इति प्रमाणानुसारात् बृहद्गुणकत्वमेव प्रवृत्तिनिमित्तम् । स्वरूप-

बृहत्त्वबृंहणत्वे अपि तत्रैवान्तर्गते इत्यत्रैव तात्पर्यात् । यद्वा, 'गुणतो बृहत्त्व' मित्यस्य न गुणगतबृहत्त्वमित्यर्थः, किं तु बृहद्गुणकत्वकृतः स्वरूपनिष्ठ एव माहात्म्यविशेषो ज्यायस्त्वरूपः । अतः सर्वतो ज्यायस्त्वं बृहत्त्वम् । तदेव ब्रह्मशब्दप्रवृत्तिनिमित्तमिति भावः । **शब्दशक्तेरसंकोचश्चे**ति । ननु द्वयोरपि प्रवृत्तिनिमित्तत्वाभ्युपगम एव ब्रह्मशब्दशक्तेः संकोचः, गुणतो बृहत्त्वस्य ब्रह्मगुणादित्यावर्तकत्वादिति चेत् - न । न ह्यत्र [त्य] **शब्दशक्ते**रित्यस्य ब्रह्मशब्दशक्तेरित्यर्थः । अपि तु " बृहन्तो ह्यस्मिन् गुणाः " इति ब्रह्मशब्दप्रवृत्तिनिमित्तप्रतिपादकवाक्यगतगुणशब्दशक्तेरित्यर्थः । यद्वा ब्रह्मवत् प्रवृत्तिनिमित्तस्यापि शक्यत्वात् तत्र बृहत्त्वविशेषरूपप्रवृत्तिनिमित्तस्यैव शक्यत्वमित्युक्तेः संकोचप्रसङ्ग इत्यर्थः । न च द्वयोरपि शक्यत्वे शक्यव्यक्तिसंकोचप्रसङ्गः, प्रयोगाभावेन व्यक्तिसंकोचस्य प्रागेव सिद्धत्वेनैतदधीनत्वाभावात् ।

**तस्मात् ब्रह्मण** इति । ननु **तस्मा**दित्यस्य सर्वेश्वरादित्यर्थो वक्तुमुचितः, 'ब्रह्मशब्दस्तत्रैव मुख्यवृत्तः' इति पूर्ववाक्ये **तत्रैवे**ति तच्छब्देन सर्वेश्वरस्यैव निर्दिष्टत्वात् । तत्र ब्रह्मणः परामर्शे अप्रसक्तप्रतिषेधापत्तेः । न हि ब्रह्मशब्दस्याब्रह्मणि मुख्यवृत्तत्वं प्रसक्तम्, येन तन्निषेधः सफलः स्यादिति चेत् - उच्यते - **तस्मा**दित्यस्य ब्रह्मण इति नार्थकथनम्, अपि तु शेषपूरणम् । अयमभिप्रायः - स्वरूपेण गुणैश्चानवधिकातिशयशालिनः सर्वेश्वरस्य ब्रह्मत्वं सिद्धम् । इतः परं तस्मादपि ब्रह्मणोऽन्योऽपि ब्रह्मशब्दमुख्यार्थ इति **स्वीकारे** अनेकार्थत्वं स्यादिति । **केचित्तु — ब्रह्मणः** निरवधिकबृहत्त्वशालिन इत्यर्थः । पूर्ववाक्ये '**तत्रैव**' इत्यत्र तच्छब्देनापि निरतिशयबृहत्त्वशाल्येव परामृश्यते ; न तु सर्वेश्वरः । तथा " तद्गुणलेशयोगात् " इत्युत्तरत्रापि बृहत्त्वगुणलेशयोगादित्येवार्थ इत्याहुः । अस्मिन् पक्षे, " स च सर्वेश्वर एव । अतो ब्रह्मशब्दस्तत्रैव मुख्यवृत्तः " इत्ययमंशो व्यर्थः । नन्वितरत्र प्रयोगस्यौपचारिकत्वे स प्रयोगः सार्वत्रिकः किं न स्यादित्याशङ्क्य औपचारिकस्यापर्यनुयोज्यत्वान्न सार्वत्रिक इत्याह - **औपचारिकस्त्व**ति । ननु —

" एकदेशेऽपि यो दृष्टः शब्दो जातिनिबन्धनः ।
तदत्यागान्न तस्यास्ति निमित्तान्तरगामिता ॥ "

इति बर्हिराज्याधिकरणन्यायेनाव्यभिचारात् बृहत्त्वस्यैव प्रवृत्तिनिमित्तत्वे नानेकशक्तिकल्पनागौणत्वादिदोषः । द्व्यणुकादिषु ब्रह्मशब्दाप्रयोगस्य बृहच्छब्दाप्रयोगवत्, असंस्कृततृणादिपदार्थानां बर्हिरादिशब्दाप्रयोगवच्चोपपत्तेः । "परं जैमिनिर्मुख्यत्वात्", "स्याच्चैकस्य ब्रह्मशब्दवत्" इत्यादौ ब्रह्मशब्दस्य परमात्मनि मुख्यत्वव्यवहारस्तु ब्रह्मगतबृहत्त्वस्यावधिप्रतीत्यधीनप्रतीतिकत्वाभावेनावधिप्रतीत्यधीनप्रतीतिकेतरबृहत्त्वापेक्षया शीघ्रधीस्थत्वात्, "मुख्यस्य निर्विशेषेण शब्दोऽन्येषां विशेषतः" इति न्यायेनोपपद्यते । न हि केश्वरशब्दः स्वभार्यापुत्रादिस्वामिनि प्रयुज्यते; न वा केवलेश्वरशब्दः पृथिवीश्वरादावपि प्रयुज्यत इत्येतावता स्वामित्वं प्रवृत्तिनिमित्तमपहाय निरङ्कुशेश्वरत्वमेव तस्य प्रवृत्तिनिमित्तमिति शक्यते वक्तुमिति चेत् - मैवम्; तथाहि सति गोशब्दस्यापि 'गच्छति' इति व्युत्पत्त्या "गमेर्डो." इति व्युत्पन्नतया गन्तृत्वमेव प्रवृत्तिनिमित्तम्; इतरत्राप्रयोगस्तु बर्हिराज्यादिशब्देष्ववोपपन्नो न तस्य गन्तृविशेषे रूढिं कल्पयतीति स्यात् । यदि च नियमेनेतरत्राप्रयोगेण विशिष्य सास्नादिमति रूढिं कल्पयित्वा इतरस्यावाच्यत्वं कल्प्यते, तत् प्रकृतेऽपि समानमिति दिक् । केचित्तु - बृहत्त्वस्य प्रवृत्तिनिमित्तत्वमभ्युपगम्य तदौत्कृष्ट्यस्यैव भगवति समर्थनात् बृहत्त्वमेव प्रवृत्तिनिमित्तम् । न हि प्रवृत्तिनिमित्तपौष्कल्यं प्रवृत्तिनिमित्तम् । ततश्च नान्वयवाथंव्यतिरिक्तरूढ्यर्थस्वीकारः सिद्धान्तसंमत इति वदन्ति ।

**औपचारिकभगवच्छब्दप्रयोगयोग्येष्विति** । ननु "स वाच्यो भगवानिति" इति वाच्यत्वेनोक्तानां वसिष्ठादीनां कथमौपचारिकभगवच्छब्दप्रयोगयोग्यत्वकथनमिति चेत्—न - स्वदृष्ट्या औपचारिकभगवच्छब्दप्रयोगयोग्यानामित्यर्थः । ननु खाण्डिक्यादिषु सार्वत्रिकभगवच्छब्दप्रयोगाभावो न स्वध्यवसान इत्यस्वरसादाह - **किं च प्रत्यक्षमूलेति । आगममूलव्युत्पत्त्येति** । ननु, "उत्पत्तिं प्रलयं च" इत्ययमपि आगमो भवत्येवेति तन्मूलया व्युत्पत्त्या वसिष्ठादिष्वपि मुख्यत्वं किं न स्यात्? "ज्ञानशक्तिबलैश्वर्य" इति श्लोकेऽपि, "अशेषतः" इति सर्वेषामपि प्रवृत्तिनिमित्तत्वमुच्यते; न तु मिलितानाम् । तथा हि सति "वाच्यानि" इति बहुवचनं न स्यात् । अत एव ज्ञानादिषु षट्सु प्रवृत्तिनिमित्तेषु कथितेषु, 'अत्यल्पमिदमुच्यते' इति पर्यालोच्य "विना हेयैर्गुणादिभिः" इति ज्ञानादिभिन्नानामपि हेयव्यतिरिक्तानां

शुभानां गुणानां सर्वेषां प्रवृत्तिनिमित्तत्वमुच्यते, "यद्यद्विभूतिमत् सत्त्वं श्रीमदूर्जितमेव वा" इतिवदिति चेत् - न — "भगवानिति शब्दोऽयं तथा पुरुष इत्यपि । निरुपाधी च वर्तेते वासुदेवे सनातने ।" इत्याद्युपबृंहणानुगुण्यात्; केवलस्य भगवच्छब्दस्यान्यत्राप्रयोगाच्चेति भावः । **अत एव हि पुरुषोत्तमोऽभिधीयत इत्युक्तमिति** । यद्यपि, "तमेवं विद्वान्" इति वाक्ये पूर्वत्र, "वेदाहमेतं पुरुषम्" इति महान् पुरुष एव प्रस्तुतः; न पुरुषोत्तमः - तथापि तयोरेकार्थपर्यवसानमभिप्रेत्योक्तमिति द्रष्टव्यम् । "अतः सर्वेश्वर एव जिज्ञासाकर्मभूतं ब्रह्म" इति वाक्यगतस्यातःशब्दस्य तापत्रयातुरजिज्ञास्यत्वरूपार्थसामर्थ्यमात्रे संकोचकल्पने प्रमाणाभावादाह - **यद्वा अत** इति । '**अतः**' इति व्याख्येयं पदम् । **अव्युत्पन्नो व्युत्पन्नो वा भगवति मुख्य** इति । गृहीतसंगतिक इत्यर्थः; मुख्यया वृत्त्या भगवत्प्रतिपादक इत्यर्थः । **बुद्धिपूर्विकेति** । बुद्धिपूर्विका व्युत्पत्तिः, मातापित्रादिभिरङ्गुलिनिर्देशपूर्वकमम्बातातमातुलादिषु यत्र व्युत्पत्तिर्ग्राह्यते, तत्र; यादृच्छिकव्युत्पत्तिस्तु, 'घटमानय' इति वाक्यश्रवणात् प्रयोज्यप्रवृत्तिमुपलभ्य यत्र व्युत्पत्तिर्गृह्यते, तत्रेति द्रष्टव्यम् । इदं चाधिकरणनिरूपणे स्पष्टं भविष्यति । **यूपाहवनीयेत्यत्र कपाल**शब्दः संपातायातः; तस्य लौकिकत्वात् ।

## ( जिज्ञासाशब्दार्थविचारः )

**कर्मणश्च क्रिया शेषभूतेति** । ननु प्रधानस्य विधेयत्वे, "व्रीहीन् प्रोक्षति" इत्यादौ व्रीह्यादीनां विधेयत्वप्रसङ्गात्, प्रत्युत प्रधानत्वस्यानुवाद्यत्वानुबन्धिनो विधेयत्वविरोधाच्च, "व्रीहिभिर्यजेत", "अरुणया क्रीणाति" इत्यादौ गुणस्यैव विधेयत्वदर्शनाच्च कथमेतदिति चेत् - उच्यते - इच्छाया विषयसौन्दर्याधीनत्वेन पुरुषेच्छाधीनकृतिसाध्यत्वाभावेऽपीष्यमाणज्ञानस्येच्छाधीनकृतिसाध्यतया पुरुषतन्त्रत्वेन विधेयत्वसंभवादिति तदर्थात् । केचित्तु ---- 'प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्यैव प्राधान्यम्' इति न्यायस्यौपगवादौ सामान्यतो दृष्टत्वेऽपि 'अश्वेन जिगमिषति' 'असिना जिघांसति' इत्यादौ सन्वाच्येच्छापेक्षया प्रकृत्यर्थस्यैव स्वतन्त्रोपस्थितत्वलक्षणस्य शब्दतःप्राधान्यस्य समभिव्याहृतपदार्थान्तरान्वयस्य च दर्शनात्, "ब्रह्मजिज्ञासा" इत्यत्र प्रकृत्यर्थज्ञानस्यैवाध्याहृतकर्तव्यपदान्वयसंभव इति भाष्याभिप्रायं

वर्णयन्ति । **प्रमितिरूपं ज्ञानमिति** । अत्र, उद्दिश्येति शेषः । तथाचायमत्रान्वयः - प्रमितिरूपं ज्ञानमुद्दिश्य आश्रयं तर्करूपं ज्ञानं मनोव्यापारात्मकोहरूपं विधेयमिति परैरुक्तमिति । यद्वा, **विधेयं** शाब्दमित्यर्थः ; उत्तरत्र तर्करूपं ज्ञानमार्थमित्युक्तेः । आर्थिके च विचारेऽध्याहृतकर्तव्यत्वान्वयः । "श्रौतस्तु मुमुक्षानन्तरं ब्रह्मज्ञानेच्छा भवितुं युक्तेत्येष एव" इति कल्पतरूक्तेः । **प्रागुक्तपक्षः साधीयानिति** । प्रकृतिप्रत्ययार्थाक्षिप्तस्य विधेयत्वापेक्षया प्रकृत्यर्थविधेयत्वस्य युक्तत्वादिति भावः ।

( यादवप्रकाशीयसूत्रार्थनिरासः )

**प्रधानादिनिरासनिरपेक्षत्वादिति** । प्रधानादिनिरासमुखेन प्रधानादिजिज्ञास्यत्वनिरासनिरपेक्षत्वादित्यर्थः । ततश्च विचारानपेक्षं प्रधानादिनिरासमुखेन जिज्ञास्यत्वनिरसनं सूत्रकृता विफलमिति भावः ।

( वृत्तिकारोक्तवर्णनम् )

भाष्ये — **वृत्तात् कर्मज्ञानादनन्तरमिति** । अनन्तरशब्दस्य पश्चाच्छब्दपर्यायतया दिक्शब्दत्वमङ्गीकृत्य पञ्चमीनिर्देश इति द्रष्टव्यम् । **तद्विषयं शास्त्रं शारीरकमित्युच्यत इति** । शारीरं कायतीति शारीरकम् । कै शब्दे । "आतोऽनुपसर्गे कः" इति के रूपम् । **मीमांसाया एकप्रबन्धत्वमिति** । यद्येवं वेदोपकाररूपैकप्रयोजनसमर्थत्वेनार्थैक्यात् व्याकरणज्योतिषादीनां तत्प्रयोजने निष्पाद्ये परस्पराकाङ्क्षाया अपि सत्त्वादेकशास्त्रत्वप्रसङ्गः । न च तेषामङ्गत्वेनैक्यमिष्टमिति वाच्यम् — तर्हीहापि मीमांसात्वेनैक्यं स्यात्, न तु शास्त्रैक्यमिति चेत् — न ; तथा सतीदृशप्रतिबन्द्या पूर्वोत्तरषट्कयोरपि शास्त्रभेदप्रसङ्गात् । न च तत्र विषयप्रयोजनाधिकारिणामेकत्वात्, "अथातो धर्मजिज्ञासा" इति प्रतिज्ञायाः साधारण्याच्चैकत्वमिति वाच्यम् - अत्रापि वेदार्थरूपविषयस्य, तज्ज्ञानरूपप्रयोजनस्य, तत्कामस्य चाधिकारिण एकत्वात् । विचारद्वयानुगतसाधारणप्रतिज्ञाया उपपादयिष्यमाणत्वाच्च । ननु "अथातो ब्रह्मजिज्ञासा" इति साधारणप्रतिज्ञेत्ययुक्तम् ; तथा सति अथशब्दस्य कर्मविचारानन्तर्यार्थकत्वं न स्यादिति 'वृद्धिमिच्छतो मूलहान्यापत्तिः' इति न्यायापातात् । न हि कर्मविचारानन्तर्यं विंशतिलक्षण्या मीमांसायाः संभवति । अपि तु

चतुर्लक्षण्या एवेत्यस्वरसादाह - **एवं वेति । प्रतिधर्मसमोभयानुयायिनी**ति । साधर्म्यसमवैधर्म्यसमरूपोभयजात्यनुयायिनी प्रतिधर्मसमजातिप्रतिज्ञा अर्थसिद्धेत्यर्थः । प्रतिधर्मसमा जातिर्द्वि[वि]धा - साधर्म्यसमा वैधर्म्यसमा चेति । तत्र, "साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुत्पत्तिसंशयप्रकरणहेत्वर्थापत्त्यविशेषोपपत्त्यनुपलब्धिनित्यानित्यकार्यसमाः" इति जातीनां विभागोद्देशसूत्रेण विशेषयोरेवोद्देशः कृतः; अनन्तरम् "साधर्म्यवैधर्म्याभ्यामुपसंहारे तद्धर्मविपर्ययोपपत्तेः साधर्म्यवैधर्म्यसमौ" इति लक्षणसूत्रे च विशेषयोरेवेति भावः । ननु वेदाध्ययनानन्तरमर्थविचारो न कर्तव्यः, अविवक्षितार्थकत्वादिति सर्ववेदार्थानुगतपूर्वपक्षनिरासाय 'अथातो वेदार्थजिज्ञासा' इति सूत्रे कर्तव्ये मन्दप्रयोजना विशेषप्रतिज्ञा अयुक्ता । साधर्म्यवैधर्म्यसमजातिस्थले तु सामान्यप्रतिज्ञायाः शिष्यबुद्धिसमाधानमात्रार्थत्वेन निरसनीयपूर्वपक्षाभावेन आर्थत्वेऽप्यदोष इत्यस्वरसादाह - **अथवा अथातो धर्मजिज्ञासेत्येवे**ति । **अलौकिकश्रेयःसाधन**मिति । वेदैकगम्यश्रेयःसाधनताकमित्यर्थः । नन्वेवं श्येनादेरपि धर्मत्वप्रसङ्गः । न च बलवदनिष्टाजनकत्वेन तद्विशेषणात् तद्व्यावृत्तिरिति वाच्यम्, तथा सति परमात्मनः सर्वकारणत्वेनाधर्मत्वप्रसङ्गादिति चेत् - मैवम् । तथाहि सति ज्योतिष्टोमादेर्धर्मत्वं न स्यात्, "सर्वेभ्यो ज्योतिष्टोमः" इति तस्य सर्वफलसाधनत्वेन वैरिविपत्तिसाधनतया तद्द्वारा बलवदनिष्टजनकत्वात् ॥ [1]वैरिविपत्तिफलकप्रयोगे तस्य धर्मत्वाभाव इष्ट एव । वैरिविपत्त्यादिफलकप्रयोगानवच्छिन्नस्यैव ज्योतिष्टोमस्य धर्मत्वमिति चेत् - तथा सति ब्रह्मणोऽननुष्ठेयपदार्थतया बलवदनिष्टानुबन्धिप्रयोगानवच्छिन्नत्वे सति अलौकिकश्रेयःसाधनत्वस्यैव ब्रह्मण्यपि संभवात् "धर्मजिज्ञासा" इत्येव साधारणप्रतिज्ञेति भावः । नन्विन्द्रियगम्यानां तेषां कथं धर्मत्वमित्याशङ्क्याह - **तेषामैन्द्रियकत्वेऽपी**ति । **तादूप्येणे**ति । ऐन्द्रियकत्वरूपेणेत्यर्थः । ननु धर्मशब्दस्य साधारण्यमभ्युपेत्य धर्मद्वयविचारः प्रतिज्ञायत इति वदता नैकस्य बुद्धिस्थत्वं वक्तुं शक्यम् । अतश्चोदनासूत्रे साध्यधर्मस्यैव लक्षणकथनं नैतन्नियामकमित्यस्वरसादाह - **पूर्वभागप्रतिपन्नत्वेने**ति । विशेषप्रतिज्ञाया अप्यावश्यकत्वमभिप्रेत्याह - **तन्त्रेण वार्थतो** वेति । शब्दा-

---

1. 'एवमप्पय्यदीक्षितोक्तदोषं परिहरन्नाह वैरीति ।

र्थोध्यत्वशङ्कापरिजिहीर्षयेति । सिद्धव्युत्पत्तिसमर्थनार्थमिति भावः । **तस्य परमात्माराधनरूपत्वानवगमा**दिति । न च - राजपुरुषस्य राजपुरुषपदाद्राजशेष्यत्वरूपपारतन्त्र्यप्रतीतावपि यथा न शाब्दप्राधान्यविरोधः, पुरुषस्य विशेष्यतया प्रतीतेः, एवं परमात्माराधनरूपत्वप्रतीतावपि कर्मणो विशेष्यतया भानान्न शाब्दप्राधान्यविरोध इति वाच्यम् । अत्र **शाब्दप्राधान्य**मित्यस्यान्योपसर्जनतया अप्रतीयमानत्वमित्यर्थात् । न च राजपुरुषे तथात्वानि शङ्कनीयम्, वस्तुगत्या राजपुरुषस्य पुरुषपदात् प्रतीतिदशायां तदुपपत्तेः । केचित्तु, 'युक्त्यन्तरमाह - **परमात्माराधनरूपत्वानवगमा**दिति' इति वदन्ति ।

ननु "कृष्णं धर्मं सनातनम्" इत्यादौ धर्मशब्दप्रयोगस्य, "प्रणतेषु महीपेषु प्रसादो मूर्तिमानयम्" इत्यस्य मूर्तिमत्त्वरूपप्रसिद्धप्रसादवैलक्षण्यविशिष्टप्रसादत्वारोप इव, "रामो विग्रहवान् धर्मः" इत्यस्य विग्रहवत्त्वरूपप्रसिद्धधर्मवैलक्षण्यविशिष्टधर्मत्वारोप इव च सनातनत्वरूपप्रसिद्धधर्मवैलक्षण्यविशिष्टधर्मत्वारोपतात्पर्येणोपपन्नस्य, पौराणिकस्य, "यमिन्द्रमाहुर्वरुणं यमाहुः" इत्यादिवाक्यतुल्यस्य वचनस्य, "चोदनालक्षणोऽर्थो धर्मः" इति विचार्यधर्मशब्दार्थनिर्णयैकप्रयोजनकसूत्रवत् शब्दशक्तिनियामकत्वाभावः । अस्तु वा ब्रह्मसाधारण्यम् - तथापि जैमिनिनोभयविधधर्मविचारस्य प्रतिज्ञातत्वे ब्रह्मसूत्राण्यपि तेनैव प्रणेतव्यानि स्युः । न हि महर्षिर्विघ्नशङ्कोत्प्रेक्षितुं शक्यते । स्वाचार्यस्य बादरायणस्य ब्रह्मसूत्रप्रणिनीषां दृष्ट्वोदासामासेति कल्पना तु न; प्रमाणाभावात्, तादृशजनवादानुपलम्भाच्चेत्यस्वरसादाह - **यद्यपी**ति । **अश्रुतवेदान्ताना**मिति । वाय्वादिदेवताप्रीत्यर्थं कर्मणोऽनुष्ठाने वाय्वादीनां नश्वरतया कर्मभिः प्रीतस्य वाय्वादेः फलप्रदानात् प्रागपि नाशसंभवेन निष्फलत्वबुद्ध्या अश्रुतवेदान्तानां कर्मण्यश्रद्धा जायेत । श्रुतवेदान्तानां तु तत्तत्कर्माराध्यस्य तत्तद्देवतान्तर्यामिणः कर्मानुरूपफलप्रदस्य सकलकल्पानुयायित्वेन न तच्छङ्केति भावः । यद्वा - **अश्रुतवेदान्तानाम्** । अपीति शेषः । अविरक्तानामपि कर्मण्यश्रद्धा स्यादित्यर्थः । अत एव वक्ष्यति - '**वीतरागव्यतिरिक्तानामग्निहोत्रादिषु**' इत्यादि । ननु महता यत्नेन देवताविग्रहादिकं निराकुर्वाणस्य तत्र तात्पर्याभावे देवताविग्रहं साधयतो बादरायणस्यापि, '**नहिनिन्दा**' न्यायः कुतो नावतरेदित्य-

स्वरसादाह - **यद्वा वेदप्रामाण्यकर्मावश्यकर्तव्यतातात्पर्या**तिशयादिति । देवता-विग्रहसत्त्वे, "विरोधः कर्मणीति चेत्" इत्यादिदेवताधिकरणोक्तरीत्या वेदस्या-प्रामाण्यं प्रसज्यते । कर्मणश्च देवताप्रीत्यर्थतया देवतां प्रति गुणत्वे कर्मणः फल-जनकत्वाभावेन कर्मण आवश्यकत्वं किंचिद्धीयेतापि । अतो वेदप्रामाण्यकर्मावश्य-कत्वयोर्बद्धादरातिशयेन जैमिनिना देवताविग्रहनिराकरणेऽल्पीयान् कटाक्षः पाति-तश्चेत्, का क्षतिरिति भावः । **तदुक्तरात्रिसत्रे**ति । "ज्योतिर्गौरायुः" इत्यु-त्पन्नस्य रात्रिसत्रस्य फलाकाङ्क्षायाम्, "प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ति" इत्यर्थवादसमर्पितप्रतिष्ठाया विपरिणामेन फलत्वमात्रकल्पनमेव ज्यायः; न तु विश्व-जिन्न्यायेन स्वर्गस्वरूपमपि कल्पयित्वा तस्य फलत्वकल्पनमपि' इति चतुर्थे स्थितम् । ततश्च तेनैव न्यायेनार्थवादिकदेवताविग्रहादिष्वपि तात्पर्यमस्तीति भावः । **तस्मि-स्तद्धर्मोऽनिर्देष्टव्य इति स्थित**मिति । "यस्य लिङ्गमर्थसंयोगादभिधानवत्" (८-१-२) इत्यष्टमाध्यायद्वितीयाधिकरण इति शेषः । **नात्र द्रव्यदेवतयो**रिति । ननु "विप्रतिपत्तौ हविषा नियम्येत कर्मणस्तदुपाख्यत्वात्" (८-१-३२) इति सूत्रे, 'यस्य यत्र द्रव्यदेवतासाम्ययोर्विप्रतिपत्तिरस्ति, यथा ऐन्द्रपुरोडाशे देवता-साम्यात् सान्नाय्यविध्यन्तः, द्रव्यसाम्यात् पुरोडाशविध्यन्तश्च, तत्र द्रव्यसादृश्य-माश्रित्यैव नियमः प्रवर्तते । कुतः? कर्मणो हविष्युपलभ्यमानत्वात् = यागाख्यस्य कर्मणस्त्यागरूपस्य हविष्युपलभ्यमानत्वात् । हविर्हि त्यज्यमानं दृश्यते इत्येवं द्रव्यस्यान्तरङ्गतया तत्सादृश्यमपेक्षितम् । शब्दार्थगतचोदनासादृश्यगवेषणायामन्तरङ्ग-सादृश्यस्यैवापेक्षितत्वात् ऐन्द्रपुरोडाशे आग्नेयविध्यन्त एव प्रवर्तते; न त्वैन्द्रसा न्नाय्यविध्यन्तः' इति स्थितम् । न तु द्रव्यदेवतयोः प्रत्यक्षत्वाप्रत्यक्षत्वाभ्यामिति चेत् — अस्त्वेवम् । तस्याप्यर्थस्योक्तार्थाविरुद्धत्वेन ग्राह्यत्वात् । **विपक्षनिरासार्थ-स्ये**ति । वेदाप्रामाण्यादिनिरासार्थस्येत्यर्थः ।

## (कर्मब्रह्ममीमांसयोः क्रमनियामकम्)

**द्वितीयाध्यायात्पूर्वं ब्रह्मविचारः किं न स्यादिति** । ननु प्रथम-लक्षणार्थप्रामाण्यस्योपजीव्यत्वमिव भेदादिलक्षणोक्तस्य शब्दान्तरादेः श्रुतिलिङ्गादे-श्चोपजीव्यत्वमविशिष्टमिति कथमयमाक्षेपः? नन्वस्मिन् शास्त्रे सर्ववेदान्तानां ब्रह्मणि

समन्वयार्थमुपक्रमादीन्येव ज्ञातव्यानि, न श्रुतिलिङ्गादीनीति चेत् - उपक्रमोन्मेषार्थं श्रुतिलिङ्गादीनामपेक्ष्यत्वात् । न हि ब्रह्माभिधानश्रुत्यादिकमनुपलभ्य 'उपक्रमो ब्रह्मविषयः' इति निश्चेतुं शक्यम् । न चैतावता श्रुतिलिङ्गादिकमेव समन्वयोपयोगि, नोपक्रमादिकमिति वक्तुं शक्यम् । श्रुत्यादिष्वपि प्रकरणस्योपक्रमादिनात्पर्यलिङ्गाधीनावगम्यत्वात् । साकाङ्क्षप्रधानवचनं हि प्रकरणम् । प्राधान्यनिर्णयश्च तात्पर्यलिङ्गावसेयः । किं च येषु वाक्येषु ब्रह्माब्रह्मसमावेशः, तत्र ब्रह्मलिङ्गबलवत्त्वस्य तात्पर्यलिङ्गोपक्रमाद्यवसेयत्वात् श्रुतिलिङ्गादिकमुपक्रमादिकं चापेक्षितम् । न चोपक्रमादीनां श्रुतिलिङ्गादीनां चान्योन्याश्रयः । उपक्रमादीनां स्वरूपलाभार्थं श्रुतिलिङ्गाद्यपेक्षणम्, बलाबलावधारणार्थमुपक्रमाद्यपेक्षणमिति विषयभेदेन परस्परापेक्षाया अदोषत्वात् । तस्मात् श्रुतिलिङ्गादिकमुपजीव्यमेवेति तदर्थं तृतीयाध्यायापेक्षाया अपि सत्त्वात् द्वितीयाध्यायात्पूर्वमिति शङ्कायास्तत्परिहारस्य चानुत्थानमेव ।

ननु श्रुत्यादीनामुक्तरीत्योपजीव्यत्वेऽपि न तत्परिज्ञानार्थं पूर्वतन्त्रापेक्षा, इहैव, "द्युभ्वाद्यायतनं स्वशब्दात्", "आकाशस्तल्लिङ्गात्", "तथा चैकवाक्योपबन्धात्", "प्रकरणात्" इत्यादिसूत्रैः श्रुत्यादिस्वरूपावगमस्य, "श्रुत्यादिबलीयस्त्वाच्च न बाधः" इत्यादिसूत्रे श्रुत्यादीनां पूर्वबलीयस्त्वावगमस्य च संभवात् । न हि तत्र श्रुत्यादीनां लक्षणमुक्तमस्ति । कचिद्वाक्यैक्यमात्रस्य लक्षणमुक्तम् - "अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्" इति । यानि तु तद्व्याख्यातृभिरुक्तानि लक्षणानि, तानि नोपयुज्यन्ते । तथा हि —

"निरपेक्षो रवः श्रुतिः" इति श्रुतिलक्षणमुक्तम् । तत्र सर्वत्राप्यसिद्धम्, शक्तिस्मरणादिसापेक्षत्वात् । पदान्तरसमभिव्याहारनिरपेक्षत्वं विवक्षितमिति चेत् - न; धूमवति पर्वते प्रयुक्तस्य 'सः' इति पदस्यानुमानव्यवधानसापेक्षत्वेऽपि पदान्तरसमभिव्याहारनिरपेक्षत्वेन लिङ्गसमर्पकस्यापि शब्दस्य लिङ्गिनि श्रुतित्वप्रसङ्गात् । "शब्दादेव प्रमितः" इत्यधिकरणे विषयवाक्ये, "अङ्गुष्ठमात्रः पुरुषः" इत्यत्र ईशानश्रुतेरङ्गुष्ठप्रमितः परमात्मेति बोधने अङ्गुष्ठमात्रपदसमभिव्याहारसापेक्षत्वेन श्रुतित्वाभावप्रसङ्गाच्च । ननु परमात्मवाचिन ईशानशब्दस्याङ्गुष्ठमात्रपदसामानाधिकरण्यात् वस्तुतोऽङ्गुष्ठमात्रप्रमितपरत्वेन पर्यवस्यतो धर्मिमात्रज्ञापने नैरपेक्ष्यमस्ति,

"व्रीहीन् प्रोक्षति" इत्यत्र क्रियेप्सिततमवाचिन्या द्वितीयाविभक्तेः प्रोक्षतिपद-सामानाधिकरण्यात् प्रोक्षणत्वेन पर्यवस्यतः क्रियामात्रस्य ज्ञापन इवेति चेत् - तर्हि, "आकाशस्तल्लिङ्गात्" इत्यधिकरणविषयवाक्ये, "आकाशो ह्येवैभ्यो ज्यायान्" इत्यत्र ज्यायःशब्दस्याकाशपदसमभिव्याहाराद्वस्तुत आकाशपरत्वेन पर्यवसितस्य धर्मिमात्रज्ञापने नैरपेक्ष्यमस्तीति तस्याप्याकाशस्य परमात्मत्वे साध्ये श्रुतित्वप्रसङ्गात् ।

तथा वस्तुसामर्थ्यरूपलिङ्गलक्षणमपि नोपयुज्यते ; "आनन्दमयोऽभ्यासात्" इति वर्ण्यमानानां निरतिशयानन्दादिब्रह्मासाधारणधर्मलिङ्गानां वस्तुसामर्थ्यरूप-लिङ्गत्वाभावात् । 'इतिकर्तव्यताकाङ्क्षा प्रकरणम्' इति पूर्वतन्त्रोक्तं प्रकरणं न ब्रह्मविचारोपयोगि, सिद्धरूपस्य ब्रह्मण इतिकर्तव्यताकाङ्क्षाविरहादिति स्पष्टमेव । स्थानस्य तु संनिधियथासंख्यलक्षणस्य संग्राहकमेकमनुगतं लक्षणं पूर्वतन्त्रोक्तं न दृश्यते । 'समाख्या यौगिकी संज्ञा' इत्येतदपि न युक्तम्, पूर्वतन्त्रे होतृचमसादि-संज्ञायाः, इह शास्त्रे, "स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठाम्" इत्यादिषु श्रुताया ब्रह्म-विद्यादिसंज्ञायाश्च समाख्यात्वसंभवेऽपि आध्वर्यवौद्गात्रादिसंज्ञायाः प्रकृतिप्रत्ययसमुदाय-रूपत्वेन तदभिमतैकपदश्रुतिरूपतया समाख्यात्वासंभवात् ।

तस्मात् तत्रत्यानां श्रुतिलिङ्गादीनामिहानपेक्षितत्वात् न प्रमाणलक्षणातिरिक्त-मपेक्षितमिति चेत् —

तर्हि "अत एव च नित्यत्वम्" इति वेदप्रामाण्यस्य, "तदुपर्यपि बादरायणः संभवात्" इति सूत्रेण मन्त्रार्थवादैर्देवतानां विग्रहवत्त्वस्य सिद्ध्या विद्याधि-कारहेतुसामर्थ्यसंभवसाधकेन मन्त्रार्थवादप्रामाण्यस्य, "शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम्" इति सूत्रेण स्मृत्यादिषु श्रुत्यनुमापकत्वप्रवृत्तिनिमित्तकानुमान-शब्दप्रयोगवता स्मृत्यादिषु प्रामाण्यस्य च सिद्धेः प्रमाणलक्षणमपि नोपजीव्यं स्यात् । ननु पूर्वतन्त्रे पूर्वपक्षसिद्धान्ताभ्यां स्फुटं वेदादिप्रामाण्यसमर्थनमस्ति । इह तु न स्फुटप्रतिपत्तिरिति चेत्, व्याख्यानतो विशेषप्रतिपत्तिसंभवात् । उक्तं हि — "व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणम्" इति, इति चेत् - सत्यम् । उक्तरीत्या श्रुतिलिङ्गादिषु तत्रत्येषु च वैषम्यसद्भावेऽपि प्रामाण्ये वैषम्याभावेन तत्र

कण्ठरवेण समर्थितप्रामाण्योपजीवनेऽपि श्रुत्यादिवैषम्यसद्भावेन द्वितीयात् पूर्वं ब्रह्मविचारः किं न स्यादित्याक्षेपः समवर्तीति नानुपपत्तिरिति भावः ।

( अध्ययनविधिनिरूपणम् )

**आत्मज्ञानस्य व्रीह्यादिद्वारेति** । नन्वात्मनः कर्मशेषत्वे सत्येवात्मज्ञानस्यात्मद्वारा शेषत्वं स्यादिति वक्तुमुचितम्, न तु व्यत्यासेन ज्ञानस्यात्मद्वारा शेषत्वे सत्यात्मनः शेषत्वं स्यादितीति चेन्न; 'कर्मशेषत्वे' इति निमित्तसप्तमी, "चर्मणि द्वीपिनं हन्ति" इतिवत् । **समीच्यस्य** सामीचीन्यमर्थः । समीचीने आत्मद्वारा कर्मशेषत्वे आत्मनः कर्मशेषत्वमुपयुक्तं स्यादिति । शेषत्वस्य सामीचीन्यं नाम संनिपातित्वम् । ततश्चात्मज्ञानस्य कर्मशेषत्वे व्रीहिद्वारा प्रोक्षणस्येवात्मद्वारा संनिपातित्वलक्षणं समीचीनं शेषत्वं सिध्येदिति भावः । **आत्मनो द्वारभावे संभवतीति** । संस्कार्यतया द्वारभावसंभव इत्यर्थः । **फलप्रदतया शेषत्वमस्त्विति चेदिति** । न चैवं देवतायाः कर्मवत् फलप्रदत्वेन कर्मतुल्यकक्ष्यतया समप्राधान्यप्रसङ्ग इति वाच्यम् - भोक्तृत्वार्थानामपि श्मश्रुवपनादीनां यागतुल्यकक्ष्यत्वाभावेन यागाङ्गत्ववदुपपत्तेः । 'फलप्रदतया शेषित्वमस्तु' इति पाठेऽपि यागशेषिभूतभोक्तृत्वार्थानां श्मश्रुवपनादीनां यागार्थत्ववत् यागशेषिभूतपरमात्मार्थानामपि यागाङ्गत्वमविरुद्धमेवेति द्रष्टव्यम् । **न तु पुस्तकनिरीक्षणादिनेति** । अर्थज्ञानेऽध्ययननियमो भाट्टैरुक्तः । स त्वर्थज्ञानकामनाखण्डनेन प्रत्याख्यातो गुरुणा । अस्मदभिमते त्वक्षरग्रहणार्थाध्ययननियमे स्वाधीनोच्चारणक्षमत्वलक्षणाक्षरग्रहणकामनासंभवादुपायान्तरसत्त्वेन व्यावर्त्यसंभवाच्च नियमविधित्वमपरिहार्यमिति भावः । **उपनयनद्वाराऽध्ययनशेषत्वे सतीति** । न च प्रथमशब्दाभिप्रेतस्याष्टमवर्षस्याध्ययनं प्रत्यव्यवधानतया नोपनयनद्वारा शेषत्वमिति वाच्यम् — "श्रावण्यां प्रौष्ठपद्यां वा उपाकृत्य यथाविधि । युक्तश्छन्दांस्यधीयीत मासान् विप्रोऽर्धपञ्चमान् ॥" इत्यष्टमवर्षान्तर्गतिनियमशून्यकालविशेषे विहितस्य, "द्वादशवर्षाण्येकवेदे ब्रह्मचर्यं चरेत्; प्रतिद्वादश वा सर्वेषु" इत्यनेकसंवत्सरसाध्यस्याध्ययनस्याष्टमवर्षाङ्गकत्वासंभवेनोपनयनस्यैवाष्टमवर्षाङ्गकत्वं वक्तव्यमिति सिद्धम् । ततश्चोपनयनाङ्गभूतकालमध्ययनाङ्गतयोपचारतो निर्दिशन् भाष्यकारो ज्ञापयति, उपनयनाध्ययनयोरङ्गाङ्गिभावोऽस्तीति । **उपनयन-**

**द्वाराऽध्ययनशेषत्वात् कालस्येति**। अष्टमवर्षाङ्कोपनयनाङ्गकस्याध्ययनस्य प्राथम्यं सिध्यतीति भावः। **अकर्त्रभिप्रायसूत्रविहितत्वाच्चेति**। आत्मनेपदस्येति शेषः। अकर्त्रभिप्रायसूत्रम्, "संमानन —" इति सूत्रम्। **अध्ययनाङ्गविधिरिति**। ननु उपनयनस्य दृष्टद्वारसंभवेऽदृष्टकल्पनाया अन्याय्यत्वादध्ययनं गुरूच्चारणानूच्चारणमेव, न स्वतन्त्रमित्यध्यापयितृपूर्वकत्वमाक्षेपसिद्धमिति, अध्यापयितृपूर्वकत्वसिद्ध्यर्थमध्यापयितृपूर्वकत्वरूपमध्ययनाङ्गं नानेन वाक्येन विधेयमस्तीति कथमध्ययनाङ्गविधिरिति चेत् — न; "अष्टवर्षं ब्राह्मणमुपनयीत ; तमध्यापयेत्" इत्यत्राध्यापनस्य रागप्राप्तत्वात्, "याजयेत्" इत्यत्र यजनस्येवाध्ययनस्यैवानेन विधिना विधाने उपनयनस्य तत्समभिव्याहारात्तदङ्गत्वं सिध्येत्। तदभावे तु, "उपनयीत" इत्यनेनाध्ययनाङ्गतयोपनयनं विधीयत इत्यस्यापरिज्ञानाददृष्टार्थमुपनयनं विधीयत इति स्यात्। ततश्च स्वतन्त्रमप्यध्ययनं प्राप्नुयात्। ततश्च "अध्यापयेत्" इत्येतदपेक्षितमिति भावः। यद्वा "ऐन्द्रवायवं गृह्णाति" इतिवाक्याक्षेपलभ्ययागविधायकस्य, "सोमेन यजेत" इत्यस्य विधित्ववत् उपनयनविध्याक्षेपलभ्याध्यापयितृपूर्वकत्वविधायकस्य "अध्यापयेत्" इत्यस्य विधित्वसंभवादिति भावः। यद्यपि "अध्यापयीत" इत्येव मीमांसकग्रन्थेषु लिख्यते, अत्र तु "अध्यापयेत्" इति श्रुतिर्लिख्यते — तथापि "बुधयुधनशजनेङ्" इति सूत्रानुकूलत्वेनास्यैव पाठस्य सामीचीन्यम्। **क्त्वाश्रुत्योपनयनस्येति**। "वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत" इतिवत् क्त्वाश्रुत्या कर्त्रैक्यावगमात् तेन च प्रयोगैक्यावगमादङ्गाङ्गिभावः सिध्यतीति भावः। **अन्तरङ्गत्वं हि प्रत्यक्षश्रुतिसिद्धमिति**। उपनयनसंस्कारे माणवकगतत्वस्य प्रत्यक्षद्वितीयासिद्धत्वादध्ययनस्य तन्निष्ठत्वाच्च तत्संस्कार्यनिष्ठत्वमन्तरङ्गत्वं प्रत्यक्षश्रुतिसिद्धमिति भावः। **नाध्यापनाङ्गत्वं युक्तमिति**। अध्यापनाङ्गत्वे क्रियाफलस्य कर्तृगतत्वात्, "स्वरितञितः" इत्येवात्मनेपदं सिद्धमितीदं व्यर्थं स्यादिति भावः। **तदवधारणनिषेधार्थमिति**। कर्त्रर्थेवेति नियमेनाकर्तृगामिनि फले आत्मनेपदाप्राप्तौ तन्निवृत्तिः क्रियते। आत्मनेपदं प्राप्यत इत्यर्थः।

**ऋत्विजो वृणीत इत्यत्रेति**। अत्र केनचित् — [1]'वृणीते' इति रूपं "वृङ् संभक्तौ" इत्यत एव ; नान्यस्मात्, ञितः श्नाविकरणपाठा-

1. धातुनक्षत्रमाला २९८, पु.

भावात् । तेन "स्वरित-" इति सूत्राप्रवृत्तिरिष्टप्रसञ्जनमेवेत्युक्तम् । तदसत् । [वृङ्वरणे इत्यस्यापि श्नाविकरणे पाठात् ।] यद्यपि क्र्यादौ "वृञ् वरणे" इति धातुर्धातुवृत्तौ न पठितः, तथापि "वृञ वृञ् वृतौ" इति कल्पद्रुमे पठितः। तस्यैवात्र विवक्षितत्वात् । "वृञ् वरणे" इति क्र्यादौ (स्वादौ) दीर्घान्तस्य पाठात् तत एव तस्य रूपस्य संभवाच्च । नन्वत्र "वृङ् संभक्तौ" इति धातुर्युज्यते। संभक्तिर्हि प्रार्थना । अत एव हि "अवद्यपण्यवर्या", "पतिस्तुशास्त्र", "ईड-वन्दवृशंसदुहां ण्यतः" इत्यादिषु वृत्तिकारादिभिरुदाहरणेषु ऋत्विग्विषये "वृङ् संभक्तौ" इत्येवोदाहृतम् । अतः, "स्वरितञितः" इतिसूत्राप्रसञ्जनमिष्टप्रसञ्जन-मेवेति चेत्-सत्यम्-संभक्तितात्पर्यमन्तरेण वरणतात्पर्येण प्रयुक्ते लौकिके प्रयोगे आत्मनेपदाभावप्रसङ्गस्यापादयितुं शक्यत्वात् । ततः ऋत्विक्ष्वपि वरणेन निरोधन-रूपफलसंभवादिति भावः ।

**अग्निसंस्कारव्यवहितस्येति** । अव्यवहितस्याग्निसंस्कारस्य कर्तृगतत्वा-भावादात्मनेपदं न स्यादित्यर्थः । **आधानकर्तरि न व्यवहितफलान्वय** इति । ततश्चाव्यवहितफलस्य कर्तृगामित्व एव, "स्वरित -" इत्यादि-सूत्रप्रवृत्तिः । अत्र चाव्यवहितं संस्कारविशिष्टाग्निरूपं फलमाधानकर्तृगतमेवेति, "स्वरित -" इत्यादिनात्मनेपदमुपपद्यत इति भावः । **असाधारणफलानन्वय-विषयत्वादिति** । क्रियायाः फलं प्रधानभूतं चेत् कर्तृगामि भवति -- यदर्थं क्रिया आरभ्यते तच्चेत् फलं कर्तृलकारवाच्यस्य भवति, तदा आत्मनेपदमित्यर्थः । अत एव 'यजन्ति याजकाः', 'पचन्ति पाचकाः' इत्यत्र न भवति । यद्यप्यत्र दक्षिणा भृतिश्च कर्तुः फलमस्ति - तथापि न तदर्थः क्रियारम्भ इत्यदोषः । **यथा व्रीहीन-वहन्तीत्यत्रेति** । "क्रियाणामर्थशेषत्वात् प्रत्यक्ष त (क्षोतस्त) न्निर्वृत्त्यापवर्गः स्यात्" (११-१-२७) इत्येकादशाध्यायाधिकरणे तथैव व्यवस्थापितत्वादिति भावः ।

**सक्तुहोमो यथा पुरुषसंस्कार** इति । यथा भूतभाव्युपयोगविधुराणां सक्तूनां होमसंस्कार्यत्वाभावेन सक्तुहोमस्य गुणकर्मत्वाभावेन प्रधानकर्मत्वम्, तद्वदिति भावः । एतदभिप्रायेण पुरुषसंस्कारत्वोक्तिरिति द्रष्टव्यम् । **स्वाध्यायस्य हि कर्मत्वावगमो न पुरुषस्येति** । यद्यप्यध्ययनस्य प्राभाकराभिमतमर्थकर्मत्वमेव

निरसनीयम् ; न तु पुरुषसंस्कारत्वम्, तस्य परानुक्तत्वात् । न चाध्ययनस्य स्वाध्यायसंस्कारत्वाभावे पुरुषसंस्कारत्वमापतेदेव, कोटिद्वयविनिर्मुक्ताकाराभावादिति वाच्यम् - गुणकर्मत्वशून्यानां काम्यानां प्रयाजादीनां च पुरुषसंस्कारत्वस्याभावात् - — तथापि प्रधानकर्मत्वनिरासे तात्पर्यम् । **प्राप्यत्वमात्रपर्यवसानं चायुक्तमिति ।** न चैवं वैदिके, " पयो दोग्धि " इत्यत्रापि पयसः संस्कार्यत्वप्रसङ्गः, तत्रापि प्रापण-(प्रपूरण ?) नियमजन्यादृष्टस्याभ्युपेतत्वेन संस्कार्यत्वस्येष्टत्वात् । ततश्चाध्ययनेन वेदानां या प्राप्तिः स्वाध्यायोच्चारणेच्छायां सत्यामस्खलिततदुच्चारणोपयोगिताल्वमूर्धादि-वर्णस्थानवशित्वसहिताविच्छिन्नस्मृतिसंततिजनकवर्णपदवाक्यावलीविषयसंस्कारदार्ढ्य-जनकाक्षरराशिग्रहणरूपा, तन्नियमजन्यादृष्टस्य स्वाध्यायनिष्ठस्याभ्युपेयत्वमिति भावः । **सुवर्णं भार्यमित्यत्रेति** । तृतीये सुवर्णभरणस्य पुरुषार्थत्वस्य व्यवस्थापितत्वादिति भावः । **प्रतियोग्यभ्युपगम** इति, प्रतिवाद्यभ्युपगम इत्यर्थः । **सक्तून् जुहोतीत्यादिषु प्रत्ययस्वारस्यावगतमपीति** । ननु " मैत्रावरुणाय दण्डं प्रयच्छति " इत्यत्रेव " तथायुक्तं चानीप्सितम् " इत्यनीप्सिते कर्मणि द्वितीया भविष्यतीति कुतो व्यत्ययाश्रयणमिति चेत् — न । तत्र हि दानकर्मभूतेन दण्डेन मैत्रावरुणस्य संस्कारः; न तु दण्डसाधनकेन दानेन । इह तु सक्तुसाधनकेन होमेनापूर्वम्, न होमकर्मभिः सक्तुभिरिति वैषम्यात् । [1] नन्वध्ययनस्यार्थज्ञानार्थत्वपक्षेऽपि न कर्मत्वभङ्गः, अर्थसिद्धस्याध्ययनसंस्कार्यत्वस्य, " चरुमुपदधाति " इत्यत्रेव द्वितीययाऽनुवादोपपत्तेः । अग्निप्रकरणाम्नातेन, " चरुमुपदधाति " इति विधिना चरूपधाने स्थण्डिलस्याङ्गतया विनियुज्यमाने, तस्य साक्षात्स्थण्डिलनिर्वर्तकत्वायोगादुपहितेन चरुणा तन्निर्वृत्ति-दर्शनाच्चोपधानस्य स्थण्डिलाङ्गत्वं चरुसंस्कारद्वारकमिति अर्थसिद्धमेव हि चरोरुपधान-संस्कार्यत्वं द्वितीययाऽनूद्यते । एवमिहाप्यध्ययनस्य तत्समाप्त्यनन्तरारम्भणीयमीमांसा-परिचयोत्तरकालभाविनि अर्थज्ञाने साक्षात् करणत्वायोगात् अध्ययनगृहीतस्वाध्यायेन कालान्तरे स्मृतिसमारूढेन द्वारेणार्थज्ञानदर्शनाच्चार्थसिद्धं स्वाध्यायस्याध्ययनसंस्कार्यत्वं तव्यप्रत्ययेनानूद्यत इत्युपपत्तेरिति चेत् - न । ' अध्ययनगृहीतस्वाध्यायेनार्थज्ञानं भावयेत् ' इत्यर्थाश्रयणेन भट्टमते दोषाभावेऽपि, अध्ययनस्य स्वाध्यायसंस्कारत्वानभ्युप-गन्तृगुरुमते, ' स्वाध्यायसाधनकाध्ययनेनार्थज्ञानं भावयेत् ' इत्यर्थाश्रयणेन तव्यप्रत्य-

1. न्यायरक्षामणिः २५३. पु.

यार्थत्यागः सिद्ध इति भावः । अर्थावबोधनस्य सप्रयोजनकत्वप्रदर्शनार्थमाह - **अनुष्ठानौपयिकेति** । **चशब्देन समुच्चीयत** इति । यद्यपीदं पक्षद्वयेऽपि समानम् — तथापि पूर्वपक्षे **अपिर्विरोधसूचकः**; द्वितीयपक्षे तु जपादेः स्वरूपस्य च समुच्चयपर इति विवेकः ।

मन्त्राणां स्वाध्यायान्तर्गतानां पृथङ् निर्देशः किं निबन्धन इत्याशङ्क्याह - **मन्त्रवदिति पृथङ् निर्देश** इति । उपकारकमन्त्रवत्त्वप्रतिपादनस्य प्रकृतेऽत्यन्तानुपयोगात् वतिप्रत्ययान्तत्वमाश्रित्याह — **यद्वा यथा बालस्येति** । **सनियमकोच्चारण**मिति । यद्यपि नियमोऽङ्गविधायकवाक्यान्तरप्राप्यः, नाध्ययनशरीरान्तःपाती, तथाप्यर्थज्ञानस्य तच्छरीरानन्तःपातित्वे तात्पर्यम् । **अपि तु स्वशाखामात्रवाचीति** । अध्यायशब्दो वेदपरः, स्वशब्दः पितृपितामहपरंपरागतस्वीयत्ववाची । न च, 'स्वाध्यायशब्दवाच्यवेदाख्याक्षरराशेः' इति भाष्येण विरोध इति वाच्यम् - तस्यापि 'स्ववेदाख्याक्षरराशेः' इत्यत्र तात्पर्यात् । न च सिद्धान्ते स्वाध्यायस्याध्ययनोद्देश्यतया उद्देश्यगतविशेषणस्य ग्रहैकत्ववदविवक्षितत्वात् स्वीयास्वीयसाधारण्येनाध्ययनं प्राप्नोतीति वाच्यम् - वेदानामानन्त्येन सर्वाध्ययनस्याशक्यत्वेन संकोचेऽपेक्षिते स्वीयत्वस्योद्देश्यगतस्य विवक्षितत्वोपपत्तेः । **मात्रचेति** । ननु 'क्षीरमात्रं पिब' इत्यादावुत्तरपदत्वनियतं मात्रपदं प्रातिपदिकम् । न तु, "प्रमाणे द्वयसच्दघ्नञ्मात्रचः" इति विहितो मात्रच्प्रत्ययः, तस्य प्रमाणार्थ एव विधानादिति चेत् - न । 'ऊरुमात्रम्' इत्यादावपि प्रमाणार्थप्रत्यय इतरव्यवच्छेदप्रतीतेर्मात्रच्प्रत्ययव्यतिरेकेणोत्तरपदत्वनियतप्रातिपदिकाभ्युपगमे प्रमाणाभावादित्यत्र तात्पर्यात् । **यथा अग्नीनादधीतेति वाक्यमिति** । एतच्च, "तत्प्रकृत्यर्थं यथान्येऽनारभ्यवादाः" (३-६-१४) इति तार्तीयाधिकरणे स्थितम् । तत्र हि, आधानविधेः पर्णतादिवत् क्रतुपर्यन्तत्वं पूर्वपक्षीकृत्य अलौकिकस्याहवनीयाद्यग्नेरेव फलाकाङ्क्षाशामकत्वसंभवात् तन्मात्रविश्रान्त एवाधानविधिः, न क्रतुपर्यन्त इति स्थापितम् । **आधानमात्रपरमिति** । अग्निसिद्ध्यर्थाधानमात्र [विधि] परमित्यर्थः । **ग्रहणशेषतयाविनियुक्तस्येति** । ननु सिद्धान्ते न स्वाध्यायस्य ग्रहणशेषतया विनियोगः, स्वाध्यायस्य शेषित्वावगमादिति चेत् - मैवम् । ग्रहणशेषतया अविनियुक्तस्येति छेदः । ग्रहणशब्दश्चार्थग्रहणपरः; अर्थज्ञानशेषतया अविनियुक्तस्य स्वाध्यायस्यार्थपरत्वे प्रमाणाभावादित्यर्थः । अयं

भावः - अर्थावबोधमुद्दिश्य शब्दोच्चारणेन हि लोके वाक्यानां तात्पर्यमवगम्य तन्निर्वाहार्थं मुख्यासंभवे लक्षणादिकं परिकल्प्यते; न तूच्चारणमात्रेण। अत एव 'गौरश्वः पुरुषो हस्ती' इति पदानामुच्चारणमात्रेण लक्षणा न कल्प्यते। यदा विशिष्टार्थबोधमुद्दिश्य तेषामुच्चारणमिति तात्पर्यमवगम्यते, तदैव तन्निर्वाहार्थम्, 'अयं गौर्बलीवर्दः, अश्वो वेगवान्, पुरुषो नियतचेष्टः, हस्ती महाबलः' इति गवादिपदानामध्याहारलक्षणादि कल्प्यते। एवं च वेदवाक्यानामर्थावबोधमुद्दिश्योच्चारणाभावे तात्पर्यासिद्ध्या तन्निर्वाहार्थलक्षणागौणवृत्त्यनुषङ्गाध्याहारव्यवधारणकल्पनोच्छेदप्रसङ्गादवश्यं वेदेऽप्यर्थावबोधमुद्दिश्योच्चारणस्य वक्तव्यत्वात् वेदे च लोक इव तमुद्दिश्य रागप्रयुक्तोच्चारणाभावाद्विधिप्रयुक्तमेव तदाश्रयणीयमिति, विधिश्चाध्ययनविधेरन्यो न दृश्यत इति, तेनैवार्थावबोधमुद्दिश्य गुरुमुखोच्चारणानूच्चारणरूपमध्ययनं विधीयत इत्यकामेनापि स्वीकर्तव्यम्। एवं च दृष्टफलेऽप्यर्थावबोधे विधिरन्यतोऽसिध्यतस्तात्पर्यस्य सिद्ध्यर्थ इति[1]।

## ( विचारे रागतः प्रवृत्तिसमर्थनम् )

**शब्दस्य बोधकत्वशक्तिस्वाभाव्यादित्यर्थ** इति। [2]लोकव्युत्पत्तिसिद्धस्य शब्दानामर्थपरत्वस्यौत्सर्गिकस्य क्वचित्क्वचिल्लौकिकवाक्ये वक्तृदोषादपवादेऽपि अपौरुषेये तदभावात्; निरपवादस्य स्वत एव समर्थस्यार्थज्ञानोद्देश्यकशब्दोच्चारणस्य विधिनिरपेक्षत्वाच्च। ननु - शब्दानामर्थपरत्वमात्रं व्युत्पत्तिसिद्धम्। न त्वग्निहोत्रादिवाक्यं तत्तदर्थविशेषपरमित्यपि। तत्तु तत्तदर्थविशेषमुद्दिश्योच्चारणमपेक्षत इति तदर्थोऽध्ययनविधिः स्यादिति चेत् - न; अध्ययनविधिनापि तदलाभात्। न ह्यध्ययनविधिः प्रतिवाक्यं तत्तदर्थज्ञानविशेषमुद्दिश्य तत्तद्वाक्योच्चारणे व्याप्रियते। 'स्वाध्यायाध्ययनेन यद्भावयितुं शक्यम्, तदनेन भावयेत्' इति विधाने सति अग्निहोत्रादिवाक्याध्ययनेन न्यायलभ्यतत्तदर्थविशेषज्ञानमेव भावयितुं शक्यमिति तत्तदर्थविशेषे तात्पर्यमर्थतः सिध्येदिति चेत् - तर्हि अग्निहोत्रादिवाक्यानामौत्सर्गिकमर्थपरत्वमेव न्यायपर्यालोचनेन तत्तदर्थविशेषतात्पर्यतया पर्यवस्यतीत्येवास्तु; किमुच्चारणविधिना? यदि च लोके दृष्टमित्येतावता वेदेप्यर्थावबोधमुद्दिश्योच्चारणमाद्रियेत, तदा स्वतन्त्रवक्तृविवक्षितेतरार्थावबोधमुद्दिश्य श्रोतृभिरुच्चारणे कृतेऽपि तस्य वाक्यस्य

1, 2. न्यायरक्षामणौ पु. २४८ - २५१.

तत्र तात्पर्यं न दृष्टम् । किंतु स्वतन्त्रकर्तुर्यदर्थावबोधमुद्दिश्योच्चारणम्, तत्रैव तात्पर्यं दृष्टमिति वेदस्य तात्पर्यसिद्ध्यर्थं पौरुषेयत्वमपि कल्प्येत । वस्तुतस्तु लोकेऽपि नोच्चारणाधीनं तात्पर्यम्, मौनिना लिखित्वा दत्ते परेणापि लिखितं दृष्ट्वा मनसानुसंहिते श्लोकादावुच्चारणाभावात् । किंतु 'अस्माद्वाक्यादेतदर्थप्रतीतिर्भवतु' इति वक्तृविवक्षाधीनं तदिति । तस्मात् तात्पर्यसिद्ध्यर्थमध्ययनविधेरर्थावबोधफलकल्पनायाः कथंचिदपि नावकाशः; लोके व्युत्पत्तिसिद्धमर्थपरत्वं वक्तृविवक्षिते विशेषे पर्यवस्यति; वेदे तु न्यायलभ्ये विशेषे । तदनुसारेण च लक्षणादिकल्पनमित्येवाभ्युपगन्तव्यम् । अत एव वेदस्य तात्पर्यवत्त्वसिद्धिमेवाध्ययनविधिफलं मन्वानेनापि न्यायतोऽध्ययनविधिरर्थावबोधमपि फलत्वेन गृह्णातीति तात्पर्यं निश्चित्य तद्बलेन स्वाध्यायावाप्तेरेव फलताप्रत्यायकस्य तव्यप्रत्ययस्य स्वारस्यमुल्लङ्घितम् । न ह्यध्ययनविधेरुक्तार्थतात्पर्यनिश्चयोऽयमर्थावबोधमुद्दिश्योच्चारणविध्यधीनः, तथाभूतविध्यन्तराभावात् । अस्यैव विधेरपेक्षायामात्माश्रयापत्तेः । किंतु केवलन्यायाधीन एव वक्तव्यः । तस्मात् तात्पर्यसिद्ध्यर्थमध्ययनविधेरर्थावबोधफलकत्वकल्पनमित्येतत् तावदयुक्तमिति भावः ।

**अन्यत्र विनियोगस्त्विति** । अध्ययनस्यार्थज्ञानादन्यस्मिन् स्वाध्याये विनियोग इत्यर्थः । **गृहीतात् = गृहीतमात्रात् अध्ययनगृहीतस्येत्युक्तेः**रिति । ननु '**अध्ययनगृहीतस्य**' इति भाष्यस्य कथमध्ययनगृहीतमात्रत्वमर्थः? येन '**गृहीतमात्रात्**' इत्यंशे तत् उपपादकं स्यादिति चेत् - उच्यते - 'अध्ययनगृहीतस्य स्वाध्यायस्य' इति पूर्वभाष्ये 'अध्ययनगृहीतस्यार्थावबोधित्वदर्शनात्' इत्येवं प्रमितिजनकत्वस्वभावस्योपपादितत्वात् तस्यैवापातप्रतीतिजनकत्वस्य विरुद्धत्वात् पूर्ववाक्यं मीमांसापरिकरयुक्तपरम् । अतस्तदविरोधायेदं वाक्यमध्यनगृहीतमात्रपरमिति भावः । केचित्तु मीमांसापरिकरयुक्तस्येत्यनुक्तेः, 'सर्वं वाक्यं सावधारणम्' इति न्यायात् सिध्यतीत्याहुः । **आपाततोऽवगम्यमानान् दृष्ट्वेत्यन्वय** इति । केचित्तु अवगम्यमानानर्थान् प्रयोजनवतो दृष्ट्वेत्यपि योजयन्ति । **अङ्गत्वान्यथानुपपत्त्यैवेति** । न च "वेदाङ्गानि च सर्वाणि" इति द्वितीयाश्रुत्या अङ्गानां कर्मत्वावगमात् स्वाध्यायस्येवाङ्गानां प्राप्यत्वं किं न स्यादिति वाच्यम् — तथा सति अङ्गाध्ययनस्याक्षरग्रहणमात्रपर्यन्तत्वेऽङ्गानां वेदानुपकारकतया अङ्गत्वभङ्गप्रसङ्गेन मुख्यप्रातिपदिकानुरोधेन

" सक्तून् जुहोति " इत्यत्रेव विभक्तिविपरिणामेन कर्मत्वपरित्यागेन करणत्वस्याश्रयणीयत्वात् । 'पाठकर्मभूतैरङ्गैरर्थज्ञानं भावयेत्' इत्यपि संभवेन प्राप्तपाठकर्मत्वानुवादेनापि दोषाभावाच्च । यथा " चरुमुपदधाति " इत्यत्र 'उपहितेन चरुणा स्थण्डिलं निर्वर्तयेत्' इत्येवं प्राप्तमुपधानकर्मत्वं द्वितीययानूद्यते, तद्वदिति [1]भावः ।

( समावर्तनस्मृतिविरोधपरिहारः )

**किमभिप्रेत्यैतदुक्त**मिति । किमभिप्रेत्य श्रुतिस्मृत्योर्बाध्यबाधकत्वमुक्तमित्यर्थः । ननु – " अधीत्य स्नायात् " इत्यादौ 'अध्ययनकर्मिकां भावनां परिसमाप्य' इत्यर्थः । न तु 'अध्ययनकरणिकामर्थज्ञानकर्मिकाम्' इति । " वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत ", " उच्चैः प्रवर्ग्येण चरन्ति ", " अप्स्ववभृथेन चरन्ति " इत्यादाविव तृतीयानिर्देशाभावेन तत्करणिकाया भावनाया असंप्रतिपत्तेः । ननु " अग्निचित् वर्षति न धावेत् " इत्यत्र चयनकरणकभावनाया एव भूताया निमित्तत्वम्, न धात्वर्थमात्रस्य भूतस्य निमित्तत्वम् । ततश्च क्त्वन्त एवाग्निचिद्व्रतानि प्रवर्तन्त इति पञ्चमे स्थितम् । तद्वदिह किं न स्यादिति चेत् - न - अत्र (तत्र?) " अग्नौ चेः " इत्यग्नौ कर्मणि चिनोतेः क्विब्विधानात् अग्निकर्मिकायाश्चयनकरणिकाया भूताया एव भावनाया निमित्तत्वम् । इह तु, " वेदमधीत्य स्नायात् " इति वेदकर्मिकाया एव भावनायाः पूर्वकालत्वं क्त्वाप्रत्ययेन प्रतीयते ; न त्वर्थज्ञानफलकर्मिकायाः । ततश्चाध्ययनविधेरर्थज्ञानफलकत्वपक्षे विरोधः स्यादेवेत्यरुचेराह - **किंच विरोधे सत्यपीति** । **गुरोः कर्मातिशेषेण** = गुरुशुश्रूषानवरुद्धकालेनेत्यर्थः । यद्वा अतिशेषेण निःशेषमित्यर्थः । **निवेशे हि वृत्ते नैयमिकानीति** । निवेशः = विवाहः । ननु " ज्योतिष्टोमेन स्वर्गकामो यजेत " इत्यविशेषेण स्वर्गकाममात्रप्रवृत्तत्वात् शूद्रस्यापि स्वर्गकामत्वाविशेषादनुष्ठानप्रसङ्गो दुर्वारः, " न शूद्राय मतिं दद्यात् " इत्यादिनिषेधस्मृतेः शुश्रूषारहितशूद्रविषयत्वस्य संभवादित्यरुचेराह - **किंच यजमानेने**ति । **अध्ययनलभ्यत्वादि**ति । अध्ययनसंस्कृतस्वाध्यायस्य प्रयोजनसाकाङ्क्षस्य स्वाध्यायसाध्यसकलकर्मसु विनियोगो भवतीति भावः । **यो ह वा अविदितार्षेये**ति । " यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाध्यापयति वा स्थाणुं वर्छति गर्तं वा पतति " इति प्रसिद्धश्रुतिपाठः । अस्यायमर्थः –

1. न्यायरक्षामणौ २५२. पु.

आर्षेयः ऋषिः; छन्दः गायत्र्यादि; दैवतम् अग्न्यादिकम्; ब्राह्मणं विनियोजकवाक्यम्। आर्षेयादिकमजानानो याजकोऽध्यापको वा स्थावरतां प्राप्नोति, गर्ते वा पतति, म्रियेत वा। अस्य छन्दांसि निर्वीर्याणि भवन्ति। जानानस्य तु तद्विपर्ययो भवति। तस्मादेतानि मन्त्रे मन्त्रे विद्यादिति। **प्रतिग्रहर्तुसंवेशनादेरिवेति।** न चैतत् **रागप्राप्तस्य विधातुमशक्यत्वाच्च** इत्युत्तरग्रन्थविरुद्धमिति वाच्यम्। रागप्राप्तस्य पाक्षिक्यामप्राप्तौ सत्यां विधेयत्वदर्शनात् रागप्राप्तत्वविधेयत्वयोर्नात्यन्तविरोध इत्येतत्तात्पर्योऽयं ग्रन्थः। उत्तरग्रन्थस्तु रागतो नित्यप्राप्तविषय इत्यविरोधोपपत्तेः। ननु - एतद्ग्रन्थपर्यालोचनायामर्थज्ञानस्याध्ययनविधिविधेयत्वरागप्राप्तत्वविचार इव प्रतीयते। न ह्येष युज्यते। अर्थज्ञानस्याध्ययनविधिविधेयत्वस्य मीमांसकैरप्यनभ्युपेतत्वात्। अर्थज्ञानस्याध्ययनविधिफलत्वमेव हि तैः स्वीकृतम्; न तु विधेयत्वम्। फलस्याविधेयत्वात्। चतुर्थे लिप्सा सूत्रे (४-१-२), "फलं चाकर्मसंनिधौ" इति द्वैतीयीकाधिकरणे (२-३-१२), "कर्मणस्त्वप्रवृत्तत्वात्" इत्याष्टमिकाधिकरणे (८-१-१३) ऽपि फलाविधेयत्वस्य प्रतिपादितत्वात्। एकादशाद्ये च फलाविधेयत्वस्य प्रतिपादितत्वाच्चेति चेत् — न — अत्रार्थज्ञानपदेन विचारस्यैव विवक्षितत्वात्। विचारवैधत्वस्य मीमांसकैरभ्युपेततया तस्य रागप्राप्तत्वेन प्रतिक्षेप्यत्वोपपत्तेः। **किंचानेनैव वाक्येनेति।** "यो ह वा अविदितार्षेय-" इत्यादिवाक्यविहितार्थज्ञानाक्षिप्ततया विचारस्य प्राप्तेर्नाध्ययनविध्याक्षेप्यत्वं विचारस्य युज्यते। यथा स्वस्वविधिविहितानां क्रतूनां ज्योतिष्टोमदर्शपूर्णमासादीनामाधानविधिसिद्धैराहवनीयादिभिः स्वसाफल्यसिद्ध्यर्थं नानुष्ठाप्यत्वं तथेत्यर्थः।

**ननु न हि कर्मणामल्पास्थिरफलत्वमनन्तस्थिरफलत्वं चेत्यत्र पूर्वपक्षसिद्धान्तरूपेण** इत्यस्य व्युत्क्रमेणान्वयो द्रष्टव्यः। 'स्वरूपे निरूपिते' इत्युक्ते 'स्वरूपमात्रे निरूपितेऽपि कर्मणामल्पास्थिरफलत्वमावृत्तिविधानादिभिर्ज्ञात्वा' इत्यस्यार्थस्याध्याहारसापेक्षतया विलम्बितप्रतीतिकतया अन्यथा व्याचष्टे - **यद्वा कर्मविधिस्वरूपं निरूपितमिति।** अस्मिन् पक्षेऽस्य भाष्यस्येत्थमवतारिका - ननु परमात्माराधनकर्मसु, "स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः" इत्यनन्तस्थिरफलतयावगतेषु कथमल्पास्थिरफलत्वावगतिरित्याशङ्क्याह - **कर्मविधिस्वरूपे निरूपित**

इति । अस्मिन्नपि पक्षे 'कर्मविधिस्वरूपे' इत्यस्य परमात्माराधनत्वविनिर्मुक्त-स्वरूपमात्रेऽवगते अल्पास्थिरफलत्वावगतिप्रतिबन्धकपरमात्माराधनरूपत्वप्रतीत्यभावेन अल्पास्थिरफलत्वमवगम्येत्यस्याप्यर्थस्य विलम्बितप्रतीतिकत्वमविशिष्टमित्यस्वरसो बोध्यः। केचिदेवं व्याचक्षते - तत्र **कर्मविधिस्वरूपे निरूपित** इति। विधिश्च स्वरूपं च विधिस्वरूपम्। कर्मविधौ कर्मस्वरूपे च निरूपित इत्यर्थः। प्रत्यब्दं चातुर्मास्याद्यावृत्तिविधौ निरूपिते चातुर्मास्यानां क्षय्यफलत्वनिश्चयो भवति। यदि चातुर्मास्यानामक्षय्यफलत्वम्, तदा पुनस्तदनुष्ठानवैयर्थ्यप्रसङ्गादित्यवगतेः स्वत एवोत्पत्तेः। तथा चातुर्मास्यादिस्वरूपं सहस्रसंवत्सरसाध्यविश्वसृजामयनादिस्वरूपं च निरूपयता चातुर्मास्यादिष्वल्पवित्तव्ययायाससाध्येषु, "फलस्य कर्मनिष्पत्तेः तेषां लोकवत् परिमाणतो विशेषः स्यात्" (पू. मी. १-२-१७) इति न्यायालोचनसनाथचेतसा नित्यनैमित्तिककर्माराधितपरमपुरुषानुग्रहलब्धचित्तनैर्मल्येन पुंसा चातुर्मास्यादिकर्मणामनित्यफलत्वस्य सुज्ञानत्वादिति भावः।

**येनेति निर्देशो विज्ञानाभिप्राय** इति। ततश्च, "प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्" इति प्रतिनिर्दिश्यमानाया एव ब्रह्मविद्याया यच्छब्देन परामृष्टव्यतया ययेति स्त्रीलिङ्गनिर्देशो न प्रसञ्जनीय इति भावः। **अतो निरूप्य संपाद्यैस्तैरिति**। ननु, "शमदमाद्युपेतः स्यात्" इत्यत्र न शमादिस्वरूपं निरूप्यते, अपि तु शमादेरुपासनाङ्गत्वम्। तच्च श्रुतिबलप्राप्तस्य श्रवणं प्रति अङ्गभावस्य नोपजीव्यमिति चेत् — न - तत्राविहितविषयव्यापारोपरमः शम इत्यस्यार्थस्य तदधिकरणे व्युत्पाद्यत्वादिति भावः। "ब्रह्मविदाप्नोति" इत्यस्यानन्तस्थिरफलब्रह्मप्राप्तिपर्यन्तप्रामाण्यसंभवे अनन्तस्थिरफलत्वमात्रप्रतिपादनपरत्वमयुक्तमित्यस्वरसादाह - **यद्वा विद्यया अनन्तस्थिरेति**। **विषयस्य दर्शितत्वादिति**। ब्रह्मस्वरूपस्येत्यर्थः। ततश्च "पश्यः" इति ब्रह्मदर्शनमेव पर्यवस्यतीति भावः। **समुच्चयो युक्त** इति। अत्र केचित् - 'ननु च' इति निपातसमुदायोऽयं नन्वर्थक एव, ततोऽतिरिक्तार्थाप्रतीतेः। ननुशब्दस्य प्रयोक्तृधर्मभूतशङ्काद्योतकत्वेन "ननु च' इत्यस्य 'शङ्का च' इति शब्दतुल्यार्थत्वाभावात्। अतोऽत्र चशब्दस्य समुच्चयार्थत्वप्रसाधने नातीवाभिनिवेष्टव्यमिति मन्यन्ते। ननु कर्मविचारनैरपेक्ष्यसिद्ध्यर्थं कर्मणां वाक्यजन्यं क्षयिफलत्व-

ज्ञानमेव वक्तव्यम् । न तु ब्रह्मोपासनस्याक्षयफलत्वज्ञानमित्यत्राह - **ब्रह्मोपासनस्येत्यादिग्रन्थ** इति ।

( लघुपूर्वपक्षघट्टः )

**विवक्षितेतरगामित्वव्युदासार्थः प्रथम एवकार** इति । विवक्षितं साधनचतुष्टयम्, तदितरः कर्मविचारः । अत्र केचित् - यच्छब्दान्वित एवकारः तावत्खल्वादिशब्दवत् वाक्यालङ्कारार्थ एव । न हि 'ब्रह्मजिज्ञासा यन्नियमेनापेक्षते तदेव पूर्ववृत्तं वक्तव्यम्' इत्यस्मादधिकस्यार्थस्य एवकारसहिताद्वाक्यात् प्रतिपत्तिरस्ति। अस्य वाक्यस्य नियमेनानपेक्षितकर्मविचारपूर्ववृत्तत्वव्युदासमात्रपरत्वेन कर्मविचारे नियमेनापेक्षितत्वव्युदासपरत्वाभावादिति वदन्ति । तदेतदेवकारार्थानभिज्ञानविजृम्भितम् । विशेष्यसंगतो ह्येवकारो विशेषणस्य तदितरयोगव्यवच्छेदार्थः । 'पार्थ एव धनुर्धरः' इत्युक्ते हि धनुर्धरत्वरूपविशेषणस्य पार्थेतरगामित्वं व्यवच्छिनत्त्येवकारः । 'पार्थ एव धनुर्धरः' इति वाक्यस्य 'पार्थादन्यो धनुर्धरो न' इत्यर्थः । अत एव, "षड्विंशतिरित्येव ब्रूयात्" इत्यत्र एवकारोपबन्धात् षड्विंशतिमन्त्रो न विधीयते । अपि तु तदितरमन्त्रो निषिध्यत इति पूर्वतन्त्रे निर्णीतम् । ततश्च 'यदेव नियमेनापेक्षते' इति वाक्यस्यायमर्थः — 'यद्व्यतिरिक्तं नियमेन नापेक्षितम्, तद्व्यतिरिक्तं न पूर्ववृत्तमिति । ततश्च प्रथम एवकारो नियमेनापेक्षितत्वस्य यच्छब्दार्थातिरिक्तगामित्वव्यवच्छेदार्थकः, द्वितीयस्तु यच्छब्दनिर्दिष्टात् तच्छब्दार्थादतिरिक्तस्य पूर्ववृत्तत्वव्युदासकः । इयांस्तु विशेषः - प्रथम एवकारोऽनुवादी । द्वितीयस्तु पुरोवादीति । वेदान्तमात्राध्ययनस्याशास्त्रीयत्वादाह - **यद्वा अधीतकृत्स्नवेदस्यापीति । न त्वन्ययोगव्यवच्छेदपरमिति** । पूर्वभागाध्ययनव्यवच्छेदपरं नेत्यर्थः । ननु, "साम्ना स्तुवीत" इति साम्न एव स्तोत्रद्वारा कर्माङ्गत्वम, नोद्गीथादेरिति शङ्कामुद्गीथादिस्वरूपप्रकाशनेन निराकुर्वन्नादिपदग्राह्यं चाह - **एकस्य साम्न इत्यादिना** । ननु कथं साम्नः पञ्चभागात्मकत्वम् ? हिंकारः, प्रस्तावः, आदिः, उद्गीथः प्रतिहारः, उपद्रवः, निधनम्, इति सप्तविधत्वं दृश्यते । अत एव हि, "सप्तविधं सामोपासीत" इति विधिरित्याशङ्क्य हिंकारस्य प्रस्तावेऽन्तर्भावात्, आदिशब्दितस्य ओंकारस्य चोद्गीथेऽन्तर्भावात् पाञ्चविध्ये नानुपपत्तिरित्यभिप्रयन्नाह - **प्रस्तावो हिंकारपूर्वं**

**गीयत** इति । **एकैकोपासनं विधीयत** इति । "सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते। सैषा देवता प्रस्तावमन्वायत्ता", "सैषा देवतोद्गीथमन्वायत्ता" इत्यादिष्विति शेषः । **क्वचिच्चावयवावयवभूतप्रणवाद्युपासनं विधीयते, ओमित्येतदक्षरमुद्गीथमुपासीतेति** इति पाठः समीचीनः । भाष्ये 'तत्रोद्गीथावयवभूतप्रणवोपासनं विधीयते' इति क्वचित् पठ्यते । न तस्य सामीचीन्यं पश्यामः । "ओमित्येतदक्षरमुद्गीथमुपासीत" इति वाक्यस्योद्गीथावयवप्रणवोपासनविधिपरत्वं च, "व्याप्तेश्च समञ्जसम्" इत्यत्र स्पष्टीभविष्यति । केचित्तु **कर्माङ्गाश्रये**ति भाष्यस्यायमर्थः – कर्माङ्गाश्रयो (यमु ?) द्गीथस्यादिरुद्गीथादिः प्रणवः, तस्योपासनमिति । अत एवैतदभिप्रायेण 'तत्रोद्गीथावयवभूतप्रणवोपासनं विधीयते' इत्युक्तमिति वदन्ति । "स्वार्थत्वे शब्दप्रयोगे" इति न्यायेन 'कर्माङ्गोद्गीथादिविषयाण्युपासनानि' इति वक्तव्ये 'कर्माङ्गाश्रयाण्युद्गीथाद्युपासनानि' इति भाष्ये वचनव्यक्तिः किमर्थमाश्रितेत्याशङ्क्याह - **कर्माङ्गोद्गीथाद्याश्रयाण्युपासनानीत्युक्त** इति । **उपासनमात्रस्य च पक्षीकारः प्रतीयेते**ति । ननु कर्माङ्गाश्रयत्वस्य हेतूकरणादेव यावति हेतुर्विश्राम्यति तावत एव ग्रहणं भविष्यति, 'यथा पर्वतो धूमवत्त्वाद्वह्निमान्' इत्यत्र धूमवतः पर्वतस्य ग्रहणं तथेति चेत् - सत्यम् - तादृशन्यायप्रतिसंधानाभावदशायामुपासनमात्रपक्षीकारप्रतीतिर्जायेत । अत एव 'प्रतीयेत' इति प्रतीतिमात्रमापादितम् । भाष्ये - **अनभिज्ञो भवान् शारीरकशास्त्रविज्ञानस्ये**ति । शास्त्रप्रतिपाद्यं विज्ञानं शास्त्रविज्ञानम् । मध्यमपदलोपी समासः । तदेतदाचष्टे - **शास्त्रे प्रधानतया प्रतिपाद्यमित्यादिना** । **प्रतिपाद्यशब्द** उत्पाद्यपरः । "आत्मैकत्वविद्याप्रतिपत्तये" इति परव्यवहारानुसारादुत्पत्तिः प्रतिपत्तिशब्देन व्यवहृता । वक्ष्यति च - "प्रतिपादकानि निष्पादनक्षमाणि" इति । अतो लाक्षणिकप्रयोगो न दोषायेति द्रष्टव्यम् । **मिथ्याज्ञानं भ्रान्तिज्ञानमि**ति । मिथ्याविषयं ज्ञानं मिथ्याज्ञानमिति मध्यमपदलोपी समास इति भावः । मूलाज्ञाननिवृत्तेरेव प्रयोजनत्वमभिप्रयन्नाह - **यद्वा मिथ्याभूतमज्ञानमि**ति । **तुशब्दद्वयं शङ्काद्वयव्यावृत्त्यर्थ- (वर्तक) मि**ति । उपनिषत्स्वधीतत्वात् ब्रह्ममीमांसायां निरूप्यमाणत्वाच्चोद्गीथाद्युपासनं ब्रह्मविद्यापेक्षितमित्येका शङ्का । "ततः किम्" इत्यनेनाभिप्रेतासंगतत्वशङ्का द्वितीया । एतच्छङ्काद्वयस्य यथाक्रमं व्यावृत्त्यर्थमित्यर्थः । **अत्र भास्करीयाः**

**प्रत्यवतिष्ठन्त** इति । अत्र च हेतुरुत्तरत्र स्पष्टः । **न समसमुच्चयपर** इति । तन्मते, "तमेतं वेदानुवचनेन" इत्यत्र "सहयुक्तेऽप्रधाने" इति तृतीयया वेदानुवचनादीनां "विविदिषन्ति" इति निर्दिष्टवेदनापेक्षया अप्राधान्याभ्युपगमेन कर्मणां विद्यायाः फलोपकार्यङ्गत्वमात्रस्याभ्युपगतत्वेन तैरपि समसमुच्चयस्यानभ्युपगमादिति भावः । **समुच्चित्योपदेशादित्यत्र समुच्चित्यशब्दवदिति** । इदं हि वाक्यम्, "अन्तर उपपत्तेः" इत्यधिकरणभाष्यस्थमग्निविद्यात्मविद्याविषयम् । तयोः समुच्चयानभ्युपगमादिति भावः । **विशेषणविशेष्यभावेन निर्दिष्टमिति** । न च समुच्चितशब्दो वैषम्यं न सहत इति वाच्यम्, अङ्गाङ्गिसमुच्चयेऽपि समुच्चयशब्दप्रयोगदर्शनात् । न ह्यत्र समसमुच्चयः श्रूयत इति भावः । **चः प्रतिपादकसमुच्चय** इति । श्रुतिसूत्रयोः प्रतिपादकयोः समुच्चय इत्यर्थः । **तज्ज्ञानस्य कथं पूर्वभावित्वमिति** । ब्रह्मविचारपूर्वभावित्वमित्यर्थः । **निरूपयिष्यमाणत्वमभिप्रेत्योक्तमिति** । "अन्तरा चापि तु तद्दृष्टेः", "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" इत्यादावधिकारिविशेषे ब्रह्मविद्यायाः कर्मविशेषैः समुच्चयतदभावयोः प्रतिपादयिष्यमाणत्वादिति भावः । अधिकारिविशेषनिष्ठब्रह्मविद्याया अनिर्दिष्टत्वात्समुच्चयतदभावयोः सामान्येन विद्याविषयत्वमेवोचितमिति मत्वाह - **यद्वा नित्यनैमित्तिकयोरिति** । विद्यायाश्चेति शेषः । नित्यनैमित्तिकाभ्यां समुच्चयः, न काम्यनिषिद्धाभ्यामित्यर्थः । **पदार्थज्ञानपूर्वकत्वादिति** । यद्यपि यज्ञादिपदार्थावगमाय न मीमांसापेक्षा, व्याकरणकोशाप्तवाक्यादिभिर्व्युत्पत्तिसंभवात् । मीमांसाया अपि लोकप्रसिद्धपदार्थव्यवहारितया पदार्थावगतिप्रयोजनकत्वाभावाच्च --- तथापि ग्राह्याग्राह्यकर्मविभागो मीमांसाधीन इति भावः । यद्वा पूर्वमीमांसायामपि, "यजतिचोदना द्रव्यदेवताक्रियं समुदाये" (४-२-२७) इत्यादिदर्शनात्, व्यापन्नादिपदार्थनिर्णयदर्शनाच्च पदार्थनिर्णायकत्वमपि संभवतीत्यपि द्रष्टव्यम् । आशयमजानानश्चोदयति - **ननु गामानयेति वाक्यादिति** । **वाक्यार्थं पूर्वं प्रतिपद्येति** । प्रयोजकवृद्धवाक्यश्रवणानन्तरं प्रयोज्यवृद्धस्य गवानयने प्रवृत्तिमुपलभ्य 'इयं च गवानयने प्रवृत्तिर्गवानयनकार्यताज्ञानसाध्या गवानयनप्रवृत्तित्वात् संप्रतिपन्नगवानयनप्रवृत्तिवत्' इति तस्याः प्रवृत्तेर्गवानयनकार्यताज्ञानसाध्यतां निश्चित्य, 'तच्च ज्ञानं वाक्यात्पूर्वमजातत्वात् वाक्यानन्तरं जातत्वाच्च वाक्यजन्यम् । तस्मात् गवानयनं वाक्यार्थः' इति प्रतिपद्येत्यर्थः । ततश्च

'अस्य वाक्यस्यायमर्थः' इति वाक्यार्थत्वज्ञानपूर्वकमेव 'अस्य पदस्यायमर्थः' इति ज्ञानम्, न तु 'अस्य पदस्यायमर्थः' इति पदार्थत्वज्ञानपूर्वकम् 'अस्य वाक्यस्यायमर्थः' इति वाक्यार्थत्वज्ञानमुत्पद्यत इत्यर्थः। शाब्दज्ञानत्वावच्छिन्ने वृत्त्या पदजन्यपदार्थोपस्थितेर्हेतुत्वमित्येतदेव हि वाक्यार्थज्ञानस्य पदार्थज्ञानपूर्वकत्वम्। न तु वाक्यार्थत्वज्ञानस्य पदार्थत्वज्ञानपूर्वकत्वम्, येनास्याक्षेपस्यावकाशः स्यादिति स्वाशयमाविष्करोति - उच्यते — **व्युत्पन्नात् शब्दादिति। व्युत्पत्तावपि न वाक्यार्थधिय** इति। यद्यपि शाब्दज्ञानत्वावच्छिन्ने पदजन्यपदार्थोपस्थितेर्हेतुत्वकथनेनैव प्रकृतोपयोगसिद्धेर्व्युत्पत्तिदशायां वाक्यार्थत्वज्ञानस्य पूर्वभावप्रत्याख्यानं न प्रकृत उपयुज्यते- तथापि पराभिमानखण्डनार्थतयोपन्यस्तमिति द्रष्टव्यम्। **याज्यापुरोनुवाक्यामन्त्रानुसारेणे**ति। सरस्वतीदेवत्ययाज्यापुरोनुवाक्ययोः प्राक् पठितत्वादिति भावः। **तेनैव क्रमेणानुष्ठानं निर्णीत**मिति। श्रुत्यर्थपाठादिक्रमनियामकाभावादनियम इति प्राप्ते प्रधानप्रत्यासत्तिसिद्ध्यै मुख्यक्रमात् स्त्रीदेवत्यस्य यागस्य निर्वापादयश्चोदकप्राप्ता धर्माः प्रागनुष्ठेया इति निर्णीतं पञ्चमे "मुख्यक्रमेण वाऽङ्गानां तदर्थत्वात्" (५ १-१४) इत्यत्र। **क्रमनियामक (निश्चायक) हेतुवैषम्यमे**वेति। दृष्टान्ते याज्यापुरोनुवाक्याक्रमः शेषिक्रमनियामकः; दार्ष्टान्तिके तु कार्यकारणभाव इति हेतुवैषम्यमिति भावः। **उपासनस्यैव विचारं प्रति शेषित्वादिति।** उपासनस्य स्वविचारं प्रत्येव शेषित्वात् शेषिक्रमादापतन् शेषयोः क्रमः शारीरकतृतीयाध्यायकर्मविचारविषय एव स्यात्; न तु कृत्स्नशारीरककर्ममीमांसाविषय इत्यर्थः। **तदपेक्षितत्वेने**ति। उपासनापेक्षितत्वेनेत्यर्थः। **कृत्स्नाया अपि ब्रह्ममीमांसायाः** इत्यस्यानन्तरम् 'उपासनशेषत्वेन' इत्यध्याहर्तव्यम्। **यादवपक्षं चोपजीव्ये**ति। समसमुच्चयाङ्गाङ्गिभावयोस्तदभिमतयोरपि प्रतीतेरिति भावः। **पार्श्वस्थश्चोदय**तीति। यादवानभिमतकर्मविचारपूर्ववृत्तत्वोपन्यासात्, सिद्धान्तिग्रन्थत्वे साधनसाध्यद्वित्वनिरासकपरिहारग्रन्थासामञ्जस्यप्रसङ्गाच्चेति भावः। **चशब्दः प्रतिपाद्यसमुच्चय** इति। द्वितीयान्तेनाध्याहृताङ्गभावशब्देन चशब्दस्यान्वय इति भावः। ननु यदा, **बाढम्** इत्यादिग्रन्थो भास्करसिद्धान्त्यन्यतरचोद्यपरः, तदा साध्यसाधनद्वित्वनिरासकभाष्यग्रन्थस्याप्रसक्तप्रतिषेधकत्वं स्यादित्याशङ्क्य प्रतिक्षिपति – **यदा बाढमित्यादी**ति। **व्यावृत्त्यन्वयरूपा विशेषा** इति। भावाभावरूपा इत्यर्थः। **सकलविशेषप्रत्य-**

**नीक**मित्यत्र विशेषशब्देन स्वगतधर्मस्यापि ग्रहणे तत एव ज्ञातृत्वज्ञेयत्वव्यावृत्तेरपि सिद्धत्वात् मात्रचा ज्ञातृत्वज्ञेयत्वव्यावृत्तिकथनमस्वरसमित्यस्वरसादाह — **यद्वा सकलविशेषप्रत्यनीकशब्देने**ति । **अज्ञाननिवृत्त्यन्तर्गतेत्यर्थ** इति । मूले **सकलभेददर्शननिवृत्ती**ति कार्यकारणयोरभेदोपचारादविद्यानिवृत्तेर्भेददर्शननिवृत्तिरूपत्वोक्तिरिति भावः ।

**एकस्मादनेकवाक्याना**मिति । "विद्यां चाविद्यां च" इति वाक्यमेकमिति भावः । **अस्फुटार्थात् स्फुटार्थाना**मिति । 'प्राबल्यं विवक्षितम्' इत्यनुषङ्गः । ननु कर्मणोऽन्तवत्त्वे श्रूयमाणे कथं तत्फलस्यान्तवत्त्वमुच्यते इत्याशङ्क्याह — **अनेन वाक्येने**त्यादिना । **फलद्वारकत्वमुक्त**मिति । कर्मणः स्वत एवान्तवत्त्वेन तस्यानुपदेष्टव्यत्वात्, "तद्यथा" इत्यादिश्रुतिवशाच्च फलस्यैवान्तवत्त्वम् "अन्तवदेवास्य तद्भवति" इत्यादिवाक्यप्रतिपाद्यमित्यर्थः । **समुच्चयपरवाक्यस्य श्रुत्यन्तरानुगुण्येने**ति । यद्यपि 'यदपि चोक्तम्' इत्यत्र 'साध्यसाधनद्वित्ववत् कर्मापेक्षितत्वमपि यदुक्तम्' इत्युक्तिक्रियायामेव समुच्चयः प्रतीयते, न निर्वाहक्रियायाम्—तथाप्येतत् फलितार्थकथनमिति द्रष्टव्यम् । 'यदपि चेदमुक्तं यज्ञादिकर्मापेक्षा विद्येति' इत्यत्र 'यज्ञादिकर्मापेक्षा विद्येति यदुक्तम्' इत्युक्ते 'यद् विद्यायां कर्मसापेक्षत्वमुक्तम्' इति सापेक्षत्वस्यैव यच्छब्दनिर्दिष्टतया स्वरसतः प्रतीयमानत्वात् तस्योत्तरवाक्ये विविदिषोपयोगप्रतिपादनमनुचितमित्याशङ्क्य, 'यज्ञादिकर्मापेक्षा विद्या' इत्यनया वचनव्यक्त्या अर्थाद्विद्यापेक्षितत्वेन यत्किंचित्कर्मोक्तमिति कर्मण एव यच्छब्दनिर्दिष्टत्वात् तस्य विविदिषोपयोगप्रतिपादनमविरुद्धमित्यभिप्रायेणाह - **अनया वचनव्यक्त्ये**ति । **निर्देशस्वारस्यमस्ती**ति । फलपदस्वारस्यमात्रं नास्तीत्यर्थः । यादवमतप्रतिक्षेपकतया प्रथमव्याख्यानम् । अस्मिन् पक्षे फलपदस्वारस्यमस्ति; 'यज्ञादिकर्मापेक्षा विद्या' इति निर्देशस्याङ्गाङ्गिभावसूत्रस्मारकस्य न स्वारस्यम् । सिद्धान्तिमतप्रतिक्षेपके द्वितीयव्याख्याने 'यज्ञादिकर्मापेक्षा विद्या' इति निर्देशस्वारस्यमस्ति; फलपदस्वारस्यं नास्ति । अत उभयपदस्वारस्यसिद्ध्यर्थं भास्करपक्षप्रतिक्षेपपरतया व्याचष्टे — **अथवा यज्ञादी**ति । **प्रयाजादिवदि**ति । ननु भास्करेण यज्ञादिवाक्यस्य वेदनं प्रति फलोपकार्यङ्गत्वमात्रप्रतिपादकत्वाभ्यु-

पगमेऽपि फलार्थत्वानभ्युपगमान्मोक्षार्थप्रतिपादनपरत्वनिषेधेऽप्रसक्तप्रतिषेधः स्यादिति चेत् — न - प्रयाजादीनां करणानुग्राहकाणां करणानुग्रहद्वारा फलपर्यन्तत्वसंभवादित्यभिप्रायान्नात्यन्ताप्रसक्तप्रतिषेध इति ध्येयम् । **असिना जिघांसतीति** । असेर्हनने करणत्वं प्रतीयते ; न जिघांसायाम् ; एवं " विविदिषन्ति " इति वाक्येन वेदानुवचनशब्दितस्य ब्रह्मयज्ञस्य, यज्ञस्य, दानस्य, कामानशनरूपस्य तपसश्च वेदनहेतुत्वं प्रतीयत इति भावः । **वाक्यद्वयेनेति** । ' विविदिषायां जातायाम् — ' इत्येकं वाक्यम् । ' तदेवं जन्मान्तरशत - ' इत्यपरम् । **अन्तरङ्गत्वं स्पष्टमिति** । विद्यासंयोगश्रवणादिति भावः । उक्तं च शांकरभाष्ये सर्वापेक्षाधिकरणे - " विद्यासंयोगात् प्रत्यासन्नानि विद्यासाधनानि शमादीनि । विविदिषासंयोगात् बाह्यतराणि यज्ञादीनि " इति । **विविदिषायाः पूर्वं हि कर्मोपयोग** इति ।

" प्रत्यक्प्रवणतां बुद्धेः कर्माण्यापाद्य शुद्धितः ।
कृतार्थान्यस्तमायान्ति प्रावृडन्ते घना इव ॥ "

इति तदुक्तेः । प्राग् बीजावापात् कर्षणम्, तदनन्तरमकर्षणमिति कर्षणाकर्षणाभ्यामङ्कुरादिनिष्पादनवत् ,

" आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ।
योगारूढस्य तस्यैव शमः कारणमुच्यते ॥ " (गी. ६-३)

इत्यादिवचनानुसारेण चेतसः शुद्ध्या विविदिषारूपप्रत्यक्प्रावण्यपर्यन्तं कर्मानुष्ठानम् ; ततः संन्यास इति कर्मतत्सन्यासाभ्यां विद्यानिष्पत्त्युपगमादिति भावः । **इदानीमप्यनुष्ठानायेति** । अत्र केचित् - अनुत्पन्नविविदिषस्य पुंसो यावद्विविदिषोत्पत्ति अस्मिन्नपि जन्मनि कर्मानुष्ठानस्येष्टत्वान्नैतच्छङ्काव्यावर्तको **जन्मान्तर**शब्दः । अपितु अन्तःकरणशुद्धिरनेकजन्मानुष्ठितनित्यनैमित्तिककर्मसाध्येति दर्शयितुमेवेति वदन्ति । **अनेकजन्मसंसिद्ध** इति । जन्मान्तरशब्दस्वारस्यादव्यवहितजन्मन एव ग्रहणं स्यात् । तत्र चानेकजन्मत्वासंभवादस्यापि जन्मनो ग्रहणं भविष्यतीत्यभिप्रायः । **शोधकवाक्यमिति** । कारणत्वशङ्कितदोषव्युदासकं वाक्यमित्यर्थः । **न कर्मेत्यर्थ** इति । यज्ञादिकं कर्म न करणमित्यर्थः । **निष्पादनक्षमाणीति** । आमैकत्व-

पराणीत्यर्थः । भाष्ये — **न्याययुक्तार्थग्रहणमिति** । तात्पर्यनिर्णायकोपक्रमादि-न्यायानुसंधानपूर्वकं सर्वाण्यपि वेदान्तवाक्यान्यात्मैकत्वतात्पर्यकाणीत्येवं तात्पर्य-रूपार्थग्रहणमित्यर्थः । न तु वाक्यार्थग्रहणम्, तस्य तन्मते श्रवणफलत्वात् । **पूर्वप्रकृतादेवेत्येवकाराभिप्राय** इति । यद्यपि ज्ञानकर्मार्थस्वभावः प्रावप्रस्तुतः, न तु शमाद्यर्थस्वभावः, व्यक्तिभेदात् — तथाप्यर्थस्वभावत्वेनैक्यमाश्रित्य एवकारः प्रयुक्त इति द्रष्टव्यम् । जिज्ञासानुपपत्त्युपपादकतया 'अर्थस्वभावादेव' इत्युत्तरग्रन्थं व्याख्याय, अधुना 'कर्म च पूर्ववृत्तमस्तु' इति शङ्कापरिहारपरतया व्याचष्टे - **यद्वा अनेन विना जिज्ञासानुपपत्तेरिति** । 'अनेन विना जिज्ञासानुप-पत्तेः' इत्यंशस्य फलितमर्थमाह - **शमाद्यर्थस्वभावादित्यर्थ** इति । **प्रथमस्यैव-कारस्य भाव** इति । [1]अर्थस्वभावातिरिक्तस्य हेतुत्वप्रतिक्षेपक इत्यर्थः । **शमाद्यर्थस्वभाव उक्त** इति । इदमुपलक्षणम् । तयोरपि स्वभाव इत्यर्थः । तत्र ज्ञानकर्मार्थस्वभावद्वयस्यात्यन्ताप्रकृतत्वमभिप्रेत्याभिप्रेतत्वोक्तिः ; न त्वर्थ-स्वभावशब्दानुक्तत्वात् । अत एवार्थस्वभावशब्दितस्येतरनिरपेक्षस्य साधनचतुष्टयस्य पूर्ववृत्तत्वायोगान्ययोगव्यवच्छेदहेतुत्वं वक्ष्यमाणमुपपद्यत इति द्रष्टव्यम् । **इदंशब्दो हि साधनचतुष्टयपूर्ववृत्तत्वपर** इति । 'इदमेव पूर्ववृत्तम्' इतीदंशब्दो हीत्यर्थः । **तस्मादिति** । शमाद्यर्थस्वभावादित्यर्थः । भाष्ये **ब्रह्मस्वरूपाच्छादिका-विद्यामूलमिति** । आच्छादिका च सा अविद्या चेति न कर्मधारयः, येन पुंवद्भा-वात् 'आच्छादकाविद्या' इति स्यात्, किंतु "धात्वर्थे ण्वुल्" इति भावे ण्वुलि कारिकाशायिकादिवदाच्छादिका। ततस्तादर्थ्यचतुर्थीसमासः। आच्छादनकारिण्यविद्ये-त्यर्थ इति एवं । निर्वाहान्तरमपि द्रष्टव्यम् । **यद्वा अपारमार्थिकं भेददर्शन-मेवेति** । बन्धमूलभेददर्शनमपारमार्थिकमेवेत्यभिप्रायः । "एषोऽणुरात्मा चेतसा वेदितव्यः', 'दृश्यते त्वग्र्यया बुद्ध्या' इत्यादिप्रमाणानुसाराद्वाक्यार्थभावनापरिपाक-सहितमन्तःकरणं त्वंपदार्थस्यापरोक्षतत्पदार्थतामाविर्भावयति" इति वाचस्पतिवचनानु-सारिण मनस एव ब्रह्मसाक्षात्कारकारणत्वमिति मन्यमानमप्यनुगृह्णन्नाह — **निवर्तक-बोधः प्रमाणजन्य इति यावदिति** । **दूरस्थान्तिकस्थविशेषणविशिष्टेति** । 'सोऽयं देवदत्तः' इत्यादिवन्न वैयर्थ्यमित्यर्थः । **अभिप्रेत्यशब्देन शङ्कापरिहार**

1. अन्यस्य स्वभाव. पा०

इति । अनुक्तशङ्कापरिहार इत्यर्थः । "धर्मेण पापमपनुदति", "कषायपक्तिः कर्माणि" इत्यादिप्रमाणान्यभिप्रयन्नाह - **परंपरयोपयोग**मिति ।

## (लघुसिद्धान्तघट्टः)

**पूर्वपक्षोक्तेष्वर्थेष्वविरुद्धांशाभ्युपगमेन प्रतिवदतीति ।**

"मिथ्यासंप्रतिपत्त्या वा प्रत्यवस्कन्दनेन वा ।
प्राङ्न्यायविधिसिद्ध्या वा (?) उत्तरं स्याच्चतुर्विधम् ॥"

इति संप्रतिपत्तिशब्दितस्याभ्युपगमस्याप्युत्तरत्वं संभवतीति भावः । पराभिमतसदसदनिर्वचनीयाविद्यानिवृत्तेरभ्युपगमानर्हत्वादाह - **प्रतिबन्ध [क] निवृत्ति**रिति । **कर्मसाध्य उक्त** इति । साध्यद्वित्ववादिनेति शेषः । **मार्गसमीकरणतत्प्रापणे** इति । मार्गे प्रतिबन्धकाभावसंपादनलक्षणसमीकरणमात्रेणाश्मनो विशिष्टदेशप्राप्त्यभावात् तत्प्रापणार्थं तत्र पृथग्यत्नोऽपेक्षित इति भावः । ननु, प्रतिबन्धकनिवृत्तिरेव ज्ञानसाध्या; ब्रह्मप्राप्तिस्तु स्वत एवेत्ययुक्तम् — "ब्रह्मविदाप्नोति परम्" इति ब्रह्मस्वरूपप्राप्तेरपि ज्ञानसाध्यत्वावगमादित्याशङ्क्य प्रतिबन्धकनिवृत्तिब्रह्मप्राप्त्योरैक्याश्रयणेन परिहरति - **यद्वा भावान्तरस्ये**ति । **परमतं स्वमतं चानुवदती**ति । ननु वाक्यजन्यं ज्ञानमविद्यानिवृत्तये वेदान्तैर्विधित्सितमिति न परमतम् । ज्ञानस्याज्ञाननिवर्तकत्वस्य लोकसिद्धत्वेन विध्यनपेक्षणात् । ज्ञानस्य प्रमाणपरतन्त्रतया पुरुषतन्त्रत्वाभावात् "द्रष्टव्यः" इत्यनुवाद इत्यभ्युपगमाच्च । अत एव, 'तस्य विधानमन्तरेणापि वाक्यादेव सिद्धेः' इति भाष्यग्रन्थो न युक्तः । विधानस्यानभ्युपगमेन सिद्धवत्कृत्य व्यवहारस्यायुक्तत्वादिति चेत् - सत्यमेतत् । तथापि "द्रष्टव्यः", "आत्मानं पश्येत्" इति विधिप्रत्ययश्रवणात् तन्मतेऽपि विधेयत्वं बलादभ्युपगमनीयमित्यभिप्रेत्यैतदुक्तमिति द्रष्टव्यम् । ननु वाक्यार्थज्ञानस्य प्रमाणपरतन्त्रत्वेन विधेयत्वसंभवेऽपि तदनुकूलश्रवणरूपव्यापारस्य विधेयत्वं भविष्यतीत्याशङ्क्याह - **तच्छ्रवणे पुरुषस्ये**ति । **अध्ययनविधिरे**वेति । वाचस्पतिमते अध्ययनविधेरर्थज्ञानपर्यन्तत्वाभ्युपगमादधीतेन स्वाध्यायेनार्थज्ञानसंपादनस्य विचारमन्तरेणासंभवात् प्राप्नोत्येव विचारः । उक्तं च मीमांसकैः,

"धर्मे प्रमीयमाणे तु वेदेन करणात्मना ।
इतिकर्तव्यताभागं मीमांसा पूरयिष्यति ॥"

इति । ततश्च पूर्वभागविचारवत् उत्तरभागविचारोऽप्यध्ययनविधिवशादेव सिध्यति । यद्यप्यध्ययनविधिरक्षरराशिग्रहणमात्रफलः, तथापि पूर्वभागतुल्यशीलत्वादुत्तरभागविचारोऽपि सिध्यत्येवेति विधिवैयर्थ्यमिति भावः । **न च प्रमाणज्ञानस्य श्रेयःसाधनत्वमलौकिकमिति ।** विदेवनादेः रागप्राप्तस्यापि, "अक्षैर्दीव्यति" इति क्रत्वपूर्वार्थतया विधानवदिति भावः । **यावन्न विमोक्ष्येऽथ संपत्स्य** इति । "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये" इति हि श्रुतिः । **तस्य**= ब्रह्मविदः । तावदेव चिरम् = तावानेव विलम्बः । यावन्न विमोक्ष्ये = यावत् शरीरारम्भकप्रारब्धकर्मणा न विमोक्ष्यत इत्यर्थः । अथ संपत्स्ये = अथ संपत्स्यत इत्यर्थः । पुरुषव्यत्ययश्छान्दसः । यद्वा **तस्य** । 'मे' इत्यध्याहारः अतो न पुरुषव्यत्ययः । **नैरर्थक्यं प्रसजेदि (ज्येते)** ति । वाक्यजन्यज्ञानस्यैव निरपेक्षतया अविद्यानिवर्तकत्वादित्यर्थः । विधिवाक्यविशेषकीर्तनं विना, 'विधानमन्तरेणापि सिद्धेः' इति सामान्योपदेशस्य प्रयोजनमाह - **अनेकश्रुतिविरोधस्य प्रदर्शनार्थमिति । विप्रतिषेधोऽधिकबलेन प्रतिषेध** इति । विशब्दो हि विशिष्टवाची । विशिष्टः प्रतिषेधो विप्रतिषेधः । तस्य च विशिष्टत्वमधिकबलनिरूपितत्वम् । यद्यपि, "विप्रतिषेधे परं कार्यम्" इत्यत्र विप्रतिषेधशब्दस्य परस्परविरोध एव लोकप्रसिद्धोऽर्थ इति भाष्यकैयटयोः स्पष्टीकृतम् — तथापि प्रकृते विप्रतिषेधशब्दस्य परस्परविरोधरूपप्रसिद्धार्थाश्रयणे **शास्त्रैरि**ति तृतीयानुपपत्तिरिति भावः ।

ननु सर्वस्य पुंसोऽज्ञाननिवृत्तेः कः प्रसङ्ग इत्यत आह — **अविद्याया एकत्वादिति । अनिवर्तकत्वं दोषाय न भवतीति ।** 'ज्ञानस्य' इति शेषः । ननु — एकैवाविद्या, एकमुक्तौ सर्वमुक्तिः, अथापि कस्यचित् ज्ञानमप्युत्पन्नम्, अथापीदानीं वर्तमानः सर्वस्य पुंसः प्रपञ्चप्रतिभासो दग्धपटन्यायेनानुवर्तत इति केनापि नाभ्युपगतमिति चेत् — सत्यम् । **सर्वस्य पुंसः** इत्यत्र सर्वशब्दः कायव्यूहस्थलीयैकाविद्योपाधिकैकजीवसंबन्धिनानान्तःकरणोपाधिकप्रदेशभेदाभिप्राय इत्यदोषात् । केचित्तु **सर्वस्य** इति पदं न

सर्वपुरुषपरम्, अपितु उत्पन्नज्ञानपुरुषमात्रपरमिति व्याचक्षते । **छिन्नाविद्याख्य-मूलत्वेनेति** । न च कथं मूलनिवृत्तौ मूल्यनुवृत्तिरिति वाच्यम् - अविद्यासंस्कारादपि तदनुवृत्त्युपपत्तेः । न च क्रियाज्ञानयोरेव स इति वाच्यम् - निःसारितपुष्पायां संपुटिकायां पुष्पवासनानुवृत्तिदर्शनात् संस्कारनाशव्यतिरिक्तनाशमात्रस्य संस्कारव्याप्त-तया अविद्यानाशस्यापि संस्कारव्याप्ततया अविद्यानाशस्थलेऽपि संस्कारावश्यम्भावेन तद्वशेन भेदप्रतिभासोपपत्तेरित्यर्थः । परैर्हि जीवन्मुक्तौ त्रयः प्रकारा वर्णिताः - अविद्या सर्वात्मना नष्टा, संस्काररूपा तद्वासना अनुवर्तते, तन्मूलोऽयं देहादिप्रतिभासः कुलालचक्रवदित्येकः । आवरणविक्षेपशक्तिमत्या मूलाविद्यायाः प्रारब्धकर्मणा वर्तमानदेहाद्यनुवृत्तिप्रयोजको विक्षेपशक्त्यंशोऽविद्यालेशरूपोऽनुवर्तते, तन्मूलोऽयं प्रतिभास इत्यपरः । दग्धपटन्यायेन मूलाविद्यैवानुवर्तते, तन्मूलोऽयं प्रतिभास इत्यपरः । एतत् सर्वं 'छिन्नमूलत्वेन' इति भाष्ये 'छिन्नाविद्याख्यमूलत्वेन' इति टीकायां च विवक्षितम् ।

आप्तोपदेशादीनां क्रमेणोदाहरणान्याह — **क्वचिद्देशे सर्प इति वाक्या-दित्यादिना** । **भ्रमित** इति ण्यन्तात् कर्मणि क्तः । न च कथं वाक्यस्य चिर-तरानुवृत्तभ्रमहेतुत्वमिति वाच्यम् — वाक्यार्थस्मृतिपरंपरासंभवेन चिरानुवृत्तभ्रम-हेतुत्वसंभवादिति भावः । अत्र साक्षात्कारिभ्रमस्य साक्षात्कारिविशेषदर्शन-निवर्त्यत्वेनाप्तोपदेशनिवर्त्यत्वाभावात्, 'सर्प इति वाक्याच्चिरभ्रमितः' इत्युक्तम् । **निवर्तकान्तरमपि ज्ञानत्वाविशेषादिति** । न चेष्टापत्तिः, त्वया वासनाया अव्या-वृत्तात्मसाक्षात्कारनिवर्त्यत्वाभ्युपगमादिति भावः । **स्वेनैव स्वविनाशकरणं विवक्षितं चेदिति** । पूर्वपक्षे एवकारेण बाधकज्ञानमात्रस्यैव व्यवच्छेद्यत्वम् । इह तु स्वव्यति-रिक्तं सर्वं व्यवच्छेद्यमिति विवेकः । **व्याघात** इति । प्रतियोगिव्यतिरिक्तनिर-पेक्षत्वे वासनायाः स्थिरत्वव्याघातः, स्वस्य स्वनाशे निरपेक्षकारणत्वे अपेक्षणीयान्तरा-भावात् क्षणिकत्वमेव स्यादिति । केचित्तु स्वस्यैव स्वनाश्यत्वनाशकत्वयोरभ्युपगमे कर्मकर्तृव्याघात इत्यर्थ इति वदन्ति । **फलोपान्त्येति** । अपूर्वादिकं फलनाश्यम् । उपान्त्यनाश्यः शब्दः, 'सुन्दोपसुन्दन्यायेनान्त्योपान्त्यनाश' इत्यभ्युपगमात् । आश्रय-नाशजन्यरूपादिनाशस्थले कारणनाशनाश्यत्वमिति द्रष्टव्यम् । **विनाशविषयभ्रमः**

**पुनस्तिष्ठतीति** । मिथ्यात्वस्य प्रतीतिविषयसत्वादिति भावः । **छिन्नवासनाख्यमूल-मिति** । यद्यपि 'छिन्नमूलत्वेन न बन्धाय भवति' इति भाष्ये 'छिन्नाविद्याख्य-मूलत्वेन' इत्यर्थ उक्तः, स एवेह दूषयितुमुचितः - तथापि वासनाकार्यत्वकथनात् वासनाया एव मूलत्वं वक्तव्यमिति तथोक्तमिति द्रष्टव्यम् । **व्यावहारिकतयापि परेणाभ्युपगन्तव्यमिति** । यद्यपीदं व्यावहारिकत्वं दार्ष्टान्तिके वासनाद्यावृष्यस्येव, तथापि ब्रह्मात्मैकत्वविज्ञानस्य विश्वबाधकत्ववत् चन्द्रैकत्वविज्ञानस्य तिमिरादिदोषा-धिष्ठानयाथात्म्यानवगाहिनस्तिमिरादिदोषनिवर्तकत्वं नास्तीत्यत्र तात्पर्यम् । द्विचन्द्र-ज्ञानस्य विस्मयादिजनकस्य भयाद्यजनकत्वमभिप्रयन्नाह - **रज्जुसर्पादिभ्रान्तिमत्पुरु-षापेक्षयेति** । द्विचन्द्रस्यौत्पातिकतया भयहेतुत्वेऽपि न दोष इत्यपि द्रष्ट-व्यम् । आप्तोपदेशस्यापरोक्षविषयासत्यत्वनिश्चयाधायकत्वे, 'शास्त्रप्रत्यक्षयोर्विरोधे प्रत्यक्षप्राबल्यम्' इति सिद्धान्तो व्याकुप्येदित्यस्वरसादाह - **यद्वा यथावदर्थ-स्वरूपेति** । आप्तोपदेशेन संदिहानः सावधाननिरीक्षणे प्रवर्तते ; निरीक्षणेनैव तादृशस्थले भ्रमनिवृत्तिरिति भावः । **दृष्टद्वारा हि भेदनिरास** इति । अदृष्टद्वारत्वे ह्यल्पस्यापि निदिध्यासनस्य भूयोवासनानिवर्तकत्वं स्यात् । दृष्टद्वारको हि वासनारूप-भेदनिरासः । अतश्चिरानुवृत्तवासनानिवर्तकत्वं न संभवतीत्यर्थः । ततश्च 'नायं सर्पः' इत्यस्य साक्षान्निवर्तकत्वात् दृष्टद्वारत्वं नास्तीति शङ्का पराकृता, अदृष्टाद्वार-कत्वमात्रस्यैव दृष्टद्वारेत्यनेन विवक्षितत्वात् । नन्वदृष्टद्वारा निवर्त्यत्वे किं व्यवहार-दशायां बाधाभाव आपाद्यते, उत सर्वदा ? नाद्यः, इष्टापत्तेः । न द्वितीयः, दृष्टान्तासंप्रतिपत्तेः ।

"तत्त्वमस्यादिवाक्योत्थसम्यग्धीजन्ममात्रतः ।
अविद्या सह कार्येण नासीदस्ति भविष्यति ॥"

इत्युक्तरीत्या ध्याननिवृत्तसर्पस्यापि चरमज्ञानेन बाधादिति शङ्कते - **नन्वदृष्टद्वारेति** । **न कदाचिदपि बाध्यत्वं सिद्धमिति** । यद्विषयकज्ञानेन यत् अदृष्टद्वारा निवर्त्यम्, न तत् तज्ज्ञानबाध्यमिति हि व्याप्तिः । ततश्च दृष्टद्वारा गरुडज्ञाननिवर्त्यसर्पस्य तत्त्वमस्यादिवाक्यजन्यचरमज्ञाननिवर्त्यत्वेऽपि न गरुडज्ञानबाध्यत्वम् । बाधो हि मूलभूताज्ञानेन सह निवृत्तिः न गरुडज्ञानात् सर्पमूलाज्ञाननिवृत्तेः, येन बाधः स्यात् ।

ततश्च भेदवासनाया अदृष्टद्वारा ध्यानरूपब्रह्मज्ञाननिवर्त्यत्वे चरमवृत्तिरूपब्रह्मज्ञान-बाध्यत्वं न स्यात्। इष्यते च त्वया तज्ज्ञानबाध्यत्वमिति भावः। यद्वा भेदवास-नाया अदृष्टद्वारा ध्यानरूपब्रह्मज्ञाननिवर्त्यत्वे सत्यत्वमात्रमापाद्यते, उत अदृष्टा-द्वारकज्ञाननिवर्त्यत्वलक्षणमिथ्यात्वाभावो वा। नाद्यः, इष्टत्वात्। न द्वितीयः, निवृत्ताया अपि भेदवासनाया अदृष्टाद्वारकचरमवृत्तिनिवर्त्यत्वेन ध्याननिवर्त्यसर्पवत् मिथ्यात्व-संभवादित्याशङ्कते - **नन्वदृष्टद्वारेति**। अदृष्टद्वारा पूर्वनिवृत्तसर्पस्य चरमवृत्ति-निवर्त्यत्ववाचोऽसंगतत्वात् नष्टस्य नाशनासंभवात् भेदवासनाया अदृष्टाद्वारक-चरमवृत्तिनिवर्त्यत्वासंभवेन मिथ्यात्वं न स्यात्। न च मुद्गरप्रहरादिविनष्टघटस्यापि सत्यत्वप्रसक्त्या ध्याननिवर्त्यसर्पमात्रदृष्टान्तीकरणमसंगतमिति वाच्यम्, तद्दृष्टान्तस्या-पीष्टत्वात्। ततश्च मुद्गरादिनिवर्त्यघटवत् ध्याननिवर्त्यसर्पवच्च सत्यत्वं स्यादित्यभिप्रेत्य परिहरति - **नेति**। **ज्योतिष्टोमवाक्यव**दिति। इतरथा भावनासहकृतज्योतिष्टोम-वाक्यस्यापि ज्योतिष्टोमादिधर्मप्रत्यक्षजनकत्वप्रसङ्ग इति भावः।

## भावप्रकाशिका
## (भक्तेरुपायत्वम्)

"**चायृ दर्शने**" **इति हि धातु**रिति। "चायृ पूजानिशामनयोः" इति पठितत्वादिति भावः। **सन् रहितज्ञानविशेषवाचि वाक्यान्तरं विवक्षित**मिति। "ओमित्यात्मानं ध्यायथ" त्यादि वाक्यं विवक्षितमिति भावः। **सर्वशाखा-प्रत्ययन्याया**दिति। ननु नानाशाखापठितानामग्निहोत्रज्योतिष्टोमादीनां संभवत्यै-क्यम्, संयोगरूपचोदनाख्याविशेषात्। इह चोदनाया अविशेषाभावादाख्यैक्याभावाच्च कथमेतन्न्यायप्रवृत्तिः? इतरथा "श्रोतव्यः" इत्यनेनैकार्थ्यं किं न स्यादिति चेत् — न। सर्वशाखाप्रत्ययन्यायस्य प्रत्यभिज्ञापकसद्भावो हि मूलयुक्तिः। अस्ति चेहापि मोक्षरूप-फलसंयोगसाम्यं ब्रह्मविषयत्वलक्षणरूपसाम्यं च। तथा "मन्तव्यो निदिध्यासितव्यः", "विज्ञाय प्रज्ञां कुर्वीत" इति निदिध्यासनप्रज्ञाशब्दयोः स्थानसाम्यम्। अतस्तदेव प्रत्यभिज्ञायते। अत एवेक्षत्यधिकरणे, "सदेव सोम्येदमग्र आसीत" इति सच्छब्द-शब्दितं ब्रह्मैव, गतिसामान्यात्—सर्ववेदान्तेषु "आत्मा वा इदमग्र आसीत", "ब्रह्म वा इदमग्र आसीत्" इत्यवगतिसामान्यादिति वर्णितम्। तदेव गतिसामान्यं सर्वशाखाप्रत्यय-

न्यायः । किंच प्रज्ञाशब्दितज्ञानसामान्यस्य ब्रह्मप्राप्तिसाधनत्वे ध्यानलक्षणमुख्योपासना-नर्थक्यप्रसङ्गश्च । तस्मात्तत्र पर्यवसानं वक्तव्यमित्यैकार्थ्यं संभवतीति भावः । **स ह्यनुक्ताकाङ्क्षितस्वीकारफल** इति । न तूक्तपरित्यागफलः । एवं च "निदिध्यासितव्यः" इत्यत्र ज्ञानमात्रविधावुक्तपरित्याग एव सिध्येत् । अतो ज्ञानसामान्यवाचिनापि शब्देन विशेष एव विधेय इति भावः । ननु सामान्यवाचिशब्देन विशेषाभिधाने लक्षणा स्यादित्याशङ्क्य, सामान्यस्य प्रतिव्यक्ति पर्यवसितत्वात् सामान्येन विशेषाभिधानं न दोषायेति, "छागो वा मन्त्रवर्णात्" इत्यत्र निर्णीतमित्यभिप्रयन्नाह - **तत्र छागो वा मन्त्रवर्णादि**ति । "छागो वा मन्त्रवर्णात्" इत्यत्र विधिवाक्यस्थसामान्यशब्दानां मन्त्रवर्णप्रतिपाद्यविशेषे पर्यवसानमात्रं विषयः । अतः कथं विधिवाक्यस्थसामान्यशब्दानां विधिवाक्यस्थविशेषे पर्यवसानमित्याशङ्क्य, 'न्यायस्य न केवलं विधिमन्त्रमात्रविषयत्वम् , अपि तु सर्वसामान्यविषयत्वम्' इति दर्शयितुं स्मृतिष्वपि सामान्यशब्दानां विशेषपर्यवसानं दृष्टमित्याह - **एवं स्मृतिष्वपी**ति ।

**विलेखनपठनादेरप्रतिषिद्धत्वादि**ति । अप्रतिषेध्यत्वादित्यर्थः । एतद्वाक्यबोध्यनियमेनाव्यावर्त्यत्वादिति यावत् । यद्वा **अप्रतिषिद्धत्वात्** । अनुमतत्वादित्यर्थः । अत्र लेखनोपन्यासो दृष्टान्तार्थः । ननु गुरुमुखानधीनविचारव्यावृत्त्यर्थः श्रवणविधिर्भविष्यतीत्याशङ्क्याह - **गुरूपसत्ता**विति । ननु श्रवणशब्दस्य गुरूपसत्त्यर्थकत्वाभावेऽपि श्रवणस्य गुरूपसदनाङ्गकत्वादङ्गविध्युपेतश्रवणविधिबलादेव गुरुमुखानधीनविचारव्यावृत्तिः सिध्यतीत्यरुचेराह - **तस्याश्चात्राविहितत्वेऽपी**ति । न चाङ्गिविध्यभावे कथं तदनुवादेनोपसदनविधिरिति वाच्यम् - 'स्नात्वा भुञ्जीत' इत्यत्र रागप्राप्तभोजनानुवादेन स्नानविधानवदुपपत्तेरिति भावः । "सहकार्यन्तरविधिः" इत्यत्र विधेयत्वेन समर्थयिष्यमाणयोः पाण्डित्यमौनयोः, "श्रोतव्यो मन्तव्यः" इत्याभ्यां विधिरस्त्वित्याक्षिप्य परिहरति - **न्यायोपेतेत्यादिना** । **सति गत्यन्तरे विशिष्टविधानाश्रयणस्यान्याय्यत्वाच्चे**ति । ननु श्रवणमननयोः पाण्डित्यमौनरूपयोः परस्परविशेषणत्वं न सिद्धम्; येन विशिष्टविधिः स्यात् । यदि हि 'श्रुत्वा मन्तव्यः' इत्याकारा वचनव्यक्तिः स्यात्, स्यात् तदा विशिष्टविधिशङ्का । इतरथा, "विष्णुरुपांशु यष्टव्यः" "प्रजापतिरुपांशु यष्टव्यः" "अग्नीषोमावुपांशु यष्टव्यौ"

इत्यादावपि यागद्वयविशिष्टतृतीययागविधिसंभवात् वाक्यभेदेन सिद्धान्तोऽनुपपन्नः स्यात् । "समिधो यजति" इत्यादावपि समिदादिचतुष्टयविशिष्टस्योत्तमप्रयाजस्य विधिरित्यापाद्येतेति चेत् - अत्र केचित् - "आर्षेयं वृणीते त्रीन् वृणीते" इत्यत्राऽऽख्यातभेदसत्त्वेऽपि त्रित्वविशिष्टार्षेयवरणविधानवत्, "श्रोतव्यो मन्तव्यः" इत्यत्रापि श्रवणविशिष्टमननविधिशङ्काया उत्थितिसंभवादिति वदन्ति । **यादवमिश्रोक्तनिर्वाह** इति । श्रवणमनने अदृष्टार्थतया विधीयेते इति निर्वाह इत्यर्थः । स तु, "नानाशब्दादिभेदात्" इत्यत्र स्पष्टीभविष्यति । **व्याख्यास्यत** इति । अधुना भाष्ये तदव्याख्यानं न दोष इति भावः । **द्रष्टव्य इति तव्यतेति**। यद्यपि तव्येनापि रूपं सिध्यति, अथापि स्वरविशेषमभिप्रेत्याचार्यैस्तव्यत्प्रत्यय उपात्तः । केचित्तु - बृहदारण्यकवाक्ये स्वरासंप्रतिपत्तेस्तव्यतेति तित्त्वमविवक्षितम्; तव्यत्तव्ययोरन्यतरस्मिन् प्रत्यय उपादातव्ये तव्यतः प्रथमोपदिष्टत्वात्तदुपादानमिति मन्यन्ते ।

**आवृत्तिद्वयत्रयव्यावृत्त्यर्थमसकृदिति सौत्रं पद**मिति । यद्यप्यसकृच्छब्दोऽनेकत्वमात्रपरः । अनेकत्वं च द्वित्रादिसाधारणम् — तथापि बहुतरेष्वेव प्रसिद्धिप्राचुर्यादेवमुक्तमिति द्रष्टव्यम् । अत्र, — 'सूत्रमुपादत्ते — **आवृत्तिरिति** । आवृत्तिद्वयत्रयव्यावृत्त्यर्थमसकृदिति सौत्रं पदम् । उपासनशब्दाश्रवणात् सूत्रस्य तत्परत्वमस्फुटमिति तस्यार्थमाह — **तदिद**मिति' इति पाठः समीचीनः । केचित्तु — सिंहावलोकितकेनाह - **आवृत्तिद्वयत्रयेती**' ति वदन्ति । **रात्रीरुपेयादितिव**दिति । यद्यपीदं वाक्यं नास्त्येव । "ज्योतिर्गौरायुः" इत्येव रात्रिसत्रोत्पत्तिवाक्यम् । तत्रापि सत्रविषये उपेयादित्येकवचनं च न संभवति; उपेयुरित्येवं बहुवचनान्ततयैव वाक्यस्य कल्पनीयत्वात् - तथापि नोदाहरणमादरणीयमिति न्यायेन, "वैश्वानरं द्वादशकपालं निर्वपेत्", "यस्मिन् जात एतामिष्टिं निर्वपति" इति वाक्यद्वयं दृष्टान्ततयोदाहर्तव्यम् ।

**एतद्वाक्यपूर्वकत्वा**दिति ।[1] "अथ योऽन्यां देवतामुपास्ते 'अन्योऽसावन्योऽहमस्मि' इति, न स वेद । अकृत्स्नो ह्येषः । आत्मेत्येवोपासीत" इति हि श्रुतिः । सिंहावलोकितकेनाव्याख्यातच्छान्दोग्यवाक्यांशं व्याचष्टे - **यस्तद्वेदेत्यादि**ना । "यथा

1. अत्र छान्दोग्यभाष्यपरिष्कारौ द्रष्टव्यौ ।

कृताय विजितायाधरेऽयाः संयन्त्येवमेनं सर्वं तदभिसमेति यत्किञ्च प्रजाः साधु कुर्वन्ति यस्तद्वेद यत्स वेद स मयैतदुक्तः" इति हि श्रुतिवाक्यम्। इदं च, "यो नु कथं सयुग्वा रैक्वः?" इति हंसेन रैक्वस्वरूपं पृष्टस्य हंसान्तरस्य प्रतिवचनम्। **यथा कृतायविजिताय।** कृतो नाम अयो द्यूतसमये प्रसिद्धः। स यदा जयति, तदा इतरे त्रिद्व्येकाङ्काः अधरे अयाः संयन्ति = संगच्छन्ते = अन्तर्भवन्ति। चतुरङ्के अये कृते त्रिद्व्येकाङ्कानां तत्र विद्यमानत्वात् तस्मिन्नन्तर्भवन्तीत्यर्थः। एवमेनं रैक्वं कृतायस्थानीयं सर्वं तदभिसमेति=संगच्छते, यत्किञ्च लोके सर्वाः प्रजाः साधु शोभनं कर्म कुर्वन्ति = धर्मजातं कुर्वन्ति, तत् सर्वमेतस्य धर्मेऽन्तर्भवति। तस्य फले सर्वप्राणिफलमन्तर्भवतीत्यर्थः। **यस्तद्वेदेत्यादि।** अत्रायमन्वयः - यत्स वेद। स रैक्वो यद्वेद्यं वेद, तद्वेद्यं योऽन्योऽपि वेद, एनमपि रैक्वमिव सर्वशुभधर्मजातफलमप्यभिसमेतीत्यनुषङ्गः। **स मयैतदुक्तः।** स रैक्वः मया एतत् इत्थमुक्त इत्यर्थः[1] इति रैक्ववेद्यब्रह्मवेदितृमाहात्म्यकथनाद्रैक्वस्य ब्रह्मणश्च माहात्म्यं कथितं भवतीत्यभिप्रायेणाचार्यैः, 'रैक्वस्तद्वेद्यं ब्रह्म चोभयं मयोक्तमित्यर्थ' इत्युक्तम्। न तु स मयैतदुक्त इति शब्दार्थतयेति द्रष्टव्यम्।

**असकृदावृत्तेर्व्यवहितत्वशङ्कानिरासार्थमिति।** 'मासस्य द्विरधीते' इति न्यायेन विच्छिद्य विच्छिद्य कृतस्मृतेर्न ध्यानत्वमिति भावः। .... .... रागादीनां जीवधर्मत्वेनान्तःकरणधर्मत्वाभावादित्यस्वरसादाह - **यद्वा मञ्चाः क्रोशन्तीतिवदिति।** "स वा एष आत्मा हृदि। तस्यैतदेव निरुक्तं हृद्ययमिति। तस्माद्धृदयम्" इति वाक्यमभिप्रयन्नाह - **हृत्स्थानमयतीति।** हृदयग्रन्थिशब्दे कर्मधारयमभिप्रयन्नाह - **हृदयशब्दोपलक्षितमिति।** ननु "तस्मिन् दृष्टे परावरे" इत्येतत् उपायदशायां ज्ञानस्य दर्शनरूपतां कथं गमयेत्? तत्रत्यदर्शनशब्दस्य 'शास्त्रार्थदर्शी' इत्यादाविव ज्ञानसामान्यपरतयाप्युपपत्तेरित्यत्राह — **दर्शनशब्दस्य ज्ञानसामान्यपरत्वसंभवेऽपीति। श्रवणादीनां पृथगुक्तत्वादिति।** ततश्च सामान्यवाचिपदस्य वैयर्थ्यप्रसङ्ग इति भावः। न चैवं निदिध्यासनदर्शनयोरपि, "न वायुक्रिये पृथगुपदेशात्" इति न्यायेन पार्थक्यापत्तिः; परमात्मनो दर्शना-

1. एतद्वाक्यार्थविचारः उपनिषत्परिष्कारे द्रष्टव्यः।

योग्यत्वात् दर्शनशब्दस्य चाक्षुषज्ञाने एव मुख्यत्वात् गौणत्वस्याश्रयणीयत्वादिति भावः । **दृष्टशब्दश्च तत्तुल्यार्थ** इति । "तस्मिन् दृष्टे परावरे" इत्यत्र दृष्टशब्दश्च **तत्तुल्यार्थः** साक्षात्कारार्थः, तत्प्रत्यभिज्ञानात् । न च "**तस्मिन्** दृष्टे", "द्रष्टव्यः" इत्यनयोरर्थनिर्णये परस्परसापेक्षत्वेनान्योन्याश्रय इति वाच्यम् - "तस्मिन् दृष्टे" इत्यत्र दृष्टशब्दस्य न ज्ञानसामान्यपरत्वमित्यत्र द्रष्टव्यादिपदसापेक्षत्वम्, द्रष्टव्यादिशब्दस्योपायदशापन्नवृत्तित्वमित्यत्र "तस्मिन् दृष्टे" इति वाक्यसापेक्षत्वमिति द्वारभेदेनान्योन्याश्रयस्यादोषत्वात् । **पूर्वापरवाक्येषु फलस्य निर्दिष्टत्वादिति** । "आत्मा वारे द्रष्टव्यः" इत्यस्य पूर्वापरवाक्येष्वमृतत्वस्यैव फलस्य निर्दिष्टतया न साक्षात्कार एव फलमित्यर्थः । **तस्याष्टदोषदुष्टत्व**मिति । विकल्पस्येत्यर्थः । व्रीहियवयोरेकेनानुष्ठात्रा प्रयोगभेदेनोपादानसंभवात् युक्तमष्टदोषदुष्टत्वम्; एकेन विद्याद्वयोपादानायोगात् कथमत्राष्टदोषदुष्टत्वमित्याशङ्कयाह - **इहापि यथासंभवं दोषप्राप्ति**रिति । अनुष्ठातृभेदेनैकैकस्मिन् दोषद्वयप्राप्त्या चतुष्टयसंभवादिति भावः । **दर्शनोपायभूतस्य व्यापारस्ये**ति । यद्यपि दर्शनस्यैव विधेयत्वसंभवात् दर्शनध्यानयोः समुच्चयः संभवतीत्याक्षेप एवोचितः । न च दर्शनस्य विधानायोग्यत्वम्; "पत्न्यवेक्षितमाज्यम्" इत्यादाविव (त्यादौ?) ज्ञानविधेरभ्युपेतत्वात् । तथापि पररीतिमनुसृत्य व्यापारविधेयत्वमाक्षिप्तमिति द्रष्टव्यम् । **अतो न मानान्तरेण तयोः साध्यसाधनभावे**ति । मानान्तरसत्त्वे तत एव साध्यसाधनभावप्रतीतेस्तत्सापेक्षमिदं व्यर्थमित्यत्र तात्पर्यम् । **यदि साक्षात्कारं प्रति ध्यानेन सहे**ति । साक्षात्कारमित्युपलक्षणम् । साक्षात्कारं मोक्षं प्रति वा ध्यानेन सह समुच्चित्य दर्शनसमानाकारज्ञानान्तरम्, 'द्रष्टव्य' इत्यनेन विधेयमिति यद्युच्येतेत्यर्थः । तस्य च ध्यानस्य च द्वारद्वारिभावानापन्नतया एकत्र किंचित्कारान्वयः संभवतीति समुच्चयसंभवः । न च दर्शनसमानाकारज्ञानस्य ध्यानसाध्यतया द्वारद्वारिभावापन्नत्वादेकत्र किंचित्कारान्वयः कथं सिध्येदिति वाच्यम्— तन्नास्तीत्यभिमानवतः शङ्केयमिति संभवादिति [वदन्ति] । **चतुर्ष्वंशेषु तात्पर्यकल्पनादपी**ति । औपदेशिकार्थाधिगमारम्भणसंशीलनदर्शनसमानाकारत्वध्यानरूपेष्वित्यर्थः । ननु "द्रष्टव्यः" इति दर्शनसमानाकारध्यानविधाने "निदिध्यासितव्यः" इत्यत्रापि निदिध्यासनसमानाकारं मननं विधीयत इति किं न स्यात्? "स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः" इतिवत्, "मत्वा धीरो न शोचति" इति मननानन्तरमेव मोक्ष-

प्रतिपादनात्। यदि मनननिदिध्यासनशब्दयोर्भिन्नार्थत्वादेकस्य गौणत्वे प्रमाणाभावान्न निदिध्यासनशब्दस्य गौणत्वमाश्रयणीयमिति, तर्हि [तुल्यं प्रकृतेऽपि?] "निचाय्य तं मृत्युमुखात् प्रमुच्यते", "तं दृष्ट्वा मुच्यते योगी", "तस्मिन् दृष्टे परावरे", "ततस्तु तं पश्यते निष्कलं ध्यायमानः" इत्यादिश्रुत्यनुग्रहाय विशुद्धमनोजन्यसाक्षात्कारस्यापि विधेयत्वसंभवात्। "विधिर्वा धारणेऽपूर्वत्वात्" इति न्यायेन विधेः स्वीकर्तव्यत्वात्। प्रकृते विस्पष्टविधिश्रवणाच्चेति चेत्--न - मानससाक्षात्कारे चाक्षुषज्ञानवाचिनो दृशेर्गौणत्वस्य तथाप्यविशेषात्। मानससाक्षात्कारस्य मोक्षकालसाक्षात्कारसदृशस्य फलरूपत्वेनाविधेयत्वाच्च ध्यानं दर्शनसमानाकारं विधीयत इत्येव युक्तमिति भावः। **जगत्कारणविषयं चेत् दर्शनसमानाकारनिदिध्यासनरूपमित्यवगम्यत** इति। ननु कथमनेन वाक्येनास्यार्थस्य प्रतीतिः? आत्ममननश्रवणादिकमेव सर्वविषयम्, उपादानोपादेययोरभेदादित्यर्थः परमनेन प्रतीयते, न तु जगत्कारणविषयं सर्वं दर्शनसमानाकारमितीति चेत् -- न - आत्मनि दृष्टे विज्ञाते दर्शनसमानाकारध्यानविषये सत्येव सर्वं विदितं भवति, सार्वज्ञ्यं भवति, मोक्षो भवतीत्यस्यार्थस्य प्रतीयमानतया तथोक्त्युपपत्तेः। एतदस्वरसादेवाह - **किं च नानाविद्यानामिति। सामर्थ्यस्य प्रकरणाद् बलीयस्तया** चेति। अत एव सत्यत्वज्ञानत्वादीनां विद्याविशेषप्रकरणपठितानामपि, "आनन्दादयः प्रधानस्य", "अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्याम्" इत्यधिकरणेषु सर्वविद्यासाधारण्यं वक्ष्यति। **दर्शपूर्णमासशब्दयोर्लक्षणयेत्यादि**। कालविशेषवाचिनो दर्शपूर्णमासशब्दयोः कर्मलक्षकत्वदर्शनात्। तथा, "श्येनेनाभिचरन् यजेत" इत्यादौ श्येनादिशब्दानां 'यथा वै श्येनो निपत्यादत्ते" इति वाक्यशेषेण निपत्यादानरूपगुणयोगेन कर्मणि श्येनशब्दो गौण इत्यभ्युपेतत्वाच्चेत्यर्थः। **मध्यदेशलक्षणाया अङ्गीकृतत्वाच्चेति**। "अर्धमन्तर्वेदि मिनोत्यर्धं बहिर्वेदि" इत्यत्रान्तर्वेदीति वेद्येकदेशो यूपाङ्गत्वेन चोद्यते, उत बहिर्वेदिसहितो यूपमानदेशं लक्षयतीति विशये, वेद्येकदेशो यूपाङ्गत्वेन विधीयते, लक्षणाया अन्याय्यत्वात्; "अर्धं बहिर्वेदि" इति चार्थसिद्धानुवाद इति पूर्वपक्षं कृत्वा, "अर्धमन्तर्वेदि" इत्येकस्य यूपार्धस्यान्तर्वेदिमाने यूपार्धान्तरस्यान्तर्वेदि बहिर्वेदि वा मानमिति शास्त्रस्याभावेनार्धान्तरमपि कदाचित्पुरुषेच्छावशादन्तर्वेद्यपि प्राप्नोति। न चेष्टापत्तिः, "अर्धं बहिर्वेदि" इत्यस्य पाक्षि-

कानुवादत्वप्रसङ्गात । तस्यापि विधाने वाक्यभेदः । अतो यस्मिन् देशे मीयमाने अन्तर्वेदि अर्धं भवति बहिर्वेदि अर्धं च, तादृशे देशे मिनुयात् । "डुमिञ् प्रक्षेपणे" इति हि धातुः ; प्रक्षिपेदित्यर्थ इति देशविशेषलक्षणेति पूर्वतन्त्रे शेषलक्षणे (३-७-६) स्थितमिति भावः । **वाक्यचतुष्टयेने**ति । "वेदनमुपासनं स्यात् तद्विषये श्रवणात्", "सकृत्प्रत्ययं कुर्याच्छब्दार्थस्य कृतत्वात् प्रयाजादिवत्", "सिद्धं तूपासनशब्दात्", "उपासनं स्याद् ध्रुवानुस्मृतिर्दर्शनान्निर्वचनाच्च" इति वाक्यचतुष्टयं द्रष्टव्यम् । **न केवलं छान्दोग्य इत्यर्थ** इति । "ध्रुवा स्मृतिः । स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः" इति छान्दोग्ये भूमविद्यायां श्रूयते; संवर्गविद्यायाम्, "यां देवतामुपास्से" इति श्रूयते । तेन तत्रैव [1]तदिति न मन्तव्यमित्यर्थः ।

**स्वयमुपस्थितस्य स्वीकार एवे**ति । अप्रियत्वे स्वयमुपस्थितमपि परित्यज्यते ; प्रियत्वे स्वयमुपस्थितं गृह्यते । प्रियतमत्वे तु प्रार्थनीयत्वरूपं वरणीयत्वमिति भावः । ननु पत्रपुष्पादीनां भगवति प्रीतिरहितानामपि प्रीतिविषयत्ववरणीयत्वयोर्दर्शनात् कथं 'यस्य' इत्यादि भाष्यमुपपद्यत इत्याशङ्क्याह - **चेतनत्वे सति भगवता वरणीयत्व**मिति । चेतनत्वे सति भगवत्प्रियतमत्वमित्यर्थः । तस्यैव तस्मिन् वाक्ये प्रस्तुतत्वात । यद्वा प्रियतमत्वपूर्वकं वरणीयत्वमित्यर्थः । **स्वतः प्रियत्वं स्वस्मिन् प्रीतिमत्त्व एवे**ति । यस्य च स्वतः प्रियत्वम् तस्यैव स्वतो वरणीयत्वमिति भावः । **आशंसायां भूतवच्चेति कर्तरि क्त** इति । "गत्यर्थाकर्मक -" इत्यकर्मकत्वविवक्षायां यः क्तो विहितः, सः "आशंसायां भूतवच्च" इत्यनेन आशंसायां भविष्यतीति भावः । ननु, "आशंसायां भूतवच्च" इति प्रयोक्त्राशंसायामेव दृष्टम् । यथा - 'देवश्चेद् वृष्टः, संपन्नाः शालयः', 'उपाध्यायश्चेदागतः, अधीतं व्याकरणम्' इति । यथा, "आशिषि लिङ्लोटौ" इति लिङ्लोटौ प्रयोक्त्राशंसाविषयावेव - तद्वदिति चेत् - न ; प्रयोक्त्राशंसायामेवेति ग्रन्थकृतां व्यवहारादर्शनात् उदाहरणमात्रप्रदर्शनेन तद्विषयत्वस्य निश्चेतुमशक्यत्वात् । लिङ्लोड्विषये तु प्रयोक्त्राशंसायामेव प्रयोगात् तथात्वमुचितमिति भावः । **अनुभूय-**

1. तदिति । छान्दोग्यव्याख्यारूपवाक्यग्रन्थोक्तमित्यर्थः ।

**मानोऽनुभव इतिवदिति** । प्रियशब्दस्य प्रीतिविषयत्वमेवार्थ इति प्रथमतृतीयपक्षयोः समानम् । प्रथमपक्षे प्रीतावेव प्रीतिविषयत्वनिर्देश औपचारिकः । तृतीये आगामिप्रीतिरूपज्ञानस्यापि प्रीत्यन्तरविषयत्वसंभवात् मुख्य इति विवेकः । द्वितीयपक्षे तु प्रियेत्यस्यानुकूलत्वमेवार्थः, न प्रीतिविषयत्वमेवार्थ इति भिदा । यद्यपि प्रियशब्दः, "इगुपधज्ञाप्रीकिरः कः" इति कर्त्रर्थकप्रत्ययान्तः, "कर्तरि कृत्" इति विधानात् - तथापि 'देवदत्ताय रोचते मोदकः' इतिवत् विषयत्वपर्यवसित एवेति विषयत्वार्थकत्वे नानुपपत्तिरिति द्रष्टव्यम् । इदं त्ववशिष्यते - प्रीतिरूपत्वस्यैव समर्थनीयतया "स्वार्थे शब्दप्रयोगे" इति न्यायेन 'स्वयमपि प्रीतिरूपा' इत्येव निर्देष्टव्ये, भाष्ये 'प्रिया' इति निर्देशो न युक्तः । अतः 'प्रिया' इति निर्देशस्यानुकूलत्वमेवार्थ इति द्वितीयपक्ष एव युक्त इति प्रतिभाति । **यद्वा ध्रुवानुस्मृतिः स्वयमत्यन्तानुकूलत्वादिति** । 'प्रीतिरूपा' इति शेषः । ततश्च **अत एव हि या प्रीतिरित्यादिना सा प्रार्थ्यते** इति युज्यते, । 'प्रीतिरूपा' इति शेषाभावे 'सा प्रार्थ्यते' इत्युक्ते ध्रुवानुस्मृतिः प्रार्थ्यत इति प्रतीयेत । न च तद्युक्तम्, "या प्रीतिः" इति श्लोके प्रीतेरेव प्रार्थ्यत्वदर्शनेन ध्रुवानुस्मृतेः प्रार्थ्यत्वादर्शनादिति द्रष्टव्यम् । ननु "या प्रीतिः" इति श्लोके प्रीतिरूपापन्नध्रुवानुस्मृतेः प्रार्थ्यत्वं न प्रतीयत इति चेत् — न - "त्वामनुस्मरतः सा मे" इति स्मृतिसमभिव्याहारात् प्रीतिरूपस्मृतिः प्रार्थ्यत इत्यर्थलाभसंभवात् । **प्रीतिरूपध्रुवानुस्मृतेरिति** । न च "स्वयमत्यर्थप्रिया" इत्यत्र भाष्यस्थप्रियशब्दस्य प्रीतिविषयार्थकत्वपक्षे प्रीतिरूपत्वस्य ध्रुवानुस्मृतावलाभात् कथं, 'प्रीतिरूपा ध्रुवानुस्मृति' रित्युच्यत इति शङ्क्यम् - प्रीतिविषयत्वप्रतिपादनस्यापि प्रीतिरूपत्वप्रतिपादनफलकत्वेन प्रीतिरूपत्वोक्तौ विरोधाभावात् । ननु नैघण्टुकोक्त्या पर्यायत्वमेवावगतं स्यात्; न त्वेकार्थपर्यवसानमात्रमित्यत्राह - **एकार्थवृत्तित्वं** चेति । चः एवार्थः; एकार्थवृत्तित्वमेवावगम्यते; न तु पर्यायत्वमपि; तथाहि सति सेवाया अपि पर्यायत्वे, 'भूयसी सेवा भक्तिशब्दवाच्या' इत्यभियुक्तव्यवहारविरोधादिति भावः । **वचनबलप्रतिक्षिप्त** इति ।

"भक्त्या त्वनन्यया वापि प्रपत्त्या वा महामते ।
प्राप्योऽहं नान्यथा प्राप्यः —— —— ॥"

इति वचनबलेन, "सकृदेव हि शास्त्रार्थः" इति वचनबलेन च प्रतिक्षिप्तः । शक्ताशक्तभेदेन च व्यवस्था कृतेति भावः । **इदानीं तु श्रुतिस्मृत्योरैकार्थ्येनेति** । उपायान्तरनिषेधकश्रुतिस्मृत्योरविरोधसिद्ध्यर्थमित्यर्थः । इदं चोपबृंहणोपबृंहणीययोरित्युत्तरत्र स्पष्टम् । **पुरुषसूक्तैकार्थ्यं दर्शयितुमिति** । पुरुषसूक्तैकार्थ्यमुपजीव्यावगतपरमपुरुषतात्पर्या श्वेताश्वतरोपनिषदिति दर्शयितुमित्यर्थः । **नाहं वेदैरिति वचनमुपात्तमिति** । "नाहं वेदैः", "भक्त्या त्वनन्यया" इति श्लोकद्वयमुपात्तम्; तत्तुल्यार्थत्वमभिप्रेत्य, "पुरुषः स परः" इति श्लोकोऽप्युपात्तः ।

"नाहं वेदैर्न तपसा न दानेन न चेज्यया ।
शक्य एवं विधो ज्ञातुं दृष्टवानसि मां यथा ॥

भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप ॥"

"पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ।
यस्यान्तःस्थानि भूतानि येन सर्वमिदं ततम् ॥"

इति त्रयः श्लोकाः । **तदनन्तरमित्यनेन पौनरुक्त्यप्रसङ्गादिति** ।

"भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः ।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥"

इति श्लोके "ततः" इत्यनेन ज्ञानस्य परामर्शे 'तदनन्तरम्' इत्यनेन पौनरुक्त्यमित्यर्थः । ननु 'तदनन्तरम्' इत्यत्र तच्छब्दो ज्ञानपरः; 'ततः' इति तच्छब्दो ज्ञानहेतुभूतभक्तिपरः; 'ततः भक्त्या मां तत्त्वतो ज्ञात्वा ज्ञानानन्तरं मां विशते' इत्युक्तौ न पौनरुक्त्यमिति चेत् — न - भक्तेर्ज्ञानहेतुत्वस्य "भक्त्या मामभिजानाति" इत्यनेनैव सिद्धतया पुनरुक्तिप्रसङ्गात् 'ततो विशते' इत्यन्वयस्यैव वक्तव्यत्वादिति भावः । न च "भक्त्या मामभिजानाति" इति पूर्वनिर्दिष्टभक्तेः प्राप्तिहेतुत्वाभावात् कथं 'ततः' इत्यनेन तस्या भक्तेः परामर्श इति वाच्यम्, 'ततः' इत्यस्य तद्व्यक्तिपरामर्शित्वासंभवादेव तज्जातीयव्यक्तिपरामर्शित्वमित्यदोषः ।

( भक्तेः कर्मापेक्षत्वम् )

**अन्योन्याश्रयणं** वेति । वाशब्दः समुच्चये: अन्योन्याश्रयणे आत्माश्रयस्यापि सिद्धत्वात् । **अज्ञानसुकृतवशा**दिति । स्ववृत्त्यर्थं [1]व्याधकृतव्याघ्रमरणेन संपादितं गोरक्षणादिकमज्ञातसुकृतमित्युच्यते । **यज्ञेन विविदिषन्तीति वाक्यस्य ह्यर्थश्चिन्त्यत** इति । न तु स्वल्पायाससाध्यकर्मविधायकवाक्यार्थ इति भावः । **आत्माश्रयादिदोषः स्याद्**वेति । नन्वन्नद्वेषेण कार्श्यं प्राप्तस्य तत्परिहाराय अन्नविषयौन्मुख्यलक्षणेच्छायां सत्यामप्युत्कटाजीर्णादिप्रयुक्तधातुवैषम्यदोषात् तत्र प्रवृत्तिपर्यन्ता रुचिर्न जायत इति तद्रोचकौषधवत्, ' निरतिशयानन्दं ब्रह्म; तत्प्राप्तौ विद्या साधनम् ' इत्यस्मिन्नर्थे प्राचीनानन्तजन्मशतानुष्ठितानभिसंहितफलनित्यनैमित्तिककर्मोपसंजातचित्तप्रसादमहिम्ना संपन्नविश्वासस्य पुरुषस्य ब्रह्मावाप्तौ तद्विद्यायां चौन्मुख्यलक्षणेच्छायां सत्यामप्यनादिभवसंचितानेकदुरितदोषेण विषयप्रावण्यं संपादयता प्रतिबन्धात् विद्यासाधने श्रवणादौ प्रवृत्तिपर्यन्ता रुचिर्न जायत इति प्रतिबन्धकनिरासपूर्वकतादृशरुचिसंपत्त्यर्थं कर्मसु प्रवृत्तिरुपपद्यत एव । इतरथा " या प्रीतिरविवेकानाम् " इत्यादिष्वगतेरिति चेत् — न - यद्यनन्यथासिद्धं विविदिषासाधनत्वग्राहि प्रमाणमुपलभ्येत, स्यात्तदा यथा कथंचिन्निर्वाहः । न त्वेतदस्ति । " प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्य प्राधान्यम् " इति सामान्यन्यायापेक्षया ' सन्प्रत्ययाभिहितेच्छाविषयस्य प्राधान्यम् ' इति विशेषन्यायस्य, ' अश्वेन जिगमिषति ' इत्यादौ दृष्टस्य प्रबलत्वादिति भावः[2] । अभिधानमात्रस्य प्रागपि कृतत्वात् तन्मात्रमप्रयोजकमित्यभिप्रेत्याह - **उपपादयिष्याम इत्यर्थ** इति । **तच्छब्दो विविदिषापर** इति । न च ध्यानोपक्रमात् प्रागेव विविदिषायाः सिद्धत्वात् पुनस्तदनुष्ठानं व्यर्थमिति शङ्क्यम् । प्रत्यहमनुष्ठेयोपासनाया हेतुभूतविविदिषाया अपि प्रत्यहमनुवृत्त्यर्थं कर्मणामपेक्षितत्वादिति भावः । **यावज्जीवं कर्मणोऽपेक्षितत्वे** चेति । साक्षाद्वा परंपरया वा कर्मणस्तदपेक्षितत्व इत्यर्थः । ( ततश्च विविदिषार्थत्वपक्षेऽप्यपेक्षितत्वमात्रसत्त्वात्[3] ) प्रमाणजिज्ञासायां श्रुतिवाक्ये

1. स्वप्रत्यर्थिव्याध — पा० 2. तादृशमुमुक्षोरिच्छायाः प्रतिबन्धकनिरासेच्छायामेव पर्यवसानम् । या प्रीतिरिति वाक्ये च विषयाद्युत्कटपाजन्यसुखं दिदृक्षतमिति भावः । 3. उपर्येव सुस्फुटत्वादत्र कुण्डलीक्रियते ।

प्रदर्शनीये तदुपेक्ष्य सूत्रसंदर्शनस्य प्रयोजनमाह - **सूत्रसंदर्शनेने**ति । **आश्रमशेषत्वेऽपि विद्याङ्गत्वमपी**ति ; विद्यापेक्षितत्वमित्यर्थः । ततश्च विविदिषार्थत्वपक्षेऽप्यपेक्षितत्वमात्रसत्त्वान्नानुपपत्तिरिति भावः ।

## ( साधनसप्तकम् )

**वाक्यकारनिर्देश** इति । इतरेतरद्वन्द्वस्य साहित्यरूपसमुच्चयावगमकत्वात् । अत एवैकादशाद्ये "दर्शपूर्णमासाभ्याम्" इति द्वन्द्वावगतं साहित्यं मा बाधीति समुच्चितानामेव षण्णां यागानां फलसाधनत्वमिति समर्थितमिति भावः। **समुच्चयोऽर्थान्तर**मिति। यद्यपि समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चत्वारोऽपि चार्थाः वाशब्दार्थभूतविकल्पप्रतिद्वन्द्विसमुच्चयरूपा एव । न हि 'गामश्वं चानय' इति समुच्चये वा, 'भिक्षामट, गां चानय' इत्यन्वाचये वा, 'देवदत्तयज्ञदत्तौ कुरुतः' इतीतरेतरयोगे वा, 'छत्रोपानहमानय' इति समाहारे वा वाशब्दार्थभूतविकल्पप्रतीतिरस्ति - तथापि वाशब्दवत् समुच्चयशब्दोऽन्वाचयसहपठिते समुच्चयावान्तरविशेषे विकल्पप्रतिद्वन्द्विसमुच्चयसामान्ये च वर्तत इति भावः । "जात्याश्रय -" इत्यत्र "कायशुद्धिर्विवेकः" इति सामानाधिकरण्यं कथमित्याशङ्क्य, "जात्याश्रयनिमित्तादुष्टादन्नात्" इति वाक्ये दुष्टेभ्यो विविक्तादन्नात् कायशुद्धेः साध्यत्वावगमात् कारणवाचिना विवेकशब्देन कार्यभूता शुद्धिर्लक्ष्यत इत्याह - **आहारविषये**त्यादिना । **जातिदुष्टाः कलञ्जगृञ्जनादय** इति ।

"लशुनं गृञ्जनं चैव पलाण्डुं कव (त) कानि च ।
वार्ताकनालिकालाबून् जानीयाज्जातिदूषितान् ॥"

इत्यादि द्रष्टव्यम् । मुख्ये संभवत्युपचारस्यान्याय्यत्वादाह - **यद्वे**ति । देहविवेचनं विवेकोऽस्तु ; सामानाधिकरण्यं कथमित्यत्राह - **अशुद्धेभ्य** इति । **मामनुसरे**त्**येवमन्त**मिति ।

"यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेबरम् ।
तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥

तस्मात् सर्वेषु कालेषु मामनुस्मर युध्य च ।"

इति हि श्लोकक्रमः । **सत्यं भूतहितमिति** ।

"सत्यं भूतहितं प्रोक्तमार्जवं समचित्तता ।
दया भूतहितैषित्वं क्षमा द्वन्द्वसहिष्णुता ॥"

इत्यादि प्रमाणं द्रष्टव्यम् । **आर्जवादिप्रतिपादकवाक्यजातं क्रोडीकृत**मिति;

"दानं यज्ञः सतां पूजा वेदधारणमार्जवम् ।
एष धर्मः परो ज्ञेयः फलवान् प्रेत्य नेह च ॥"

इति वचनजातमिति भावः । भावान्तरमेवाभाव इत्यभिप्रेत्याह — **अभास्वरत्व**मिति । **दैन्यशब्दविवरण**मिति । भास्वरत्वाभावो दैन्यादिरूपत्व इति मतमालम्ब्याह - **भास्वरत्वविरोधी**ति । **चशब्दो भिन्नक्रम** इति; 'तज्जं च' इत्यर्थं भिन्नक्रम इत्यर्थः । देशकालवैगुण्यात् शोकवस्त्वाद्यनुस्मृतेर्दैन्यम्, तज्जं चेत्यर्थः । दैन्यशब्दस्य तज्जशब्दात् प्राक् प्रयोगाभावे तच्छब्दस्य दैन्यपरामर्शाभावप्रसङ्ग इति द्रष्टव्यम् । **यद्वा भिन्नवाक्यत**येति । अस्मिन् पक्षे 'तज्जं दैन्यम्' इत्यस्य वाक्यस्य भेदः, तस्य च पश्चात् प्रयोगः, 'तच्च तज्जं दैन्यम्' इति तच्चेत्यस्याध्याहारदोष इत्याद्यस्वरसो बोध्यः ।

(विद्याञ्चेति श्रुत्यर्थः)

**अस्य वाक्यस्यार्थमुपजीव्ये**ति । "कषायपक्तिः कर्माणि" इति वाक्यस्यार्थमित्यर्थः । **उभयोरपि निरासकं स्यादिति तद्व्यावृत्त्यर्थ**मिति । उभयोरपि निरासकं दृष्टम्; तद्वत् कर्मापि स्वप्राचीनं कर्मेव स्वोत्तराघमपि निरस्यत्विति शङ्काव्यावृत्त्यर्थमित्यर्थः । केचित्तु — 'प्राचीनम्' इत्येतत् न कर्मापेक्षया प्राचीनपरम्; अनेकजन्मशतानुष्ठीयमानकर्मजातमनुद्भूतावयवभेदम् 'अविद्यया' इति परामृश्यते; तत्र च यदि प्राचीनपदं तत्प्राचीनपरामर्शि, तदा तादृशस्यैव कर्मणो विनाशे तदनन्तरभाविनां विनाशो नास्तीत्युपपादितं स्यात् । न चैतदिष्टम् । न चाविद्याशब्दोऽन्त्यकर्ममात्रपरामर्शीति शक्यं वक्तुम्; "कषाये कर्मभिः पक्वे" इत्यादिविरोधात् । तैस्तैः कर्मभिस्तत्तत्पूर्वभाविनां विनाश इत्येतत्परमपि न वाक्यम्; तथा हि सति आद्येनैव कर्मणा तत्पूर्वभाविनां विनाशप्रसङ्गात्; 'तीर्त्वा' इत्युक्ते उत्तराश्लेषशङ्काया अप्यभावेन तच्छङ्काया अप्यव्यावर्त्यत्वात्; तदुत्तरक्षण एव

ज्ञानोत्पत्तिप्रसङ्गाच्च । अतो भाष्ये प्राचीनपदमनेकजन्मार्जितमपि सर्वं ज्ञानप्राचीनं कर्म व्यपोह्येति साकल्यसूचनार्थमेव । न तु कर्मप्राचीनपरतया केषांचिन्मृत्युशब्दितानां निवर्त्यत्वपरम् ; तस्यानुपयुक्तत्वादिति मन्यन्ते । **प्राप्य स्थित इति हि तद्योजनेति।** तन्मते तरतिः प्राप्तिवचन इति भावः । **इति वा शंकराभिमतयोजना स्यादिति।** संभावनायां लिङ् । संभवार्थिके (संभाविते?) त्यर्थः । ततश्च विद्याम् अन्तःकरणवृत्तिम्, अविद्यां तत्कारणं च कार्यकारणरूपेण सहिते यो वेद, सः अविद्योपादानकत्वेन तन्मय्या अन्तःकरणवृत्त्या तदुपादानं **मृत्युमविद्यां** तीर्त्वा **विद्यया** स्वरूपभूतज्ञानेनोपलक्षितममृतत्वमश्नुत इति परैर्योऽर्थो वर्णितः, सोऽनुवादस्याप्यनर्ह इति सूच्यते । अङ्गिज्ञातव्यत्वोक्तावङ्गज्ञातव्यत्वस्यानुक्तसिद्धत्वात् तत्समुच्चये प्रयोजनमान्द्यादन्यथा व्याचष्टे – **यद्वा धर्मे चेति** । समुच्चेतव्ययोर्विरोधिनोः क्लेशगम्यत्वादुक्तार्थसमुच्चयपरतया व्याचष्टे – **यद्वा प्रतिपदद्योतकाविति** । " धर्मे चार्थे च " इति श्लोके चशब्दस्य विरोधिसमुच्चयपरत्वमुक्तसमुच्चयपरत्वं च व्याख्यातृभिर्व्याख्यातमिति तस्य दृष्टान्ततयोभयत्राप्युपादानं युक्तमिति द्रष्टव्यम् । **पुण्यपापे उभे अपीति** । " ज्ञानविरोधि च कर्म पुण्यपापरूपम् " इति भाष्यावतारिकानुसारात् " ब्रह्मज्ञानोत्पत्तिविरोधित्वेन " इत्युत्तरभाष्यस्य, ततः किमित्यत्राहेत्यवतारिका देयेति मन्यते(न्ते)। **न तन्मात्रपापान्तरविषयः पाप्मशब्द इति** । "सर्वे पाप्मानः" इत्यत्र पाप्मशब्दस्य दुष्कृतशब्दानुक्तपापमात्रविषयत्वसंभवेऽपि पापशब्दस्य तन्मात्रविषयत्वासंभवात् , " अपहतपाप्मा ह्येष " इति सकलहेयनिवृत्तिसंवादिसमनन्तरवाक्ये सुकृतविषयत्वावश्यंभावात् तावताप्यस्माकं समीहितसिद्धेरिति भावः । केचित्तु - " सर्वे पाप्मानः " इत्यत्र पाप्मशब्दो न दुष्कृतशब्दानुक्तपापान्तरवाचीत्येवार्थः, शब्दस्वारस्यात् । न चैवं समनन्तरवाक्यस्थपाप्मशब्दस्य सर्वपरत्वं पूर्ववाक्यस्थपाप्मशब्दस्य सर्वपरत्वे कथं हेतुः स्यादिति वाच्यम्, एकप्रकरणस्थयोः शब्दयोर्वैरूप्यस्यासति बाधकेऽयुक्तत्वादिति वर्णयन्ति । ननु " अपहतपाप्मा ह्येषः " इति वाक्येऽपि[अपहत?]पाप्मशब्दस्यानुक्तकतिपयपापनिवृत्तिरित्यर्थोऽस्त्वित्याशङ्क्याह – **न ह्यनुक्तकतिपयपापनिवृत्त्युक्ताविति। शोकादिषु पाप्मशब्दस्यामुख्यत्वेऽपीति** । " अपहतपाप्मा विजरो विमृत्युर्विशोकः " इति वाक्ये शोकादीनां पाप्मशब्दापेक्षया पृथक्कीर्तनादनुगतप्रवृत्तिनिमित्ताभावाच्च शोकादिषु पाप्मशब्दस्य गौणत्वसंभवेऽपि

मुकृतेऽनुगतप्रवृत्तिनिमित्तसत्त्वेन गौणत्वासंभवात् । न च छत्रिन्यायेन लक्षणास्वीकारे वृत्तिद्वयविरोधान्न कस्यापि मुख्यत्वमिति वाच्यम् - तथापि "सृष्टीरुपदधाति" इत्यादाविव भूम्ना लक्षणासंभवे, "प्राणभृत उपदधाति" इत्यादिवत् लैङ्गसमवायमात्रेण गौण्या वृत्त्या अनाश्रयणीयत्वादिति भावः । केचित्तु - वृत्तिद्वयविरोधो न दूषणमित्यभिप्रेत्यैतदुक्तमिति वदन्ति । अन्ये तु, "कालजरामृत्युशोकादयः संख्यातत्वात्" इति वाक्यकारवचनानुसारात् शोकादिष्वपि पापशब्दस्य मुख्यत्वमेव । अमुख्यत्वेऽपि न क्षतिः ; तावता पाप्मशब्दप्रयोगविषयत्वसाधारण्यस्य हेतुत्वाभावेऽपि प्रवृत्तिनिमित्तसाधारण्यात् "धर्मेण पापम्" इत्यत्र मुख्यत्वमेवेत्यर्थ इति वदन्ति ।

( उन्निनीषावाक्यार्थः )

**यद्वृत्तद्वयमिति** । "यमुन्निनीषति", "यमधो निनीषति" इति यच्छब्दद्वयमित्यर्थः । **ज्ञानप्रदानद्वारककारयितृत्वविषयमवसीयत** इति । यद्वृत्तद्वयाभिप्रेतस्य पुण्यपापाख्यस्य कर्मणः स्वर्गनरकहेतुभूतकर्मकारयितृत्वप्रयोजकोन्निनीषाधोनिनीषाहेतुत्वमस्माद्वाक्यात प्रतीयत इत्यर्थः । ततश्च कर्मणां कर्मप्रयोजकत्वं ज्ञानद्वारकमिति सिध्यतीत्यर्थः । नन्वेतावता पापशब्दितस्यासाधुकर्मकर्तव्यताज्ञानद्वारा नरकहेतुभूतकर्मानुष्ठानहेतुत्वसिद्धावपि न सम्यग्ज्ञानोत्पत्तिप्रतिबन्धकत्वं सिध्येदिति चेत्, निषिद्धे कर्मणि बलवदनिष्टजनकत्वलक्षणसम्यग्ज्ञानप्रतिबन्धकत्वाभावे तत्र प्रवृत्तेरेवानुदयप्रसङ्गेनावश्यं सम्यग्ज्ञानप्रतिबन्धकत्वस्य वक्तव्यत्वात् ब्रह्मज्ञानप्रतिबन्धकत्वमपि सिध्यति । इतरथा दुरितकर्मप्रवृत्तेरेवासंभवात् । **सर्वकर्मदेवतासामान्यविषयमिति** । "बुद्ध्या संयोजयन्ति तम्" इति बुद्धेर्वेद्यरूपकर्मविशेषानुपादानात् सर्वविषयकज्ञानप्रतिबन्धकत्वमेव सिध्येत्, न तु भगवद्विषयमोक्षहेतुज्ञानप्रतिबन्धकत्वम् । तथा, "न देवा यष्टिमादाय" इति देवतासामान्योपादानात, "एष ह्येव" इति विवक्षितस्य भगवत एव कारयितृत्वस्य न लाभ इत्यर्थः । **सम्यग्ज्ञानसामान्यान्तर्भावादिति** । इदमुपलक्षणम् - भगवतोऽपि देवतासामान्यान्तर्भावादित्यपि द्रष्टव्यम् ।

( धर्मेण पापमित्येतदर्थः )

**पूर्वमेव शिक्षित इति** । अत इदानीमयुक्तिर्न दोषायेति भावः । **अत्र श्रूयमाणत्वादिति** । "धर्मेण पापमपनुदति" इति प्रकरणे "तस्माद्यज्ञं परमं वदन्ति",

" तस्मात् सत्यं परमं वदन्ति " इत्यादिवाक्येषु श्रूयमाणत्वादित्यर्थः । **अपनुदेदिति ह्यर्थः स्यादिति** । ननु पापशब्दस्य तादात्विकानिष्टसाधनत्वरूपार्थाश्रयणे स्वर्गार्थेन कर्मणा कस्यचित् पुंसस्तत्कालविशेषेऽनिष्टपुत्रपश्वादिसाधनकर्मणामपि विनाशप्रसङ्ग इति चेत् - न — योगसिद्ध्यधिकरणोक्तन्यायेन ( मी. ४ - ३ - १२ ) फलान्तरार्थमनुष्ठितस्य कर्मणस्तस्मिन्नेव प्रयोगेऽनिष्टपश्वादिसाधनपापनिवर्तकत्वासंभवात् । प्रकृते च " यज्ञेन " इत्यादिवाक्येन विनियुक्तानां यज्ञादीनां द्वारविशेषाकाङ्क्षायां " धर्मेण पापमपनुदति " इत्यस्य द्वारविशेषसमर्पकतया विद्यार्थमनुष्ठितेनापि पापनिवृत्त्युपपत्तेः । **पापशब्दवाच्यान्तर्भावाच्चेति** । ननु धर्मत्वेन प्रसिद्धानां ज्योतिष्टोमादीनां मुमुक्षु प्रत्यनिष्टसाधनत्वेन तं प्रति पापत्वे, यस्य पुंसो यदा यदनिष्टम् , तं प्रति तदा तस्याधर्मत्वप्रसङ्गेन व्यवस्था न स्यादिति चेत् - न । इष्टापत्तेः । पुरुषविशेषं प्रत्येव धर्माधर्मव्यवहारात् । **तत्** इत्यस्य तस्मादित्यर्थकत्वमभिप्रेत्य व्याचष्टे - **श्रुतिस्मृतीति** । **एवम्** इति व्याख्येयं पदम् । उपायप्रतिबन्धकनिरासार्थमिति छेदः । **अतः ब्रह्मज्ञानस्य फलाभिसंधिरहिताश्रमकर्मसापेक्षत्वादिति** । नन्वेतावता ब्रह्मोपासनस्य कर्मसाध्यस्य तद्विचारसापेक्षत्वेऽपि न ब्रह्मविचारस्य तदपेक्षेति चेत् — न - कर्मोपासनयोः शेषिणोरनुष्ठानक्रमेणैव शेषभूतयोस्तद्विचारयोरपि क्रम इत्याशयात् । ब्रह्मविचारापेक्षिताधिकारिविशेषणीभूतकर्मास्थिरफलत्वज्ञानादिनिष्पादकत्वमप्यस्तीत्याहेत्याह — **ज्ञानं हीत्यादिना** ।

## ( साधनचतुष्टयपूर्ववृत्तत्वनिरासः )

**साधनसप्तकं चेति** । विवेकविमोकादीत्यर्थः । **इत्यारभ्येति** । " नित्यानित्ययोर्वसन्तीति नित्यानित्यवस्तूनि, तद्धर्माः । नित्यानित्ययोर्धर्मिणोस्तद्धर्माणां च विवेको नित्यानित्यवस्तुविवेकः । एतदुक्तं भवति - मा भूत् ' इदमृतं नित्यम् , इदमनृतमनित्यम् ' इति धर्मिविशेषविषयो विवेकः । धर्मिमात्रयोर्नित्यानित्ययोस्तद्धर्मयोश्च विवेकं निश्चिनोत्येव । नित्यत्वं सत्यत्वम् ; तत् यस्यास्ति, तन्नित्यं सत्यम् । तथा चास्थागोचरः । अनित्यत्वमसत्यत्वम् ; तद्यस्यास्ति तदनित्यमनृतम् । तथा चानास्थागोचरः । तदेतेष्वनुभूयमानेषु युष्मदस्मत्प्रत्ययगोचरेषु विषयविषयिषु यदृतं नित्यं सत्यं सुखं व्यवस्थास्यते तत् आस्थागोचरो भविष्यति । यत्त्वनित्यमनृतं

भविष्यति, तत् नावश्यमपरीतं त्यक्ष्यत इति । सोऽयं नित्यानित्यवस्तुविवेकः प्राग्भवीयाद्वा, ऐहिकाद्वा कर्मणो विशुद्धसत्त्वस्य सत्यनुभवोपपत्तिस्यात्" इत्यन्तेन ग्रन्थेनेति शेषः । 'इदं नित्यम्, इदमनित्यम्' इति विशेषनिश्चयाभावेऽपि नित्यत्वानित्यत्वयोर्धर्मिभ्यां भवितव्यमित्येवं योऽयं सामान्यनिश्चयः, स एव नित्यानित्यवस्तुविवेकशब्दार्थ इति भावः । "नित्यस्य धर्मिणो नित्यत्वं सत्यत्वम्" इति पाठः कोशेषु दृश्यते । तत्र 'नित्यस्य' इत्येतत् स्वरूपकथनपरम् । यस्य धर्मिणो नित्यत्वं सत्यत्वं च तस्योपादेयत्वम्, यस्य धर्मिणोऽनित्यत्वमसत्यत्वं, तस्य हेयत्वमित्येवं विवेक इति पर्यवसितार्थः । 'यस्य धर्मिणः' इति पाठस्तु सुगम एव । **निरूपकस्य तु हेयमिति चेदिति**; अनित्यमिति शेषः । **आद्यन्तयोरिति** । साधनानुष्ठानफलानुभवदशयोरित्यर्थः । **तस्यैतन्नैराकाङ्क्ष्याच्च पूर्ववृत्तत्वानुपपत्तिरिति** । तस्यागमान्तरस्य ब्रह्मविचारनैराकाङ्क्ष्यापादकत्वादित्यर्थः । अत एवोपसंहारेऽपि तथैव वक्ष्यति — "शास्त्रान्तराणां ब्रह्मविचारनैराकाङ्क्ष्यापादकत्वात्" इति । **स्वार्थोपयोगित्वादिति** । आरम्भोपयोगित्वादित्यर्थः । **तत्त्वत्यन्यायाधीन इति** । आवृत्तिविधानाद्यधीन इत्यर्थः । **किंचाद्यसूत्रादिति** । यद्यपि सूत्रस्य विषयप्रयोजनाधिकारिप्रतिपादनपरत्वेऽपीदृशान्योन्याश्रयस्य सुवचत्वात् शास्त्रारम्भोपयोगवर्णनसूत्रमात्रस्योच्छेदप्रसङ्गः, तथाप्याद्यसूत्रस्य शास्त्रान्तराप्रामाण्यादिप्रतिपादनपरत्वेन परैर्व्याख्यातत्वादित्यत्र तात्पर्यात् । अत एव "किंच अनित्यफल —" इति दूषणान्तरोपन्यासेन स्वर्गादिफलानित्यत्वावगतौ शास्त्रान्तरस्वोत्प्रेक्षिततर्कयोरिवोत्थापनम्, न तु शास्त्रारम्भसूत्रस्येति द्रष्टव्यम् । **शास्त्रान्तरदौर्बल्यमेव वा स्वशास्त्रप्राबल्यमेव वेति** । स्वशास्त्रप्राबल्यविनाकृतशास्त्रान्तरदौर्बल्यं वा, शास्त्रान्तरदौर्बल्यविनाकृतस्वशास्त्रप्राबल्यं वेत्यर्थः । **समुच्चितमुभयं वेति** । शास्त्रान्तराणां दौर्बल्यं स्वशास्त्रप्राबल्यं चेत्यर्थः । **स्वशास्त्रस्य दौर्बल्य इति** । स्वशास्त्रप्राबल्याभावे शास्त्रान्तरसमानयोगक्षेमत्वादित्यर्थः ।

**अत एव दुःखत्रयाभिघातज्ञानस्येति** । न च "तापत्रयातुरैरमृतत्वाय स एव जिज्ञास्यः" इति भाषणात् तद् विरुध्येतेति शङ्क्यम्, तस्यापि कर्मविचारजन्यकर्माल्पास्थिरफलत्वज्ञानाभिप्रायत्वेनादोषात् । ननु कर्मविचारजन्यायाः

कर्मणामल्पास्थिरफलत्वादिप्रतीतेरनन्तस्थिरफलाभिलाषस्य च पराभिमतसाधनचतुष्टय-संपत्तिरूपत्वसंभवान्न विरोध इति चेत्, सत्यमविरोधः - तथापि, "अथातः शेषलक्ष-णम्" इत्यादिवत् पूर्वपूर्वाध्यायविचारस्य पूर्ववृत्तत्वं युक्तमित्यत्र भाष्यकृतः संरम्भ इ(?)।

**व्याख्येयस्वभावात् क्रमनियम उक्तः । व्याख्यानस्वभावादपि तत्सिद्धिरिदानीमुच्यत** इति । वेदद्वारा व्याख्येययोः कर्मोपासनरूपशेषिणोः कार्यकारणभावेन पौर्वापर्यात् तच्छेषभूतविचारयोरपि पौर्वापर्यमुक्तम् । अधुना कर्म-काण्डोक्तन्यायोपजीवित्वादस्य शास्त्रस्य पौर्वापर्यमुच्यत इत्यर्थः । **इदं प्रदर्शनार्थ-मुक्तमिति** । अयमभिप्रायः - "**एषां साधनत्वं च विनियोगादवसेयम्**" इति भाष्यपर्यालोचनायां तृतीयाध्यायव्युत्पाद्यश्रुतिलिङ्गादिनिर्णेतव्यसाधनताकत्वात् साधन चतुष्टयस्य तत्पूर्ववृत्तत्वमिति प्रतीयते । न च तद्युक्तम्; तर्कशास्त्रव्युत्पादितप्रत्यक्ष-प्रमाणतदितिकर्तव्यताभूततर्कादिग्राह्यकारणताकत्वात् कर्मविचारस्य तर्कशास्त्रस्यापि तत्पूर्ववृत्तत्वप्रसङ्ग— इति वाचाटवचसोऽप्यवकाशप्रसङ्ग इ (ङ्गादि?) ति न शङ्क्यम्— अत्र व्युत्पाद्यानां बहूनां प्रायेण तन्निर्णयसापेक्षत्वात् तदुपजीवित्वमित्यत्र भाष्यस्य तात्पर्यादिति ।

## ( पूर्वमीमांसार्थसंग्रहः )

**प्रमाणलक्षणं वृत्तमिति** । विध्यर्थवादमन्त्रनामधेयस्मृत्याचारवाक्यशेष-सामर्थ्यात्मकप्रमाणस्वरूपं वृत्तमित्यर्थः । **शास्त्रभेदो वेति** । इदं तु गुरुमते द्रष्टव्यम् । **भेदहेतव** इति । यजति, जुहोति, ददाति इति चोदनासु यजत्यादि-धातुभेदरूपेण शब्दान्तरेण यागदानहोमानां भेदः; "समिधो यजति" "तनूनपातं यजति" इत्यादिविधिषु 'यजति' इति पञ्चकृत्वोऽभ्यासेनाविशेषपुनःश्रुति-रूपेण प्रयाजानां भेदः; "सप्तदश प्राजापत्यान् पशूनालभते" इत्यत्र देवतासबन्ध-भेदिन्या सप्तदशसंख्यया तदनुमेययागानां भेदः; "अथैष ज्योतिः" इत्यादि-वाक्येषु ज्योतिरादिनामधेयैस्तन्नामकयागानां प्रकृतज्योतिष्टोमाद्भेदः; "तप्ते पयसि दध्यानयति; सा वैश्वदेव्यामिक्षा । वाजिभ्यो वाजिनम्" इत्यत्रामिक्षारूपगुणान्तरावरुद्धे यागे निवेशमलभमानेन वाजिनगुणेन वाजिनयागस्यामिक्षायागात् भेदः; प्रकरणान्तरेण नित्याग्निहोत्रात् मासाग्निहोत्रस्य भेद इत्येवं शब्दान्तरादिभिर्भेदः प्रतिपाद्यत इत्यर्थः ।

श्रुतिलिङ्गेति । निरपेक्षशब्दः श्रुतिः । सा त्रिधा – विधात्री, अभिधात्री, विनियोक्त्री चेति । लिङ्गादिश्रुतिर्विधात्री । इन्द्रादिश्रुतिरभिधात्री । विनियोक्त्री त्वेकप्रत्ययरूपा, एकपदरूपा, विभक्तिरूपा चेति त्रिधा । तत्राऽऽद्या – "पशुना यजेत" इत्यत्र तृतीया । सा हि स्वोक्तकरणकारकं प्रति स्वोक्तैकत्वरूपसंख्यायाः शेषत्वमर्पयति । द्वितीया, "यजेत" इति पदम् । तेन प्रत्ययोक्तभावनां प्रति प्रकृत्युक्तयागस्य शेषतोपनीयते । तृतीया शेषित्वबोधिका शेषत्वबोधिका चेति द्विधा । "व्रीहीन् प्रोक्षति" इत्यादिषु द्वितीया व्रीह्यादीनां प्रोक्षणादिक्रियां प्रतीप्सिततमत्वरूपशेषित्वबोधिका । "क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छति" इत्यत्र चतुर्थीश्रुतिः मैत्रावरुणस्य प्रदानक्रियेप्सितमेन कर्मणाभिप्रेयमाणत्वरूपशेषित्वबोधिका । "अरुणया क्रीणाति" इत्यत्र क्रयभावनां प्रत्यारुण्यस्य, चात्वालान्मृदमाहरति" इत्यत्र मृदाहरणक्रियां प्रति चात्वालस्य, "वेद्यां हवींष्यासादयति" इत्यत्र हविरासादनक्रियां प्रति वेद्याश्च तृतीयापञ्चमीसप्तम्यः शेषत्वबोधिकाः । षष्ठी तु कचित्, "दध्नेन्द्रियकामस्य जुहुयात्" इत्यत्र शेषित्वबोधिका, "यजमानस्य याज्या" इत्यादौ शेषत्वबोधिका च । संबन्धमात्रेऽनुशिष्टायाः षष्ठ्या योग्यताद्यनुसारेणोभयथापि पर्यवसानसंभवात् । वस्तुसामर्थ्यं लिङ्गम् । तद् द्विविधम् – शब्दसामर्थ्यमर्थसामर्थ्यं चेति । तत्र "बर्हिर्देवसदनं दामि" इति मन्त्रस्य लवनप्रकाशनसामर्थ्यरूपाल्लिङ्गाल्लवनशेषता । "स्वधितिनाऽवद्यति" "स्रुवेणावद्यति" "हस्तेनावद्यति" इत्यवदानसामान्ये साधनत्वेन श्रुतानां स्वधित्यादीनां तत्तत्सामर्थ्यरूपाल्लिङ्गात् विशिष्य मांसद्रवद्रव्यपुरोडाशाद्यवदानेषु शेषता । शेषत्वस्य शेषित्वस्य वा बोधिकया श्रुत्या रहितपदसमभिव्याहारो वाक्यम् । यथा "अग्निहोत्रं जुहुयात् स्वर्गकामः" इति; यथा वा "मैत्रावरुणः प्रेष्यति चान्वाह च" इति । न हि होमभावनां प्रति स्वर्गस्य भाव्यत्वेन शेषित्वबोधिका द्वितीयादिश्रुतिः, प्रैषानुवचनं वा प्रति मैत्रावरुणस्य कर्तृत्वेन शेषत्वबोधिका तृतीयादिश्रुतिर्वास्ति । प्रथमा तु प्रातिपदिकार्थमात्रेऽनुशिष्टा । अतः पदसमभिव्याहाररूपेण वाक्येन शेषशेषिभावबोधः । विधिवाक्येन कर्तव्यतयावगतस्य 'केन प्रकारेण कर्तव्यम्?' इति विशिष्याज्ञायमानस्येतिकर्तव्यताकाङ्क्षा प्रकरणम् । तद् द्विविधम् – महाप्रकरणमवान्तरप्रकरणं चेति । तत्राद्येन दर्शपूर्णमासादिकं प्रति प्रयाजादीनाम्, द्वितीयेन प्रयाजादिकं

प्रत्यभिक्रमणादीनां च तत्तत्संनिधिसमाम्नातानां शेषता । स्थानं द्विविधम् — यथासंख्यं संनिधिश्चेति । तत्राद्येन ' दब्धिरस्यदब्धो भूयासम् " इति मन्त्रस्याग्नेयाग्नीषोमीय-मन्त्रद्वयमध्याम्नातस्य आग्नेयाग्नीषोमीययागद्वयमध्यानुष्ठेयोपांशुयाजशेषता । संनिधिस्तु—आम्नानसंनिधिः, अनुष्ठानसंनिधिश्चेति द्विविधः । आद्येन, " शुन्धध्वं दैव्याय कर्मणे देवयज्यायै " इति मन्त्रस्य महाप्रकरणावान्तरप्रकरणरहितसांनाय्यपात्रप्रोक्षणशेषता । द्वितीयेन पशुधर्माणामग्नीषोमीयपशुशेषता । समाख्या यौगिकी संज्ञा । सा लौकिकी वैदिकी चेति द्विविधा । 'होतृचमसः' इति वैदिकसमाख्यया होतुश्चमसभक्षणं प्रति, ' आध्वर्यम् ' इति याज्ञिकप्रसिद्धलौकिकसमाख्यया अध्वर्योरवघातादिकं प्रति च कर्तृत्वेन शेषतेत्येवं सापवादः शेषशेषिभावस्तृतीयाध्याये प्रपञ्चित इत्यर्थः ।

**पुरुषार्थैः क्रत्वर्थानाम्**इति । पुरुषार्थैः क्रतुभिः क्रत्वर्थानामित्यर्थः । शेषिभिः शेषाणां प्रयुक्तिरिति यावत् । शेष्येव विधेयं प्रयुङ्क्ते = स्वसिद्धयर्थमनुष्ठापयति, न त्वनुनिष्पाद्यपि । नापि शेषः शेषिणं प्रयुङ्क्ते । अनेकशेषिसद्भावेऽपि यत्रान्य-प्रयुक्तस्यैवान्यत्र विनियोगः, तत्र यत्प्रयुक्तस्यान्यत्र विनियोगः स एव शेषं प्रयुङ्क्ते, न तु शेष्यपि सन्नन्योऽपि । एवं च, " तप्ते पयसि दध्यानयति " इति वाक्ये विधीयमानस्य दध्यानयनस्य द्विकर्मकस्य कर्मान्तराकाङ्क्षायां समभिव्याहृतं पयः कर्मान्तरत्वेनान्वीयमानं सप्तम्या अधिकरणत्वेन निर्देशात् प्रधानकर्मतया पर्यवस्यतीति प्रकृतप्रधानभूतपयःपरामर्शिना तत्पदेन सामानाधिकरण्येन निर्दिष्टतया पयोरूप-त्वेनावगता आमिक्षैव शेषित्वात् शेषभूतं दध्यानयनमनुष्ठापयति ; न तु तदनुनिष्पादि वाजिनमपीत्यामिक्षापचार एव पयोन्तरे दध्यानयनस्य प्रयुक्तिः ; न वाजिनापचारे । " कृष्णविषाणया कण्डूयते", " चात्वाले कृष्णविषाणां प्रास्यति " इति कृष्णविषाणायाः कण्डूयनप्रासनरूपक्रियाद्वयान्वये सत्यपि कृष्णविषाणा तृतीयया कण्डूयनं प्रति शेषः ; प्रासनं प्रति तु द्वितीयया शेषिणीति निवृत्तकण्डूयनप्रयोजनिकाया-स्तस्याः प्रासनात् प्राक् अपचारे प्रासनार्थं न पुनः कृष्णविषाणान्तरोपादानप्रयुक्तिः । " पुरोडाशकपालेन तुषान् उपवपति " इत्यत्र पुरोडाशप्रयुक्तस्यैव कपालस्य तुषोपवापं प्रति शेषत्वेन विनियोगात्, यत्र पुरोडाशो नास्ति न तत्र तुषोपवापार्थं कपालप्रयुक्ति-रित्येवं सापवादा अनुष्ठापनशक्तिरूपा प्रयुक्तिर्निरूपितेत्यर्थः ।

श्रुत्यर्थेति । "अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति" इत्यादौ श्रुत्या दीक्षयोः क्रमः । "अग्निहोत्रं जुहोति", "यवागूं पचति" इत्यत्र होमपाकयोः प्रयोजनवशात् क्रमः । "समिधो यजति", "तनूनपातं यजति" इत्यादौ पाठक्रमात् क्रमः । "सप्तदश प्राजापत्यान् पशूनालभते" इति विहितप्राजापत्ययागाङ्गभूतेषूपाकरणनियोजनादिषु प्रथमप्रवृत्तोपाकरणक्रमानुरोधेनैव पशुषु नियोजनादीनां पाश्चात्यानां क्रमः । साद्यस्के सवनीयस्थाने, "सह पशूनालभते" इति सहालभ्यमानेष्वग्नीषोमीयसवनीयानुबन्ध्यपशुषु सवनीयस्थानानुरोधात् सवनीयस्य प्राथम्यम् । "सारस्वतौ होमौ भवतः" इति विहितस्त्रीपुंसदेवत्ययोः कर्मणोर्याज्यानुवाक्यावशात् स्त्रीदेवत्यस्य प्राथम्ये स्थिते तदङ्गभूतानामपि प्रधानक्रमेणैव क्रम इत्येवमादि क्रमलक्षणे निरूपितमित्यर्थः ।

**अधिकारिनिरूपणमि**ति । अधिकारः फलस्वाम्यम् । **सामान्यातिदेश** इति । 'तद्वदिदं कर्तव्यम्' इत्यतिदेशः । स च त्रिविधः; यथा — "समानमितरच्छ्येनेन" इति प्रत्यक्षवचनेन श्येनवैशेषिकाङ्गानामिषुनामके एकाहकतावतिदेशः । कुण्डपायिनामयनाग्निहोत्रे नाम्ना नैयमिकाग्निहोत्रधर्माणामतिदेशः क्रियते "मासमग्निहोत्रं जुहोति" इति । सौर्यादिषु विकृतिषु 'प्रकृतिवदङ्गानि कर्तव्यानि' इत्यानुमानिकवचनेन सामान्यतोऽतिदेशः सप्तमे निरूपित इत्यर्थः । **विशेषातिदेश** इति । 'अस्य कर्मण इदं कर्म प्रकृतिः' इति प्रकृतिविकृतिविशेषचिन्ता अष्टमे कृतेत्यर्थः । **ऊह** इति । प्राकृतपदार्थकार्यापन्नवैकृतपदार्थसंबन्धेन मन्त्रसामसंस्काराणामन्यथाभावात्मक ऊहो नवमे चिन्तित इत्यर्थः । **बाध** इति । कार्यमुखेन विकृतिं प्राप्तानां प्राकृताङ्गानां द्वारलोपप्रत्याम्नानप्रतिषेधपर्युदासैर्निवृत्तिः । यथा कृष्णलेष्ववघातस्य तुषविमोकरूपद्वारलोपान्निवृत्तिः; कुशैः शराणां प्रत्याम्नानान्निवृत्तिः; "न तौ पशौ करोति" इति प्रतिषेधेनाज्यभागयोः पशौ निवृत्तिः; महापितृयज्ञे "नार्षेयं वृणीते" इति पर्युदासेनार्षेयवरणनिवृत्तिः इत्येवं बाधो दशमे निरूपित इत्यर्थः । **तन्त्रप्रसङ्गा**विति । अनेकप्रधानोद्देश्यकसकृदङ्गानुष्ठानं तन्त्रम् । यथा - दर्शादित्रिकद्वयोद्देशेनानुष्ठीयमानानां देशकालकर्त्राद्यैक्यादगृह्यमाणविशेषतयाऽङ्गानां तन्त्रेणानुष्ठानम् । अन्योद्देशेनानुष्ठितेनान्यस्योपकारसिद्धिः प्रसङ्गः । यथा पश्वर्थानुष्ठितैरङ्गैः पशुतन्त्रमध्यपातिपुरोडाशस्योपकारसिद्धिरित्येवमेकादशद्वादशयोस्तन्त्रप्रसङ्गौ चिन्तिताविर्त्यर्थः ।

**संकर्षसापेक्षत्वं** चेति । "प्रदानवदेव तदुक्तम्" इत्यत्र "नाना वा देवतापृथक्त्वात्" इति न्यायसापेक्षत्वस्याविष्करिष्यमाणत्वादिति भावः ।

**अभ्युच्चययुक्तिरुच्यत** इति । अप्रधानार्थस्यापि साक्षात्संगतत्वेन तदपेक्षितत्वात कर्मविचारस्य पूर्ववृत्तत्वाश्रयणे, अस्मिन् शारीरकशास्त्रे ब्रह्मकारणत्वविरोधिशास्त्रान्तरप्रतिक्षेपस्यापि तत्पादे करिष्यमाणस्योपयुक्ततया सकलशास्त्रार्थविचारस्यापि पूर्ववृत्तत्वप्रसङ्गादभ्युच्चययुक्तिरित्युक्तम् । "कर्मसमृद्ध्यर्थत्वे तत्प्रयोजनं तन्निर्वचनात्" इत्येतावद्वाक्यकारवचनं द्रष्टव्यम् । **ब्रह्मदृष्टिरूपत्वात् ब्रह्मज्ञानसापेक्षणीत्यर्थ** इति । यद्यपि न सर्वेषामुद्गीथाद्युपासनानां ब्रह्मदृष्टिरूपत्वम्, "लोकेषु पञ्चविधं सामोपासीत", "वृष्टौ पञ्चविधं सामोपासीत" इत्यादौ तदभावात् — तथापि ब्रह्मदृष्टिरूपोद्गीथाद्युपासनविशेषाणां ब्रह्मदृष्टिरूपत्वात् ब्रह्मज्ञानापेक्षेत्यर्थः । यद्यप्युद्गीथाद्युपासनविशेषा भवन्तु ब्रह्मदृष्टिरूपा ब्रह्मज्ञानसापेक्षाः । नैतावता "तन्निर्धारणानियमस्तद्दृष्टेः —", "अङ्गेषु यथाश्रयभावः" इत्यादिषु क्रियमाणस्योद्गीथाद्युपासने क्रत्वर्थपुरुषार्थत्वविचारस्य ब्रह्मज्ञानसापेक्षत्वमस्ति ; अपि तु प्रसङ्गान्निरूपणम् — तथापि "ब्रह्मदृष्टिरुत्कर्षात्" इत्यादिषु ब्रह्मदृष्टित्वपुरस्कारेण प्रवृत्तेषूद्गीथाद्युपासनविचारेषु ब्रह्मज्ञानसापेक्षत्वमस्तीत्यभिप्रायः । ननु "ब्रह्मदृष्टिरुत्कर्षात्" इति विचारस्य "मनो ब्रह्मेत्युपासीत" इति मनआदिसाधारण्यात् मनआदिस्वरूपशोधकसांख्याद्यागमस्याप्युपजीव्यत्वप्रसङ्गेन पूर्ववृत्तत्वप्रसङ्ग इति चेत् - न ; एतस्याभ्युच्चययुक्तितयैतादृशातिप्रसङ्गस्यादोषत्वात् । **ब्रह्मविद्यां शीघ्रं संपादयन्तीत्यर्थ** इति । न च ब्रह्मज्ञानसापेक्षाणामेषां ब्रह्मविद्योत्पादकत्वं वरुद्धमिति वाच्यम् — आगमोत्थब्रह्मज्ञानसापेक्षस्योद्गीथोपासनस्य विवेकादिजन्योपासनाङ्गत्वेऽविरोधात् । ततश्च ब्रह्मविद्योत्पादकशमदमादिचिन्तनवदेतच्चिन्तनमप्यत्र संगतमित्यर्थः । **अन्यतरापेक्षयोभयापेक्षया** वेति । अयं भावः — "ब्रह्मजिज्ञासा" इति सूत्रे ब्रह्मानुबन्धिनां सर्वेषां विचार्यत्वं प्रतिज्ञातम् । अतस्तदुपासनतत्फलतदनुबन्धिविचारस्य सर्वस्य प्रतिज्ञाततया तत्संगतिः साक्षात्संगतिः । ततश्चोपासनापेक्षिततयोपासनानुबन्धित्वमप्यस्ति ; ब्रह्मदृष्टिरूपत्वात् ब्रह्मानुबन्धित्वमप्यस्ति । अतः केवलोपासनमात्रानुबन्धिशमाद्यपेक्षया-

प्यभ्यर्हितत्वमिति । **कर्माङ्गाश्रयत्वं पूर्वभागविचारसंगते**रिति । अन्ततो गत्वा इदमपि केवलकर्मविद्याङ्गकर्मसाधारणत्वात् साधारणमित्यभिप्रायः । **प्रागुक्तसंगतिविशेषविशिष्टत्वात्तयो**रिति । ननु कर्मब्रह्मविचारयोः पौर्वापर्यविचारदशायां कथं तत्सिद्धवत्कारेण, 'न हि कर्मविचारात् पूर्वं ब्रह्मविचार उपपद्यते, संगतिविशेषविशिष्टत्वात् तयोः' इत्युक्तिरिति चेत् - न ; क्रमविशेषनियामकसंगतिविशेषविशिष्टाविरुद्धावान्तरवाक्यार्थैकप्रयोजनत्वरूपशास्त्रैक्यस्यैव कर्मविचारपूर्ववृत्तत्वे प्रधानयुक्तितया अन्यस्याभ्युच्चययुक्तित्वेन, सिद्धवत्कृत्य कथने दोषाभावात् । **वैषम्यत्रयविशेषिताया** इति । उभयापेक्षायाः साम्येऽपि कर्मविचारे कर्तुमशक्यत्वादुपनिषद्भागविहितत्वाच्च सूत्रकृतेह शास्त्रे विचारितमिति ब्रह्ममीमांसाविचारितत्वमेव फलतया वक्तुमुचितम् , न तु ब्रह्ममीमांसाविचारितत्वमपि हेतूकर्तुमुचितमिति चेत् — न ; - वैषम्यद्वय एव तात्पर्यादिति केचित् । अन्ये तु सूत्रकाराणां स्वतन्त्रेच्छत्वात् जैमिनिना न कृतम्, बादरायणेन कृतमित्यपि युक्त्यन्तरप्रदर्शकं तदिति वदन्ति । **नियमेनापेक्षितत्वरूपः प्रधानहेतु**रिति । ननु यागस्य देवतोद्देशेन द्रव्यत्यागरूपत्वात् देवताविचार एव सर्वापेक्षया पूर्वभावी किं न स्यात् ? किंच अथशब्दस्य देवताविचारानन्तर्यमवश्याश्रयणीयम् , न तु व्यवहितकर्मविचारानन्तर्यमिति चेत् - उच्यते - संकर्षकाण्डोऽप्यविचारितकर्मविशेषविषय एव । जैमिनिर्हि द्वादशलक्षणीं प्रणीय तत्राविचारितांशमालोच्य पुनरपि चतुर्लक्षणीं प्रणिनायेति प्रसिद्धिः । अत एव हि "संहितमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेन" इति वृत्तिग्रन्थोऽपि संगतः । अत एव "प्रदानवदेव—"इत्यधिकरणे भाष्ये यत् संवादतयोपात्तम् "नाना वा देवता पृथक्त्वात्" इति तज्जैमिनीय एव दृश्यते, न तु देवताकाण्डे काशकृत्स्नीये । अतोऽपि संकर्षः कर्मविषय एव । तत्रैव केषांचिद्देवताकाण्डत्वव्यवहारोऽप्यस्तीति । भाष्ये — **सर्वसंमते**ति । सर्वेषां संमता सर्वसंमतेति शेषलक्षणषष्ठ्याः समासः "क्तस्य च वर्तमाने" इति षष्ठ्यास्तु, "क्तेन च पूजायाम्" इति निषेधादिति द्रष्टव्यम् । **वक्ष्यमाणवस्तुसामर्थ्यान्तर्भूत** इति । ततश्च तत्परिहार एवास्यापि परिहार इति भावः ।

( महापूर्वपक्षारम्भः )

**अपिनोपपादयिष्यमाणस्येति** । अपिर्हि “ अपिः पदार्थसंभावनान्ववसर्गगर्हासमुच्चयेषु ” इति समुच्चयार्थकत्वेनान्वाचयार्थकत्वाभावात् प्राधान्यार्थक एवेति भावः । यद्वा निपातानामनेकार्थत्वात् प्राधान्यद्योतकत्वमिति भावः । **वक्ष्यमाणश्रावादय** इति । विशेषपदविवरणरूपास्त इति भावः । विजातीयादिनिवृत्तिपरस्य “सदेव” इत्यादिवाक्यस्य प्रतिज्ञातार्थप्रमाणतयोदाहरिष्यमाणत्वात् विशेषपदस्य विजातीयादिपरत्वमेवोचितमित्यभिप्रायेणाह – **विजातीयसजातीयस्वगता** वेति । **अन्वयिनो व्यावृत्तिरूपाश्चे**ति । भावरूपा अभावरूपाश्चेत्यर्थः । विशेषसहिष्णोः ब्रह्मणः कथं तत्प्रत्यनीकत्वमित्याशङ्क्याह-**स्वज्ञानेन निवर्तक**मिति । **तुच्छता(शून्यता)स्या**दिति । सर्वप्रमाणानां सविशेषविषयत्वादिति भावः । ज्ञेयत्वस्याप्यशेषशब्देन क्रोडीकृतत्वान्मात्रचा तद्व्यवच्छेदो व्यर्थ इत्यन्यथा व्याचष्टे - **यद्वा प्रत्यनी**केति । ‘प्रत्यनीकम्’ इति निर्देशात् प्रत्यनीकत्वरूपो धर्मोऽनुवर्तेत इत्याशङ्काया निवर्तनीयत्वादिति भावः । इदमप्यशेषपदसामर्थ्यात् सिध्यतीत्यन्यथा व्याचष्टे - **यद्वा मात्रचा वस्तुतः समस्ते**ति । न चाशेषविशेषप्रत्यनीकमित्यनेन सिद्धत्वात् पौनरुक्त्यं शङ्क्यम्, अशेषविशेषप्रत्यनीकमित्यस्याशेषविशेषनिवर्तकज्ञानविषयत्वमर्थः । इह तु सर्वदा तच्छून्यत्वमुच्यत इति भेदात् । **एवकारेण सगुणब्रह्मव्यावृत्तिरिति** । इदमुपलक्षणम् - निर्गुणस्यैव ब्रह्मणः पारमार्थिकत्वकथनात् तद्व्यतिरिक्तसगुणब्रह्मादेः प्रपञ्चस्य पारमार्थिकत्वं व्यावर्त्यत इत्यर्थः । उत्तरत्रैवकारस्य **तदतिरेकी**त्यादिग्रन्थेन तथा विवरणादिति द्रष्टव्यम् । **निषेध्यनानात्वं सिध्यतीति दर्शित**मिति । नानाशब्दस्य ब्रह्मव्यतिरिक्तनिषेध्येऽपि संभवद्वृत्तिकत्वेन ब्रह्मणोऽपि परामर्शस्यानपेक्षितत्वादिति भावः । [भाष्ये ?] **ज्ञातृज्ञेयतत्कृतज्ञानभेदे**ति । अत्र ज्ञाता च ज्ञेयं च तत्कृतज्ञानं च ज्ञातृज्ञेयतत्कृतज्ञानानि, तेषां भेदाः; भेदशब्दः प्रत्येकमभिसंबध्यते ; अत एवैकैककोटिष्ववान्तरभेदा इति वक्ष्यति । न चैवं भेदशब्दस्य सर्वान्वितत्वे ‘तत्कृतज्ञानभेदः = ज्ञातृज्ञेयावच्छिन्नवृत्तिज्ञानभेदः’ इति भेदशब्दस्य ज्ञानमात्रान्वितत्वप्रदर्शकोत्तरग्रन्थविरोध इति वाच्यम् – तेनाप्यन्वयसंभवेन तथा निर्देशोपपत्तेरिति द्रष्टव्यम् । **अनेन वृत्तिस्फुरिते**ति । **अनेन** = तत्कृतेति विशेषणेनेत्यर्थः । तदभावे ज्ञानशब्देन वृत्तिस्फुरितचैतन्यस्यैव ग्रहणं स्यात्, मृषावादि-

मते ज्ञानशब्दस्य वृत्तिस्फुरितचैतन्य एव प्रसिद्धेः । ततश्च ज्ञातृज्ञेयस्वरूपभेदवत् ज्ञानस्वरूपभेदस्यापि स्वरूपप्रयुक्तत्वप्रतीतिः स्यादिति तद्व्यावृत्त्यर्थं तत्कृतेत्युक्तमिति भावः । **विरोधं च स्फोरयत्येवकार** इति । न च पूर्वपक्षिग्रन्थे स्वमतविरोधस्फोरकत्वमयुक्तम्, स्वव्याघातकत्वादिति वाच्यम्; पूर्वपक्षानुवाददशायाम्, 'स्वरूपव्याक्रियैव निराक्रिये'ति न्यायेन विरोधमपि स्फोरयन् सान्तर्हासमनुवदतीत्यभिप्रायात्। केचित्तु प्रमाणसिद्धत्वात् विरोधमदोषत्वेन स्फोरयतीति व्याचक्षते। "—भूतं प्राप्यतीते समे त्रिपु" इति पाठात् 'पितृभूतोऽसौ' इत्यादिवत् भूतशब्दस्योपमानार्थकत्वशङ्कां व्युदस्यति - **मिथ्याभूतं मिथ्याभाववदिति** । उक्तं हि, "प्रमाणभूत आचार्यः" इति भाष्यं व्याकुर्वता कैयटेन — "प्रमाणभूत इति । प्रामाण्यं प्राप्त इत्यर्थः; भू प्राप्तावित्यस्मात् "आ धृषाद्वा" इति णिजभावे रूपम् । वृत्तिविषये च प्रमाणशब्दः प्रामाण्ये वर्तते" इति । तद्वदिहापि **मिथ्याशब्दो** मिथ्यात्वपरः । ततश्च मिथ्यात्ववदित्यर्थसिद्धिरिति भावः ।

( परमतश्रुत्यर्थः )

**सदेवेति विजातीयभेदो व्यावर्त्यते; एकमेवेति सजातीयभेदः; अद्वितीयमिति स्वगतभेद** इति । यद्यपि "एकमेवाद्वितीयम्" इति वाक्ये एकशब्देन स्वगतभेदनिरासः, एवकारेण सजातीयभेदव्युदासः, अद्वितीयपदेन विजातीयभेदव्युदास इत्येवं परैर्व्याख्यातम् । उक्तं च —

"वृक्षस्य स्वगतो भेदः पत्रपुष्पफलादितः ।
वृक्षान्तरात् सजातीयः, विजातीयः शिलादितः ॥
सदसद्वस्तुनोर्भेदत्रयं प्राप्तं निषिध्यते ।
ऐक्यावधारणद्वैतप्रतिषेधैस्त्रिभिः क्रमात् ॥"

इति — तथाप्यस्यापि प्रकारस्य तत्र तत्र व्याख्यातत्वादित्थमुपन्यस्तम् । अत एव शंकरभाष्ये कल्पतरौ च, 'सदेवेति सृष्टेः प्राक् नामरूपादि व्यावर्त्यते; एकमेवेत्यनेन महदादिकं स्वकार्यपतितं नास्तीति निषिध्यते; अद्वितीयमिति निमित्तान्तरं निषिध्यते' इत्युक्तम्; नाधिकम् । [ननु] "वृक्षस्य स्वगतो भेदः पत्रपुष्पफलादितः" इति

स्वगतभेदस्य पत्रपुष्पादिप्रतियोगिकत्वप्रतीत्या पत्रपुष्पादिलक्षणो भेद इति न प्रतीयते ; अपितु तत्प्रतियोगिकभेद एव प्रतीयते । अत्र ग्रन्थे तु सजातीयरूपो विजातीयरूपो भेद इत्युच्यते । कथमनयोरैकार्थ्यमिति न चोदनीयम् (?) — तथापि परव्यवहारदर्शनाददोष इति द्रष्टव्यम् । **तस्यैव प्रपञ्चना**दिति । " यथोर्णनाभिः " इत्यादिना भूतयोनित्वस्यैव प्रपञ्चनादित्यर्थः । **यस्ये**ति । यस्य ब्रह्म अमतम्=अविषय इति निश्चयः, तस्य तद्ब्रह्म मतम्=सम्यक् ज्ञातम् ; यस्य तु विषयतया ब्रह्म मतम्, न स ब्रह्म वेद ; अविज्ञातम् = विजानतां विषयत्वेनाविज्ञातम् ; यथावदविजानतां विषयत्वेन विज्ञातमित्यर्थः ।

**ज्ञातृत्वनिषेधपर**मिति । यद्यपि " न दृष्टेः " इत्यस्य दृष्टेः = चक्षुर्जन्याया अन्तःकरणवृत्तेः द्रष्टारम् = स्वरूपभूतचैतन्येन व्यापारं तस्या अपि भासकं तद्भास्यया चक्षुर्जन्यया अन्तःकरणवृत्त्या न पश्येः । प्रत्यगात्मा तद्गोचरो न भवतीति ज्ञेयत्वं प्रतिषिध्यत इत्येव परैरर्थोऽभिहितः—तथापि ज्ञेयत्वप्रतिषेधे ज्ञातृत्वनिषेधस्यापि सिद्धिमभिप्रेत्योक्तं **ज्ञातृत्वनिषेधपरं वाक्यमा**हेति । केचित्तु — मृषावाद्येकदेशिभिस्तथा व्याख्यातम् ; तदनुसारेणैतदुक्तम् ; योजनानन्तरं तु सिद्धान्ते, 'किं दृष्टेरिति पञ्चमी षष्ठी वे ' ति विकल्पमुखेन स्पष्टीकरिष्यतीति न तदनुपपादनं दोष इति मन्यन्ते ।

**सामानाधिकरण्ये**नेति छेदः । **सामानाधिकरण्यं हि बाधार्थं दृष्ट**मिति । सामानाधिकरण्यं हि चतुर्धा - अध्यासे सामानाधिकरण्यम् । अपवादे सामानाधिकरण्यम् । विशेषणविशेष्यभावे सामानाधिकरण्यम् ; ऐक्ये सामानाधिकरण्यं चेति । अध्यासे सामानाधिकरण्यम् " नाम ब्रह्मेत्युपासीत" इत्यादौ । अपवादे सामानाधिकरण्यं नाम, ' यद्रजतमभात् सा शुक्तिः ' इति ; पूर्वोत्पन्नरजतप्रतीत्यपवादार्थत्वात् सामानाधिकरण्यस्य । इदमेव हि बाधार्थसामानाधिकरण्यमित्युच्यते । विशेषणविशेष्यभावे सामानाधिकरण्यं नीलमुत्पलमित्यादौ । ऐक्ये सामानाधिकरण्यं कोकिलः पिक इत्यादौ ।

**विकारो घटादिसंस्थानं नामधेयं** चेति । अत्र चः एवार्थः ; स्वार्थे च धेयप्रत्ययः ; नामधेयं च नाममात्रमेव हीत्यर्थः । एवं हि

शारीरकशांकरभाष्यम् — "वाचारम्भणं विकारो नामधेयम् । वाचा केवलमस्तीत्यारभ्यते विकारः, घटः शराव उदञ्चनं चेति । न तु वस्तुवृत्तेन विकारो नाम कश्चिदस्ति । नामधेयमात्रं ह्येतदनृतम्; मृत्तिकेत्येव सत्यम्" इति । अतोऽयमपि ग्रन्थस्तदनुवादत्वात् तदनुगुण एव नेतव्यः । ननु, "अथ तस्य भयं भवति" इति वाक्यस्य, (स्यापि), "मृत्योः स मृत्युमाप्नोति" इति वाक्यानन्तरमुपादानं युक्तम्, अनर्थप्रतिपादकत्वसाधारण्यादित्यत्राह - **यदा ह्येवेत्यादेरिति । एकन्यायपरिहार्यत्वादिति ।** अब्रह्मात्मकनानात्वनिषेधपरत्वेन परिहार्यत्वादित्यर्थः । उभयलिङ्गत्वं साकारत्वं निराकारत्वं चेति पाठः । "न स्थानतोऽपि" इत्यधिकरणे श्रुतिबलात् सविशेषत्वनिर्विशेषत्वरूपलिङ्गद्वयसमुच्चय इति पूर्वपक्षस्य निरस्तत्वादिति द्रष्टव्यम् । केचित्तु - उभयलिङ्गत्वं साकारनिराकारत्वं साकारत्वं चेत्यन्वयः । तस्मिन्नधिकरणे उभयलिङ्गत्वरूपस्य साकारनिराकारत्वस्यान्यतरलिङ्गत्वसमाश्रय (त्वस्वानाश्रय?) णेऽपि केवलसाकारत्वपक्षस्य [साकारनिराकारत्वपक्षस्य] च प्रतिक्षिप्तत्वात् तथोक्तम्; न तूभयलिङ्गशब्दार्थतयेति वदन्ति । **दुर्निरूप [स्वरूप] त्वात् बाधितत्वादित्यर्थ** इति । बाधितदेशकालनिमित्तकत्वादित्यर्थः । न तावत् स्वल्पापवरकनिद्राणपुरुषदृश्यमानैककोणविश्रान्तगिरिनदीसमुद्रादीनां मुहूर्तमात्रशयितपुरुषानुभूयमानविवाहपुत्रोत्पादनतदुपलालनादीनामुचितो देशः कालो वा संभवति । न वा तदुत्पत्तौ ज्ञप्तौ वोचितं निमित्तमस्ति । अतो देशकालनिमित्तानां दुर्निरूपत्वेन बाधितत्वान्मिथ्यात्वमित्यर्थः । स्वाप्नार्थमिथ्यात्वप्रदर्शकसूत्रोपन्यासस्य प्रपञ्चमिथ्यात्वप्रसाधनदशायामसंगतिमाशङ्क्याह — **स्वाप्नार्थमिथ्यात्वमिति** ।

### (परमतपुराणार्थः)

"प्रत्यस्तमितभेदम्" इत्ययं श्लोकः षष्ठांशे सप्तमेऽध्याये योगप्रकरणे केशिध्वजवचनम् । "ज्ञानस्वरूपम्" इति श्लोकस्तु प्रथमांशद्वितीयाध्याये नमस्कारश्लोकः । "परमार्थस्त्वमेवैकः" इतीयं चतुःश्लोकी प्रथमांशे चतुर्थेऽध्याये रोमान्तरस्थानां मुनीनामादिवराहस्तुतौ । "तस्यात्मपरदेहेषु" इति श्लोकः "वेणुरन्ध्रविभेदेन" इति श्लोकश्च द्वितीयांशे चतुर्दशाध्याये आदिभरतश्लोकौ । "यद्यन्योऽस्ति" इति श्लोकस्तत्रैवांशे त्रयोदशाध्याये आदिभरतश्लोकः ।

"सोऽहं स च त्वम्" इति श्लोकस्तत्रैवांशे षोडशाध्याये आदिभरतोपदेशान्ते श्लोकः । "विभेदजनके" इति श्लोकः षष्ठांशे सप्तमाध्याये केशिध्वजस्य योगप्रकरणान्ते वचनम् । "ज्ञानस्वरूपः" इत्यादिश्लोको द्वितीयांशे द्वादशाध्याये पठितः ।

( मिथ्यात्वलक्षणम् )

**शक्तिमदीश्वरादिसंकल्परूपज्ञाननिवर्त्यें** इति । शक्तिमान् य ईश्वरः, तत्संकल्परूपज्ञाननिवर्त्ये इत्यर्थः । शक्तिसहकृतज्ञाननिवर्त्ये इति यावत् । **ज्ञानमात्रनिवर्त्यत्वस्य विवक्षितत्वादि**ति । अत एव छत्रपादुकादिवैधुर्यरूपनियमसहकृतसेतुदर्शननिवर्त्यपापादौ नातिव्याप्तिः । **प्रबलभ्रान्तिज्ञाननिवर्त्ये**ति । निवृत्तिर्हि ध्वाभावः; स च कल्पिताकल्पितसाधारणः । ततश्च भ्रान्तिज्ञानेन प्रबलेन 'शुक्तिः (रजतं?)नास्ति' इति कल्पना भवत्येवेति कल्पितोऽभावस्तज्जन्य इति तन्निवर्त्यत्वं सत्यरजतस्योपपद्यते । यद्वा 'नास्ति' इति प्रतीयमानत्वमेव निवृत्तिः; सा च सत्यरजतस्यापि संभवतीति भावः । **न तु निवृत्तत्वमि**तीति । यद्यपि निवृत्तत्वमित्युक्ते निवर्तिष्यमाणमिथ्यापदार्थाव्याप्तिः, तथापि ज्ञानजन्यनिवृत्तिप्रतियोगित्वमिति नोक्तमित्यत्र तात्पर्यात् । प्रतीयमानत्वयथावस्थितज्ञाननिवर्त्यत्वखण्डद्वयेन ख्यातिबाधपर्यवसितेन तत्साध्यमसद्विलक्षणत्वे सति सद्विलक्षणत्वं लक्ष्यते; अतस्तदेव हि लक्षणं विवक्षितमिति स्वसिद्धान्तमाविष्करोति — **अनेन लक्षणेन सदसद्वैलक्षण्यं फलितमित्यादिना** ।

**सर्वज्ञत्वादिगुणकत्वेन प्रतीते ब्रह्मणि कथं वाऽध्यास** इति । ननु सर्वज्ञस्याध्यासद्रष्टृत्वेन परं विरोधः, न त्वध्यासाधिष्ठानत्वेन; न च सर्वज्ञत्वादिगुणकत्वेन प्रतिपन्नत्वं किंचिज्ज्ञत्वाध्यासाधिष्ठानत्वविरुद्धमिति वाच्यम् — अध्यासदशायां तथा प्रतीत्यभावात् । ततश्च कथमयमाक्षेपः ? कथं वा सर्वज्ञत्वगुणानन्वयेन परिहार इति चेत् - न; सर्वज्ञत्वादिगुणकत्वस्य कल्पितत्वेन कथमध्यासाधिष्ठानत्वमिति चोद्याभिप्रायसंभवात् ।

( अविद्यारूपदोषनिरूपणम् )

**एकस्या एवावस्थाद्वयमि**ति । अंशद्वयमित्यर्थः । **नात्र बहुवचने तात्पर्यमि**ति । येन तद्बहुत्वं प्रामाणिकं स्यादिति भावः । **आदेतिः**

**पाशानिति** । अग्नीषोमीयपशौ, "अदितिः पाशान् प्रमुमोक्तु" इति बहुवचनान्तपाशशब्दयुक्तमन्त्रः श्रूयते । स किं पशुगणेषूत्कृष्यते, उत प्रकृतावेव निविशत इति विशये, एकस्मिन् पाशे बहुवचनस्यान्याय्यत्वात् बहुपाशवत्सु पशुगणेषूत्कृष्यत इति प्राप्ते — 'प्रकृत्यर्थस्य पाशस्य विभक्त्यर्थस्य कर्मणश्चाग्नीषोमीय एव संभवादप्रधानभूतसंख्यानुरोधेनोत्कर्षासंभवात् पाशसंख्या अविवक्षिता ; अतो निर्देशमात्रार्थं बहुवचनमिति, "विप्रतिपत्तौ विकल्पः स्यात् समत्वात् गुणे त्वन्याय्यकल्पनैकदेशत्वात्" इति नवमे (पू.मी. ९-३-१५) व्यवस्थापितमित्यर्थः । **प्रकृतिरुच्यत इति शङ्कायामि**ति । सांख्यमतप्रत्यभिज्ञानादिति भावः । **मायां तु प्रकृतिं विद्यादि**ति । मायां सदसद्विलक्षणामविद्यां प्रकृतिम्=उपादानं विद्यादित्यर्थः । "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" इत्यादौ प्रकृतिशब्दस्योपादनार्थत्वदर्शनात् परैरपि तथा व्याख्यातत्वाच्चेति द्रष्टव्यम् । केचित्तु प्रकृतिं मायां मिथ्याभूतां विद्यादित्यर्थ इत्यप्युद्देश्योपादेयभावं वर्णयन्ति । **दोषप्रतिपादनतत्पराणामि**ति । निर्विशेषस्यापि ब्रह्मणः प्रपञ्चाधिष्ठानत्वं दोषवशादिति वक्तुं प्रवृत्तानाम्, "इन्द्रो मायाभिः" इत्यादीनां न भेदप्रतिपादनेऽपि तत्परत्वं संभवतीति भावः । **सहपठितस्वगतनानात्वमि**ति । तथा हि सति सजातीयविजातीययोः संग्रहो न स्यादिति भावः । **उपपाद्यप्रमेयाधिक्याभावादि**ति । जगदुपलब्धिरूपमिथ्यात्वोपपादकप्रकारभेदे सत्यप्युपपादनीयांशभेदाभावादित्यर्थः ।

### (अविद्याया ऐक्यज्ञाननिवर्त्यत्वम्)

**अभयम् = अभयार्थमि**ति । अर्थाभावे "अव्ययम्" [1]इति समासः । ततश्चतुर्थ्याः "नाव्ययीभावात्" इत्यम्भावे रूपम् । **यथोपासनं** हीति । यद्यपि मृषावादिमते ब्रह्मज्ञानं नोपासनात्मकम्, तथापि तुल्यन्यायतया यथाज्ञानं फलमित्येवम्परं तदिति द्रष्टव्यम् । **तद्धेतुभूताविद्येति** । मोहहेतुभूतयथावदप्रतिपत्तिलक्षणानवधानरूपेत्यर्थः । **ऐक्यविषयतां ज्ञापयितुमि**ति । पारमार्थिकैक्यविषयतां दर्शयितुमित्यर्थः । ततश्च, "आत्मेत्येवोपासीत" इत्युपासनविधिवाक्यनिर्दिष्टमैक्यं स्वरूपोपदेशपरवाक्यप्रमितत्वात् पारमार्थिकमिति भावः । **उपदेशानुगुणमुपासको देवतां प्रत्याहे**ति । "तत्त्वमसि" इति छान्दोग्यवाक्य-

---

1. अर्थाभावे यदव्ययमिति. पा०

गतस्यैक्यप्रतिपादनपरत्वादेव, "त्वं वा अहमस्मि भगवो देवते" इति जाबालवाक्यं "तद्योऽहं सोऽसौ" इत्यैतरेयवाक्यमपि तदनुगुणं दृश्यत इति भावः। न तु "तत्त्वमसि" इत्युपदेशानन्तरम्, "त्वं वा अहमस्मि" इति देवतां प्रति प्रतिवचनमिति मन्तव्यम्, उभयोरपि भिन्नप्रकरणस्थत्वात्। आत्मेत्युपासीतेति। आत्मेति प्रतिपद्येतेत्यर्थः। अत एव हि शांकरभाष्ये, "आत्मेति प्रतिपत्तव्यः" इत्युक्तम्, तस्य सूत्रस्य मृषावादिमते वास्तवात्मत्वसमर्थनपरत्वेन, 'आत्मेत्युपासीत' इत्यात्मत्वेनोपासनसमर्थनपरत्वाभावात्। केचित्तु — वस्तुत आत्मानमेव आत्मेत्युपासीतेत्यर्थः; ततश्च वास्तवात्मत्वसमर्थनद्वारा आत्मोपासनस्य प्रतीकोपासनत्वव्यवच्छेदश्च सिध्यति। तस्य सूत्रस्य वास्तवात्मत्वसमर्थनद्वारा प्रतीकोपासनत्वव्यवच्छेदपरत्वादित्याहुः।

## (प्रत्यक्षविरोधे शास्त्रप्राबल्यम्)

'ननु च सकलभेदनिवृत्तिः प्रत्यक्षविरुद्धा' इति भाष्यस्यायमर्थः — सकलभेदाभावः प्रत्यक्षविरुद्धः शास्त्रजन्यज्ञानेन कथं विषयीक्रियेत? कथं शास्त्रप्रतिपाद्यः स्यादिति। एवमुत्तरत्रापि द्रष्टव्यम्। **दुष्टकारणजन्यत्वतदभावौ बाध्यबाधकभावे प्रयोजकाविति शङ्कायामिति।** अयमर्थः — क्वचिन्मूलतूलिभावः, क्वचित् परोक्षत्वादिः, क्वचिद्विपरीतप्राबल्य[दौर्बल्य]हेतुराहित्यलक्षणतुल्यत्वे सति दुष्टकारणजन्यत्वतदभावाविति। उत्तरत्र सर्वेषां प्रयोजकानां निरसिष्यमाणत्वात्। तुल्यत्वे सति दुष्टकारणजन्यत्वतदभावयोर्बाध्यबाधकभावप्रयोजकत्वे शङ्किते तुल्यत्वस्य प्रयोजकत्वनिराकरणमनुचितमित्याशङ्क्य व्याचष्टे — **तुल्यत्वे सति दुष्टकारणेत्यादि। तुल्यशब्दः प्रयुक्त** इति। तुल्यत्वशब्दः प्रयुक्त इत्यर्थः। **तुल्यशब्देनैकदेशोपादान**मिति। तुल्यत्वस्यापि हेतुत्वप्रसक्तिसद्भावेन तन्निषेधार्थं तुल्यत्वशब्देन विशेषणांशोपादानं युज्यत इत्यर्थः। **तुल्यत्वे सतीत्यस्य विवरणं विपरीतप्राबल्यदौर्बल्यकारणाभावे सतीति।** तुल्यत्वशब्देन विशेषणात्विना विशिष्टोपस्थानं क्लिष्टमित्यस्वरसादाह — **यद्वा अप्रयोजकत्वेनेति। तुल्यत्वं दृष्टान्ततयानूदित**मिति। केवलतुल्यत्वमित्यर्थः। तर्हि प्राधान्येन शङ्कितस्य तुल्यत्वे सति दुष्टकारणजन्यत्वतदभावरूपप्रयोजकस्यानुपादानात् तस्याप्रयोजकत्वं न प्रतिपादितं स्यादित्याशङ्क्य, आदिशब्देन तदुपादानमित्याह — **वैषम्यान्तराभावे सतीति।** विविधविकल्पशब्दः प्रपञ्च-

**विशेषणं भेदविशेषणं वेति।** षष्ठीसमासपक्षे प्रपञ्चविशेषणम्; कर्मधारये तु भेदविशेषणमिति भावः। **कार्याविद्येति।** उक्तं हि वाचस्पतिना आद्यपादे— "अनिर्वाच्याविद्याद्वितयसचिवस्य" इति। तद्व्याख्याने च, "एकाऽनादिर्भावरूपा देवताधिकरणे वक्ष्यते; अन्या च पूर्वपूर्वविभ्रमसंस्कारः" इति। शंकरभाष्ये च "एवमविरुद्धः प्रत्यगात्मन्यनात्माध्यासः। तमेवंलक्षणमध्यासं पण्डिता अविद्येति मन्यन्ते" इति भेददर्शनस्याविद्यात्वमाविष्कृतम्। **अन्यपरमिति परस्याभिप्राय इति।** अन्यपरम्, अतो न प्रत्यक्षबाधकमिति परस्याभिप्राय इत्यर्थः।

( अभेदश्रुतिप्राबल्यम् )

ननु **भेदावलम्बिनो बाध्यत्वं प्रसज्येतेत्यापादनं** न संभवति, तस्येष्टापादनत्वादित्याशङ्क्य, तस्यापि बाध्यत्वे तत्प्रयोजकं दुष्टकारणजन्यत्वमपि स्यादित्यनिष्टापादनमाहेत्याह - **यन्निर्दोषमुक्तमिति। दुष्टकारणजन्यत्वेऽनङ्गीकार इति।** ननु - बाध्यत्वं वक्तव्यम्; दुष्टकारणजन्यत्वं च न संभवति; अतः कथं निर्वाह इति चोदिते, सत्यमित्युक्तेर्बाध्यत्वमङ्गीक्रियत एव; दुष्टकारणजन्यत्वं नास्तीति यदुक्तं तदप्यङ्गीक्रियते; यदुक्तं 'कथं निर्वाहः' इति तत्राङ्गीक्रियत इत्येव वक्तव्यम्; कथं दुष्टकारणजन्यत्वेऽनङ्गीकार इत्युक्तिरिति चेत् - न; 'कथं निर्वाहः' इत्यस्य दुष्टकारणजन्यत्वमपि स्यादित्यत्र पर्यवसानमिति प्रगुणत्वादिनवेनादोषात्। वस्तुतस्तु ज्योतिष्टोमादिवाक्ये भेदवासनारूपदोषस्य वा तात्पर्यभ्रमरूपपुरुषापराधदोषस्य वा सत्त्वेन दुष्टकारणजन्यत्वमस्तीत्यत्र तात्पर्यम्; दोषाभावेऽप्यप्रमोत्पत्तावप्रामाण्यस्य स्वतस्त्वप्रसङ्गादिति बोध्यम्। केचित्तु — भेदवासनाजन्यतया भेदप्रत्यक्षस्य बाध्यत्वे ज्योतिष्टोमादिवाक्यजन्यभेदज्ञानस्यापि भेदवासनारूपदोषजन्यतया बाध्यत्वं स्यात्; न चेष्टापत्तिः, अपौरुषेयत्वेन निर्दोषत्वस्य त्वयैव प्रतिपादितत्वादित्याशयेन शङ्कत इत्येवं "ननु च" इत्यादिभाष्यावतारिकामाहुः। अस्मिन् पक्षे, 'भेदावलम्बिनः' इत्यादिभाष्यस्वारस्यमस्ति। अन्यस्यानिर्धारितान्यतरबाध्यत्वपरत्वे तत् पीड्येतेत्यादि द्रष्टव्यम्। **प्रमित्युत्पत्तिक्रमादिति।** एतस्य प्रयोगशास्त्रतया प्रतिप्रयोगमावृत्त्यैव बोधकत्वात् प्रयोगभेदाश्रयणमितिनिबन्धनं पौर्वापर्यं सुवचमिति भावः। **एकस्मिन् प्रयोगे यौगपद्येनापच्छेदे सतीति।** यदोद्गातृप्रतिहर्त्रोर्युगपदपच्छेदो भवति, तदा

किं प्रायश्चित्तं कर्तव्यं न वेति **संशयः**। तत्रोभाभ्यां क्रियमाणोऽपच्छेदो नैकेन व्यपदेष्टुं शक्यते। तस्माद्यौगपद्ये निमित्तविघातात् प्रायश्चित्तं न कर्तव्यमिति पूर्वपक्षे प्राप्ते,

"स्यादेवम्, यदि सापेक्षं कर्तृत्वमुभयोर्भवेत्।
एकैकस्य तु यत्नेन निरपेक्षेण जायते॥
विच्छेदस्तेन कर्तृत्वं द्वयोः प्रत्येकमस्ति नः।" (शास्त्रदी)

कालमात्रं परमेकम्। अतः प्रायश्चित्तं कर्तव्यमिति ('कालमात्रं तु तत्रैकं प्रायश्चित्तमतो भवेत्' इति ?) व्यवस्थापितं षष्ठे (६-५-४९) "विभागश्रुतेः प्रायश्चित्तं यौगपद्ये न विद्यते" इत्यत्रेति भावः। ननु "तत्र विप्रतिषेधात् विकल्पः स्यात्" इति विकल्पस्यैव सिद्धान्तितत्वाद्विरोध इत्यरुचेराह—**विकल्पेनानुष्ठानं** चेति। **पूर्वशास्त्रमुत्तरोत्पत्तिप्रतिबन्धकं किं न स्या**दिति। असंजातप्रतिपक्षतया प्रक्रमस्य प्राबल्यमित्युपक्रमाधिकरणन्यायादित्यर्थः। **निमित्तस्योत्पन्नत्वा**दिति। निमित्ते हि सति तन्निमित्तमपि शास्त्रं दुर्वारप्रवृत्तिकमेव, तस्यैव तत्सामग्रीत्वात्। तत्र विरोधिनि जाते सति यदुत्तरं विरोध्यवश्यं जायते तत् पूर्वोपमर्दकतयैवोदेतीति स्वभावसिद्धम्। अतो वस्तुस्वभावादुत्तरं शास्त्रं पूर्वधीस्थोपमर्दनादेव स्वार्थधीकारणम्। पूर्वं तु जायमानं कस्यचिद्विरोधिनो न बाध्यतया नापि बाधकतया जायते; किंतु स्वरूपेणैव। तत्रैकस्मिन् प्रयोगे द्वयोः शास्त्रार्थयोरशक्तेर्यस्योपमर्दस्तस्य बाध्यत्वम्, यस्योपमर्दकत्वम्, तस्याबाधकत्वमेव युक्तमिति भावः। पूर्वसिद्धार्थस्योत्तरशास्त्रेणान्यथाकरणं न संभवतीति श्रद्धालुं प्रति नैमित्तिकशास्त्रप्रतिबन्दीमाह—**किंच यथोदिते**ति। **पूर्वसिद्धार्थान्यथाकरणप्रकरणत्वा**दिति। प्रकरणं प्रक्रिया; प्रकार इति यावत्। नित्यपूर्वसिद्धानित्यप्रयोगान्यथाकारिपूर्वनैमित्तिकशास्त्रतुल्यशीलत्वादिति भावः। यदि तूत्तरशास्त्रं पूर्वशास्त्रं न बाधेत, नैमित्तिकशास्त्रमपि नित्यशास्त्रं न बाधेतेत्यर्थः। पाठक्रमस्य स्पष्टतया अनुपपादनीयत्वादर्थक्रममुपपादयति — **त्रिवर्गफलत्वेने**ति। **तत्त्वपरस्य हि मुमुक्षो**रिति। निमित्तपौर्वापर्यान्नैमित्तिकशास्त्रपौर्वापर्यवदधिकारिपौर्वापर्यात् पौर्वापर्यमिति भावः। मुमुक्षानन्तरभाविविचारितवेदान्तवाक्यजन्यज्ञानस्यानादिप्रवृत्तकर्मकाण्डादिजन्यनिखिलभेदज्ञानोपमर्दरूपप्रयोजनाय प्रवृत्तत्वाद्वेदान्तवाक्यानामि-

त्यत्र तात्पर्यम् । अतश्च मृषावादिमते कर्मविचारस्य प्राक् प्रवृत्तिनियमाभावात् तद्भेदोपमर्दो न स्यादिति दूषणमल्पकं वेदितव्यम् । नन्वपच्छेदन्यायो नावतरतीति वदन्तं प्रति तत्फलस्य दर्शनादित्युक्तिरसङ्गता ; न हि तत्फलभूतनिर्गुणत्वप्रतीति-दर्शनं परसंप्रतिपन्नमित्यत आह – **जक्षत् क्रीडन् रममाण इत्यादि** इति । **निरू-पको हि निर्गुणपरब्रह्मवेदनाधिकारी**ति ।

> " निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीश्वराः ।
> ये मन्दास्तेऽनुकम्प्यन्ते सविशेषनिरूपणैः ॥
>
> वशीकृते मनस्येषां सगुणब्रह्मशीलनात् ।
> तदेवाविर्भवेत् साक्षादपेतोपाधिकल्पनम् ॥ "

इत्युक्तेरिति भावः । **यद्वा यः सर्वज्ञ इत्यादिवाक्यानाम**पीति । अस्यां योजनायाम्, " सगुणब्रह्मोपासनपराणाम् " , " ब्रह्मस्वरूपप्रतिपादनपराणाम् " इति वाक्ये वैलक्षण्येन निर्देशस्यास्वारस्यम् । किंच " उपासनपराणाम् " इत्यस्य सर्वेषा-मुपासनपरत्वादित्यभिप्रायाश्रयणं च क्लिष्टमिति द्रष्टव्यम् ।

(सत्यज्ञानादि समानाधिकरणवाक्यार्थः)

**अन्यथा द्व्येकेष्विति** हि वक्तव्यमिति । द्वयोरेकस्य च बहुत्वोपजनक-त्वादिति भावः । "एकस्मिन्नर्थे वृत्तिः" इत्यत्रैकशब्दस्यैकत्वसंख्या–प्रधानत्वान्यत्वादि-वाचित्वसंभवाल्लक्षणस्य न सम्यक्त्वमित्याशङ्क्य समानपदव्याख्यानत्वादेकशब्दस्य विवक्षितार्थलाभः संभवतीत्यभिप्रायेण समानाधिकरणशब्दयोरर्थमाह–**समानमेकमधि-करणमि**ति । ततश्च, " भिन्नप्रवृत्तिनिमित्तानाम् " इति सामानाधिकरण्यनिरुक्ति-व्याख्यानसमये, " एकस्मिन्नर्थे " इत्यस्मिन्नंशे व्याख्यातव्ये समानाधिकरणशब्द-व्याख्यानं न संगतमिति शङ्का पराकृता । **समानशब्दसामर्थ्यादेकशब्दः साधारणपर** इति । न चैवमन्योन्याश्रय इति वाच्यम् ; परस्परसाहचर्यस्य 'गुरु-भार्गवौ' इत्यादावर्थविशेषप्रतिपादकत्वदर्शनादिति भावः । न चैकशब्दस्यैकसंख्या-परत्वे कानुपपत्तिः ? नीलोत्पलशब्दयोरेकत्वसंख्याश्रयार्थवृत्तित्वसंभवादिति वाच्यम् ; 'बह्न्युत्पलानि' इति शब्दयोरेकत्वसंख्याश्रयभूतार्थवृत्तित्वासंभवेन सामानाधिकरण्या-

भावप्रसङ्गात् । अत एव, "समानकर्तृकयोः पूर्वकाले" इत्यत्रापि समानशब्दार्थभूतमेकत्वमपि साधारणत्वमेव; न तु संख्याविशेषरूपम् ; 'पक्त्वा भुङ्क्ते' इत्यादौ कर्तुरेकत्वसंख्याश्रयत्वाभावादिति द्रष्टव्यम् । इदं च शङ्कापरिहारव्याजेन ; "ननु नीलान्युत्पलानि" इत्यत्र स्पष्टयिष्यते । **पूर्वोक्तार्थः साधीयानिति** । विवक्षितार्थविशेषाणां शाब्दत्वसिद्धेरिति भावः । **तत्स्था समानविभक्तिर्विशेष्यैक्यपरेति** । नन्वेवं विशेषणविभक्तेरैक्यार्थकत्वे निषादस्थपत्यधिकरणविरोधः; षष्ठीतत्पुरुषे लुप्तविभक्त्यर्थे प्रातिपदिकलक्षणावत् विशेषणविभक्त्यर्थे ऐक्ये निषादपदलक्षणाया अङ्गीकर्तव्यत्वात् । तस्माद्विशेषणविभक्तेः साधुत्वार्थकत्वमेव; न त्वैक्यार्थकत्वमिति चेत्—न; ऐक्यस्य विभक्त्यर्थत्वेऽपि तत्र प्रातिपदिकलक्षणायां प्रमाणाभावात् । विग्रहसमासयोः समानार्थत्वनियमाभावात् । षष्ठीतत्पुरुषे संबन्धस्य शाब्दबोधे प्रकारतया भानस्यानुभवसिद्धत्वेन तदर्थं लक्षणाश्रयणेऽपि कर्मधारयेऽभेदस्य संसर्गमर्यादया भानस्यैवानुभवसिद्धत्वेन न तत्र लक्षणेत्याशयात् । केचित्तु—"एकस्मिन्नर्थे वृत्तिः" इत्यस्यैकार्थवृत्तिमद्विभक्तिद्वयवत्त्वमित्यर्थः । ततश्च विशेषणविभक्तेर्विशेष्यविभक्त्यर्थैक्यात् विशेष्यविभक्त्यर्थानुवादितया साधुत्वमात्रार्थत्वमेव । "विभक्त्यैक्यबोधनं वृत्तिशब्देन विवक्षित" मित्यस्यापि तत्रैव तात्पर्यम् । अत एव 'घटस्य स्वरूपम्' इत्यादावपि नातिप्रसङ्गः; तत्र विभक्त्योर्भिन्नार्थत्वात् । नन्वेवं 'देवदत्तः पचति' इत्यत्र सुप्तिङोः सामानाधिकरण्यं न स्यात्, तिङो यत्नादिरूपातिरिक्तार्थाभिधायित्वादिति चेत्—न; तत्र सामानाधिकरण्यव्यवहारस्यामुख्यत्वादिति वदन्ति ।

एकशब्दस्य साधारणार्थत्वमुक्तं विस्मृत्य चोदयति — **ननु नीलान्युत्पलानीति** । **समभिव्याहृतपदान्तरेति** । समभिव्याहृतपदान्तरोक्तस्य प्रकारान्तराधिकरणवृत्तित्वमेवैकार्थवृत्तित्वम्; न तु व्यक्तिद्वयावृत्तित्वमित्यर्थः । **नीलत्वानधिकरणेषूत्पलत्वं वर्तत** इति । नीलत्वानधिकरणेष्वेवोत्पलत्वं वर्तत इत्यर्थः । खलेकपोतिकान्यायेन युगपदुपस्थितानामन्वय इति पक्षे आह—**संभवेऽपि विशेषणानामिति** । **प्रवृत्तिनिमित्तभेदाभावेन सामानाधिकरण्यलक्षणहानिश्चेति** । अत्र केचित्—'प्रवृत्तिनिमित्तभेदाभावेन' इत्येतत् पर्यायत्वे, पदान्तरवैयर्थ्येऽपि हेतुः ;

अतः काकाक्षिन्यायेन पूर्वत्राप्यन्वयो वक्तव्यः; एवमुत्तरत्रापि । न च सत्यत्वज्ञानत्वादीनां प्रवृत्तिनिमित्तानां भेदस्य सत्त्वात् कथं पर्यायत्वमिति वाच्यम् , सत्यत्वादीनां शुद्धादन्यत्राभावेन सत्यादिवाक्यानां लक्षणया स्वरूपमात्रपरत्वेन शुद्धेऽपि तदसिद्ध्या प्रवृत्तिनिमित्तभेदाभावेन पर्यायत्वं स्यादिति वदन्ति । अन्ये तु पर्यायत्वमन्यूनानतिरिक्तार्थत्वम् ; विशेषणतो विशेष्यतश्चानतिरिक्तार्थकत्वम् । तत्र प्रवृत्तिनिमित्तभेदाभावमात्रं न हेतुः ; भिन्नविशेष्याभिप्रायेण प्रयुक्तयोर्घटकुम्भशब्दयोः प्रवृत्तिनिमित्तभेदाभावेऽप्युक्तपर्यायत्वाभावात् ; अतः सामानाधिकरण्यलक्षणहानावेव हेतुरिति वदन्ति ।

**अत एव जगत्कारणत्वेति ।** यत एव सत्यज्ञानादिशब्दानामनृतजडपरिच्छिन्नविरोधिस्वरूपोपस्थापकत्वम् , अत एव सत्यज्ञानादिपदैः कारणत्वशङ्कितानृतजडादिभ्रान्तिव्युदासः क्रियत इत्यर्थः । **व्यावृत्तिभेदेन यथा न पर्यायत्वमिति ।** कार्ण्यरक्तिमादीनां भिन्नतया तत्तदवच्छिन्नव्यावृत्तीनां (प्रवृत्तिनिमित्तानां) भेदात् यथा अपर्यायत्वमर्थवत्त्वं चेत्यर्थः । न चानृतजडपरिच्छिन्नव्यावृत्तीनामपर्यायत्वसिद्ध्यर्थं भेदस्याभ्युपेतत्वे कथमेकार्थत्वं सिध्येदिति वाच्यम् , पदार्थोपस्थितिदशायां व्यावृत्तीनां भानेऽपि वाक्यार्थप्रतीतिदशायां तत्तद्व्यावृत्त्युपलक्षितस्वरूपमात्रस्यैव प्रतीयमानतयैकार्थत्वाविरोधात् । न च वाक्यार्थप्रतीतिदशायामपि व्यावृत्तिवैशिष्ट्यं भासतामिति वाच्यम् — शौक्ल्यस्वरूपमात्रबुभुत्सायामेव कार्ण्यादिव्यावृत्तमित्युत्तरस्यावतीर्णतया अस्य वाक्यस्य स्वरूपातिरिक्तार्थप्रतिपादकत्वासंभवात् । अत एव सत्यज्ञानादिवाक्यानां ब्रह्मस्वरूपमात्रप्रश्नोत्तरतया व्यावृत्तिवैशिष्ट्याबोधकत्वम् । अत एव संसर्गागोचरप्रमाजनकत्वलक्षणमखण्डार्थत्वं युज्यत इति भावः । केचित्तु— अनृतजडपरिच्छिन्नव्यावृत्तिवैशिष्ट्यं सत्यज्ञानादिवाक्ये भासत एव । न चैवं संसर्गागोचरप्रमाजनकत्वलक्षणमखण्डार्थत्वं भज्येतेति वाच्यम् — अभिन्नविशेषणविशेष्यार्थत्वरूपाखण्डार्थत्वस्य वैशिष्ट्यगोचरत्वेऽप्यविरोधात् । सत्यपदजन्यप्रतीतिविषययोरेव विशेषणविशेष्ययोर्वस्तुतो भेदरहितयोर्व्यावृत्तिब्रह्मस्वरूपयोरेव ज्ञानपदजन्यप्रतीतिविषयविशेष्यविशेषणत्वात् । ब्रह्मस्वरूपाया अनृतव्यावृत्तेर्जडव्यावृत्तिरूपत्वे विशेषणयोर्व्यावृत्त्योर्भेदाभावात् । न चैवमेकप्रवृत्तिनिमित्तकतया पर्यायत्वं स्यादिति

वाच्यम्, अन्यूनानतिरिक्तार्थकत्वस्यैव पर्यायशब्दार्थतया व्यावृत्तिरूपविशेषणविशेषणभूतानां भिन्नभिन्नानां प्रतियोगिनां भानेन पर्यायत्वस्याप्रसक्तेरिति वदन्ति ।

ननु शक्त्या पदजन्यपदार्थोपस्थितेः शक्यतावच्छेदप्रकारकत्वावश्यंभावात् शक्त्या पदजन्यब्रह्मस्वरूपोपस्थितेरपि शक्यतावच्छेदकीभूतसत्यत्वादिप्रकारकत्वप्रसङ्गेन वाक्यस्याखण्डार्थत्वभङ्गप्रसङ्गः; अतोऽनृतजडपरिच्छिन्नव्यावृत्तब्रह्मस्वरूपोपस्थितिरपि लक्षणयैवेत्यभ्युपगन्तव्यमित्यरुचेराह — **लक्षणाभ्युपगमेऽपीति । समानविभक्तिबलादैक्यतात्पर्यनिश्चय** इति । इदमुपलक्षणम् । लक्षणवाक्यत्वात् ब्रह्मस्वरूपमात्रप्रश्नोत्तरत्वाच्चेत्यपि द्रष्टव्यम् । **सर्वपदानां लक्षणा न दोष** इति । सर्वप्रातिपदिकानामित्यर्थः । विभक्तेरैक्यार्थाया लक्षकत्वाभावात् । यद्वा विभक्त्यर्थस्यैकत्वस्य संसर्गप्रतीतौ वाक्यस्याखण्डार्थत्वभङ्गप्रसङ्गात्तस्य सत्यत्वादितुल्यशीलत्वात् । न चैवं समानविभक्तिबलादैक्यतात्पर्यनिश्चय इति पूर्वग्रन्थविरोध इति वाच्यम्—प्रातिपदिकार्थमात्रप्रश्नोत्तरत्वेन ब्रह्मस्वरूपमात्रे तात्पर्यावगमादिति तदभिप्रायादिति वर्णयन्ति । “सत्यज्ञानादिगुणाः प्रतीयन्ते” इति परिचोदिते सति, “नेत्युच्यते” इति वदतः प्रतीत्यफलापदोषः स्यादित्याशङ्क्याह—**नेत्युच्यत इति वदतोऽयं भाव** इति । **सर्वपदानामेकाभिधेयपर्यवसानमिति** । एकस्य पदस्याभिधेयम् [ एकाभिधेयम् । तत्र पर्यवसानम् ? ] एकप्रातिपदिकार्थमात्रनिष्ठत्वमित्यर्थः । **न तु वाक्यस्येत्यर्थ** इति । न त्वेकवाक्यार्थपर्यवसायित्वमेव पदानामखण्डार्थत्वमित्यर्थः । तथा सति सर्ववाक्यमप्यखण्डार्थं स्यादिति भावः । **पदानामेवैकार्थपर्यवसायित्वमिति** । एवकारो भिन्नक्रमः । पदानामेकप्रातिपदिकार्थपर्यवसायित्वमेवाखण्डार्थत्वम्; न त्वेकप्रधानार्थपर्यवसायित्वमात्रमित्यर्थः । ततश्च पदानामेकार्थपर्यवसायित्वे वाक्यस्यापि तदस्त्येव; वाक्यस्यैकार्थपर्यवसायित्वे पदानामपि तदस्त्येव; पदव्यतिरेकेण वाक्यस्याभावादिति शङ्का प्रत्युक्ता । **कृत्स्नवाक्येनेति** । ‘विशेषणभेदेन अर्थभेद’ इत्यंशेन विशेषणमात्रपरत्वे दूषणमिति भावः । **विशेषणभेदेनेति** व्याख्येयं पदम् । **युगपदभिधानपक्षे दूषणमुक्तं भवतीति** । इदमुपलक्षणम्, क्रमेणाभिधानपक्षे विशेषणान्तरान्वयो बोध्यत इति द्वितीयविकल्पेऽन्योन्यसमन्वयरूपदूषणमुक्तमिति द्रष्टव्यम् । **सामानाधिकरण्यलक्षणासिद्धिरि-**

त्यर्थ इति । एकवस्तुमात्रपरत्वरूपसामानाधिकरण्यलक्षणासिद्धिरित्यर्थः । **चोद्यद्वयमभिप्रेतमिति** । अत्र केचित् — पदान्तरवैयर्थ्यमात्रस्य पर्यायत्वस्य चैकवस्तुमात्रपरत्वरूपसामानाधिकरण्येऽवश्यंभावमाशङ्क्य एकवस्तुमात्रपरत्वेऽप्यपर्यायत्वं पदान्तरावैयर्थ्यं च संभवतीति पदान्तरवैयर्थ्यपर्यायत्वरूपदूषणद्वयप्रसङ्गस्यैव परिहरिष्यमाणतया दूषणद्वय एव तात्पर्यम् । ततश्चैकवस्तुमात्रपरत्वे पर्यायत्वं पदान्तरवैयर्थ्यं च स्यात् । तस्य कथंचित्परिहारे एकवस्तुमात्रनिष्ठत्वरूपसामानाधिकरण्यभङ्गप्रसङ्ग इत्येवंपरतया टीकाग्रन्थोऽपि योजनीय इति वदन्ति । **व्युदासस्तु फलित इति** । अयं भावः——यद्यपि सत्यपदोपस्थापितस्वरूपव्यतिरिक्तं न पदान्तरेण प्रतिपाद्यते, अथापि सत्यपदेनैवानृतभ्रान्तिव्युदासः ; ज्ञानपदेनैव जडभ्रान्तिव्युदासः ; अनन्तपदेनैव च परिच्छिन्नभ्रान्तिव्युदासः ; अनृतजडपरिच्छिन्नव्यावृत्तस्वरूपोपस्थितेस्तत्तत्पदाधीनत्वात् ; तत्तद्व्यावृत्तिपूर्वकस्वरूपोपस्थितेरेवानृतजडपरिच्छिन्नभ्रान्तिव्युदासकत्वात् । यथा अभिज्ञाभ्यामवगतस्वरूपस्यैव प्रत्यभिज्ञाविषयत्वेन विषयकृतविशेषाभावेऽपि कालद्वयप्रतिसंधानादिलक्षणकारणकृतोऽभिज्ञाद्वयानिवर्त्यभेदभ्रमनिवर्तकत्वलक्षणो विशेषः प्रत्यभिज्ञायां दृश्यते, एवं सत्यपदजन्योपस्थितेरनृतप्रतिसंधानपूर्विकाया एवानृतभ्रान्तिनिवर्तकत्वम् ; जडप्रतिसंधानपूर्विकाया एव ज्ञानपदजन्योपस्थितेर्जडभ्रान्तिनिवर्तकत्वमित्येवमनृतजडपरिच्छिन्नव्युदासः फलित इति भावः । **प्रयोजकरूपेणेति** । अनेकपदार्थसंग्राहकानृतत्वाद्याकारेणेत्यर्थः ।

**(एतस्य कारणत्वानुवादेन) लक्षणपरत्वादिति** । लक्षणत्वविधिपरत्वादित्यर्थः । **उपलक्षणं नाम चन्द्रस्येति** । मायाशबलसगुणब्रह्मगतं कारणत्वं तदनुगतस्य लिलक्षयिषिताखण्डचैतन्यस्य तटस्थतयोपलक्षणम्, शाखाग्रमिवातत्स्थं चन्द्रमसः । तस्य प्रकृष्टप्रकाशत्वमिव सत्यज्ञानानन्दरूपं स्वरूपलक्षणम् । न चावश्यमपेक्षितेन सत्यज्ञानानन्दत्वरूपस्वरूपलक्षणेनैवेतरव्यावृत्तिसिद्धेर्जगत्कारणत्वरूपतटस्थलक्षणं व्यर्थम् ; चन्द्रादौ तु 'प्रकृष्टप्रकाशः' इत्यनेनैव स्वरूपे प्रतिपन्नेऽपि तद्दिदृक्षया चन्द्रबुभुत्सोर्गगने सर्वत्रचक्षुर्विक्षेपे क्लेशः स्यात्, स मा भूदिति देशविशेषे चक्षुर्नियमनार्थतया तटस्थलक्षणमुपयुज्यत इति वक्तुं शक्यमिति वाच्यम् ; प्रकरणोपपदादिसंकोचकाभावेन त्रिविधपरिच्छेदपरिपन्थिनिरतिशयबृहत्त्वाच्च ब्रह्म-

शब्दार्थस्य निष्प्रपञ्चस्य लिलक्षयिषितस्य ब्रह्मणः 'यद्रजतमभात् सा शुक्तिः' इतिवदध्यारोपापवादन्यायेन 'यत्प्रपञ्चविवर्तोपादानं तद्ब्रह्म' इति निष्प्रपञ्चत्वसिध्यर्थं जगदुपादानत्वस्य ब्रह्मणि वक्तव्यत्वेन तटस्थलक्षणसाफल्यात्; स्वरूपविशेषप्रतिपत्त्यर्थतया स्वरूपलक्षणस्याप्यावश्यकत्वमिति हि मृषावादिनां मतमिति भावः।

**मुख्यार्थत्वमुत्तरत्राभिधास्यन्** इति। आनन्दमयाधिकरण इति शेषः। **सा चात्र लक्षणावृत्तिर्विवक्षितेति**। इदं तु 'तात्पर्यादागता' इति पक्षे बोध्यम्, लक्षणाबीजस्य तात्पर्यस्यैव लक्षणात्वासंभवात्। **अन्यैश्च संमतमित्यर्थ** इति। "क्तेन च पूजायाम्" इति षष्ठीसमासनिषेधात् भूतक्तान्तेन, "कर्तृकरणे कृता बहुलम्" इति तृतीयासमास इति भावः। **तात्पर्याविरुद्धेति**। यत्र क्वचिदिति शेषः। न हि तात्पर्याविरुद्धस्थले मुख्यार्थः स्वीकृत इत्येतावता तात्पर्यविरुद्धस्थलेऽपि मुख्यार्थ एव स्वीकर्तव्य इति निर्बन्धोऽस्तीति भावः। **अभ्युपगमहेतुसद्भावादभ्युपगमः फलित** इति। वस्तुगत्याभ्युपगमाभावेऽप्यकामेनाप्यभ्युपगन्तव्यमिति भावः।

( सर्वलाक्षणिकत्वे प्राभाकरोदाहरणम् )

भाष्ये—**अपूर्वकार्य एव लिङादेर्मुख्यवृत्तत्वाल्लिङादिभिः क्रियाकार्यं लक्षणया प्रतिपाद्यत इति**। "स्वर्गकामो यजेत" इत्यादौ हि स्वर्गकामरूपनियोज्यं प्रति क्रिया लिङ्शब्देन कार्यतया बोधयितुमशक्या। कामी हि काम्यादन्यत् काम्याव्यवहितसाधनमेव कार्यतया अवैति; न तु व्यवहितसाधनम्। क्रियारूपसाधनं तु अस्थायित्वेन काम्याव्यवहितसाधनत्वाभावान्न कामिनियोज्यान्वययोग्यम्। तस्मात् फलपर्यन्तस्थाय्यपूर्वमेव लिङो वाच्यमिति सिद्धे, लोके क्रियारूपे कार्ये प्रयुज्यमाना लिङ् लाक्षणिक्येव, नानार्थत्वस्यान्याय्यत्वादिति हि प्राभाकरैरभ्युपगम्यत इति भावः। **तदन्विताभिधायिनामिति**। निमीलनपदलाक्षणिकार्थान्विताभिधायिनामित्यर्थः। **तत्कार्यसमर्पकपदलाक्षणिकत्व** इति। लाक्षणिकत्वे प्राप्नुवति तद्धेतुनान्येषामपि लाक्षणिकत्वमित्यर्थः; न तु हेतुहेतुमद्भाव इति भ्रमितव्यम्, तस्याप्रसक्तेः। न हि पदान्तरलाक्षणिकत्वं पदान्तरलाक्षणिकत्वे प्रयोजकम्; अपितु मुख्यार्थासंभव एव। ततश्च क्रियातिरिक्तकार्यरूपमुख्यार्थासंभवेन क्रियातिरिक्तकार्यप्रतिपादकलिङः क्रियाकार्य-

प्रतिपादने लक्षणावदितरपदानामपि क्रियातिरिक्तकार्यान्वितरूपमुख्यार्थासंभवेन तदर्थप्रतिपादकानां क्रियान्वितार्थप्रतिपादने लक्षणावश्यंभाव इति भावः। अत एव वक्ष्यति — **विशिष्टस्यापि कार्यैकदेशपरत्वप्रदाणम्ये यदि। किं विशिष्टकार्यैकदेश** इति। कारकविशिष्टं यत्कार्यं तस्यैकदेशो विशेषणं विशेष्यं च, तच्छक्तमित्यर्थः। इदं च कारकपदानां क्रियापदानां च साधारणमिति भावः। **लिङादिः कार्यमात्रपरः स्यादिति**। ननु लोके कार्यत्वाश्रयस्य क्रियास्वरूपस्य प्रकृत्युपात्तत्वात् कार्यत्वमात्र एव लिङादेः शक्तिः; यथा एकवचनादीनामेकत्वादिसंख्यामात्रवाचित्वम्; न तु तदाश्रयवाचित्वम्, तस्य प्रकृत्युपात्तत्वात्। ततश्च लिङादेः कार्यत्वमेवार्थः। ततश्च प्रकृत्युपात्तक्रियायाः प्रत्ययोपात्तकार्यत्वस्य च धर्मधर्मिभावेनान्वय इति लौकिकवाक्यमर्यादा। वेदे तु कार्यत्वाश्रयस्यापूर्वस्यान्यतो लाभासंभवात् कार्यत्वविशिष्टकार्यस्वरूपाभिधायित्वं वक्तव्यम्। ततश्च यदि विशिष्टाभिधायी लिङादिः, ततोऽपूर्वमेवाभिदध्यात, न क्रियाम्। अथ विशेषणाभिधायी, ततः क्रियागतमेवाभिदध्यात्, नापूर्वगतम्। अतो लोकवेदसाधारणस्यार्थस्यैकस्यालाभा (भावा) दुभयत्रापि शक्तिकल्पने गौरवाल्लौकिकवादानुसारेण वैदिकपदस्यामुख्यार्थत्वस्यान्याय्यत्वात कार्यमेव मुख्योऽर्थः; लोके तु लक्षणया कार्यत्वं प्रतिपाद्यत इत्येवं लिङादेर्लक्षणाया आवश्यकत्वेऽपीतरेषां लौकिकपदानां लक्षणायां हेत्वभावात्। न हि वैदिकस्य लिङादेर्लौकिकलिङादिगतव्युत्पत्तिविरुद्धव्युत्पत्त्यन्तरकल्पनवत् तदतिरिक्तवैदिकपदेषु लौकिकपदगतव्युत्पत्तिविरुद्धव्युत्पत्त्यन्तरमस्ति; कार्यान्विताभिधायित्वस्य लिङादिव्यतिरिक्तलौकिकपदेष्विव लिङादिव्यतिरिक्तवैदिकपदेष्वप्यविशिष्टत्वात्। इयांस्तु विशेषः— लोके क्रियारूपं कार्यम; वेदे तु तदतिरिक्तम्। कार्यान्विताभिधायित्वं तु सर्वसाधारणम्। यदि व्यक्तिभेदमात्रेण व्युत्पत्त्यन्तरम्, तदा 'गामानय', 'गां बधान' इत्यादीनामपि प्राथमिकव्युत्पत्तिविरुद्धव्युत्पत्त्यन्तरं कल्पनीयं स्यादिति चेत्-सत्यम्, सर्वत्र कार्याभिधाय्येवायं लिङादिशब्दोऽस्तु। स यदा क्रियापरो भवति, तदा तत्स्वरूपस्य प्रकृतित एव प्राप्तत्वाद्विशेषणपरो भवति। तद्यथा—"दण्डी प्रैषानन्वाह" इति विशिष्टाभिधाय्यपि दण्डिशब्दो विशेषणपरो भवति; नापि लक्षणा। ततश्च कार्यवचनः शब्दो यदा क्रियायां प्रयुज्यते, तदा कार्यस्वरूपविशेषणपरत्वं श्रुतिवृत्त एव सन् प्रतिपद्यते। नैतावता लक्षणा भवतीत्युभयत्रापि

मुख्यत्वमेव। यस्तु वदति—नन्वेवं सति कार्यसामान्यवाचित्वे कामाधिकारेऽपि समानपदोपात्तो धात्वर्थ एव कार्यतया अभिधेयः स्यादित्यपूर्वाभिधानमुत्सादेत्; तेन यदैव कामिनियोज्यसंबन्धादपूर्वाभिधायित्वमवगतम्, तदैव तन्निर्वाहार्थं क्रियालाक्षणिकत्वमध्यवसितमिति—स एवमनुशासितव्यः—हन्त तर्हि किं नाश्रौषीः, 'यो हि पाषाणान् भक्षयति, ईषत्का(का)रास्तस्य मुद्गशष्कुलाः' इति; यो हि नियोज्यसंबन्धो लिङ्शब्दं कार्यत्ववाचिनमवगतमपि तत उद्धृत्यापूर्वं नयति, स कथं कार्यसामान्यवाचिनमपूर्वं नेतुं न क्षमते। तस्मात् कर्तव्यतासामान्यवाची सन्नपि यत्र फलकामस्य नियोज्यत्वं तत्र तद्बलेनापूर्वमभिधत्ते; अन्यत्र समानपदोपादानात् क्रियाम्। अतः कार्यसामान्यवाचित्वाल्लिङ्शब्दस्यापूर्वक्रिययोः साधारणत्वान्न कापि लक्षणा समाश्रयणीया स्यात्। एवमपि लौकिकवाक्ये लक्षणां लिङादेरभ्युपगच्छता तदितरपदानां कुतो लक्षणा नाभ्युपगम्येति सर्वपदलक्षणावादिनां मृषावादिनामाशयः।

**उक्तरूपपत्तिसहितैः श्रुतिवाक्यैरिति**। अत्र केचित् — अत्र इत्यस्य 'उक्तेभ्यो हेतुभ्यः' इत्युपसंहाररूपत्वमेव। अन्यथा 'उपपत्तिसहितवाक्यैरिदमेवार्थजातं प्रतिपादयन्तो वेदान्ताः' इत्यन्वयस्य क्लिष्टत्वं स्यात्, वाक्यानां वेदान्तानां च भेदाभावादिति वदन्ति।

## (प्रत्यक्षस्य सन्मात्रग्राहित्वम्)

अव्यवहितं वृत्तं परित्यज्य व्यवहितवृत्तकीर्तनमनुचितमित्याशङ्क्याह—**शास्त्रप्रत्यक्षविरोध** इति। संगतिप्रदर्शनार्थं व्यवहितकीर्तनमिति भावः। **विरोधाभ्युपगमेऽपीत्यर्थ** इति। न च **च**शब्दस्याप्यर्थत्वे पूर्वोक्तसमुच्चयार्थत्वविरोध इति वाच्यम्, अपेरपि समुच्चयार्थत्वसंभवेन विरोधाभावात्। ननु 'विरोध एव न दृश्यते' इत्ययुक्तम्, विरोधप्रतिपत्तेर्दुरपह्नवत्वात् हेतुवैयर्थ्याच्चेत्याशङ्क्याह—**अविरोधं प्रतिजानीत** इति। 'निर्विशेषसन्मात्रग्राहित्वात्' इत्यस्य व्यधिकरणतया अहेतुत्वशङ्कां निवर्तयति—**हेतुमाह** इति। प्रत्यक्षं न शास्त्रविरुद्धं निर्विशेषसन्मात्रग्राहित्वादिति भाष्याभिप्राय इति भावः। **प्रतीतेर्भ्रान्तिरूपत्वसंभवादिति**। सन्मात्रग्राहिप्रत्यक्षे विलक्षणविषयविषयकत्वप्रतीतेरित्यर्थः। न तु भेदप्रतीतेरित्यर्थः; तथा हि सति सन्मात्रग्राहिप्रत्यक्षवादविरोधापत्तेः; तच्छङ्काया विलक्षणेत्यादिभाष्य-

ग्रन्थादनिवृत्तेश्च ; भ्रान्तेरपि विलक्षणव्यवहारहेतुत्वात् । '**तयोर्भिन्नकालज्ञानफलत्वात् प्रत्यक्षज्ञानस्य चैकक्षणवृत्तित्वात्**' इति भाष्यस्यायमर्थः—प्रत्यक्षज्ञानं किं युगपदेव व्यवहारद्वयमुत्पादयति, उत क्रमेण ? नाद्य इत्याह — **तयोरिति** । भिन्नकालं यत् ज्ञानं प्रतियोगिस्मरणादिरूपं तत्फलत्वादित्यर्थः । एकस्मिन् काले प्रतियोगिज्ञानसापेक्षनिरपेक्षयोर्द्वयोर्व्यवहारयोरुत्पत्त्यसंभवादित्यर्थः । द्वितीयं दूषयति—**प्रत्यक्षज्ञानस्य चेति** । न च पश्चादुत्पन्नप्रत्यक्षज्ञानान्तरेण भेदव्यवहारोऽस्त्विति वाच्यम्, पश्चादुत्पन्नस्य प्रत्यक्षत्वे प्रमाणाभावादिति भावः । **किं युगपदुभयग्राहीति** । युगपद्व्यवहारद्वयोत्पादकमित्यर्थः ; भाष्यानुरोधात् , 'युगपद्वा क्रमेण वा मूलं स्यात्' इत्युत्तरग्रन्थानुगुण्याच्चेति द्रष्टव्यम् । **असाधारणव्यवहारेऽपि घटस्य पटाद्व्यावृत्ततया प्रतीतौ** अपेक्षितायामिति शेषः । **प्रत्यक्षस्य स्वरूपमात्रविषयत्वे कथं भेदव्यवहारसंभव** इति । स्वरूपमात्रविषयत्वे घटादिस्वरूपाविषयत्वे कथं घटादिरूपभेदव्यवहारसंभव इत्यर्थः ।

( भेददूषणम् )

ननु घटादिस्वरूपमात्रग्रहणस्य प्रतियोगिज्ञानादिसापेक्षत्वाभावात् घटादिस्वरूपस्य प्रत्यक्षविषयत्वे काऽनुपपत्तिरिति चेत् , उच्यते—इन्द्रियव्यापारानन्तरं प्रतीयमानो घटादिः सर्वतो भिन्न एव प्रतीयते, तत्र तदितरभेदे संशयविपर्ययादर्शनात् । तत्र च भेदस्य प्रतियोगिसहोपलम्भनियमवतो न प्रत्यक्षेण ग्रहणसंभवः, देशकालादिव्यवधानेनासंनिकृष्टानामपि प्रतियोगिनां संभवात् । तस्मात् प्रत्यक्षायोग्यस्य प्रतियोगिनः प्रतिभासो भ्रान्तिरूप इति तदेकवित्तिवेद्यस्य भेदस्य भेदैकवित्तिवेद्यस्य घटादेश्च अनेकविषयत्वात् प्रत्यक्षं निर्विशेषसन्मात्रग्राह्येव; न घटादिस्वरूपग्राहीति मृषावादिनामाशयात् ।

सर्वस्माद्भेदव्यवहारप्रसक्तिर्नानिष्टा स्वरूपभेदवादिनः, स्वरूपग्रहणानन्तरं प्रतियोगिनः स्मरणे सति व्यवहारस्येष्टत्वादित्याशङ्क्य व्याचष्टे —**प्रतियोगिनिरपेक्षभेदव्यवहारप्रसक्तेरिति** । **स्वरूपग्रहणस्य शब्दव्युत्पत्तीति** । अतिरिक्तभेदपक्षेऽपि भेदस्वरूपग्रहणस्येत्यर्थः । **तथा प्रतियोगिग्रहण(स्मरण)मपीति** । स्वरूपानतिरिक्तभेदपक्षेऽपीति शेषः । अतिरिक्तभेदवादिनैयायिकादिपक्षे व्युत्पन्न-

शब्दस्मरणादिर्भेदव्यवहार एव कारणम्, न तु भेदज्ञाने; तथास्मन्मते प्रतियोगिग्रहणादिकमपि भेदव्यवहार एवेति भावः। **स्वरूपभूतं भेदान्तरमिति** । न च स्वरूपभूतत्वभेदान्तरत्वयोर्विरोध इति शङ्कनीयम्, काल्पनिकभेदमादाय भेदान्तरत्वधर्मधर्मिभावोपपत्तेरिति भावः। ननु व्यक्त्यन्तरानभ्युपगमान्नानवस्थेत्यरुचेराह—**किंच शब्दान्तरेण धर्म इत्युक्तमिति** । कल्पितभेदमादाय धर्मधर्मिभावोपपादने घटस्यापि घटाश्रयत्वप्रसङ्गः। अत्र कल्पितभेदमादाय धर्मधर्मिभाव उपपद्यत इति वदता स्वरूपपक्षं परित्यज्य धर्मपक्ष एवावलम्बितः स्यादित्यर्थः। **घटस्य भेदव्यवहारे कृत** इति। अनुगतस्य भेदाख्यधर्मस्याभावात् भेदशब्दो यस्यां व्यक्तौ गृहीतसंगतिकस्तत्रैव प्रयुज्येत, नान्यत्रेत्यनुगतव्यवहारोच्छेदप्रसङ्ग इत्यर्थः। **धर्मश्चेत् पूर्वदोष** इति। व्यावृत्तधर्मत्वेऽनुगतव्यवहारोच्छेद इत्यर्थः। **सन्मात्रमङ्गीकृतं स्यादिति** । तस्यैवानुवृत्तस्वरूपत्वादित्याशयः। **धर्मपक्षे पूर्ववदिति** । न च प्रमेयत्वे प्रमेयत्ववत् अनुवृत्तभेदरूपधर्मस्य स्वपरनिर्वाहकत्वान्नानवस्थादोष इति वाच्यम्, तस्याप्यसंप्रतिपत्तेरिति भावः। **तत्खण्डस्यापि तथा स्यादिति** । द्विधाभूतस्यापि द्विधाभावः स्यादिति भावः। भाष्ये — **तस्यापि भेदस्तद्धर्मस्तस्यापीति** । 'भेदस्तद्धर्मः' इति शेषः। ततश्च तस्यापि भेदस्तद्धर्मः, तस्यापि भेदस्तद्धर्म इत्यनवस्थेत्यर्थः। भाष्ये — **भेदे च तस्यापि भेदस्तद्धर्म** इत्यत्र षष्ठ्यन्ततच्छब्देन 'भेदे च' इत्यव्यवहितपूर्वनिर्दिष्टस्य भेदरूपधर्मनिष्ठस्य स्वरूपप्रतियोगिकस्य द्वितीयभेदस्य ग्रहणसंभवे व्यवहितस्य प्रथमभेदस्य ग्रहणमन्याय्यम्, तथाहि सति 'भेदस्तद्धर्मः' इत्युक्तेरेवोचितत्वेन 'तस्य भेदः' इति निर्देशस्य व्यर्थत्वाच्चेत्यपरितोषादाह—**यद्वा धर्मस्य स्वरूपाद्यो भेद** इति। प्रथमपक्षे 'तस्यापि भेदस्तद्धर्मः' इति वाक्यखण्डेन भेदधर्मिकभेदान्तरसिद्धिमात्रम्; द्वितीयपक्षे 'तस्यापि भेदस्तद्धर्म' इत्यनेन भेदधर्मिकभेदेऽपि भेदसिद्धिरिति विशेषः। **जात्यादिधर्मविशिष्टवस्तुग्रहणे** सतीत्यत्र भाष्ये आदिशब्देन धर्मित्वप्रतियोगित्वधर्मधर्मित्वानां ग्रहणमित्याह—**त्रिधा च तदित्यादिना** । घटस्य पटात् भेदज्ञाने हि त्रीणि कारणानि—घटपटरूपधर्मिप्रतियोगिज्ञानमेकम्; भेदतदाश्रयरूपधर्मधर्मिज्ञानं द्वितीयम्। विशिष्टज्ञाने विशेषणविशेष्यज्ञानस्य हेतुत्वात् घटस्य पटव्यावृत्त[त्व]घटत्वाश्रयत्वज्ञानं तृतीयमिति पर्यवसितोऽर्थः। न च धर्मिप्रतियोगिज्ञानस्याभावज्ञान-

हेतुत्वेऽपि धर्मित्वप्रतियोगित्वप्रकारकज्ञानस्याहेतुत्वात् कथमन्योन्याश्रयः? धर्मित्वप्रतियोगित्वप्रकारकज्ञाने परं भेदज्ञानापेक्षा, न धर्मिप्रतियोगिज्ञान इति वाच्यम्, भेदज्ञानात् प्राक् प्रतियोगित्वत्वादिविशिष्टप्रतियोगित्वादिप्रकारकज्ञानाभावे प्रतियोगित्वादिविशिष्टप्रतियोगिविशेषणकभेदप्रत्ययाभावेन प्रतियोगित्वप्रकारकज्ञानस्य हेतुत्वात्। अत एव भेदतदाश्रययोरपि धर्मधर्मिणोर्धर्मधर्मित्वेन ज्ञानाभावे विपरीतधर्मधर्मिभावप्रतीतिप्रसङ्गेन तेन रूपेण धर्मधर्मिज्ञानमपेक्षितमित्यत्र तात्पर्यात्।

अथ बाधकप्रमाणमुपन्यस्यतीति। न केवलं साधकाभावः; बाधकमप्यस्तीति **किंचशब्दार्थ** इत्यर्थः। न च 'भेदः स्वरूपं धर्मो वा' इत्यादिबाधकं प्रागप्युपन्यस्तमिति वाच्यम्, तस्य तर्करूपत्वेन प्रमाणत्वाभावादित्यत्र तात्पर्यात्। **विपरीतोपाधिसद्भावाच्चेति**। साध्यविपर्ययरूपसत्यत्वप्रयोजकबाधितत्वसत्त्वादित्यर्थः। **किं संवादफलभूता, उत बाधफलभूतेति**। पटसत्त्वग्राहि प्रमाणं संवादः; तदसत्त्वग्राहि प्रमाणं बाधः। भावग्राहि प्रमाणं संवादः; अभावग्राहि प्रमाणं बाधः। फलत्वं च विषयत्वमेव। घटादौ दृष्टा पटव्यावृत्तिः पटसत्त्वग्राहिप्रमाणरूपसंवादफलभूता, उत पटाभावप्रतीतिलक्षणबाधफलभूता वेति भवन्त एव विमृशन्त्वित्यर्थः। [1]पटव्यावृत्तेः पटसत्तारूपत्वे हि संवादफलत्वशङ्कापि स्यात्; अभावरूपत्वे च बाधितत्वमकामेनापि (अकामेऽपि?) सिध्यतीति भावः। ननु 'घटोऽस्ति' इति पटाभावसिद्धिमात्रेण पटादीनां कथं बाधितत्वसिद्धिरित्याशङ्क्य बाधफलभूताभावव्यतिरेकेण बाधितत्वस्याभावात् बाधफलभूतोऽभाव एव बाधितत्वमित्यभिप्रायेणाह — **रज्जौ भूदलनादीनामभाव** इति।

## (सदनुभूत्योरैक्यम्)

**भेदस्य भ्रान्तिसिद्धत्वमपिना समुच्चीयत** इति। **न प्रमाणपदवीमनुसरति** = भ्रान्तिसिद्धः इति हि तस्यार्थो वर्णितः। ततश्च विषयविषयिभावो भेदश्च भ्रान्तिसिद्ध इत्यर्थ इति भावः। यद्यप्यपिना भेदः समुच्चीयत इति विवक्षितार्थसिद्धिः, तथापि फलितमादाय तथोक्तमिति द्रष्टव्यम्। भाष्ये —

---

1. घटव्यावृत्तेर्घटसत्तारूपत्वे. पा. घटव्यावृत्तेः पटसत्तारूपत्वे. पा.

**तस्मात् सदनुभूतिरेवेति** । ननु घटादिकमपि सदनुभूतिभ्यामभिन्नमेव स्यात्, भेदस्य दुर्निरूपत्वादिति चेत् — न, एतस्याभ्युच्चयमात्रत्वेनैतदतिप्रसङ्गस्यादोषत्वात् ।

( अनुभूतेः स्वयम्प्रकाशत्वम् )

**किंचशब्दसमुच्चितादन्यस्येति** । यदि प्रत्यनुमाननिरासः **किंचशब्देन** समुच्चीयते, तदा 'अनुभवापेक्षा च' इति चशब्देनानुमानान्तरं समुच्चीयते। यदि चानुमानान्तरं किंचशब्देन समुच्चीयते, तदा अनेन चशब्देन प्रत्यनुमाननिरासः समुच्चीयत इत्यर्थः ।

**क एवं नियामक इत्यत्राहेति**। ज्ञानस्य सत्तया प्रकाशककोटिनिवेशः कुत इति शङ्कानिवारकं प्रागुक्तोपसंहारपरं **तस्मा**दिति पदमिति भावः । **अस्मदुक्तहेत्वोः सोपाधिकत्वनिरासाच्चेति** ; ज्ञानं परप्रकाश्यं, वस्तुत्वात् भासमानत्वाद्वेति हेत्वोः स्वसत्तया प्रकाशमानत्वाभावस्य परोद्भावितोपाधेर्निरासादित्यर्थः । **स्वस्मै भासत्वादिति** । या ज्ञातता यत्पुरुषवेद्या सा तदीयज्ञानजन्येति व्याप्त्या स्वीयमेव ज्ञानमनुमीयते, नान्यदीयमिति भावः ॥

**असाधारण्यप्रतिक्षेपः फलित** इति । पुरुषविशेषासाधारण्येत्यर्थः । अयमर्थः, 'अनुभूतिव्यतिरेकी विषयधर्मः' इत्युत्तरग्रन्थे स्पष्टः । **ये पुनर्द्वित्वादिकं नाभ्युपगच्छन्तीति** । यादृशादपेक्षाबुद्धिविषयाद्द्वित्वाद्युत्पत्तिः, तादृशापेक्षाबुद्धिविषयवस्तुविशेषोपलम्भ एव द्वित्वादिव्यवहारं जनयति, न द्वित्वादिरूपं किंचिदस्तीति सिद्धान्तिमते प्रतिबन्दी न संभवत्येवेत्यर्थः । **आत्ममनःसंयोगे व्यभिचारः स्यादिति**। क्षणिके आत्ममनः संयोगविशेष इत्यर्थः । **दृष्टान्तश्च साधनविकल** इति । सुखदुःखादीनामन्तःकरणधर्मत्वादिति भावः । **तदबुभुत्सितग्राह्यं दृष्टमिति**। **अबुभुत्सितग्राह्यम्** = 'इदमहं न बुध्येयम्' इति विपरीतेच्छायां सत्यामपि ग्राह्यमित्यर्थः । **तस्याप्यबुभुत्सितग्राह्यत्वान्मानसप्रत्यक्षवेद्यत्वं स्यादिति** । तस्यापि मानसप्रत्यक्षवेद्यत्वेनाबुभुत्सितग्राह्यत्वान्मानसज्ञानान्तरविषयत्वमवश्यंभावीत्यर्थः। **ज्ञाने सतीच्छेति** । ज्ञाने सति बुभुत्सेत्यर्थः। सामान्यतो विदिते विशेषतश्चाविदित एव बुभुत्साया उदयादिति भावः । अबुभुत्सितग्राह्यत्वपक्षेऽनुव्यवसायधारा-

प्रसङ्गमुक्त्वा बुभुत्सितग्राह्यत्वपक्षेऽपि बुभुत्सान्तरितज्ञानपरंपरामाह— **किंच मानसेति। ज्ञानं बुभुत्सितग्राह्यं सुखादि तु नेति चेदिति**। ततश्च सुखादिषु प्रतीतिव्याप्तिसंभवेऽपि ज्ञानस्य न प्रतीतिव्याप्तत्वम्; बुभुत्साभावे तत्प्रतीतेरनुत्पत्तेः। न च बुभुत्साया अन्योन्याश्रयग्रस्ततया न हेतुत्वमिति वाच्यम्, नानाशब्दसंकीर्णवीणाशब्दश्रवणादौ बुभुत्साहेतुत्वस्य दर्शनादिति भावः। **यदा प्रत्यक्षेण गृह्यत इति**। प्रत्यक्षग्राह्यत्वं हेतुविशेषणमिति भावः। **पक्षो हेतुश्चेति**। प्रत्यक्षग्राह्यं ज्ञानं मानसग्राह्यम्, प्रत्यक्षग्राह्यत्वे सति क्षणिकात्मविशेषगुणत्वादिति वक्तव्यं स्यात्। न च तथोक्तम्। अत इयं विवक्षा न संमतेति भावः।

(स्वयम्प्रकाशत्वप्रयोगशिक्षणम्)

**तद्व्यवहारहेतुत्वादिति**। स चासौ व्यवहारस्तद्व्यवहारः; न तु तस्य व्यवहार इति भ्रमितव्यम्। तथा हि सति द्वितीयहेतौ कृत्स्नस्यापि प्रविष्टत्वाद्विभागो न स्यात्। न च धर्मश्च व्यवहारश्च धर्मव्यवहारौ, तौ च तौ धर्मव्यवहारौ च तद्धर्मव्यवहाराविति उक्तावेव विभागात्, द्वितीयहेतौ न कृत्स्नानुप्रवेश इति वाच्यम्—तत्पदस्यैव धर्मपदस्थानीयत्वात्। **अनुभूतिसामग्रीव्यतिरिक्तेति**। न चानुभूतित्वस्यानुभूतिव्यतिरिक्ततत्सामग्रीसापेक्षत्वेनान्याधीनत्वं स्यादिति वाच्यम्—अनुभूतिसामग्र्यैवानुभूतित्वस्याप्युत्पत्तावनुभूतित्वस्यानुभूत्यन्याधीनत्वाभावात्। सत्यामप्यनुभूतावितरव्यतिरेकेणानुभूतित्वव्यतिरेके ह्यनुभूतित्वस्येतराधीनत्वम्। अनुभूतिसामग्रीमात्रेणैवानुभूतित्वस्यापि सिद्धावितराधीनत्वाभावात्। अत एव ज्ञानसामग्रीमात्रजन्यस्य प्रामाण्यस्य स्वतस्त्वमिति भावः। यद्वा **अनुभूतिसामग्रीव्यतिरिक्तेत्यस्य** सजातीयान्तरानपेक्षत्वमित्यर्थः।

अत्रेत्थं ह्यनुमानं प्रयोक्तव्यम्—अनुभूतिः स्वावश्यंभाविप्राकट्यजनने सजातीयापेक्षानियमशून्या, स्वसंबन्धादर्थान्तरे प्राकट्यहेतुत्वात्; यः स्वसंबन्धादर्थान्तरे प्राकट्यहेतुत्वात्; यः स्वसंबन्धादर्थान्तरे यद्धर्महेतुः स स्वस्मिन्नवश्यंभावितद्धर्मजनने सजातीयापेक्षानियमशून्यः। एवं द्वितीयमप्यनुमानम्। यथा — तद्देहं तदा मैत्राभाववत्, तदा मैत्रचक्षुषानुपलभ्यमानत्वात्; यत् यदा यद्वत्त्वेन नोपलभ्यते, तत्

तदा तदभाववदिति सामान्यव्याप्तिवत् (प्तिः?)। ननु परत्र स्वोत्पाद्यधर्मस्य स्वधर्मत्वे कथमनुभूतेस्तद्वत्त्वं स्यात्? अनुभूतौ स्वोत्पाद्यपरगतधर्माभावादित्याशङ्क्याह—**स्वसाध्यधर्मात्यन्तसजातीयेत्यर्थ** इति। धर्मशब्दस्य परत्र स्वोत्पाद्यधर्मपरत्वे प्रमाणं दर्शयति — **अर्थान्तरे तद्धर्महेतुत्वादिति हेतूक्तेरिति**। अर्थान्तर इति हेतौ दर्शनात् साध्येऽपि परत्रेति वक्तव्यम्। धर्महेतुत्वादित्युक्तेऽनुभूतिहेतुकधर्म एव ग्राह्यः। ततश्च यो धर्मो हेतौ निर्दिष्टः, स एव साध्यधर्मशब्देन ग्राह्यः; तस्यैव धर्मस्येहासंभवात् तत्सजातीयधर्मवत्त्वं साध्यमिति भावः। **स्वस्मिन्नवश्यंभावीति**। ननु प्राकट्यस्य नावश्यंभावित्वमनुभूतौ परप्रकाशवादिना परेणाभ्युपेतम्, अभ्युपगमे त्वनवस्थाभीत्या स्वप्रकाशत्वस्यैवाभ्युपगन्तव्यत्वप्रसङ्गादिति चेत्—न; उत्पन्ने ज्ञाने संशयाद्यदर्शनेन प्राकट्यं स्वावश्यंभावी यभि(नु)मानेनेदृशप्रयोगोपपत्तेः। **परज्ञानस्यानुमेयत्वदर्शनाद्बाधप्रसङ्गादिति**। इतरानपेक्षप्राकट्यवद्भावेऽपि परत्र स्वोत्पाद्यधर्मसजातीयेषु सर्वेष्वपीतरापेक्षाभावस्याभावाद्बाधः स्यादिति भावः। नन्वीदृशानुमानवादिनो मते ज्ञानस्यानुमेयत्वानभ्युपगमात् कथमनुमेयत्वमादाय बाध इत्याशङ्क्याह—**न हि ज्ञानान्तरगोचरत्वमिति**। **सजातीयानपेक्षो हेतुरनुभूतिरितीति**। अनुभूतिरनन्याधीनव्यवहारेत्युक्ते हेतुहेतुमद्भावलक्षणसंबन्धेनानन्याधीनघटादिव्यवहारवत्त्वमनुभूतावस्तीति सिद्धसाधनमिति भावः। **अनैकान्त्यं स्यादिति**। हेतौ तच्छब्दाभावे स्वोत्पाद्यसजातीयधर्मस्यैवानन्याधीनत्वमित्यर्थस्य साध्येऽप्यलाभेन चाक्षुषत्वहेतोः रूपस्य स्वावश्यंभाविद्वित्वादिजनने स्वात्यन्तसजातीयेतरसापेक्षत्वात् व्यभिचार इत्यर्थः।

ननु स्वसंबन्धः स्वनिरूप्य(पित)संबन्धः; ततश्च स्वस्मिन् योऽभिसंबन्धः, न स स्वनिरूपितः। यद्यपि संबन्ध एकः, अथाप्यग्निनिरूपितः संबन्धो घटे, घटनिरूपितः संबन्धोऽग्नाविति व्यवहारानुसारेण स्वप्रतियोगिकत्वचेरेण स्वस्मिन् स्वसंबन्धस्य वृत्त्यभावात्। अत एव हि 'न हि स्वयं स्वसंयुक्तः' इति व्यवहरन्ति। किंच रूपान्तरोत्पत्तावग्निसापेक्षत्वेऽपि स्वसजातीयघटानपेक्षणान्न व्यभिचार इत्यरुचेराह—**किंचार्थान्तरशब्द** इति। **निर्दिष्टजातीयाद्विजातीयपर** इति। आवश्यक इति शेषः। **न हि घटः स्वसंयुक्तत्वादाविति**। न च पटादौ घटसंयुक्तत्वमा-

पादयतो घटस्य स्वस्य घटसंयुक्तत्वे घटान्तरापेक्षणात् पुनरपि व्यभिचार इति वाच्यम्, स्वावश्यंभाविपदेनैव तद्वारणात्। न हि घटजातीयस्य घटसंयुक्तत्वमवश्यंभावि। ननु—स्वसंबन्धादचेतने चेतनसंयुक्तत्वमापादयतश्चेतनस्य स्वावश्यंभाविचेतनसंयुक्तत्वे सजातीयसापेक्षत्वदर्शनाद्व्यभिचारः तदवस्थ एव; तथा चेतननियाम्यत्वमचेतने आपादयतः चेतनस्य स्वनियाम्यत्वे चेतनान्तरापेक्षणात् व्यभिचारश्च। न चावश्यंभाविपदेनैव तन्निरास इति वाच्यम्, परमात्मनोऽपि भक्तनियाम्यत्वात्। तथा स्वसंबन्धेन क्षत्रिये शिष्यत्वमापादयति ब्राह्मणे स्वस्मिन् शिष्यत्वस्य ब्राह्मणान्तरसापेक्षत्वेन व्यभिचारः। न च ब्राह्मणानां शिष्यत्वं नावश्यंभावि, उपनयनात् प्रागपि मरणसंभवादिति वाच्यम्—दृष्टान्ते रूपादावपि चाक्षुषत्वं नावश्यंभावीति वक्तुं शक्यत्वात्। अनुभूतेरपि प्राकट्यं नावश्यंभावीति वक्तुं शक्यत्वाच्च। तस्मादप्रतिष्ठितमिदमनुमानमिति चेत्—

अत्र केचित्—यत् स्वव्यतिरिक्ते सर्वस्मिन् यद्व्यवहारे प्रवृत्तिनिमित्तम्, तत् स्वस्मिन् तद्व्यवहारे नेतरापेक्षमिति पर्यवसितोऽर्थः। ततश्चानुभूतिव्यतिरिक्ते सर्वत्र 'अनुभूयते, प्रकाशते' इत्यादिव्यवहारे प्रवृत्तिनिमित्तभूतानुभूतिः स्वस्याम् (स्मिन्?) 'अनुभूयते, प्रकाशते' इत्यादिव्यवहारे नेतरापेक्षा सत्तावदिति सत्तास्थानीयानुभूतिरेकेत्यभिमानवतामीदृशानुमानमित्याहुः।

**पुत्रे पुत्रत्वव्यवहारहेताविति**। न च पुत्रस्यापि पितृत्वेनार्थान्तरपदेनैव तद्वारणमिति वाच्यम्—षण्डपुत्रस्य पितृत्वानधिकरणस्यापि संभवादिति भावः। **स्वसंबन्धतुल्यकालेति**। स्वसंबन्धतुल्यत्वं स्वसंबन्धानन्तरकालवृत्तित्वम्। ततश्च ज्ञानसंबन्धानन्तरोत्पन्नप्राकट्येऽपि तदस्तीति बोध्यम्। **न हि पित्रादिप्रवासनिधनयोरिति**। ननु प्रवासनिधनयोरपि जन्यजनकभावः संबन्धोऽस्त्येव, तदपायेऽपि पितृपुत्रत्वयोरनपायात्। प्रोषिते प्रेते च संयोगः परं नास्ति। तादृशसंयोगाभाव एकग्रामगतेऽप्यस्त्येवेति प्रवासनिधनोपन्यासो व्यर्थ एवेति चेत्—न; पश्चाद्विविच्योक्तप्रकारेण चरमधात्वादिरूपस्य पुत्रस्य पितुश्च यः संबन्धः स पुत्रत्वोत्पादकः। "रेतःसिग्योगोऽथ" इति सूत्रोक्तस्तु नातिचिरस्थायी। अत एव, 'पितुरुत्पादनक्रिया उत्पत्तिक्षण एवोत्पाद्यसंबन्धकरी, नान्यदा' इत्युक्तं नयविवेक इति भावः।

उक्तमर्थं संकलय्य दर्शयति—**एतदुक्तं भवतीति । अनुभूतिः स्वजन्यपरगतधर्मात्यन्तसजातीयधर्मभाक्त्वे स्वात्यन्तसजातीयापेक्षानियमरहितेति ।** अनुभूतिरपेक्षारहितेत्युक्ते स्वरूपस्य करणसापेक्षत्वेन बाधः स्यात्; तत्परिहारार्थं धर्मभाक्त्व इत्युक्तम् । तथात्वे रूपस्य चाक्षुषत्वे चक्षुराद्यपेक्षत्वेन साध्यविकलता स्यात्; तत्परिहारार्थं सजातीयापेक्षारहितेत्युक्तम् । तथापि चक्षुरादीनां सत्ताजात्या सजातीयत्वेन साध्यवैकल्यं तदवस्थमित्यत उक्तम् **अत्यन्तसजातीयेति** । तथापि परज्ञानस्य ज्ञानान्तरसापेक्षव्यवहारानुगुण्यतया अंशे बाधः स्यादित्यत उक्तम् **अपेक्षानियमरहितेति** । तथाप्यनुभूतित्वस्यानुभूत्यन्तरानपेक्षतया तेन सिद्धसाध्यता स्यादिति तत्परिहारार्थं **परगतेत्युक्तम्** । परगतधर्मस्यानुभूतिनिष्ठत्वाभावाद् बाधः स्यादिति **परगतधर्मसजातीयेत्युक्तम्** । परगतधर्मसजातीयधर्मभाक्त्वेऽत्यन्तसजातीयापेक्षानियमरहितेत्युक्ते परनिष्ठसत्त्वजातीयसत्त्वभाक्त्वेऽत्यन्तसजातीयानपेक्षत्वेन सिद्धसाध्यता स्यात्; तत्परिहाराय **स्वजन्येति** विशेषणम् । **स्वविजातीये स्वाश्रयंभाविधर्मसजातीयस्वसंबन्धतुल्यकालधर्महेतुत्वादिति** । धर्महेतुत्वादित्युक्ते घटादिभिरनैकान्त्यं स्यात्, तेषां स्वपाकजरूपहेतुत्वात् । परत्रेत्युक्तेऽपि द्रव्यान्तरे संयुक्तत्वजनके, स्वस्य संयुक्तत्वे द्रव्यान्तरसापेक्षे द्रव्ये व्यभिचारः स्यादित्यत उक्तं **स्वविजातीयेति** । तथापि सिद्धान्तिमते विजातीये शरीरे शरीरत्वमापादयति स्वस्य शरीरत्वे स्वसजातीयपरमात्मसापेक्षे चेतने व्यभिचारः स्यात्; तत्परिहाराय **स्वाश्रयंभावीति** । अनेन स्वसजातीयव्यापकत्वमभिप्रेतम् । तथापि पुत्रगतपुत्रत्वहेतौ स्वस्य पुत्रत्वे पित्रन्तरसापेक्षे पितरि, काष्ठद्वैधीभावहेतौ स्वस्य द्वैधीभावे परश्वन्तरसापेक्षे परशौ व्यभिचारः स्यात्; अतः **स्वसंबन्धतुल्यकालेति** च विशेषणम् । अनुमानान्तरे चैवमेव पदप्रयोजनं द्रष्टव्यम् । '**अनुभूतिरिति व्यवहारे चेत्यर्थः**' इत्ययं ग्रन्थः लेखकस्खलनकृतः, परत्र 'प्रकाशते' इति व्यवहारस्यैवोत्पाद्यत्वेन 'अनुभूतिः' इति व्यवहारस्यानुत्पाद्यत्वादिति द्रष्टव्यम् । **सोपाधिकमिति** । संबन्धविशेष एवोपाधिरित्यर्थः । **निरासको हीति** । दीपस्य हि स्वप्रकाशत्वं स्वीयतमोनिरासकत्वं वा स्यात्, स्वविषयज्ञानोत्पादकत्वरूपं वा स्यात् । ज्ञानस्य स्वप्रकाशत्वं च स्वविषयव्यवहारोत्पादकत्वमेव । अत्र न क्वापि विरोधं पश्याम इति भावः । यदि हि स्वस्यैव कार्यत्वं कर्तृत्वं च स्यात्, तदा हि परं विरोधः । स्वविषयव्यवहारो वा, स्वविषयज्ञानं

वा, स्वसंबन्धितमोनिरासो वोत्पाद्यः, स्वयं च कर्तृत्वयुक्तौ हि को विरोधः? तत्र चाकारान्तरेण चेदिति। तत्राप्याकारान्तरं चेत्, अविरोध एव। तथा(१) 'तदात्मानं स्वयमकुरुत' इत्यादौ स्थूलचिदचिद्विशिष्टरूपेण कर्मत्वं सूक्ष्मचिदचिद्विशिष्टवेषेण कर्तृत्वमित्यस्यार्थस्य दर्शनादिति भावः। अज्ञातस्यैव ज्ञानस्येति। अनवभासमानस्यैवेत्यर्थः। "तस्मादनवभासमानस्यैव" इत्युपसंहारग्रन्थानुसारादिति द्रष्टव्यम्। ज्ञानकर्मतापूर्वकत्वविरहः प्रसज्यते चेदिति। ज्ञानं प्रति कर्मकारकत्वपूर्वत्वनियमभङ्ग इष्ट इति भावः। न च तद्व्यवहारस्तत्कर्मकज्ञानपूर्वक इति नियम आवश्यकः, अन्यथा अन्यज्ञानादन्यस्य व्यवहारप्रसङ्ग इति वाच्यम्—व्यवहारो ज्ञानपूर्वक इत्येव सामान्यव्याप्तिः; जडस्थलेऽतिप्रसङ्गभङ्गाय तद्विषयज्ञानस्य तद्विषयव्यवहारहेतुत्वमिति नियामकान्तरमपि कल्प्यते; न ज्ञानस्थलेऽपीति भावः।

सेयं स्वयंप्रकाशानुभूतिरित्यत्र तच्छब्देन सैव सतीत्युक्तं, सदैक्यं परामृश्यते, इदंशब्देन प्रागुक्तानुमाननिराकरणसिद्धं प्रमाणान्तराविषयत्वं परामृश्यत इति व्याचष्टे—सेयमिति। सदैक्यपरामर्शस्य वक्ष्यमाणानुपयुक्तत्वादन्यथा व्याचष्टे—यद्वा स्वयंप्रकाशत्वेति। द्वितीयः कल्पो ग्राह्याभावाद्दूषित इति। अनुमित्यादौ ग्राह्यस्याकारणत्वेन तदभावेन दूषणासंभवादिति भावः। अतो भावरूपविकारेति। नाशस्तु न भावरूपो विकारः तस्याभावरूपत्वादिति भावः। ननु भावरूपविकाररहित्ये साध्ये अनुभूतेर्नाशराहित्यं न सिध्यतीत्यस्वरसादाह — यद्वा भावस्य विकार इतीति। भावत्वे सत्यनुत्पन्नत्वं विकारान्तराभावे प्रयोजकमिति फलितमिति। यद्यप्युत्पत्त्यभावात् भावस्य विकारा न सन्तीत्युक्तेऽनुत्पन्नत्वं भावसंबन्धिविकारित्वस्याभावे प्रयोजकमित्येव सिध्यति; न तु भावत्वस्यानुत्पन्नत्वविशेषणत्वम्। तावतापि प्रागभावे व्यभिचारवारणासंभवाच्च। प्रागभावस्याभावरूपतया भावसंबन्धिविकाराभावात् — तथापि भावविकारित्वाभावस्य विशिष्टाभावस्य विकारित्वरूपविशेष्याभावपर्यवसानार्थं भावत्वे सत्यनुत्पन्नत्वादित्यनुमानान्तरमावश्यकमित्यभिप्रेत्यैतदुक्तमिति ध्येयम्।

(अनुभूतेर्नित्यत्वादिसमर्थनम्)

व्यापकजन्मनिवृत्त्येति। नानात्वनिवृत्त्यैव जन्मनिवृत्तेरुक्तत्वादिति भावः। अत्र व्याप्तिग्रहस्थलाभावव्याप्तिकदूषणं द्रष्टव्यम्। यथावस्थितान्वयेऽपि पर्यवसान-

बलाद्व्यापकत्वसिद्धिं दर्शयति—**यद्वा यथेति।** **अनुभूतिर्न व्यावृत्तिरूपधर्मभागिति।** इदमनुमानद्वयं नित्यत्वादिधर्मराहित्यरूपद्वितीयपक्षानुमानयोरप्युपलक्षणं द्रष्टव्यम्। 'यतो निर्धूतनिखिल' इत्यस्य ज्ञातसद्भावसमर्थनमुखेन संविदात्मत्वहेतुत्वं स्वरसतः प्रतीयत इत्यभिप्रेत्य व्याचष्टे—**सकलभेदनिषेधेनेति।** निर्धूतनिखिलभेदत्वस्यात्मत्वेऽद्वारकहेतुसंभवमभिप्रेत्य व्याचष्टे—**यद्वा वेदान्तैरात्मन** इति। 'आश्रयो ज्ञाता' इत्यनयोः पौनरुक्त्यमाशङ्क्य ज्ञातृशब्दविवरणरूपत्वान्न पौनरुक्त्यमित्यभिप्रेत्याह—**स्वरूपातिरिक्त आश्रयो** हीति। तर्हि ज्ञातृभावस्य को हेतुरित्याशङ्कायां **स्वरूपातिरिक्त**पदेन ज्ञातृभावे हेतुरुक्त इति दर्शयति—**संवित्स्वरूपातिरिक्तत्वादेवेति।** 'स्वप्रकाशरूपा सैवात्मा' इति भाष्यप्रथमव्याख्यायामजडत्वाच्चेति भाष्यस्य पौनरुक्त्यं परिहरति—**स्वयंप्रकाशत्वं स्वतन्त्रसाधकं चेत्याहेति।** पूर्वं संविदात्मनोः स्वयंप्रकाशत्वस्य प्रमाणसिद्धत्वात्, स्वयंप्रकाशस्य प्रागभावाद्यभावेनानुत्पन्नत्वात्, अनुत्पन्नस्य च नानात्वायोगात्, संविदात्मनोर्न भेद इति नानात्वाभावसाधनद्वारा संविदात्मत्वसाधकत्वं स्वयंप्रकाशत्वस्योक्तम्; इदानीं व्याप्तिबलेन संविदात्मत्वसाधकत्वमुच्यत इति भावः। **कर्तरि क्त इति।** आप्नोतेर्गत्यर्थकत्वात्, अकर्मकत्वविवक्षया वा, "गत्यर्थाकर्मक" इति कर्तरि क्त इति भावः।

## (आत्मनो ज्ञातृत्वाभावसमर्थनम्)

ननु 'अहं जानामि' इत्यहमर्थे ज्ञातृत्वस्य प्रत्यक्षसिद्धत्वेऽपि नात्मनो ज्ञातृत्वं प्रत्यक्षसिद्धमित्याशङ्क्याह—**आत्मनोऽहंप्रत्ययगोचरत्वस्य स्वानुभवप्रत्यक्षसिद्धत्वेनेति।** **यद्वा ज्ञातृत्वे प्रतीयमान** इति। अंशांशिना शकलशब्देनायमर्थः स्मार्यत इति भावः। ज्ञातृत्वं हीति भाष्यं पूर्वोक्तहेतोरसिद्धिशङ्कापरिहारपरमित्यभिप्रायेण कर्तृत्वायोगमुपपादयति- **ज्ञातृत्वं हीति।** अस्मिन् व्याख्याने स्वात्मशब्दस्वारस्याभावात् उपपादनसापेक्षकर्तृत्वायोगं हेतुमभिधाय तदुपपादनात्पूर्वमेव, ततः किमिति शङ्कापरिहारानौचित्याच्चान्यथा व्याचष्टे—**यद्वा ज्ञातृत्वं नामेत्यदिना।** स्वरूपभूतज्ञानाश्रयत्वविवक्षायां कर्तृत्वशब्दः कथं घटत इत्याशङ्क्याह—**कर्तृत्वमाश्रयत्वमिति।** स्वात्मनि कर्तृत्वायोगहेतोरुपपादननिरपेक्षत्वेऽपि विकल्पितशिरोन्तरनिराकरणात् प्राक्, ततः किमिति शङ्कापरिहारस्यानुचितत्वात्, 'अतो मनुष्योऽहम्'

इत्यादिभाष्यं हेत्वन्तरपरतया व्याचष्टे - **ज्ञातृत्वं भ्रान्तपुरुषेति**। अस्मिन् पक्षे अतः-शब्दस्य पूर्वोक्तपरामर्शिनो न स्वारस्यमिति द्रष्टव्यम् । **जडत्वविक्रियात्मकत्वसाम्यादिति**। जडत्वविकारित्वसाम्यादित्यर्थः । **विकारिद्रव्याहंकारेति, अविक्रियेति, साक्षिणि चेति** भाष्ये दर्शनात् । अन्यथा विक्रियाद्रव्याहंकारेति, अविक्रियायां साक्षिणीति च भाषणीयं स्यात् । न च ज्ञातृत्वस्य विकाररूपस्य कथं विकारित्वमिति वाच्यम्, विकारत्वविकारित्वयोरविरोधात्। यद्यप्याश्रयाश्रयिभावे साम्यमप्रयोजकम्, द्रव्यगुणजातिव्यक्त्यादौ तथाऽभावात् । तथापि जडं जडाश्रितमेव दृष्टम्; विकारि च विकार्याश्रितमेव दृष्टमिति भावः। केचित्तु, ' विकारिद्रव्याहंकारग्रन्थिस्थाविक्रिये साक्षिणि ' इति भाष्यपर्यालोचनायाम्, निर्विकारे विकारस्यावस्थानं न संभवतीत्येव प्रतीयते; न समयोरेवाश्रयाश्रयिभाव इति मन्यन्ते । " नाह खल्वयमेवं संप्रत्यात्मानं जानात्ययमहमस्मीति; नो एवेमानि भूतानि " इति सुषुप्तिविषयिणी श्रुतिः । अयं सुषुप्तः, ' अयमहमस्मि ' इत्येवं न जानाति खल्वित्यर्थः ।

**शरीरप्रतिबन्द्या निरस्तेति**। शरीरस्य कर्तृत्वेऽप्यात्मनो भोक्तृत्वदर्शनादिति भावः । वस्तुतस्तु भोक्तृत्वमप्यात्मनो नास्त्येव । नन्वेवं संसारमोक्षयोर्वैयधिकरण्यप्रसङ्गः, मोक्षस्य चिन्मात्रगतत्वात्, बन्धस्य कर्तृत्वादिरूपस्यान्तःकरणगतत्वादिति चेत् — न; कर्तृत्वभोक्तृत्वादिविशिष्टान्तःकरणाध्यासाधिष्ठानभाव एव चिन्मात्रगतः संसार इत्यभ्युपगमेन दोषाभावात् । ' अहंप्रत्ययगोचरात् ' इति भाष्यं दृष्टान्ते आपाद्यमानानात्मत्वासिद्धिशङ्कापरिहारपरमिति व्याख्याय, अस्मिन् व्याख्याने दृष्टान्ते शरीरेऽनात्मत्वासिद्धिशङ्काया अतिमन्दत्वादपरितुष्यन्नाह — **यद्वा अप्रामाणिकाहंप्रत्ययगोचरत्वेन हीति** । अस्मिन् पक्षे 'प्रामाणिकानां प्रसिद्धमेव' इति भाष्यस्थ एवकारो यथाशब्दार्थः । अथवा तथाशब्दबलात् यथाशब्दोऽध्याहर्तव्यः । अस्मिन् पक्षे ' अहंप्रत्ययगोचरात् ' इति भाष्यस्थप्रत्ययपदस्य भ्रान्तिरर्थ इति द्रष्टव्यम् । केचित्तु — " ज्ञातुरपि विलक्षणत्वेन प्रमाणसिद्धत्वात्तथाभ्युपगन्तव्यमित्यर्थः " इत्यस्यानन्तरं यद्वेति पदं कोशेषु दृश्यते । न तस्य सम्यक्त्वं पश्यामः; " अप्रामाणिकाहंप्रत्ययगोचर " ति ग्रन्थस्य **तथाहमर्थादिति** भाष्यगतस्याहमर्थादिति पदस्यावतारिकारूपत्वस्यैव युक्तत्वात् । **ततश्चाहंप्रत्ययगोचरादिति** प्रतीकग्रहणनि

न युक्तम् । **अहमर्थादि**त्येव प्रतीकग्रहणं युक्तम् । न चैतत्पूर्वग्रन्थस्थस्या अहंप्रत्ययगोचरादित्यस्य ग्रहणं युक्तम्, देहातिरिक्तत्वसमर्थनपरे तस्मिन् वाक्ये देहातिरिक्तत्वं सिद्धवत्कृत्य शङ्काया अनुत्थितेरित्याहुः। **ज्ञातुरप्यात्मत्वं प्रमाणबाधितं चे**दिति । प्रामाणिकाहंप्रत्ययगोचरस्यापीति शेषः । 'अविक्रिये साक्षिणि' इत्यादिना पूर्वमात्मनि ज्ञातृत्वासंभवस्योक्तत्वात, उत्तरत्र 'तत्कृतोऽयं जानाम्यहमिति भ्रमः' इत्यात्मनि ज्ञातृत्वभ्रमोपपत्तेर्वक्ष्यमाणत्वाच्च पूर्वापरानुगुण्येनात्मनि ज्ञातृत्वावभासनोपपादनपरतया, 'एवमविक्रियानुभवस्वरूपस्यैव' इत्यादि भाष्यं व्याचष्टे—**अविक्रियात्मन** इति। स्ववाक्यस्वारस्यानुरोधेनान्यथा व्याचष्टे—**यद्वा ज्ञातृत्व**मिति ।

**एवं ज्ञातृत्वस्यापारमार्थिकत्वमुक्त**मिति । 'यतोऽहं जानामि' इति भाष्यस्या, अहमर्थस्यैव ज्ञातृतया चिन्मात्रात्मनो यतो ज्ञातृत्वं न पारमार्थिको धर्म इत्यर्थ इति भावः । **विशेष्यपर इत्यपौनरुक्त्य**मिति । धर्मिस्वरूपपर इत्यर्थः । **भ्रान्त्या विवर्तत** इति कथं निर्देशः? भ्रान्त्या प्रतीयत इति हि विवर्तशब्दार्थः । ततश्च पौनरुक्त्यमित्याशङ्क्याह—**करिकलभवन्निर्देश** इति। "कपोले जानक्याः करिकलभदन्तद्युतिमुषि" इतिवदिति भावः ।

## ( महासिद्धान्तः )

**प्रतिजानाति—तदिदमितीति**। वक्तुमुत्कण्ठत इत्यर्थः । "संप्रतिभ्यामनाध्याने" इत्याध्याने प्रतिषेधादात्मनेपदं न भवति । आध्यानमुत्कण्ठा । अत्र च प्रतिपूर्वस्य जानातेरुत्कण्ठार्थत्वस्य विवक्षितत्वात् । **प्रतिजानीते** इति पाठः सुगम एव। केचित्तु, "परमपुरुषशब्देनोपेयम्" इत्यादिग्रन्थे 'प्रतिजानाति' इति पाठो युक्तः, अर्थौचित्यात्; तत्र परमपुरुषादिशब्दैः स्मरणमात्रस्य युक्तत्वात् । इह तु, 'प्रतिजानीते' इत्येव युक्तम् । लेखकदोषवशादिदं व्यत्यस्तमिति वदन्ति । **प्रमाणप्रमेयविशेषसंबन्ध** इति । प्रमाणविशेष उपनिषत्; प्रमेयविशेषः परमपुरुषः; तयोः प्रतिपाद्यप्रतिपादकभावः संबन्धः "तं त्वौपनिषदं पुरुषम्" इति श्रुत्यैव स्पष्टीकृत इत्यर्थः । **अत्र भक्त्या शुद्धभावं गत** इति । न च 'भक्त्या शास्त्राद्वेद्मि' इत्येवान्वयोऽस्तु, न तु 'भक्त्या शुद्धभावं गतः' इति भक्तेर्भावशुद्धिहेतुतयेति वाच्यम्—शास्त्रादित्यनेनैव हेत्वाकाङ्क्षाशान्त्या तत्र भक्तेर्हेतुत्वेनानन्वयात्; भाव-

शुद्धेर्हेतुसाकाङ्क्षत्वाच्च 'भक्त्या शुद्धभावं गतः' इत्येवान्वय इति भावः। अनादिपापवासनेत्यादिकमौपनिषदेत्यादिपूर्वविशेषणहेतुत्वेन व्याख्यायेदानीं कार्यत्वेन व्याचष्टे — **यद्वा सम्यग्ज्ञानेति**। **दुर्निरासत्वमिति**। दुःखेन निरासो यस्येति बहुव्रीहिः। दुर्निरसत्वमिति पाठः सुगम एव। **यद्वा तत्तद्वाद्यभिमतेति**। अयं भावः—सकलाभिमतं प्रमाणं सकलप्रमाणम्; येन येन यदभिमतं तत् सर्वमित्यर्थः। अत एव भाष्ये वक्ष्यति — 'प्रमाणसंख्याविवादेऽपि सर्वाभ्युपगतप्रमाणानामयमेव विषयः' इति। प्रत्यक्षादि च सकलप्रमाणं चेति द्वन्द्वः। न तु कर्मधारय इति भ्रमितव्यम्; तथात्वेऽर्थापत्त्याद्यसंग्रहापत्तेः। आदिशब्दादनुमानमिति प्रागुक्तेः। यद्वा आदिपदेनासंकोचेनार्थापत्त्यादिप्रमाणान्तरस्यापि परिग्रहार्थः सकलशब्द इति।

(प्रमाणानां सविशेषविषयत्वम्)

**तद्व्यावृत्त्यर्थमिदंशब्दः** इति। शृङ्गग्राहिकया संप्रतिपन्नं किंचिन्निर्दिश्य, इदं प्रमाणमिति न शक्यते दर्शयितुमिति भावः। एकवचनानुसारेणान्यथा व्याचष्टे-- **यद्वा न काचिदपीति**। अत्र केचित् — यद्वेति पदं लेखकस्खलनकृतम्, तद्राहित्येनैव ग्रन्थस्वारस्यमस्तीति मन्यन्ते। **गन्धोऽनुभूयत** इति। अनुभूतेर्विशेषणत्वेन भानात् सर्वस्याप्यर्थस्यानुभूतिरूपविशेषणविशिष्टत्वमेव, न निर्विशेषत्वमित्यर्थः। ननु 'यस्तु स्वानुभवः प्रमाणत्वेनोपन्यस्तः' इत्येवं तुशब्देन स्वानुभवलक्षणप्रमाणविशेषे प्रदर्शनीये तुशब्देन समयविशेषप्रदर्शनमसंगतमित्याशङ्क्य समयवैषम्यप्रदर्शनस्यापि मूलभूतस्वानुभवलक्षणप्रमाणवैषम्यप्रदर्शनपर्यवसन्नत्वान्न दोष इत्याह— **तुशब्देन समयं विशिंषन्निति**। ननु विशिष्टो विषयः स्वयमेव चेत्, विशिष्टो विषयो यस्येति बहुव्रीहिनिर्देशः कथमित्याशङ्क्याह—**शिलापुत्रकस्य शरीरमितिवदयं निर्देश इति**। **स्वानुभवसिद्धमित्यनेनैकार्थ्यादिति**। अनुभवान्तरव्युदासपरग्रन्थैकार्थ्यादौपचारिकत्वस्यैव वक्तुं युक्तत्वादित्यर्थः। ननु स्वानुभवशब्दस्य, स्वानुव्यवसायरूपज्ञानान्तरपरत्वसंभवात् कथं तदैकार्थ्येनोक्तार्थपरत्वनिश्चय इत्यत्राह— **न स्वानुभवशब्दोऽनुव्यवसायपर इत्यादिना**। **अतीतविषयतयेति**[1]। वर्तमानज्ञानस्य स्वपकाशतया अनुव्यवसायस्य वर्तमानविषयत्वासंभवेनातीतविषयत्वनियमादतीतविषयकस्य प्रत्यक्षत्वानुपपत्तेरित्यर्थः। **प्रमुषितसंस्कारमिति**। अनुद्बुद्धसंस्कारमि-

1. अतीतविषयत्वस्येति, अतीतत्वस्येति चैव पाठो दृश्यते।

त्यर्थः। अन्यदिति। उद्बुद्धसंस्कारमित्यर्थः। न च घटानुभवसंस्कारात घटस्यैव स्मृतिविषयत्वम्, न घटज्ञानस्येति वाच्यम् — तस्य स्वप्रकाशतया तज्जन्यस्मृतेरेवानुभवस्मृतित्वोपपत्तेः। नन्वनुमितिसामग्री स्मृतिसामग्र्यपेक्षया बलवती। अनुमितेरसत्त्वे तु ततस्तराम्। ततश्चाप्रमुषितसंस्कारस्यापि ज्ञानस्यानुमितिविषयत्वं संभवत्येवेति चेत्— न; 'स्वानुभवप्रत्यक्षसिद्धम्' इति तद्गोष्ठीसमयस्य तथाप्यनिर्वाहादित्याशयात्। परोक्षत्वं विषयद्वारेति। अनुमित्यादिज्ञानस्यापि स्ववृत्तिवर्तमानस्य सर्वस्यापरोक्षत्वादिति भावः। **पक्षाविशिष्टो हेतुः स्यादिति**। पक्षाभिन्नो हेतुः स्यादित्यर्थः। ततश्च स्वरूपासिद्धो हेतुः स्यादिति भावः। **पक्षव्यापको हि हेतुरिति**। पक्षवृत्तिर्हेतुरित्यर्थः। **किंचान्यस्येति**। स्वसंबन्धादर्थान्तरे तद्व्यवहारहेतोरेव स्वव्यावृत्तिरूपत्वादिति भावः। **व्यधिकरणासिद्धीति**। स्वरूपासिद्धीत्यर्थः। ततश्च 'स्वासाधारणैः' इत्यनेन स्ववृत्तित्वे सति व्याप्यत्वमिति सिध्यति। ततश्च सत्तातिरेकित्वं स्वासाधारणत्वोपयुक्तमित्यत्र तात्पर्यम्। अतो न 'सत्तातिरेकिभिः' इत्यस्य वैयर्थ्यं शङ्कनीयम्। **धीत्वस्वप्रकाशत्वे सिध्यत इत्यर्थ** इति। धीत्वे साधिते तेन स्वप्रकाशत्वं सिध्यतीत्यर्थः। ननु **धीत्वं स्वप्रकाशता च ज्ञातुर्विषयप्रकाशनस्वभावतयोपलब्धेरिति** भाष्ये धीत्वस्वप्रकाशत्वयोः साक्षात् साधिका [स्व]विषयप्रकाशनतयोपलब्धिरिति प्रतीयते। तस्या धीत्वसाधकत्वं धीत्वस्य च स्वप्रकाशतासाधकत्वमिति व्याख्याने भाष्यस्वारस्यं नास्तीत्यपरितोषादन्यथा व्याचष्टे——यद्वा। **धीत्वं धीस्वरूपमात्रमिति**। धीस्वरूपं तस्य स्वप्रकाशत्वं च विषयप्रकाशनस्वभावतयोपलब्धेः सिद्धमिति भाष्यार्थ इत्युक्तं भवति। **आत्मस्फुरणमिति**। आत्मस्वरूपस्फुरणमित्यर्थः। भाष्ये—**स्वाभिमततद्विधाभेदैश्चेति**। 'अनुत्पन्नत्वान्नित्यत्वम्; नित्यत्वादात्मनो नानात्वमपि न सहते' इत्येवं परेण साधनादिति भावः। **पूर्वं सविशेषत्वनिरासकहेतुभिः सविशेषत्वमुक्तमिति**। 'अतः कैश्चिद्विशेषैर्विशिष्टस्य' इति भाष्येणेत्यर्थः। **अनन्तरं साध्यधर्मैरिति**। 'धियो हि धीत्वं स्वप्रकाशता च' इति भाष्येणेत्यर्थः। **ततः कतिपयैरिति**। 'ज्ञातुर्विषयप्रकाशनस्वभावतयोपलब्धेः' इति भाष्येणेत्यर्थः। केचित्तु— 'स्वाभिमततद्विधाभेदैः' इति भाष्येणेत्यर्थः इति व्याचक्षते।

( शब्दप्रत्यक्षयोः सविशेषविषयत्वम् )

**स्वप्रकाशवृत्ति निरूप्येति** । पूर्वस्मिन् पक्षे स्वप्रकाशवृत्तिः प्रतिज्ञानमर्वप्रमाणसविशेषविषयत्वाननुप्रविष्टा ; द्वितीयपक्षे तु सापि तत्र निवेशितेति विवेकः । **अन्तरङ्गत्वेनोभयवादिसंमतस्येति** । पूर्वस्मिन् पक्षे परोक्तं बलीयस्त्वं न सिद्धान्तिसंमतम् ; सिद्धान्तिसंमतः सविशेषवस्तुबोधकत्वानिशयो न परसंमतः । अस्मिन् पक्षे अन्तरङ्गत्वाकार उभयसंमतः इति विवेकः । **ननु निर्विशेषशब्देनेति** । 'निर्विशेषं वस्तु नास्ति' इत्यत्र निर्विशेषशब्देनेत्यर्थः । **निषेधोऽनुपपन्न** इति । प्रतीतेः सर्वस्या अपि प्रमारूपत्वादित्यभिमानः । **भ्रान्तिप्रमितिविभागादिति** प्रमितिविषयनिषेधे हि दोषः, न भ्रान्तिविषयनिषेधे इति भावः । **निर्विशेषशब्दजनितेति** । प्रमाणाभासप्रसक्ता भ्रान्तिः 'निर्विशेषं नास्ति' इति प्रमाणेन बाध्यत इत्यर्थः । भ्रान्तित्वे हेतुमाह—**मिथोऽन्वयानर्हार्थगोचरेति** । परस्परानन्वितार्थान्वयविषयत्वमेव भ्रान्तित्वमिति भावः । केचित्तु—**ननु निर्विशेषशब्देन निर्विशेषं वस्त्विति** ग्रन्थमन्यथा व्याचक्षते—'न निर्विशेषवस्तुनि शब्दः प्रमाणम्' इति भाष्यवाक्यस्थनिर्विशेषशब्देनेत्यर्थ इति । अस्मिन् पक्षे निर्विशेषवस्तुनः शब्देन प्रतिपादने **निषेधोऽनुपपन्न** इति ग्रन्थः स्वरसः । तथा, **नैवम्, भ्रान्तिप्रमितिविभागात्** । **निर्विशेषवस्तुनि शब्दस्य प्रमाणभावो हि निषिध्यते** इति च स्वरसः । अत्र पक्षे **निर्विशेषशब्दजनिता मिथोऽन्वयानर्हार्थगोचरा भ्रान्तिः प्रमितिजनकैः शब्दैः** इत्यस्यायमर्थः — निर्विशेषशब्दजनित परस्परान्वयायोग्यधर्मधर्मिविषयकनिर्विशेषशाब्दत्वभ्रान्तिः 'निर्विशेषं न शाब्दम्' इति शब्दप्रमाणकत्वाभावप्रमितिजनकैः शब्दैर्बाध्यते, भ्रान्तित्वेन ज्ञाप्यते । भ्रमत्वबुद्धिर्हि बाध इति । **अधिकरणतदसाधारणेति** । अधिकरणत्वतः अधिकरणासाधारणनिषेध्यप्रतिपक्षात्व धर्मतश्चेत्यर्थः । विशेषाभावाधिकरणस्य निर्विशेषशब्दार्थस्य ब्रह्मणः परेणाभ्युपगतत्वादधिकरणशब्दो भावप्रधान एव । तदसाधारणभूतो निषेध्यप्रतिपक्षधर्मः तदसाधारणनिषेध्यप्रतिपक्षधर्मः । **अधिकरणालाभान्निषेधकशब्दस्यानन्वय एव स्यादिति** । विशेषाभावाधिकरणत्वरूपनिर्विशेषशब्दप्रवृत्तिनिमित्ताभावे निर्विशेषशब्दस्यापार्थकत्वमेव स्यादित्यर्थः । दूषणान्तरमाह — **न हि निर्विभक्तिकं** इति । ततश्च विभक्त्यर्थसंख्यान्वयोऽपि स्यादिति भावः । **पदान्तरानन्वित** इति । ततश्च

'निर्विशेषं वस्त्वस्ति' इत्युक्ते वस्तुत्वास्तित्वान्वयावश्यंभाव इति भावः। **अन्यपदार्थाभिधानमिति**। "अनेकमन्यपदार्थे" इत्यनुशासनादन्यस्वरूपार्थाभिधानमवर्जनीयमिति भावः। इदमुपलक्षणम्। मत्वर्थे बहुव्रीहेरनुशिष्टत्वात् मत्वर्थात्मकसंबन्धरूपविशेषाभिधानमवर्जनीयमित्यपि द्रष्टव्यम्। **तत्पुरुषपदप्रयोगे** चेति। 'निर्गतो विशेषात्' इत्येवं "निरादयः क्रान्ताद्यर्थे पञ्चम्या" इति समासेन निर्गमनक्रियाश्रयत्वस्य प्रतीत्यवश्यंभावादिति भावः।

## ( निर्विकल्पकसविकल्पकनिरूपणम् )

**निर्विकल्पकानुभूतार्थस्येति**। सविकल्पकानुभूयमानार्थप्रतिसंधानहेतुत्वेन निर्विकल्पकस्य निरूपणीयतया तस्य सविकल्पकज्ञानसाध्यत्वात् सविकल्पकं प्रथमं निरूपितमिति भावः। पश्चादुद्दिष्टस्य सविकल्पकस्य बुद्धिस्थत्वं चकारात् समुच्चीयत इत्यपि द्रष्टव्यम्। **सविकल्पकस्वरूपं प्रदर्शितमिति**। पश्चादुद्दिष्टमपि प्रागिति शेषः। **कल्पनामपि व्युदस्यति—त्रिकोणे**ति इति ग्रन्थानन्तरम्, 'यद्वा अनुपपत्तिं व्युदस्यति—त्रिकोणेति' इति पाठः सुगमः। **अध्याहृतशङ्कावाक्येन ग्रहणायोगादिति पञ्चम्या अन्वय** इति। सर्वविशेषवियुक्तस्य ग्रहणं कल्प्यमिति शङ्कावाक्यप्राप्तप्रतिक्षेपकत्वेनेत्यर्थः। **कस्यचिदपि पदार्थस्य ग्रहणायोगात्त सर्वविशेषवियुक्तस्य ग्रहणं कल्प्य**मित्यध्याहृतकल्प्यपदेनान्वय इति भावः। तमेवान्वयं दर्शयति—**दृष्टव्यापीत्यादिना**। **प्रथमद्वितीयपिण्डयो**रिति। प्रथमद्वितीयपिण्डग्रहयोरित्यर्थः। **गोत्वानुवृत्तिप्रतीत्यप्रतीत्यो**रिति। गोत्वानुवृत्तिविषयकत्वतदभावयोरित्यर्थः। **पृथिव्यपृथक्सिद्धगन्धादिव्यावृत्ति**रिति। चक्षुषा पृथिवीग्रहणेऽपि न गन्धग्रहणम्, गन्धस्य चक्षुरयोग्यत्वात्; इह तु न तथेति भावः। **अपृथक्सिद्धत्वेन तन्नास्तीति परिहरतीति**। 'संस्थानेन विना संस्थानिनः प्रतीत्यभावात्' इत्यस्य भाष्यस्य संस्थानेन विना संस्थानिनोऽभावादित्येवार्थः। प्रतीत्यभावकथनं तदुपपादनायेति भावः। **संस्थानरूपशब्देनाभिप्रेतोऽर्थ** इति। अपृथक्सिद्धत्वमेव संस्थानशब्देनाभिप्रेतमिति भावः। यद्वा 'इत्थम्' इत्यनेन विवृतो भवतीति योजना। **प्रकारप्रकारिभावेन ग्रहणोपपत्ते**रिति। जातिव्यक्तिमात्रयोरिति शेषः। **जात्यादयो विशेष्यं चेति**। अत्र विशेषणमात्रमेव गृह्यते, न

विशेष्यमिति कश्चित् पक्षः। विशेषणवत् विशेष्यं च गृह्यत एव; वैशिष्ट्यमात्रं न गृह्यत इत्यपरः। **ननु विशेषणविशेष्यभावस्य सप्रतियोगिकत्वादिति**। दण्डविशिष्टज्ञाने दण्डे पुरुषप्रतियोगिकविशेषणत्वं भासते; पुरुषे च दण्डप्रतियोगिकविशेष्यत्वम्। ततश्च विशिष्टज्ञानविषयीभूतस्य विशेषणविशेष्यभावस्य सप्रतियोगिकत्वात् तज्ज्ञानं पूर्वमपेक्षितमिति भावः। न च निर्विकल्पकवादिना विशेषणज्ञानस्यैव हेतुत्वमभिप्रेतम्; न विशेष्यज्ञानस्येति वाच्यम्; अस्य मतान्तरत्वेनादोषात्। **तस्यापि स्वभावस्य स्वविशेष्यभूतमिति**। जात्यादेर्विशेषणत्वस्वभावलक्षणविशेषणत्ववैशिष्ट्यं न प्रथमतोऽवगतम्, येन प्रथमतो विशिष्टप्रतीत्यभ्युपगमः स्यादिति भावः। **विशेषणत्वं न प्रथममिति**। विशेषणत्ववैशिष्ट्यमित्यर्थः। **किंतु स्वरूपमात्रमिति चेदिति**। परस्पराविशिष्टानि व्यक्तिजातितद्विशेषणत्वानि प्रतिपन्नानीत्यर्थः। तावतापि विशेषणविशेष्यभावव्यत्यासासंभवादिति भावः। **विशेषणतत्स्वभावयोरिति**। परस्परानन्वितत्तया गृहीतयोर्विशेषणतत्स्वभावयोर्विशिष्टप्रतीतिदशायां व्यत्यासः प्रसज्येत। अतस्तस्यापि धर्मान्तरभानेऽत्रानवस्थेति भावः। **यदि व्यत्यासविशिष्टप्रतीतिप्राथम्यप्रसङ्गपरिहारायेति**। जात्यादिस्वरूपस्यैव विशेषणत्वरूपतया वस्तुस्वभावादेव न व्यत्यासप्रसक्तिः। धर्मान्तरस्याभावात् वैशिष्ट्याप्रसक्तेर्न विशिष्टप्रतीतिप्राथम्यप्रसङ्गः, नाप्यनवस्थेति भावः। **विशेषणतया विशेष्यतया च स्यादिति**। न च विशेषणत्वस्य स्वरूपरूपस्य प्रागगृहीतत्वेऽपि विशेषणतावैशिष्ट्यस्याभानान्न विशेषणतया प्रतीतिप्रसङ्ग इति वाच्यम् — तद्वैशिष्ट्यस्यापि स्वरूपरूपतया तस्यापि भानावश्यंभावादित्यत्र तात्पर्यात्। **भिन्नसामग्रीवेद्यवस्तुगोचरत्वमुपाधिः स्यादिति**। ननु निर्विकल्पकवादिमते विशिष्टज्ञाने विशेषणज्ञानघटिता सामग्री; विशेषणज्ञाने तु न तथेति भिन्नसामग्रीवेद्यत्वस्योपाधेः पक्षनिष्ठत्वात् कथमस्य साधनाव्यापकत्वमिति चेत्—न; विशेषणज्ञानहेतुत्वस्य दूषितत्वादित्यभिमानात्। **पक्षव्यवच्छेद्यत्वसिद्धेरिति**; पक्षव्यवच्छेद्यत्वस्य सिद्धिर्येन, स पक्षव्यवच्छेद्यत्वसिद्धिः; पक्षमात्रव्यावर्तकस्येत्यर्थः। यद्वा पक्षे साध्यव्यवच्छेदस्य सिद्धेरित्यर्थः। बाधोन्नीतपक्षेतरत्वस्यैवानुकूलतर्के सत्युपाधित्वसंभवादिति भावः। तर्कबलादुपाधित्वस्वीकारे दृष्टान्तद्वयमाह—**यथा प्रध्वंसाभावेत्यादिना**। अयं भावः—यथा साधनावच्छिन्नसाध्यव्यापके भावरूपत्वे सति भविष्यत्त्वरूपे आर्द्रेन्धन-

संयोगरूपोपाधौ च । भावत्वार्द्रत्वरूपविशेषणयोः साध्यव्यापकत्वानुपयुक्तयोरप्यनुकूलतर्कवशादुपाधिकोटिप्रवेशः, एवं भिन्नसामग्रीवेद्यत्वमित्यत्र साध्यव्यापकत्वानुपयुक्तस्यापि भिन्नत्वस्योपाधिविशेषणत्वं संभवतीत्यपि द्रष्टव्यम् । **सर्वत्राग्निमतीति** । आर्द्रेन्धनशून्यस्थलेऽपीत्यर्थः । ननु जन्यविशिष्टज्ञानत्वस्य बाधकं विना कार्यमात्रवृत्तिधर्मत्वेन कार्यतावच्छेदकत्वात् तदवच्छिन्नेऽनुगतकारणत्वस्य वक्तव्यत्वात् जन्यविशेषणज्ञानस्य हेतुत्वसिद्धौ जागराद्य—सविकल्पकज्ञानहेतुतया कारणभूतं विशेषणज्ञानं सिध्यन्निर्विकल्पकमेव सिध्यतीति चेत्—न ; विशिष्टज्ञानत्वं हि विशेषणविशेष्यसंबन्धविषयकज्ञानत्वम् ; तच्च विशेषणविशेष्यतत्संबन्धभानसामग्र्यैवोपपन्नम् ; न तु कार्यतावच्छेदकं, नीलघटत्ववदर्थवशसंपन्नत्वात् । ननु विशिष्टज्ञाने विशेषणज्ञानहेतुत्वमवश्याश्रयणीयम् ; इतरथा जातिव्यक्त्योरिन्द्रियसंनिकर्षेऽविशिष्टेऽपि कदाचिज्जातिविशेषणिका व्यक्तिविशेष्यिका प्रतीतिर्जायते, कदाचिच्च तद्वैपरीत्येनेति सर्वसिद्धव्यवस्था भज्येत । विशेषणज्ञानकारणत्वेऽभ्युपगते तु यस्य प्रागवगतिः, तद्विशेषणकं विशिष्टज्ञानमुत्पद्यत इति व्यवस्था सुवचेति चेत्—न ; यत्रोभयविषयकं निर्विकल्पकं तत्र द्वयोरपि प्रागवगतत्वाविशेषाद्विशेषणविशेष्यभावव्यवस्थापकस्य कस्याप्यभावादव्यवस्थाप्रसक्तिस्तदवस्थैव स्यात् । यदि च तत्रादृष्टं व्यवस्थापकम् । तदेव सर्वत्र व्यवस्थापकमस्तु ; किं विशेषणज्ञानकारणत्वाभ्युपगमेन ? ननु गोत्वप्रत्यासत्तिजन्यं ज्ञानं गोत्वप्रकारकमेव, न व्यक्तिप्रकारकमिति सिद्धम् । तत्र यदि विशेषणज्ञानं विशिष्टज्ञाने कारणं न भवेत्, तदा सामान्यप्रत्यासत्तिजन्यं ज्ञानं पूर्वानवगतव्यक्तिविशेषणकमपि कदाचित् स्यात्, पूर्वावगतमेव विशेषणमिति नियमाभावादिति चेत्—न ; सामान्यप्रत्यासत्तिजन्यसकलव्यक्तिविषयकज्ञानस्यैवाभावात् । तस्माद्विशिष्टज्ञानस्य विशेषणविशेष्यतद्वैशिष्ट्यभानसामग्र्यैवोपपन्नत्वान्न विशेषणज्ञानत्वं कारणतावच्छेदकम् । यदि ह्यनुमित्यननुमितिरूपज्ञानद्वयवन्निर्विकल्पकसविकल्पकरूपज्ञानद्वयं प्रामाणिकं स्यात्, तदा सामान्यसामग्रीत एव विशिष्टज्ञानोत्पत्तौ सर्वमपि ज्ञानं विशिष्टज्ञानं स्यादिति भयेन विशेषसामग्री कल्प्येत । न च तदस्ति, निर्विकल्पकस्याद्याप्यसिद्धेः ; सर्वस्यापि ज्ञानस्य सविकल्पकत्वात् । 'इदमित्थम्' इति हि सर्वापि धीः । अन्यथा निष्प्रकारकधीवन्निर्विषयापि धीः स्यात् । इच्छाऽपि काचिन्निर्विषयाऽतीन्द्रिया च स्यात् । एवं द्वेषादयोऽपीत्यलमतिचर्चया । तदेतत्सर्वमभिसंधायोपसंहरति—

अतो यथोक्तस्वरूपे एव निर्विकल्पकमविकल्पक इति । द्वितीयादित्वेन पिण्डग्रहणेष्विति । अयं भावः—अनुवृत्तिग्रहणरहितेषु प्रथमेतरग्रहणेषु सविकल्पकत्वाभावापादनमिष्टमेव । अनुवृत्तिग्रहणरहितेषु प्रथमेतरत्वेन ग्रहणेषु सविकल्पकत्वाभावापादनं तु न संभवति, प्रथमेतरत्वेन ग्रहणेऽनुवृत्तिग्रहणनैयत्यादिति ।

( भेदाभेदवादनिरासः )

अत्र सहोपलम्भनियमसमानाधिकरणप्रत्ययौ भेदाभेदसाधकाविति । ननु केवलभेदे केवलाभेदे च सामानाधिकरण्यानुपलम्भादस्तु सामानाधिकरण्यं भेदाभेदसाधकम् । कथं सहोपलम्भनियमो भेदाभेदसाधकः ? न तावत् सहोपलम्भनियम एकज्ञानविषयत्वम्, तस्यैक्येऽपि दृष्टत्वात् । नाप्येककालीनोपलम्भद्वयविषयत्वम्, जातिव्यक्त्योस्तदभावात् । नाप्युपलम्भसामग्रीद्वययौगपद्यनियमः, उपलम्भैक्येन सामग्र्या अप्येकत्वात् । न च घटपटसमूहालम्बने उपलम्भैक्येऽपि सामग्रीद्वित्वं दृष्टमिति वाच्यम् – घटेन्द्रियसंनिकर्षो घटज्ञानसामग्री, पटेन्द्रियसंनिकर्षः पटज्ञानसामग्रीत्यन्यत्र सामग्रीभेदनिर्धारणसंभवात् तत्र तथा; इह तथा अभावात् । न च—जातीन्द्रियसंनिकर्षो जातिज्ञानसामग्री; व्यक्तीन्द्रियसंनिकर्षो व्यक्तिज्ञानसामग्रीति भेदः संभवतीति वाच्यम्, भेदस्य वा अभेदस्य वाऽद्याप्यसिद्धेः, भेदसिद्धौ च तदधीनस्य सहोपलम्भनियमस्य न भेदसाधकत्वम्, अपित्वभेदमात्रसाधकत्वमित्येव स्यात् । किंच एकशब्दानुविद्धप्रत्ययस्य 'पुरोवर्त्येकः' इत्येवंरूपस्य जातिव्यक्त्यैक्यसाधकत्वेऽपि प्रथमपिण्डे भेदाग्रहणस्य कथमभेदसाधकत्वम् ? न हि प्रथमतोऽगृहीतं सर्वमसदित्यस्ति । न हि विशेषादर्शनदशायामप्रतीतत्वादसत्त्वमिति काचिद्युक्तिरस्तीति चेत्—उच्यते—सहोपलम्भनियमो ह्येकोपलम्भविषयत्वमेव । तच्चैक्यसाधकमेव । तद्द्वारा भेदाभेदसाधकम् । उत्तरत्र तदनुगुणवाक्यानां बहूनामुपलम्भात् । नन्वेवमेकशब्दानुविद्धप्रत्ययप्रथमपिण्डग्रहणाभेदग्रहणयोरप्यभेदद्वारा भेदाभेदसाधकत्वसंभवात् पृथक्कृत्य, तयोरभेदसाधकत्वमित्युक्तिरयुक्ता स्यात्, (?) त्रयाणामप्येकीकरणस्यैव युक्तत्वादिति चेत्—सत्यमभेदद्वारा भेदाभेदसाधकत्वांशे (?) त्रयाणामप्यैकराश्यम् । अपितु तयोर्युक्त्योरभ्युच्चययुक्तित्वमिति तयोरेकराशीकरणम् । अत एव न तद्विषयदूषणस्याप्यवकाशः, तयोरभ्युच्चयमात्रत्वादिति । स्वपर्यवसितेति । स्वनिष्ठेत्यर्थः ।

पारतन्त्र्यस्वभावशून्येति यावत् । ननु सहोपलम्भनियमस्य भेदाभेदसाधने नासाधारणत्वम्, भेदाभेदवतः सपक्षस्यैवाभावेन तद्व्यावृत्तिरूपासाधारणत्वाप्रसक्तेः । अत एव पृथिव्यामितरभेदे साध्ये जलादित्रयोदशभेदवतः सपक्षस्याभावान्नासाधारण्यमित्यस्वरसादाह — **किंच विरुद्ध एवेति** । **द्वित्वसाधकसहोपलम्भनियम** इति । द्वित्वसाधकस्य सहोपलम्भस्य नियम इत्यर्थः । 'उभयत्र विशेषणविशेष्यभावः समानः' इति भाष्यमुभयत्र विशेषणविशेष्यभावे विप्रतिपत्त्यभावेन मन्दप्रयोजनमित्याशङ्क्य शङ्काविशेषनिरासपरतया व्याचष्टे — **यद्येवं जातिकुण्डलादेरित्यादिना** । भाष्यस्थं **समान**पदं व्याचष्टे — **उभयसंप्रतिपत्तेरिति** । एवं तात्पर्यवर्णनस्य क्लिष्टत्वादन्यथा व्याचष्टे—**यद्वा पृथक्संस्थानसंस्थितानामिति** । **सहोपलम्भनियमो नान्यत्रेति व्यवस्थासिद्ध्यर्थमिति** । सहोपलम्भप्रयोजकापृथक्सिद्धत्वनियम इत्यर्थः । ततश्च सहोपलम्भव्यवस्थाया अपृथक्सिद्धत्वेन प्राक् समर्थितत्वात् कथमस्याः शङ्काया उत्थानमिति न चोदनीयम् । **इयांस्त्विति** भाष्ये **तु**शब्द एवकारार्थ इत्यङ्गीकृत्यान्ययोगव्यवच्छेदपरतया व्याचष्टे— **इयानेवेति** । तुशब्दस्यावधारणार्थत्वमस्वरसमित्यन्यथा व्याचष्टे— **यद्वा विशेषणविशेष्यभावप्रसक्तेति** । **घटे पटस्याभाव इति** । तादात्म्यसंबन्धेनेति शेषः । यद्वा **पटस्याभावः** पटत्वाभाव इत्यर्थः । **भेद इति** । पटाद्भेद इत्यर्थः ।

( अनुमानादेः निर्विशेषविषयत्वनिरासः )

**वस्तुगतस्वभावविशेषैस्तदेव वस्तु निर्विशेष**मिति भाष्ये सर्वप्रमाणविषयस्य सविशेषस्य वस्तुनः स्वभावविशेषैर्निर्विशेषतया निष्कर्षे निर्विशेषत्वासिद्धिर्वाग्विरोधश्चोच्यत इति प्रतीयते । तच्चायुक्तम्, अनुक्तोपालम्भत्वात् । स्वानुभवविषये हि परैर्निष्कर्ष उक्त इत्याशङ्क्य स्वानुभवविषयनिष्कर्ष एव दूषणमनेनोच्यत इत्याह—**प्रमाणानीत्यादिना** । **तानि तर्कपराहतानीति** । अतो निरपवादस्वानुभवसिद्धं निर्विशेषमिति शेषः । स्मरणमात्रस्य मन्दप्रयोजनत्वमाशङ्क्यान्यथा व्याचष्टे—**यद्वा पूर्वं स्वानुभवसिद्ध इति** ।

( सन्मात्रग्राहिप्रत्यक्षभङ्गः भेददूषणनिरासश्च )

**न केवलं सविशेषेति** । यद्यपि 'यदुक्तं तदपि निरस्तम्' इत्युक्ते परोक्तेन पूर्वनिरस्तेनार्थान्तरेणैव समुच्चयो वक्तुमुचितः, न तु सविशेषविषयत्वोपपादननिर्वि-

शेषविषयत्वोपपादनानुपपत्त्योः; तथापि 'इष्टं च सिद्धम्, अनिष्टं च निरस्तम्' इत्यादौ तथापि दर्शनादेवमुक्तमिति द्रष्टव्यम्। **निर्विशेषविषयत्वोपपादनानुपपत्तिश्चेति।** सन्मात्रग्राहिप्रत्यक्षस्य दूरोत्सारितत्वान्निर्विशेषविषयत्वोपपादनानुपपत्तिः फलितेति फलितानुपपत्त्या समुच्चयः। एतदभिप्रायेणाह—**न केवलं भिन्नविषयत्वं स्थापितमिति। प्रतियोगिस्मरणकृतविलम्बे सत्यपीति।** एकक्षणमात्रवर्तिनः सद्ग्राहिप्रत्यक्षस्य प्रतियोगिस्मरणसापेक्षभेदोल्लेखव्यवहारसामर्थ्यं नास्तीति पूर्वपक्षे यदुक्तम्, तत्र भेदस्यातिरिक्तत्वपक्षेऽपि भेदस्य दुर्निरसतया प्रत्यक्षस्य क्षणमात्रस्थायित्वनियमं परित्यज्य भेदो(व्यवहार)ल्लेखार्थमनेकक्षणस्थायित्वमन्यथानुपपत्त्या कल्प्यम्। यदि हि तादृशक्लिष्टकल्पनमन्तरेणैव जात्यादेरेव भेदत्वं सुघटम्, तदा परोक्तयुक्तेर्दूरोत्सारितत्वं किमु वक्तव्यमित्याशयः। **प्रथमचशब्दस्येति।** ननु—अतःशब्दपरामृष्टस्वपरनिर्वाहकत्वस्यानवस्थादिपरिहारे निरपेक्षहेतुतया अतःशब्दाभिन्नचशब्दप्रतिपाद्यसमुच्चेतव्यान्तराभावात् 'न च' इत्यादिवत् चशब्दो वाक्यालङ्कार इति चेत्—न; चशब्दं विना कथमाश्रित्यानवस्था च अन्योन्याश्रयणं च (दूषणान्तरञ्च) नास्तीत्यभ्युपगमेनादोषात्। **अनवस्थापरिहारसिद्धावितिः।** यद्यपि संवेदनरूपादिवदनवस्थाभीत्या स्वपरनिर्वाहकत्वसिद्धावेति वदनं प्रति नास्याः शङ्काया उत्थानम्, तथापि तदनादरेणेयं प्रवृत्तिरिति द्रष्टव्यम्। **कारणनिरूपणायापह्नवमर्हतीति।** कारणनिरूपणं प्रसजेदित्येवं भीत्या स्फुटावधारितं कार्यं नापह्नवमर्हतीति भावः। **प्रपञ्चस्य बाध्यत्वज्ञानमिति।** बाध्यत्वरूपभेदविषयज्ञानमित्यर्थः। पञ्चमं पक्षं प्रतिक्षिपति—**न च बाध्यविषयत्वमिति। तथा सतीति।** भेदस्य सर्वस्य बाध्यत्वे प्रपञ्चबाध्यत्वरूपभेदस्यापि बाध्यतया प्रपञ्चसत्यत्वमेव स्यादित्यर्थः। **[1]स्वशास्त्रनिर्णये सत्य इति।** बाध्यत्वात्मकभेदलक्षणशास्त्रार्थे सत्ये सति भेदस्य दुर्निरूपत्वोक्तेरप्रवृत्तेस्तुल्यन्यायतया प्रामाणिकस्य भेदान्तरस्यापि सत्यत्वं स्यादित्यर्थः। स्वशास्त्रार्थस्य भेदमिथ्यात्वस्यासत्यत्वे तद्विरुद्धसत्यत्वोन्मज्जनप्रसङ्ग इत्यर्थः। केचित्तु—

1. स्वशास्त्रनिर्णयेऽसत्ये सत्याः स्युर्लौकिकनिर्णयाः।
स्वशास्त्रनिर्णयेऽसत्ये सत्याः स्युर्लौकिकनिर्णयाः॥'
इति पूर्वार्धमुत्तरार्धञ्च समानाक्षरमिति टीकायां क्वचित् त्रिः पाठमाह्वयति। अत एवोत्तरार्धं व्याख्यानम्। अन्यथा यद्वेति व्याख्यानम्।

स्वशास्त्रार्थनिर्णये सत्ये सत्येव लोके निर्णया असत्याः स्युः । तथैवासत्यत्वे लोकनिर्णयसत्यत्वं कुतो न भवेदित्यर्थ इति वदन्ति । **शब्दस्वभावागतत्वान्नार्थदूषणत्वमिति** । यथैकस्यैवार्थस्य स्वशब्दोल्लेखने निरपेक्षस्यापि कठिनत्वलघुत्वादिशब्दोल्लेखने सापेक्षत्वम्, यथा वा ज्ञानानन्दाद्यभेदो ब्रह्मस्वरूपमिति वदतस्तव मते ब्रह्मशब्दोल्लेखने निरपेक्षस्यापि अभेदशब्दोल्लेखने सापेक्षत्वम्, तथेहापि घटशब्दोल्लेखने निरपेक्षस्यापि भेदशब्दोल्लेखने सापेक्षत्वमित्यस्तु; एकस्यैव गमनस्य 'गच्छति, चलति' शब्दोल्लेखाभ्यां, प्रयत्नस्य च 'करोति, प्रयतते' शब्दोल्लेखाभ्यां कर्मसापेक्षत्वनिरपेक्षत्वयोः शब्दस्वभावप्रयुक्तत्वदर्शनादिति भावः । **तदवच्छेदकमहिषादिपदार्थेति** । व्यावृत्त्यवच्छेदकेत्यर्थः । महिषादिप्रतियोगिकव्यावृत्तिबुद्धिहेतुत्वप्रवृत्तिनिमित्तपुरस्कारेण भेदशब्दो गोत्वं दर्शयतीत्यर्थः । **तटस्थोपाधिभेदादिति** । घटकोपाधिभेदादित्यर्थः । **तत्रैच्छिकौ प्रयोगाप्रयोगाविति** । महिषादिपदार्थान्तरपुरस्कारेण गोत्वे ज्ञातेऽपि प्रयोगाप्रयोगावैच्छिकावित्यर्थः । न तु गोत्वज्ञानमात्रेणेति मन्तव्यम्, तावता भेदव्यवहारासंभवादिति द्रष्टव्यम् । **तद्योगकार्यव्यावृत्तीति** । भेदरूपधर्मान्तरयोगकार्या या व्यावृत्तिधीस्तद्धेतुत्वादित्यर्थः । **अभेदेऽपि तुल्या इति** ।

"भेदः स्वरूपं धर्मो वेत्यादिभेदविभीषिका ।
अकारमात्रप्रक्षेपे स्यादभेदविभीषिका ॥"

इत्युक्तेरिति भावः । **ब्रह्माद्वितीयमित्यादिपदानां पर्यायत्वं च स्यादिति** । द्वितीयपदस्य भेदपरत्वेनाद्वितीयमित्यस्याभेदार्थकत्वमिति भावः ।

**ज्ञाततया परामर्शप्रसङ्ग इत्यर्थ इति** । न च—प्रत्ययमात्रस्य सन्मात्रग्राहित्वादज्ञाततयाऽपि [1]परामर्शसंभवः; किंच सन्मात्रांशे ज्ञातत्वापादनमिष्टमेव; अंशान्तरे तु न ज्ञातत्वमिति कथं तदापादनसंभव इति वाच्यम्—पूर्वोक्तदूषणे तात्पर्यात् । **समवेतशब्दो विशेषणैकस्वभावपर इति** । सिद्धान्ते समवायानभ्युपगमादिति भावः । **तत्तत्संस्थानवत्तयेति** । असाधारणधर्मवत्तयेत्यर्थः । **कालविशिष्टतयेति**; कालस्य सर्वेन्द्रियग्राह्यत्वादिति भावः । **सविकल्पके तु देशादीनां**

१. अज्ञाततया अपरामर्श- पा० (ज्ञाततया अपरामर्श ?)

**बहूनां विशेषणत्वमिति** । यद्यपि सिद्धान्ते निर्विकल्पकेऽपि देशादयोऽपि विशेषणं भवन्त्येव, तथाप्यनुवृत्तत्वादेर्निर्विकल्पके भानं नास्तीत्यत्र तात्पर्यात्(र्यम् ?) । गन्धस्थले देशग्रहणस्य प्रथमतोऽभावमभिप्रेत्य तथोक्तमित्यपि केचित् ।

( जातेः संस्थानरूपत्वसमर्थनम् )

**संस्थानातिरेकिणोऽनेकेष्वेकाकारबुद्धिबोध्यस्येति** भाष्ये संस्थानातिरिक्तैकाकारबुद्धिबोध्यनिषेधस्य पर्यवसानं द्वेधा घटते । संस्थानस्यैवैकाकारबुद्धिबोध्यत्वाद्वा तदतिरिक्तस्यैकाकारबुद्धिबोध्यस्याप्रामाणिकत्वाद्वेत्यभिप्रेत्य द्वेधापि व्याचष्टे **अयं सास्नादिमानित्यादिना** । **नामान्तरेणेति** । **अतिरेकवादेऽपीति** भाष्यस्य मतद्वयसंप्रतिपन्नसंस्थानस्यान्यतरसंप्रतिपन्नजात्यैक्यं न युक्तमिति तात्पर्यमिति भावः । केचित्तु — उभयसंप्रतिपन्नेनोपपत्तौ नातिरिक्तं कल्प्यमित्येव **अतिरेकवादेऽपीति** भाष्ये स्वरसतः प्रतीयत इति वर्णयन्ति । **परैरवयविनोऽसमवायिकारणत्वेन संस्थानं स्वीकृतमिति** । यद्यपि द्रव्यविशेषविषय एवेदम् ; न सर्वत्र — तथापि क्वचिज्जात्यपलापे तयैव रीत्याऽन्यत्रापि तदपलापः सिध्यतीति भावः । **जातिमात्रोच्छेदश्च स्यादिति** । सिद्धान्तेऽव्याकृतिरूपजातेः क्वचिदभ्युपगमात् स न स्यादित्यर्थः । **जात्यजातिसाधारणमिति** । अवयवसंयोगविशेषशौक्ल्यादिसाधारणमित्यर्थः ।

**ननु स्वासाधारणमित्यत्र स्वशब्दः किमित्यादि** । यद्यपि स्वशब्दस्य प्रकृतवाचिशब्दत्वात् यो यस्यासाधारणो धर्मः स तस्य संस्थानम्, यथा 'असाधारणधर्मो लक्षणम्' इत्यत्र । संस्थानशब्दो हि सिद्धान्ते लक्षणशब्दापरपर्याय एव । अतो न विकल्पावकाशः — अथापि शिष्यबुद्धिविशदीकरणायायं प्रपञ्च इति द्रष्टव्यम् । **एकशब्दप्रवृत्तिनिमित्तत्वाभावादितीति** । न च गृष्टिधेनुवशावष्कयण्यादिशब्दवत् खण्डगोवाचकमपि किंचित्पदं किं न स्यादिति वाच्यम्, अनुपलब्धेरिति भावः । **कस्तर्हि जातिरूपसंस्थानानामिति** । अवयवसंयोगविशेषरूपसंस्थानानां शौक्ल्यादिभ्यः संस्थानेभ्यः कथं भेदः? उभयोरपि संस्थानत्वस्याविशिष्टत्वेन, 'जातिवाचिन उत्पलशब्दस्य प्राधान्यम्; गुणवाचिनो नीलादिशब्दस्य गुणत्वम् । ततश्च नीलादिशब्दस्य विशेषणत्वमेव । अत एव, "विशेषणं विशेष्येण बहुलम्" इति समासो 'नीलोत्पलम्' इत्येव; न तु 'उत्पलनीलम्' इति'इति व्यवस्था कथं स्यादित्याक्षेपाभि-

प्रायः । **जातिरूपसंस्थानलक्षणमिह विवक्षितं चेदिति** । ननु 'यो यदसाधारणो धर्मः, स तस्य संस्थानम्' इति संस्थानसामान्यलक्षणे स्थिते जातित्वे सति असाधारणधर्मत्वं जातिरूपसंस्थानलक्षणं भविष्यतीति कोऽसौ विचारः? किंच शौक्ल्यादिसंस्थानेष्वपि प्रकृताकारेण सुसदृशव्यक्तयः समस्ता इति विवक्षा आवश्यकी, शौक्ल्यादेरपि प्रकृताकारेण सुसदृशव्यक्त्यसाधारणधर्मत्वस्यावश्यवक्तव्यत्वात् । संस्थानरूपा घटत्वादिजातयः प्रतिव्यक्ति भिन्नाः; संस्थानरूपाः शौक्ल्यादयश्च प्रतिव्यक्ति भिन्नाः । सौसादृश्येनैकीकरणं जात्यजातिसाधारणमेव । को विशेष इति चेत्—भावानवबोधात् । "**संस्थानं नाम स्वासाधारणं रूप**"मिति भाष्यस्य जात्यजातिसाधारणसंस्थानस्वरूपनिर्वचनपरत्वमिति पूर्वमुक्तं पक्षं परित्यज्य जातिरूपसंस्थानस्यैव लक्षणमुच्यत इति व्याख्यायामित्यर्थः । नन्वेवं व्याख्यायां पूर्वपक्षे किमस्वरसबीजमिति चेत्, उच्यते—"**वस्तुसंस्थानरूपजात्यादिलक्षणभेदविशिष्टमेव प्रत्यक्ष**"मिति भाष्ये संस्थानशब्दस्यासाधारणधर्मरूपसंस्थानपरत्वविवक्षायां नैयायिकादीनामपि जातेरसाधारणधर्मत्वं सिद्धमेवेति संस्थानमेव जातिरिति प्रसाधनं व्यर्थं स्यात् । **संस्थानस्योभयसंप्रतिपन्नत्वादिति** भाष्येऽप्यसाधारणधर्मस्योभयसंप्रतिपन्नत्वाच्चेति न युज्यते । अतः प्राक्तनसंस्थानशब्दानामवयवसंयोगविशेषपरत्वं सिद्धम् । अतस्तद्वैरूप्यायेदमपि तथैव वक्तुमुचितमित्याकृतिरूपसंस्थानमात्रपरतया "**संस्थानं नामे**"ति भाष्ययोजनायामित्यर्थः । अत आकृतिरूपो धर्मविशेषः संस्थानमिति न काप्यनुपपत्तिरिति द्रष्टव्यम् । **देशतः कालतश्च नोपपद्यत** इति । गकारदेशानन्तरदेशत्वलक्षणं वा गकारोत्तरकालत्वलक्षणं वा आनुपूर्व्यमौकारस्य नोपपद्यते, वर्णानां नित्यत्वाद्विभुत्वाच्चेति भावः । **तस्या उच्चारणनिबन्धनत्वादिति** । गकारोच्चारणानन्तरोच्चारणविषयत्वमेवौकारस्यानुपूर्व्यमित्यर्थः । **वृत्तिविकल्पादिदौर्घट्यमिति** । सादृश्यमेकदेशेन वर्तते चेत्, सादृश्यपर्याप्त्यधिकरणत्वाभावात् द्वित्वपर्याप्त्यनधिकरण एकस्मिन् 'द्वौ' इति शब्दस्याप्रयोगवत् सादृश्यपर्याप्त्यनधिकरणे 'सदृशः' इति प्रयोगो न स्यात्; सावयवत्वप्रसङ्गश्च । कार्त्स्न्येन वर्तते चेत्, सादृश्यस्य द्विष्ठत्वं न स्यादिति दूषणानामनवकाश इत्यर्थः । **गवा सुसदृश इत्येव प्रयोगः स्यादिति** । एवकारः चार्थः । इति च प्रयोगः स्यादित्यर्थः । **गौरिति** । गौरित्येव प्रयोगो न स्यादित्यर्थः । यद्वा गोशब्दस्य व्यक्तिविशेष एव गृहीतसंकेततया

'तत्सदृशः' इत्येव प्रयोगः स्यादित्यर्थः । इदं च व्युत्पत्तिदशायाम्, 'एवमाकृतिका या, सा गौः' इति ग्रहणाभावमभिप्रेत्योक्तम् । अनुगतधर्माभावे सामान्यधर्मपुरस्कारेण वह्निधूमयोर्व्याप्तिग्रहो न स्यादित्याशङ्क्याह — व्याप्तिग्रहणं चेति । सौसादृश्येनैकीकृतेन संस्थानलक्षणाकारेण सर्वेषां कोडीकरसंभवादिति भावः । प्रतिपन्नसंस्थानविरोध्याकाराभानस्यैवेति । यद्यपि प्रतिपन्नस्य शुक्तीदंत्वस्य रजतत्वं विरोध्येव, तथापि तस्य विरोधित्वास्फुरणाद्भ्रम इति भावः । शौक्ल्यं हि शुक्लस्याकाराधारणमिति । ततश्च शौक्ल्यस्य शुक्लभेदरूपस्य दर्शनाद् शुक्लत्वाभ्यासः परं निवर्तते; न त्वशुक्लत्वाध्यासः, अशुक्लभेदस्य शुक्तित्वस्याग्रहादिति भावः ।

(संस्थापनस्य भेदरूपत्वसमर्थनम्)

पूर्वं प्रतियोग्यपेक्षयेति । 'जात्यादेरेव प्रतियोग्यपेक्षया' इति भाष्यग्रन्थेनेति भावः । यद्यपि 'जात्यादेरेव प्रतियोग्यपेक्षया' इति ग्रन्थे भेदव्यवहारे प्रतियोगिस्मरणसापेक्षत्वमिति नोक्तम् । अपितु जात्यादेरेव स्वपरभेदत्वम् — अथापि सोऽप्यर्थस्तत्र विवक्षित इति भावः । तर्हि भेदव्यवहार इति । यद्यपि प्राक् 'प्रतियोग्यपेक्षया भेदव्यवहारः' इत्युक्तम्, तथापि निष्प्रतियोगिकगोत्वादेरेव भेदत्वे तदयुक्तमेव स्यादिति तदप्याक्षिप्यतेऽनेन भाष्यग्रन्थेनेति वयस्याभिप्रायात् । ननु सकलेतरसजातीयबुद्धिव्यवहारयोरिति कथमुक्तिः? इतरेषां महिषादीनां स्वसजातीयत्वासंभवेन 'इतरे च ते सजातीयाश्च' इत्युक्तासंभवादित्याशङ्क्याह — निर्दिष्टसामान्यानन्तरेति । निर्दिष्टसामान्यं गोत्वसामान्यम्; तदनन्तरपरसामान्यं तत्साक्षाद्व्यापकं पशुत्वादि । भाष्ये सजातीयग्रहणं विजातीयादेरप्युपलक्षणम् । सजातीयभ्रमनिवर्तकत्वे कथिते विजातीयभ्रमनिवर्तकत्वं किंपुनर्न्यायसिद्धमित्यभिप्रेत्य सजातीयग्रहणं कृतमिति द्रष्टव्यम् । परनिर्वाहकत्वाभाव इति । यद्यपि 'गोत्वादिरेव हि सकलेतरव्यावृत्तिः' इति भाष्ये गोत्वादौ घटादिव्यावृत्तिरूपत्वसमर्थनमात्रमभिप्रेतम् । न तु स्वनिर्वाहकत्वात् परनिर्वाहकत्वम्, परनिर्वाहकत्वाभावे स्वनिर्वाहकत्वासंभवादित्येतत्पर्यन्तम् । किंच 'स्वसंबन्धादर्थान्तर —' इत्यनुमानानुरोधेन स्वनिर्वाहकत्वाभावे परनिर्वाहकत्वासंभवादित्येव प्रदर्शनीयम् — तथापि तावत्पर्यन्तविवक्षामभिप्रेत्य तथोक्तमिति द्रष्टव्यम् । अतो धर्माणामिति । ननु रूपादिधर्मस्यापि न

सर्वथा भ्रमविरोधित्वम्, तत्रापि गुणभेदभ्रमादिदर्शनात्; तदवलम्ब्य मतभेदप्रवृत्तेरद्यापि दर्शनात् 'पटद्रव्यस्य रूपाव्यतिरेकभ्रमः' इति स्वयमुक्तत्वाच्च धर्मिणोऽपीतरधर्मापेक्षया स्वधर्मव्यावर्तकत्वाच्च घटस्यापि स्वाश्रयभूतलादिव्यावर्तकत्वाच्च ब्रह्मणोऽपि स्वविषयज्ञानव्यावर्तकत्वाच्च कथमियं व्यवस्थेति चेत्—न; रूपादिधर्मेषु व्यावर्तकधर्मान्तरसत्त्वेऽप्यनिष्टाभावात्, प्रामाणिकत्वेऽ(ना)नन्तवस्त्वभ्युपगमस्याप्यदोषत्वाच्च। अत एव **भेदत्वसंभव** इत्येवोक्तम्; न तु 'तस्यैव भेदत्वसंभव' इतीति द्रष्टव्यम्। **धर्माणां स्वरूपस्यैवेति**। धर्मस्वरूपमेव स्वाश्रयस्य घटस्य स्वविरुद्धधर्मान्तराश्रयधर्म्यन्तरापेक्षया भेद इत्यर्थः। **विशेषणापेक्षया विशेष्यस्य स्वरूपमेव भेद इति**। न च 'धर्मिस्वरूपस्य स्वगतधर्मापेक्षया भ्रमविरोधी भेदो धर्मान्तरान्वयः' इति पूर्वग्रन्थविरोध इति वाच्यम्—'विशेष्यस्य स्वरूपम्' इत्यस्य विशेष्यस्य स्वरूपमसाधारणधर्म इत्यर्थात् स्पर्शादिविशेषणान्तरमेव रूपादिविशेषणाद् भेद इत्यर्थपर्यवसानात्। कस्य को वाऽसाधारणशब्द इत्यत आह—**स च शब्दो व्युत्पत्तिसिद्ध इति**। अस्यार्थस्यायमसाधारणशब्द इत्येतल्लोकव्युत्पत्तिसिद्धमित्यर्थः। **प्रतियोगितयाऽभिमतार्थान्तरैक्यधीविरोधि वा स्वरूपमिति**। अस्मिन् पक्षे वस्तु-(ब्रह्म)स्वरूपस्याविरोधितया स्वरूपत्वं न स्यादित्यस्वरसो बोध्यः।

## ( मिथ्यात्वानुमानभङ्गः )

**वस्त्वन्तरस्योपाधित्वादिति**। देशकालान्तराणामुपाधिभूतानां सद्भावात् प्रतिपन्नोपाधौ बाधितत्वं तत्राप्यस्तीति भावः। **अनुदितबाधकज्ञानेषु भ्रान्तिष्विति** व्यधिकरणे सप्तम्यौ। अनुदितबाधकज्ञानेषु पुरुषेषूत्पन्नासु भ्रान्तिष्वित्यर्थः। अतोऽनुदितबाधकज्ञानास्वित्यनुक्तिः। **चोदयितृपुरुषज्ञानेनेति**। यस्तु चोदयिता पुरुषः, तज्ज्ञानेनेत्यर्थः। भ्रमत्वबुद्धेरेव बाधरूपत्वादिति भावः। **विशेषणविशेष्यांशासिद्धेरिति**। प्रतिपन्नोपाधिर्विशेषणम्; बाधितत्वं विशेष्यम्। **अप्रामाणिकधर्मपरंपरापादनेनेति**। यथा उत्पत्तेरुत्पत्तावनवस्था; अनुत्पत्तावुत्पत्तिर्नित्या स्यादित्यत्र उत्पत्त्युत्पत्तेरत्यन्तासंभावितायाः आपादनात्। इह तु मिथ्यात्वमिथ्यात्वस्यात्यन्ताप्रामाणिकत्वाभावात्। ब्रह्मणि मिथ्यात्वमिथ्यात्वस्य संप्रतिपन्नत्वादिति भावः।

**इदमुपलक्षणम्**—

"धर्मस्य तदतद्रूपविकल्प(कल्पना)नुपपत्तितः ।
धर्मिणस्तद्विशिष्टत्वभङ्गो नित्यसमो भवेत् ॥"

इति तल्लक्षणम् । न चात्र मिथ्यात्वस्य सत्यत्वे धर्मिणो मिथ्यात्ववैशिष्ट्यभङ्ग उक्तः, किं त्वद्वैतहानिः । प्रत्युत भेदः किं भिन्ने वर्तते, उताभिन्न इति त्वदुक्तेरेव भिन्नादिविशिष्टमात्रनिरासकत्वेन स्वव्याघाताज्जातित्वम् । उक्तं हि, "एतामेव जातिमवष्टभ्य शुष्कतर्कवादिनां बौद्धचार्वाकवेदान्तिनां बालव्यामोहहेतवः कण्ठकोलाहलाः" इति । **मुद्गरे नष्टेऽपीति** । न च नष्टस्यापि मुद्गरस्य घटस्येव पारमार्थ्यमस्तीति वाच्यम्—न हि पारमार्थ्याभावे स दृष्टान्तः । यथा नाशकनाशे नाश्यानुन्मज्जनम्, एवं प्रपञ्चसत्यत्वबाधकस्य मिथ्यात्वसाधकहेतोर्बाधेऽपि बाध्यानुन्मज्जनमित्येतावता साम्येन दृष्टान्तत्वात् । **बाधकज्ञानस्य मिथ्यात्वेऽपीति** । बाधकज्ञानविषयस्य दृश्यत्वादिहेतोर्बाधेऽपीत्यर्थः । साधनपारमार्थ्यापारमार्थ्यविचारस्यैव प्रस्तुतत्वादिति द्रष्टव्यम् । **कारकज्ञापकयोर्वैषम्यादिति** । ननु नाशकस्यापि बाधितत्वे नाशोऽसत्य एव । न हि मुद्गरस्य मिथ्यात्वे नाशस्य सत्यत्वमस्ति । अत साम्यमेवेति चेत्—न; बाधकबाधे बाध्यसत्यत्वं स्यादिति मयोक्ते नाशकारकनाशे कार्यस्य नाशस्यानाशो दृष्ट इति त्वद्वचनमत्यन्तासंगतमिति तत्तात्पर्यात् । **वृन्तविषयभ्रमरत्वभ्रमबाधेऽपीति** । कस्याञ्चिद्धर्म्यां पलाशपुष्प उत्पन्नो दावभ्रमः पलाशवृन्तविषयभ्रमरबुद्ध्या निवृत्तः, सोऽपि यत्र वृन्तविषयभ्रमरभ्रमो विशेषदर्शनान्तरेण निवृत्तः, तादृशभ्रमस्थल इत्यर्थः । वक्ष्यति—"भ्रमरी भ्रमरभ्रमेण वृन्ते यददावभ्रममाश्लिषत् पलाशम्" इति । **परमार्थभूतवृन्तबाध्यत्वदर्शनादिति** । इदमुपलक्षणम्—पलाशपुष्पबाध्यत्वादित्यपि द्रष्टव्यम् । **ततश्च त्वन्मत इति** । दावज्ञानान्तरोत्पत्तिप्रतिबन्धकत्वलक्षणमेव दावबाधकत्वं भ्रमरपारमार्थिकत्वभ्रमस्य । एवं च प्रपञ्चे दृश्यत्वमिथ्यात्वादिरूपसाध्यसाधनपारमार्थ्यभ्रमस्य प्रपञ्चसत्यत्वज्ञानान्तरोत्पत्तिप्रतिबन्धकत्वलक्षणं बाधकत्वं वक्तव्यम् । ततश्च तस्यापि भ्रमस्य निवर्तकान्तरमपि किंचिद्धर्मपारमार्थ्यज्ञानमेवेति भ्रमपरंपरानुवृत्तिरेव स्यात्; निःशेषाविद्यानिवृत्तिर्न स्यादिति भावः । नन्वेवं दावादिभ्रमस्थल इव प्रकृते भ्रमस्य भ्रमनिवर्तकत्वे निःशेषाविद्यानिवृत्तिर्न स्यादित्येव सुवचम्; किमर्थमेतावान् संरम्भ इति चेत्—सत्यम्, तत्तत्पदार्थस्वरूपशिक्षार्थत्वेनादोषात् । **भ्रान्तिरूपोत्त-**

**रोत्तरेति** । साधनधर्माणामपारमार्थ्यादिति भावः । **स्वयं नाश** इति । ननु (ज्ञानान्तरेण ज्ञानेन) नाशेऽपि घटादिनाशान्तरवत् काल्पनिकत्वं सिद्धमेवेति, निःशेषाविद्यानिवृत्तिर्न स्यादिति दोषः समान इति चेत्—इष्टापत्तिरिति केचित् । अन्ये तु ज्ञानजन्याया अविद्यानिवृत्तेर्ब्रह्मस्वरूपत्व — पञ्चमप्रकारत्वपक्षावलम्बनेन परिहारस्य कथंचित् कृतत्वेन ज्ञानातिरिक्तजन्यनाशस्य स्वकारणे प्रविलयरूपतया परैरभ्युपगतत्वेन कारणभूताविद्याया अनुवृत्तिः स्यादेवेति भाव इति वदन्ति । **तथापि सन्मात्रस्येति** । इदमुपलक्षणम्-- नभसोऽप्यध्यस्तनीलिमपुरस्कारेण चक्षुषा ग्रहणसंभवात् पञ्चीकरणप्रक्रियया रूपवत्त्वसंभवेन चाक्षुषत्वादेकवित्तिवेद्यत्वं सिध्यतीति भावः ।

## ( दृश्यत्वनियमरूपहेतुभङ्गः )

**ननु दृश्यत्वनियमोऽत्रेति** । स्वव्यवहारे स्वातिरेकिसंविदपेक्षानियतदृश्यत्वमित्यर्थः । **सदनुभूत्योर्भेदाभावादिति** । स्वप्रकाशानुभूत्यभिन्नत्वेन स्वप्रकाशत्वं वक्तव्यमित्यर्थः । **स्वप्रकाशत्वेन दृश्यत्वनियमासिद्धेरिति** । यदि दृश्यत्वहेतुनैव भेदमिथ्यात्वं साध्यते, तदा सदनुभूतिभेदमिथ्यात्वाधीनं दृश्यत्वहेतुसामीचीन्यम्, सद्रूपे ब्रह्मणि व्यभिचाराभावात्; सामीचीन्ये सति भेदमिथ्यात्वमित्यन्योन्याश्रय इत्यर्थः । **यद्यनुमानान्तरेणेति** । जडत्वपरिच्छिन्नत्वादिनेत्यर्थः । **तर्ह्यसिन् सिद्धसाध्यतेति** । दृश्यत्वहेतोरित्यर्थः । **दृश्यत्वैकस्वभावत्वमिति** । स्वप्रकाशताशून्यत्वमित्यर्थः । **परमार्थभूताश्चेति** । नित्यत्वादीनामपारमार्थ्येऽनित्यत्वादिकं प्रसज्येतेति भावः ।

## ( व्यावर्तमानत्वहेतुभङ्गः )

**अनृतादिभ्यो व्यावृत्तत्वेनाभ्युपगमादिति** । ननु यद्यप्यनृतव्यावृत्तत्वमनृतविलक्षणत्वमङ्गीकृतम्, तथाप्यनुवर्तमानत्वप्रतिद्वन्द्विव्यावर्तमानत्वं नाङ्गीकृतमिति चेत् — न; विलक्षणत्वरूपव्यावर्तमानत्वे सत्यननुवृत्तत्वरूपव्यावृत्तत्वमपि सिध्यतीति भावात् । **तत्स्वकार्यकरमिति** । व्यभिचारज्ञानसंपादनमुखेनानुमितिप्रतिबन्धकमित्यर्थः । **अनुभूतित्ववदिति** । स्वरूपानतिरिक्तानुभूतित्वस्य स्वप्रकाशत्वरूपसाध्यसाधकत्वादिति भावः । **अपरमार्थशब्दश्चेति** । अत्र केचित्—अपरमार्थशब्दपदं लक्षणया ब्रह्मशब्दपरम् । ततश्च 'ब्रह्मणो जडव्यावृत्तत्वमपरमार्थः' इत्यत्र ब्रह्मशब्दो व्यर्थः,

व्यावृत्तत्वमात्रस्यापारमार्थ्यात् । अत एव 'घटादावपि' इत्युत्तरग्रन्थस्वारस्यमपीति वदन्ति । अन्ये तु—परमार्थ इत्युक्त्या न कोऽपि परिहारः कृतः व्यावर्तमानत्वान्तरस्यापि तादृशत्वेन परमार्थव्यावर्तमानत्वस्य हेतूकरणासंभवात् वैलक्षण्यासिद्धेरिति भावं वर्णयन्ति । **तत्रासिद्धो हेतुरिति** । नन्वपरमार्थभूतव्यावर्तमानत्वस्य हेतूकृततया तस्य नासिद्धिः । व्यावर्तमानत्वस्य तत्त्वाभावे एवापरमार्थव्यावर्तमानत्वसिद्धिः । इतरथा परमार्थव्यावर्तमानत्वमेव स्यादिति चेत्, न; तथा सति अपरमार्थव्यावर्तमानत्वं व्यावृत्तिशून्यत्वमिति स्यात् । ततश्च व्यावृत्तिशून्यत्वमेव हेतुः स्यात्, न तु व्यावृत्तिरिति भावः । **प्रतिपन्नोपाधौ बाधितस्यैवेति** । अत्र प्रतिपन्नोपाधौ बाधितस्यैव व्यावृत्तिर्मिथ्यात्वसाधिकेति योजना, 'न त्वगृहीततत्त्वम्' इत्युत्तरग्रन्थानुसारात् । पक्षान्तरमाह—**अत्र व्यावृत्तिविशेषो व्यावृत्तिशब्दोक्त इति** । बाधितस्यैव मिथ्यात्वसाधकव्यावृत्तिविशेषः संभवतीत्येवं योजनेति भावः । **निषेधधीबाध इति** । निषेधधीजन्या पूर्वज्ञाने असत्त्वबुद्धिर्बाधः । **निषेधरूपत्वं बाधकत्वमिति** । पूर्वज्ञानविषयाभावावगाहि ज्ञानं बाधकमित्यर्थः । **सर्वसपक्षाननुयायित्वेनेति** । न चैवं प्रतिपन्नोपाधौ निषेधप्रतियोगित्वरूपमिथ्यात्वस्याभावेन कथं तेषां सपक्षत्वमिति वाच्यम्—ज्ञाननिवर्त्यत्वरूपमिथ्यात्वस्य सत्त्वात् सपक्षत्वमस्तीति तदभिप्रायसंभवात् । इतरथा साध्योपाध्योरैक्यप्रसङ्गात् । **उपाधिरवच्छेदक इति** । आश्रय इत्यर्थः । न तु साध्यव्यापकत्वादिलक्षण इति भ्रमितव्यमिति भावः । **देशकालभ्रमे वस्त्वन्तरमुपाधिरिति** । देशभ्रमे कालादिवस्त्वन्तरस्योपाधित्वम्, कालभ्रमे देशादिलक्षणवस्त्वन्तरस्योपाधित्वमिति संभवादित्यभिप्रायः । **नान्योन्याश्रयः, भ्रमव्यक्तिभेदादिति** । ननु—प्रातिभासिको देशकालादिर्व्यावहारिके वस्त्वन्तरेऽध्यस्यते, प्रातिभासिकं रजतमिव शुक्तिशकल इत्युक्तौ नान्योन्याश्रयः । न हि रजतस्य शुक्तिशकलेऽध्यासोऽन्यत्र शुक्तिशकलाध्याससापेक्षः । अतो नान्योन्याश्रयशङ्का । नापि 'भ्रमव्यक्तिभेदात्' इति परिहारश्च युज्यते, अनवस्थादिप्रसक्तिप्रतिबन्धप्रसङ्गादिति चेत्-नैवम्; **भ्रमव्यक्तिभेदात्** इत्यस्य प्रातिभासिकव्यावहारिकव्यक्तिभेदात् प्रातिभासिकस्य व्यावहारिकेऽध्यासोपपत्तावन्योन्याश्रयानवस्थाद्यभावादित्येव तदभिप्रायात् । **यदवच्छेदकावच्छिन्नमिति** । न च यत्र यत् प्रतिपन्नम्, तत्र तस्याभावो मिथ्यात्वप्रयोजक इत्येवास्त्विति वाच्यम्—संयोगाद्यतिप्रसङ्गवारणाय

यद्देशकालावच्छिन्नमित्यस्यावश्यकत्वात् । **क्रियान्तरावच्छिन्नस्येति** । अयं भावः— नात्र कालस्याध्यासः, येनोपाध्यन्तरमदपद्धावशङ्का स्यात् । अपि तु काले सायंत्वरूपादित्यक्रियासंबन्धाध्यासः । न च—सायंत्वेन प्रतीतस्य न सायंत्वभ्रमाधिष्ठानत्वम्, आत्माश्रयप्रसङ्गात्; नापि दिवात्वेन प्रतीतस्य, विरोधादिति वाच्यम्—तदुभयविलक्षणगोदोहनादिक्रियासंबन्धित्वेन प्रतीते काले सायंत्वाध्यास उपपद्यत इति । **नियमः क्रियत इति** । अस्तित्वनास्तित्वयोः प्रसौ नियमः क्रियत इत्यर्थः । घटशब्दप्रतिपन्नेऽस्तित्वरूपधर्मान्तरसंबन्धो बोध्यते; इतरथा 'नीलो घटः' 'शुक्लः पटः' इत्यादावपि विकल्पावतारप्रसङ्ग इति भावः ।

## (अनुवर्तमानत्वदूषणम्)

**प्रथमे शिरसि सिद्धसाधनत्वं दूषणमुक्तमिति** । अत्र केचित्—सन्मात्रं सर्वासु प्रतिपत्तिष्वनुवर्तमानं दृश्यत इति तत् परमार्थः' इति सन्मात्रशब्दितसत्तासामान्यस्यानुवर्तमानतया पारमार्थ्यमुपक्षिप्तं पूर्वपक्षे । तत्र सत्तासामान्यस्यानुवर्तमानतया पारमार्थ्योपपादनं सिद्धसाधनमेव । विशेषणानां व्यावर्तमानतयाऽपारमार्थ्योपपादनं त्वनिष्टमिति भाष्ये स्पष्टोऽर्थः प्रतीयते । न तत्र विकल्पमुखेन ग्रन्थावतरणं युज्यते । तथाहि सति सच्छब्दस्य प्रमाणसंबन्धार्हघटादिपरत्वे "अतो न सन्मात्रमेव वस्तु" इत्युत्तरभाष्यविरोध, प्रमाणसंबन्धार्हस्यैव वस्तुत्वेन सिद्धान्तिनोऽपि संमतत्वात् । किंच **ननु सदेव परमार्थ इति हि ग्रन्थकाराभिप्रायः** इत्याक्षेपसमाधाने अपज्ञानविजृम्भिते । अनुवर्तमानत्वं सत्पारमार्थ्यसाधकम्; व्यावर्तमानत्वमितरापारमार्थ्यसाधकम् । द्वाभ्यां च हेतुभ्यां सन्मात्रशब्दितसत्तारूपसामान्यस्यैव पारमार्थ्यम्, नेतरेषामित्युक्ततया अनुवर्तमानत्वहेतुमात्रयतया पराभिमतस्य सत्तापारमार्थ्यस्य स्वमतेऽपि सत्त्वेन सिद्धसाधनस्य, सिद्धतयाक्षेपस्य वा, विकल्पमुखेन समाधानस्य वा अप्रसक्तेरिति मन्यन्ते—तदिदमसारम्; अधिष्ठानतयानुवर्तमानस्य पराभिमतस्य सच्छब्दितस्यापि पारमार्थ्यं सिद्धान्तिसंमतमिति शङ्काव्युदासार्थं विकल्पमुखेनैव ग्रन्थस्यावतारणीयत्वात् । न चैवम्— "अतो न सन्मात्रमेव वस्तु" इत्युत्तरभाष्यासङ्गतिरिति वाच्यम्, "न सन्मात्रमेव वस्तु" इत्यत्र 'साधनार्हम्' इति शेषः पूरणीयः । प्रमाणसंबन्धार्हवस्तुनः पारमार्थ्यस्य सिद्धत्वेन तस्य साधना-

नर्हत्वादित्याशयात् । यदुक्तम् , "ननु सदेव परमार्थ इति हि ग्रन्थकाराभिप्रायः" इत्याक्षेपसमाधानयोरस्थानविजृम्भितत्वमिति — तन्न ; "सदेव परमार्थ इति हि ग्रन्थकाराभिप्रायः" इत्यत्र, 'वर्णित' इति शेषः । ततश्च यद्यनुवर्तमानत्वात् सत् परमार्थ इत्युच्येत, तदा हि सिद्धसाधनशङ्का स्यात् । अनुवर्तमानत्वात् सदेव परमार्थ इत्येतावत्साध्यम् ; अतो न सिद्धसाधनमित्याक्षेपासंभवात् । **उपधिकरणासिद्धतेति** । अनुभूतिव्यतिरिक्तमपरमार्थः, अनुभूतेरनुवर्तमानत्वादित्युक्ते हेतोः पक्षावृत्तित्वादसिद्धिः स्यादित्यर्थः । **तृतीयेंऽशतः (शे) सिद्धसाध्यतेति** । अनुभूतिरूपसत्तव्यतिरिक्तौ परमार्थापरमार्थौ, अनुवर्तमानत्वादित्युक्तावित्यर्थः ।

आश्रयासिद्धिमेवोपपादयति— **सच्छब्दवाच्यस्येति** । **व्यावृत्तशब्दवदुपपन्न इतीति** । इतरथा 'घटो व्यावृत्तः', 'पटो व्यावृत्तः' इत्यनुगतव्यवहाराद्व्यावृत्तशब्दितमनुवृत्तपदार्थान्तरं सर्वाध्यासाधिष्ठानभूतमुपेयं स्यात् । तथा 'खपुष्पमसत्', 'नृशृङ्गमसत्' इत्यनुवृत्तव्यवहारादनुवृत्तेऽसति व्यावृत्तनृशृङ्गादिकं कल्प्यमिति स्यादिति भावः ।

**तदसंभवे परोक्तमनुमानमिति** । अनुभाव्यत्वासंभवसाधनं परोक्तमित्यर्थः । **शब्दार्थसंबन्धग्रहणायोगादिति** । प्रयोज्यवृद्धस्य गवानयनप्रवृत्त्या तदीयकार्यताज्ञानमनुमाय तत्र पदशक्तेर्ग्राह्यत्वादिति भावः । **अतीतानुभवव्यावृत्त्यर्थमिति** । अतीतानुभवे तल्लक्षणातिव्याप्तिनिवृत्त्यर्थमित्यर्थः । अतीतदशायां प्रकाशस्यावर्तमानतया शानजभिहितप्रकाशवर्तमानत्वस्याभावात् सत्तयैव प्रकाशमानत्वस्य तत्रासंभवः प्रसज्येतेति तद्व्यावृत्त्यर्थमित्यर्थः । **यद्यप्यतीतानुभवस्येति** । अयमर्थः— अतीतानुभवस्थले स्वसत्ताया एवाभावात् प्रकाशाव्यभिचारिस्वसत्ताकत्वमस्त्येव ; अतीतदशायामवस्थाविशेषविशिष्टस्वरूपस्यैवाभावाल्लक्षणस्य नाव्याप्तिः — तथाप्यर्थविशेषव्युत्पादनाय **वर्तमानदशायामित्युक्तमिति** । अयमत्रान्वयः—ज्ञानान्तरमन्तरेण प्रकाशानुपपत्तेः प्राप्तस्यातीतानुभवे लक्षणाभावस्य सत्तयेति पदेनैवार्थाद्व्यवच्छेदसिद्धेर्वर्तमानदशायामिति निरर्थकमिति । **नेति उपाधित्वनिरासाय पक्षे तत्प्रसञ्जयतीति** । अननुभूतित्वलक्षणसाध्यव्यापकस्याज्ञानाविरोधित्वस्यानुपाधित्वस्फोरणाय — साधनव्यापकत्वं पक्षवृत्तित्वप्रसञ्जनेन दर्शयतीत्यर्थः । **अनुभूतेरनुभाव्यत्वेऽननु-**

**भूतित्वस्येति** । अनुभूतेरनुभाव्यत्वे आपाद्यमानस्याननुभूतित्वस्येत्यर्थः । **समीपस्थैरिति** । उपेत्युपसर्गवशात् समीपस्थैरित्यर्थलाभ इति भावः ।

(संविदनुत्पत्त्यादिनिरसनम्)

**तदानीमित्यभावविशेषणमिति** । तदानींतनाभावमित्यर्थः । भिन्नकालीनाभावावगाहने विरोधस्याभावात्; 'न ह्यनुभूतिः स्वसमकालवर्तिनमेव' इत्युत्तरभाष्यस्याप्रसक्तप्रतिषेधत्वापातादिति भावः । **नेति प्रतिज्ञाऽध्याहर्तव्येति**। उक्तविकल्पपक्षानुगुणा प्रतिज्ञेत्यर्थः । अयं भावः—अनुभूतेः स्वसमकालवर्तिग्रहणनियमो न ग्राह्यसामान्यप्रयुक्त इति वा, न ग्राहकानुभूतिस्वभावप्रयुक्त इति वा प्रतिज्ञेति । **ग्राह्यविशेषपक्षं दूषयितुं शङ्कते - अथ मन्यस इतीति** । इदमुपलक्षणम् – किं ग्राह्यानुभूत्यभावस्वभावादिति द्वितीयपक्षस्यापीति द्रष्टव्यम् । **दर्शनपूर्विकैव स्यादिति**। अदर्शने त्वादृश इत्थं न वदेत् । अतो दृष्ट्वैव वदसीति दर्शनं सिद्धवत्कृत्य, तच्च दर्शनं केत्युपालभत इति भावः । प्रत्यक्षशब्दस्य विषयसाधारण्यादाह—**प्रत्यक्षशब्देन प्रत्यक्षज्ञानमुच्यत इति** । इदं च **इन्द्रियजन्मन** इति पदसमभिव्याहारलभ्यम् । यद्वा कर्मेन्द्रियजन्मनो गमनादिलक्षणस्य प्रत्यक्षविषयस्य व्यावृत्त्यर्थं प्रत्यक्षज्ञानमुच्यत इत्युक्तम् ।

**प्रमाणाप्रमाणज्ञानयोः कथं वैषम्यमिति** । अयं भावः—सर्वेषां ज्ञानानां स्वसमकालवर्तिग्राहित्वनियमानभ्युपगमेऽपि प्रमाणज्ञानानां स्वसमकालवर्तिग्राहित्वनियमोऽभ्युपेयः; इतरथा प्रमाणाप्रमाणव्यवस्था न स्यात् । प्रमेयाविनाभावसदसद्भावाभ्यां हि प्रमाणाप्रमाणव्यवस्था उपपाद्या । यदि प्रमेयमन्तरेणापि प्रमाणमुत्पद्येत, तदा कथं तस्य तदविनाभावः? अतः स्वसमकालवर्तित्वनियमोऽभ्युपेयः । अतः स्वसमकालवर्तिग्राहित्वमेवोपेयमिति । **ज्ञानमात्रस्येति** । प्रमाणज्ञानमात्रस्येत्यर्थः । तत्रैव नियमस्य शङ्कितत्वादिति द्रष्टव्यम् । **वर्तमानविषयालाभादसमकालवर्तिग्राहिणामिति** । अत्र **सामकालवर्तिग्राहि**शब्देन नञ्समासः । वर्तमानविषयस्यालाभेन समकालवर्तिविषयग्रहणासंभवादसमकालवर्तिनश्च विषयत्वाभावस्य त्वयाऽभ्युपेतत्वान्निर्विषयाणामेषां प्रमेयस्यैवाभावेन प्रमेयाविनाभावः कथं स्यादित्यर्थः । **तत्सिद्धिः कथमित्यपेक्षायामिति** । भिन्नकालवर्तिग्रहणेऽपि भिन्नकालवर्तिना

प्रमेयेण विना कालान्तरे वर्तमानानामेषां कथं तदविनाभावः सिध्येदित्यर्थः । प्रमाणस्यार्थसंबन्ध इत्यन्वय इति । समकालवर्तिना अर्थसंबन्धेऽविनाभावो नेत्यन्वयः । मिथ्यात्वस्य प्रमाणं प्रत्यनीकं भवतीति । प्रमाणगतं प्रमेयमिथ्यात्वप्रत्यनीकत्वमेव प्रमेयेणाविनाभावसंबन्ध इत्यर्थः । व्यवहितस्य समकालवर्तित्वनियमाभावस्यातःशब्देन परामर्शादप्यनन्तरनिर्दिष्टस्य प्रमाणतयाभिमतेषु कालान्तरवर्तिग्रहणदर्शनस्य हेतुतया परामर्शो न्याय्य इत्यस्वरसादाह — एवं वार्थ इति । पूर्वस्मिन् पक्षे प्रमाणस्य प्रमेयाविनाभावः समकालग्राहित्वबाधकः; अस्मिन् पक्षे तस्य साधकत्वनिराकरणमिति भिदा । गवये गोसादृश्यलक्षणादुपमानाद्गवि गवयसादृश्यप्रतीतिरूपोपमितिर्जायत इति केचित् । गोसादृश्यविशिष्टपिण्डज्ञानात् 'अयमसौ गवयशब्दवाच्यः पिण्ड' इति संज्ञासंज्ञिसंबन्धप्रमितिरूपोपमितिर्जायत इत्यन्ये । मतद्वयमप्यनुभाव्यते — उपमानस्य प्रतिपन्नेत्यादिना ।

चेद्यदिशब्दयोरेकार्थत्वं पौनरुक्त्यमाशङ्क्याह — यदिशब्द इति । चेच्छब्दो यद्यर्थ इति । चेच्छब्दः चेदर्थ एवेत्यर्थः । अत एव तथा चेत् इति वक्ष्यति । तथाशब्दाध्याहारमभिप्रेत्याह— तथा चेदित्यर्थ इति । भावरूपावस्थान्तरोपलब्धिरिति । यथा घटस्याभावः पिण्डत्वादिरूपं भावरूपमवस्थान्तरम्, एवं घटज्ञानानुपलब्धिर्नाम घटज्ञानोपलब्धिमत्त्वावस्थापरित्यागेन भावरूपं पटादिमत्त्वज्ञानोपलब्धिरूपमेवेत्यर्थः । क्वचित् संकोचोऽपि । अत एव वक्ष्यति ज्ञानस्य संकोचोऽवस्थान्तरं वेति । ततश्च भावरूपा या अवस्थान्तरोपलब्धिर्वस्त्वन्तरोपलब्धिः; सैव घटज्ञानाद्यनुपलब्धिरिति भावः । अत्र केचित्— "ज्ञानस्य योग्यानुपलब्धिर्नाम भावरूपावस्थान्तरोपलब्धिः । पिण्डत्वाद्युपलब्धिरेव हि घटस्य योग्यानुपलब्धिः" इति ग्रन्थपर्यालोचनायाम्, तथोत्तरत्र, 'अतीतकालावच्छिन्नज्ञानाभावो नाम ज्ञानस्य संकोचोऽर्थान्तरज्ञानं वा' इति ग्रन्थस्य, "अतीतकालावच्छिन्नो गजज्ञानाभावो नाम ज्ञानस्य स्वाभाविकरूपः संकोचोऽर्थान्तरज्ञानं वा" इति गजज्ञानाभावनिर्वचनानन्तरप्रवृत्तस्य, "तत्कालीनस्वापादिपर्यन्तसंभावनं वा घटादिज्ञानपर्यन्तसंभावनं वा गजज्ञानस्य योग्यानुपलब्धिः" इति ग्रन्थस्य च पर्यालोचनायां घटभावोपलब्धिरेव घटानुपलब्धिः, गजज्ञानाभावोपलब्धिरेव गजज्ञानानुपलब्धिरिति प्रतीयते । न च तदुपपद्यते, घटाभावोपलम्भस्य घटोपलम्भाभावस्य च

मिन्नत्वात्। किंच घटाभावोपलम्भस्यैव घटोपलम्भाभावत्वे घटानुपलब्ध्या लिङ्गेन घटाभावोऽनुमीयत इत्येतद्विरुध्येत। न ह्यभावोपलब्ध्याऽभावोऽनुमीयत इति शक्यते वक्तुमिति चोदयन्ति—तन्न; उक्तरीत्या अभावोपलम्भस्य तदनुपलब्धिरूपत्वाभावेन 'ज्ञानसंकोचो वा अवस्थान्तरं वानुपलब्धिः' इत्यत्रैव तात्पर्यात्।

पूर्वग्रन्थस्य प्रागभावसमर्थनपरत्व दुत्तरग्रन्थस्यानित्यत्वसमर्थनपरत्वादेकविषयत्वाभावात् किंचेत्ययुक्तमित्याशङ्क्य, उत्तरग्रन्थानुसारेण पूर्वग्रन्थस्याप्यनित्यत्वपरत्वमभिप्रयन्नाह—**ज्ञानस्य स्वाभासेति। अथ विषयप्रकाशनिरूपणमुखेनेति**। विषयप्रकाशकादाचित्कत्वनिरूपणमुखेनेत्यर्थः। **अतो न साध्याविशिष्टतेति**। अयं भावः—**तदप्रतीतिश्च संवेदनस्य कालपरिच्छिन्नतया प्रतीतेरिति** वाक्ये संवेदनस्याप्रतीतिः साध्यतया प्रतीयते; प्रतीतेः कालपरिच्छिन्नत्वं हेतुतया प्रतीयते; कालपरिच्छिन्नत्वात् कालान्तरेऽसत्त्वात् अप्रतीतिः प्रतीत्यभाव इत्युक्ते साध्याविशेष इत्यर्थः। इदं चोपलक्षणम्—संवेदनस्य तदप्रतीतिरित्यनन्वयश्च। न च संवेदनस्येत्यस्य कालपरिच्छिन्नतयेत्यनेनान्वय इति वाच्यम्, प्रतीतेरित्यनेनान्वितस्य कालपरिच्छिन्नतयेत्यस्य निराकाङ्क्षत्वात्। तस्मादस्य भाष्यस्य **संवेदनस्य तदप्रतीतिः** घटादिसत्ताविषयव्यवहारानुगुण्याभावः प्रतीतेः कालपरिच्छिन्नत्वादित्यर्थ इति भावः। केचित्तु—**कालपरिच्छिन्नतया प्रतीतेरित्यत्र** प्रतीतेरित्येतदविवक्षितम्; संवेदनस्य कालपरिच्छिन्नत्वादित्येवार्थः। एवं च न तदप्रतीतिरिति साध्याविशेष इति वर्णयन्ति। **अर्थापत्यन्तरमाहेति**। ननु प्रत्यक्षज्ञानं स्वविषयस्य स्वसमकालवर्तितावगमकस्वभावमिति सिद्धम्। घटप्रत्यक्षे "इदानीं घटोऽस्ति, न वा" इति तत्काले संदेहादर्शनात्। ततश्च प्रत्यक्षं स्वयं सर्वकालवर्तित्वेन भातं चेत्, स्वविषयमपि सर्वकालवर्तितया भासयेत्। स्वविषये घटादौ कालापरिच्छिन्नत्वलक्षणसार्वकालिकत्वावभासाभावात् ज्ञानेऽपि कालानवच्छिन्नत्वलक्षणसार्वकालिकत्वेन प्रतीतिर्नास्ति। अपितु कालावच्छिन्नत्वलक्षणानित्यत्वेनैव ज्ञानस्य प्रतीतिः। न च ज्ञाने नित्यत्वभाने हि विषयेऽपि तथात्वप्रसङ्गः; नित्यानित्यत्वौदासीन्येनैव प्रतीतिसम्भवात् इति वाच्यम्, स्वप्रकाशज्ञाने नित्यत्वधर्माभानेऽनित्यत्वरूपधर्मभानावश्यंभावादित्येकमन्यतया योजयितुं शक्यत्वात् इति चेत्—सत्यं सा योजना प्रतीयते, युक्तिर्न समीचीना।

ज्ञाननित्यत्वे विषयस्यापि तथात्वमित्युक्ते ईश्वरप्रत्यक्षेऽतथात्वात् [स्व] व्यवहारानुगुण्य-कादाचित्कत्वमेव वक्तव्यमवशिष्यते । अत एव वक्ष्यति "अनुग्राहकतयोक्तौ भवतः" इति । पूर्वापरावधिद्वयास्वयंप्रकाशत्वादेवानित्यत्वस्याप्रकाशे अवधिद्वयराहित्यरूपनि-त्यत्वस्याप्यप्रकाशः सुवच एव । कालापरिच्छिन्नत्वलक्षणनित्यत्वपक्षेऽपि कालपरिच्छेद-स्यास्वयंप्रकाशत्वादेव तदभावलक्षणनित्यत्वस्य न प्रकाशोपपत्तिरित्यस्वरसादाह — **यद्वा घटादिनित्यत्वप्रसङ्ग इति । अनुगतं नित्यत्वलक्षणमिति ।** सर्व-कालसंबन्धित्वलक्षणनित्यत्वस्य कालसाधारण्याभावादिति भावः । **लिङ्गादेः प्रत्यक्ष-ज्ञानविषयत्वादिति ।** इदमुपलक्षणम् । 'अधुनेदमतीतम्' इति ज्ञानं स्वाधार-कालवृत्तिध्वंसप्रतियोगित्वलक्षणमतीतत्वमतीतवस्तुनि विषयीकरोति । 'इदमिदानी-मतीतम्' इति शब्दप्रयोगस्थलेऽपि 'इदानीम्' इति शब्दप्रयोगाधारकालवृत्ति-ध्वंसप्रतियोगित्वलक्षणमतीतत्वमेव भासते । ततश्च ज्ञानस्य नित्यत्वे सर्वस्यापि कालस्य तज्ज्ञानाधारकालतया अतीतानागतव्यवस्थानुपपत्तिः । न चैवमीश्वरज्ञानेऽती-तत्वोल्लेखाद्यनुपपत्तिः स्यादिति वाच्यम्, तत्राप्यवस्थाभेदेन ज्ञानभेदमादायैवाती-तत्वोल्लेखस्य समर्थनीयत्वादित्यपि द्रष्टव्यम् । वस्तुतस्तु अनुमित्यादीनां नित्यत्वे अजन्यज्ञानत्वेन प्रत्यक्षत्वमेव स्यात् । ततश्च तद्विषयाणामपि नित्यत्वमेव स्यादिति दूषणे तात्पर्यमित्याहुः ।

( निर्विषयसंविदस्फूर्तिः )

**अनुभवानभ्यासश्चास्मरणमात्रहेतुतया हि प्रसिद्धा इति ।** अस्मरण-नियमहेतुतया प्रसिद्धा इत्यर्थः । **अनुभवानभ्यासश्चेति** चशब्दात् प्रायणनारक-क्लेशादिः संगृह्यते । एते **निखिलसंस्कारतिरस्कृतिकरदेहविगमादीत्यत्रा**दिपद-ग्राह्या इत्यर्थः ।

"तदन्यधीरतात्पर्यं पटुत्वविरहो धियः ।
दुःखादि तीव्रमुन्मादोऽनभ्यासो दीर्घकालता ॥
एतैश्चादृष्टवैगुण्यं कल्प्यं संस्काररोधिषु ।
एतेष्वसत्स्वस्मरणात् ज्ञानाभावोऽनुमीयते ॥"

इति सिध्यति (?) (सिद्धिः?) । **अतो नियमशब्द इति ।** अस्मरणनियमहेतुभूतदेह-विगमादेरभाव इत्युक्तेः अस्मरणनियमादित्येव वक्तुमुचितम्, न त्वस्मरणमिति ।

अस्मरणनियमहेतुभूतव्यासङ्गाद्यभावो यद्युच्येत, तदा अस्मरणमिति वक्तुं युज्यते। अस्मरणनियमहेतुभूतदेहविगमाद्यभावकीर्तनादस्मरणनियमादित्येव वक्तुमुचितमित्यर्थः। यद्वा अनुभवानभ्यासश्चेति चशब्दाद्विषयान्तरव्यासङ्ग उच्यते। ततश्चैते अस्मरणमात्रहेतवः। ततश्चास्मरणनियमहेतुदेहविगमप्रसूतिनारकक्लेशाद्यभावेऽपि विषयान्तरव्यासङ्गाद्यस्मरणमात्रहेतुवशादनुभूतस्याप्यस्मरणसंभवात् तद्यावृत्त्यर्थं नियमशब्द इत्यर्थः। **उक्ततिरस्कारकाभावे** इति। उक्ततिरस्कारकरूपप्रतिबन्धकरहितानुभवो यत्र तत्र स्मरणमित्यप्रतिबद्धानुभवस्य स्मरणं व्यापकम्। अतश्च स्मरणरूपव्यापकाभावेनाप्रतिबद्धानुभवाभावे साध्ये देहविगमादिप्रतिबन्धकाभावरूपस्य विशेषणस्य सिद्धतया विशेषणवति विशिष्टाभावः सिध्यन् विशेष्यरूपानुभवाभावमादाय पर्यवस्यतीति भावः। न त्वनुभवस्योक्ततिरस्कारकाभावयुक्तस्मरणं व्यापकमिति भ्रमितव्यम्, तथा व्याप्तेरसंभवात्। **अनुषङ्ग इति। न केवलमस्मरणनियमादनुभवाभाव** इति प्रथमान्तस्यानुभवाभावशब्दस्य षष्ठ्यन्ततया विपरिणामेनानुषङ्ग इत्यर्थः। अहंकारशब्दस्य महत्तत्त्वजन्याहंकारतत्त्वभ्रान्तिं व्युदस्यति—**अहंप्रत्यये**ति। अहमिति प्रत्ययो यस्य सोऽहंप्रत्ययः—अन्तःकरणम्। अत एव वक्ष्यति, 'ज्ञातृज्ञेययोरपि स्मरणं प्रत्यकारणत्वमकामेनापि स्वीकार्यम्' इति। न तु ज्ञातृविषयकज्ञानज्ञेययोरिति द्रष्टव्यम्। नन्वहमर्थस्यानुवृत्तौ प्रकाशप्रसङ्ग इत्यत्राह—**प्रकाशत** इति। अत्र चशब्दोऽध्याहर्तव्यः; अनुवर्तते प्रकाशते च; ततो हेतुरसिद्ध इत्यर्थः। न त्वनुवर्तते इत्यस्य प्रकाशत इति विवरणम्, यथाश्रुतेऽनुपपत्त्यभावात्।

**तदालम्ब्य व्याघाताभिप्रायेणे**ति। अनुभवशब्दमात्रमालम्ब्याक्षिपतीति भावः। **केवलैव संविदात्मानुभव** इति भाष्ये **आत्मानुभव** इति सप्तम्यन्ततया वैयधिकरण्येन व्याख्यानस्य क्लिष्टत्वादन्यथा व्याचष्टे—**केवलैवे**त्यादे**रेवं वार्थ** इति। **धर्मिस्फुरणरूपा या संविदि**ति। ननु स्फुरणस्य संविद्रूपत्वे स्फुरणस्य व्यवहारानुगुण्यरूपसंविद्धर्मत्वप्रतिपादकोत्तरग्रन्थविरोध इति चेत्—न। धर्मधर्मिणोरभेदोपचारेण स्फुरणे संविच्छब्दप्रयोगोपपत्तिरिहेति द्रष्टव्यम्। **व्यवहारानुगुण्यमि**ति। ततश्च साश्रयत्वं सिद्धमिति भावः। ननु संविन्निर्विशेषत्ववादिनं प्रति व्यवहारानुगुण्यापरपर्यायभासमानत्वरूपस्य संविद्धर्मस्फुरणस्य सविशेषत्वसाधनमनुचितमिति चेत्—न।

आत्मस्फुरणरूपा संविन्निर्विशेषेति वदता आत्मस्वरूपसंविदतिरिक्तस्य स्फुरणस्य निर्विशेषत्वमभ्युपेत्य स्फुरणस्य स्फुरत आत्मनश्चाभेदासंभवादित्यभ्युपेत्य तथोक्त्युपपत्तेः। न हि परेण आत्मरूपा संवित्निर्विशेषेत्युक्तम्। अपि त्वात्मस्फुरणरूपैवेत्युक्तम्। अत आत्मस्फुरणस्य सविशेषत्वोपपादनं युज्यत इति द्रष्टव्यम्। स्मर्तव्यास्मरण-लिङ्गेनेति। अनेनादर्शितशयविषयत्वमुच्यते। तेन तृणादिव्यावृत्तिः। जायमानेन चेति शेषः। ततश्च स्मर्तव्यास्मरणलिङ्गकन्येन तस्मिन् काले 'न किंचिदवेदिषम्' इत्यनुभूतिरूपपरामर्शेन स्वाभावोऽपि गृह्यत इत्यर्थः।

तद्धि उक्तिदूषणमिति। अनुभूतावनुत्पन्नत्वेन नित्यत्वं हि परेण प्रतिज्ञातम्। तद्विहाय भावत्वविशिष्टानुत्पन्नत्वेन साध्यत इति हेत्वन्तरपरिग्रहे प्रतिज्ञान्तरमिति यद् दूषणम्, तत् उक्तिदूषणम्। व्यभिचारस्तु अर्थ (वस्तु) दूषणम। अतस्तदेव तर्ककुशलैरुद्भावनार्हमिति भावः। अस्य विशेषणस्य व्याप्त्यभावादिति। एवं हि वदता पारमार्थिकविकाराभावः साध्य इत्युक्तं भवति। ततश्च पारमार्थिक-विकाररूपसाध्याभावस्योत्पत्तिरूपस्य साधनाभावस्य च व्याप्तिग्रहस्थानस्याभावाद्व्याप्यत्वासिद्धिरित्यर्थः। एतच्चोत्तरत्र स्पष्टम्।

( अनुभूत्यविभागत्वनिरासः )

तस्यापारमार्थ्ये विशेषणवैयर्थ्यादिति। 'अनुत्पन्नत्वात् परमार्थविभाग-शून्या' इत्यत्र परमार्थविशेषणस्य पूर्वोक्तरीत्या व्याप्यत्वासिद्धिसंपादकत्वादित्यर्थः। न तु, 'मिथ्याभूत'इति विशेषणस्येति मन्तव्यम्, तस्याविशेषणत्वात्। तुल्यन्याय-तया दर्शनभेदोऽपि सिद्ध इत्यर्थ इति। ननु—'दृश्यभेदसमर्थनेन दर्शनभेदोऽपि समर्थित एव, छेद्यभेदात् छेदनभेदवत्' इति कर्मभेदस्य क्रियाभेदहेतुत्वे प्रतीयमाने किमिति तत् परित्यज्य तुल्यन्यायतयेति व्याख्यानमिति चेत्—सत्यम्, एकस्मिन् समूहालम्बने दृश्यभेदसत्त्वेऽपि दर्शनभेदाभावात् तस्य प्रधानयुक्तित्वासंभवात्, छेद्यभेदात् छेदनभेदवदित्यस्य शङ्कान्तरपरिहारार्थत्वरूपयुक्त्यन्तरत्वाय एवं व्या-ख्यातमिति द्रष्टव्यम्। संयोगादेरपि संबन्धिव्यङ्ग्यत्वमात्रेणेति। संबन्धि-व्यङ्ग्यभेदवत्त्वमात्रेणेत्यर्थः। संबन्धी हि द्वेधेति। भेदव्यञ्जकः संबन्धीत्यर्थः; तस्यैव प्रस्तुतत्वात्। इतरथा प्रकृतानुपयुक्तत्वप्रसङ्गात्। संबन्धिव्यङ्ग्यभेदमपि

वस्तु द्विविधम्, सम्बन्ध्यधीनसत्ताकमताद्दशं चेति । पूर्वस्य तु स्वतो भेद एव, उत्तरस्त्वौपाधिक इति भावः ।

**साध्यव्यावृत्तावपि साधनाव्यावृत्तत्वलक्षणानियतत्वमात्रमिति** । साध्याभाववद्वृत्तित्वलक्षणानियतत्वमात्रमेव । न तु पक्षत्रयवृत्तित्वलक्षणम् । व्यतिरेक्यनुमाने सपक्षस्याभावात् अनैकान्तिकमित्यस्यानियतमिति व्याख्यानं युज्यत इति भावः । **न तु पराभ्युपगमा**दिति । ननु, " आनन्दो विषयानुभवो नित्यत्वं चेति सन्ति धर्माः । ते चापृथक्त्वेऽपि पृथगिवावभासन्ते " इति परैर्नित्यत्वादीनां भावरूपाणामेव ब्रह्मस्वरूपत्वमभ्युपेतमिति चेत् — न । तत्र नित्यत्वादेः कालानवच्छिन्नत्वादिरूपत्वसंभवादिति भावः । **उभयत्रानुगतप्रकाश**शब्दार्थमाहेति । **उभयत्र** चिदचितोरित्यर्थः । 'ज्ञानं प्रकाशते, घटः प्रकाशते' इति व्यवहारसाम्यादुभयसाधारण्यमिति भावः । **स्वव्यवहारसामग्र्यन्तर्भूतज्ञान**वत्त्वमिति । स्वव्यवहारानुगुणज्ञानविषयत्वमित्यर्थः । न चास्मिन् पक्षेऽनुगमः; ज्ञानावेद्यत्वतदन्यान्यत्वेनानुगमसंभवात् । एतदस्वरसादेवाह — **यद्वा एवं चाहुरि**ति । सर्वत्र व्यवहारप्रतिसंबन्धित्वमेवानुगतं प्रकाशशब्दार्थः । तत्तु द्वेधा — कचित् ज्ञानविषयत्वात्, कचित्तदभेदादिति भावः । अत्र **चिदचिदशेषपदार्थसाधारणं व्यवहारानुगुण्य**मिति भाष्यं चिदचिदशेषपदार्थनिष्ठं स्वव्यवहारानुगुण्यमिति व्याख्याय चिदचिदशेषपदार्थविषयकव्यवहारानुगुण्यं चिद्रूपमेव प्रकाशशब्दार्थ इति व्याचष्टे-**यद्वा ज्ञानगतप्रकाशे**ति । **व्यवहारप्रतिसंबन्धित्वं प्रति हेतुत्वरूप**मिति । व्यवहारहेतुत्वरूपमित्यर्थः । व्यवहर्तव्यत्वमुभयसाधारणम् । व्यवहारहेतुत्वं तु ज्ञानासाधारणमिति भावः । **प्रत्यक्त्वानुकूलत्वे**ति । प्रत्यक्त्वानुकूलत्वैकत्वविशिष्टस्वव्यवहारं प्रतीत्यर्थः ।

**सदकारणकत्वं च नित्यत्वं प्रसिद्ध**मिति । सत्त्वे सति अकारणकत्वमित्यर्थः । सत्त्वे सतीति विशेषणमसति प्रागभावे चातिव्याप्तिवारणार्थमिति द्रष्टव्यम् । **अस्ति चेत् पक्षपातः स्या**दिति । अस्मत्पक्षपातः स्यादित्यर्थः । **प्रतीतिश्चेत् कस्यचि**दिति । साश्रया सकर्मिका च वक्तव्येत्यर्थः । ननु भाष्यानुगुण्येन सिद्धिश्चेत् कस्यचित् कंचित् प्रतीति वक्तव्ये, **प्रतीतिश्चे**दिति वदतः कोऽभिप्राय इति चेत् — उच्यते — सिद्धेरकर्मकतया सिद्धिश्चेत् सकर्मिका स्यादित्युक्ते-

रयोगात् । किंच सिद्धिश्चेत् कस्यचित् क (किं) चित्प्रतीत्युक्ते घटस्य सिद्धिर्देवदत्तं प्रतीति वक्तव्यम् । घटो देवदत्तं प्रति सिध्यतीति हि वक्तुमुचितम् । न तु देवदत्तो घटं प्रति सिध्यतीति । ततश्च 'कस्यचित् पुरुषस्य किंचिदर्थजातं प्रति सिद्धिरूपतया' इत्युत्तरभाष्यविरोधापत्तिः । अतः सिद्धिशब्दः प्रतीतिमात्रपर इति प्रदर्शनार्थं सकर्मकप्रतीतिशब्दो व्यवहृत इति द्रष्टव्यम । ननु भाष्ये संविच्चेत् कस्यचित् कंचित् प्रत्येव भवतीति वक्तुं सुशकत्वात् सिध्यति चेदित्येवं प्रणाड्या प्रतीतेः सिद्धित्वसमर्थनपुरस्कारेण दूषणे न हेतुं पश्याम इति चेत् — न — तस्योक्तिमात्रभेदरूपत्वेनादोषात् । कस्यचिदित्युक्तज्ञात्रपेक्षाप्रतिक्षेपं शङ्कत इति । कस्येति निर्दिष्टसिद्धिप्रतिसंबन्ध्यपेक्षाप्रतिक्षेपं शङ्कत इत्यर्थः । आत्मानं प्रतीत्युत्तरग्रन्थानुसारात् आत्मन इति चतुर्थीमभिप्रेत्याह — आत्मानं प्रतीति । यद्यपि कस्य सिद्धिप्रतिसंबन्धिन इत्यपेक्षायामात्मन इत्युक्ते आत्मा सिद्धिप्रतिसंबन्धीत्यर्थलाभात् तदर्थमात्मानं प्रतीति न व्याख्येयम्। किंच कस्येत्यस्योत्तरं षष्ठ्यन्तमेव भवितुमर्हति, न द्वितीयान्तम्—तथापि स्पष्टार्थमुक्तमिति द्रष्टव्यम् । आत्मशब्दः स्ववाचीति । आत्मशब्दस्य ज्ञातृत्वलक्षणसिद्धिप्रतिसंबन्धिपरत्वे कः सिद्धिप्रतिसंबन्धीति प्रश्नस्य सिद्धिप्रतिसंबन्धीत्युत्तरमसंगतं स्यात् । अतोऽन्यप्रतिद्वन्द्विपर इति भावः । न चार्थजातं प्रति सिद्धिरूपस्य कथमात्मानं प्रत्यपि सिद्धिरूपत्वमिति वाच्यम् , एकस्य प्रतिसंबन्धितया प्रतिशब्दार्थीभूतलक्षणत्वम् , अपरस्य विषयतया लक्षणत्वमिति 'आत्मानं प्रति, अर्थजातं प्रति' इति च सुवचमिति द्रष्टव्यम् । सिद्धिप्रतिसंबन्ध्यात्मा क इति । आत्मशब्दस्य स्वपरत्वेन व्याख्याततया तदंशस्याक्षेप्तुमशक्यत्वात् सिद्धिप्रतिसंबन्धित्वमात्मशब्दनिर्दिष्टस्य स्वस्य कथमित्यर्थः । स्वस्यैव स्वप्रतिसंबन्धित्वे विरोधादिति भावः । न त्वात्मत्वमप्याक्षेप्यकोटिप्रविष्टमिति द्रष्टव्यम् ।

(संविदात्मत्वनिरासः)

संविदात्मभावस्येति । अत्रात्मशब्दः सिद्धिप्रतिसंबन्धिपरः; न तु स्वपरः; अन्यत्वप्रतिसंबन्धित्वस्योपपादननिरपेक्षत्वादिति द्रष्टव्यम् । धर्मधर्मिभावेति । अतो निष्प्रकारकज्ञानस्य नावकाश इति भावः । इह किमर्थ इति । किमुत्पत्तिवाची, उत

ज्ञप्तिवाचीत्यर्थः । **कर्तुरपि प्रत्यभिज्ञाविषयत्वादिति** । ननु 'पूर्वं मयानुभूतो यः, स एवायम्' इति प्रत्यभिज्ञया पूर्वानुभूतविषयाभेदस्य पुरोवर्तिनि सिद्धावपि कथमनेनानुभवितृभेदसिद्धिः ? तदानीमनुभवितुश्च मदर्थस्य, इदानीमनुभवितुश्च मदर्थस्याभेदाविषयत्वेन भेदेऽप्यस्याः प्रतीतेः संभवात् । न चान्यानुभूतेऽन्यस्मरणासंभवादभेदसिद्धिरिति वाच्यम्, तर्ह्यभेदस्तया युक्त्या सिध्यतु ; न तु प्रत्यभिज्ञाप्रत्यक्षेण । यदि च तावन्मात्र एव संरंभस्तर्हि वक्ष्यमाणायाः प्रत्यभिज्ञाश्रयत्वयुक्तेरेव प्रमाणीकरणसंभवात् प्रत्यभिज्ञाविषयत्वस्य प्रमाणीकरणमयुक्तमिति चेत्—न ; 'यः पूर्वं मयानुभूतः, स एवायमर्थस्तेनैव मयानुभूयते' इति प्रत्यभिज्ञायाः प्रमाणीकरणसंभवादित्यत्र तात्पर्यात् । **उत्पत्तिस्थिती सिद्धे** इति । 'जानामि' इति ज्ञानानुकूलकृतिमत्त्वप्रतीतेरुत्पत्तिप्रतीतिः, लटा धात्वर्थवर्तमानत्वप्रतीतेः स्थितिप्रतीतिरिति भावः । ननु 'जानामि' इत्यादौ धात्वर्थाश्रयत्वमेव प्रतीयते ; न तु तदनुकूलकृतिमत्त्वम् । अत एव नित्यज्ञानाश्रयस्यापि परमात्मनः "वेदाहं समतीतानि" इति ज्ञानाश्रयत्वप्रतीतिरिति यद्यपरितोषः, तर्हि 'मम ज्ञानमुत्पन्नम्' इति प्रतीतिरुत्पत्तौ प्रमाणीकरणीया । **ज्ञातुरेव ममेत्युक्तिरिति** । तृचः कर्तृत्वार्थकत्वेनानन्तरकालोत्पन्नत्वप्रतीतेरिति भावः । **निरोधो नाम पटसंविदिति** । यद्यप्युत्पत्तेः प्रथमक्षणयोगित्वरूपत्ववत् विनाशस्य चरमक्षणयोगित्वमपि सुवचम् — तथाप्युत्तरोत्तरावस्थासंबन्धस्यैव पूर्वपूर्वावस्थाविनाशत्वमिति द्रष्टव्यम् ।

**आत्मा हि प्रतिसंधत्ते** इति । न त्वन्तःकरणमिति शेषः । अनुभूतेरात्मत्वे अनुभवितृभेदप्रतिसंधानमनुभूतेः कथं स्यादिति भावः । **उभयाभ्युपेता संविदेवेति** भाष्ये ज्ञातुरुभयानभिमतत्वं प्रतीयते । मृषावादिभिश्च तदभ्युपगमात्तदीयशङ्कापरिहारपरत्वमयुक्तमिति ज्ञातृस्वरूपानभ्युपगन्तृबौद्धैकदेशिमतं प्रसङ्गान्निराकरोतीत्याह — **बौद्धैकदेशिभिरिति** । **उपलब्धिपराहतत्वात्संविदात्मत्वमनुपपन्नमिति** । संविद एवात्मत्वम्, तद्व्यतिरिक्तस्यात्मत्वाभाव इत्येतस्य तद्व्यतिरिक्तोपलब्धिपराहितत्वादित्यर्थः । अत एव—अस्तु ज्ञातुरप्युपलम्भः । नैतावता संविदात्मत्वमुप[1]लब्धिपराहतम् । न हि संविदनात्मेति कश्चिदुपलम्भोऽस्तीति चोद्यं पराकृतं

१. संविदात्मत्वमनुपलब्धिपराहतम् । नहि संविदात्मेति— पा०

वेदितव्यम् । एतादृशक्लिष्टार्थाश्रयणमसङ्गतिपरिहाराय मृषावादिशङ्कापरिहारपरतया व्याचष्टे — **यद्वा संविदः परमार्थत्वेनेति** ।

( अहमर्थात्मत्वसमर्थनम् )

**असत्प्रत्ययत्वेन पराभ्युपगत इति** । मृषावादिमतेऽपि 'अहम्' इति प्रत्ययरूपेऽस्मत्प्रत्यये चिदचिदंशद्वयमानाभ्युपगमाद्यसङ्गतेऽपि न दोष इति द्रष्टव्यम् । **अन्वयित्रयमिति** । यद्यपि 'अनुभूतिरात्मा प्रत्यक्त्वात्', 'अनुभूतिः प्रतीची स्वयंप्रकाशत्वात्', अनुभूतिः स्वप्रकाशा, अनुभूतित्वात्' इति व्यतिरेकिकत्रयवत् 'अहमर्थो नात्मा पराक्त्वात्' 'अहमर्थः पराक् ज्ञानाधीनप्रकाशत्वात्' 'अहमर्थो ज्ञानाधीनप्रकाशः चिद्व्यतिरिक्तत्वात्' इत्येवमुत्तरोत्तरस्य पूर्वपूर्वसाधकतयोपन्यास एव सुश्लिष्टः—तथापि साधनकक्षावैचित्र्योपदर्शनार्थमेवमुक्तमिति द्रष्टव्यम् । भाष्ये — **चिन्मात्रातिरेकी युष्मदर्थ एवेति** । **युष्मदर्थ एव** अनात्मेत्यर्थः । 'स आत्मा' इत्यस्य प्रतिनिर्देशरूपत्वादिति द्रष्टव्यम् । **इतरानुमानचतुष्टयमिति** । 'अनुभूतेश्चित्त्वात् स्वप्रकाशत्वम्', 'अहमर्थस्याचित्त्वादस्वप्रकाशत्वम्' इत्यनुमानद्वयं विहाय, 'अनुभूतेः स्वप्रकाशत्वात् प्रत्यक्त्वम्', 'प्रत्यक्त्वाच्चात्मत्वम्' इत्यनुमानद्वयस्य च, 'अहमर्थस्यास्वप्रकाशत्वात् पराक्त्वम्', 'ततश्चानात्मत्वम्' इत्यनुमानद्वयस्य च दूषणमाहेत्यर्थः । ननु 'अहं जानामि' इत्यत्र ज्ञानशेषिविलक्षण-प्रत्यक्त्वस्य कथं भानमित्याशङ्क्याह—**धर्मितयावभासादेवेति** । ननु 'अहम्' इत्यत्र चिदंशोऽपि भासत इति वदन्तं प्रति नेदमुत्तरम्, अंशद्वयेऽपि बुद्धिज्ञाना-श्रयत्वप्रतीतेरिति चेत्—न; 'अहम्' इत्यत्रांशद्वयानुपलम्भात् । उपलम्भे च चितोऽप्यहमर्थतया अहमर्थानात्मत्वोक्तिर्विरुध्येतेति भावः ।

**प्रत्यक्त्वे विपरीतसाधकं चेत्याहेति**। अहमर्थात्मत्वसाधकमित्यर्थः । **स्वयंप्रकाशत्वहेतोः सत्प्रतिपक्षत्वं चेति** । तुल्यबलत्वाभावात् बाधितार्थत्वमित्यत्र तात्पर्यम् । इतरथा प्रत्यक्त्वहेतोरसिद्धिदार्ढ्यमिति पूर्वग्रन्थविरोधात् । यद्वा विशेष(ष) दर्शनाभिप्रायेण सत्प्रतिपक्षतोक्तिरिति द्रष्टव्यम् । **संवित्प्रत्यक्त्वहेतोरसिद्धिश्च सिद्धेति** । पूर्वमहमर्थव्यतिरिक्तत्वहेतुना असिद्धिरुक्ता; अधुना अहंप्रत्ययाविषयत्वहेतुनेति भेदः । **यद्वा संवित्प्रत्यक्त्वसाधकस्वप्रकाशत्वहेतोर्व्याप्यत्वासिद्धिश्च**

सिद्धेत्यर्थः । अतो न पौनरुक्त्यप्रसङ्ग इति द्रष्टव्यम् । **यत्संबन्धित्वेन दुःखज्ञानमिति** । उद्वेगहेतुर्भवतीति शेषः । **न हि शास्त्रं श्रवणादिनिरपेक्षमिति** । यद्यपि कृतसाङ्गाध्ययनस्य शब्दोऽर्थप्रत्यायको भवत्येव, तथाप्यनुष्ठानपर्यवसायिप्रमितिजनकत्वं शास्त्रस्य श्रवणादिसापेक्षम् । श्रवणं च बुभुत्साधीनम् । सा च पुरुषार्थत्वपर्यवसायित्वाधीनेति भावः । **ज्ञातव्यस्येति** । मुमुक्षुज्ञातव्यस्येत्यर्थः । **अहमर्थस्य नित्यत्वकथनमपीति** । यद्यपि, "नात्मा श्रुतेः" इत्यत्राहमर्थस्य नित्यत्वं न साधितम्, अपि त्वात्मनः — तथापि तस्यात्मत्वं सिद्धमित्यभिमानेन तथोक्तमिति द्रष्टव्यम् ।

## ( ज्ञानस्वरूपत्वज्ञानगुणकत्वे )

**तद्व्यतिरिक्तत्वादहमर्थ** इति । भाष्ये **न चासौ ज्ञाताहमर्थः** इत्यत्र ज्ञातेति हेतुगर्भं विशेषणम् । वक्ष्यति च - **न हि दीपादेः स्वप्रभाबलनिर्भासितत्वेनाप्रकाशत्वमिति** । ततश्च स्वधर्मभूतज्ञानप्रभाबलनिर्भास्यतया कथं ज्ञातुरनन्यप्रकाशत्वमित्याक्षिप्यानात्मत्वसाधकहेतोरन्याधीनप्रकाशत्वस्यासिद्धिमभिप्रयन्नाहेत्यर्थः । **तच्च कथमित्यत्राहेति** । प्रकाशाश्रयस्य तस्यानुभूत्यादिशब्दितसकर्मकसकर्तृकज्ञानरूपप्रकाशत्वं कथमित्याक्षेपाभिप्रायः । **चैतन्यं ज्ञानत्वमिति** । व्यवहारानुगुणत्वमित्यर्थः । आत्मनि ज्ञानशब्दस्य स्वप्रकाशत्वाभिप्रायत्वात्, आत्मनि प्रयुज्यमानो ज्ञानशब्दः स्वप्रकाशे रूढ इत्युक्तत्वाच्च व्यवहारानुगुणत्वलक्षणस्वप्रकाशत्वमेव ज्ञानशब्देनेह विवक्षितम् । तच्चानुभूतिसंविदादिशब्दानभिलपनीयस्याप्यकर्मकस्याकर्तृकस्य युज्यत इति भावः । **अहमर्थस्य चैतन्यस्वभावत्व इति** । "अत्रायं पुरुषः स्वयं ज्योतिः" इत्यादिवाक्यैरनन्याधीनप्रकाशत्वलक्षणचैतन्यस्वभावत्वे प्रमाणं दर्शयिष्यन् प्रकाशगुणकस्य कथमनन्याधीनप्रकाशत्वं सजातीयान्वयदर्शनरूपयोग्यताया अभावादित्याशङ्क्य प्रकाशत्वस्वभावस्य प्रकाशगुणकत्वं दीपादौ दृष्टमिति योग्यतां प्रदर्शयतीत्यर्थः । न तु स्वप्रकाशत्वलक्षणचैतन्यस्वभावत्वमिति मन्तव्यम् । एतेन — 'अहमर्थस्य चैतन्यस्वभावत्वे श्रुतिप्रमाणं वक्ष्यन्' इति ग्रन्थपर्यालोचनायां चैतन्यस्वभावत्वमेवानन्याधीनप्रकाशत्वमिति प्रतीयते । 'यः प्रकाशस्वभावः सोऽनन्याधीनप्रकाशः' इति तर्कस्यानन्याधीनप्रकाशत्वप्रतिपादकश्रुत्यनुग्राहकत्वस्यैव युक्ततया

चैतन्यस्वभावत्वानन्याधीनप्रकाशत्वयोरैक्यावश्यंभावात् । ततश्चाहमर्थोऽनन्याधीनप्रकाशः स्वप्रकाशत्वादिति साध्यसाधनयोरविशेषः, द्वयोरपि चैतन्यस्वभावत्वरूपत्वात्—इति शङ्का परास्ता, चैतन्यस्वभावत्वस्यैकरूपत्वाभावात् । केचित्तु — अहमर्थोऽनन्याधीनप्रकाशः स्वयंप्रकाशत्वादिति पूर्वोक्तानुमाने व्याप्तिं दर्शयतीत्यपि व्याचक्षते । न च — 'तत्र स्वयंप्रकाशत्वं हेतुः, इह तु प्रकाशस्वभाव इत्युच्यते' इति वैरूप्यं शङ्क्यम्, द्वयोरप्यैक्यात् । **स्वयंप्रकाशत्वादि**त्यस्यापि प्रकाशस्वभावत्वादित्येवार्थ इति । तस्मिन्नपि व्याख्याने न दोषः । **आत्मदीपे**ति । अत्र समाहारगर्भो द्वन्द्वः । अतश्चानुवृत्तेपि न द्विवचननिर्देशानुपपत्तिरिति द्रष्टव्यम् । **यादृश**मिति । साक्षात्परंपरौदासीन्येन व्यवहारानुगुणत्वमित्यर्थः । यद्वा आत्मदीपयोर्धर्मभूतज्ञानप्रभयोरित्यर्थः । **तादृश**मिति । दीपतत्प्रभयोरौज्ज्वल्यम्, आत्मधर्मभूतज्ञानयोः स्फुरणमित्यर्थः । **साध्यवैकल्यनाशङ्क्ये**ति । इदमुपलक्षणम् - साधनवैकल्यमित्यपि द्रष्टव्यम् । **रूपितत्समवेतार्थे**ति । न च रूपितत्समवेतार्थयोः रूपापेक्षया धर्म्यन्तरत्वात्तेन कथं तद्वारणमिति वाच्यम्, धर्म्यन्तरशब्दस्य स्वाश्रयेतरद्रव्यार्थकत्वस्योत्तरग्रन्थे स्पष्टत्वात् । **चैतन्यस्वभावतेत्यादि भाष्य**मिति । यद्यपि 'यः प्रकाशस्वभावः' इत्यारभ्य तर्करूपत्वं प्रागुपन्यस्तम्, तथापि **चैतन्यस्वभावते**त्यारभ्य तर्करूपत्वेऽपि विरोधाभावादेवमुक्तमिति द्रष्टव्यम् । **ज्ञानधर्मकत्वज्ञानस्वरूपतोक्ते**रिति । हेतुसाध्ययोः प्रदर्शनादिति भावः ।

**ननु कर्पूरादीनां दूरोपलब्धगन्धाना**मिति [दूरोपलब्धगन्धानामिति] हेतुगर्भविशेषणम् । कर्पूरादीनां दूरोपलब्धगन्धत्वादित्यर्थः । अतश्च यत् कैश्चिदुक्तम्— "दूरोपलब्धगन्धानामित्येतत् प्रक्षिप्तम् । तथाहि सति समुद्रसंपुटादीति ग्रन्थस्याप्रसक्तप्रतिषेधतापसङ्गात्" इति—तन्निरस्तम् । अत्र समुद्रसंपुटयोः सामान्यविशेषरूपेणार्थभेदसत्त्वान्न पौनरुक्त्यशङ्का । **उभयवादिसंप्रतिपन्नानामेवे**ति । उपलभ्यमानगन्धाश्रयाणामेषामेवावयवानां निश्चलतयावस्थितिमात्रमेव लघु ; न तु—तेषामवयवानां संयोगविशेषरूपउपनिपातः, तद्धेतुकधर्म्यन्तरोत्पत्तिः, तदुत्तरक्षणे विशरणम्, तदधीनधर्मिनाशः, पुनरपि तदुत्तरक्षणे पुञ्जीभावेन धर्म्यन्तरोत्पत्तिरित्यादिकल्पनम् । अतो न गौरवमिति भावः । **अक्रिति**रिति । निर्व्यापारः, निश्चल

इत्यर्थः । **वायुतेजःप्रभृतिभिः संबन्धा**दिति । रश्मिमत्त्वे तेज संबन्ध एव प्रयोजक इति द्रष्टव्यम् । **गत्वगानां रश्मीना**मिति । कपालं निर्भिद्य सलिले प्रविष्टानामपि ततोऽचिरादूर्ध्वनिर्गमनमेव स्यात्; न तु तत्र विश्रम इति भावः । **अग्न्यवयवसंक्रान्त्यैवौष्ण्योपलम्भ** इति । विशरणमन्तरेणैवाग्निसहचरिताग्न्यवयवसंक्रान्त्यैवौष्ण्योपलम्भ इत्यर्थः; 'आतपतप्तेष्वपि न किरणविशरणादवयवसंक्रम' इत्युत्तरग्रन्थानुसारात् । केचित्तु — अग्नितप्ते विशीर्णावयवसंक्रमणमभ्युपेयम् । अत एव हि सिद्धं नः समीहितम्, तेषामेव विशीर्णावयवानां प्रभात्वावगमादित्याशङ्क्य निषिध्यते 'सलिलादौ सङ्क्रामन्तः' इत्युत्तरग्रन्थेनेति वर्णयन्ति । **तदुपात्तमुक्ताग्न्यवयवकार्यमिति प्रतीयत** इति । अत्र केचित् — सौररश्मीनां संतापहेतुत्वस्याग्न्यवयवद्वारकत्वेऽग्नीनां संतापनहेतुत्वमादित्यरश्म्यवयवानुप्रवेशकृतमिति किं न स्यात्? उभयोरपि परस्परानुप्रवेशस्य प्रामाणिकत्वात् । तस्मादप्युभयोरप्युष्णत्वाविशेषात् संतापहेतुत्वमेव वक्तव्यम् । न त्वन्यतरस्यान्यतरद्वारकत्वम् । न हि 'वायुर्धूलिं वर्षति शोषयति' इत्युक्ते शोषणस्यापि किंचिद् द्वारतयापेक्षितम् । न चाग्नीनां दिवापि तापहेतुत्वदर्शनात् तदा सूर्यरश्म्यवयवानुप्रवेशाभावात् स्वत एवाग्नेस्तापहेतुत्वमिति वक्तुं शक्यम्, "रश्म्यनुसारी" इति सूत्रोक्तन्यायेन रात्रौ सूर्यरश्मीनां संतापहेतुत्वस्य सिद्धतया तदानीमग्न्यनुप्रवेशाभावात् संतापहेतुत्वं न स्यादिति साम्यात् । अग्न्यवयवादीनामनुप्रवेशात् सौरकिरणानामनुप्रवेशे दोषाभावाच्चेत्यपि द्रष्टव्यम् (वदन्ति ?) ।

**ननु प्लोषणद्रवीभूते**ति । अत्र केचित् — अयं ग्रन्थः ऊर्ध्वमुद्गम्येति ऊर्ध्वगमनतिर्यग्गमनस्वभावविरोधप्रदर्शकभाष्यस्यावतारिका; न तु विशरणपिण्डीभावस्वभावविरोधप्रदर्शकस्य । **न हि विशरणस्वभावे**ति पूर्वभाष्यस्य तत्पूर्वमेवावतारितत्वात् । अतश्च **ऊर्ध्वमुद्गम्येती**ति प्रतीकग्रहणं युक्तमिति वदन्ति । **ऋजुदेश एव छायायोगादवगम्यत** इति । यदि प्रभाया ऋजुप्रसरणनियमो न स्यात्, तदा दीपप्रभाव्यवधायकस्तम्भान्तरितान्धकारस्थले प्रभाया वक्रमार्गेण वायुनीतपांसूनामिव गमनप्रसङ्गेन तत्रत्यान्धकारेऽप्याजेवं न स्यादित्यर्थः । ननु तिरोधायकपदार्थं प्रति ऋजुप्रदेश एव छायायोगे नियमो नास्ति; तथा हि सति व्यवधायकस्य पदार्थस्य

दीपसंनिकृष्टत्वे पृथ्वग्रा सूक्ष्ममूला छाया नोपलभ्येतेत्यत्राह - **छायावैपुल्यमिति।** छायापृथ्वग्रत्वं निरुध्यमानरश्मीनां पृथ्वग्रसूक्ष्ममूलत्वनिबन्धनमित्यर्थः। अयं भावः- यावद्देशप्रसरणशीलाश्चवन्तो रश्मयो निरुध्यन्ते, तावद्देशपरस्रुता छाया भवतीति। **उत्पत्तिविनाशसामग्रीभ्यामिति।** अयमिह नुमानक्रमः — द्वितीयादिवर्त्यवयवाग्नि-संयोगो दीपोत्पादकः वर्त्यवयवाग्निसंयोगत्वात्, प्रथमवर्त्यवयवाग्निसंयोगवत्। प्रथम-वर्तिकावयवनाशो दीपनाशहेतुः, वर्तिकावयवनाशत्वात् चरमवर्तिकावयवनाशवदिति। भाष्ये **औष्ण्याधिक्यमित्याद्युपलब्धिव्यवस्थाभ्यामिति।** इदमुपलक्षणम् — औष्ण्याधिक्यं न प्रभाधर्मः, अपितूद्भूतस्पर्शानां तत्सहचरितानां तेजोवयवानां धर्म इत्यपि सुवचमिति द्रष्टव्यम्। **अनेन वक्ष्यमाणश्रुतिवाक्य इति।** ननु ज्ञानादिव्यपदेशस्य स्वप्रकाशत्वमादाय निर्वाहः। स्वप्रकाशत्वस्य तु चैतन्यस्वभावत्व-मादाय निर्वाहः; चैतन्यस्वभावता हि स्वप्रकाशतेत्युपपादनात्; अतोऽन्योन्याश्रय इति चेत् — न; चैतन्यस्वभावत्वमित्यत्र चैतन्यलक्षणज्ञानत्वं व्यवहारानुगुणत्वमात्र-मेव, न तु संविदनुभूत्यवगत्यादिशब्दप्रवृत्तिनिमित्तत्वमभिप्रेत्येति पूर्वोक्तत्वाददोषात्।

**व्यतिरेकशब्देन निःशेषग्रहणं कृतमिति।** अन्तरङ्गः कृत्स्नः सैन्धवघन इत्यपेक्षया बहिरङ्गव्यतिरिक्तः, कृत्स्नः सैन्धवघन इत्युक्ते, असंकुचित-सर्वान्तरङ्गप्रतीतिरनुभवसिद्धेति भावः।

**स्वसंबन्धितया प्रतीतमिति।** स्वसंबन्धाप्रतीतौ स्वसंबन्धितया अप्रतीतमित्यन्वयः। **ज्ञानान्तरवेद्यत्वं स्यादिति।** ज्ञातृज्ञानसंबन्धविषयक-ज्ञानस्य संबन्धिभूतज्ञातृज्ञानविषयकत्वावश्यंभावादिति भावः। नन्वेवं ज्ञानत्व-वैशिष्ट्यमात्मनि च प्रत्यक्त्वानुकूलत्वैकत्ववैशिष्ट्यं कथं भायात्? वैशिष्ट्यानु-योगिनः स्वस्य स्वाविषयत्वासंभवादित्यपि वक्तुं शक्यमिति चेत्, तस्या-प्याक्षेपस्येष्टत्वात्। **संबन्धविषयकज्ञानेन सह ज्ञातृसंबन्धस्यापीति।** ज्ञातृ-व्यवसायसंबन्धविषयकानुव्यवसायेन सह ज्ञातुः संबन्धस्यापि वेद्यत्वायानुव्यवसायानु-व्यवसायः स्वीकर्तव्य इत्यर्थः। **अहमर्थो हि विशेष्यैकस्वभावः स्वात्मान-मुपस्थापयतीति।** न च प्रत्यक्त्वानुकूलत्वैकत्वविशिष्टात्मधर्मग्रहे आत्मनः सामर्थ्या-भावात् कथं विशेष्यत्वस्य ग्रहणमिति वाच्यम्, विशेष्यत्वस्य स्वभावातिरिक्तत्वेन

ग्रहणसंभवात् । न च विशेषणत्वविशेष्यत्वस्वभावग्रहणेऽपि परस्परनिरूपितत्वाग्रहात् कथं विशिष्टव्यवहार इति वाच्यम्, परस्परनिरूपितत्वासंसर्गाग्रहस्यैव संसर्गग्रहकार्यजनकत्वात्, तस्यापि तदुभयस्वरूपत्वाद्वा ग्रहणोपपत्तेः । ननु प्रत्यक्पदजन्योपस्थितेरात्मविषयत्वं वक्तव्यम्, तत्र प्रकाशद्वयस्याभ्युपगन्तव्यत्वात् । तत्रावेद्यत्वलक्षणस्य स्वप्रकाशत्वस्यास्मदिष्टत्वाभावात् प्रकाशद्वयसत्त्वे न दोष इत्येव परिहर्तव्यमिति चेत्—सत्यम्, 'घटमहं जानामि' इति ज्ञानं चक्षुरिन्द्रियजन्यम्; न तु नैयायिकमत इवानुव्यवसायरूपं मनोजन्यम् । न हि चक्षुर्जन्यज्ञान आत्मनो विषयत्वं संभवति । अतोऽहमित्येव धर्मी स्फुरति । घटज्ञानांशः स्वप्रकाशतया भासत इत्येव वक्तुमुचितमिति भावः । **जडत्वप्रयुक्तं हि तदिति** । जडस्थलीयसहावभास एवैकज्ञानगम्यत्वप्रयोजक इत्यर्थः ।

**व्युत्पत्तिनिमित्तमस्त्विति** । यथा 'वासस्वी देवदत्तपदवाच्यः' इत्यत्र वासो देवदत्तपदव्युत्पत्तिदशायां निमित्तमेव, न तु शक्यकोटिप्रविष्टम्—तथेत्यर्थः । **धर्मभूतज्ञाने सावकाशोऽस्मन्मत** इति । ननु परमतेऽपि 'ज्ञायतेऽनेन' इति व्युत्पत्त्या अन्तःकरणवृत्तिर्ज्ञानमिति वृत्तिज्ञाने संबन्धिशब्दः सावकाश इति चेत्—न । जडायामन्तःकरणवृत्तौ ज्ञानत्वोक्तेरसंगतत्वात्; भावप्रत्ययान्तज्ञानपदवाच्य एव संबन्धित्वव्यवहाराच्चेति भावः ।

**उत स्वस्मै स्वयंप्रकाशमानत्वमिति** । अत्र केचित्—स्वस्मै भासमानत्वमिति तृतीये विकल्पे संविदि असिद्ध्या दूषिते सति स्वस्मै स्वयंभासमानत्वमिति चतुर्थविकल्पस्योत्थानासंभवेन, 'तस्मात् स्वात्मानं प्रति स्वसत्तयैव सिध्यन् अजडोऽहमर्थ एवात्मा' इति भाष्यस्य चतुर्थविकल्पदूषणत्वं न युक्तम् । तस्मादित्यादिभाष्यस्य पूर्वप्रस्तुतविकल्पदूषणोपसंहारे स्वरसस्य पक्षान्तरप्रतिक्षेपकपरतया व्याख्यानमपि क्लिष्टम् । तथा तस्यैव भाष्यस्य ज्ञानकर्मतामन्तरेण व्यवहारानुगुणत्वं ज्ञानान्तरनिरपेक्षप्रकाशत्वमित्येवंविधपञ्चमपक्षविकल्पद्वयनिरसनपरत्ववर्णनमपि क्लिष्टम् । न हि 'तस्मात् स्वात्मानं प्रति स्वसत्तयैव सिध्यन्नजडोऽहमर्थ एवात्मा' इति भाष्यं ज्ञानकर्मतामन्तरेण व्यवहारानुगुणत्वरूपपञ्चमपक्षविकल्पस्य दूषणीभवितुमर्हति । तस्मिन् हि पक्षेऽहमर्थ एव व्यभिचार उद्भाव्यः, न त्वहमर्थ एवात्मेति । ज्ञानकर्मतामन्तरेण व्यवहारा-

नुगुणत्वस्याहमर्थ इव संविद्यपि सत्त्वेनाहमर्थोऽप्यात्मेत्येव वक्तुमुचिततया 'अहमर्थ एवात्मा' इति वक्तुमनुचितत्वात्। ततश्च स्वसत्ताप्रयुक्तप्रकाशत्वं वा, अव्यभिचरितप्रकाशसत्ताकत्वं वा, तत्त्वे सति स्वस्मै भासमानत्वं वा, अन्यसंबन्धानपेक्षप्रकाशत्वं वेति चतुर्धा विकल्पोऽभिमतः। भाष्येऽपि तथैव प्रतीयत इति वदन्ति।

**प्रत्यक्षबाधः सर्वसाधारणं दूषणम्**िति। 'अहम्' इति भासमानस्यैवात्मत्वेन तस्य ज्ञानाश्रयतया ज्ञानभेदेनैव प्रतीतेरिति भावः। यद्वा 'अहं जानामि' इति तस्याहमर्थधर्मत्वग्राहिप्रमाणबाध इत्यर्थः। **अनैकान्त्यविरोधयोरन्यतरेणे**ति। स्वदर्शने पक्षत्रयवृत्तित्वरूपमनैकान्त्यम्; परदर्शने पक्षविपक्षमात्रवृत्तित्वरूपविरोध इत्यर्थः। **न व्यभिचरति प्रकाशो यस्य सत्ता**मिति। अत्र केचित् — न व्यभिचरति प्रकाशं यस्य सत्तेति पाठः समीचीनः, तस्यैवार्थस्यौचितत्वात्। सत्ताया एव प्रकाशव्याप्यत्वस्य विवक्षितत्वात्, भाष्यस्थाव्यभिचरितशब्दस्य कर्मणि क्तप्रत्ययान्तत्वेन कर्तरि क्तप्रत्ययान्तत्वाभावादिति वदन्ति।

**परस्मै भासमानत्वमुपपादय**तीति। 'अहं सुखी' इत्यत्राहमर्थस्य सुखशेषित्वभानात् सुखस्यैव प्रकाशरूपत्वात् सुखप्रकाशशेषित्वलक्षणं प्रकाशफलित्वमपि 'अहं सुखी' इत्यत्र भासत इति भावः।

**अथाहमर्थस्य भ्रान्तिसिद्धत्व**मिति। न च भाष्ये **ज्ञातृतयावभासते** इति ज्ञातुरेव भ्रान्तिसिद्धत्वं प्रतीयते, नाहमर्थस्येति वाच्यम् — अहमर्थस्यैव ज्ञातृत्वात्। अत एव परिहारभाष्ये **अनुभविताहमर्थः प्रतीयते अनुभूतिरहमि**तीत्युक्तम्। भाष्ये—**अनुभूतिः परमार्थतो निर्विषया निराश्रये**ति। अत्राश्रयविषयशब्दौ भावप्रधानौ। ज्ञानाश्रयत्वज्ञानविषयत्वशून्येत्यर्थः। "सा ज्ञातृता भ्रान्तिसिद्धा रजततेव शुक्तिशकलस्य," "अनुभूतेः स्वात्मनि कर्तृत्वायोगा" दिति पूर्वपक्षभाष्यानुरोधात्। अत एव ज्ञातृत्वस्य भ्रान्तिसिद्धत्वोपपादने परमार्थतो विषयाश्रयशून्यविषयत्वोपपादनमनुपयुक्तमिति शङ्काऽपि निरस्ता। अत्र च ज्ञानविषयत्वशून्यत्वोपपादनं दृष्टान्ततया, न प्रकृतोपयोगितयेति द्रष्टव्यम्। यद्वा **निराश्रया** तादात्म्यसंबन्धेनाध्यस्यमानज्ञातृशून्येत्यर्थः। अत एव **अनुभवसामानाधिकरण्येनाहमर्थः प्रतीयेते**ति ग्रन्थस्वारस्यं द्रष्टव्यम्। तत मे

**संबन्धमात्राध्यास** इति । येनाहमर्थवैयधिकरण्येन प्रतीतिः 'दर्पणे मुखम्' इतिवदुपपद्येतेति भावः । **प्रभा मणिसामानाधिकरण्येनैव हि भातीति** । ननु प्रभायां प्रभाश्रयमण्यध्यासवदनुभूतावनुभूत्याश्रयाहमर्थाध्यासः कुतो न संभववेदिति चेन्—न । तत्राधिष्ठानप्रभातिरिक्तप्रभाश्रयाभेदाध्यासः संभवेत् । अनुभूतौ द्वित्वाभावान्न तथा संभवतीति भावः । **पदद्वयप्रवृत्तिनिमित्तयोरिति** । ननु मालिन्यपदप्रवृत्तिनिमित्तस्य मालिन्यत्वस्य रागपदप्रवृत्तिनिमित्तस्य रागत्वस्य च कथं दिङ्नभोवृत्तित्वम्? कथं वा "सर्वदिक्ष्वपि सैव मे" इति सर्वासु दिक्षु कामिन्यध्यासे दिक्त्वकामिनीत्वसामानाधिकरण्यमिति चेत् — न; तादृशस्थले संसर्गारोपरूपतया वैयधिकरण्येन भ्रमसंभवात् । न चात्रापि संसर्गारोपोऽस्त्विति वाच्यम, तथा हि सति 'दिक्षु कामिनी', 'दिक्षु मालिन्यम्' इतिवत् 'अनुभूतावहम' इति प्रतीतिप्रसङ्ग इति भावः । **तदधिकरणाध्यासानुदय** इति । अनुभूतित्वास्फुरणस्य भ्रमहेतुत्वं वदता अनुभूत्यस्फुरणमध्यासहेतुरित्युक्तं स्यात् । ततश्चाधिष्ठानस्फुरणरूपहेत्वभावादध्यासानुदयप्रसङ्ग इति भावः । अधिष्ठानस्फुरणस्य हेतुत्वाभावादध्यासोदयः संभवतीत्याक्षिपति — **नन्वध्यासानुदयो दुर्वच** इत । **तदप्रकाशादध्यासोदय** इति । तत्प्रकाशस्याहेतुत्वादध्यासोदय इत्यर्थः । **अप्रतिपन्नस्याधिष्ठानत्वायोगादिति** । अध्यासदशायामप्रतिपन्नस्येत्यर्थः । दूषणान्तरमाह — **विषयाश्रयशून्याया** इति । केचित्तु — **अप्रतिपन्नस्य** । सर्वथा अप्रतिपन्नस्येत्यर्थः । तदुपपादकमुत्तरवाक्यमिति वदन्ति ।

(ज्ञातृत्वस्यान्तः करणधर्मत्वनिरासः)

**ज्ञातृत्वपरश्रुतिवाक्या**दिति । "परात् परं पुरिशयं पुरुषमीक्षते", "सर्वं ह पश्यः पश्यति" इत्यदिवाक्यादित्यर्थः । **तादृशाहंकारग्रन्थिस्थमिति** । विकारिजडद्रव्यस्थमित्यर्थः; न तु विक्रियात्मकजडद्रव्यस्थमिति मन्तव्यम्, **अविक्रियस्येति** पूर्वग्रन्थानुसारात् **विकारास्पदेति** भाष्यानुगुण्याच्च । **दृश्यत्वादित्यर्थ** इति । दृश्यत्वादिति शेष इत्यर्थः । **देहात्मभेद** इति । देहस्य ज्ञातृत्वाभाव इत्यर्थः । **कचिज्ज्ञातृत्वाभावप्रयोजकस्येति** । नन्वेवं ज्ञातृत्वस्य चित्त्वप्रयोज्यत्वं स्यात् । न चेष्टापत्तिः । धर्मभूतज्ञाने ज्ञातृत्वप्रसङ्गः । न च चित्त्वमात्मत्वम्, तदभावो ज्ञातृत्वाभावप्रयोजक इति वाच्यम्, आत्मत्वज्ञातृत्वयोः प्रयोज्य-

प्रयोजकभावस्य क्वाप्यग्रहादिति चेत्—न — आत्मत्वज्ञातृत्वयोः प्रयोज्यप्रयोजकभावा- ग्रहेऽप्यात्मत्वाभावस्य ज्ञातृत्वाभावप्रयोजकत्वदर्शनादिति भावः । वस्तुतस्तु **अचेतन- त्वादीत्यत्र** तद्गुणसंविज्ञानबहुव्रीहिणा दृश्यत्वादिकमुक्तमिति ध्येयम् । **पूर्वोक्त- व्याप्तिस्थापनायेति** । 'चेतनासाधारणधर्मत्वाच्च ज्ञातृत्वस्ये'ति पूर्वोक्तव्याप्तिस्था- पनायेत्यर्थः । **न हि वयं द्रष्टृत्वादीति** । देहस्य जडत्वान्न द्रष्टृत्वम् । ततश्चानात्मत्वमिति चार्वाकं प्रति न देहात्मभेदं साधयामः । अपि त्वात्मनो दृशिस्वरूपत्वात् देहस्य चातथात्वात् देहस्यानात्मत्वमित्येव साधयाम इत्यर्थः । **द्रष्टृत्वाभावस्याचेतनत्वादि- प्रयोज्यत्व** इति । **अचेतनत्वादीत्यत्र** अतद्गुणसंविज्ञानबहुव्रीहिवशात् दृश्य- त्वस्य ग्रहणात् । '**द्रष्टृत्वाभावेऽप्यचेतनत्वादिकमि**त्युत्तरत्रापि दृश्यत्वमेव विवक्षितम् । **मृषावाद्यसाधारणेति** । यदि दृश्यस्य द्रष्टृत्वम्, तर्हि दृशित्वमपि किं न स्यात् ? यदि च कर्मणः क्रियात्वं न संभवतीत्युच्येत, तर्हि कर्मणः कर्तृत्वमपि न संभवति ; कर्मत्वकर्तृत्वक्रियात्वानां परस्परविरोधादिति भावः । यद्यपि सिद्धान्ते दृशेरपि दृश्य- त्वमभ्युपगतम्—तथापि परमतानुसारादेवमुक्तमिति द्रष्टव्यम् । **रजतप्रत्ययगोचरत्व- मात्रेणेति** । रजतप्रत्ययस्य रजतविषयत्ववत् अहंप्रत्ययोऽप्यात्मविषयः, अहंत्वमेवात्म- त्वमिति स्थितत्वात् । ततश्चाहंप्रत्ययविषयत्वं नात्मत्वबाधकम् ; प्रत्युतात्मत्वसाधकमेवेति भावः । **परमात्मन्यनात्मत्वादिप्रसङ्गश्चेदिति** । यदि परमात्मा कर्ता स्यात्, अनात्मा स्यादित्यापादने, तस्मान्न कर्तेति विपर्यये पर्यवसाने, कर्तृत्वादिश्रुत्या बाधप्रसङ्ग इत्यर्थः । **द्वितीये परमात्मन्यसिद्धिरिति** । **कर्तृत्वेऽहंप्रत्ययगोचरत्वे चाभ्युपगम्यमान** इत्यस्य परमात्मनः स्पन्दरूपक्रियाश्रयत्वेऽहंप्रत्ययगोचरत्वे चाभ्युपगम्यमान इत्यर्थः पर्यव- सितः । ततश्च तथाभ्युपगमोऽसिद्ध इत्यर्थः; तर्के पराभ्युपगतस्यैवापादकत्वादिति भावः ।

**प्रसरमपेक्ष्योदयास्तमयव्यपदेश** इति भाष्ये प्रसरशब्दस्य प्रसरणार्थत्व- माश्रित्य प्रसरणान्वयव्यतिरेकाभ्यां ज्ञानस्यात्मनि उदयास्तमयव्यवहार इत्यर्थः प्रतीयते । प्रसरशब्दस्य पचाद्यजन्ततया प्रसरणकर्तृपरत्वमाश्रित्य प्रसृतांशमपेक्ष्य तन्मात्र एव प्रसरणसंकोचदशायामुदयास्तमयव्यपदेशः, न स्वांशिनीत्यप्यर्थः प्रतीयते । अतोऽर्थ- द्वयपरतया व्याचष्टे — **प्रसरान्वयव्यतिरेकाविति** । **मुखान्तरेणापीति** । **तच्च न स्वाभाविकं रूपम्** इति भाष्ये तत् स्वाभाविकं च न भवतीति चशब्दो

भिन्नक्रम इति भावः । **स्वाभाविकं रूपं कथमित्यत्राहेति** । अत्र केचित् — निर्विकारत्वश्रुतयः स्वाभाविकविकारनिषेधपरा इत्येका व्याख्या । उपाधिविनिर्मुक्त-स्वाभाविकमुक्तस्वरूपे विकारमात्रनिषेधपरा इत्यपरा । तत्र पूर्वव्याख्यायाम् , **तच्च न स्वाभाविकम् , अपि तु कर्मकृत**मिति भाष्ये तच्छब्दः कर्तृत्वपरः । ततश्च कर्तृत्वमौपाधिकम्; न स्वाभाविकम् । ततश्च विकारनिषेधश्रुतयः स्वाभाविकविकार-निषेधपरा इत्यर्थः । द्वितीयव्याख्यायाम् , **तच्च न स्वाभाविकम्** इत्यत्र तच्छब्दो बुद्धिस्थकर्तृत्वाश्रयभूतजीवस्वरूपपरः । ततश्च कर्तृत्वाश्रयभूतं (भूत)जीवस्वरूपं न स्वाभाविकम्, अपि त्वौपाधिकम् । स्वाभाविकरूपं तु अविक्रियमेव । विकार-निषेधश्रुतयश्च स्वाभाविकस्वरूपपरा इत्यर्थः । इमां द्वितीयव्याख्यामभिप्रेत्य **स्वाभा-विकं रूपं कथमित्यत्राहे**ति ग्रन्थः प्रवृत्तः । पूर्वस्यां व्याख्यायां स्वाभाविकं रूपं कथम् इत्याक्षेपस्य वा अविकारित्ववचनान्युपाधिविनिर्मुक्तस्वाभाविकरूपपराणीत्यु-त्तरग्रन्थस्य वा असामञ्जस्यात् व्याख्याद्वयमेवेदमित्याहुः । **न कदाचिदपि जड-स्याहंकारस्ये**ति जडत्वस्य प्रतिद्वन्द्वितया निर्देशात् स्वरूपपरशब्दस्वारस्याच्चान्यथा व्याचष्टे — **यद्वा स्वरूपशब्दो धर्मिपर** इति ।

( परोक्तज्ञातृत्वनिर्वाहनिरासः )

**समासान्तर्गता विभक्तिरि**ति । छायापत्तिः प्रतिफलनम् । ततश्च ' दर्पणस्य करवालसंनिधानेन करवाला प्रतिफलनात् ' इत्युक्ते यथा करवाले दर्पणस्य प्रतिफलन-मित्यपि प्रतीयते, करवालस्य दर्पणे प्रतिफलनमित्यपि प्रतीयते ; एवं चित्प्रति-फलनमित्युक्ते चिति प्रतिफलनं, चितो वा प्रतिफलनमित्यर्थद्वयमपि संभवत्येव । एतेन—' देवदत्तस्य यज्ञदत्तधनप्राप्तिः ' इत्युक्ते यज्ञदत्ते देवदत्तधनप्राप्तिरित्यर्थो यथा न लभ्यते, एवम् ' अहंकारच्छायापत्तिः संविदः ' इत्युक्ते, अहंकारे संविच्छायापत्ति-रित्यर्थः कथं लभ्येतेति शङ्का गलहस्तिता । न हि वयं छायाशब्देन समासं वर्णयामः, येनायं दोषः स्यात् ; अपितु प्रतिफलनार्थेन छायापत्तिशब्देन । प्रतिफलनं च षष्ठ्यन्तमिव सप्तम्यन्तमप्याकाङ्क्षतीति नानुपपत्तिगन्धोऽपि । अत्र केचित्—भाष्ये ' केयं तच्छायापत्तिः ' इति पाठो युक्तः, पूर्वत्र तच्छायापत्त्येत्युक्तेः । ततश्च तच्छब्दस्य किमहंकारपरामर्शित्वम् ? उत संवित्परामर्शित्वम् इति विकल्पो युज्यते ।

चिच्छायापत्तिरिति पाठेऽपि ज्ञातृत्वच्छायापत्तिरिति न व्याख्येयम्, भाष्ये तथाऽप्रतीतेः; ज्ञातृत्वच्छायापत्तिपक्षस्य परैरनुद्भावितत्वाच्च। अत एव ज्ञानच्छायासंपत्तिसंपर्कौ कस्मान्न निरस्ताविति चोद्यस्यापि नावकाशः।

"तस्मात्तत्संयोगादचेतनं चेतनावदिव लिङ्गम्।
गुणकर्तृत्वे च तथा कर्तेव भवत्युदासीनः॥"

इत्युक्तरीत्या चैतन्यसमानाधिकरणकृत्याश्रयत्वलक्षणज्ञातृत्वस्य चिदचित्संनिधानेन परस्परच्छायापत्त्या संभव इति चोदयति - भाष्ये जडस्वरूपस्येति। सामान्यतो ज्ञातृत्वसंभवमात्रप्रदर्शनेऽपि अन्तःकरणस्येति वा चैतन्यस्येति वा धर्मिविशेषस्यानुक्तेः **चिच्छायापत्त्येत्य**त्रापि षष्ठीसप्तमीसमासद्वयसंभवं चाभिप्रेत्य **तत्संभव** इत्यत्र ज्ञातृत्वोत्पत्तिपरत्वं निश्चित्य कस्य छायापत्त्या तदुत्पद्यते (कुत्र ज्ञानमुत्पद्यते) इति पृच्छति—**केयं चिच्छायापत्तिरिति। किमहङ्कारच्छायापत्तिः संविद** इति। ततश्च तया छायापत्त्या संविदेव ज्ञातृत्वमित्यर्थसिद्धम्। एवमुक्तस्थापि उभयत्रापि ज्ञातृत्वासंभवभाष्यस्यायमर्थः। चैतन्यसमानाधिकरणकर्तृत्वं हि ज्ञातृत्वम्। यत्र चैतन्यं न तत्र कर्तृत्वं, यत्र च कर्तृत्वं न तत्र चैतन्यमिति नोभयत्रापि छायापत्त्या वास्तवज्ञातृत्वोत्पत्तिः सिध्यतीति भावः। अत एव **नोभयत्रवास्तवज्ञातृत्वमि**त्युत्तरभाष्यं च स्वरसमिति वदन्ति।

**संपर्कश्चोपलम्भानुगुण्येने**ति। प्रमात्वस्यौत्सर्गिकत्वात् रुमाकाष्ठलावण्यवदेवाभ्युपगन्तव्यम्। न त्वयःपिण्डौष्ण्यवदेवेति भावः। **दण्डदेवदत्तयो**रिति। अयःपिण्डाग्न्यादिषु तथा दर्शनादित्यर्थः। **अपृथगवस्थितयोः संपर्कश्चानुपपन्न** इति। नन्वपृथगवस्थितयोर्वह्निधूमयोर्वा देहात्मनोर्वा संपर्को दृष्ट इति चेत्—मैवम्, ज्ञानाहंकारयोर्धर्मधर्मिभावेनोपलम्भानुगुण्येनापृथक्सिद्धत्वे ज्ञातृत्वमपि वास्तवमेव किं न स्यादिति भावः।

**अनुत्पन्नस्ये**ति। अन्वयव्यतिरेकाभ्यामुत्पत्तेरभिव्यक्तिहेतुतयोत्पत्तिरभिव्यक्तिशब्दव्यपदेश्या भवति। अभिव्यज्यते अस्या इति व्युत्पत्त्या अपादाने क्तिनि अभिव्यक्तिशब्दस्योत्पत्तिपरत्वसंभवादिति भावः। एतदस्वरसादाह — **किंचे**ति। **प्रकाशो-**

**त्पत्तिरूपाभिव्यक्तिः**रिति । ननु च तत्प्रकाशनमिति द्वितीयपक्षाभेदः स्यादिति चेत् – न; द्वितीयपक्षे विषयविषयिभावो भेदगर्भः, इह तु न तथेति द्रष्टव्यम् । एतदभिप्रायेण **प्रकाशनमनुभवविषयप्रकाशोत्पत्ति**रिति वक्ष्यति । **स्वतः-सिद्ध**शब्दस्यानन्यप्रकाश्यत्वानन्योत्पाद्यत्वरूपार्थद्वयसंभवादुभयथा व्याचष्टे –– **स्वतः-सिद्धतया ही**त्यादिना । **पूर्व**मिति । **तत एवे**ति भाष्येणेत्यर्थः । **अनुग्राह्ये**ति । अनुग्राह्यमनुग्रहसाधनम् । **अनुग्रहस्य कोटिद्वयेऽप्यनन्तर्भावा**दिति । सर्वे-स्याप्यनुग्रहस्य कोटिद्वयेऽप्यनन्तर्भावादित्यर्थः । **व्याप्तिस्मरणादिरनुग्रह** इति । तद्धेतुभूतव्याप्त्यनुभवादिरनुमानानुग्राहकः । न चानुग्रहः फलारम्भौन्मुख्यं सामर्थ्यो-द्बोधनमन्यदेवेति कथं व्याप्तिस्मरणादेरेवानुग्रहरूपत्वमिति वाच्यम्, साधन-व्यतिरेकेणानुग्रहसद्भावे प्रमाणाभावात् । व्याप्तिस्मरणानुगृहीतमनुमानमित्युक्तिस्तु 'अनुभवेनानुभूयते' इतिवदुपपन्नेति भावः । **इन्द्रियसंबन्धहेतुत्वेनेत्युक्त**मिति । वस्तुतस्तु इदमनुमानादेरप्युपलक्षणम् । नेन्द्रियाणि, नानुमानमिति निषेधस्य तुल्य-त्वादिति द्रष्टव्यम् । **अनुषङ्गे**णेति । उत्तरभाष्यानुषङ्गेणेत्यर्थः । आचार्यैरुभयैरुक्तमपि तद्विकल्पमुखेन भाष्याभिप्रेतमित्याह–**अयं तु भाष्याभिप्राय** इत्यादिना । **अहंकारो-ऽमूर्तद्रव्य**मिति । अकठिनद्रव्यमित्यर्थः पक्षद्वयनिरासानन्तरमेवान्यपक्षनिरासस्य युक्त-त्वान् **न ताव**दित्यनेन तन्निरासोऽनुपपन्न इत्यन्यथा व्याचष्टे – **यद्वाऽहंकारस्ये**ति।

भाष्ये – **न केनापि कदाचित् संविदाश्रयमज्ञानमुच्छिद्यते**ति । नन्वहं कारापनेयत्वं ज्ञानस्य वदन्तं प्रति कथमज्ञानस्यानुच्छेदापादनमिति चेत्–न । अहं-कारनिवर्तकत्वपक्षस्य गर्भस्रावेण गतत्वात् ज्ञानमात्रनिवर्त्यत्वस्यैव वक्तव्यत्वं सिद्धव-त्कृत्य तत्प्रसङ्गादिदं दूषणापादनमिति द्रष्टव्यम् । अत एवा**नुभूतेरनुभाव्यत्वा-भ्युपगमेऽपी**त्यनुभाव्यत्वमभ्युपगम्य प्रवृत्ते ग्रन्थे **विषयभावविरहिते ज्ञानमात्र** इति विषयत्वाभावकथनं पूर्वोत्तरविरुद्धमिति शङ्कापि निरस्ता, **न च संविदाश्रयत्व-मित्यादि**भाष्यस्य प्रासङ्गिकत्वादिति ध्येयम् । **व्यतिरेकव्याप्तिर्दर्शिते**ति । ज्ञान-विषयत्वाभावादज्ञानविषयत्वं नास्तीत्यनुमाने ज्ञानविषयत्वाज्ञानविषयत्वाभावयोः पक्षा-दन्यत्रावृत्तेर्व्यतिरेकव्याप्तिरिति भावः । **ज्ञाननिवर्त्याज्ञानत्व** इति बहुव्रीहिः ।

**प्रतीतिर्व्यवहारानुगुण्यमिति** । प्रतीतिशब्देन ज्ञानस्य परिग्रहे ज्ञानानुगुण्यस्य ज्ञानेऽभावात् **प्रतीत्यनुगुणस्वभावत्वात्** ज्ञानतत्साधनयोरित्यस्यासंगतिः स्यादिति भावः ।

प्रामाण्याप्रामाण्ययोर्द्वयोरपि परतस्त्वमिति कोऽर्थः? यथा पृथिव्याः शीतत्वमुष्णत्वं च परतः, स्वतस्त्वनुष्णाशीतत्वम्, एवं वा; उत ज्ञानसामान्यसामग्र्यतिरिक्तोत्पाद्यत्वे सति यावत्तद्ग्राहकसामग्रीग्राह्यत्वमिति विकल्प्य प्रथमं दूषयति — **निःस्वभावत्वादिप्रसङ्गादिति** । प्रामाण्याप्रामाण्ययोर्द्वयोरप्यभावे सर्वस्यापि वस्तुनस्तद्वत्त्वतदभाववत्त्वयोर्द्वयोरप्यभावेन तुच्छत्वमेव स्यादित्यर्थः । दूषणान्तरमाह — **प्रामाण्याप्रामाण्येति** । **तत्संबन्धात् ज्ञाने तथात्वमिति** । यथा रूमासंबन्धात् काष्ठे लावण्यम्, अनुष्णाशीतपृथिव्यामुष्णशीतयोरग्निजलयोः संपर्कादुष्णत्वादिप्रतिभासो वा तद्वत् प्रामाण्याप्रामाण्ययोस्तत्प्रतिभासस्य वोपपत्तिरित्यर्थः । **परतस्त्वमनुपपन्नमिति** । प्रामाण्याप्रामाण्ययोस्तुच्छत्वमेव स्यात्, अन्यत्राप्यभावात् अत्राप्यसत्त्वात् । उष्णत्वशीतत्वयोस्त्वन्यत्र वृत्तिसंभवान्न तुच्छत्वमित्यर्थः । द्वितीयं दूषयति — **प्रामाण्यबुभुत्सेति** । गृहीतप्रामाण्यस्यैव निश्चयरूपतया तत्रापि प्रामाण्यग्रहापेक्षायामनवस्थेत्यर्थः । यद्वा **निःस्वभावत्वादिप्रसङ्गादित्यादि**शब्देनानवस्थापरिग्रहः । उभयं विवृणोति — **प्रामाण्याप्रामाण्ये इत्यादिना** ।

**क्वचिदात्मस्थतयाभिव्यञ्जनमस्त्विस्त्वेति** । दीपादिष्वनैकान्त्यप्रदर्शनमेव क्वचिदभ्युपगमसूचनमिति भावः । भाष्ये **चाक्षुषतेजःप्रतिफलनेनेति** । **प्रतिफलनम्** प्रतिहतिः । भाष्ये **वस्तुतो दोषतो वा न किंचिदिह कारणमितीति** । वस्तुरूपं वा दोषरूपं वा न किंचित् कारणमित्यर्थः । प्रत्यक्षप्रमायां हि वस्तुशब्दवाच्यो विषयो हेतुः । अतो वस्तुनः कारणत्वमुपपद्यत इति द्रष्टव्यम् । **धर्मधर्मिभावेन वस्तुत इति** । तसेः सार्वविभक्तिकत्वात् वस्तुना = धर्मधर्मिभावेनेत्यर्थः । **मूर्तस्वच्छस्थूलद्रव्यत्वमिति** । मूर्तस्वच्छस्थूलद्रव्यत्वप्रयुक्तं चाक्षुषतेजःप्रतिफलनरूपं तात्स्थ्येनोपलब्धौ दोषरूपं कारणमित्यर्थः । **वस्तुनः कारणाभावाच्च ज्ञातृत्वं विद्यत इति** । धर्मधर्मिभावात्मकस्य वस्तुरूपकारणस्याभावाच्च ज्ञातृत्वं प्रतीयत इत्यर्थः । **अतः प्रत्यक्षत्वमपीति** । **व्याप्तेरपि न प्रत्यक्षत्वसिद्धिरिति** भाष्ये अपिर्भिन्नक्रमः । प्रत्यक्षत्वसिद्धिरपि नेत्यन्वय इति भावः । **अनुभूतेरपि तथैव प्रथेति** वक्तव्यमिति भाष्ये तथैवेत्यस्यो-

विशदावभासत्वेनेत्यर्थमभिप्रेत्यावतारयति — विशदावभासाभावादिति। ननु तथा — शब्दस्याहंत्वेनेत्यर्थ एवास्तु। एवं च न हि सुप्तोत्थितः इति भाष्यमपि तदुपपादकतया तच्छेषभूतमस्त्विति चेत् — सत्यम्, युक्त्यन्तराविष्करणार्थमेवं व्याख्योपपत्तेः। जागरितावस्थायामेवेति। अविशदावभासायोग्यावस्थायामप्यविशदावभासाभ्युपगमे तद्योग्यावस्थायां तदभ्युपगन्तॄणां का नः क्षतिरित्यर्थः।

प्रत्यक्षसिद्ध्यर्थमिति। अतोऽहंभाववियुक्तेत्यनेन विरोध इति भावः। प्रत्यभिज्ञाविशेषोऽयमिति। 'सुखमहम्' इत्यंशे स्मृतिरूपः, 'अस्वाप्सम्' इति स्वापांशे कालांशे च प्रत्यभिज्ञायोग्यानुपलब्धिरूपलिङ्गद्वयप्रतिसंधानजन्यानुमितिरूपो नृसिंहाचार्यज्ञानविशेष इत्यर्थः। ननु—स्मृते पर्वते वह्निव्याप्यधूमवत्त्वज्ञानात् 'पर्वतो वह्निमान्' इत्यनुमितिः पर्वतांशेऽप्यनुमितिरूपा; न स्मृतिरूपा। एवं स्मृते सुखरूपे आत्मनि स्वापकालयोः संबन्धानुमितिरात्मांशेऽप्यनुमितिरूपैव; न तु परामर्शरूपा। अनुमितित्वस्याव्याप्यवृत्तित्वासंभवात्। अस्तु वाऽनुमितित्वमव्याप्यवृत्ति। तथापि 'सुखमहम' इति ज्ञानमिदानींतनसुखरूपाहमर्थविषयकं कुतो न स्यात्? न हि तदंशे तत्तोल्लेखोऽस्ति, येन स्मृतित्वं स्वध्यवसानं स्यात्। स्वापकालीनानुभवस्य देशकालाद्यगोचरत्वेन स्वापकालीनात्मनि व्यावर्तकाकारस्य कस्याप्यभावेन तस्य पक्षीकरणासंभवेनानुमानेन कीदृशे आत्मनि स्वापसंबन्धो बोध्येत? तस्मादात्मनि स्वापदशायां यावत धर्मान्तरसंबन्धोऽवभासत इति नाङ्गीक्रियते, तावत् 'सुखमहम्' इत्यस्य स्वापकालीनसुखानुसंधानरूपत्वं न सूपपादम्। तस्मादेतत्प्रघट्टकं सर्वं न सुन्दरमिति चेत्—अत्राहुः—सुषुप्तिदशायां जाग्रद्दशाविलक्षणमानुकूल्यं भासत इति सिद्धम्। तच्च न स्वरूपभूतज्ञानेन। तथात्वे जागरितदशायामपि तदानुकूल्यं भासेत। ततश्च यथा कैवल्यदशायां भासमानस्य विलक्षणस्यानुकूल्यस्य न स्वरूपभूतज्ञानप्रकाश्यत्वम्, एवं सुषुप्तिदशायामपि भासमानानुकूल्यं धर्मभूतज्ञानेनैव भासते। जाग्रद्दशायां तु जाग्रद्भोगप्रदकर्मप्रतिबन्धवशात् तदानुकूल्यं धर्मभूतज्ञाने न विषयः। सुषुप्तिदशायां तु विषय एव। ततश्च तादृशविषयलाभात् तज्ज्ञानस्य स्वप्रकाशत्वम्। अत एव सुखित्वं ज्ञातृत्वं च ज्ञायत इति भाष्यमपि सुसंगतम्। बहिर्विषयप्रसरे परमिन्द्रियापेक्षा। अत एव, "इन्द्रियद्वारेण व्यवस्थित"मिति भाष्यमपि संगतमेव।

ततश्च धर्मभूतज्ञानेनानुकूल्यविशेषवत्तया जाग्रदादिविलक्षणस्मरणं संभवति। तस्मादनुभवस्य संस्काराधायकतासंभवेन स्मरणमपि संभवति, तद्दशायां कालस्यापि धर्मभूतज्ञानेन विषयीकरणसंभवात्, कालस्य ज्ञानमात्रविषयत्वात्, तत्कालीने आनुकूल्यविशेषवत्तया स्मृत आत्मनि ज्ञानाभावरूपस्वापस्य योग्यास्मरणलिङ्गगम्यत्वसंभवात्, स्वापांशस्यापि तदानुभवेऽपि बाधकाभावात्, सर्वांशे परामर्शस्य स्वरसमसिद्धत्वाच्चेति। वस्तुतस्तु धर्मभूतज्ञानेन व्यावर्तकाकारास्फुरणेऽपि जाग्रद्दशाविलक्षणे प्रमुष्टतत्ताकस्मृतिगोचरेऽतिशयितसुखविशेष आत्मनि तदानींतनार्थास्मरणलिङ्गेन ज्ञानाभावरूपस्वापस्य वा तस्य स्वापस्येदानीमसत्त्वेन लिङ्गेन स्वापगतातीतत्वस्य वानुमाने दोषाभावान्नानुपपत्तिरिति द्रष्टव्यम्।

( अहमर्थात्मस्फुरणसमर्थनम् )

**तच्चेन्द्रियद्वारेण व्यवस्थितमिति भाष्यस्वारस्यविरुद्धं चेति।** "क्षेत्रज्ञावस्थायां कर्मणा संकुचितस्वरूपं तत्तत्कर्मानुगुणतरतमभावेन वर्तते। तच्चेन्द्रियद्वारेण व्यवस्थितम्" इति भाष्यविरुद्धमित्यर्थः। **न किंचिदवेदिषमित्यज्ञानसाक्षित्वेन स्थितिं वदतेति।** सुप्तोत्थितस्य 'न किंचिदवेदिषम्' इत्याकारकस्मरणान्यथानुपपत्तिकल्पितं सुषुप्तिकालीनं 'न जानामि' इति यदज्ञानसाक्षित्वम्, तेनेत्यर्थः। ततश्च सुषुप्तिदशायां 'न वेद्मि' इत्यज्ञानानुभवसंभवेऽपि 'नावेदिषम्' इत्याकारकाज्ञानानुभवासंभवात् कथमेतदिति न चोदनीयम्। **अज्ञानाश्रयभूताहमर्थेनेति।** अहमर्थस्याज्ञानाश्रयत्वमप्यभ्युपगन्तव्यम्। तज्ज्ञानमप्यभ्युपगन्तव्यमित्यर्थः। **यथा प्रातश्चत्वरे गजो नास्तीतीति।** इदं गजाभावविशिष्टतयानुभूतस्य चत्वरस्य यदा स्मरणं तदेति द्रष्टव्यम्। परमते 'न किंचिदवेदिषम्' इत्यस्य सर्वांशे परामर्शरूपत्वात्तदनुसारेण दृष्टान्तस्य वक्तव्यत्वात्। उत्तरत्र तु सिद्धान्ते धर्म्यंश एव परामर्शरूपत्वात् तद्दृष्टान्ततया स्वमतानुगुण्येन वक्ष्यमाणा 'चत्वरे गजो नास्ति' इति योग्यानुपलब्धिलिङ्गकगजाभावानुमितिश्चत्वरांश एव परामर्शरूपा। अतश्चत्वरमात्रं यत्र प्रागनुभूतं तादृशमेवोत्तरत्रोदाहरिष्यते, स्वमतानुगुण्यादिति द्रष्टव्यम्। परमतवत् स्वमतेऽपि 'सुखमहमस्वाप्सम्' इति सर्वांशेऽपि परामर्शत्वमेव स्यादिति शङ्कते—**अस्वाप्समिति परामर्शेनेति। अनुसंधानमस्ति**

**चेत् स्वाप एव न स्या**दिति । ननु बाह्यान्तःकरणजन्यसमस्तज्ञानाभावेऽपि साक्षिणैव स्वापशब्दिताज्ञानानुभवसंभवान्न सुषुप्तिव्याघात इति चेत्—न ; अज्ञानस्य साक्षिभास्यत्वे प्रमाणाभावादिति भावः ।

**परोक्तान्यथासिद्धि**मिति । सुषुप्तौ सुखानुभवानभ्युपगन्तृनैयायिकाद्युक्तान्यथासिद्धिमित्यर्थः । न तु मृषावाद्युक्तेति मन्तव्यम्, मृषावादिभिः सुखानुभवस्यैवाभ्युपेतत्वात् । न च " सुखपरामर्शो दुःखाभावनिमित्तः " इति पञ्चपादिकाया-मुक्तत्वात् मृषावादिभिरपि सुखानुभवाभावोऽभ्युपेत इति वाच्यम्, तद्व्याख्याता विवरणकृता तस्य परमतोपन्यासरूपत्वाविष्करणात् । वस्तुतस्तु अहमर्थसदसद्भाव-चिन्तनप्रकरणत्वात् **यथेदानीं सुखं भव**तीति भाष्यस्य ' सुखं यथेदानीमहं(?)भवति तथास्वाप्सम् ' इत्येवमर्थपरतया व्याख्येयत्वात् मृषावादिमतेऽपीदृशोक्तेः संभवात् तन्मतेऽपि नानुपपत्तिरिति द्रष्टव्यम् । **अस्थिरत्वमनुभवाभावो वे**ति । तदानी-महमर्थतदनुभवाभावे अहमर्थसुखित्वप्रतिसंधानानुपपत्तिवशात् ' इदानीं यथा सुखम् ' इत्याद्यनुभवप्रकारः पर्यवस्यतीति भावः । **अहमर्थस्य निषेधविषयत्वे**ति । अह-मर्थानुभवस्येत्यर्थः । भाष्ये — **नाहमवेदिषमिति वेदितु**रिति । ' नाहमवेदिषम् ' इत्यत्राहमित्यंशस्य सुषुप्त्यनुभूतार्थस्मृतिरूपतया स्मृतेश्च स्मर्यमाणस्वरूपमात्रे प्रामाण्य-संभवात् । न च नैयायिकादिमत इव तदंशेऽप्यनुभवत्वमस्त्विति शङ्क्यम्, स्मृतित्वस्यानुभवसिद्धत्वादिति भावः । एतेन 'राममहं नाद्राक्षम् ' इत्यादाविव तदानीमहमर्थाभावेऽपि ' नाहमवेदिषम् ' इत्यहमर्थेऽतीतज्ञानसंबन्धित्वादिनिषेधेऽनुप-पत्त्यभावात् कथमेतदिति शङ्का निरस्ता । **वेद्यप्रतिभासविषय** इति । न वेदितृ-प्रतिभासविषय इत्यर्थः । **अथाप्यहमर्थनिवृत्ती**ति । अहमर्थज्ञानाभावेत्यर्थः । **चत्वरनिवृत्ती**ति चत्वरज्ञाननिवृत्तीत्यर्थः । " अहमर्थानुभवाभावसाधकं परामर्शं शङ्कते " इत्यवतारिकाप्रदर्शनादित्थं द्रष्टव्यम् । यद्वा अहमर्थानुभवाभावोऽप्यह-मर्थाभावपर्यवसित इति न विरोध इति द्रष्टव्यम् ।

**अहं न ज्ञातवान्** इत्यादि भाष्यं पूर्वव्याख्यानद्वयानुरोधेन द्वेधा विरोध-प्रदर्शनपरतया व्याचष्टे – **अहं न ज्ञातवा**नित्यादिना । **विधिनिषेधयो**रिति ।

ततश्च धर्मभूतज्ञानेनानुकूल्यविशेषवत्तया जाग्रदादिविलक्षणस्मरणं संभवति । तस्यानुभवस्य संस्काराधायकतासंभवेन स्मरणमपि संभवति, तद्दशायां कालस्यापि धर्मभूतज्ञानेन विषयीकरणसंभवात्, कालस्य ज्ञानमात्रविषयत्वात्, तत्कालीने आनुकूल्यविशेषवत्तया स्मृत आत्मनि ज्ञानाभावरूपस्वापस्य योग्यास्मरणलिङ्गगम्यत्वसंभवात्, स्वापांशस्यापि तदानुभवेऽपि बाधकाभावात्, सर्वांशे परामर्शस्य स्वरससिद्धत्वाच्चेति । वस्तुतस्तु धर्मभूतज्ञानेन व्यावर्तकाकारास्फुरणेऽपि जाग्रद्दशाविलक्षणे प्रमुष्टतत्ताकस्मृतिगोचरेऽतिशयितसुखविशेष आत्मनि तदानींतनार्थास्मरणलिङ्गेन ज्ञानाभावरूपस्वापस्य वा तस्य स्वापस्येदानीमसत्त्वेन लिङ्गेन स्वापगतातीतत्वस्य वानुमाने दोषाभावान्नानुपपत्तिरिति द्रष्टव्यम् ।

(अहमर्थात्मस्फुरणसमर्थनम्)

**तच्चेन्द्रियद्वारेण व्यवस्थितमिति भाष्यस्वारस्यविरुद्धं चेति ।** "क्षेत्रज्ञावस्थायां कर्मणा संकुचितस्वरूपं तत्तत्कर्मानुगुणतरतमभावेन वर्तते । तच्चेन्द्रियद्वारेण व्यवस्थितम्" इति भाष्यविरुद्धमित्यर्थः । **न किंचिदवेदिषमित्यज्ञानसाक्षित्वेन स्थितिं वदतेति ।** सुप्तोत्थितस्य 'न किंचिदवेदिषम्' इत्याकारकस्मरणान्यथानुपपत्तिकल्पितं सुषुप्तिकालीनं 'न जानामि' इति यदज्ञानसाक्षित्वम्, तेनेत्यर्थः । ततश्च सुषुप्तिदशायां 'न वेद्मि' इत्यज्ञानानुभवसंभवेऽपि 'नावेदिषम्' इत्याकारकाज्ञानानुभवासंभवात् कथमेतदिति न चोदनीयम् । **अज्ञानाश्रयभूताहमर्थेति ।** अहमर्थस्याज्ञानाश्रयत्वमप्यभ्युपगन्तव्यम् । तज्ज्ञानमप्यभ्युपगन्तव्यमित्यर्थः । **यथा प्रातश्चत्वरे गजो नास्तीतीति ।** इदं गजाभावविशिष्टतयानुभूतस्य चत्वरस्य यदा स्मरणं तदेति द्रष्टव्यम् । परमते 'न किंचिदवेदिषम्' इत्यस्य सर्वांशे परामर्शरूपत्वात्तदनुसारेण दृष्टान्तस्य वक्तव्यत्वात् । उत्तरत्र तु सिद्धान्ते धर्म्यंश एव परामर्शरूपत्वात् तद्दृष्टान्ततया स्वमतानुगुण्येन वक्ष्यमाणा 'चत्वरे गजो नास्ति' इति योग्यानुपलब्धिलिङ्गकगजाभावानुमितिश्चत्वरांश एव परामर्शरूपा । अतश्चत्वरमात्रं यत्र प्रागनुभूतं तादृशमेवोत्तरत्रोदाहरिष्यते, स्वमतानुगुण्यादिति द्रष्टव्यम् । परमतवत् स्वन्मतेऽपि 'सुखमहमस्वाप्सम्' इति सर्वांशेऽपि परामर्शत्वमेव स्यादिति शङ्कते—**अस्वाप्समिति परामर्शेनेति । अनुसंधानमस्ति**

**चेत् स्वाप एव न स्या**दिति । ननु बाह्यान्तःकरणजन्यसमस्तज्ञानाभावेऽपि साक्षिणैव स्वापशब्दिताज्ञानानुभवसंभवान्न सुषुप्तिव्याघात इति चेत्—न; अज्ञानस्य साक्षिभास्यत्वे प्रमाणाभावादिति भावः ।

**परोक्तान्यथासिद्धिमि**ति । सुषुप्तौ सुखानुभवानभ्युपगन्तृनैयायिकाद्युक्तान्यथासिद्धिमित्यर्थः । न तु मृषावाद्युक्तेति मन्तव्यम्, मृषावादिभिः सुखानुभवस्यैवाभ्युपेतत्वात् । न च "सुखपरामर्शो दुःखाभावनिमित्तः" इति पञ्चपादिकाया-मुक्तत्वात् मृषावादिभिरपि सुखानुभवाभावोऽभ्युपेत इति वाच्यम्, तद्व्याख्याता विवरणकृता तस्य परमतोपन्यासरूपत्वाविष्करणात् । वस्तुनस्तु अहमर्थसदसद्भाव-चिन्तनप्रकरणत्वात् **यथेदानीं सुखं भवती**ति भाष्यस्य 'सुखं यथेदानीमहं(?)भवति तथास्वाप्सम्' इत्येवमर्थपरतया व्याख्येयत्वात् मृषावादिमतेऽपीदृशोक्तेः संभवात् तन्मतेऽपि नानुपपत्तिरिति द्रष्टव्यम् । **अस्थिरत्वमनुभवाभावो वे**ति । तदानी-महमर्थे तदनुभवाभावे अहमर्थसुखित्वप्रतिसंधानानुपपत्तिवशात् 'इदानीं यथा सुखम्' इत्याद्यनुभवप्रकारः पर्यवस्यतीति भावः । **अहमर्थस्य निषेधविषयत्वे**ति । अह-मर्थानुभवस्येत्यर्थः । भाष्ये — **नाहमवेदिषमिति वेदितुरि**ति । 'नाहमवेदिषम्' इत्यत्राहमित्यंशस्य सुषुप्त्यनुभूतार्थस्मृतिरूपतया स्मृतेश्च स्मर्यमाणस्वरूपमात्रे प्रामाण्य-संभवात् । न च नैयायिकादिमत इव तदंशेऽप्यनुभवत्वमस्त्विति शङ्क्यम्, स्मृतित्वस्यानुभवसिद्धत्वादिति भावः । एतेन 'राममहं नाद्राक्षम्' इत्यादाविव तदानीमहमर्थाभावेऽपि 'नाहमवेदिषम्' इत्यहमर्थेऽतीतज्ञानसंबन्धित्वादिनिषेधेऽनुप-पत्त्यभावात् कथमेतदिति शङ्का निरस्ता । **वेद्यप्रतिभासविषय इ**ति । न वेदितृ-प्रतिभासविषय इत्यर्थः । **अथाप्यहमर्थनिवृत्ती**ति । अहमर्थज्ञानाभावेत्यर्थः । **चत्वरनिवृत्ती**ति चत्वरज्ञाननिवृत्तीत्यर्थः । "अहमर्थानुभवाभावसाधकं परामर्शं शङ्कते" इत्यवतारिकाप्रदर्शनादित्थं द्रष्टव्यम् । यद्वा अहमर्थानुभवाभावोऽप्यह-मर्थाभावपर्यवसित इति न विरोध इति द्रष्टव्यम् ।

**अहं न ज्ञातवान्** इत्यादि भाष्यं पूर्वव्याख्यानद्वयानुरोधेन द्वेधा विरोध-प्रदर्शनपरतया व्याचष्टे — **अहं न ज्ञातवानि**त्यादिना । **विधिनिषेधयो**रिति ।

'अहम्' इत्यस्य सौषुप्तिकाहमर्थपरामर्शरूपतयाऽहमर्थप्रमाणत्वेन तद्विधिरूपत्वम्, 'मां न जानामि' इत्यस्य ज्ञाननिषेधमुखेनाहमर्थनिषेधरूपत्वं चेति भावः ।

भाष्ये साक्षित्वं च साक्षात् ज्ञातृत्वमिति । मुख्यज्ञातृत्वमित्यर्थः । ज्ञातृत्वस्य मुख्यत्वं द्रष्टृत्वे पर्यवस्यति । तेन साक्षाच्छब्दस्य कृञ्ये (ज्यो)ग एव गतिसंज्ञा विधानेन ज्ञाधात्वर्थान्वयः कथमिति चोद्यस्य नावकाश इति द्रष्टव्यम् । ननु अजानत इति शतुर्लडादेशतया ज्ञानवर्तमानत्वं विवक्षितं स्यात् । ततश्च तत्साक्षात्कारूप-ज्ञानात्ययेऽपि 'साक्षी' इति व्यपदेशो न स्यादित्याशङ्क्याह—अज्ञातुरित्यर्थ इति । तृजादेः सर्वकालसाधारणत्वात् तृजादिषु वर्तमानकालोपादानमिति पूर्वपक्षं (तृजादिषु वर्तमानकालोपादानमध्यायक वेदाध्यायार्थमिति पूर्वपक्षं कृत्वा, "न वा कालमात्रे दर्शनादन्येषाम्" इति वार्तिककृता सिद्धान्तितत्वादिति भावः । भाष्ये साक्षाद्द्रष्टर्येवेति । साक्षाच्छब्दात् द्रष्टर्यभिधेये साक्षिशब्दं स्मरतीत्यन्वयः । अनेन सूत्रं व्याख्यातम् । एवं हि सूत्रार्थः—साक्षाच्छब्दात् द्रष्टर्यभिधेये संज्ञायां विषये इनिप्रत्ययो भवतीति । जाग्रदात्मा सपक्ष इति । आत्मा अहमित्यवभासते, स्वस्मै भासमानत्वात् जाग्रदात्मवदित्यनुमानशरीरम् । न च जाग्रदात्मनः 'अहम्' इति भासमानत्वमसिद्धमिति वाच्यम्, 'अहम्' इति बुद्धिश्चिदचित्संवलनविषयत्वस्य तैरभ्युपेतत्वात्, 'अहं भूयासम्' इति प्रतीतिबलेनात्मनि परमप्रेमास्पदत्वस्योपपादि-तत्वाच्च 'अहम्' इति भासमानत्वं जाग्रदात्मनः सिद्धमेवेति सपक्षत्वं युज्यत एवेति मन्तव्यम् ।

(मुक्तावहमर्थानुवृत्तिसमर्थनम्)

अपि च यः परमार्थत इति भाष्यस्य, यः परमार्थत आध्यात्मिकादिदुः-खैरात्मानम् 'अहं दुःखी' इति दुःखितयानुसंधत्ते, भ्रान्त्या वा आत्मानमनुसंधत्ते 'अहं भ्रान्तिमान्' इति, स एवेति योजना । भ्रान्त्येति इत्थंभूते तृतीयेत्यभि-प्रयन्नाह—यः स्वात्मानं भ्रमवन्तमनुसंधत्त इत्यादि । स एव भ्रमनिवृत्ति-साधन इति । दुःखित्वं भ्रान्तिसिद्धमिति वदता हि दुःखित्वनिवृत्तये न प्रवृत्तिर्वक्तु-मुचिता, दुःखित्वस्य स्वतो निवृत्तत्वात् । ततश्च 'मम दुःखित्वभ्रान्तिरनुवर्तते, सा निवर्तताम्' इति प्रतिसंधाय भ्रान्तिनिवृत्तिसाधने प्रवर्तत इति वक्तव्यम् । तदपि

त्वन्मते अनुभूतेर्न संभवति, भ्रान्तिमत्त्वप्रतिसंधातृत्वस्याप्यनुभूतावभावात्। अतोऽहमर्थस्यैव स्वभ्रान्तिनिवृत्त्यै प्रवृत्तिर्वक्तव्या; न तु स्वविनाशायेत्यर्थः। **अनुमानमाहेति**। मुक्तावहमिति भासमानत्व इति शेषः। **अनुमानमप्यस्तीति चार्थ** इति। चशब्दस्य गत्यन्तराभावादेवमन्वयो दर्शित इति द्रष्टव्यम्। **तथात्वभासमानत्वेन** इति व्याख्येयं पदम्। **स्वस्मै भासमानत्वेनेति** तद्व्याख्यानम्। अहमिति भासमानत्वेन चेति शेषः। साध्यसाधनयोरुभयोरपि प्रदर्शनीयत्वादिति द्रष्टव्यम्। **न साध्याविशिष्टतेति**। **अहमिति प्रकाशत** इत्यस्याहमिति व्यवहारार्हत्वं ह्यर्थः; तच्च संप्रतिपन्नमेव. संसारदशायाम् 'अहम्' इति व्यवह्रियमाणतया योग्यतायाः सर्वदा सत्त्वात् [इति?]सिद्धसाधनमिति न वाच्यमित्यर्थः। **साध्याविशिष्टत्वम्**। साध्यस्य साधनेनाविशिष्टत्वम्, सिद्धत्वमित्यर्थः। **अहमित्येव प्रकाशत** इत्येवकारेण सर्वदा व्यवहारानुगुण्यं प्रकाशे विवक्षितम्। तत्तु परसंमतं न भवतीति न सिद्धसाधनमित्यर्थः। ततश्चान्यशेषतयाऽभासमानत्वरूपस्य संप्रतिपन्नस्य स्वस्मै भासमानत्वस्य, मुक्तौ विप्रतिपन्नस्य 'अहम्' इति भासमानत्वस्य चैक्याशङ्काया असंभवात् कथं साध्याविशिष्टत्वमिति शङ्का निरस्ता।

**साध्यविपरीतविशेषसाधकतयेति**। पक्षधर्मताबललभ्यस्य साध्यस्य मुक्तनिष्ठस्य 'अहम्' इति भासमानत्वस्य विरुद्धं संसारित्वम्। तत्साधकतयाभिमतविशेषविरुद्धत्वं शङ्कत इत्यर्थः। बाधस्य तर्कानुगुणत्वात् दूषणान्तरमाहेत्याह— **सोपाधिकत्वमाहेति**। संसारित्वज्ञत्वादिहेतुः कर्मरूपाविद्यान्वयः। सोऽत्र नास्तीति भावः। **धर्म्यैक्ये सतीति**। संसर्गारोपो रजोजन्यः। तादात्म्यारोपस्तमोजन्य इति भावः। केचित्तु — तद्भिन्ने तदारोपमात्रं रजसा; तद्विरोधिनि तदारोपस्तमसा; यथा धर्मप्रकाशादौ धर्मे ऽमत्त्वादिबुद्धिरित्याहुः। **अज्ञत्वाद्यहेतुत्वादित्यस्याविद्यारूपोपाध्यवगमकत्वस्य** क्लिष्टत्वात् पक्षान्तरमाह — **अथवेति**।

**कथं तर्हीति** भाष्यमवतारयति— **महाभूतान्यहंकार इति क्षेत्रान्तर्भाववचनमेकमित्यादिना**। **उत्तरत्र परिहारादिति** छेदः। **अहंभावः अहमिति बुद्धिरिति**। ननु करणशब्दस्य बुद्धिपरत्वसंभवात् **अहंभावकरणम्**, अहंभावप्रतीतिः, अहंत्वप्रतीतिरिति यावदिति कुतो नाश्रीयत इति चेत्— सत्यं तथा

स्वारस्यमस्ति। तथापि **अयमेवोत्कृष्टजनावमानहेतुरि**त्युत्तरभाष्ये 'अयम्' इत्यनेन करणशब्दार्थः परामर्शानर्हः, तस्य नपुंसकत्वात्। तेन भावशब्दार्थस्य परामर्शो वक्तव्यः। अत्र चाहंभावशब्दस्य यद्यहंत्वमर्थः स्यात्, तस्य गर्वशब्द-तत्वायोगादसंगतिः स्यात्। अतोऽहंभावशब्देनाहंबुद्धिरेव परामृष्टव्येत्यभिप्रायः। **अयंशब्देन प्रस्तुताहंभावो विवक्षित** इति। **अयमेव त्वहंकार** इति भाष्यस्य, उत्कृष्टजनावमानहेतुर्गर्वापरनामा योऽहंकारः शास्त्रेषु हेयतया प्रतिपाद्यते, सोऽयमेवेति योजनेत्यभिप्रायः। इतरथा '**अयमेव त्वहंकार**' इत्यनेन प्रस्तुतस्य महत्तत्त्व-कार्याहंकारस्यैव परामर्शप्रसङ्गात्। अहंभावलक्षणाहंकारस्य प्रागसिद्धत्वात्। अय-मेवाहंकार इति सिद्धवन्निर्देशासंभवाच्च। **करोतेर्बुद्धिपरत्वं युक्त**मिति। "शब्ददर्दुरं करोति" इत्यत्र करोतेर्ज्ञानार्थकत्वाभिधानात्। अत एव "शब्दं करोति, शाब्दिकः" इत्युपपद्यत इति द्रष्टव्यम्। **अनहम्यहंबुद्धिगर्भाविमावहंभावाहंकार-शब्दा**दिति बहुषु कोशेषु पाठो दृश्यते। तत्राहंभावशब्दो लेखकस्खलनकृतः। **अनात्मनि देहेऽहंभावे**त्यत्राहंभावशब्दस्य "अविद्याऽहंमतिः स्त्रियाम्" इत्यत्रा-हंमतिशब्दवत् च्विप्रत्ययान्तत्वाभावात्। **अत्र भावे व्युत्पत्तिः, पूर्वत्र करणे व्युत्पत्ति**रित्युपरितनवाक्ये अहंकारशब्दस्यैव व्युत्पत्तिप्रदर्शनाच्च। **अत्र भावे व्युत्पत्ति**रिति। अनात्मन्यात्मबुद्धिरूपे भ्रमे इत्यर्थः। **पूर्वत्रे**ति। अहंकाराख्ये महत्तत्त्वकार्ये इत्यर्थः। **उपादेयगोचरतये**ति। "अथातोऽहंकारा-देशः" इत्यहंबुद्धेः कर्तव्यत्वाभिधानादिति भावः। **स त्वहंकारशब्द** इति। अयमत्र विवेकः—अहंकारशब्दो द्विविधः। च्विप्रत्ययान्तादुत्पन्नोऽनुत्पन्नश्च। उत्पन्नश्च द्विविधः—भावसाधनः करणसाधनश्चेति। च्विप्रत्ययान्तादुत्पन्नो भावसाधनो गर्ववाची। च्विप्रत्ययान्तादुत्पन्नः करणवाची त्वहंकारशब्दोऽहंकारतत्त्ववाची। अच्व्यन्तोत्पन्नभावसाधनशब्द उपादेयभूताहंप्रत्ययवाचीति। ननु "श्रूयतां चाप्यविद्यायाः" इत्यस्मिन् श्लोके अनात्मन्यात्मबुद्धेः परमनुपादेयत्वमुच्यते, न त्वनात्मन्यहंबुद्धेः। अतः कथमस्योक्तार्थे प्रमाणत्वमिति शङ्कायामाह—**अत्रैव पुराण** इत्यादिना। **अनन्तरोक्तभ्रान्तियोग** इति। अनात्मन्यात्मबुद्धिरूपभ्रान्तियोग इत्यर्थः। अविद्याया अयोग इति छेदसंभवमभिप्रेत्य तमेवार्थं विपर्ययतो व्याचष्टे—**अहमर्थस्यानात्मत्व** इति। **भ्रान्तेरयोग** इति। आत्मभ्रान्तिरत्वायोग इत्यर्थः।

( प्रत्यक्षविरोधे शास्त्रप्राबल्यनिरासः )

**एतेन प्रत्यक्षान्तराणां दोषमूलत्वमनुमीयते चेदिति ।** केषुचित् प्रत्यक्षेषु काचादिदोषमूलत्वदर्शनेन प्रत्यक्षान्तराणां काचादिदोषमूलत्वमनुमीयते चेदित्यर्थः । एवमुत्तरत्र सर्वत्रापि दोषपदं काचादिदोषपरं द्रष्टव्यम् । ततश्च मुख्यमृषावादिनः स्वैकदेशिनं प्रति स्वव्याघातकरीयमुक्तिः कथं स्यादिति शङ्का निरस्ता । **कोऽयं दोष** इति भाष्यस्य यदुक्तमित्यनेनान्वयं घटयितुमुपायं प्रदर्शयति— **कोऽयं दोष इत्यनया वचनव्यक्त्येति ।** दोषमूलत्वेनान्यथासिद्धिसंभावनया सकलभेदप्रत्यक्षस्य शास्त्रबाध्यत्वमिति यत् दोषरूपं त्वदुक्तम्, तत् किमित्येवं 'को दोष' इति वचनव्यक्त्या पृष्ट इत्यर्थः । **यदुक्तमिति** नपुंसकस्य **को दोष** इति पुंलिङ्गस्य च सामानाधिकरण्यसंपादनस्यातिक्लिष्टत्वादन्यथा व्याचष्टे— **यद्वा यच्छब्दसामर्थ्यादिति । हेतुत्वेन व्याप्तेरदृष्टतयेति ।** भेदवासनात्वस्येति शेषः। भेदवासनाया विपरीतज्ञानहेतुत्वेन व्याप्तेः = सामान्येन संबन्धस्येत्यर्थः ।

भाष्ये **श्रवणावगतनिखिलभेदोपमर्दीति ।** श्रवणवेलायां निखिलभेदोपमर्दित्वेन प्रकारेणावगतस्य ब्रह्मात्मैकत्वविज्ञानस्याभ्यासरूपत्वान्मननादेरित्यर्थः । न च मननस्य ब्रह्मात्मैकत्वविज्ञानाभ्यासरूपत्वेऽपि ब्रह्मात्मैकत्वविज्ञानस्य निखिलभेदोपमर्दित्वाभ्यासरूपत्वं किमर्थमिति शङ्कनीयम्, ब्रह्मात्मैकत्वसिद्ध्यर्थं तदितरमिथ्यात्वसिद्ध्यै ब्रह्मात्मैकत्वविज्ञानस्य भेदोपमर्दित्वस्य चिन्त्यत्वात् । आरम्भणाधिकरणे मननात्मकत्वचिन्तायाः क्रियमाणत्वाच्च । **भेदवासनामूलत्वं तावत् संप्रतिपन्नमिति ।** प्रकृतिप्रत्ययादिभेदवासनामूलत्वादिति भावः । **तस्याश्च दोषत्वमिति।** ननु दोषस्य भ्रान्तिकल्प्यत्वाद्वेदान्तजन्यचिन्मात्रविषयकज्ञानस्य प्रमात्वेन दोषजन्यत्वं कुतः कल्प्यत इति चेत्—न ; वृत्तिरूपज्ञानस्यापि ब्रह्मव्यतिरिक्तत्वेन मिथ्यात्वात् दोषजन्यत्वस्यावश्यकत्वात्, योग्यताभ्रमजन्यतया शास्त्रजन्यज्ञानस्यापि भ्रमत्वस्य वक्तव्यत्वाच्चेति भावः । **मिथ्यात्वावगतिश्च ज्ञाननिवर्त्यत्वादगमादिति ।** ननु श्रवणवेलायां ब्रह्मव्यतिरिक्तमिथ्यात्वस्य "नेहे नानास्ति" इति शास्त्रेणैव प्रतीतेः मिथ्यात्वावगतेश्च दोषमूलत्वेन भेदवासनाया एव दोषत्वं पर्यवस्यतीति ऋजुमार्गे सति किमनेन वक्रमार्गाश्रयणेनेति चेत् — अत्र केचित् — ननु श्रवणवेलायां दोष-

जन्यत्वं नावगतम्, आरम्भणाधिकरण एव ब्रह्मव्यतिरिक्तमिथ्यात्वस्य, भेदप्रतीतेर्दोषजन्यत्वस्य च निरूप्यमाणतया आरम्भणाधिकरणस्य च मननात्मकद्वितीयाध्यायगतत्वात् श्रवणवेलायां दोषजन्यत्वाज्ञानात् शास्त्रजन्यज्ञानस्य परतया बाधकत्वं भविष्यतीत्याशङ्कानिराकरणार्थं **श्रवणावगतेत्यादि** भाष्यम्। ततश्च मननस्य श्रवणावगतार्थदृढीकरणार्थतया श्रवणवेलायामपि भेदमिथ्यात्वप्रतीत्यवश्यंभावेन तत्प्रतीतेर्दोषजन्यत्वप्रतीत्यवश्यंभावात्। अन्यथा श्रवणकालीनशास्त्रजन्यावगतेः परत्वेऽपि भेदमिथ्यात्वाविषयत्वेन बाधकत्वाप्रसक्तेरिति भाव इत्याहुः।

**शब्दराशिव्यावृत्तिरिति।** अशास्त्रभूतशब्दराशिव्यावृत्तिरित्यर्थः। त्वयेति व्याख्येयं पदम्। **स्वतःसिद्धत्वेन निर्धूतनिखिलविशेषत्वामिति।** स्वतःसिद्धत्वे प्रागभावभावेनोत्पत्त्यभावात्, 'उत्पत्तिप्रतिबद्धाश्चान्ये विकारा न सन्ती'ति पूर्वमुक्तत्वादिति भावः। परमार्थत्वविकल्पशिरसि परवाद्यनभ्युपगमरूपदूषणस्य स्पष्टत्वादपरमार्थ(त्व)पक्षं दूषयति—**साधकं चेदिति।** यद्यपि भाष्ये **कोऽयं व्यावहारिको नामे**त्यादिना व्यावहारिकत्वं दूषयिष्यत इति तत्रैवेदं वक्तुमुचितम्, तथाप्यस्मिन्नपि वाक्य एषां दूषणानां संभवमभिप्रेत्यैतदुक्तमिति द्रष्टव्यम्। **युक्त्या बाधो यौक्तिकबाध** इति। "तेन दीव्यति" इति दीव्यत्याद्यर्थे ठगिति भावः।

**लेखकस्खलनकृत** इति। अत्र केचित् – तदभावावगाहिप्रत्यक्षादिना-बाधितस्यापि दोषजन्यज्ञानविषयत्वैकशरणा अपरमार्थत्वप्रतीतिर्भवतीत्यस्यार्थस्य प्राक् प्रस्तुतत्वात् तस्यैवात्रापि प्रतिपिपादयिषितया ज्ञातस्वतिमिरस्य तैमिरिकजनस्य चन्द्रद्वित्वे नास्तीत्येवं बाधकप्रमाणानवतारेऽपि स्वदोषप्रतिसंधानमात्रेण चन्द्रद्वित्वं दोषजन्यज्ञानविषयत्वान्मिथ्याभूतमिति मिथ्याभूतप्रतिपत्तेस्तेषामेव दर्शनात् निर्विशेषब्रह्मण्यपि नास्तिताग्राहकस्य परोक्षस्यापरोक्षस्य वा प्रमाणस्य कस्यापि जनस्याप्रवृत्तावपि दोषजन्यज्ञानविषयत्वेनैव ब्रह्ममिथ्यात्वं ज्ञास्यत इत्येतत्परत्वात्, पुरुषान्तरागोचरत्वोक्तेश्च उपदेशाद्विलक्षणपरोक्षरूपाभावग्राहिप्रमाणानुदयप्रतिपादनपरत्वेन साफल्याच्च, तैमिरिकजनस्य तिमिरान्वये आप्तवाक्यादिकमन्वेष्टव्यमिति क्लेशस्याप्यभावाच्च। अत एव **पुरुषान्तरज्ञानेन मिथ्यात्वनिश्चय** इत्युक्तस्थ्योऽपि न युक्तः। पुरुषान्तरज्ञानेन बाधोदये बाधकज्ञानेनैव मिथ्यात्वनिश्चय आपन्न इति बाधकज्ञानशून्ये

कथमिव मिथ्यात्वप्रत्यय उपपादितः स्यात् । यदि पुरुषान्तराणां प्रकारान्तरेण बाधकज्ञानानुदयेऽपि दोषजन्यज्ञानविषयत्वैकशरणा मिथ्यात्वप्रतीतिः, तर्हि ज्ञातस्वतिमिराणामेव तैमिरिकजनानां दोषजन्यज्ञानविषयत्वेन मिथ्यात्वप्रतीतिसंभवात् पुरुषान्तरोपन्यासो व्यर्थः । अतो **ज्ञातस्वतिमिरस्येति** पाठमाद्रियन्ते । ननु **स्वविषयेण ब्रह्मणा सह मिथ्यैवेति** भाष्यमयुक्तम्, दोषजन्यज्ञानविषयस्यैव मिथ्यात्वस्यापादनार्हत्वाद्दोषजन्यज्ञानस्वरूपस्य मिथ्यात्वाभावादित्याशङ्क्याह — **परमताभ्युगमादुक्तमिति** । चन्द्रद्वित्वज्ञानस्य विषयेण सह मिथ्यात्वमित्यभ्युपगमादिहापि ज्ञानविषययोर्द्वयोरपि मिथ्यात्वमापाद्यत इति भावः । ननु परमते चन्द्रैकत्वज्ञानमपि मिथ्यैवेति विशिष्य कथं द्विचन्द्रज्ञानस्य दोषजन्यतया मिथ्यात्वमुच्यते? न च चन्द्रैकत्वज्ञानं व्यावहारिकम्; द्वित्वज्ञानं तु न तथेति वाच्यम् — ब्रह्मप्रमान्याबाध्यत्वेन द्वयोरप्येकरूपत्वादिति चेत् — न; इदमंशावच्छिन्नचैतन्यस्थाविद्या रजताभासाकारेण विवर्तते, इदमाकारवृत्त्यवच्छिन्नचैतन्यस्थाविद्या रजतज्ञानाभासाकारेण विवर्तते इत्युपगमेन रजतज्ञानस्याप्याभासत्वप्रदर्शनात्, प्रातिभासिकत्वेन द्विचन्द्रज्ञानस्य चन्द्रैकत्वज्ञानविलक्षणत्वात् आगन्तुकदोषजन्यत्वाच्चेति द्रष्टव्यम् ।

अनुमान एव प्रयोगशब्दौचित्यात् कथं तर्के प्रयोगशब्द इत्याशङ्क्याह — **व्याप्तिप्रदर्शनवचनत्वादिति** । **अन्यतरासिद्धमिति** । मन्मते अप्रसिद्धमित्यर्थः ततश्चापादकान्यतरासिद्धिर्न दोष इति दूषणमलग्नकं वेदितव्यम् । केचित्तु — तर्कत्वं विस्मृत्यासिद्धिदूषणोद्भावनम्; अत एव तर्कत्वावलम्बनेनैव परिहरिष्यत इति वदन्ति ।

(असत्यात् सत्यप्रतिपत्तिनिरासः)

भाष्ये **सत्यैवादृष्टेऽपीति** । पूर्वस्मात् **भयादिहेतुरित्यनुषज्यत** इति द्रष्टव्यम् । भाष्ये **वस्तुभूत एव जलादाविति** । **वस्तुभूत** इति मुखादिप्रतिभासविशेषणम्; न जलादिविशेषणम् । **प्रतिभासमानत्वमेव विषयत्वमित्यर्थ** इति । प्रतिभासमानत्वमेवालम्बनत्वव्यवहारेऽपेक्षितमिति भाष्यार्थ इति भावः । **तेन रूपेणासत्यतेति** । न तु प्रतिभासमानत्वरूपेणापीत्यर्थः । **तथा साक्षात्प्रतिभासमान** इति । विद्यमानतया साक्षात्क्रियमाण इत्यर्थः । अतः **परेक्षकाणा**-

स्थलेन व्यभिचार इति दोषो निराकृतः । **न ज्ञानस्य हेतुतयापेक्षित** इति । हेतुत्वं नास्ति, विषयत्वमस्ति । विद्यमानस्थले तु द्वयमप्यस्तीति वाक्यार्थः । **वस्तुतो विद्यमानत्वमेवेति ।** प्रतिभासमानस्वरूपेण विद्यमानस्यापि वस्तुतो विद्यमानत्वं नास्तीति भावः। अयं भावः – केचन धर्मा धर्मिसत्तापेक्षाः । केचन तन्निरपेक्षाः । तत्र च प्रतिभासमानत्वातत्त्वातीतत्वानागतत्वादयो धर्मास्तन्निरपेक्षाः । कारणत्वरूपित्वादयो धर्मास्तत्सापेक्षाः । तत्र धर्मिसत्तासापेक्षैर्धर्मैर्विशिष्टतयावस्थितिरेव वस्तुतो विद्यमानत्वमिति । **व्यावृत्तिश्च स्वालम्बनेनेति ।** न च व्यावृत्तिजनकत्वे आलम्बनस्यासत्यत्वादसत्यात् सत्यसिद्ध्यापत्तिरिति वाच्यम्, व्यावृत्तिधीजनकज्ञानविषयत्वरूपं तदीयतानियामकस्वरूपविशेषरूपं वा व्यावर्तकत्वं तत्र तदाऽविद्यमानस्याप्युपपद्यत इति भावः । **अन्यथाख्यातिपक्षेऽपीति ।** नन्वविद्यमानानामेव दोषवशादालम्बनत्वं तत एव व्यावर्तकत्वं च संभवति, व्यावर्तकत्वस्य हेतुत्वरूपत्वाभावादिति समर्थनेनैव समीहितसिद्धेः किमेतन्निरूपणेनेति चेत् — सत्यम् । आलम्बनत्वमप्यत्यन्तासतो न संभवतीति प्रासङ्गिकतयोपपद्यत इति द्रष्टव्यम् । **क्वचिदर्थात्प्रतिपत्तिरिति ।** दर्पणप्रतिहतनयनरश्मिसंपृक्तादर्थादित्यर्थः । **क्वचित्प्रतिभासादिति ।** स्वाप्नस्थल इति भावः ।

**असतो निरुपाख्यस्येत्यनयोः** पौनरुक्त्यं च(?)परिहरन् पक्षद्वयदूषणपरतया व्याचष्टे – **असतः सद्व्यतिरिक्तस्येत्यर्थ** इत्यादिना । भाष्ये **उपायोपेययो-रित्यादि ।** यद्यपि "अकारादिसत्याक्षरप्रतिपत्तिर्दृष्टा रेखानृताक्षरप्रतिपत्तेः" इति आरम्भणाधिकरणशांकरभाष्यं व्याकुर्वता वाचस्पतिना—"यद्यपि रेखास्वरूपं सत्यम्, तथापि तत् यथासंकेतमसत्यम् । न हि संकेतयितारः संकेतयन्ति, 'ईदृशेन रेखाभेदेनायं वर्णः प्रत्येतव्यः' इति, अपि तु ईदृशो रेखाभेद एवाकार इति । ततश्चासमीचीनात् संकेतात् समीचीनवर्णावगतिः" इत्यनृताक्षरप्रतिपत्तेः सत्याक्षरप्रतिपत्तिहेतुत्वकथनात्र साध्यसाधनयोर्भेदः—तथापि पूर्वदूषण एव तात्पर्यम् । **सिंहावलोकनेनेति ।** ननु वर्णात्मना प्रतीता रेखेति तृतीयपक्ष एव—बुद्ध्यंशहेतुत्वपक्षे दूषणमुक्तम्; वर्णात्मांशे दूषणमुच्यत इत्युपपत्तौ सिंहावलोकनं किमर्थमिति चेत्—अत्र केचित्—वर्णात्मतांशस्य प्रथमपक्षानुप्रविष्टत्वाभिप्रायेण सिंहावलोकनोक्तिरुपपन्नेति वदन्ति । केचित्तु —

**सिंहावलोकनेने**त्येतदंशविकल्पमुखेन ग्रन्थप्रवृत्तिमनभ्युपगच्छतामिदं व्याख्यानान्तरम्। अतो वाशब्दोऽध्याहर्तव्य इति मन्यन्ते। **अविद्यमानवर्णात्मने**त्यत्र अविद्यमानत्वं वर्णात्मकत्वविशेषणं, वर्णस्य विद्यमानत्वेऽपि वर्णात्मताया अविद्यमानत्वमभिप्रेत्य तद्विशेषणतया व्याचष्टे—**अविद्यमानवर्णात्मत्वेनेति**। **रेखागवयादपी**ति भाष्यस्यायमर्थः—रेखायामारोपितेनासत्यगवयेन सत्यगवयप्रतीतिरिति नाभ्युपगन्तव्यम्, रेखायां गवयारोपे प्रमाणाभावात्। अपि तु गवयसदृशरेखां प्रदर्श्य 'एतत्सदृशो गवयः' इति बोधयन्ति। तथैव प्रतिपद्यन्ते च। तच्च सादृश्यं सत्यमेवेति।

( स्फोटवादनिरासः )

**कत्वखत्वादिभेद** इति। अत्रादिपदेनोदात्तत्वानुदात्तत्वतारत्वमन्द्रत्वदीर्घत्वादयो गृह्यन्ते। **शब्दे आरोपित** इति। स्फोटरूपशब्दे आरोपित इत्यर्थः। खत्वादिकमुदात्तत्वादिकं च सर्वं नादगतमेव, स्फोटनादोभयव्यतिरेकेण कत्वाद्याश्रया वर्णा एव न सन्तीति हि स्फोटवादिनां प्रक्रिया। वर्णनित्यत्ववादिनां तु कत्वाद्याश्रयवर्णा नित्याः। तारत्वदीर्घत्वादिकं तु नादगतमिति विवेकः। **अभिव्यक्तिविशेषः सत्य** इति। **अभिव्यक्तिः** ज्ञानम्। अत एवोत्तरत्र **कत्वाद्यालम्बनाभिव्यक्तिविशिष्टरूपेणे**ति वक्ष्यति। ननु दुन्दुभ्यादिः कुतो न व्यावर्त्यत इत्यत्राह—**स त्वनभिव्यक्ते**ति। तस्यापि गकारादित्वेन तद्भिन्नत्वाभावात् एककारेण न व्यावृत्तिरित्यर्थः। **अनुभूतार्थान्तरप्रतीतिहेतुत्वाभावेने**ति। अयं भावः – संस्काराणां साचिव्यं किं पदादर्थप्रतीतौ साक्षात्? उत सर्ववर्णविषयस्मृतिद्वारा? नोभयथापि संस्कारस्य हेतुत्वं संभवति, शब्दार्थानुभवस्य शब्दार्थप्रत्ययस्य वर्णसंस्कारजन्यतया तत्प्रतीतौ न साचिव्यम्। नापि सर्ववर्णस्मृतिद्वारत्वम्; संस्काराणां स्वविषयमात्रस्मारकत्वेन समूहालम्बनस्मृत्यसंभवादिति। अत एवोत्तरत्र वक्ष्यति—**युगपदेकार्थकरत्वं युक्त**मिति। एकार्थावच्छिन्नवर्णसमुदायत्वलक्षणपदत्वपरित्यागेनैकविभक्त्यन्तानेकवर्णसमुदायस्य पदत्वाश्रयणादन्योन्याश्रयणं निरस्तमित्याह—**न चार्थैकत्वादि**ति। **पदैकत्वादर्थैकत्व**मिति। अनुगतप्रवृत्तिनिमित्तरूपार्थकल्पनस्यैकपदप्रयोगानुगत्यधीनत्वादिति भावः। उक्तं च – "एकशब्दप्रवृत्तिनिमित्तत्वादेकसंस्थानत्वं नीलेन्दीवरत्वस्य। खण्डमुण्डयोरेकं तु न तथा, एकशब्दाभावात्" इति। यद्वा घटव्यक्तीनां

नानात्वेन स्वत ऐक्याभावाद्वाचकशब्दैक्यनिबन्धनमेव वाच्यैक्यमिति भावः। **अव्याप्तिर्न स्यादिति**। सुबन्तमात्रस्य वा तिङन्तमात्रस्य वा पदत्वप्रयोजकत्वेऽव्याप्तिः स्यात्। विभक्तित्वेन द्वयोरप्येकीकरणे तु न तथेति भावः। केचित्तु — एकविभक्तीत्यत्र एकपदं व्यर्थम्, विभक्त्यन्तत्वमात्रस्यानतिप्रसक्तत्वात्। 'नीलो घटः' इत्यादिपदसमुदायस्य प्रत्ययग्रहणपरिभाषया विभक्त्यन्तत्वाभावात्। न हि समुदायात् विभक्त्युत्पत्तिः, अन्यथा "सुप्तिङन्तं पदम्" इति पदत्वस्यापि प्रसङ्गात्। समासावयवपदेष्वप्यन्तर्वर्तिनीं विभक्तिमाश्रित्य पदसंज्ञासंभवान्नाव्याप्तिरित्यर्थ इति वदन्ति। सैन्धवादिशब्दानामनेकार्थप्रतीत्युपयुक्तानां पदत्वे न स्यात्। अत आह— **एकव्युत्पत्तिसिद्धेति**। तत्र चानेकार्थप्रतिपादकत्वं व्युत्पत्तिभेदेनेति भावः। अतश्च वाक्यस्यापि संसर्गलक्षणविशिष्टरूपैकार्थप्रत्यायकत्वेनातिप्रसङ्गः परिहृतः। वाक्यस्य विशिष्टरूपार्थप्रत्यायकत्वमाकाङ्क्षादिमत्पदसमभिव्याहारलभ्यम, न व्युत्पत्तिलभ्यमिति द्रष्टव्यम्। **चाक्षुषत्वज्ञाने न चक्षुरपेक्षेति**। यथा चक्षुर्जन्यज्ञानविषयत्वलक्षणचाक्षुषत्वज्ञानं न चक्षुर्जन्यम्, एवं श्रोत्रग्राह्यत्वलक्षणशब्दत्वज्ञानं न श्रोत्रजन्यमित्यर्थः। **चाक्षुषत्वश्रावणत्वादिज्ञानमिति**। ननु श्रावणत्वस्य चाक्षुषत्वस्यानभिषिक्तत्वेऽपि न शब्दत्वं चाक्षुषत्वस्यानाभिषिक्तम्; अपि तु रूपत्वस्यानभिषिक्तम्। ततश्च यथा चाक्षुषत्वाद्रूपत्वं भिद्यते, एवं शब्दत्वं श्रोत्रग्राह्यत्वात् भिन्नं भवितुमर्हति। इतरथा 'शब्दः श्रावणः' इति पुनरुक्तिः स्यादिति चेत्—न; चाक्षुषत्वस्यैव रूपत्वस्वरूपत्वे घटादावपि रूपत्वप्रसङ्गेन रूपत्वस्य चाक्षुषत्वभिन्नत्वेऽपि शब्दत्वस्य श्रोत्रग्राह्यत्वरूपत्वे च(?)बाधकाभावात्। न च श्रोत्रग्राह्यत्वं कत्वादावतिप्रसक्तमिति वाच्यम्, श्रोत्रग्राह्यगुणत्वस्य शब्दत्वरूपत्वे बाधकाभावात्। केचित्तु — रूपत्वमपि चक्षुर्ग्राह्यगुणत्वमेवेति वर्णयन्ति। **व्युत्पन्नशब्दस्मरणपूर्वकमिति**। वस्तुतस्त्वादेः श्रोत्रग्राह्यत्वलक्षणशब्दत्वव्याप्तिमवगतवतः पुंसो व्याप्तिस्मरणादिपूर्वकमेव शब्दत्वानुमितिरित्यर्थः।

(शास्त्रसत्यत्वशङ्कापरिहारः)

**सत्यप्रतिपत्तिहेतुष्विति**। प्रपञ्चसत्यत्ववादिमत इति शेषः। न तु स्वमतानुसारेण; स्वमते सत्यप्रतिपत्तिहेतोर्वेदान्तातिरिक्तस्य कस्याप्यभावादिति द्रष्टव्यम्। भाष्ये — **मिथ्याभूतशास्त्रजन्यज्ञानस्येति**। असति शास्त्रे 'अस्ति

शास्त्रम्' इति भ्रान्तिजन्यायाः प्रतीतेर्भ्रान्तित्वावश्यंभावादित्यर्थः । पूर्वग्रन्थे 'अस्ति शास्त्रम्' इति बुद्धेर्भ्रान्तित्वस्योपपादितत्वात् । इतरथा पूर्वोत्तरग्रन्थयोरुपपाद्योपपादकभावाभावात् पूर्वग्रन्थवैयर्थ्यमेव स्यात् । **मिथ्याभूतशास्त्रजन्यज्ञानस्येत्यादिनैव** चारितार्थ्यादिति द्रष्टव्यम् । **स्तुतिपरत्वाद्यूपादित्यैक्याप्रतिपादनमित्यपसिद्धान्त** इति । ननु - स्तुतितात्पर्यवती श्रुतिः प्रत्यक्षात् प्रबला । आदित्यः यूप इत्यादेः न यूपादित्यैक्ये तात्पर्यम् । स्तुतिपरस्य तत्रापि तात्पर्ये वाक्यभेदप्रसङ्गात् । अतोऽतत्परत्वात् "आदित्यो यूपः" इत्यादेर्न प्रत्यक्षबाधकत्वम् । न चैवं देवताविग्रहादेरपि सिद्धिर्न स्यात्, तात्पर्याभावादिति शङ्कनीयम् — असति मानान्तरविरोधे तात्पर्याभावेऽपि प्रामाण्यं प्रतीयमानार्थे उपपद्यते । देवताविग्रहादौ मानान्तरविरोधाभावात् तात्पर्याविषयस्य विग्रहादेः सिद्धावपि यूपादित्यैक्यस्थले मानान्तरविरुद्धस्य तस्य तात्पर्याभावे न सिद्धिः । प्रपञ्चमिथ्यात्वस्थले षड्विधतात्पर्यलिङ्गसत्त्वान्न प्रत्यक्षविरोधाद्भयमिति हि तत्सिद्धान्त इति चेत् — न । स्तुतिपरस्यार्थवादस्य स्तुतिद्वारभूतार्थेऽवान्तरतात्पर्येऽपि वाक्यभेदाभावात् । इतरथा देवताविग्रहादेरप्यसिद्धिप्रसङ्गात् तात्पर्यविषय एव वेदानां प्रामाण्यमिति सर्वैरपि वैदिकैरभ्युपेतत्वाच्च स्तुतिपरत्वान्न यूपादित्यैक्यप्रतिपादनमित्ययुक्तमेव । अपि तु मानान्तरविरोधेन यूपादित्यैक्यतात्पर्यासंभवात् न यूपादित्यैक्यमित्येव परमा गतिः । ततश्च प्रपञ्चमिथ्यात्वेऽपि मानान्तरविरोधान्न तात्पर्यमिति सिद्धमिति भावः । **असंनिकृष्टेति** श्लोकस्यायमर्थः — "शास्त्रं शब्दविज्ञानादसंनिकृष्टेऽर्थे" इति शास्त्रलक्षणे असंनिकृष्टादेन द्वयं व्यावर्त्यतयाभिप्रेतम् — किं तत्? ताद्रूप्येण परिच्छित्तिः, तद्विपर्ययतः परिच्छित्तिश्च । साधकबाधकप्रमाणाभाव इति यावत् । **प्रमाणान्तरागोचरत्वलक्षणमिति** । प्रमाणान्तराबाधितत्वमित्यर्थः । **इत्यलमप्रतिष्ठितेति** भाष्ये इतिशब्दस्य संनिहितशास्त्रप्राबल्यनिरासपरत्वमुचितमित्यभिप्रयन्नाह - **शास्त्रप्राबल्यनिरसनमिति** । **कुतर्केति** तर्कशब्दस्वारस्यमभिप्रयन्नाह — **यत्तु प्रत्यक्षमिति** ।

## ( श्रुतिघट्टः )

**तत्रापीति** । दृष्टान्तोऽपीत्यर्थः । **विकारो घटत्वाद्यवस्थेति** । ननु पूर्वत्र मृन्मयशब्देन विकारार्थमयडन्तेन यस्य परामर्शः, तस्यैवेहापि

विकारशब्देन परामर्शो युक्तः । ततश्च पूर्वत्र मृन्मयशब्देनावस्थाश्रयस्य परामृष्टतया विकारशब्देनापि धर्मिण एव परामर्शो युक्तः; न त्ववस्थाया इति चेत् — सत्यं पूर्वत्र मृन्मयशब्देनावस्थावतः परामर्शः । इह तु न तत्परामर्शो युज्यते । तथा हि सति कार्यकारणाभेदो नोपपादितः स्यात् । न हि मृत्पिण्डेन कार्यविशेषाय घटः स्पृश्यत इत्येतावता स्पर्शस्पृष्टद्रव्ययोरभेदः सिध्यति । अतो मृन्मयविकारशब्दयोर्भिन्नार्थत्वमेव वक्तव्यम् । अत एव "मृत्तिकेत्येव सत्यम्" इत्यत्राव्यवहितविकारशब्दनिर्दिष्टावस्थाया न परामर्श इति भावः । मृद्द्रव्यं घट इति प्रत्यभिज्ञयेति । अत्र केचित् - इतिशब्दबलात् प्रतीतेः शब्दस्य वा परामृष्टव्यत्वात् मृत्तिकेति ज्ञानमेव सत्यमिति श्रुत्यर्थः । तस्य ज्ञानस्य सत्यत्वे मृद्द्रव्यत्वस्याबाधितत्वं सिद्धमित्युत्तरग्रन्थः फलितार्थकथनपरो द्रष्टव्यः । न च मृन्मयं मृत्तिकेत्येव सत्यं प्रामाणिकं प्रमाणतः प्रतीयत इत्यर्थाश्रयणे को दोष इति वाच्यम्, प्रमाणतो मृत्तिकेति प्रतीयत इति वा, मृत्तिकेत्याकारकं यत् प्रमाणं तेन प्रतीयत इति वा इतिशब्दस्य प्रमाणप्रतीत्यन्यतरान्वयो वक्तव्यः । प्रमाणतः प्रतीयत इति हि निर्देशे कृते तथान्वयप्रतीतिरुपपद्यते । सत्यशब्दात् प्रतीतौ तथा गमकत्वादर्शनादिति वदन्ति । अन्ये तु मृत्तिकेत्येव प्रमाणतः प्रतीयत इत्यत्रेव सत्यपदेऽपि तथावगतेरनुभवसिद्धतया प्रत्याख्यातुमशक्यत्वात् मृन्मयं मृत्तिकेत्येव सत्यं प्रमाणप्रतिपन्नमित्युक्तौ न दोषः । अत एव मृद्द्रव्यत्वेनैव प्रामाणिकमित्यर्थ इति टीकावाक्येऽपि न चोद्यावकाशः । तस्यापि वाक्यस्य गमकत्वादिति वदन्ति । ननु उपादानोपादेयाभेदप्रतिपादनमुखेनासत्कार्यवादे निराकरणीये विकार आलभ्यत इति प्रतिपादनस्यैव सप्रयोजनतया नामधेयस्याप्यालभ्यमानत्वप्रतिपादनं किमर्थमिति चेत् — सत्यम् । घटादिनामापि मृत्पिण्डस्यैवेत्युपपादनाभावे उपादानोपादेयाभेदो न प्रतितिष्ठतीति तदप्युपपादनीयमिति द्रष्टव्यम् । ननु नैयायिकादिभिरपि मृन्मये घटशरावादौ मृत्तिकात्वस्य सत्त्वाभ्युपगमात् अनेनासत्कार्यवादनिरासः कथं फलित इति चेत् - न । "मृत्तिकेत्येव सत्यम्" इति श्रुतेर्न मृत्तिकात्वमात्रप्रतिपादने संरम्भः; किंतु 'तदेवेदं मृद्द्रव्यम्' इत्यभेदप्रत्यभिज्ञया उपादानभूतमृद्द्रव्याभेद-प्रसाधनपरत्वात् । सर्वविज्ञानमुपपन्नमिति शङ्कायामिति । यद्विज्ञानेन सर्वं ज्ञातं भवति, तादृशं वस्तु किमिति आकाङ्क्षायां येन तमादिशेति पृच्छायामित्यर्थः ।

आन्तः शङ्कते—यद्यपि सद्विजातीयमसदिति न विजातीयत्वाकारेणेति। अयं भावः—"इदं सदेव" इत्येवकारेण इदंशब्दनिर्दिष्टे जगति सृष्टेः प्राक् सद्विजातीयत्वं तदन्यत्वं तद्विरोधित्वं वा व्युदसनीयम् । न तु सर्वस्मिन् लोके विजातीयभेदनिषेधः । यथा 'घटः पूर्वाह्णे सदेव' इत्युक्ते एवकारेण घटे सद्विजातीयत्वं वा सदन्यत्वं वा सद्विरोधित्वरूपं वा निषिध्यते, न तु सर्वस्मिन् लोके पटादिविजातीयभेद इति । ननु "सदेव" इत्यनेन सृष्टिप्राक्कालीनसत्ता प्रतीयते चेत्, ब्रह्मकारणत्वमनुपपादितं स्यात् । सच्छब्देन ब्रह्मप्रतिपादने वा मानसंबन्धयोग्यत्वलक्षणसत्तायाः सदित्यनेनाप्रतिपादितत्वादसत्कार्यवादो न निराकृतः स्यादित्याशङ्कयाह — सच्छब्दो हि मानसंबन्धयोग्यतेति । प्रवृत्तिनिमित्तस्य ब्रह्मण्येव पुष्कलत्वादिति भावः । नन्विदानीमपि जगतः सदात्मत्वात् 'अग्रे' इति व्यर्थम् । किंच 'एकमेवासीत्' इत्ययेनैवासत्कार्यव्युदाससिद्धेः 'सदेवासीत्' इति व्यर्थम् किंच इदंशब्देन जगतः परामर्शे तस्य ब्रह्मैक्यासंभवात् सदासीदित्ययुक्तम् । तच्छरीरकब्रह्मपरत्वं चायुक्तम्, अश्रुतवेदान्तं श्वेतकेतुं प्रति इदंशब्दस्य ब्रह्मपर्यन्तबोधकत्वासंभवादिति चेत्—न ; इदं जगत् सृष्टेः प्राक् सदेव सद् ब्रह्मैव सत् एकमविभक्तनामरूपमासीदित्यर्थः । अधुना जगतस्तादृशसद्रूपत्वाभावादग्र इति सार्थकमेव। 'एकमेवासीत' इत्युक्ते अविभक्तनामरूपमासीदिति प्रतीतावपि तादृशब्रह्मात्मकत्वस्यापि प्रतिपिपादयिषिततया सच्छब्दसार्थक्यम् । ननु "सदेवेदं जगत् प्राक् सृष्टेरेकम्" इति वेदार्थसंग्रहश्रुतप्रकाशिकायां व्याख्यातत्वात् कथमेवमिति चेत्—न ; सिद्धस्यैवोद्देश्यविशेषणतया सदित्यस्य सिद्धत्वेन विधेयकोटावेव निवेश्यतया तस्याप्यत्रैव तात्पर्यात् । यद्यप्यश्रुतवेदान्तेन श्वेतकेतुना न तद्वाक्योपक्रमदशायामेवं ज्ञायते, अथापि शरीरात्मभावप्रतिपादनानन्तरमिदंशब्देन जगच्छरीरकं ब्रह्म ज्ञास्यतीति बुद्ध्या, 'सदेव सोम्येदमग्र आसीत्' इत्याचार्येणोपदिष्टमित्युक्ते विरोधाभावात् । ननु घटशरावादि पूर्वाह्णे मृदेवासीत् ; पश्चात् घटादिरूपेणाभवत् ; तस्मान्मृदात्मकमेव घटशरावादीति निर्देशवत् किं न स्यादिति चेत् — न — "अनेन जीवेनात्मनाऽनुप्रविश्य" इत्यादि वाक्यं श्रुतवतः स्वरूपेण ब्रह्मपरिणामत्वशङ्काया अभावेन शरीरात्मभावस्यैव प्रतीत्या इदंशब्देनापि जगच्छरीरकब्रह्मप्रतीतेरेव संभवात् ।

**परतन्त्ररूपविशेषणानामिति**। कालादृष्टादीनामित्यर्थः। उपरितनवाक्यसंगतिमेव दर्शयति — **एकमेवेत्यादिना**। **ब्रह्मणः सर्वदा सत्त्वेनेति**। सच्छब्दप्रवृत्तिनिमित्तपौष्कल्याधारभूतब्रह्माभेदस्य 'सदेवेदम्' इति बोधनात् कार्यस्य कदाप्यसत्त्वशङ्काव्यावृत्तिरित्यर्थः। **वैशेषिकमतनिरासपरमिति**। न च तथा सति, "तद्धैक आहुरसदेवेदमग्र आसीत् एकमेवाद्वितीयम्" इत्यनुवादोऽनुपपन्नः, तैस्तथानभ्युपगमादिति वाच्यम् — शून्यवादनिराकरणेऽपि दोषसाम्यात्। न हि शून्यवादिनैकमद्वितीयं किंचिदभ्युपेतम्, सर्वदा सर्वशून्यत्वस्यैव तेनाभ्युपेतत्वात्। यदि च तद्वाक्यस्यैकत्वाद्वितीयत्वयोर्न तात्पर्यम्, तर्हि वैशेषिकस्यापि तत् तुल्यमिति भावः। **वैशेषिकादिमतनिगमसापेक्षत्वादिति**। ननु "मृत्तिकेत्येव सत्यम्" इत्यत्रैव तन्निराकृतम्। इतरथा एकविज्ञानेन सर्वज्ञानसंभवमभ्युपगम्य, "भगवांस्त्वेव मे तद्ब्रवीतु" इत्युपदेशप्रार्थनानुपपत्तेरिति चेत् — न; मतानुवादपूर्वकं सयुक्तिकं प्रत्याख्यानमित्यत्र तात्पर्यात्। **मृद उत्पन्नस्य मृदात्मकत्ववदिति**। न च सतः कार्यस्यासदुत्पन्नत्वस्यानभ्युपगतत्वात् कथमापादनमिति वाच्यम् — 'जगत् पूर्वमसदासीत्; इदानीं सदासीत्' इत्युक्ते सतोऽसदुपादानकत्वमुक्तं स्यात्, यथा 'घटशरावादिः पूर्वं मृदासीत्, पश्चात् घटादिरासीत्' इत्युक्ते तयोरुपादानोपादेयभाव उक्त एव स्यादिति निश्चित्यैतद् दूषणापादनमिति द्रष्टव्यम्। **कथं निराश्रयावस्थासंभव इत्यर्थ इति**। अयं भावः—यदि प्रकृत्युपादानकस्य महदादेः प्रकृतित्वाभाववत् असदुपादानकस्यापि सतो नासत्त्वप्राप्तिः, सत्त्वावस्थाप्राप्तेरेवासत्त्वावस्थाविरोधित्वादिति—तदा तदपि न संभवति, असतः सत्त्वावस्थाप्राप्तेरेवासंभवान्निराश्रयावस्था कथं लभ्येतेति। **तदात्मकत्वेनैवेति**। "ऐतदात्म्यमिदं सर्वम्" इति पूर्ववाक्ये ऐतदात्म्यम्=एतदात्मकमित्यर्थः; स्वार्थे ष्यञ्। ततश्च, "तत्सत्यम्" इत्युत्तरत्रापि पूर्वनिर्दिष्टवेषविशिष्टस्य परामृष्टव्यतया तदात्मकस्यैव जगतः सत्यत्वसिद्धिरिति भावः। ननु "ऐतदात्म्यम्" इत्यनेनैव जगद्ब्रह्मणोः शरीरशरीरिभावे कथिते "स आत्मा" इति निर्देशवैयर्थ्यमिति शङ्कां परिहरति—**रामानुजं लक्ष्मणपूर्वजं चेतिवदिति**। यद्वा **स त आत्मा इति**। अस्मिन् पक्षे 'स आत्मा,' 'तत्त्वमसि' इत्यनयोः पौनरुक्त्यपरिहारः कथंचिदनुसंधेयः। **तत्पर्यन्ता इति तत्त्वमसीत्यस्यार्थ इति**। तत्त्व-

शब्दादीनां तदर्थपर्यन्तत्वम् , "तत्त्वमसि" इत्यस्य प्रघट्टकस्य फलितार्थ इत्यर्थः; न तु "तत्त्वमसि" इत्यस्यैवार्थ इति मन्तव्यम् , "तत्त्वमसि" इत्यस्य तावदर्थकत्वाभावात् ।

**इगुपधात्क इत्यपवादसूत्रेणेति** । "इगुपधज्ञाप्रीकिरः कः" इत्यपवादसूत्रेणेत्यर्थः । नन्विगुपधलक्षणकप्रत्ययस्य न पचाद्यज्बाधकत्वम् , तथा हि सति देवमेषादिरूपासिद्धिप्रसङ्गात् ; पचादित्वाश्रयणस्य कप्रत्ययबाधकत्वार्थकत्वादिति चेत्—न । भावानवबोधात् । "नन्दिग्रहिपचादिभ्यः" इति सूत्रे "सर्वधातुभ्योऽज्वक्तव्यः" इत्यौपसंख्यानिकस्योत्सृष्टस्याच्प्रत्ययस्य शङ्कितया तस्येगुपधलक्षणकप्रत्ययबाध्यत्वाभिधानेऽदोषात् । औपसंख्यानिकेऽप्यचि 'पचाद्यच्' इति व्यवहारस्य ग्रन्थेषु दर्शनादिति द्रष्टव्यम् ।

**प्रकृत्यर्थः** शासनमिति । अत्र केचिच्चोदयन्ति — यत्तावदुच्यते प्रसिद्धिप्राचुर्यात् प्रकृत्यर्थः शासनमिति ; सत्यमेव तत् । "शासनं विविच्य ज्ञापनम्" इति धातुवृत्तिकृता व्याख्यातत्वादुपदेश एव पर्यवसानम् ; "उपदेशेऽजनुनासिक इत् ," "स्थानिवदादेशोऽनल्विधौ" इत्यादिसूत्रेषु "दिशिरुच्चारणक्रियः" इति महाभाष्योक्तेः । "अथातोऽहंकारादेशः" इत्यादावादेश उपदेश इत्यर्थः । "इदं शास्त्याचार्यः" इति भाष्यस्य 'इदमुपदिशति' इति ह्यर्थः । "तदशिष्यम्" इत्यादौ "अवक्तव्यम्" इति व्याख्यातम् । ततश्चादेशनं शासनमुपदेशनम् । तत्कर्मत्वे च "अनु म एतां भगवो देवतां शाधि" इति ब्रह्मणः सिद्धमिति प्रकृतिप्रत्यययोरविरोधसंभवात् प्रत्ययास्वारस्यानुसरणस्यायुक्तत्वात् । न चानुशासनकर्मत्वेऽपि न शासनकर्मत्वमिति वाच्यम् , "शासु अनुशिष्टौ" इति शासनस्यैवानुशासनरूपत्वात् । ततश्च करणत्वाध्यारोपेण घञ्समर्थनमप्यनुचितम् , आरोपस्यानुचितत्वात् । ननु करणत्वस्य नाध्यारोपः, तस्यापि सत्त्वादिति चेत्—न ; तथा सति सिद्धान्ते प्रत्ययास्वारस्याभ्युपगमस्यायुक्तत्वात् । अत एव 'असिश्छिनत्ति' इत्यादौ सौकर्यातिशयविवक्षया "ब्रह्मदृष्टिरुत्कर्षात्" इतिन्यायेन करणे कर्तृत्वारोपेऽपि न कर्तरि करणत्वारोपसंभवः, तथा सति राजनि भृत्यत्वारोपस्यैवानर्थावहत्वात् । अत एव "साधकतमं करणम्" इति सूत्रे अधिकरणस्थाल्याः तनुकपालतया साधकतमत्व-

विवक्षया 'स्थाल्या पचति' इति प्रयोगमुपपाद्य, 'न चैवं कर्तुरपि करणत्वविवक्षाप्रसङ्गः, भिन्नजातीयत्वात्। सकलसाधनविनियोगकारी खल्वसौ। न हि शतधनो निष्कधनेन स्पर्धितुमर्हती'ति कर्तुः करणत्वविवक्षाभाव उपपाद्यते। किं च करणत्वे विवक्षिते "करणाधिकरणयोश्च" इति परेण ल्युटा बाधितत्वेन घञोऽप्रसङ्गः। न च "हलश्च" इत्यनेन घञः प्रसङ्गः। तत्रापि "संज्ञायाम्" इत्यनुवृत्तेः। न च त्वन्मतेऽपि कर्मणि घञ् न स्यात्, "अकर्तरि च कारके संज्ञायाम्" इति संज्ञायामेव घञो विधानादिति वाच्यम् — "अकर्तरि च" इत्यत्र चकारस्य भिन्नक्रमत्वमाश्रित्यासंज्ञायामप्यस्तीति पदमञ्जर्यादौ समर्थितत्वात्। "संज्ञाग्रहणानर्थक्यं च सर्वत्र घञो दर्शनात्" इति वार्तिककृतोक्तत्वाच्च। किं च घञः करणार्थत्वे, उपक्रम आदेशशब्देन प्रशासिताभिधीयत इति यदभिहितं तद्विरुध्येत, प्रशासनकरणत्वस्यैवाभिहितत्वेन प्रशासनकर्तुरनभिहितत्वात्। यच्चोक्तम्—प्रशासितृत्वमसाधारणमिति। तदपि न, आदेशशब्देन प्रशासनकरणत्वमात्राभिधानेऽपि प्रशासितृत्वानभिधानात्। तदभिधानेऽपि निरुपाधिकप्रशासितृत्वस्यैव मुख्योपदेश्यत्वस्यैव ब्रह्मासाधारणत्वात्। अत एव "ब्रह्मजिज्ञासा" इति सूत्रे 'ब्रह्मणः' इति कर्मणि षष्ठीपरिग्रहात् ब्रह्मण एवाभिधानिकजिज्ञासाकर्मत्वम्, तदुपासनादीनां त्वाक्षेप्यमित्युक्तम्। किंच आदेशशब्दमात्रस्य अतिप्रसङ्गमाशङ्क्य तमित्येवं विशेषणदानादवश्यं तमित्यस्यादेशविशेषकत्वमभ्युपेयम्। यदि ह्यादेशशब्दस्यैव निरुपाधिकप्रशासितृत्वमर्थः, तदा तस्य परमात्मासाधारणत्वात् तच्छब्दो विशेषको न स्यात्। यदपि चोक्तं प्रष्टव्यत्वकथनेनोपदेश्यत्वं सिद्धमिति तत्कथनस्यानपेक्षितत्वात प्रशासितृत्वमेवार्थ इति—तन्न, 'यद्यपि पूर्वं नाप्राक्षम्, अधुना स्वयमेव ज्ञास्यामि' इति बुद्धिं व्युदसितुमुपदेष्टव्यत्वकथनस्यैवापेक्षितत्वात्। अत एव, "तं त्वौपनिषदं पृच्छामि" इत्यादौ प्रष्टव्यस्योपदेश्यत्वलक्षणौपनिषदत्वकथनम्। यच्चोक्तम्—सर्वविज्ञानप्रतिज्ञासिद्ध्यर्थं निमित्तत्वमपेक्षितमिति। तन्न, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाबलादुपादानत्वस्यैव तदन्यथानुपपत्त्या निमित्तत्वस्यापि लाभसंभवेन तस्य पृथगवक्तव्यत्वात्, तदनुपपत्तेर्भवतैवोक्तत्वाच्च। वस्तुतस्तु निमित्तान्तरसद्भावे एकविज्ञानेन सर्वविज्ञानमनुपपन्नमित्युक्तिरप्यसंगता, नित्यविभूत्या अज्ञानेऽप्येकविज्ञानेन सर्वविज्ञानं यथोपपद्यते, कार्यवर्गस्य

ज्ञातत्वात् सर्वशब्दस्येदंकारगोचरबहुभवनसंकल्पपूर्वकसृष्टिमात्रविषयत्वात् — तथा तादृशनिमित्तान्तरसद्भावेऽप्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञा कुतो न संगच्छत इति।

अत्रोच्यते—"एष आदेशः, एष उपदेशः" इत्येवं पृथगुपदिष्टयोः "न वायुक्रिये पृथगुपदेशात्" इति न्यायेनादेशोपदेशयोर्भेदावश्यंभावात् निमन्त्रणामन्त्रणयोरिव, वृक्षवनस्पतिशब्दयोरिव च, स्नेहभक्तिशब्दयोरिव च क्वचिदेकविषये प्रयोगमात्रेणानुभवभेदस्य दुरपह्नवत्वात्। 'आदिशति' इत्युक्ते हि यद्वाक्योल्लङ्घने दण्डा भवति तादृशशब्दप्रयोक्तृत्वं नियमयितृत्वमाज्ञापयितृत्वं प्रतीयते। आदिशतीति व्यवहारः प्रभुविषय एव। अत एव न्यासकारेणादेशोपदेशयोर्भेदो वर्णितः—"आङ्पूर्वो दिशतिर्नियोक्तृप्रयोजनवचनः" इति; "अन्तः प्रविष्टः शास्ता जनानाम्" इत्यादौ तथैव प्रतीतेः। ततश्च प्रकृतिस्वारस्येन नियमनापरपर्यायाज्ञापनरूपार्थे प्रतीते घञ्प्रत्ययस्य कर्तृव्यतिरिक्तकारकमात्रवाचिनो योग्यतावशात् त्वन्मते कर्मार्थकत्ववत् अस्मन्मतेऽपि कारकवाचिनो घञ्प्रत्ययस्य सकलकारकप्रयोक्तृकर्तृलक्षणा समाश्रीयते। प्रष्टव्यवस्तुनस्तादृग्रूपत्वात् असंजातविरोधिमुख्यप्रकृत्यर्थानुग्रहेण जघन्यलक्षणाया आश्रयणीयत्वात्। "पञ्चपञ्चाशतस्त्रिवृतः संवत्सराः" इत्यादावहःपरत्वस्वरसत्रिवृदादिपदमुख्यत्वानुसारेण जघन्यसंवत्सरपदस्यैव सौरचान्द्रमासाद्यनेकार्थसाधारण्येन निश्चयासमर्थस्याजहल्लक्षणाया अभ्युपेतत्वात्। तथा "प्रयाजशेषेण हवींष्यभिघारयति" इत्यादौ प्रयाजशेषप्रातिपदिकानुरोधेन तृतीयायां द्वितीयार्थलक्षणाया आश्रितत्वात्। तथा "प्राणा वा ऋषयः" इत्यादौ ऋषिशब्दानुसारेण बहुवचनश्रुतेः पाशन्यायेन गौणार्थकत्वस्य "गौण्यसंभवात् तत्प्राकृतेश्च" इत्यत्रोपपादितत्वाच्च। नन्वादेशपदस्य प्रशासनापरपर्यायाज्ञापन इवोपदेशे प्रसिद्धिप्राचुर्याभावेऽप्युपदेशार्थकत्वे प्रकृतेः सर्वात्मना मुख्यार्थत्यागाभावात् प्रत्ययस्य त्वन्मते कर्तृलक्षणायां मुख्यार्थत्यागात् कांस्यभोजिन्यायेन जघन्यद्यावापृथिव्यैककपालानुरोधेन मुख्यैन्द्राग्नादीनां प्रसूनबर्हिर्नियमाश्रयणवत्, "एकधा ब्रह्मण उपहरति" इत्यत्र सकृत्त्वसहत्वसाधारणस्यैकधाशब्दस्य भक्षान्तरप्रापकदुर्बलचोदकानुग्रहेण सहत्वार्थत्वस्वीकारवत् "सप्तदश प्राजापत्यान्" इत्यत्र प्रजापतिसंबन्धविशिष्टाविशिष्टान्वययोग्यस्यापि बहुत्वस्यैकपशुनिष्पन्नैकादशावदानप्रापकदुर्बलचोदकानुसारेण विशिष्टान्वयाभ्युपगमेन द्रव्यदेवतासंबन्धा-

क्षिप्तयागभेदाभ्युपगमवच्च जघन्यघञ्प्रत्ययानुसारेण मुख्यादिशेरुपदेशार्थकत्वमेव युक्तम्। प्रकृतेः मुख्यार्थत्यागाभावात्। प्रचुरप्रसिद्धार्थत्यागमात्रं त्ववशिष्यते। तत्तु न दोषाय। अत एव "पत्नय उपगायन्ति" इत्यादौ गीतिशब्दस्य शारीरगाने प्रसिद्धिप्राचुर्ये सत्यपि अशारीरवादित्रादिगानस्यापि गीतिशब्दप्रयोगविषयत्वेन मुख्यार्थत्वात् संनिहितस्य दुन्दुभ्यादिगानस्यैव काण्डवीणादिभिरुपचयं कुर्वत्यः पत्न्यो नर्त्विजां निवर्तिका इति दशमे सिद्धान्तितमिति चेत्—मैवम्; गानशब्दस्य बर्हिराज्याधिकरणन्यायेन गीतिमत्रा वाचित्वात् युक्तं तत्र संनिहितदुन्दुभ्यादिगानवाचित्वम्। इह त्वादेशशब्दस्य क्वचिदपि 'शिष्यो गुरुमादिदेश' इत्यादिप्रयोगाभावेन साधारणोच्चारणाद्यर्थकत्वाभावात् उपदेशातिदेशशब्दयोरिवादेशोपदेशशब्दयोरपि भिन्नार्थकत्वेनादेशशब्दस्योपदेशार्थकत्वे मुख्यार्थत्यागस्यावर्जनीयत्वेन जघन्यप्रत्यय एव लक्षणाया उचितत्वात्। वस्तुतस्तु "उपदेशेऽजनुनासिक इत्" इति सूत्रे "करणाधिकरणयोश्च" इति ल्युटा बाधितस्य घञः, "अकर्तरि च कारके" इत्यनेनाप्रसङ्गमाशङ्क्य, "कृत्यल्युटो बहुलम्" इति घञो भाष्यकृता समर्थितत्वात् तन्न्यायेन कर्तर्यपि तेनैव सूत्रेण घञ्सिद्धौ लक्षणाया अप्रसङ्गात् प्रशासितृत्वार्थकत्वमेव युक्तमिति युक्तमुत्पश्यामः।

**तस्य तावदेव चिरमिति।** **तस्य** सद्विद्यानिष्ठस्य। **तावदेव चिरम्**—तावानेव विलम्बः, यावत्प्रारब्धकर्मकृतदेहान्न विमोक्ष्यते। **अथ** अनन्तरं ब्रह्म संपत्स्यत इति तदर्थः। **अर्थवादश्च लब्ध इति।** "पारिप्लवार्थाः" इत्यधिकरणे विद्यासंनिधिपठितानां "श्वेतकेतुर्हारुणेय आस" इत्याद्याख्यायिकानां तदर्थवादतया तच्छेषत्वस्य स्थापितत्वादिति भावः। यद्यप्ययमर्थवादो न सविशेषत्वैकान्तः, तथापि लिङ्गान्तरेण सविशेषत्वतात्पर्ये निश्चिते अर्थवादस्यापि तदेकान्तत्वं सिध्यतीति भावः। द्वितीयेंऽशे सप्तमे यमस्य स्वपुरुषं प्रति वचनम्—

"कटकमकुटकर्णिकादिभेदैः कनकमभेदमपीष्यते यथैकम्।
सुरपशुमनुजादिकल्पनाभिर्हरिरखिलाभिरुदीर्यते तथैकः॥
क्षितितलपरमाणवोऽनिलान्ते पुनरपि यान्ति यथैकतां धरित्र्याम्।
सुरपशुमनुजादयस्तथान्ते गुणकलुषस्य सदा(ना)तनेन तेन॥"

इति। **तदर्थैकविषयत्वादिति।** ऐदंपर्येण प्रवृत्तत्वादिति भावः।

( परविद्यायाः सविशेषविषयत्वम् )

अव्ययत्वस्य दोषाभावरूपस्य कथं भाष्ये कल्याणगुणत्वेन निर्देश इत्याशङ्क्याह—**दोषविरोधित्वं नाम गुण इत्यभिप्रायेणेति**। **पूर्ववदर्थ** इति। सगुणब्रह्मव्यावृत्तिरित्यर्थः।

**व्यावर्त्यानेकत्वादिति**। व्यावृत्तिप्रतियोगिनामनृतजडपरिच्छिन्नानामनेकत्वेनेत्यर्थः। **पदानां पर्यायत्वप्रसङ्गादिति**। 'प्रवृत्तिनिमित्तभेदाभावेन' इति उत्तरवाक्यस्थमिहापि काकाक्षिन्यायेन संबध्यते। ननु "कुम्भाद्यनुगता सत्ता परजातिः सत्यपदप्रवृत्तिनिमित्तम्। अन्तःकरणवृत्त्युपधानलब्धभेदचिदानन्दानुगते ज्ञानानन्दत्वे अपरजाती। एवं च सत्यज्ञानानन्दशब्दानां लक्ष्यार्थाभेदेऽप्युक्तजातिवाचित्वान्न पर्यायता" इति कल्पतरूक्तेर्न पर्यायत्वमिति चेत्—न; कुम्भाद्यनुगतसत्तायाः सत्यशब्दवाच्यत्वे सत्यत्वस्यातिप्रसक्तस्य ब्रह्मलक्षणत्वाभावप्रसङ्गात्। अभ्युपगम्यते च त्वया सत्यत्वस्य ब्रह्मलक्षणत्वम्। सत्यमिथ्यार्थानुगतसत्तासामान्यासंभवाच्च। तस्यानृतसाधारणतयानृतव्यावृत्त्यसिद्धेश्च। कालत्रयाबाध्यत्वरूपं परमार्थिकसत्त्वं ब्रह्मणि श्रौतमिति त्वत्सिद्धान्तव्याकोपप्रसङ्गाच्च। धर्मिसमसत्ताकभेदं विना औपाधिकभेदमात्रेणाकाशत्वादेरिव ज्ञानत्वानन्दत्वयोरपि जातित्वायोगाच्च। ज्ञानत्वादेः धर्मिसमसत्ताकभेदवदुपहितचैतन्यवृत्तित्वे शुद्धलक्षणत्वायोगाच्च। एतेन सत्यादि(?)विशिष्टशबलब्रह्मवाचिनां सत्यादिशब्दानां शुद्धब्रह्मणि लक्षणेति न पर्यायत्वमिति निरस्तम्। अनृतास्वप्रकाशपरिच्छिन्नरूपे शबले सत्यत्वादेरयोगात्। योगे वा तस्यैवानृतास्वप्रकाशपरिच्छिन्नव्यावृत्तिः स्यात्। न तु सत्यत्वाद्यनाश्रयस्य शुद्धस्य। तस्मात् सत्यत्वादीनां शुद्धादन्यत्रासंभवात् सत्यादिवाक्यस्य च लक्षणया अखण्डार्थत्वे शुद्धेऽपि तदसिद्धेः सत्यत्वादीनामत्यन्तासत्त्वेन तद्भेदमादायापर्यायत्वस्य दुःसमाधानत्वात् (दुःसाधत्वात् ?) पर्यायत्वं सिद्धमित्यर्थः। **उपलक्षणतया विशेषणतया वेति**। किं व्यावृत्तीनां वाक्यार्थीभूतब्रह्मप्रतीत्युपयुक्तपदार्थप्रतीतिविषयत्वमात्रमेव, उत वाक्यार्थप्रतीतिविषयत्वमप्यस्तीति विकल्पार्थः। **उपलक्ष्यात् बहिर्भूतमि**त्यस्याप्ययमेवार्थः। न च—अवच्छेदकत्वं विशेषणत्वोपलक्षणत्वातिरिक्तमेव। 'कर्णशष्कुल्यवच्छिन्नं नभः श्रोत्रम्' इत्यत्र कर्णशष्कुल्या विशेषणत्वे तस्या अपि श्रोत्रत्वप्रसङ्गात्; विशेष्यान्वयिनो विशेषणा-

न्वयित्वनियमात्। नाप्युपलक्षणत्वम्, कदाचित् कर्णशष्कुल्युपलक्षितस्यापि नभसः श्रोत्रत्वेऽतिप्रसङ्गादिति वाच्यम्—तत्राप्युपलक्षणकोटावेव निवेशसंभवात्। विद्यमानकर्णसंयोगस्योपलक्षणत्वेन दोषाभावात्। **उपलक्ष्यात् बहिर्भूत**मिति। अयं भावः—किं स्वरूपप्रतिपत्त्यर्थं ज्ञानादिपदम्? उत ज्ञानत्वादिप्रतिपत्त्यर्थम्? नाद्यः, पूर्वप्रतीतत्वात्। न द्वितीयः, उपलक्षणत्वव्याघातादिति। **वाक्यार्थाभिधानदशायां सर्वैः पदै**रिति। सर्वैः पदैः वाक्यार्थाभिधानदशायामित्यन्वयः। यद्वा **सर्वैः पदैः एकज्ञानजनकत्वेन**=एकज्ञानजननेनेत्यर्थः। अतो नान्वयानुपपत्तिरिति द्रष्टव्यम्। ननु युगपदभिधाने श्रुतिवाक्यादिषु बलाबलविभागनिर्णयोऽसंगत एव स्यात्; वाक्यापेक्षया पदश्रुतेः प्राबल्यम्; पदश्रुत्यपेक्षया प्रत्ययश्रुतेरिति व्यवस्था दत्तजलाञ्जलिः स्यादित्यस्वरसादाह—**क्रमेणाभिधानेऽपी**ति। **क्रमेणाभिधानानभ्युपगम** इति। क्रमेणाभिधानानभ्युपगमवादिपक्ष इत्यर्थः। **युगपत्प्रतिपादनेऽपि नापैती**ति। उद्देश्योपादेयभावे हि तद्वाक्यज्ञातत्वाज्ञातत्वे अप्रयोजके। अपितु तद्वाक्यप्रवृत्तेः प्राक् मानान्तरावगतमनूद्यते; अप्राप्तं हि(?) विधीयत इत्येव हि विवेक इति भावः। पौर्वापर्यस्योद्देश्योपादेयलक्षणत्वाभावे कथमुद्देश्योपादेयविभागज्ञानमित्याशङ्क्याह—**एकेन वाक्येने**ति। **परामर्शदशायां हि संभवत्येवे**ति। ननु ज्ञातत्वाज्ञातत्वलक्षणोद्देश्योपादेयविभागज्ञानं न वाक्यार्थप्रतीतावुपयुक्तम्, येन वाक्यार्थप्रतीतेः प्राक् परामर्शदशायां तदवगतिः समर्थनीया स्यादिति चेत्—न; "ग्रहं संमार्ष्टि" इत्यादौ ग्रहं संमृज्यात्, एकं संमृज्यात्, यत् संमृज्यात् तदेकमित्यादिवचनव्यक्तिनिरूपणाभावे निर्विचिकित्सवाक्यार्थप्रतीतेरनुदयेन न्यायसंपादितवचनव्यक्तिपरामर्शानन्तरभावित्वाद्वाक्यार्थप्रतीतेः। अत एवोक्तम् "न्यायसंपादितव्यक्ति पश्चाद्वाक्यार्थबोधकम्" इतीति भावः। **विशेष्यमात्रैक्यपरत्वात् समानविभक्ते**रिति। अयं भावः—यदुक्तं विशिष्टैक्यप्रतिपादनं नेति, तदिष्टमेव; विशिष्टैक्यप्रतिपादनस्यानभ्युपगमात्। न च विशेष्यैक्यमात्रप्रतिपादनं परस्यापीष्टमिति वाच्यम्, विशेषणान्वयस्यापि प्रातिपदिकावगतस्यात्यागात्। एकस्मिन् विशेष्ये "एकस्य द्वयम्" इति न्यायेन प्राप्तयोर्विशेषणैकत्वयोरपरित्यागादिति। **व्युत्पत्तिश्च प्रत्यक्षमूले**ति। न तु स्वर्गादिशब्दव्युत्पत्तिवत् श्रुतिमूलेत्यर्थः।

**प्रत्यक्षं च विशेष्यैक्यमेवावगमयतीति।** 'दण्डी, कुण्डली' इत्यादौ विशेषणविभक्तेर्भिन्नविशेषणाश्रये एकस्मिन्नेव विशेष्ये पूर्वपूर्ववृद्धव्यवहारं प्रत्यक्षीकृत्य तथैव व्युत्पत्तेर्ग्रहात्। इतरथा विशेषणविभक्तेरभेदार्थकत्वमपि त्याज्यं स्यात्। न हि विशेषणविभक्तिरैक्यपरेत्यत्र पूर्वपूर्ववृद्धव्यवहाराधीनव्युत्पत्तिमन्तरेणान्यन्निमित्तमस्तीति भावः। **विशेष्यभेदकत्वं प्रत्यक्षेण तत्रापोद्यत इति चेदिति।** प्रत्यक्षागोचरे ब्रह्मणि विशेषणभेदप्रयुक्तो विशेष्यभेदो दुर्वार इति भावः। **धर्मिवाचकपदैक्यात् समानविभक्तिनिर्देशाच्चैक्यप्रतीतेरिति।** इदमुपलक्षणम्—विशेषणभेदे विशेष्यभेद इत्युत्सर्गः, 'देवदत्तः श्यामो युवा' इत्यादावदर्शनात्। 'खण्डो मुण्डः' इत्यादौ विरुद्धत्वात् भेदकत्वम्। अविरुद्धं त्वभेदकमेव। विशेषणानां भेदकत्ववादस्तु विशेषणानाश्रयापेक्षया, न तु विशेषणान्तराश्रयापेक्षयापि। न हि 'नीलमुत्पलम्' इत्यादौ नैल्यं दीर्घादपि व्यावर्तयतीत्यपि द्रष्टव्यम्। **यच्चोक्तं समानविभक्तीति।** न च समानविभक्त्या ऐक्यावगमे परस्याखण्डार्थत्वभङ्गप्रसङ्गात् परस्य कथमियमाशङ्का घटतामिति वाच्यम्, 'एकप्रातिपदिकार्थमात्रनिष्ठत्वमखण्डार्थत्वम्' इत्यनेन प्रातिपदिकार्थान्तरसंबन्ध एव व्यावर्त्यते; न तु विभक्तिसंबन्धोऽपीति मन्यमानस्य शङ्कासंभवादिति ध्येयम्। **अनतिरिक्तपक्षे हेत्वसिद्धिरिति।** समानविभक्त्यवगतैक्यरूपहेत्वसिद्धिरित्यर्थः, ऐक्यावगमविरोधरूपहेत्वसिद्धिरित्युत्तरत्रोपसंहारादिति द्रष्टव्यम्। अशक्यासदृशान्वयप्रतियोग्युपस्थितिर्वा शक्यसंबन्धो वा लक्षणा शक्ये न संभवतीत्यभिप्रेत्याह—**अलाक्षणिकत्वेऽपीति। विमतं वाक्यमखण्डार्थपरमित्यादि।** एतेन—'सत्यादिवाक्यमखण्डार्थनिष्ठं लक्षणवाक्यत्वात्, तन्मात्रप्रश्नोत्तरत्वाद्वा प्रकृष्टप्रकाशश्चन्द्र इति वाक्यवत्' इत्यनुमानं प्रमाणम्। 'नीलमुत्पलम्' इत्यादिसमानाधिकरणवाक्यानां लक्षणवाक्यत्वाभावान्नातिप्रसङ्ग इति निरस्तम्; असाधारणरूपलक्षणवाक्यत्वस्य सखण्डार्थत्वेनैव व्याप्तेः। कर्मकाण्डस्यापि तन्मात्रप्रश्नोत्तरत्वेनाखण्डार्थत्वप्रसङ्गात; 'प्रकृष्टप्रकाशश्चन्द्रः' इत्यत्र व्यावर्तकासाधारणप्रश्नोत्तरत्वेन दृष्टान्तासिद्धेश्चेत्यपि द्रष्टव्यम्। **यदि च भावरूपखण्डार्थप्रतिपादनासमर्थमिति प्रतिज्ञेति।** ततश्च प्रतिज्ञावाक्यस्य खण्डार्थत्वाभावरूपखण्डार्थवैशिष्ट्यप्रतिपादनसामर्थ्येऽपि भावरूपखण्डार्थप्रतिपादनासामर्थ्यान्न

व्यभिचार इति भावः । **प्रातिपदिकेनैव विशेषणान्वयस्येति ।** प्रातिपदिकसारितयोर्विशिष्टयोर्विभक्त्या ऐक्यमात्रप्रतिपादनादित्यर्थः; न तु नीलप्रातिपदिकेनोत्पले नीलत्वान्वय इति मन्तव्यम्; तथा हि सति उत्पले नीलत्वान्वयस्य नीलप्रातिपदिकेनैव सिद्धेर्विभक्त्या ऐक्यबोधनस्य वैयर्थ्यापातादिति द्रष्टव्यम् ।

**अनेन शङ्काद्वयं परिहृतं भवतीति ।** कारणपरत्वप्रतिपादकेन **सिसृक्षोरिति** पदेन साक्षात्पूर्वपक्षिचोद्यनिरासः । उपादानकारणत्वं "सदेव सोम्येदमग्र आसीदेकमेव" इति प्रतिपादितमिति भाष्यखण्डेन पार्श्वस्थचोद्यनिरास इति भावः । **स्वनन्यवस्तुनिषेधपरमद्वितीयपदमित्यर्थ इति ।** अत एव शाङ्करोपनिषद्भाष्येऽपि, "अद्वितीयमिति; मृद्व्यतिरेकेण मृदो यथान्यत् घटाद्याकारेण परिणमयितृ कुलालादि निमित्तकारणं दृष्टम्, तथा सद्व्यतिरेकेण सतः सहकारि कारणं द्वितीयं वस्त्वन्तरं प्राप्तं प्रतिषिध्यते—अद्वितीयमिति । नास्य द्वितीयं वस्त्वन्तरं विद्यत इत्यद्वितीयम्" इति निमित्तान्तरनिषेधपरतयैव व्याख्यानम् । किंच "प्राक् सृष्टेरेकमद्वितीयं सदेवासीत्" इति सृष्टिप्राक्कालपरतया परैरेव व्याख्यातत्वेन सृष्टिप्राक्कालेऽद्वितीयत्वमात्रेण कथं मिथ्यात्वप्रसक्तिरित्यपि द्रष्टव्यम् ।

(निर्गुणवाक्यविरोधपरिहारः)

किं ज्ञानत्वात् ज्ञानानाश्रयत्वमुच्यते, उत एकजातीयद्रव्ययोर्नियतधर्मधर्मिभावानुपपत्तेरिति विकल्पे, प्रथमस्य दूषणं **ज्ञातुरेव ज्ञानस्वरूपत्वादिति** भाष्यम्—ज्ञातुरपि ज्ञानस्वरूपत्वसंभवादिति तस्यार्थः । द्वितीयस्य तु दूषणं **ज्ञानस्वरूपस्यैवे**त्यादिभाष्यम् । **ज्ञातृत्वमेव हि सर्वाः श्रुतयो वदन्तीति** भाष्यं तु प्रथमविकल्पदूषणस्योपपादकं तच्छेषभूतमिति प्रथमव्याख्या । अस्यां च व्याख्यायाम्, **ज्ञातृत्वमेव हीति** भाष्यस्य **ज्ञातुरेव ज्ञानस्वरूपत्वादिति** व्यवहितभाष्योपपादकत्वमाश्रयणीयम्; एवकारस्य अप्यर्थत्वं च क्लिष्टमित्यस्वरसो द्रष्टव्यः । द्वितीयव्याख्यायां तु पूर्ववदेव विकल्पमुखेन प्रवृत्तत्वं समानम् । तत्र **ज्ञातुरेवे**त्यादिभाष्यस्यायमर्थः—ज्ञातृशब्दो भावप्रधानः पञ्चम्यन्तः । एवकारश्च यत् ज्ञातृत्वं त्वया ज्ञानत्वविरुद्धतयोपन्यस्तम्, तदेव ज्ञानत्वसाधकमिति स्फोरणार्थः । ज्ञानत्वाभावव्यापकाभावप्रतियोगितया ज्ञातृत्वस्य न तद्विरुद्धत्वमिति । अस्मिन् पक्षे **ज्ञातृत्वमेव हि सर्वाः श्रुतयो वदन्तीति** भाष्यं

ज्ञातृत्वस्य श्रौतत्वप्रतिपादनद्वारा तद्दृढीकरणार्थम् । अस्यां च व्याख्यायां भावप्रधानतयानिर्देशाद्याश्रयणं क्लिष्टमित्यस्वरसो द्रष्टव्यः । तृतीयव्याख्यायां तु **ज्ञातुरेवे**त्यादिभाष्यस्य ज्ञातुरेव सतो ज्ञानस्वरूपत्वाविरोधादित्यर्थः । इदं च भाष्यं न विकल्पकोट्योरन्यतरनिरासकम् ; अपि त्वविरोधप्रतिज्ञामात्रपरम् । किं ज्ञातुर्ज्ञानानाश्रयत्वं सजातीययोर्धर्मधर्मिभावाभावादुच्यते, उत ज्ञानत्वात् ज्ञानानाश्रयत्वमिति विकल्प्य प्रथमं प्रतिवक्ति — **ज्ञानस्वरूपस्यैवेति** । द्वितीयं प्रतिवक्ति—**ज्ञातृत्वमेव** हीति इति विवेको द्रष्टव्यः । **पूर्ववदभिप्राय** इति । 'किं व्याप्त्या उच्यते, उत श्रुत्या' इत्यादीत्यर्थः । **ज्ञातृत्वं यथा फलितं भवतीति** । "तमीश्वराणाम्" इत्यादिश्रुतावित्यर्थः । फलितत्वप्रकारश्चोत्तरत्र स्पष्टयिष्यते । **ज्ञानस्य सर्वविषयकत्वमिति** । "यः सर्वज्ञः सर्ववित्" इत्यत्र ज्ञानस्य सर्वविषयत्वम्, "तदैक्षत" इति समष्टयुपयोगित्वम्, "सेयं देवतैक्षत" इति व्यष्टयुपयोगित्वम्, 'सृजे' इत्युत्तमपुरुषेणात्मसंबन्धित्वं च दर्शितमित्यर्थः । **कामप्रदत्वं चेति** । कामितार्थज्ञानाभावे तत्प्रदत्वासंभवादिति भावः । देवतात्वं कर्माराध्यत्वम् । आराधना महनीयप्रीतिहेतुभूता क्रिया । ततश्च प्रीतिरूपज्ञानवत्त्वं सिध्यति । **पतित्वं शेषित्वमिति** । शेषिच्चेतनत्वमित्यर्थः, प्रयाजादिशेषिदर्शपूर्णमासादौ पतित्वव्यवहाराभावात् । अतो ज्ञातृत्वसिद्धिरिति भावः । **द्वितीयविशेषपर्यवसायित्वं सूचित**मिति । ततश्च "न तस्य कार्यं करणं च" इत्याद्यंशस्यापि प्रकृतोपयोगित्वमस्तीति भावः । **विशेषविधानं विशेषनिषेधश्चेति** । "अपहतपाप्मा" इत्यादिना विशेषविधानमित्यर्थः । **वैयर्थ्यपरिहाराय संकोचश्चेत् गोबलीवर्दन्याय** इति । अत्रोपात्तविशेषव्यतिरिक्तविषय इत्यनुषज्यते । **उपात्तविशेषविषये तस्य संकोच** इति । न च—अयं छागपशुन्याय एव ; उत्सर्गापवादन्याय एव हि सामान्यविशेषन्यायः । एवमेव व्यवहारदर्शनादिति वाच्यम्—सामान्यशब्दस्य विशेषातिरिक्तविषयत्वमादायोत्सर्गापवादन्याये सामान्यविशेषन्यायशब्दप्रवृत्तिवत् सामान्यवाचिशब्दस्य विशेषपर्यवसानमादाय छागपशुन्यायेऽपि सामान्यविशेषन्यायशब्दव्यवहारे दोषाभावात । अत्र गोबलीवर्दन्यायकथनं शिष्यानुग्रहार्थं प्रसङ्गात् कृतमिति द्रष्टव्यम् । ननु गुणसामान्यविधानं श्रुतिषु न दृश्यत इति कथमुच्यते, "यः कालकालो गुणी सर्वविद्यः" इत्यादौ तथा दर्शनादित्याशङ्क्याह—**दोषसमभिव्याहृतेति** । दोषाभावसमभिव्याहृतेत्यर्थः । अत्र

हि कालकाल्यत्वलक्षणदोषाभावरूपाकालकाल्यत्वसमभिव्याहृतस्य गुणशब्दस्य गुणविशेषपरत्वेन गुणसामान्यविधानासिद्धेरभ्युपगमवाद एव शरणमिति भावः। **स्मृतिवचनाभिप्रायेण सगुणवाक्यानामित्युक्त**मिति। अत्र च वाशब्दोऽध्याहर्तव्यः, वचनाभिप्रायेण वा सगुणवाक्यानामित्युक्तमित्यर्थः। यद्वा कथमत्यन्तानुपलभ्यमानस्य गुणसामान्यविधानस्याभ्युपगम इत्याशङ्कयाह- **वर्णायुतैरित्यादि**। **स्मृतिवचनाभिप्रायेणे**ति। एताभिः स्मृतिभिरेतत्तुल्यगुणसामान्यविधायकश्रुत्यनुमानेन **सगुणवाक्याना**मित्युक्तमित्यर्थः। **दोषप्रतिपक्षवचन** इति। (गुणदोष इत्यत्रैव) "गुणदोषौ" इत्यत्रैव दोषप्रतिद्वन्द्विगुणसामान्यपर उपादेयसामान्यपर इत्यर्थः। **प्रकरणवशाच्छागपशुन्यायेने**ति। ततश्च स्मृतिगतानामपि सामान्यवचनानां विशेषपर्यवसानस्यापेक्षितत्वादेतत्संग्रहार्थं भाष्ये **सगुणवाक्याना**मित्युक्तिरुपपद्यत इति भावः। **अत्रायमभिप्राय** इति। भाष्ये **सगुणनिर्गुणवाक्ययोर्विरोधाभावादि**ति वाक्यं समाप्तम्। **अन्यतरस्य मिथ्याविषयताश्रयणमपि न युक्तमि**ति वाक्यान्तरम्। अत्र 'विरोधाभ्युपगमे' इति शेषः पूरणीयः। अपिशब्दश्च भिन्नक्रमः। अतः विरोधाभ्युपगमेऽप्यन्यतरस्य मिथ्याविषयताश्रयणं न युक्तमित्यर्थः सिध्यतीति भावः। अतश्च **पूर्वं विरोधो नास्तीति परिहृत**मित्याद्युत्तरग्रन्थोऽपि संगतः। इतरथा एकवाक्यत्वे पूर्वमित्युक्तेरसंभवात्। यद्वा **अत्रायमभिप्राय** इत्यपिशब्दोऽध्याहर्तव्यः। 'पूर्वम्, इदानीम्' इति पदद्वयमप्यविवक्षितम्। वस्तुस्थितिमनुरुध्य विरोधो नास्तीत्युक्तम्; विरोधसत्त्वेऽपि नास्माकं क्षतिरित्यर्थः। **उभयोरप्यपच्छेदनियमो नास्ती**ति। अन्यतरमात्रापच्छेदस्यापि संभवादिति भावः। **प्रयोगावधिकविरोध** इति। अपच्छेदद्वयनिमित्तकनैमित्तिकप्रयोगद्वयस्य युगपदनुपसंहरणीयतया शास्त्रयोर्विरोधः; अतश्च स कादाचित्क इति भाव। **अनियतविरोधपौर्वापर्यविषय** इति। उक्तं हि—

"पौर्वापर्यं विरोधश्च पूर्वाप्रामाण्यमेव च।
नियमान्नास्ति तत्रासावपच्छेदनयो भवेत्॥"

इति। ननु प्रत्यक्षविरुद्धश्रुत्यनुमानं न प्रवर्तत इति विरोधाधिकरणन्यायः। स नात्र प्रवर्तते। यदि प्रत्यक्षानुमानवत् शीघ्रमन्थरगामित्वसामान्यात् सगुणनिर्गुणवाक्ययोस्त-

द्विषयत्वम् , तर्हि निर्गुणवाक्यस्य स्मृतिवदप्रामाण्यमेव स्यात् । यदि चाप्रामाण्यमिष्टम् , तर्हि अपच्छेदन्यायो वा किमिति न प्रवर्तते ? अपच्छेदन्यायस्य नियतपौर्वापर्यविषय-प्रवृत्तौ सर्वात्मनाऽप्रामाण्यप्रसङ्गभयाद्धि अपच्छेदन्यायस्याप्रवृत्तिरुच्यते । अतः श्रुति-विषये न विरोधाधिकरणन्याय इत्यस्वरसादाह—**यद्वा मा भूदिति । उपक्रमाधि-करणन्याय एवेति** । " प्रजापतिर्वरुणायाश्वमनयत् । स स्वां देवतामार्च्छत् । स पर्यदीर्यत । स एतं वारुणं चतुष्कपालमपश्यत् । तन्निरवपत् " इत्युपक्रम्य, उपसंहारे श्रूयते—" यावतोऽश्वान् प्रतिगृह्णीयात् तावतो वारुणांश्चतुष्कपालान्निर्वपेत् " इति । तत्र उपक्रमेऽर्थवादेऽश्वदातुः प्रजापतेर्वारुणेष्टिः प्रतीयते ; उपसंहारे च प्रतिग्रहीतुः । द्वयोर्विरोधे सति

" गुणत्वादनुवादत्वादर्थवादस्य लक्षणा ।
विध्युद्देशो जघन्योऽपि स्वार्थहानिं न गच्छति ॥ "

इति पूर्वपक्षे प्राप्ते, गुणभूतस्याप्यर्थवादस्यासंजातविरोधित्वेन प्रबलत्वाद्विध्युद्देशस्य प्रधानत्वेऽप्यलब्धात्मकत्वात् प्रधानभूतो विध्युद्देशः स्वयमलब्धात्मा लब्धात्मानमर्थवादं प्रक्रमस्थं बाधितुमसमर्थः स्वयमेव तदानुगुण्यं भजत इति, प्रतिगृह्णीयादित्यस्य प्रतिग्राहयेदित्येवं णिजर्थमन्तर्भाव्य दातुरेवेष्टिरिति सिद्धान्तितम् । ततश्च सगुण-वाक्यस्य भेदग्राहिप्रत्यक्षस्य वा प्राक् प्रवृत्तत्वेनोपक्रमाधिकरणन्याय एव प्रवर्तत इत्युपक्रमनयः । **सत्तया ज्ञायमानतया वेति** । ननु — ' रजतम् ' इति ज्ञानस्या-प्रामाण्यशङ्कास्कन्दितत्वात्तदनास्कन्दितज्ञानस्यैव विपरीतज्ञानप्रतिबन्धकत्वात् ' नेदं रजतम् ' इति ज्ञानोत्पत्तौ न विरोधः । न चाप्रामाण्यशङ्काया अपि विषय-संशयपर्यवसन्नतया तस्याप्यनुत्पत्तिः शङ्कनीया, अप्रामाण्यशङ्कासामग्र्याः फलबला-दुत्तेजकत्वकल्पनादित्येतावतैव परिहारसंभवात् व्यर्थोऽयं प्रपञ्च इति चेत्, शिष्यशिक्षार्थतया प्रपञ्चनोपपत्तेः । न च सगुणत्वज्ञाने तद्विरुद्धनिर्गुणत्वज्ञानस्यो-पक्रमाधिकरणन्यायेनानुत्पादे षोडशिग्रहणप्रतीतौ तद्विरुद्धाग्रहणप्रतीतेरनुदयप्रसङ्गः ; तथा अपच्छेदस्थलेऽपि पूर्वविरुद्धप्रतीत्यनुत्पादप्रसङ्ग इति वाच्यम् — उपक्रमाधि-करणन्यायस्यैकवाक्यतास्थल एव प्रवृत्तेः ; ग्रहणाग्रहणादिस्थले तु तदभावात् । न च सगुणनिर्गुणवाक्ययोरप्येकवाक्यता नास्तीति वाच्यम् —

"एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा ।
कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च ॥"

इत्यादावेकवाक्यत्वप्रतीतेः तत्तुल्यत्वाच्च निर्गुणवाक्यान्तरस्यापि न तद्विरुद्धार्थप्रतीतिजनकत्वमिति भावः । **इदं रजतमिति परामर्शसापेक्षत्वादिति** । 'इदं रजतम्' इति ज्ञानस्य, 'नेदं रजतम्' इति ज्ञानोपजीव्यत्वादुपजीव्यविरोधेन कथं तद्विरुद्धोत्पत्तिरिति शङ्कार्थः । **शुक्तित्वविषया ह्युत्तरप्रमितिरिति** । इदमुपलक्षणम्—रजतत्वाभावविषयत्वेऽपि 'इदं रजतम्' इति ज्ञानस्य प्रतियोगिविषयत्वमात्रांश उपजीव्यत्वेऽपि पुरोवर्तिनि रजतविषयत्वांशेऽनुपजीव्यत्वेन तदभावावगाहने दोषाभावात् । उदीयमानमिति पाठे "इण् गतौ" इति धातो रूपमिति द्रष्टव्यम् । **आनन्दं ब्रह्मण इत्यादितात्पर्यलिङ्गप्राचुर्यादिति** । ब्रह्मापेक्षयापि तद्गुणभूतानन्दवेदनस्यैव फलवत्त्वावेदनेन श्रुतेर्ब्रह्मानन्दे तात्पर्यावगतेरिति भावः ।

(आनन्दवल्ल्याः सगुणविषयत्वम्)

**पर्यवसितं युक्तमिति पाठः** । पर्यवसानं युक्तमित्यर्थः । पर्यवसितुं युक्तमिति क्वचित् पाठो दृश्यते । तत्र "असु क्षेपणे" इत्यस्मात् अवपूर्वात् "वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः" इति अवशब्दान्तलोपे तुमुन्प्रत्यये सति कथंचित् निर्वाहो द्रष्टव्यः; "षो अन्तकर्मणि" इत्यस्मात् तुमुन्प्रत्यये तस्य कित्त्वाभावात् "द्यतिस्यतिमास्थाम्" इतीत्वप्राप्तेरभावात् । अत एवानन्दमयाधिकरणे वक्ष्यत्याचार्यः, "पर्यवस्यन्तः पर्यवसातुं प्रवृत्ताः" इति । **नित्यनवं यथा भवति तथेति** । युवा चासावध्यायकश्चेति समासः । अध्यायकस्य च युवत्वमध्ययनद्वारा पर्यवस्यतीति भावः । **आशुतरक्रिय** इति आशुतरक्रियावति वर्तमानात् आशुशब्दात् इष्ठन्प्रत्यये टिलोपे रूपम् । आशुमच्छब्दात् "विन्मतोर्लुक्" इति लुकि वा रूपं द्रष्टव्यम् । **अशनक्षम** इति । अशनम् आशः, ततो मत्वन्तात् इष्ठन् प्रत्ययः । आशीर्वादविषये वर्तमानादाशीश्शब्दात् मत्वन्ताद्वा इष्ठनि आशिष्ठ इति रूपम् । सर्वत्र "विन्मतोर्लुक्" इति इष्ठन् प्रत्ययः; मतोश्च लुक् । **पूरणगुणसुहितार्थेति** । सुहितशब्दस्य तृप्त्यर्थत्वात् पूरणस्यापि तृप्तिरूपत्वादिति भावः । न तु पूरणगुणेत्यत्र पूरणशब्द इह मन्तव्यः, तस्य पूरणप्रत्ययपरत्वात् । **षष्ठ्यनुज्ञानादिति** । षष्ठीसमासनिषेध-

परेणानेन सूत्रेण षष्ठ्यनुज्ञानादित्यर्थः । **निवर्त्यानिष्टत्वेति** । अनिष्टनिवर्तकत्वेत्यर्थः । **चतुर्मुखानन्दाधिक्याभिप्राय** इति । "ते ये शतम्" इत्यत्र शतशब्दोऽधिकसंख्यापरः । अतो न परिच्छिन्नत्वमिति भावः । प्राकरणिकवाक्यानां संख्याविशेषपरत्वात् "ते ये शतं प्रजापतेः" इत्यत्रापि संख्याविशेषपरत्वमेवोचितमित्यन्यथा निर्वाहमाह — **यद्वा ते ये शतं स एक इत्यस्येति** । कालत्रयवर्तिप्रजापत्यानन्दत्वे कथिते अपरिच्छिन्नत्वं सिध्यतीति भावः । **त्रिपाद्विभूतिमत्तया चेति** । ननु भगवदानन्दस्यापरिच्छिन्नत्वं निश्चित्य, "ते ये शतम्" इति वाक्येन प्रतिपाद्यमानं परिच्छिन्नत्वं कथं संगच्छतामिति वदन्तं प्रति त्रिपाद्विभूतिमत्तया आनन्दानन्त्यकथनं कथमुपयुज्य(पद्य)तामिति चेत्, अत्र केचित् — कथमपरिच्छिन्नत्वमिति चेदित्येव पाठः । तस्य चायमर्थः—"ते ये शतम्" इति वाक्येन कथमपरिच्छिन्नत्वं प्रतीयताम् ? प्रत्युत परिच्छन्नत्वमेव प्रतीयते । अतोऽपरिच्छिन्नत्वं न सिध्येदित्येतावत्पर्यन्तमाक्षेपं वर्णयन्ति । अतस्तत्परिहर्ता चानेन श्रुतिवाक्येन परिच्छिन्नत्वासिद्धिरप्युपपादनीया । आनन्दस्यापरिच्छिन्नत्वक्रमोऽपि प्रदर्शनीय इत्यभिप्रेत्यानेन वाक्येन परिच्छिन्नत्वासिद्धिमुपपाद्य प्रमाणान्तरेणापरिच्छिन्नत्वमप्युपपाद्यत इति वदन्ति । अपरे तु-'शतं प्रजापतेरानन्दाः' इति श्रुतिस्वारस्यविरोधेन कालत्रयवर्तिप्राजापत्यानन्दमात्रपरतया वा शतशब्दस्याधिकसंख्यामात्रपरतया वा किमिति व्याख्यायते ? यथाश्रुतार्थ एव ग्राह्य इति तटस्थशङ्कामपाकरोति — **मेरोरिवाणुरितीति** वदन्ति ।

## ( सोऽश्नुत इत्यादिश्रुत्यर्थः )

ननु "ब्रह्मविदाप्नोति परम्" इति ब्राह्मणे ब्रह्मण एव प्राप्यत्वप्रतिपादनात्— "एषोऽस्य परमानन्दः" इति ब्रह्मण एव विदुषामानन्दत्वश्रवणेन कामानां च तदभेदप्रतीतेः ब्राह्मणस्य मन्त्रविवरणरूपत्वेन प्रबलत्वात् ब्राह्मणानुसारेणैव "सह ब्रह्मणा" इति मन्त्रार्थो वर्णनीयः । यथा पैङ्गिरहस्ये ब्राह्मणानुसारेण "द्वा सुपर्णा" इति मन्त्रार्थवर्णनमित्याशङ्क्याह—**मन्त्राणां ब्राह्मणविवरणरूपत्वदर्शनादिति** । मन्त्राणामपि ब्राह्मणविवरणरूपत्वदर्शनाद्विवरणरूपत्वरूपः प्राबल्यहेतुर्द्वयोरप्यविशिष्ट इति भावः । **स्फुटप्रतीतिहेतुत्वेति** । प्रायेण ब्राह्मणानां स्फुटप्रतिपत्तिहेतुत्वमस्ति ;

मन्त्रास्तु गहना भवन्तीत्येतावता ब्राह्मणप्राबल्योक्तिश्चेत्--इष्टमेवेत्यर्थः। नन्वानन्दमयाधिकरणे मन्त्राणां प्राबल्यं केचिद्वदन्तीति मन्त्रप्राबल्यस्यैव परोक्तत्वोपन्यासात् तद्विरोध इति चेत्--न; तस्यापि मतान्तरत्वेनाविरोधादिति द्रष्टव्यम। विपश्चित्त्वश्रवणात् तस्य च भोक्तृत्वानुगुणत्वात् ब्रह्मणो भोक्तृसाहित्यशङ्कां व्युदस्यति -- **विपश्चित्त्वमपि भोग्यगुणत्वेनोक्त**मिति। न च तस्यापि कामशब्दनिर्दिष्टत्वात् पृथङ् निर्देशवैयर्थ्यमिति शङ्कनीयम्; गोबलीवर्दन्यायेन प्राधान्यविवक्षया पृथङ् निर्देशोपपत्तेरिति भावः। **व्यतिरेकनिर्देशा**दिति। "कामान् सह ब्रह्मणा" इति भिन्नतया निर्देशादित्यर्थः। **अव्यवहितप्रयोगस्त्वा(?)स्याच्चे**ति। 'ब्रह्मणा सह सोऽश्नुते सर्वान् कामान्' इति यदि स्यात्, तदा स्यादपि भोक्तुस्तच्छब्दनिर्दिष्टस्य साहित्याश्रयत्वशङ्केति भावः। **तत्परिहाराये**ति। इष्टापत्त्या तत्परिहारायेत्यर्थः। **तस्मिन् यदन्तस्तदन्वेष्टव्यमितिव**दिति। इदं च "तस्मिन्" इत्यस्य दहराकाशपरत्वमित्यभ्युपेत्य गुणस्यैवान्वेष्टव्यत्वमुच्यत इत्यभिप्रेत्योक्तम्। वस्तुतस्तु "तस्मिन् यदन्तः" इत्यत्र तच्छब्दस्य पुण्डरीकाकाशरूपवस्तुद्वयपरामर्शित्वस्य वक्ष्यमाणत्वात् तेन ब्रह्मतद्गुणयोर्द्वयोरुपास्यत्वमिति समप्राधान्यमेव सिध्येत्, न गुणानां प्राधान्यमिति द्रष्टव्यम्। यद्वा सहशब्दस्याप्राधान्यद्योतकत्वे ब्रह्मणोऽप्राधान्यस्य वक्तुमयोग्यत्वात् दहरविद्यावाक्यानुरोधाच्च समत्व एव तात्पर्यमिति भावः। **गुणप्राधान्यं वक्तुमित्यनेनापी**ति। गुणप्राधान्यं वक्तुमित्यनयोक्त्या श्रुतिगतसहशब्दस्य भोग्यसाहित्यमेव भाष्यकाराभिप्रेतमिति सिध्यतीत्यर्थः। **अन्यथा भोक्तृप्राधान्यं ही**ति। भोक्तृसाहित्यपरत्वे भोक्तृब्रह्मापेक्षया भोक्तुर्जीवस्यैव प्राधान्यं सिध्येदिति भावः।

## ( यस्यामतमित्याद्याशयवर्णनम् )

**सगुणानामेव ज्ञेयत्वं दृष्टमि**तीति। अत्रैवकारो भिन्नक्रमः। सगुणानां ज्ञेयत्वमेव दृष्टम्, अज्ञेयत्वं न दृष्टमित्यर्थः पर्यवस्यति। ततश्च ज्ञेयत्वस्य व्यापकत्वं सिध्यति। ततश्च तद्व्यतिरेकात् सगुणत्वव्यतिरेकापादनं संभवतीति द्रष्टव्यम्। भाष्ये--**ब्रह्मज्ञानासद्भावसद्भावाभ्यामि**ति। ननु "असन्नेव स भवति" इत्यसत्त्वप्रकारकज्ञानस्यैवात्मनाशहेतुत्वमुच्यते, न तु तदज्ञानस्येति चेत्-- "असद्ब्रह्मेति वेद चेत्" इत्यस्य 'ब्रह्म वेद' इत्येतत् असच्चेदित्यन्वयः। ब्रह्म न जानाति

चेदित्यर्थः । "अस्ति ब्रह्मेति चेत्" इत्यत्रापि 'ब्रह्म वेद' इत्येतदस्ति चेत् = ब्रह्म जानाति चेदित्यर्थः इति भगवद्भाष्यकाराभिप्रायात् । यद्वा श्रुत्यनुसारेण भाष्यार्थो वर्णनीयः । **अतः केषुचिद्वाक्येषु** इत्यत्र "अतः" इति व्याख्येयं पदम्; **सर्वा श्रुतय** इति च । ननु सर्वशाखाप्रत्ययन्यायः प्रधानस्वरूपानन्तर्गतानुक्तांशस्वीकारफलः। अत्र च न वाक्यान्तरविहितं मोक्षसाधनं ज्ञानमनूद्य ब्रह्मविषयत्वं कश्चिद्गुणतया विहितम्; अपि तु ब्रह्मज्ञानमेव विहितम्; येन तन्न्यायप्रवृत्तिरित्यस्वरसादाह—**यद्वा केषुचित् ब्रह्मविषयत्व** इति । ज्ञानमात्राविषयत्वस्यैव निर्गुणत्वाक्षेपकतया परैरुक्तत्वादुपासनाविषयत्वादिविकल्पनिरासपरत्वमस्य ग्रन्थस्यानुचितमित्यपरितोषादाह—**यद्वा ज्ञानं चोपासनात्मकमिति । गुणविधानबाधि-तेति** । बाधितापीत्यर्थः । ततश्च ज्ञेयत्वाभावरूपहेत्वसिद्धिमात्रं नेत्यर्थः । **अज्ञेयत्वं बाधित्वा ज्ञेयत्वमाक्षिपतीति** । मा भूत् ज्ञेयत्वे प्रमाणान्तरगवेषणा; इदमेव सगुणत्वं ज्ञेयत्वसाधने पर्याप्तमित्यर्थः । ननु सगुणत्वस्य सर्वप्रकारेण समर्थनीयस्य सिद्धौ सगुणत्वेन ज्ञेयत्वसाधनं मुधा, उत्तरसिद्धौ किं पूर्वेणेति न्यायादिति चेत्—अत्र केचित्—यद्यपि सगुणत्वमेव परमसाध्यम्; तत्रैव भाष्यतात्पर्यं च — तथापि तत्रेयं शङ्का समुन्मिषति—कथं सगुणत्वं श्रुतिसहस्रमपि प्रतिपादयेत्, तद्व्यापकज्ञेयत्वाभावादिति । तस्याः परिहारोऽभिधीयते—**अज्ञेयत्वं बाधित्वे**त्यादिना । यथा यागस्य क्षणभङ्गुरस्य फलपर्यन्तं व्यापारशून्यस्य कथं स्वर्गसाधनत्वमित्याक्षेपे स्वर्गसाधनत्वप्रतिपादनबलादेव तत्पर्यन्तस्थायिव्यापारवत्त्वमपि कल्प्यत इत्युच्यते, एवमिति वदन्ति । **तत्रैवे**ति व्याख्येयं पदम् ।

(नद्दष्टेरितिश्रुत्यर्थः)

**आगन्तुकत्वाद् गुणत्वाच्चेति** । **आगन्तुकचैतन्यगुणयोगितया चेति** भाष्ये आगन्तुकगुणशब्दौ भावप्रधानौ; चैतन्यपदं धर्म्युपस्थापकम् । ततश्च चैतन्यस्यागन्तुकत्वगुणत्वयोगितयेत्यर्थः पर्यवस्यतीति भावः । **आगन्तुकचैतन्यगुणयोगितया ज्ञातुरज्ञानस्वरूपतामिति** भाष्ये ज्ञातुरात्मनः पक्षत्वम्, अज्ञानस्वरूपत्वलक्षणजडत्वस्य साध्यत्वम्, "ज्ञोऽत एव" इति सूत्रे काणादाभिमतजडत्वसाधकत्वेनोपन्यसिष्यमाणस्यागन्तुकचैतन्यत्वस्य साधनत्वं च स्वरसतः प्रतीयते । तद्विहाय ज्ञानपक्ष-

कानात्मत्वसाधकागन्तुकत्वगुणत्वरूपहेतुद्वयपरत्वं वाक्यशैलीविरुद्धमित्यपरितोषादाह — **यद्वा चैतन्यं नाम विषयप्रकाश** इति । स्वतश्चैतन्यस्वभावस्यागन्तुकचैतन्यत्वं न संभवतीति भावः । **जीवात्मानं प्रतिषिध्य सर्वभूतात्मानं परमात्मानमेवोपास्स्वे**ति भाष्ये जीवात्मानं प्रतिषिध्येति प्रतिषेधक्रियायाः श्रुतिकर्तृकत्वादुपासनस्य च जीवकर्तृकत्वात् समानकर्तृकत्वाभावात् क्त्वाप्रत्ययानुपपत्तिमाशङ्क्य श्रुतिकर्तृकोक्तिक्रियावाचिपदाध्याहारेण व्याचष्टे—**दृष्टिश्रुतिमतिनिदिध्यासनाना**मिति । अस्मिन् पक्षे उपास्स्वेत्ययमर्थ उक्तो भवतीत्येव युक्तम् ; वाक्यपदमयुक्तमित्यस्वरसादाह—**यद्वा अभिदधातीत्यनुषङ्ग** इति । इति **वाक्यार्थ इति वाक्यान्तर**मिति । 'उपास्स्वेत्यभिदधातीति वाक्यार्थ' इत्यत्र इतिशब्दः संनिहितं न अभिदधातीत्यर्थं परामृशति, अपि तूपास्स्वेत्येतदंशमिति भावः । इतिशब्दस्य विप्रकृष्टपरत्वमदृष्टमित्यपरितोषादाह—**यद्वा प्रतिषिध्य परित्यज्ये**ति ।

(आनन्दश्रुत्यर्थः)

भाष्ये—**ज्ञानमेव ह्यनुकूलमानन्द इत्युच्यत** इति । अत्र **एवकारेण** प्रतिकूलज्ञानस्यानन्दत्वं व्यवच्छिद्यते ; न तु विषयस्यापि । अतो विभूत्यानन्दत्ववादस्य न विरोध इति द्रष्टव्यम् । **धर्मभूतानन्दस्य** हीति । न त्वानन्दमात्रस्येत्यर्थः ।

( द्वैतनिषेधश्रुत्यर्थः )

ननु **यदिदमुक्तमि**ति भाष्ये 'यत्र हि' इत्यादिवाक्यखण्डः प्रथममुदाहृतः । पूर्वपक्षोपन्यासवेलायां तु कृत्स्नं वाक्यं "मृत्योः स मृत्युमाप्नोति" इति वाक्यस्य पश्चादुदाहृतम् । पूर्वपक्षोदाहरणप्रकारं विहाय प्रकारान्तरेणोपादाने को हेतुरित्याशङ्क्य परिहरति—**यत्र हीत्यादिवाक्याभ्या**मिति । पूर्वं भेदनिवृत्तिप्रतिपादनपरतया पश्चादुदाहृतम् । इदानीं तु इवशब्दयुक्ततया भेदनिषेधप्रदर्शनपरतया, "नेह नानास्ति" इति भेदनिषेधकवाक्यखण्डेन सहोपादानमिति द्रष्टव्यम् । **निषेधक्रियाऽऽवृत्त्यर्थ** इति । **बहुशः**=बहुषु स्थलेष्वित्यर्थः । "बह्वल्पार्थाच्छस्कारकादन्यतरस्याम्" इति कारके शसो विधानात् । अधिकरणस्यापि **कारकत्वात्** । ततश्चावृत्तिः फलितेति फलितार्थकथनम् ; न प्रत्ययार्थतयेति द्रष्टव्यम् । **बहुभवनभ्रमरूप**मिति । सार्वज्ञ्यस्य पूर्वसिद्धत्वे हि पाश्चात्त्या भ्रान्तिर्नोपपद्यते ; न हि

ब्रह्मणि बहुभवनभ्रमात् प्राक् सार्वज्ञ्यमस्ति, बहुभवनभ्रमस्यैव सार्वज्ञ्यरूपत्वात्, तस्य चाविद्याधीनत्वात् नाविद्याविरोधित्वमिति भावः। **अतो विरोधोऽभ्युपगन्तव्य इति।** ततश्च न्यायानुगृहीतश्रुत्यन्तरसिद्धार्थविरुद्धं भेदनिषेधं "नेह नानास्ति" इत्यादिकं कथं प्रतिपादयेदित्यर्थः। ननु भेदनिषेधश्रुतीनां न्यायानुगृहीतविरुद्ध-श्रुत्यन्तरसद्भावेऽपि "मृत्योः स मृत्युमाप्नोति" इति भेदज्ञानानर्थत्वप्रतिपादकोदाहृतश्रुतौ "द्वैतिनोऽतथ्यदर्शिनः" इति स्मृत्युपबृंहितायां तादृशविरोधाभावान्न दोष-इत्याशङ्क्याह—**इह च विरोधोऽवगम्यत इति।** संसारहेतुत्वं श्रूयते; तत्रापि विरोधोऽवगम्यत इति योजना। ततश्च परस्परविरुद्धार्थप्रतिपादनस्य सर्वत्र साम्यात् न्यायानुगृहीत एवार्थः स्वीकर्तव्यः। भेदश्रुतिश्च न्यायानुगृहीता, अभेदश्रुतिस्तद्वि-रुद्धेति न्यायानुगृहीतभेदश्रुतिविरुद्धार्थकथनमभेदश्रुतेर्न संभवतीति भावः। एतेन केवलं वाक्ययोः परस्परविरोधमात्रप्रतिपादनं प्रकृतासंगतमिति शङ्का पराकृता, उक्तरीत्या प्रकृतसंगतत्वात्। **उपास्तिफलभूतमुक्तिदशायामिति।** अत्रोपास्ति-फलभूतत्वं परंपरया द्रष्टव्यम्। **अत्र सामर्थ्याज्जगत इत्यध्याहार इति।** ततश्चा-ध्याहृतजगच्छब्दस्य न विशेष्यपर्यवसन्नत्वमिति भावः। **कथं तदन्तत्वेन तदन्तर्यामित्वसिद्धिरिति।** ननु तदन्तमित्यनेनासिद्धावपि "अन्तः प्रविष्टः शास्ता जनानाम्" इत्यादिवाक्यान्तरेण तत् सिध्यतीति चेत्—न; अस्यैव वाक्यस्य तदर्थप्रति-पादनसामर्थ्यमस्तीति शिष्यशिक्षार्थतया तद्वाक्यार्थविचारोपपत्तेः। **हेतुत्रयशङ्का स्यादिति।** तत्कार्यत्वं च तदन्तर्यामिकत्वोपपाद्यम्, तदात्मकत्वं चैक्योपपादकम्; न तु तदन्तर्यामिकत्वमपि साक्षादैक्योपपादकमिति भावः। यद्यपि 'जगतो ब्रह्म-कार्यतया तदन्तर्यामिकतया च तदात्मकत्वेनैक्यात्' इत्युक्ते ब्रह्मकार्यत्वतदन्तर्यामिक-त्वयोस्तदात्मकत्वोपपादकत्वशङ्काप्रसङ्गेन विरुद्धमिति कार्यत्वं (मतिकारित्वं?) पक्षद्वयसा-धारणम्—तथापि विद्यमानस्य निर्वाहमात्रप्रदर्शनपरत्वात् तद्योजनाया अपि वक्ष्यमाणत्वे-नेष्टत्वाच्च न दोष इति द्रष्टव्यम्। **ऐक्यशब्दस्यार्थभेदः स्यादिति।** सकृत्प्रयुक्तपद-स्यार्थद्वयपरत्वम्, विना वृत्त्या न लभ्यत इति भावः। **ततश्च जगतस्तदात्मकत्वेनेति।** सकृत्प्रयुक्तस्यैकस्मिन्नेवार्थे समाश्रयणीये, अमुख्यस्य प्रकारैक्यस्य स्वीकर्तुमयुक्ततया अभेदरूपार्थस्य समाश्रयणीयत्वे सति जगतस्तदात्मकत्वेनैक्यादिति वक्तुमयुक्तमेव, जगद्ब्रह्मणोरभेदस्य बाधितत्वादिति भावः। ततश्च — जगतस्तात्मकत्वेनैक्यादिति

वक्तुमयुक्तमिति कथमुच्यते ? तत्कार्यत्वेनैक्यादिति वक्तुमयुक्तमिति कुतो नोच्यते, विनिगमकाभावादिति शङ्का पराकृता । **जगद्विशिष्टब्रह्मपर** इत्युक्तत्वादिति । अध्याहृतनिष्कर्षकजगच्छब्दार्थेनैक्यस्यान्वयानभ्युपगमादिति भावः । **ऐक्यशब्दस्य च नार्थभेद** इति । यद्यपि जगद्विशिष्टब्रह्मपर इत्यनेनैवेयमपि शङ्का पराकृतेत्यैक्यप्रपञ्चनं वृथा, तथापि शिष्यशिक्षार्थमैक्यस्वरूपं विविच्य दर्शयतीति द्रष्टव्यम् । **अवस्थाद्वयापन्नचिदचिद्विशिष्टवस्त्वैक्यमिति** । स्थूलत्वसूक्ष्मत्वरूपावस्थाद्वयापन्नयोश्चिदचिद्विशिष्टवस्तुनोरैक्यमित्यर्थः । **यथा रूपस्पर्शादी**ति । यथा रूपस्पर्शविशिष्टस्य पिण्डत्वावस्थापन्नस्य रूपस्पर्शविशिष्टेन घटत्वावस्थापन्नेनैक्यम्—अत्र घटगतरूपस्पर्शादिस्थाने चिदचितौ, पिण्डत्वघटत्वादिस्थाने अवस्थाद्वयापन्नेत्युक्तम् । इयांस्तु विशेषः – ब्रह्मणि चिदचिद्द्वारा अवस्थायोगित्वम् ; घटादिस्थले तु [नः] रूपस्पर्शादिद्वारिकावस्थेति द्रष्टव्यम् । अत्र च बालत्वयुवत्वावस्थाद्वयापन्नशरीरविशिष्टवस्त्वैक्यमनुरूपो दृष्टान्तः । अत एव वक्ष्यति "स एवायं तरुणोऽभूत्" इति । यद्वा अवस्थाद्वयापन्नत्वं चिदचितोर्विशेषणम् । भिन्नकालीनावस्थारूपसद्द्वारकविशेषणाश्रयधर्म्यैक्यमिति वक्ष्यमाणग्रन्थस्वारस्यादिति द्रष्टव्यम् । **वस्त्वैक्यहानि**रिति । विशिष्टवस्त्वैक्यहानिरित्यर्थः । नन्वस्यां योजनायां निष्कृष्टजगद्वाचिजगच्छब्दोऽध्याहर्तव्यः ; ब्रह्मशब्दस्य च तज्जत्वतल्लत्वहेतुके तदभेदे साध्ये सूक्ष्मचिदचिद्विशिष्टपरामर्शित्वं वक्तव्यम् । सर्वमिदं स्थूलशरीरकं तज्जत्वतल्लत्वाभ्यां सूक्ष्मशरीरकं ब्रह्मेत्यर्थस्याश्रयणीयत्वात् । तदनत्वे तु हेतौ ब्रह्मशब्दो ब्रह्मत्वविशिष्टपरः ; विशिष्टस्यान्तर्यामित्वात् । अतो ब्रह्मशब्दवैरूप्यम् । तज्जलानित्यत्रैकस्यैव तच्छब्दस्य जन्मलययोः सूक्ष्मचिदचिद्विशिष्टपरामर्शित्वम् । अनने तु ब्रह्मत्वविशिष्टविशेष्यमात्रपरामर्शित्वम् । "सर्वं खल्विदं ब्रह्म" इति जगद्विशिष्टस्य ब्रह्माभेदं प्रतिज्ञाय विशेषणभूते जगति तदनत्वलक्षणतदन्तर्यामित्वरूपहेतूपन्यासे हेतोर्वैयधिकरण्यम्, ब्रह्मकार्यतया तदन्तर्यामिकतया चेति चशब्देन ब्रह्मकार्यत्वतदन्तर्यामिकत्वयोस्तदात्मकत्वोपपादकत्वं च स्वरसतः प्रतीयते इत्येतत्सर्वं हृदि निधायाह -- **यद्वा कृत्स्नस्य जगत इति निष्कर्षकः शब्द** इति । नन्वस्मिन् पक्षे भाष्ये तत्कार्यत्वमात्रं विवक्षितम् ? उत तदुपादेयत्वम् ? नाद्यः, कार्यत्वमात्रस्यापृथक्सिद्धत्वरूपतदात्मकत्वाप्रयोजकत्वात् । इतरथा घटस्य दण्डापृथक्सिद्धत्वरूपतदात्मकत्वप्रसङ्गात् ।

ब्रह्मोपादेयत्वं तु जगतो नास्त्येव, तद्भिन्नत्वात्। उपादानोपादेययोरभेदावश्यंभावात्। किंच तदुपादेयत्वं मुख्यैक्यसाधकं लोके दृष्टम्। तदन्तर्यामिकत्वं तु अमुख्यैक्यसाधकम्। अतः कथं द्वयोरेकस्मिन्नैक्ये समुच्चयेन साधकत्वमिति चेत्, उच्यते—उपादेयत्वमेवापृथक्सिद्धत्वरूपतदात्मकत्वसाधकम्। न चोपादानोपादेययोरभेदात् उपादेयत्वं कथमपृथक्सिद्धत्वसाधकं स्यादिति वाच्यम्, मृद्घटयोरभेदेऽप्यपृथक्सिद्धिसंभवात् पृथक्सिद्ध्यभावमात्रस्य अभेदेऽप्यविरुद्धत्वात्। न च जगतो ब्रह्मभिन्नस्य कथमुपादेयत्वमिति वाच्यम्, भाव्यवस्थायोगि ह्युपादेयम्, पूर्वावस्थायोगि ह्युपादानमित्यभ्युपगम्यते, भाव्यवस्थावत्त्वं च जगतोऽप्यस्ति; तद्द्वारा ब्रह्मणोऽप्यस्ति। अतो द्वयोरपि पूर्वावस्थावत्सूक्ष्मजगद्विशिष्टब्रह्मापेक्षयोपादेयत्वम्। ननु जगतोऽप्युक्तरीत्या पूर्वावस्थावत्त्वात् उत्तरावस्थायोगि ब्रह्म प्रत्यप्युपादानत्वप्रसङ्ग इति चेत्, तस्योपादानत्वे प्रमाणाभावात्। न च पूर्वावस्थायोगित्वादन्यस्योपादानत्वस्याभावात् कथं नातिप्रसङ्ग इति वाच्यम्, तदतिरिक्तधर्मविशेषस्य तल्लक्षणत्वात्। उपादानमित्यभियुक्तव्यवहारविषयत्वमेवोपादानत्वमित्येवंरूपस्य लक्षणस्य संभवात्। नन्वस्मिन् पक्षे "सर्वं खल्विदं ब्रह्म" इति वाक्ये ब्रह्मशब्दस्य ब्रह्मापृथक्सिद्धे लक्षणाप्रसङ्गः। सर्वस्यापि जगतो ब्रह्मोपादेयत्वात् ब्रह्मान्तर्यामिकत्वाच्च ब्रह्म पृथक्सिद्धमित्यर्थस्याश्रयणीयत्वादिति चेत्, इष्टापत्तिरिति भावः। **विशिष्टान्तर्भाव एवैक्यमित्यर्थ** इति। ततश्च तदात्मकत्वेनैक्यादिति भाष्ये तृतीयार्थो न विवक्षितः। तदात्मकत्वप्रयोज्यस्यैक्यान्तरस्याभावात्, तदात्मकत्वमेवैक्यमित्यर्थ इति भाष्याभिप्राय इति भावः। अत्र केचित्—यथा ज्ञानाकारस्वरूपतया सर्वजीवानामैक्यम्, एवं चिदचिद्वस्तूनां ब्रह्मणश्चैक्यमेकविशिष्टान्तर्गतत्वमित्यर्थः, "एकधैवानुद्रष्टव्यम्" इत्युत्तरत्र तथार्थविवरणादित्येव भाष्यार्थं वर्णयन्ति। **नेह नानास्तीति प्रकरणे श्रूयत** इति। कठवल्ल्यामपि "यदेवेह तदमुत्र यदमुत्र तदन्विह" इत्यैक्यविधिशेषत्वमेव, "नेह नानास्ति" इति वाक्यस्येति द्रष्टव्यम्। **केषुचिद्वाक्येषु तस्य कण्ठोक्तत्वादिति।** भाष्यकृता केषुचिद्वाक्येषु समाभ्यधिकनिषेधस्य कण्ठोक्तत्वात् भाष्ये केषुचिद्वाक्येषु छागपशुन्यायस्य कण्ठोक्तत्वादित्यर्थः। अत्र भेदनिषेधकतयोदाहृतवाक्यानां प्रकारिभेदनिषेधकत्वस्यैव प्रतिपिपादयिषितत्वात् तदुपपादकतया प्रकारभेदविधायकवाक्यमुदाहृत्य तेन कार्यभेदप्रतिपादकवाक्यस्य प्रदर्शनं कर्तुमुचितम्; न तु कार्यभेदविधायक-

न्तावयमुदाहृत्य तेन प्रकारभेदविधायकवाक्यप्रदर्शनमुचितमित्यपरितोषादुदाहृत-वाक्यस्यैवोभयविधभेदविधिपरत्वं दर्शयति -- **यद्वा छान्दोग्य** इत्यादिना। **इयं श्रुतिरि**ति। अत्र 'इयम्' इति व्याख्येयं पदम्। **स्वनिष्ठो द्रष्टे**ति। स्वनिष्ठत्वेन मन्यमानो द्रष्टा स्वनिष्ठत्वेन मन्यमानेन करणेन स्वनिष्ठत्वेन मन्यमानं कर्म पश्यतीत्यर्थः। कर्तृकरणकर्मसु स्वनिष्ठत्वभ्रमो भवतीति पर्यवसितोऽर्थः। हेत्वन्तरमाह — **अस्येत्युक्ते**रिति। पुरुषविशेषं प्रत्यात्मत्वमिति वक्तुमशक्यत्वात् साक्षात्काराभिप्राय एव 'अभूत्' इति शब्द इति भावः। **स्वनिष्ठं किंचिदपि नास्तीत्यर्थ** इति। कुत्रापि स्वनिष्ठत्वभ्रमो नास्तीत्यर्थः।

**अदितिः पाशानिति न्याया**दिति। "अदितिः पाशान् प्रमुमोक्तु" इत्यत्र बहुवचनप्रतिपादितमपि बहुत्वं न विवक्षितम्। एवम् "असिन्" (एतस्मिन्) इति विभक्तिविकारसूचितं पुंनपुंसकान्यतरत्वमपि न विवक्षितमित्यर्थः। **तथाप्यस्वारस्यमवर्जनीयमि**ति। अत एव हि दशमे, "बार्हस्पत्यं ग्रहं गृह्णाति" इत्यत्र प्राकृतग्रहानुवादेन देवताविधाने तेषां बहुत्वादेकवचनमयुक्तमिति उद्देश्यगतत्वेनाविवक्षायामप्यभिधानबाधोऽवर्जनीय इत्युक्तम्। किंच "प्रासा अग्निं भरते" इति मन्त्रस्य सारस्वत्यामेवेष्ट्यां प्रातिपदिकार्थभूतलिङ्गविरोधादप्रवृत्तिरिति नवमे स्थापितत्वाच्चेति भावः। **तथाप्यस्वारस्यमिति चे**दिति। समभिव्याहृतपदाप्रतिपन्नत्वादिति भावः। **अभयहेतुप्रतियोगित्वा**दिति। पूर्ववाक्येऽभयहेतुतया यदुपन्यस्तं तद्विरुद्धस्यैव भयहेतुत्वेन प्रदर्शनौचित्यादिति भावः। **पूर्वसिद्धैक्ये**ति। "विद्लृ लाभे" इति धातोरेव शविकरणपठितादस्य रूपस्य संभवात्। "विद ज्ञाने" इत्यस्यावगत्यर्थस्य लुग्विकरणपठिततया परस्मैपदितया चास्य रूपस्यासंभवात्। न च लाभार्थत्वेऽप्यैक्यमिदानीं लभत इति वक्तुं शक्यमिति शङ्क्यम्, ऐक्यस्य पूर्वसिद्धत्वादिति भावः। **प्रतियोगित्वावधित्वे**ति। साहित्यप्रतियोगित्वविवक्षायां 'घटेन सह भेदः' इति तृतीया; अवधित्वविवक्षायां 'घटाद्भेदः' इति पञ्चमी; संबन्धविवक्षायां 'घटस्य भेदः' इति षष्ठीति भावः।

( पुराणघट्टः )

**अर्थप्रतिपादनार्थमिति** । पूर्वेणान्वयः ।

" यो मामजमनादिं च वेत्ति लोकमहेश्वरम् ।
असंमूढः स मर्त्येषु सर्वपापैः प्रमुच्यते ॥ "

इत्येयं श्लोको दशमेऽध्याये । " मत्स्थानि सर्वभूतानि " इत्यारभ्य सार्धश्लोको नवमेऽध्याये । " अहं कृत्स्नस्य जगतः " इति सार्धश्लोकः सप्तमेऽध्याये ।

" अथवा बहुनैतेन किं ज्ञातेन तवार्जुन ।
विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥ "

इति श्लोको दशमे ।

" द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥

यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥

यो मामेवमसंमूढो जानाति पुरुषोत्तमम् ।
स सर्वविद्भजति मां सर्वभावेन भारत ॥

इति गुह्यतमं शास्त्रमिदमुक्तं मयानघ ।
एतद् बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत ॥ "

इति पञ्चदशेऽध्याये । **अकर्मवश्य** इति । इदमकर्मवश्यत्वं परमत्वं चाक्षरशब्दनिर्दिष्टे मुक्तशरीरके भगवति मुक्तद्वारा अन्वेति, "महानुदारः" इत्यादौ महत्त्वस्योदार्यद्वारान्वयदर्शनात् । न च पारम्यस्वाराज्ययोः साक्षाद्भगवत्यन्वयसंभवे सद्वारकान्वयो न युक्त इति वाच्यम्, ब्रह्मत्वादीनां सद्वारकान्वयवत् पारम्यस्वारा-

ज्ययोरपि प्रायपाठात् सद्वारकान्वयस्यैव वक्तव्यता संनिहिताक्षरशब्दनिर्दिष्टमुक्तस्यैव द्वारत्वौचित्यादिति भावः । यद्वा अस्मिन् प्रकरणे ब्रह्मादिशब्दा न परमात्मपर्यन्ताः, अपितु भगवद्वाचितच्छब्द एव लक्षणया तच्छरीरपरः । ततश्च परमः स्वराडक्षरो मुक्तः । स एव तच्छरीरभूत एवेत्यर्थः । **पत्यन्तरराहित्यविवक्षायामिति** । भगवतो विश्वपतित्वे कथिते तस्यापि पत्यन्तरमाशङ्क्य, "आत्मेश्वरम्" इत्यनेन पत्यन्तरं निषिध्यते । अतः पतीश्वरशब्दयोः तुल्यार्थत्वमिति भावः । **समासमाधुत्वं न संशयितव्य (समासासाधुत्वमशङ्कनीय) मिति** । उत्तमश्चासौ पुरुषश्चेति सामानाधिकरण्यविवक्षायाम् "सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः" इति समासे उत्तमपुरुष इति रूपप्रसङ्गात् । "यतश्च निर्धारणम्" "पञ्चमी विभक्ते" इति षष्ठीपञ्चमी-सप्तमीपक्षेषु "पञ्चमी भयेन" इत्यादौ उत्तमशब्दाभावात् पञ्चमीसमासाप्रसङ्गात्, षष्ठीसमासस्य "न निर्धारणे" इति निषेधात्, सप्तमीसमासस्य च लक्षणाभावात् साधुत्वसंशय इति भावः । **आप्ततमत्वाच्चेति** । "सप्तमी" इति योगविभागात् समासो भविष्यतीति भावः । **सामानाधिकरण्यविवक्षायामेवेति** । "सन्महत्परमोत्तम" इति सूत्रेण समासे हि उत्तमशब्दस्य समासशास्त्रे प्रथमानिर्दिष्टत्वात् "प्रथमानिर्दिष्टं समास उपसर्जनम्" इत्युपसर्जनसंज्ञायाम् "उपसर्जनं पूर्वम्" इत्युत्तमशब्दस्य पूर्वनिपातः स्यात् । "पञ्चमी" इति वा "सप्तमी" इति वा योगविभागेन समासाश्रयणे पञ्चम्यन्तस्य सप्तम्यन्तस्य वा पुरुषपदस्यैव प्रथमानिर्दिष्टत्वेनोपसर्जनत्वात् पूर्वनिपातावश्यंभावादिति भावः ।

"स सर्वभूतप्रकृतिम्" इत्यारभ्य पञ्चश्लोकी षष्ठांशपञ्चमाध्यायसमाप्तौ पठिता । "शुद्धे महाविभूत्याख्ये" इत्यारभ्य सप्तश्लोकी तस्मिन्नेवाध्याये "स सर्वभूतप्रकृतिम्" इत्यतः प्राक् पठिता । "समस्ताः शक्तयः" इत्यारभ्य त्रिश्लोकी षष्ठांशे सप्तमाध्याये केशिध्वजं प्रति खाण्डिक्यवचनम् । "एवंप्रकारम्" इति श्लोकः प्रथमांशसमाप्तौ । "परः पराणाम्" इत्यारभ्य पञ्चश्लोकी पुराणादौ पठ्यते । "प्रकृतिर्या मयाख्याता" इति श्लोकद्वयं षष्ठांशे चतुर्थाध्याये प्रतिसंचरणप्रकरणे । "द्वे रूपे" इत्यारभ्य सार्धश्लोकद्वयं प्रथमांशसमाप्तौ । "विष्णुशक्तिः परा प्रोक्ता" इत्यारभ्य श्लोकत्रयं षष्ठांशे सप्तमाध्याये खाण्डिक्यवाक्यम् । "प्रधानं च पुमांश्चैव"

इत्यारभ्य "पुरुषात्मनः" इत्यन्तं द्वितीयांशे सप्तमाध्याये । "तदेतदक्षयं नित्यम्" इत्येतत् प्रथमांशसमाप्तौ ।

**सर्वावरण**पदे कर्मधारयमभिप्रेत्य व्याचष्टे — **तत्सर्वमतीतं येनेति** । आवरणशब्दस्य विषयसापेक्षत्वात् षष्ठीसमासतया व्याचष्टे — **यद्वा सर्वविषयज्ञानावरण**मिति । ज्ञानमात्रे संकोचो न युक्त इति व्याचष्टे — **ज्ञानशक्त्या**दीति । **समस्तकल्याणत्वं गुणः स्वभावो यस्येति** । अत्र बहुव्रीहिगर्भबहुव्रीहिमनाश्रित्य कल्याणत्वरूपो गुणः कल्याणगुणः, स आत्मा स्वभावो यस्येत्याश्रयणेऽप्ययमर्थः सिध्यत्येवेति वदन्ति । **अभिप्रायविशेषेणेति** । गुणेभ्योऽपि दिव्यविग्रहस्यात्यन्ताभिमतत्वाभिप्रायेणेत्यर्थः । **अभिमत्यर्हत्व**मिति । अनुरूपत्वमित्यर्थः । **अर्हार्थे निष्ठेति** । "कृत्यल्युटो बहुलम्" इति बहुलग्रहणादिति भावः । **अभिमतस्याननुरूपत्व**मिति । अत्राभिमतशब्दः इच्छागृहीतार्थकः, अनुरूपत्वमभिमतशब्दार्थ इति प्रागेवोक्तत्वात् । केचित्तु इच्छागृहीतपदस्यानुरूपत्वमर्थः, तथात्व एव ग्रन्थस्वारस्यमिति वर्णयन्ति । तत्तु न सम्यगिव, **इच्छागृहीत**पदस्यानुरूपत्वार्थकत्वाश्रयणापेक्षया अभिमत्यर्हशब्दस्यानुरूपत्वार्थाश्रयणस्य युक्तत्वात् । **नित्येच्छाया** इति । ततश्च नित्यविग्रहस्यापि नित्येच्छागृहीतत्वं सिद्धमिति भावः । ननु 'ज्ञानबलैश्वर्य' इति निर्देष्टव्ये "तेजोबलैश्वर्य" इति निर्देशः कथमित्यत आह — **नात्र क्रमविवक्षेति** । **सर्वगुणसाधारणा**विति । ननु "महाबुद्धिर्महावीर्यः" इत्यादौ प्रत्येकं महत्त्वेन विशेषणादस्तु सर्वत्र महत्त्वम्; तथापि नानेन वाक्येन सर्वगुणसाधारण्यं सिध्यति, महच्छब्दात् प्राङ् निर्दिष्टेषु तेजोबलैश्वर्येषु महत्त्वान्वयोपायासंभवादिति चेत् — न; न्यायसाम्येन सिद्धिरस्तीत्यत्र तात्पर्यात् । **अविद्याऽस्मितेति** । अस्मिता = अस्मित्वम् अहन्त्वम् । अनात्मन्यहन्त्वबुद्धिरिति यावत् ।

श्लोकोपात्तयोः रूपस्वरूपशब्दयोरर्थमाह — **रूपं शरीरं, स्वरूपं स्वासाधारणमिति** । **सर्वं विन्दतीति वा सर्ववेत्तेति** । अत्र 'विदिर् लाभे' इत्यस्य सेट्त्वेऽपि इडभावश्छान्दस इति द्रष्टव्यम् । **नित्यमुक्तविषयानेकरूपज्ञानाद्यावृत्तिरिति** । अनेकनित्यमुक्तविषयकज्ञानाद्यावृत्तिरित्यर्थः । **यद्वा अज्ञानं ज्ञानाभाव इति** । न चेतरज्ज्ञानं कथं ज्ञानाभावः स्यादिति वाच्यम्, सिद्धान्ते भावस्या-

भावरूपत्वे विरोधाभावात् । **ज्ञानविशेषणत्वे वाक्यद्वयमिति** । ब्रह्मविशेषणत्वपक्षे येन ज्ञानेनास्तदोषत्वादिविशिष्टं वस्तु संज्ञायते संदृश्यते गम्यते वा तदेव ज्ञानम्, अन्यत्त्वज्ञानमित्येकवाक्यत्वमेव । ज्ञानविशेषणत्वपक्षे तु येन ज्ञानेन परमात्मा ज्ञायते संदृश्यते गम्यते वा, तज्ज्ञानमस्तदोषत्वादिविशिष्टम्; तदेव ज्ञानमिति वाक्यद्वयं स्यात्, इतरथा तच्छब्दद्वयवैयर्थ्यप्रसङ्गात् । न च "तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते" इतिवत् स्यादिति वाच्यम् — तत्राप्यगत्या वाक्यभेदस्याभ्युपगन्तव्यत्वादिति भावः । **अशब्दगोचरस्येत्यादिके पूर्वश्लोक** इति ।

"अशब्दगोचरस्यापि तस्य वै ब्रह्मणो द्विज ।
पूजायां भगवच्छब्दः क्रियते ह्युपचारतः ॥"

इति श्लोक इत्यर्थः । **औपचारिक इत्युक्तमिति** । ननु

"शुचिवाक्योदितं ब्रह्म तद्विष्णोः परमं पदम् ।
तदेव भगवद्वाच्यं स्वरूपं परमात्मनः ॥
वाचको भगवच्छब्दस्तस्याद्यस्याक्षयात्मनः ॥"

इति तत्पूर्वश्लोके परमात्मन एव प्रस्तुततया, 'अशब्दगोचरस्यापि" इत्यत्र श्लोके तच्छब्दः कथं मुक्तात्मानं परामृशेत् इति चेत्; सत्यम्,

"तत्र पूज्यपदार्थोक्तिपरिभाषासमन्वितः ।
शब्दोऽयं नोपचारेण ह्यन्यत्र ह्युपचारतः ॥"

इति परमात्मनि भगवच्छब्दस्यौपचारिकत्वासंभवात् पूर्वोत्तरवाक्ययोः परमात्मनो भगवच्छब्दमुख्यार्थत्वप्रतिपादनविरोधाच्च तच्छब्दस्याप्रस्तुतमुक्तपरामर्शित्वं वक्तव्यमिति भावः । **प्रत्ययविशेषयुक्तस्य भरतेः स्वामिनि रूढत्वमिति** । तृच्प्रत्ययविशेषयुक्तस्येत्यर्थः । **भरतेः स्वामिनि रूढत्वमित्यत्र** भरतेरित्येतदुपलक्षणम्; बिभर्तेरित्यपि द्रष्टव्यम् । **धातुमात्रस्येति** । यद्यपि डप्रत्यययुक्तस्य भ इत्यस्यैव स्वामिवाचित्वम्, न तु प्रत्ययविनिर्मुक्तस्य — तथापि तृच्प्रत्ययरहितस्यापीत्यत्र तात्पर्यम् । अथवा डप्रत्ययस्य साधुत्वमात्रार्थत्वमेव । अत एव "भकारोऽर्थद्वयान्वितः" "गकारार्थः" इत्युक्तमिति द्रष्टव्यम् । **प्रवृत्तिनिमित्ते निष्कृष्योच्येते** इति । अयमर्थः — अत्र भशब्दस्य संभर्तृत्वभर्तृत्वे द्वे अपि प्रवृत्तिनिमित्ततापर्याप्त्यधि-

करणे, अतः **अर्थद्वयान्वित** इत्युक्तम् । गकारे तु नेतृत्वादीनां न प्रत्येकं पर्याप्त्यधिकरणत्वम्, अपितु मिलितानामेव । यथा कृतिसाध्यत्वेष्टसाधनत्वबलवदनिष्टाजनकत्वानां मिलितानां विध्यर्थत्वम् । अत एव "**गकारार्थः**" इत्येकवचनोक्तिरिति । केचित्तु संभर्तृत्वभर्तृत्वरूपप्रवृत्तिनिमित्ते आश्रयान्निष्कृष्य इतिकरणेनोच्येते । ते च द्वे इति कृत्वा **अर्थद्वयन्वितः** इत्युक्तम् । गकारस्थले इतिकरणाभावेन प्रवृत्तिनिमित्तस्याश्रयान्निष्कर्षाभावात् प्रवृत्तिनिमित्ताश्रयस्यैव ग्रहणे तस्यैकत्वात् '**गकारार्थः**' इत्युक्तिरिति भाव इत्याहुः । **धातुलीनत्वादिति** । यदि सोपसर्गाणामेव क्रियावाचित्वम्, तर्हि सोपसर्गाणां भ्वादिषु पाठाभावात् धातुसंज्ञाभावप्रसङ्गात् क्वचिदुपसर्गमन्तरेणापि तदर्थावगमाच्च धातुरेवानेकार्थाभिधायी; प्रादयस्तु प्रकरणादिवद्विशेषस्मृतिहेतवो द्योतकाः । द्योतकापेक्षा च शब्दशक्तिस्वाभाव्यात् क्वचिदेव । यथा—हरिशब्दो भेकादावेव प्रकरणादिसापेक्ष इति भावः । **उद्गमयिता गमयिता संगमयितेति** । इदं च सृष्टिस्थितिलयक्रमेणोपात्तम्, न तु "नेता" इत्यादिश्लोकक्रमेणेति द्रष्टव्यम् । **नेतेत्यनेन गमयितृशब्दार्थ उक्त** इति । रक्षकत्वमुक्तमित्यर्थः । "अधिभूर्नायको नेता" इत्यादौ रक्षकत्वस्यैव प्रतीतेरिति भावः । **गमयिता** इत्यस्य समित्युपसर्गमन्तरेणैव संहारार्थप्रकाशकत्वप्रकारं दर्शयति—**यद्वा कारणभूतमिति** । केचित्तु—स्रष्टेत्यस्य स्रष्टृत्वमर्थः । गमयितेत्यस्य गमयितृत्वरूपं रक्षकत्वमर्थः । न तयोर्विवादः । नेतेत्यस्य तु द्विकर्मकत्वात् कारणभूतं स्वात्मानं कार्यवर्गं नेतेति संहर्तृत्वमुच्यते । यद्वा एतस्यापि नेतृशब्दार्थप्रदर्शकत्वमेवेति वदन्ति । **उत्पत्तिं प्रलयं चैवेत्यादिश्लोकस्येति** ।

"उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् ।
वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥"

इति श्लोकस्येत्यर्थः ।

**कथं चिन्तयितु शक्यत्वमित्यत्राहेति** । नन्वस्याः शङ्कायाः "समस्तशक्ति रूपाणि" इति श्लोकेन कथं परिहार इति चेत्, अत्र केचित्—देवादिसजातीयरामकृष्णादिविग्रहसजातीयतया सर्वशक्त्याश्रयपरविग्रहस्य चिन्त्यत्वं

संभवतीति श्लोकाभिप्राय इति । केचित्तु—रामकृष्णाद्यवतारस्यैव योगयुक्चिन्त्यत्वम्, योगयुक्तस्य परविग्रहश्चिन्त्योऽस्त्विति मन्यन्ते । केचित्तु—परविग्रहस्य समस्तशक्तित्वसर्वविग्रहकारणत्वप्रतिपादनप्रवृत्तत्वेनैतच्छङ्कानिवर्तकत्वाभावादियमवतारिका चिन्तनीयेति मन्यन्ते । लीलायाः पश्चाद्भावित्वेन प्रयोजनत्वे (नत्वात्) कथं हेतुत्वमित्याशङ्कयाह—**तदभिसन्धिर्हेतुरिति** । लीलाशब्दस्तदभिसन्धिलक्षक इति भावः । **किं प्रयोजनमित्यत्राहेति** । लीलामात्रस्य प्रयोजनत्वे असमञ्जन्यायप्रसङ्गात् लीलामात्रं न प्रयोजनं भवितुमर्हतीति भावः । **परमात्मन्यतिदिशन्तं श्लोकमिति**। 'ननु देवदत्तो गुणशून्यः, तद्वदेव यज्ञदत्तोऽपि' इत्युक्ते यज्ञदत्ते मानान्तरावगतस्यान्नदातृत्वादिगुणविशेषस्यापि देवदत्ते सिद्धयदर्शनात् परमात्मनि मानान्तरसिद्धस्य धर्मान्तरस्य मुक्तात्मन्यापादने किं प्रमाणम्? तथा हि सति वैकृतवैशेषिकधर्माणामपि प्रकृतौ प्राप्तिप्रसङ्गात् । किंच "तद्भावभावमापन्नः" इत्यदीनां मुक्तात्मनि कण्ठरवेण परमात्मसाधर्म्यप्रतिपादकानां प्राकरणिकानामेव वचनानामुपन्याससंभवे परमात्मसाम्याक्षेपकस्य परमात्मनि मुक्तधर्मातिदेशकवचनस्योपन्यासः शिरोवेष्टनेन नासिकाग्रहणन्यायमनुसरतीति चेत्—न; असति बाधकेऽस्यापि न्याय्यत्वात् । 'देवदत्त इव यज्ञदत्तः पुत्रवान्' इत्युक्त्वा, "यज्ञदत्तस्य चत्वारः पुत्राः" इत्युक्ते देवदत्तस्यापि तावन्तः पुत्रा इति प्रतीतेरनुभवसिद्धत्वादिति भावः । केचित्तु—भाष्ये "एवंप्रकारम्" इति श्लोकोपन्यासः समस्तहेयराहित्यप्रमाणविवक्षयैव कृतः । तथोदाहृतवचनार्थानुक्रमणभाष्ये, "परं ब्रह्म स्वभावतो निरस्तनिखिलदोषगन्धम्" इत्यादि वक्ष्यति । न तु "प्रत्यस्तमितभेदम्" इत्यस्यार्थकथनार्थम् । "यो मामजमनादिं च" इत्यारभ्य, "परमार्थिकमेवेति ज्ञायते" इत्यन्तस्य भाष्यसंदर्भस्य सामान्यतः स्मृतिपुराणप्रतिपाद्यार्थविशेषनिर्णयमात्रार्थप्रवृत्तत्वेन "प्रत्यस्तमितभेदम्" इति श्लोकविशेषार्थनिर्णयमात्रप्रवृत्तत्वाभावात, विशिष्य तेषां वचनानामन्यथाकरणस्य पूर्वोत्तरपर्यालोचनयोत्तरत्र करिष्यमाणत्वादिति वदन्ति । **सविशेषपरत्वं दर्शितं भवतीति**। नित्यत्वव्यापकत्वादीनां प्रतिपादनादस्य श्लोकस्य सविशेषपरत्वमिति भावः । **उपसंहारस्य बुद्धिस्थत्वादिति** । 'समस्ताः शक्तयश्चैताः' इत्यादीनां योगोपसंहारगतत्वेनोपसंहारसाम्येन तस्यैव बुद्धिस्थत्वादित्यर्थः । **निर्व्यापारमनाख्येयमित्यादिनेति** ।

"निर्व्यापारमनाख्येयं व्याप्तिमात्रमनूपमम् ।
आत्मसंबोधविषयं सत्तामात्रमलक्षणम् ॥

प्रशान्तमनसं शुद्धं दुर्विभाव्यमवस्थितम ।
विष्णोर्ज्ञानमयस्योक्तं तज्ज्ञानं परमं पदम् ॥

तत्र ज्ञाननिरोधेन योगिनो यान्ति ये लयम् ।
संसारकर्षणादेते यान्ति निर्बीजतां द्विज ॥

एवंप्रकारममलं नित्यं व्यापकमक्षयम् ।
समस्तहेयरहितं विष्ण्वाख्यं परमं पदम् ॥"

इति श्लोकक्रमः । **एवं भगवति मुक्तगुणातिदेशः कृत** इति । ननु "निर्व्यापारम्" इत्यादिकमपि परमात्मस्वरूपपरमेवास्तु । "एवंप्रकारम्" इत्यपि नातिदेशकम् । अपितूक्तोपसंहाररूपमेवास्तु । न च पूर्वत्र "विष्णोः परमं पदम्" इति व्यतिरेकप्रतीतेः "एवंप्रकारम्" इति श्लोके, "विष्ण्वाख्यं परमं पदम्" इति प्रतिपादनात् भेदोऽवश्यं वक्तव्य इति वाच्यम्—"विष्णोः परमं पदम्" इत्यत्र पदशब्दस्य स्वरूपपरत्वेन घटस्य स्वरूपमितिवदुपपत्तेः । अन्यथा—

"श्रुतिवाक्योदितं सूक्ष्मं तद्विष्णोः परमं पदम् ।
तदेव भगवद्वाच्यं स्वरूपं परमात्मनः ॥",

"तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः ।"

इत्यादावगतेः । न च पूर्वश्लोकस्यापि ब्रह्मविषयत्वे, "एवंप्रकारममलं नित्यं व्यापकमक्षयम्" इति व्यापकत्वादिकीर्तनवैयर्थ्यम्, व्यापकत्वादीनां "व्याप्तिमात्रमनूपमम्" इत्यादिनोक्तेरिति वाच्यम्—तस्योभाभ्यां समाधेयत्वात् । अत एव "प्रत्यस्तमितभेदम्" इत्यस्यापि न मुक्तपरत्वम् । तत्र हि प्रकरणे वेदान्तवेद्यस्यादित्यवर्णस्य मूर्तस्य शुभाश्रयत्वमुच्यते । तत्र च मूर्तस्यैव शुभाश्रयत्वं वदता दिव्यात्मस्वरूपस्यालम्बनत्वं हि प्रथमतः प्रतिक्षेप्तव्यम्, न तु जीवस्वरूपस्य । परमात्मनो ध्येयत्वे सिद्धे परमात्मनः परिशुद्धस्वरूपे ध्येयत्वचिन्ताऽवतरति । ततश्च तन्निराकरणमन्तरेण शुद्धजीवस्वरूपध्येयत्वनिराकरणेऽपेक्षितपरित्यागोऽनपेक्षितस्वीकारश्च स्यादिति चेत्—

न । अस्याक्षेपस्य [1]अद्वैतपर्यवसितत्वेन पार्थक्येन निरसनीयत्वासंभवात् । अद्वैतविषये च पूर्वाचार्यैरेव पराकृतत्वेन इदानीं निरसनीयांशाभावादुपरम्यते । पाठक्रमाधीनोपक्रमत्वं हि मुख्यं, न त्वर्थक्रमाधीनमित्यपरितोषादाह—यद्वा **प्रथमांशोपक्रम** इति । **महावाक्यस्वारस्यविरोध** इति । "प्राणस्तथानुगमात्" इत्यत्र महावाक्यविरुद्धप्रक्रमस्य दुर्बलत्वप्रतिपादनादिति भावः । **तच्छेषभूतस्तदनुगुणार्थो** वर्णनीय इतीति । मुख्याया अपि दीक्षणीयायाः प्रधानसोमयागविरोधात् न पर्वकालानुग्रह इति "अङ्गगुणविरोधे च तादर्थ्यात्" इत्यत्र निर्णीतत्वादिति भावः । **उपक्रमोपक्रमभूतेति** । विधिशेषभूतस्याप्यर्थवादस्य प्रक्रमस्थत्वेन प्राबल्यमित्युपक्रमाधिकरणे निर्णीतत्वादिति भावः । **प्रश्नोत्तरवरलाभेति** ।

"सोऽहमिच्छामि धर्मज्ञ श्रोतुं त्वत्तो यथा जगत् ।
बभूव भूयश्च यथा महाभाग भविष्यति ॥",
"देवतापारमार्थ्यं च यथावद्वेत्स्यते भवान् ।
प्रवृत्ते च निवृत्ते च कर्मण्यस्त्वमला मतिः ॥"

इत्यादिना जगत्स्रष्टृतत्क्रमतत्प्रकारादिप्रश्नतदुत्तरग्रन्थनिर्माणानुगुणवरदानाद्यसंगतिप्रसङ्गात् । निर्विशेषविषयत्वे किमधिष्ठानमिति प्रश्नः (प्रश्नस्य) निर्विशेषमधिष्ठानमित्येवोत्तरं स्यादिति भावः । तृतीयातत्पुरुषाश्रयणे आत्मशब्दस्य भावप्रधानत्वाश्रयणं क्लिष्टम् । संस्थितशब्दस्य विशिष्टत्वार्थाश्रयणं च क्लिष्टम् । सर्ववस्तुरूपविशेषणप्रतिपत्तिगौरवं चेत्यस्वरसादाह — **यद्वा आत्मत्वेन संस्थिततयेति** । अत्रात्मसंस्थित इत्यस्य 'आत्मनि संस्थितः' इति सप्तमीतत्पुरुषः । तदर्थोपपादकः "आत्मत्वेन संस्थिततया सर्वशरीरकत्वात्" इत्यंश इति द्रष्टव्यम् । **सर्वपर्यवसानभूमिः स्वनिष्ठ** इति छेदः । **इति वस्त्वपरिच्छेद उक्त** इति ग्रन्थ उक्तपक्षद्वयशेषः । द्विविधो हि वस्त्वपरिच्छेदः, सर्ववस्तुसामानाधिकरण्यार्हत्वं, गुणैः समाभ्यधिकराहित्यं चेत्यभिप्रेत्याह — **सर्ववस्तुसामानाधिकरण्यार्हत्वमित्यादिना समत्वाभ्यधिकत्वासंभवादित्यन्तेन** । देशकालापरिच्छेदयोः, "परः पराणां, परमात्मा" इत्येताभ्यां सिद्धत्वात् **नित्यत्वविभुत्वव्यतिरिक्तगुणैरित्युक्तम्** । **पञ्चकल्पनान्वित-**

1. द्वैत—पा०

**त्वमिति** । संज्ञाजातिगुणक्रियावयवलक्षणपञ्चकल्पनान्वितत्वमित्यर्थः । **शब्दवाच्यास्त एव विशेषणमिति** । रूपवर्णादेर्निर्देशो रूपवर्णादिनिर्देशः । षष्ठीतत्पुरुषः । ततो निर्देशविषयो विशेषणं निर्देशविशेषणमिति मध्यमपदलोपिसमास इति भावः । अस्मिन् पक्षे निर्देशविशेषणपदं व्यर्थम्, तेन विनैव तदर्थप्रतीतेरित्यस्वरसात् द्वन्द्वमभिप्रेत्याह – **यद्वा रूपवर्णादितद्वाचिशब्दरूपैरिति** । अनित्येषु रूपादिषु रूपादिमत्त्वाभावात् नानित्यत्वव्यापकं रूपादिमत्त्वमित्यस्वरसादाह–**यद्वा अनित्यत्वव्याप्येति** । **जायते अस्तीत्यवस्थाद्वयमिति** । अत्र केचित्–इतराणि हि वस्तूनि, 'अस्ति जायते' इत्यादिभिः षड्भिः शब्दैर्व्यवह्रियन्ते । ब्रह्म तु 'अस्ति' इति शब्देनैव सर्वदा व्यवह्रियते । न तु तद्व्यतिरिक्तैः पञ्चभिरित्युक्तेरुचितत्वादवस्थाद्वयापरिग्रहेऽपि न दोष इति वदन्ति । **औणादिकप्रत्ययस्येति** । "उणादयो बहुलम्" इति बहुलग्रहणादिति भावः । **निरचिनोदनन्तमिति** । "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यत्रानन्तमिति श्रुतिरित्यर्थः ।

**परमात्मशब्दस्य क्वचिज्जीवेऽपि प्रयोगदर्शनादिति** । "अभेदव्यापिनो वायोस्तथासौ परमात्मनः" इत्यादौ परमात्मशब्दस्य क्वचिज्जीवेऽपि प्रयोगदर्शनात् । "प्रकृतिर्या मयाख्याता" इति श्लोकानुपन्यासेनैव "परमात्मा च सर्वेषामाधारः परमेश्वरः" इति श्लोकोक्तौ जीवस्यापि परिग्रहप्रसङ्गात् लयाधारस्य साक्षात्परमात्मन एव परमेश्वरत्वविष्णुनामत्वादिकं प्रतिपादनीयमित्यभिप्रेत्य लयाधारत्वं "प्रकृतिर्या मयाख्याता" इति पूर्वश्लोके वर्णितम् । ततश्च प्रकृतिपुरुषौ यस्मिन् परमात्मनि लीयेते, स परमात्मा सर्वाधारः परमेश्वरो विष्णुनामा वेदान्तप्रतिपाद्य इति श्लोकद्वयैकवाक्यतयेति भावः । एतेन "लीयेते" इत्यनेन कथं जीवव्यावृत्तिरिति शङ्का निरस्ता । **काठिन्यवान् यो बिभर्तीतिवदिति** । "काठिन्यवान् यो बिभर्ति तस्मै भूम्यात्मने नमः" इत्यत्र परमात्मस्वरूपे भूमिद्वारा काठिन्यवदित्यर्थः । **अर्हार्थे क्त इति** । बहुलग्रहणादिति भावः । एतदस्वरसादेवाह–**यद्वा बद्धस्य स्वरूपेणेति** । बद्धजातीयस्येत्यर्थः । **असंकीर्णस्वभावत्वमुक्तमिति** । परस्परासंकीर्णस्वभावाग्निज्योत्स्नादृष्टान्तबलेन दार्ष्टान्तिकेऽपि तथा सिध्यतीति भावः । **चिदचिदात्मकं जगदुच्यत इति** । 'गच्छति = नश्यति' इति व्युत्पत्त्या जग-

च्छब्दस्य विनाशिमात्रपरत्वेन मुक्तपरत्वासंभवेऽपि तुल्यन्यायतया मुक्तस्यापि ग्रहणं सिध्यतीति भावः । **ब्रह्मशब्दानामेकप्रकरणस्थानामिति** । "द्वे रूपे ब्रह्मणस्तस्य", "परस्य ब्रह्मणः शक्तिस्तथेदमखिलं जगत्" इत्यादीनां ब्रह्मपरत्वात् "अक्षरं तत्परं ब्रह्म" इति परशब्दसमानाधिकृतब्रह्मशब्दस्य जीवेऽत्यन्तास्वारस्याच्चेति भावः । ननु क्षराक्षरशब्दाभ्यां कार्यकारणावस्थब्रह्मपरामर्शे कार्यकारणभावानापन्नपरस्परभिन्नाग्निज्योत्स्नादृष्टान्तासंप्रतिपत्तिरित्याशङ्क्याह—**जगतो ज्योत्स्नास्थानीयत्वं चेति** । **स चेति** । व्यतिरेकनिर्देशस्वारस्यभङ्ग इत्यर्थः । ननु रूपशब्दः स्वरूपपरोऽस्तु; ब्रह्मणो द्वे रूपे मूर्तामूर्ते इत्येवं किं न स्यात्? ततश्च न भावप्रधानत्वं विवक्षणीयम्, नापि षष्ठ्यस्वारस्यमित्याशङ्क्याह — **भावप्रधानत्वाविवक्षायामिति** । स्वरूपरूपगुणविभूत्यादिषु स्वरूपरूपशब्दयोर्भेदेनोपात्तयोः स्वरूपशब्दास्वारस्यप्रसङ्गेन रूपशब्देन स्वरूपपरिग्रहासंभवात् भावप्रधानत्वमवश्यं विवक्षणीयम् । अतो मूर्तामूर्तशब्दास्वारस्यमिति भावः । **यद्युच्येत ब्रह्मणो द्वे रूपे** इति । ब्रह्मणो द्वे रूपे इति प्रतिज्ञाय ब्रह्म मूर्तं चामूर्तं चेति कथिते मूर्तत्वामूर्तत्वे एव रूपे फलिष्यत इति भावः । **धर्मिपर्यन्तक्षराक्षरेति** । क्षराक्षरस्वरूपे ते मूर्तामूर्ते इति सामानाधिकरण्यं न स्यादित्यर्थः । **अवस्थावद्वाचिजगच्छब्देति** । "अक्षरं तत्परं ब्रह्म क्षरं सर्वमिदं जगत्" इत्यत्रावस्थावद्वाचिब्रह्मजगच्छब्दयोः क्षराक्षरशब्दसामानाधिकरण्यायोगाच्चेत्यर्थः । **शक्तिशब्दस्य कार्यवाचित्वायोगाच्चेति** कार्यावस्थब्रह्मवाचित्वायोगाच्चेत्यर्थः । शक्तिशब्दस्य कार्यवाचित्वाभावेऽप्युपचारेण कार्यपरत्वमस्त्वित्यत आह - **उपचारतोऽपीति** । अपृथक्सिद्धकार्योपयोग्यद्रव्यविशेषः शक्तिशब्दस्य मुख्यार्थः । औपचारिकप्रयोगे तु कार्योपयोगिविशेषणत्वमात्रं निमित्तमित्यर्थः । केचित्तु—अत्र विशेषणपदमपृथक्सिद्धविशेषणपरम् । वाशब्दश्चाध्याहर्तव्यः । ततश्च कार्योपयोगि वा अपृथक्सिद्धविशेषणं वा शक्तिशब्देन व्यपदेशमर्हतीति व्याचक्षते । **मुख्यत्वमसन्मत** इति । मुख्यकल्पत्वमित्यर्थः । अत एवोक्तं वेदान्ताचार्यैर्न्यायसिद्धाञ्जने शक्तिनिरूपणे — "क्षेत्रज्ञाविद्यानां जगतश्च परब्रह्मशक्तित्वव्यपदेशोऽपि गौण्या लक्षणया वा" इति । **भावनात्रियान्वयकथनादिति** ।

"ब्रह्माख्या कर्मसंज्ञा च तथा चैवोभयात्मिका ।
सनन्दनादयो ब्रह्मन् ब्रह्मभावनया युताः ॥

कर्मभावनया चान्ये देवाद्याः स्थावराचराः ।
हिरण्यगर्भादिषु च ब्रह्मकर्मात्मिका द्विधा ॥"

इत्युक्तप्रकारेण कर्मभावनाब्रह्मभावनोभयभावनारूपभावनात्रित्रयम् । भावना वासना संस्कार इति [ यावदिति ] द्रष्टव्यम् । **ब्रह्मशब्दार्थवैरूप्यमिति** । "तपसा चीयते ब्रह्म" इति मुण्डके, "यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः । तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते" इत्यत्र ब्रह्मशब्दः प्रधाने प्रयुक्तः। तत्रैव प्रकरणे "तपसा चीयते ब्रह्म" इत्यत्र ब्रह्मशब्दः परमात्मनि प्रयुक्तः । इदं च, "अदृश्यत्वादिगुणको धर्मोक्तेः", "स्याच्चैकस्य ब्रह्मशब्दवत्" इत्यादौ स्पष्टम् । सर्वशरीरस्थत्वस्यैकस्मिन् जीवेऽसंभवात् जीवमात्रपरत्वे जीवानां बहुत्वात् बहुवचनं प्राप्नोतीत्याशङ्क्याह— **जातावेकवचनमिति** । यथा 'मनुष्यः सर्वदेशगः' इत्यादाविति द्रष्टव्यम् । **तत्तारतम्यं चेति** ।

"अप्राणिमत्सु स्वल्पा सा स्थावरेषु ततोऽधिका ।
सरीसृपेषु तेभ्योऽन्याप्यधिका च पतत्रिषु ॥
पतत्रिभ्यो मृगास्तेभ्यस्तच्छक्त्या पशवोऽधिकाः ।
पशुभ्यो मनुजाश्चापि शक्त्या पुंसः प्रभाविताः ॥
तेभ्योऽपि नागगन्धर्वयक्षाद्या देवता नृप ।
शक्रः समस्तदेवेभ्यस्ततश्चापि प्रजापतिः ॥
हिरण्यगर्भश्च ततः पुंसः शक्त्युपलक्षितः ।"

इत्यादिनेत्यर्थः । **तद्व्यावृत्त्यर्थमिति** । जातित्वनिबन्धनरूपत्वव्यावृत्त्यर्थमित्यर्थः । ननु "विष्णुशक्त्या" इत्यत्र विष्णुरूपशक्त्येत्यर्थः किं न स्यादित्याशङ्क्याह—**अन्यथा शक्तिः सापीति** । अत्रशब्दार्थमाह — **कारणादीति** । **जलस्य कणिका** इति । जलस्य कारणत्वं कणिकानां कार्यत्वमिति भावः । प्रथमव्याख्यानुसारेण दृष्टान्तं व्याख्याय द्वितीयव्याख्यानुसारेण व्याचष्टे — **संयोजकत्ववियोजकत्वयोर्वेति** । अस्मिन् पक्षे सक्तमसक्तं च विभर्ति=संयोज्य च वियोज्य च बिभर्तीत्यर्थः । **प्रधान-पुरुषयोरात्मन** इति । "प्रधानपुरुषात्मन" इति षष्ठ्यन्तमेतत् विष्णोरित्यस्य

विशेषणं द्रष्टव्यम् । अध्याहारदोषादाह—**यद्वा प्रधानशब्दानन्तर** इति । "**तदेव सर्वमेवैत**" **दित्यत्र तच्छब्दसामानाधिकरण्यमि**ति । यद्यपि व्याख्येयभाष्यक्रमानुरोधेन शरीररूपतन्वंशेत्यादिभाष्यं व्याख्यायैव **तच्छब्दसामानाधिकर०**,नेत्येतद्भाष्यं व्याख्यातुमुचितम् , तथाप्युदाहृतपुराणवचनक्रमानुसारेण तच्छब्दसामानाधिकरण्यं व्याख्यातम् । भाष्यकारेण तु शरीरतन्वादिशब्दानां शरीरत्वसाधकस्फुटप्रमाणत्वादुदाहृतपुराणवचनक्रममतिलङ्घ्य व्याख्यातमिति द्रष्टव्यम् ।

( परोदाहृतपुराणवचनार्थः )

**देवादिशरीरं चोपाधित्वेन प्रतीयत** इति । जपाकुसुमादिवदात्मनिष्ठभेदादिधर्मासञ्जकत्वेनोपाधित्वम् । **ननु मुक्तानामुपास्यत्वाभावादि**ति । मुक्तात्मान्तरस्य स्वप्राप्यत्वाभावेन तस्य शुभाश्रयत्वस्य वा योगयुक्चित्तालम्बनत्वस्य वाऽप्रतिषेध्यत्वात् उपासकस्वरूपस्य च कर्तृत्वादिबन्धाश्रयत्वस्याप्राप्यत्वेन शुभाश्रयत्वप्रसक्तेरेवाभावेन तत्प्रतिषेधेऽप्रसक्तप्रतिषेधत्वापातादयं श्लोकः परमात्मस्वरूपस्यैव योगयुञ्जानआलम्बनत्वप्रतिषेधकः किं न स्यादित्याशङ्क्य मुक्तावाविर्भविष्यतः स्वरूपस्य प्राप्यत्वेनोपास्यत्वप्रसक्तिसद्भावात्तस्योपासननिवृत्तयेऽयमुपदेश इत्याहेत्यर्थः । **अनुसन्धानाच्चोपदेश** इति निर्देशो 'मशकेभ्यो धूमः' इतिवत् द्रष्टव्यः । **तथाननुसन्धानाये**ति वा पाठः । केचित्तु—**तथानुसन्धानाय** । अनुपास्यत्वेनानुसन्धानायेत्यर्थ इति वदन्ति । **अस्मिन् प्रकरणे** इति व्याख्येयं पदम् । **कथं विष्णोर्विग्रहैकदेश** इति। विष्णोः शरीरतया विष्णुधार्यस्य तद्धारकत्वायोगादित्यर्थः । शक्तित्रितयसमावेशे एकैकस्या एव शक्तेः कृत्स्नविग्रहाश्रयत्वासंभवमभिप्रेत्य विग्रहैकदेशाश्रयत्वोक्तिः । यद्वा विग्रहरूपोऽयमेकदेशः परिच्छिन्नः तदाश्रित इत्यर्थः । ननु विष्णोः शक्तित्रयाश्रयभूतविग्रहासंभवेऽपि ब्रह्मणस्तादृशो विग्रहः संभवेदिति शङ्कामपाकरोति—**तदाश्रयभूतो विग्रह इति । परसंज्ञरूपगोचर** इति । "तच्च विष्णोः परं रूपम्" इत्यादौ व्यतिरेकिनिर्देशेन पररूपस्य विष्णुभिन्नत्वावगमात् परशक्तिशब्देन पररूपस्यैव निर्देशात् "विष्णुशक्तिः" इत्यत्र षष्ठीसमास एव युक्त इति भावः । **विभज्यनिर्देशः कृत** इति । विभज्यस्य निर्देशो विभज्यनिर्देशः, विभक्तव्यनिर्देश इत्यर्थः । द्वितीयान्तो विभागशब्दः कर्मणि घञन्त इत्यर्थः । अयं भावः—यद्यपि

पूर्ववाक्ये "मूर्तामूर्तविभागेन" इत्यत्र विभागशब्दो न कर्मार्थकः, तथापि पूर्ववाक्ये विभागशब्देन विभजनस्य प्रस्तुतत्वात् तत्कर्मण इह द्वितीयान्तविभागशब्देन परामर्शो नानुपपत्तिरिति । केचित्तु ननु विभज्यनिर्देशः मूर्तामूर्तशब्देनैव क्रियताम् । किं विभागशब्देनेत्याशङ्क्याह–**मूर्तामूर्तविभागेनेत्युक्तत्वादितीति** वदन्ति । **अपि तु शक्यत्वाभिप्राय** इति । "कृत्याश्च", "शकि लिङ् च" इति शक्यार्थे कृत्यप्रत्ययविधानात्, "न तद्योगयुजा शक्यम्" इति च प्रतिपादनादिति भावः । **बहुव्यक्तिक्रोडीकारार्थमिति** । सकलव्यक्तिक्रोडीकारार्थमित्यर्थः । "परशक्तिरूपम्" इत्यत्र रूपप्रतिसंबन्धितया परमात्मप्रतीतौ विलम्बादाह–**परशक्त्यात्मकं वेति । मूर्ते भगवतो रूपे** इति ।

"मूर्ते भगवतो रूपे सर्वापाश्रयनिस्पृहा ।
एषा वै धारणा प्रोक्ता यच्चित्तं तत्र धार्यते ॥"

इति वचनार्थ इत्यर्थः । **अन्यत्रास्यानर्हत्वकथनमिति** । श्लोकान्तरेऽस्यानर्हत्वकथनमित्यर्थः । प्रकरणसिद्धिमेवोपपादयति – **अन्ये तु पुरुषव्याघ्रेत्यादिना** । बद्धानामेव शुद्धिविरहः प्रतिपाद्यते, न मुक्तानामित्याशङ्क्य सिंहावलोकितकेनाह–**अन्ये त्विति ग्रन्थेनेति । स्तम्बसमभिव्याहारादिति** । ननु पर्यन्तपदवैयर्थ्यप्रसङ्गात् 'स्तम्बपर्यन्ताः' इति वा 'स्तम्बपर्यन्तम्' इति वा रूपप्रसङ्गेन 'स्तम्बपर्यन्ताः' इति रूपासिद्धेश्च आङित्यस्य वाक्यस्मरणान्यतरार्थकत्वस्यैव युक्ततया "आङभिविधौ" इत्यस्यायुक्तत्वात् तत्सिद्धवत्कारेण स्तम्बसमभिव्याहारादित्युक्तिरयुक्तेति चेत, उच्यते–आङित्यस्याभिविध्यर्थकत्वसंभवे गत्यभावकल्प्यस्य वाक्यस्मरणार्थकत्वस्यायुक्तत्वात् आङित्यस्य ब्रह्मशब्देन समासः । स्तम्बपर्यन्ता इति पृथक्पदम् । ततश्च समभिव्याहृतस्तम्बपर्यन्तपदे स्तम्बस्याभिविधित्वदर्शनात् आब्रह्मशब्देऽप्याङभिविधाविति भावः ।

भाष्ये—**जगद्ब्रह्मणोः सामानाधिकरण्येनैक्यप्रतीतेरिति** । "ज्योतींषि विष्णुः" इत्यादिना सर्वस्य जगतः सामानाधिकरण्येनैक्योपदेशादित्यर्थः । **न शुक्तिकाशकलेन सामानाधिकरण्यं दृष्टमिति** । 'सर्वं जगत् ब्रह्म' इतिवत् 'सर्वं रजतं शुक्तिः' इत्युपदेशादर्शनादित्यर्थः । **तथा सति निषेधवचनस्या-**

पीति । यदि विधिवाक्यमपारमार्थिकं भेदं परमार्थिकत्वेन बोधयेत्, तर्हि निषेधवाक्यमपि वस्तुतः पारमार्थिकमेव भेदमपारमार्थिकत्वेन किमिति न प्रतिपादयेदित्यर्थः । **न केवलमाकारद्वय** इति । त्वया हि सामानाधिकरण्यं बाधसापेक्षमित्युच्यते, मया तु सामानाधिकरण्यस्य बाधसापेक्षत्वप्रतिषेधमात्रं न क्रियते, प्रत्युत बाधविरोधित्वमपीत्युच्यते । अन्यतरविरोधे सामानाधिकरण्यभङ्गप्रसङ्गादिति भावः ।

भाष्ये — **जगज्जन्मादिकारणं ब्रह्मेत्यवसिते** सति इतिहासपुराणाभ्यामुपबृंहणं कार्यमित्ययमर्थः 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्' इति वाक्येन ज्ञायत इति योजना । श्रुत्वोपबृंहणं कर्तव्यमिति "इतिहासपुराणाभ्याम्" इति श्लोकात् प्रतीयत इत्यर्थः । न चोपबृंहणस्य श्रवणानन्तर्यं नास्माद्वचनात् प्रतीयते, श्रुत्वोपबृंहयेदित्याद्यश्रवणात् "उपबृंहयेत्" इत्येतावत एव श्रवणादिति वाच्यम्, उपबृंहणस्य श्रुतार्थविशदीकरणरूपत्वेनोपबृंहणे श्रवणानन्तर्यलाभात् । ततश्च, 'अवसिते सत्यस्माद्वाक्यादुपबृंहणं कार्यमिति ज्ञायत इति कथमुच्यते ? श्रवणात् प्रागप्यस्माद्वाक्यादर्थावगतिसंभवा'दिति शङ्का पराकृता । केचित्तु पूर्वस्माद्वाक्यादर्थावगतिसंभवेऽप्यश्रुतवेदान्तस्य प्रवृत्त्यौपयिकोपबृंहणकर्तव्यताज्ञानस्यानुत्पत्तेः श्रवणानन्तरमेव प्रवृत्त्यौपयिकोपबृंहणकार्यताप्रतीतिरुत्पद्यत इत्यर्थ इति मन्यन्ते । **भारतादिप्रबन्धविशेषश्रवणायेति** । ननु न्यायसिद्धानुवादित्वे कथमस्य वाक्यस्य भारतादिप्रबन्धविशेषश्रवणप्रवर्तकत्वमिति चेत् — न; अनुवादकस्याप्यस्य वाक्यस्य 'अक्षैर्मा दीव्यः कृषिमित् कृषस्व' इति वाक्यवत् स्वाभाविकप्रवृत्तिविषयविमुखीकरणद्वारेण प्रवृत्त्युपयोगाददोषात । **नन्वेवं तर्हीति** । "मामयं प्रतरिष्यति" इति दृष्टार्थत्वप्रतिपादनमनुपपन्नमिति शङ्कार्थः । ततश्च दृष्टादृष्टरूपोभयविधप्रतिक्षेपकत्वं विरुद्धमिति न मन्तव्यम् । "**किं ते कृण्वन्ति कीकटेषु गावः**" इत्यादेरयमर्थः — हे मघवन् कीकटदेशेषु ते गावः किं कुर्वन्ति, न कंचिदप्युपकारं कुर्वन्तीत्यर्थः । तदेवोपपादयति — आशिरं=प्रवर्ग्यार्थं पयः न दुहन्ति, घर्मं प्रवर्ग्यार्थं घृतं न तापयन्ति, धर्मोपयुक्तं क्षीरं न प्रयच्छन्ति तद्देशस्थानां नास्तिकत्वात् । प्रमगन्दस्य कीकटाधिपतेः राज्ञः वेदः धनं नैचाशाखं नीचाशाखिनगरस्थम् आभर रन्धय वर्धय— इति । अयमर्थः द्राक् प्रतीयते । अत्र प्रमगन्दनामकराजवृत्तान्तप्रतिपादने नित्यायाः

श्रुतेरनित्यार्थप्रतिपादकत्वेनाप्रामाण्यप्रसङ्गात् प्रमगन्दशब्देन प्रकृष्टं धनं मामागमिष्यतीति प्रमगन्द इति व्युत्पत्त्या वार्धुषिकः प्रतिपाद्यते । नैचाशाखशब्देन षण्डसंबन्धिधनं प्रतिपाद्यते । एवं च सति वार्धुषिकादीनां प्रवाहतो नित्यत्वात् नानित्यार्थसंयोगविरोधः । तथैव "अहल्यायै जार" इत्यत्रापि अह्नि लीयते इत्यहल्या रात्रिः, तस्या जारो जरणहेतुः सूर्यः इत्यादिरेवार्थः । अतो नानित्यार्थसंयोगविरोधः । एवं च सति शब्दसाम्यात् प्रमगन्दाहल्यादिवृत्तान्तः स्फुरतीति चेत्—सोऽविवक्षित एवेति मीमांसकानां स्थितिः । तद्वदेव वेदान्तभागेष्वपि नारायणपरब्रह्मादिशब्दप्रतिपन्नार्थेषु देवताविशेषादिष्वविवक्षितार्थत्वशङ्काव्युदासार्थमुपबृंहणं कार्यमिति प्रघट्टार्थः ।

"[1]पढइ परासरसद्दं सोवि जुआ सरसकव्वदुल्ललिओ ।
अह्मो कालस्स गई अह्मेवि णिअं पइं गमिआ ॥"

छाया= पठति पराशरशब्दं सोऽपि युवा सरसकाव्यदुर्ललितः ।
अहो कालस्य गतिः वयमपि निजं पतिं गमिताः ॥

इति पठ्यते । इदं चासत्काव्यालापप्रवणस्योपपतेः कालविशेषे विष्णुपुराणपाठबद्धादरतामात्मनश्च स्वैरविहारनिवृत्तिं च स्मृत्वा विस्मितायाः कस्याश्चिद्वचनम् । अतोऽन्यार्थप्रवृत्तत्वमस्येति द्रष्टव्यम् । ननु पराशरपुराणेऽपि पराशरशब्दशब्दो भवत्येव । तत्र चामूलाग्रं शिवपारम्यमेव प्रदर्श्य (दृश्य)त इति चेत् – न ; तस्मिन विष्णुपुराण इव पराशरशब्दशब्दप्रसिद्ध्यभावेन श्लोकस्थपराशरशब्दशब्देन विष्णुपुराणस्यैव विवक्षितत्वादिति भावः ।

## ( विष्णुपुराणप्राशस्त्यम् )

**अग्नेः शिवस्येति** ।

"संकीर्णाः सात्त्विकाश्चैव राजसास्तामसास्तथा ।
कल्पाश्चतुर्विधाः प्रोक्ता ब्रह्मणो दिवसाश्च ते ॥"

---

१. अयं श्लोको गाथासप्तशतीस्थः । यद्यप्ययं काव्यमालामुद्रितपुस्तके न दृश्यते, तथापि लिप्सिभगरमुद्रितपुस्तके दृश्यते ।

इति कल्पानामेव सात्त्विकादिविभागकथनात् "सात्त्विकेष्वथ कल्पेषु" इति च दर्शनात् 'तामसेषु, राजसेषु" इत्येतत्सर्वं कल्पविशेषणम्। ततश्च तामसेषु कल्पेषु प्रकीर्तितं ब्रह्मणा अग्निशिवमाहात्म्यं, राजसेषु कल्पेषु ब्रह्मणो माहात्म्यं प्रोक्तं विदुरित्यर्थः। यस्मिन् कल्पे तु इत्यस्यायमर्थः—उत्तरार्धे तस्य तस्येति श्रवणात् यस्य यस्याग्न्यादेः पुराणं माहात्म्यप्रतिपादकं यत् प्रोक्तं, तस्य तस्य माहात्म्यं माहात्म्यस्य प्रतिपादकं तदिति, तदिति पदमध्याहर्तव्यम्, पूर्वत्र यत्प्रोक्तमिति श्रवणात्। तस्य तस्य माहात्म्यप्रतिपादकं तत्पुराणम्, तत् तत्स्वरूपेण तस्य कल्पस्य स्वरूपमेव स्वरूपं यस्य; सात्त्विकत्वादिकं हि कल्पस्य स्वरूपम्; सत्त्वादिगुणप्रचुरेण ब्रह्मणा वर्ण्यत इति फलितार्थः। ततश्च तमःप्रचुरेण ब्रह्मणा अग्निशिवमाहात्म्यं वर्ण्यते, रजःप्रचुरेण ब्रह्ममाहात्म्यं, सत्त्वप्रचुरेण विष्णुमाहात्म्यमिति फलितार्थ इति द्रष्टव्यम्। केचित्तु "यस्मिन् कल्पे तु यत्प्रोक्तम्" इत्यत्र यद्दैवतमधिकृत्य पुराणं प्रवृत्तम्, तस्य माहात्म्यं तत्स्वरूपेण वर्ण्यत इत्यर्थ इति वदन्ति। अन्ये तु "तत्स्वरूपेण" इत्यत्र तदिति पृथक् पदम्। यस्मिन् कल्पे यत्पुराणं प्रोक्तं तस्य तन्माहात्म्यं तस्य स्वरूपेण वर्ण्यत इति योजना। एवं हि तस्य तस्येति षष्ठ्यन्तद्वयसाफल्यम्। तस्य च स्वरूपमसाधारणाकारः सत्त्वरजस्तमांस्येव। ततश्च सत्त्वरजस्तमोभिर्वर्ण्यत इत्यर्थ इति वदन्ति। ननु—

"त्रयस्ते कारणात्मनो जाताः साक्षान्महेश्वरात्।
ब्रह्मा सर्गे हरिस्त्राणे रुद्रः संहरणे पुनः॥

तथाप्यन्योन्यमात्सर्यादन्योन्यातिशयार्थिनः।
तपसा तोषयित्वा तु पितरं परमेश्वरम्॥

कल्पान्तरेऽसृजद्ब्रह्मा विष्णुरुद्रौ जगन्मयः।
कल्पान्तरे तथा विष्णुर्ब्रह्मरुद्रौ तथा हरः॥

नानेन तेषामाधिक्यं न्यूनत्वं वा कथंचन।
तत्तत्कल्पान्तवृत्तान्तमधिकृत्य महर्षिभिः।
तानि तानि प्रणीतानि विद्वांस्तत्र न मुह्यति॥"

इति पुराणवचनानुसारेण तत्तत्कल्पवर्तिपारमार्थिकवृत्तान्तप्रतिपादनमुखेन सकलपुराण-प्रामाण्यप्रतिपादनपरमिदं वचनं किं न स्यात्? 'तस्य तस्य तु माहात्म्यम्' इत्यत्र यस्मिन् कल्प इति पूर्वनिर्दिष्टकल्पपरामर्शस्योचिततया कल्पसंबन्धिमाहात्म्यमेव तत्स्वरूपेण तत्कल्पप्रवृत्तपुराणस्वरूपेण वर्ण्यत इति वक्तुं शक्यत्वादिति चेत्—न; "लयस्ते कारणात्मनः" इति श्लोकस्य पूर्वैरनुदाहृतत्वेन प्रामाण्यस्य निश्चेतुमशक्यत्वात्। यस्मिन् कल्पे यत् पुराणं प्रोक्तम्, तस्य कल्पस्य माहात्म्यं तेन पुराणेन वर्ण्यत इत्यस्य विवक्षितत्वे तत्स्वरूपेण वर्ण्यत इत्यस्यायुक्तत्वाच्च यथोक्त एवार्थः।

**अन्यथाज्ञानविपरीतज्ञानेति।** **अन्यथाज्ञानं** धर्मान्यथाभावज्ञानम्। विपरीतज्ञानं धर्म्यन्तरज्ञानम्। केचित्तु इमे संसर्गारोपतादात्म्यारोपरूपे, धर्म्यंशे भ्रान्तेरभावादिति वदन्ति। **सत्त्वं लघु प्रकाशकमिति।** "गुरुवरणकमेव तमः" इत्यत्र एवकारः सर्वत्र संबध्यते, सत्त्वं लघु प्रकाशकमिष्टं साङ्ख्याचार्यैः। उद्गमनहेतुः गौरवप्रतिद्वन्द्वी हि धर्मो लाघवम्, यतोऽग्नेरूर्ध्वज्वलनम्, यतो वायोस्तिर्यग्गमनं च। तच्च लाघवं करणानां चक्षुरादीनां स्वस्वविषयप्रवृत्तौ हेतुः। अतः प्रकाशकं भवति। तद्धि सत्त्वं स्वयमक्रियत्वात् स्वकार्यं प्रति अवसीदति। तच्च रजसा उपष्टभ्यते प्रवर्त्यते। अतः प्रवर्तकत्वाद्रज उपष्टम्भकम्। तत्र च हेतुश्चलत्वं। यतः स्वयं चलस्वभावं भवति, अतश्चाचलं चलयद्रजः प्रवर्तकम्। तादृशं च रजो गुरुणा आवृण्वता च तमसा तत्र तत्र प्रवृत्तिप्रतिबन्धकेन क्वचिदेव प्रवर्त्यत इति 'गुरु वरणकमेव तमः' इत्युच्यते। वरणकं नियमनहेतुरित्यर्थः। सत्त्वरजस्तमसां प्रकाशप्रवृत्ति-नियमार्थत्वात्सत्त्वस्य प्रकाशकत्वम्, तमसश्च गुरुत्वेन करणमान्द्यहेतुत्वं च सिद्धमिति भावः। **तस्मान्नास्य वचनस्येति।** वस्तुतस्तु सात्त्विके गारुडपुराणेऽस्य वचनस्योपलम्भादेतस्य तामसमात्स्यपुराणवचनस्य प्रामाण्यासिद्धावपि न क्षतिरिति द्रष्टव्यम्। **अनेन वचनेन सत्त्वादिमूलत्व इति।** नन्वेवं द्वैताद्वैतग्राहिप्रमाणाविरोधेऽपि "जनैः स्वकर्मस्तिमितात्मनिश्चयैः", "ततो हि शैलाब्धिधरादिभेदान्" इत्यादि-प्रमाणानुसारात् द्वैतज्ञानस्य सर्वस्यापि दोषमूलत्वनिश्चयसंभवात् द्वैतग्राहिप्रत्यक्षस्याद्वैत-श्रुतिपरिपन्थित्वं न स्यादिति चेत्—न; तेषां वचनानां भेदप्रत्यक्षादेर्दोषमूलत्व-प्रतिपादकत्वस्याद्याप्यसिद्धेः। "न ह्येतस्मादिति नेत्यन्यत्परमस्ति" इति।

अस्यायमर्थः—"अथात आदेशो नेति नेति" इत्येवम्, इतिनेतिशब्दनिर्दिष्टादेतस्माद् ब्रह्मणोऽन्यत्परं नास्तीति। **कारणवाचिशिवादिशब्दानामिति**। "यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासच्छिव एव केवलः", "शिव एको ध्येयः" इत्यादीनाम् "आकाशादेव समुत्पद्यन्ते" इत्यादिवाक्यतुल्ययोगक्षेमत्वादिति भावः। **दशसाहस्रसंमितमिति**। षट्साहस्रप्रतिपादकवचनविरोधस्तु वृत्तभेदादिना, आधिक्यमात्रपरतया वा, सङ्ख्याया अविवक्षितत्वेन वा समाधेयः। **आश्रितेत्यानृशंस्यम इति**। स्वयमाश्रिता। (?) अतो रामस्य स्वस्यामनृशंसतेति सीतावचनादिति भावः। **तत्रापि यतो यथेति पदयोरिति**। "यतो यथा बभूव" इत्यत्रेव "यतो यथा भविष्यति" इत्यत्रापीत्यर्थः। **प्रश्नान्तरव्यवधानेनेति**। इदमुपलक्षणम्; "यतश्चैतच्चाराचरम्" इति चशब्दादीनामपीति द्रष्टव्यम्। **आत्मतया हि व्याप्तिरिति**। यद्यपि 'यन्मयम्' इति मयडर्थप्राचुर्यबलेन व्यापकत्वमात्रं सिध्येत्, नात्मत्वम्, अथापि सृष्टिलयसमभिव्याहारात् स्थितिहेतोर्व्यापकस्यैव प्रष्टव्यतया आत्मत्वसिद्धिरिति भावः। ननु यस्य यथोत्पत्तिस्थानत्वं तस्य तथा लयस्थानत्वं च सिद्धमिति लयस्थानतत्प्रकारप्रश्नावयुक्तावित्यत्राह—**लयस्थानप्रश्न इति**। **सद्वारकत्वाद्द्वारकत्वेति**। सद्वारकत्वं सिद्धान्ते; अद्वारकत्वं यादवभास्करमतयोः; कार्यभ्रमनिवृत्तिरूपत्वं शंकरमत इति विभागो द्रष्टव्यः। **स च कर्तृभेदशङ्कानिबन्धन इति**। लोके उत्पादकसंहर्त्रोर्भेददर्शनादिति भावः। "यत्प्रमाणानि भूतानि" इत्यादिप्रश्नश्लोकानां भाष्ये कण्ठतोऽनुपादाने हेतुमाह—**स्वरूपप्रश्नश्लोकद्वयमिति**। स्थितिलययोरकर्मकत्वात् 'स्थितिलय+संभूतम्' इत्युक्तिरसंगता स्यादित्याशङ्क्याह—**स्थितिलयशब्दाभ्यां रक्षासंहारौ विवक्षिताविति**। इदमिति पदं व्याचष्टे—**सामानाधिकरण्यप्रतिपन्नमित्यर्थ इति**। अत्र केचित्—'इदं च तादात्म्यम्' इति भाष्ये इदंशब्दस्य सामानाधिकरण्यपरत्वं युक्तम्। तादात्म्यशब्दश्च तत्प्रतिपादकसामानाधिकरण्यपर एव व्याख्यातुमुचितः। तदात्म्यप्रतिपादकं सामानाधिकरण्यं जगदन्तर्यामिणो जगच्छब्दार्थस्य तच्छब्दार्थस्य परमात्मनश्चैक्यनिबन्धनम्; न तु व्याप्यव्यापकयोर्जगद्ब्रह्मणोरैक्यनिबन्धनम्। "यन्मयम्" इति प्रश्नोत्तरत्वात्, "जगच्च सः" इति सामानाधिकरण्यस्येति योजनैव स्वरसतः प्रतीयते। यदि च तादात्म्यशब्दः सामानाधिकरण्यप्रतिपन्नैक्यपरः, तदा 'न तु व्याप्यव्यापकयोर्वस्त्वैक्यमुक्तम्।

इति भाष्यस्यास्वारस्यम् । न हि तादात्म्यलक्षणस्यैक्यस्यैक्यनिबन्धनत्वशङ्कास्ति । अतस्तादात्म्यशब्द एव सामानाधिकरण्यपरतया योजनीयः । टीकाया अपि तत्रैव तात्पर्यमिति वदन्ति । **व्याप्तिमात्रेण तादात्म्यं न दृष्टमिति** । 'गगनं घटः' इति सामानाधिकरण्यं न दृष्टमित्यर्थः । न त्वैक्यमिति भ्रमितव्यम्, शरीरात्मनोरपि तादात्म्यलक्षणैक्याभावादिति द्रष्टव्यम् । **श्रुतिसिद्धत्वादिति भाव** इति । व्याप्यत्वव्यापकत्वरूपविरुद्धधर्माध्यस्तयोरैक्यासंभवादिति भावः । **ब्रह्माज्ञानवादिनोऽभिमतमिति** । यद्यपि विकारार्थत्वमप्यभिमतं, तथापि यत इत्यनेन सिद्धत्वादिदमेव तस्याभिमतमिति भावः । ननु त्वन्मतेऽपि मयटः प्राचुर्यार्थत्वाश्रयणमात्रेणात्मत्वपर्यन्तार्थालाभात् तत्कल्पने च प्रतिपत्तिगौरवात् मयटो निरर्थकत्वमविशिष्टमित्यत आह **श्रुतार्थस्वीकारेणेति** । **असाधारणं दूषणमाहेति** । अर्थवत्त्वे संभवत्यानर्थक्याश्रयणमन्याय्यमित्यस्य भेदाभेदवादिसाधारणत्वादिति भावः । ननु 'विष्णुरेवेत्युत्तरमभविष्यत' इति भाष्यमयुक्तम् । किमत्र जगत्पदं न प्रयोक्तव्यमित्यभिप्रायः ? उत एवकारः प्रयोक्तव्य इति ? न प्रथमः, 'जगत् किम् ?' इति जगद्धर्मिकप्रश्ने उत्तरस्यापि जगद्धर्मिकस्यैवोचितत्वात् । नाप्येवकारप्रयोगः, 'सर्वं वाक्यं सावधारणम्' इति न्यायेन सिद्धेः । किंच जगद्विष्णुरेवेत्युत्तरं चासंगतम् । न हि शुक्तिरेव रूप्यमित्युत्तरं क्वचिद् दृष्टचरमित्याशङ्क्य मिथ्यैवेत्युत्तरमभविष्यत्, न तु विरुद्धाकारद्वयसामानाधिकरण्येनेति भाष्यतात्पर्यार्थं हृदि निधायाह–**स्वार्थिकत्वपक्ष इत्यादिना**। **अन्यतराकारोपस्थापक** इति । सत्यत्वमिथ्यात्वयोरन्यतराकारोपस्थापक इत्यर्थः **विष्णुरित्यन्यतराकारोपस्थापकशब्द** इति । 'विष्णुरेव' इति भाष्ये विष्णुशब्दस्य न विष्णुत्वे तात्पर्यं, किंतु सत्यत्वमिथ्यात्वयोरन्यतराकारे तात्पर्यमित्यर्थः । **प्रभूतं प्रचुरमित्यर्थ** इति । यद्यपि काशिकायाम्, "प्राचुर्येण प्रस्तुतं प्रकृतम्" इति व्याख्यातम् । तद्व्याख्याता हरदत्तेनापि, "यद्यपि प्रस्तुतमात्रं वक्ति प्रकृतशब्दः– तथापीह वचनग्रहणादयं विशेषो लभ्यते । वचनग्रहणं हि यादृशस्य प्रकृतस्य लोके मयड्वचनं प्रत्यासन्नं तत्र यथा स्यादित्येवमर्थम्" इत्युक्तम्–तथाप्यस्य ततोऽपि सुन्दरत्वादिदमेव ज्याय इति ध्येयम् । **शङ्कते–यन्मयमित्यस्येति** । **आकारद्वयोपस्थापकसामानाधिकरण्यस्योत्तरत्वायोगादिति** । यद्यपि 'जगन्मिथ्या'

इत्याकारद्वयोपस्थापकसामानाधिकरण्यस्योत्तरत्वं संभवति—तथापि जगत् विष्णुरेवेति सामानाधिकरण्यस्योत्तरत्वं न संभवतीत्यत्र तात्पर्यम्। **न तु तस्य शरीरात्मभावनिबन्धनत्वायोगादिति**। स्वार्थिकत्वमपास्तमिति पूर्वेणान्वयः। सामानाधिकरण्यस्य शरीरात्मभावनिबन्धनत्वायोगप्रसङ्गात् स्वार्थिकत्वं नापास्तम्, येन शरीरात्मभावनिबन्धनत्वस्याप्यसिद्धत्वादन्योन्याश्रयः स्यादित्यर्थः। **अर्थविरोध** इति। जडाजडयोरैक्यविरोध इत्यर्थः। **यन्मयमित्युक्तप्रश्नस्योत्तरत्वानुपपत्तिश्चेति**। मयटोऽर्थवत्त्वाय विकारप्राचुर्ययोरेव प्रष्टुमुचितत्वादिति भावः। ननु न मयड्वैयर्थ्यं, यन्मयमिति विकारप्रश्नसंभवादित्याशङ्क्याह—**यत इत्युपादानस्य पृष्टत्वादिति**। "निखिलहेयप्रत्यनीकता च बाध्येत", "सर्वाशुभास्पदं च ब्रह्म भवेत्" इत्यनयोः पौनरुक्त्यं परिहरति—**सत्यसंकल्पेत्यादिनेति**। असंकोचादेकेनैव पदेनोभयदोषप्रसङ्गोक्तिसंभवादन्यथा पौनरुक्त्यं परिहरति—**यद्वोभयलिङ्गकत्वहानिरित्यादिना**। ननु 'स्थापयिष्यते' इत्यर्थे कथं "स्थाप्यते" इत्यस्य साधुत्वमित्यत आह—**अनन्तरभावित्वादिति**। "वर्तमानसामीप्ये वर्तमानवद्वा" इत्यनुशासनादिति भावः। **सप्तश्लोकीं नमस्कारविषयामिति**।

"अविकाराय शुद्धाय नित्याय परमात्मने।
सदैकरूपरूपाय विष्णवे सर्वजिष्णवे॥
नमो हिरण्यगर्भाय हरये शंकराय च।
वासुदेवाय ताराय सर्गस्थित्यन्तकर्मणे॥
एकानेकस्वरूपाय स्थूलसूक्ष्मात्मने नमः।
अव्यक्तव्यक्तरूपाय विष्णवे मुक्तिहेतवे॥
सर्गस्थितिविनाशानां जगतो यो जगन्मयः।
मूलभूतो नमस्तस्मै विष्णवे परमात्मने॥
आधारभूतं विश्वस्याप्यणीयांसमणीयसाम्।
प्रणम्य सर्वभूतस्थमनन्तं पुरुषोत्तमम्॥
ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः।
तमेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम्॥

विष्णुं ग्रसिष्णुं विश्वस्य स्थितिसर्गे महाप्रभुम् ।
प्रणम्य जगतामीशमजमक्षरमव्ययम् ॥ "

इति सप्तश्लोकी । **विस्तररूपत्वं च सिद्धमित्यर्थ** इति । 'अतः' इत्यस्य 'संग्रहेणोक्तं विस्तरेण वक्तुम्' इत्यनेन संनिहितेनैवान्वय इति भावः । विस्तररूपत्वं सिद्धमित्यर्थ इत्युक्तिस्तु अन्वयफलितार्थाभिप्रायेति द्रष्टव्यम् । **बाह्यस्थितिप्रश्नस्य** चेति । मातापित्रादिक्रियमाणस्थितिप्रश्नस्य चेत्यर्थः । **कण्ठोक्तार्थस्येति** । आत्मत्वस्येत्यर्थः । **वक्ष्यमाणमहाविस्तरस्येति** । अत्र प्रथनस्य शब्दद्वारकत्वात् " प्रथने वावशब्दे " इति शब्दविषये घञः प्रतिषेधात् विस्तरेत्युक्तिः । **ईक्षत्यानन्दमयेति** । पूर्वार्धेन ईक्षत्यानन्दमयाधिकरणार्थभूतप्रकृतिजीववैलक्षण्यमुक्तम् । " सदैकरूपरूपाय " इत्यन्तरादित्यविद्यार्थ उक्त इति भावः । **नृपनभोव्यावृत्तिरिति** । विष्णुपदेन नृपव्यावृत्तिः, सर्वजिष्णुपदेन नभोव्यावृत्तिश्चेत्यर्थः । सर्वजिष्णुपदस्य नियन्तरि स्वारस्याभावाद्व्याप्तिबलादेव नियमनस्यार्थसिद्धेश्च जिष्णुपदं व्याप्यगतदोषास्पृष्टत्वपरं व्याचष्टे—**यद्वा विष्णुशब्देनैवेति** । **कथं विष्णोः कारणत्वमिति** । यद्यपि " अविकाराय " इति श्लोके जगत्कारणत्वं नोक्तम्—तथापि " विष्णोः सकाशादुद्भूतम् " इति तत्पूर्वश्लोके कारणत्वस्येरितत्वात् तथोक्तमिति द्रष्टव्यम् । **विष्ण्वाख्यावतारविग्रहद्वारेति** । विग्रहविशेषद्वारेत्यर्थः । **देवमनुष्यादिशब्दव्यपदेशवदिति** । रामादिविग्रहेषु सत्त्वादिगुणपरिणामविशेषभूतमनुष्यत्वाभावेऽपि मनुष्यसंस्थानसजातीयतया 'रामो मनुष्यः' इति व्यपदेशवत् भगवच्छक्तिभूतजीवात्मभिः आत्मत्वेन सजातीयतयौपचारिकः शक्तिशब्दस्य व्यपदेश उपपद्यत इति भावः । केचित्तु—शक्तिशब्दस्यौपचारिकत्वममृष्यन्तो देवादिशरीरकतया देवादिशब्दवाच्यत्ववत् शक्तिभूतजगच्छरीरके तस्मिन् शक्तिशब्दव्यपदेशो मुख्य इत्यभिप्राय इति वर्णयन्ति । " एकानेकस्वरूपाय सूक्ष्मस्थूलात्मने नमः " इति वक्तव्ये " स्थूलसूक्ष्मात्मने नमः " इत्युक्तिरयुक्तेत्याशङ्क्याह—**धीस्थामिति** । अनेकशब्दस्यात्यन्तसंनिहितत्वादिति भावः । **अण्डान्तर्भूतसर्गादेरिति** । " सर्गस्थित्यन्तकर्मणे " इत्युक्तत्वादित्यर्थः । **अण्डबहिर्भूतेति** । " विष्णुं ग्रसिष्णुं विश्वस्य स्थितिसर्गे महाप्रभुम् " इति वक्ष्यमाणत्वादित्यर्थः । ननु " आधारभूतं विश्वस्य " इत्युत्तरश्लोको वा कालपरः किं न

स्यादित्याशङ्कयाह — **उत्तरश्लोकः समष्टिजीवपर इति**। **अवच्छेदकतया अवच्छेद्यतया चेति**। जगतः कालपरिच्छेद्यत्वात् कालस्यावच्छेदकत्वे निमेषादिभिः परिच्छिन्नत्वादवच्छेद्यत्वमप्यस्तीति भावः। **भवतीति भूतमिति**। अकर्मकत्वात् कर्तरि क्त इत्यत्र तात्पर्यम्, न तु वर्तमानत्वेऽपीति द्रष्टव्यम्। **क्षेत्रज्ञव्यष्टिविशिष्टमिति**। "ज्ञानस्वरूपम्" इति श्लोकस्यायमर्थः—ज्ञानस्वरूपम्=ज्ञानस्वरूपजीवशरीरकमित्यर्थः। अत्यन्तनिर्मलत्वादिकं च जीवद्वारा विशेषणम्। यथा 'महोदारः, महाप्राज्ञः' इत्यादौ महत्त्वस्यौदार्यज्ञानद्वारान्वयः। न च साक्षादेवान्वयोऽस्त्विति वाच्यम्, परमात्मनि साक्षान्निर्मलत्वस्य "अविकाराय शुद्धाय" इत्यादिवाक्यप्रतिपन्नत्वात् सर्वज्ञे तस्मिन् भ्रान्तिदर्शनतः स्थिरत्वस्य च साक्षाद् संभवात् सद्वारक एवान्वयो वक्तव्य इति।

**यदि निर्विशेषज्ञानस्वरूपब्रह्माधिष्ठानभ्रमप्रतिपादनपरं शास्त्रमिति** भाष्ये शास्त्रपदस्य "ज्ञानस्वरूपम्" इति श्लोकमात्रपरत्वमभिप्रेत्य तस्य परोक्तार्थपरत्वे उपसंहारविरोधप्रतिपादनपरतया **यदीत्या**दिभाष्यं व्याख्याय शास्त्रशब्दस्य एकश्लोकमात्रपरत्वमनुचितमिति मत्वा प्रवर्तिष्यमाणप्रश्नोत्तरानुपपत्तिपरतया व्याचष्टे—**यद्वा शास्त्रारम्भोपयोगीति**। **स्वयं निर्गुण इति** छेदः। कर्मवश्यत्वकर्मसंबन्धार्हत्वयोः पर्यायत्वं परिहरति—**अकर्मवश्यत्वं मुक्तस्यापीत्यादिना**। ब्रह्मण एव वस्तुत्वात् ब्रह्मणः शक्तय इति निर्देष्टव्ये ब्रह्मणो भावशक्तय इति निर्देशो न युक्त इत्याशङ्कयाह —**निर्देशो ब्रह्मतादात्म्यमिति निर्देशवदिति**। ब्रह्मात्मकमिति वक्तव्ये ब्रह्मशब्दनिर्दिष्टस्य पुनरपि तच्छब्देन परामर्शवदित्यर्थः। तादात्म्यशब्दस्याभेदपरत्वात् ब्रह्मतादात्म्यमित्यत्र नानुपपत्तिः, प्रकृते तु, 'ब्रह्मणो भावशक्तय' इत्युक्ते भावस्य ब्रह्मण इत्यर्थो न लभ्यते, न हि घटस्य भावरूपमित्युक्ते भावस्य घटस्येत्यर्थो लभ्यते इति चेत्—सत्यम्, समासैकदेशस्य नान्यविशेषणत्वं, तथापि 'शिवस्य भागवतः' इत्युक्ते शिवस्य भगवत्त्वलाभवत् ब्रह्मणो भावशक्तय इत्युक्ते अर्थात् ब्रह्मण एव भावरूपत्वं पर्यवस्यतीति भावः। एतदस्वरसादेवाह—**यद्वा ब्रह्मणो भावशक्तय इति**।

**अतत्पर्यन्तो मिथ्येत्यर्थ इति**। त्वमेव स्वनिष्ठः। त्वदन्यः स्वनिष्ठो नास्तीत्यर्थः। ततश्च परमार्थशब्दः स्वनिष्ठपरः। परमः=उत्कृष्टोऽर्थः परमार्थः।

स्वातन्त्र इति यावत् । व्याप्यत्वसहचरितं हीति । व्याप्यत्वविशेषितमित्यर्थः । शरीरलक्षणद्योतकमिति । यस्य चेतनस्येत्युक्तशरीरलक्षणद्योतकमित्यर्थः । जगच्छरीरकेति संबुद्धिः । अतत्पर्यन्तस्येति । अतच्छरीरकस्येत्यर्थः । परमार्थ-शब्दस्य परमप्रयोजनवचनसंभवे स्वनिष्ठवस्तुपरत्वमयुक्तमित्यस्वरसादाह—यद्वा एक-शब्दः प्राधान्यपर इति । असहायपदव्यवच्छेद्यं हीति । नन्वन्यप्रधानासहाय-संख्यासाधारणवाचिन एकशब्दस्यासहायपदव्यवच्छेद्यमर्थान्तरमपि संभवति, न तु प्रधानत्वमेवेति कथमिदमसहायपदमेकशब्दस्य प्रधानार्थकत्वं ज्ञापयेदिति चेत्—न । 'असहाये' इति विशेषणस्यार्थान्तरसंभवमात्रसूचकत्वात् । "ष्णान्ता षट्" इति सूत्रे महाभाष्ये "एकशब्दोऽयं बह्वर्थः । अस्त्यसहायवाची—एकाग्नयः एकहलः इति । अस्ति संख्यार्थः—एकः द्वौ बहव इति । अस्त्यन्यार्थे वर्तते—प्रजामेका रक्षत्यूर्जमेका" इत्युक्तेः । "एके मुख्यान्यकेवलाः" इति निघण्टुक्तेश्चेति भावः । भाष्ये "त्वदात्मकमेवेदं सर्वमिति त्वदन्यः कोऽपि नास्ति" इत्युक्तमयुक्तम्, तदात्मकस्यैव जगतस्तदन्यत्वादित्याशङ्क्य शेषपूरणेन व्याचष्टे—त्वदन्योऽत्वदात्मक इति । अत्वदात्मकः । स्वनिष्ठ इत्यर्थः । ननु श्लोकार्धैकदेशश्रोक्तार्थोपपादक इत्याहेत्यवतारिका न युक्ता, 'अत इदमुच्यते' इत्यादिभाष्येण श्लोकार्धैकदेश-शब्दाविवक्षितस्य महिमशब्दमात्रस्योपपादकत्वाकथनात्, सर्वव्याप्तेरप्युपपादकतयोपन्या-सादित्याशङ्क्याह—महिम्नो व्याप्तिरूपत्वादिति । सर्वमिथ्यात्वे सर्वव्याप्तिर्नोपपद्यत इति न भाष्याभिप्रायः । अपितु सर्वव्याप्तिर्वा भवतु; यत्किंचिद्व्याप्तिर्वा भवतु; अन्यत् वा भवतु । न तस्य महिमत्वप्रतिपादनमुचितमित्यत्रैव भाष्यसंरम्भ इति भावः । प्रयुक्तपदाविवक्षाकथनमस्वरसमित्याशङ्क्याह—यद्वा व्याप्तेरुक्तार्थोपपादकत्वमिति ।

भाष्ये—न केवलं वस्तुतस्त्वदात्मकं जगत् इत्यत ऊर्ध्वं 'तत्र' इति शब्दोऽध्याहर्तव्यः । ततश्च वस्तुतो यत् त्वदात्मकं जगत् तत्रेत्यर्थः । एतेन 'वस्तु-तस्त्वदात्मकं जगत्' इत्यस्यांशस्य भ्रान्तिदर्शनाकारप्रदर्शकत्वासंभवात् 'वस्तुतस्त्व-दात्मके जगति' 'वस्तुतस्त्वदात्मकस्य जगतः' इति वा षष्ठीसप्तम्यन्यतरान्ततया निर्देश एवोचितः, नान्यथेति शङ्का पराकृता । मामेभ्यः परमव्ययमित्यत्रेति छेदः । नन्वपरोक्षस्य देहात्मभ्रमस्य शास्त्रजन्यज्ञानेन परोक्षेण बाधाभ्युपगमे द्वैतग्राहिप्रत्यक्ष-

स्यापि शास्त्रजन्यज्ञानेन बाधः किं न स्यादिति शङ्काम्, सादृश्यादिरूपभ्रमहेत्वभावात् कथं देहात्मभ्रम इति शङ्कां च परिहरन् देहात्मभ्रममुपपादयति-- **देहात्मभ्रमश्च संसर्गकृत** इति। यथा 'जलमुष्णम्' इति प्रत्यक्षं तेजोद्रव्यसंपर्कात् दोषसाहित्यात् शङ्कितदोषं सत् जलस्य शैत्यस्वभावत्वग्राहकशास्त्रेण बाध्यते इत्यर्थः (भावः)। न चैवं ब्रह्मप्रपञ्चयोरप्युपादानोपादेयभावेन परस्परसंसृष्टतया ब्रह्मगतसत्त्वप्रतीतिः प्रपञ्चे किं न स्यादिति वाच्यम्, ब्रह्मसंसर्गस्यैव दोषत्वे अद्वैतशास्त्रमसदेव अप्रमाणमेव अव्यावहारिकमेव सत्त्वेन प्रमाणत्वेन व्यावहारिकत्वेन च गृह्यत इति शङ्कितदोषतया तदपि न बाधकं स्यात्। किंच प्रपञ्चस्य सत्त्वाभावे ब्रह्मसंसर्गस्याप्यसंभवेन तस्य दोषत्वाभावादित्यन्यत्र विस्तरः। **अनुभवसाधनयोगयोग्येति** भाष्यम्। अनुभवसाधने ध्यानयोगे योग्यानि परिशुद्धानि मनांसि येषां ते तथोक्ताः। योग्यतायां च परिशुद्धिर्हेतुः। परिशुद्धौ च कर्मयोगो हेतुरित्येवंपरतया व्याख्याय— योगयोग्येत्यत्र तृतीयातत्पुरुषो विवक्षितः। योगशब्दश्च कर्मयोगपरः। योग्यतापरिशुद्ध्योश्च भेदाभावात् पूर्ववत्तयोर्हेतुहेतुमद्भावश्च न विवक्षितः। योग्यपरिशुद्धेति व्यपदेशश्च 'घटजननयोग्यदृढदण्डः' इतिवदुपपन्न इत्यभिप्रयन्नाह--**योगेन योग्यता परिशुद्धिरिति वार्थ इति। अखिलजगच्छब्देनाचिद्रूपं जगद्विवक्षितमिति।** अत्र केचित्—पूर्वश्लोक इव चिद्रूपजगद्विवक्षायामपि न दोषः। चिद्रूपं जगत् ज्ञानात्मकं पश्यन्तीत्युक्तेऽपि दोषाभावात्। यद्वा पूर्वश्लोकेऽपि जगच्छब्दोऽचित्परः एव। ततश्चार्थस्वरूपं जगत् देवमनुष्यादिरूपं ज्ञानस्वरूपमात्मस्वरूपं पश्यन्तः देहात्मभ्रमवन्त इत्यर्थः। ततश्च जगच्छब्दद्वयस्यापि न वैरूप्यमित्यपि वदन्ति। **प्रथमश्लोकसंक्षिप्तमित्यादि।** अयमर्थः—प्रथमश्लोके संक्षिप्तं तच्छ्लोकमात्रविषयतयोक्तमनुक्तदूषणैः सह पौनरुक्त्यार्थविरोधशास्त्रतात्पर्यविरोधैः सह विस्तरेण सर्वश्लोकसाधारणतया आहेत्यर्थः। **सर्वश्लोकसाधारणमि**त्येतत्तु विस्तरशब्दविवरणम्। न तु संक्षेपविस्तरशब्दयोर्दूषणस्वरूपसंक्षेपविस्तरपरत्वम्। दूषणस्वरूपं हि प्रथमश्लोके त्वमित्यादिपदानां लक्षणा, महावराहस्य स्तुतिप्रकरणविरोध इति विस्तरेणोक्तम्; उत्तरत्र तु पदानां लक्षणा, प्रकरणविरोध इति संक्षेपेण। अतो यथोक्त एवार्थः। **अवान्तरप्रकरणेति।** अवान्तरप्रकरणस्योपक्रमोपसंहारादिविरोध इत्यर्थः।

( प्रकाराद्वैतप्रकार्यद्वैतविवेकः )

**वक्ष्यमाणश्लोकस्थेति** । "यद्यन्योऽस्ति परः कोऽपि" इति श्लोकस्थान्यपरशब्दस्वभावाच्चेत्यर्थः । **प्रकाराद्वैतमेवेति** । एकप्रकारकत्वमित्यर्थः । **पुरोडाशविधिवदिति** । अष्टाकपालपुरोडाशद्रव्यकाग्निदेवताकयागवदित्यर्थः । पौर्णमास्यधिकरणे आग्नेयस्याष्टाकपालपुरोडाशस्य विधेः प्रत्याख्यातत्वादिति द्रष्टव्यम् । **प्रतिबन्धकाभावे सतीति** । सुखादिप्रतिसंधानप्रतिबन्धकाभावे सत्यपि सुखादिप्रतिसन्धानाभावो व्यवस्थेत्यर्थः । **मयट् स्वार्थिक** इति । "तस्मात्मपरदेहेषु" इति श्लोकस्यायमर्थः—**सतोऽपीति** "षष्ठी चानादरे" इत्यनादराधिक्ये भावलक्षणे द्योत्ये षष्ठी। आत्मपरदेहेषु सत्तामनादृत्य एकमयं समानमेकरूपं विज्ञानलक्षणमात्मस्वरूपमेव परमार्थो भवतीत्यर्थः । श्रीविष्णुचित्तार्यैस्तु 'सतोऽपि ज्ञानम्' इति व्यतिरेकनिर्देशस्वारस्यात् ज्ञानशब्दोऽयं धर्मभूतज्ञानपरतया व्याख्यातः । मयट्स्वार्थिकत्वस्यास्वरसत्वादाह--**यद्वा एकशब्दो भावप्रधान इति** । **ऐकार्थ्यं दर्शितमिति** । वचनयोरविरोधः प्रदर्शित इत्यर्थः । अविरोधप्रदर्शनप्रकारश्च, "प्रत्यस्तमितभेदम्" इति श्लोकभाष्यव्याख्यायां ग्रन्थकृता कृतो द्रष्टव्यः । **एकवचनं नोपपद्यत** इति। इदमुपलक्षणम् । 'सतोऽप्येकमयम्' इत्येकवचनं नोपपद्यत इति द्रष्टव्यम् । **देहशब्देऽप्येकवचनं स्यादिति** । ततश्च "तस्मात्मपरदेहेषु" इति बहुवचनं नोपपद्यत इति भावः ।

**स्थानत्रय** इति । "अन्यः परः" इत्येकं स्थानम् । "एषोऽहम्" इति द्वितीयम् । "अयं चान्य." इति तृतीयम् । ननु—अहंत्वतदन्यत्वाभ्यां वैषम्यं वक्तुं शक्यम् । न चाहंत्वमपि परमात्मन्यास्त इति वाच्यम्, तथा सति 'अहं ब्रह्मास्मि' इत्यादीनाम:मर्थब्रह्माभेदप्रत्यायकानां जीवब्रह्मभेदप्रत्यायकत्वशङ्काया एवाभावेन तत्परिहाराय यत्नो न कर्तव्यः स्यात । अहंशब्दस्यात्मशब्दापरपर्यायतया आत्मत्वजातेः सकलजीवपरमात्मसाधारणतया अहंत्वमादीनामात्मत्वमात्रप्रवृत्तिनिमित्तकत्वेन "तत्त्वमसि", "अहं ब्रह्मास्मि" इत्यादिवाक्यानां ब्रह्मण आत्मत्वजात्याश्रयत्वप्रतिपादकत्वेन विरोधाप्रसक्तेस्तन्निराकरणाय यत्नोऽपि विफलः स्यादित्यस्वरसादाह—**पूर्वं देवादिष्विति । अन्यादृशाकार इत्युक्तमिति** । 'अयमेतदाकारः,

अयमन्याकारः ' इति निर्देष्टव्ये ' अन्यादृशाकारः ' इत्युक्तः आकारेऽपि सुसदृशत्वमात्र-मेव, न त्वैक्यमस्तीति भावः ।

**सर्वथा साम्याभ्युपगमे हीति** । एकत्वाश्रयत्वेनापि साम्याभ्युपगम इत्यर्थः। **भेदः षड्जादिसंज्ञित इति पाठे सत्यपीति** । संज्ञाभेद इत्युक्ते यथैकस्य घटस्य घटकलशादिसंज्ञाभेदः, एवं षड्जादिसंज्ञाभेदमात्रमेव, न तु संज्ञिभेदोऽस्तीति न मन्तव्यम् । संज्ञाभेदाधीनत्वात् संज्ञिभेदस्य । ' तदधीनत्वात्तच्छब्दम् ' इति न्यायेन भाष्ये संज्ञाभेदशब्देन संज्ञिभेद एवोपचर्यत इति भावः । ननु षड्जादिसंज्ञासंबन्ध-ग्रहः केनचिदितरव्यावृत्ताकाकारेण गृहीत एव धर्मिणीति वक्तव्यम् ; ततश्च संज्ञा भेदमन्तरेणापि भेदकाकारस्याभ्युपगन्तव्यत्वात् कथं तदेकभेदत्वमिति चेत्—सत्यम्; संज्ञासंबन्धो भेदप्रतीतौ प्रायेण हेतुरित्यत्र तात्पर्यात् । **दार्ष्टान्तिकेऽपि तथैवेति**। दृष्टान्ते भेदसिद्धेर्दार्ष्टान्तिकेऽपि तथैव भवत्वित्यर्थः । **यत्र त्वाकाशदृष्टान्त** इति । यथैकस्याकाशस्य कालभेदेन रूपभेदवत्त्वम् , तथैकस्यैवात्मनः कालभेदेन देवादिभेदवत्त्वमित्येतावानेवेह वक्तव्योऽर्थः । ततश्च कस्या व्यक्तेः पूर्वत्वम् , कस्या व्यक्तेः परत्वं, कुत्र व्यक्तावुपदेशः, कुत्र वातिदेश इत्यादिविचारे न संनद्धव्यमिति द्रष्टव्यम् । **वेदान्तिभिर्नभसो निरवयवत्ववाद इति** । अत्र निरवयवत्वेन वादो निरवयवत्ववादः । तस्य च कर्म नभः ; ततश्च " उभयप्राप्तौ " इति नियमात् कर्तरि तृतीयासंभवात् तृतीयाया नानुपपत्तिरिति द्रष्टव्यम् । **नभस्यंशभेदाभि-प्रायेणेति** । न चैवं जीवानामप्याकाशवत् प्रदेशभेदमात्रत्वं स्यात्, तच्चात्मैक्य-वादिनोऽपि संमतमेवेति वाच्यम्; सुखदुःखव्यवस्थाद्यनन्यथासिद्धभेदग्राहकप्रमाणेन भेदसिद्धेरित्यत्र तात्पर्यात् । **तत्रैव साम्यदृष्टान्ताभिधानादिति** । न च " यथाग्निरग्नौ संक्षिप्तः समानत्वमनुव्रजेत् " इत्यत्र साम्यमात्रस्य प्रागपि सिद्धतया समानत्वमित्यस्यैक्यमेवार्थः समाश्रयणीय इति वाच्यम्, ऐक्यस्य बाधितत्वेन भेदकाकारविशेषप्रहाणेन साम्यविशेषस्यैव तदर्थत्वात् ।

**अध्यायचतुष्टयोक्तमिति** । द्वितीयांशत्रयोदशाध्यायप्रभृत्यध्यायचतुष्टयेनोक्त-मित्यर्थः । **अन्यथा तत्सामानाधिकरण्येनेत्यनन्तरोक्तिविरोधादिति** । **अन्यथा**= ज्ञानाकारमात्रपरामर्शित्व इत्यर्थः । **तं भेदमोहमिति** । देवाद्याकारहेतुकं भेदमोह-

मित्यर्थः । ननु "आत्मस्वरूपम्" इत्यस्यैवोपलक्ष्यवाचितया "सर्वमेतदात्मस्वरूपम्" इति सर्वशब्दस्योपादानं भाष्ये किमर्थमित्याशङ्क्याह — **अहं त्वं सर्वमिति त्रयाणामपि पदानामि**त्यादिना । आत्मस्वरूपपदस्य श्लोके सर्वशब्दमात्रेण सामानाधिकरण्यं दृश्यते; तत् कथमहंत्वंशब्दयोरात्मस्वरूपपदसामानाधिकरण्यमित्याशङ्कायामाह — **अहंत्वमर्थसजाती**येति । अहंत्वमर्थसजातीयार्थवाचिसर्वशब्दस्यात्मस्वरूपशब्देन सामानाधिकरण्यदर्शनात् अहंत्वंशब्दयोरपि तत्सामानाधिकरण्यं फलितमिति ज्ञापनार्थं "सर्वमेवैतदात्मस्वरूपम्" इति सर्वशब्दस्यापि सहोपादानं कृतं भाष्य इति भावः । अत्र सर्वशब्दस्याहंत्वमर्थवचनसामर्थ्ये सत्यपि गोबलीवर्दन्यायमभिप्रेत्याहंत्वमर्थसजातीयवाचित्वोक्तिरिति द्रष्टव्यम् । इदं चोपलक्षणम् । परमते "सोऽहं स च त्वम्" इत्यत्रापि 'सः' इत्यस्यात्मस्वरूपपरामर्शितयोपलक्ष्यसामानाधिकरण्यस्य परेणाभ्युपेतत्वादिति द्रष्टव्यम् । **लक्षणयास्त्विति चेदि**ति । अहंत्वमादिशब्दानामन्तःकरणविशिष्टात्मवाचिनां विशेष्यस्वरूपमात्रे लक्षणा; यथा 'घटाकाश एव महाकाशः' इत्यत्रेति भावः । प्रक्रमस्थस्योपलक्ष्यपदस्योपलक्ष्यवाचिशब्दलक्षकत्वापेक्षयोपसंहारगतस्य "आत्मस्वरूपमित्यनेन" इत्यस्यात्मस्वरूपमित्युक्तेनार्थेनेत्यर्थपरत्वं युक्तमित्यन्यथा व्याचष्टे— **यद्वा अनेनेति पदमुपलक्ष्यविशेषण**मिति । न तूपलक्ष्यवाचिपदविशेषणमिति भावः । नन्वस्यां योजनायां "सर्वमेतदात्मस्वरूपम्" इत्यस्य स्थलनिर्देशप्रदर्शनोपक्षीणत्वात् अहंत्वंशब्दसामानाधिकरण्यहेतोः सर्वशब्दसामानाधिकरण्यस्यानुक्तिरित्याशङ्क्याह — **अस्यां योजनाया**मिति । यद्यपि पूर्वयोजनायामपि सर्वशब्दसामानाधिकरण्यप्रदर्शनमर्थसिद्धमेव, तथापि शब्दपरत्वे "सर्वमेतदात्मस्वरूपम्" इत्येतत् सर्वशब्दसामानाधिकरण्यप्रदर्शनपरं भवेत् । द्वितीययोजनायां तूपलक्ष्यनिर्देशस्थलप्रदर्शनमात्रपरमिति वैषम्यम् । द्वितीययोजनायाम् "अहंत्वमादिशब्दानाम्" इत्यत्राहंत्वमादयः शब्दा येषां त इति व्युत्पत्त्या अर्थपरत्वं द्रष्टव्यम्, शब्दस्यार्थसामानाधिकरण्यासंभवात् । ननूपलक्षणत्वेऽपि सामानाधिकरण्यं लक्षणया 'घटाकाशो महाकाशः' 'शाखाग्रं चन्द्रमाः' इत्यादिषु दृष्टमित्याशङ्क्याह— **यद्यहंत्वमादिशब्दा** इति । तथापि "स चात्मस्वरूपम्" इत्यनेनैव सामानाधिकरण्यस्य सिद्धत्वात् अहंत्वमादिसामानाधि-

करण्यं व्यर्थमित्यर्थः । सिद्धान्तेऽहमादिशब्दानां प्रयोजनमाह — **अहंशब्दस्यापेक्षिकेति** । प्रत्यक्त्वमात्रस्य प्रवृत्तिनिमित्तत्वे सर्वेषां स्वात्मनां स्वात्मानं प्रति प्रत्यक्त्वात् परमात्मन्यप्यहंशब्दप्रयोगप्रसङ्ग इत्याशङ्क्य प्रत्यक्त्वस्य प्रवृत्तिनिमित्तत्वेऽपि स्वतन्त्रशब्दोच्चारयितृत्वमुपाधिरित्यभिप्रेत्याह — **आपेक्षिकेति** । **प्रकृतेति** । द्वितीयांशत्रयोदशाध्यायमारभ्य प्रस्तुतत्वादित्यर्थः । अयमस्य श्लोकस्यार्थः—अहमपि ज्ञानैकाकारः स आत्मा, त्वमपि तादृशः, सर्वमेतदात्मस्वरूपमपि ज्ञानैकाकारम् । अत आत्मसु देवाद्याकारेण भेदमोहं परित्यजेति ।

**प्रथमं किमात्मस्वरूपैक्यपर**मिति । मुक्तैक्यं पश्चाद् दूषयिष्यत इति प्रथमशब्दाभिप्रायः । **द्वा सुपर्णा**विति । सुपर्णसाम्यात् सुपर्णौ । **सयुजौ** = सर्वदा सह वर्तमानौ । **सत्त्वं ह्यन्तःकरणमिति** छेदः । **येनेतीत्थंभावे तृतीये**ति । उक्तयुक्तिबलात् दुर्बलाप्युपपदविभक्तिः सोढव्येति भावः । **द्वावपि कर्तृविशेषा**विति । "स्वतन्त्रः कर्ता", "तत्प्रयोजको हेतुश्च" इति द्वयोरपि कर्तृसंज्ञाविधानादिति भावः । **चशब्देनोक्तमिति** । **तथाच श्रुतिरित्यत्रे**ति भावः । तच्च तत्र सुस्पष्टम् ।

(मुक्तावप्यनैक्यम्)

**निराकरणपरत्वाच्च प्रकरणस्येति** ।

"धर्माय त्यज्यते किंनु परमार्थो धनं यदि ।
व्ययश्च क्रियते यस्मात् कामप्राप्त्युपलक्षणः ॥ (२-१४-१७)

पुत्रश्चेत् परमार्थः स्यात् सोऽप्यन्यस्य नरेश्वर ।
परार्थभूतः सोऽन्यस्य परमार्थो हि तत्पिता ॥

एवं न परमार्थोऽस्ति जगत्यत्र नराधिप ।
परमार्थो हि कार्याणि कारणानामशेषतः ॥

राज्यादिप्राप्तिरत्रोक्ता परमार्थतया यदि ।
परमार्था भवन्त्यत्र न भवन्ति च वै ततः ॥

ऋग्यजुःसामनिष्पाद्यं यज्ञकर्म मतं तव ।
परार्थभूतं तत्रापि श्रूयतां गदतो मम ॥

यत्तु निष्पाद्यते कार्यं मृदा कारणभूतया ।
तत् कारणानुगमनाज्ज्ञायते नृप मृन्मयम् ॥

एवं विनाशिभिर्द्रव्यैः समिदाज्यकुशादिभिः ।
निष्पाद्यते क्रिया या तु, सा भवित्री विनाशिनी ॥

अनाशी परमार्थस्तु प्राज्ञैरभ्युपगम्यते ।
तत्तु नाशि न संदेहो नाशिद्रव्योपपादितम् ॥

तदेवाफलदं कर्म परमार्थो मतस्तव ।
मुक्तिसाधनभूतत्वात् परमार्थो न साधनम् ॥

ध्यानं चैवात्मनो भूप परमार्थार्थशब्दितम् ।
भेदकारि परेभ्यस्तत् परमार्थो न भेदवान् ॥

परमात्मात्मनोर्योगः परमार्थ इतीष्यते ।
मिथ्यैतदन्यद् द्रव्यं हि नैति तद्द्रव्यतां यतः ॥

तस्माच्छ्रेयांस्यशेषाणि नृपैतानि न संशयः ।
परमार्थस्तु भूपाल संक्षेपाच्छ्रूयतां मम ॥

एको व्यापी समः शुद्धो निर्गुणः प्रकृतेः परः ।"

इति प्रकरणस्येत्यर्थः । **संक्षेपविस्तराभ्यां त्विति ।**

" इत्युक्तस्ते मया योगः खाण्डिक्य परिपृच्छतः ।
संक्षेपविस्तराभ्यां तु किमन्यत् क्रियतां तव ॥ "

इति श्लोकः । **अयं सम्यगर्थ** इति । "यथाग्निसङ्गात् कनकम्" इति स्मृत्यानुगुण्यादिति भावः । "आत्मभावं नयत्येनम्" इत्यत्रात्मशब्दस्य ध्येयब्रह्मपरत्वमात्मकर्षकत्वं चेति प्रथमा व्याख्या । आत्मशब्दस्य ध्यातृपरत्वमिति द्वितीया ॥

पक्षद्वयेऽप्याकर्षकशब्दो यौगिकव्युत्पत्त्या अग्निपरः। उत्तरेषु त्रिष्वपि पक्षेष्वयस्कान्तपरः। आत्मशब्दस्य ध्येयपरत्वमेव, भावशब्दश्चेष्टापर इति तृतीया व्याख्या। आत्मशब्दो लोहध्यात्रोर्दृष्टान्तदार्ष्टान्तिकयोर्निष्कृष्टस्वरूपपर इति चतुर्थी। आत्मशब्दो ध्येयाकर्षकपरः। भावशब्दश्च प्राभिवचन इति पञ्चमीति निष्कर्षो द्रष्टव्यः। **अनुसंचरन्नित्यनेन भेदो दर्शित** इति। अनुशब्देन मुक्तसंचारस्य परमात्मसंचारपाश्चात्यत्वकथनादिति भावः। **समानशब्दोऽप्यैक्ये प्रयुज्यत** इति। ननु वाक्शब्दपर्यायगोशब्दस्य किरणे प्रयोगो न वाक्शब्दस्य किरणार्थत्वसाधक, अप्रयोजकत्वात्। अतः परिहाग्रन्थे सामानाधिकरण्यशब्दविचारोऽपि न युक्त इति चेत्—न। समशब्दार्थाधिकार्थस्य समानशब्देऽप्यप्रसिद्ध्या तथोक्त्युपपत्तेः। **मुख्यार्थत्वेऽभ्युपगतेऽपी**ति। हरिशब्दस्य भेकादिष्विवेति भावः। **स तु साधारण्यार्थ** इति। सादृश्यवाचिना शब्देन लक्षणया साधारण्यं प्रतीयत इत्यर्थः। लक्षणया तत्सिद्धिप्रकारमुपपादयति—**तथाही**ति। साधारण्यस्यानेकनिरूप्यत्वादनेकप्रतियोगिकेत्युक्तम्। पुत्रं प्रति मातुः, श्वशुरं प्रति स्नुषाया एकस्या एव पुत्रश्वशुरौ प्रति साधारण्याभावात् **एकरूपे**त्युक्तम्। **ताभ्यां संबन्धि धन**मिति। ततश्च समशब्दार्थीभूतसदृशसंबन्धित्वं साधारणस्यास्तीति लक्षणाबीजभूतमुख्यार्थसंबन्धिसत्त्वात्त्वात् लक्षणोपपद्यत इति भावः। सादृश्यस्य साधारणधर्माधीनत्वात् सादृश्यवाचिशब्दः सादृश्यनिर्वाहके साधारणे वर्तत इति निष्कर्षः। एवं दृष्टान्ते सामानाधिकरणसमकालादिस्थलेऽप्यमुमर्थं शिक्षयति—**तथा नीलत्वोत्पलत्वे** इति। **द्वाभ्यां संयोगित्वेने**ति। ययोः समकालत्वमुच्यते, ताभ्यां द्वाभ्यामित्यर्थः। **द्रव्यकालादिषु समसमानादिशब्दा** इति। यद्यपि सामानाधिकरण्ये 'समकालवर्ती' इत्युदाहरणानुसारेण काले समशब्दस्य द्रव्ये समानशब्दस्य चोपपाद्यतया द्रव्यकालादिषु समानसमशब्दा इत्येव वक्तुमुचितम्, तथाप्यल्पाच्तरत्वात् क्रमाविवक्षणाद्वा नानुपपत्तिरिति द्रष्टव्यम्। **युज्यत इति युगि**ति। अत्र केचित्—संबन्धार्थस्य 'युजिर् योगे' इत्यस्य रौधादिकस्य कर्तरि युज्यत इति रूपस्याभावात् समाध्यर्थस्य च युजेः कर्तर्येतद्रूपसंभवेऽपि तस्यार्थस्य प्रकृतासंगतेः "युजिर् योगे" इत्यस्यैव कर्मण्येतद्रूपमिति वक्तव्यम्। तत्र च "ऋत्विग्दधृक्" इत्यादिसूत्रेण क्विनो वा "सत्सूद्विषा"

इत्यादिना "क्विप् च" इत्यनेन वा क्विपो वा कर्तरि विहितत्वेन कर्मण्यसंभवात् युज्यतेऽनेनेति कर्तर्येव क्विन्, पच्यते अनेनेति पाचक इतिवत्। तस्य सहशब्देन सदृशवाचिना बहुव्रीहिः। अस्ति च सहशब्दः सदृशपर्यायः। यथा—सदृशः सख्या ससखीति। तस्यास्वपदविग्रहोऽयं बहुव्रीहिः। समानं युक् गुणजात मस्येत्यर्थः। तत्र च "उपसर्जनस्य" इति सहस्य सभावः इति। **अग्नित्वोपाधेः प्रहाणादिति**। अपृथग्भूतस्याप्यग्नित्वप्रहाणे अग्नेर्देवताया एवाभावप्रसङ्ग इत्यर्थः। ननु वाक्यद्वयेन विरुद्धक्रमद्वये प्रतीयमाने कथमविरोध इत्यस्वरसादाह—**किंचाग्नेर्वा एतानीति**। **दत्तमुत्तरमिति**। "उपाधिश्च देहान्तःकरणादिः" इत्युक्तमित्यर्थः।

**प्राप्यस्य** सगुणत्वायेति। न च "विकल्पोऽविशिष्टफलत्वात्" इति सूत्रं निर्गुणविद्याव्यतिरिक्तविषयं किं न स्यात्? येन सर्वविद्याप्राप्यस्यैकरूपतया सर्वत्र सगुणत्वमेव सिध्येदिति वाच्यम्—संकोचे प्रमाणाभावादिति भावः। **विद्याविकल्पश्च तत्रैव द्रष्टव्य** इति। गुणयुक्तमेव प्राप्यमिति प्राप्यस्यैकरूप्यकथनेनाविशिष्टफलत्वाविष्करणाद्विकल्पोऽपि तस्मिन् वाक्य उक्तप्राय इति द्रष्टव्यमित्यर्थः। भाष्ये—**यद्यपि सच्चित्त इत्यादिनेति**। "यद्यपि सच्चित्तो न निर्भुग्नदैवतं गुणगणं मनसानुधावेत्, तथाप्यन्तर्गुणामेव देवतां भजते। तत्रापि सगुणैव देवता प्राप्यते" इति व्याख्यातमित्यर्थः। अस्य चायमर्थः—सच्चितो न निर्भुग्नदैवतं गुणगणं मनसानुधावेत्। अपहतपाप्मत्वादिगुणं दैवताद्विभक्तं यद्यपि दहरविद्यानिष्ठ इव सच्चित्तो न स्मरेत्, तथाप्यन्तर्गुणामेव देवतां भजते। तत्रापि सगुणैव देवता प्राप्यत इति। देवतास्वरूपानुबन्धित्वात् कल्याणगुणगणस्य केनचित् परदेवताऽसाधारणेन निखिलजगत्कारणत्वादिनोपास्यमानापि देवता वस्तुस्वरूपानुबन्धिसर्वकल्याणगुणविशिष्टैवोपास्यते। अतः सगुणमेव ब्रह्म तत्रापि प्राप्यमिति सद्विद्यादहरविद्ययोर्विकल्प इत्यर्थ इति। 'सोऽयं गौः' इत्यत्र विप्रतिपन्नं प्रत्याह—**सोऽयं व्रीहिरित्यादेरुपलक्षणमिति**। **मुख्योऽप्यस्वरस** इति। जात्यंशे मुख्यत्वं व्यक्त्यंशेऽमुख्यत्वमित्यर्थः। अत्यन्तामुख्यो न भवतीत्यर्थः। **व्यक्त्यंशप्रहाणादस्वारस्यमिति**। जातेर्जात्या सौसादृश्यवत् व्यक्त्यन्तरस्य व्यक्त्यन्तरेण भेदकाकारोपलम्भेन सौसादृश्याभावादित्यर्थः। **मुख्य** इत्यस्यात्यन्तामुख्यो न भवतीति व्याख्याने बीजमाह—**न हि**

**मुक्तस्येति** । "स्वरूपतो गुणतश्च यन्निरवधिकातिशयं सोऽस्य मुख्योऽर्थः" इति पूर्वं भाषितत्वादिति भावः ।

श्लोके प्रकृतोपयुक्तं पदं दर्शयति—**अस्मिन् श्लोके तथैवेति** । **एकप्रकरणत्वज्ञापनायेति** ।

"विज्ञानं प्रापकं प्राप्ये परे ब्रह्मणि पार्थिव ।
प्रापणीयस्तथैवात्मा प्रक्षीणाशेषभावनः ॥

क्षेत्रज्ञः करणी ज्ञानं करणं तस्य वै द्विज ।
निष्पाद्य मुक्तिकार्यं वै कृतकृत्यं निवर्तयेत् ॥

तद्भावभावमापन्नस्तथासौ परमात्मना ।
भवत्यभेदी भेदश्च तस्याज्ञानकृतो भवेत ॥

विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते ।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥"

इति हि श्लोकक्रमः । **श्लोके तद्भावेत्युपमानबहुव्रीहिरिति** । तद्भाव इव भावो यस्य स तद्भावः, तत्समानस्वभावः । तस्य भावस्तद्भावभाव इति व्याख्याने द्वितीयभावशब्दस्य प्रयोजनवत्तत्त्वमिति भावः । भाष्यस्थतद्भावशब्दस्य श्लोकवैरूप्येण तत्पुरुषत्वमनुपपन्नमित्यत आह—**समासे व्यात्यव्यासिते सति हीति** । श्लोकभाष्ययोर्वैरूप्यपरिहारार्थमाह—**यद्वा भाष्यस्थतद्भावशब्दोऽपीति** । ननु भाष्यस्थतद्भावशब्दस्य बहुव्रीहित्वे, "तद्भावो ब्रह्मणो भावः" इति भाष्यमयुक्तमित्याशङ्क्यानेकशब्दाध्याहारपूर्वकं व्याचष्टे—**तद्भावेति पदे तच्छब्दवाच्यब्रह्मसंबन्धितया प्रतीयमान इति** । **द्वितीयभावशब्दः सत्तावाचीति** । यद्यप्यस्मिन् पक्षे द्वितीयभावशब्दस्य परपक्ष इव वैयर्थ्यमस्ति, तथाप्यभेदस्य बाधितत्वात् पराभिमतार्थो न संभवतीत्यत्र तात्पर्यम् । अर्थान्तरप्रतीतिनिवारणार्थत्वेन साफल्यसंभवे स्वरूपव्याकृत्यामात्मनर्थकमित्यभिप्रेत्याह—**यद्वा भेदरहितो भवतीति** । **अनन्तरनिर्देशो न घटत इति** । भेदस्य कल्पितत्वेन कृतत्वासंभवादिति भावः । **सिद्धान्ते—भेदश्च तस्याज्ञानकृतो भवेत्** । देवादिभेदश्चात्मन्यारोपितः तस्य

मुक्तस्याज्ञानकृतो भवेत्, कर्मकृतो भवेत्। कर्मकृतत्वेन ज्ञातो भवेदित्यर्थः। अथवा 'अभवेत्' इत्यकारप्रश्लेषः, 'अपचसि त्वं जाल्म' इतिवत्, "नञो नलोपस्तिङि क्षेपे" इति द्रष्टव्यम्। **प्रकर्षेण ज्ञात एकस्वरूपभेद** इति छेदः। **हेयार्हतापत्तेः स्वाभाविकत्वप्रसङ्गादि**ति। "ब्रह्मणः" इत्यस्य षष्ठ्यन्तत्वपक्षे देवादिभेदस्य तन्मूलकर्माविद्यादिदोषस्य च ब्रह्मगतत्वेनैवाभ्युपगन्तव्यत्वात् ब्रह्माश्रयस्य चाज्ञानस्य—

"ज्ञानरूपं परं ब्रह्म तन्निवर्त्यं मृषात्मकम्।
अज्ञानं चेत् तिरस्कुर्यात् कः प्रभुस्तन्निवर्तने॥"

इति न्यायेन निवर्तकान्तराभावात स्वाभाविकत्वप्रसङ्ग इत्यर्थः। **उपाध्यपगमे नश्यतीति श्लोकार्थ** इति। "कः करिष्यति" इत्यस्य कः परिपालयिष्यतीत्यर्थ इति भावः। "असन्तम्" इत्यस्यानित्यवाचिन उपयोगमान्द्यादाह — **उपाध्यभावादि**ति। अस्मिन् पक्षे "करिष्यति" इत्यत्र कृञ्धातोरुत्पादने स्वारस्यमस्तीत्यपि द्रष्टव्यम्। **व्यवच्छेद्याभावादफलत्वमि**ति। ननु नैतद्व्यवच्छेदकतयोपात्तम्। अपितु कल्पकेऽज्ञाने नष्टे काल्पनिकत्वरूपसत्त्वं पुनर्भेदानुत्पत्तौ हेतुतयोक्तमिति चेत्— न। पूर्वोक्तदोष एव तात्पर्यात्।

**हृद्देशस्थ आत्मनीत्यर्थ** इति। तद्भ्रामणार्थं तदन्तःप्रवेशस्यावश्यकत्वात्, "अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा" "योऽन्तरो यमयति" इत्यादिप्रमाणादिति भावः। केचित्तु सर्वभूतशब्दस्यैव चेतनपर्यन्तत्वात् हृद्देशशब्देन जीवानामन्तःप्रदेश एव विवक्षित इति वदन्ति। **नापि चिदचिदीश्वराणामि**ति भाष्यस्य मृषावाद्यभिमतैक्यनिषेधपरत्वमयुक्तम्, अचिदीश्वरयोस्तैरैक्यानभ्युपगमादित्यभिप्रेत्य भास्कराद्यभिमतैक्यनिषेधपरतया व्याचष्टे—**जगद्ब्रह्मणोरि**ति। मृषावादिमतनिरासोपसंहारे इतरमतनिरासो न युक्त इत्यभिप्रेत्य तन्मतनिरासपरतयावतारयति— **अथवा मृषावादिनमेवे**ति। [इति पुराणप्रक्रिया। अथ सप्तविधानुपपत्तिः]

## (आश्रयानुपपत्तिः)

**कथं भ्रमसंभव** इति। निर्विशेषे परिकल्पितशब्दोक्तभ्रमसंभव इति शङ्का स्यात्। अतो दोषवदमिति भावः। "**अनृतेन हि प्रत्यूढाः**"। प्रतीपं नीताः,

वैपरीत्यं प्रापिता इत्यर्थः । "तद्यथा हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि संचरन्तो न विन्देयुः, एवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढाः" इति छान्दोग्यम् । भाष्ये आदिशब्देन "नासदासीत्" इत्यादिश्रुतयो विवक्षिताः । भाष्ये **जीवैक्यानुपपत्त्येति** । विरुद्धधर्माश्रयतया जीवपरयोरैक्यासंभवेन धर्माणां कल्पितत्वस्य वक्तव्यतया तत्कल्पकाऽविद्याभ्युपगन्तव्येत्यर्थः । सत्त्वेऽप्यात्मनो भ्रान्तिबाधाश्रयत्वयोर्दर्शनात् न भ्रान्तिबाधाभ्यां सद्विलक्षणत्वसिद्धिः । असिद्धश्च हेतुः स्यात्, भ्रान्तिबाधयोरज्ञानविषयत्वादित्यत आह—**भ्रान्तिविषयत्वबाधविषयत्वेति** । भाष्ये **भ्रान्तिबाधयोरयोगादि**त्यत्र शुक्तिरूप्यस्येति शेषः पूरणीयः । उत्तरत्र तद्विवरणभाष्ये "प्रतीतिभ्रान्तिबाधैरपि न तथाभ्युपगमनीयम्" इत्युपक्षिप्य, "शुक्त्यादिषु रजतादिप्रतीतेः" इति दर्शनात् । परैरपि ख्यातिबाधानुपपत्तेः शुक्तिरूप्यविषये उपन्यासाच्च । न चाज्ञानस्य जगदुपादानत्वं सदसद्विलक्षणत्वं च प्रतिज्ञाय तद्धेतुतया शुक्तिरूप्ये प्रतीतिभ्रान्तिबाधोपपादनं कथं संगतं स्यादिति वाच्यम्, उपादानोपादेययोरभेदाभिप्रायेण तथोक्त्युपपत्तेः । स्वाभिन्नकार्यजनकत्वमुपादानत्वं विवर्तपरिणामोपादानलक्षणमिति कथयद्भिरुपादानोपादेयाभेदस्याभ्युपेततया शुक्तिरूप्ये ख्यातिबाधसमर्थनस्य उपादाने तत्समर्थनपर्यवसितत्वात् । ननु भोगत्यामारम्भणाधिकरणे "न हि वयमभेदं ब्रूमः, किंतु भेदं व्यासेधामः" इत्युक्तेरभेद एवोपादानोपादेययोर्नास्तीति वाच्यम्, ब्रह्मसमसत्ताकाभेदप्रतिक्षेपमात्रपरत्वात् तदुक्तेः । यद्वा प्रतीतिबाधानुपपत्त्या शुक्तिरूप्यमिथ्यात्वसिद्धौ मिथ्याभूतस्य मिथ्याभूतमेवोपादानमन्वेषणीयमित्यज्ञानस्यापि सदसद्विलक्षणत्वं सिध्यतीत्यभिप्रायेण तथोक्त्युपपत्तेः । केचित्तु—"अहमज्ञः" इत्यज्ञानप्रतीतेः "नेह नाना" इति श्रुत्या बाधदर्शनात् अत एव भ्रान्तत्वाच्च प्रतीतिभ्रान्तिबाधानामविद्याविषयत्वमेव; न शुक्तिरूप्यविषयत्वम् । उत्तरत्र शुक्तिरूप्यादिषु प्रतीतिभ्रान्तिबाधैर्मिथ्यात्वसमर्थनं युक्त्यन्तरमेव; नैतद्विवरणरूपम् । "तत्र अनिर्वचनीयत्वे परोक्तं हेतुं विस्तरेण दूषयति" इति तत्रत्य (संक्षिप्तस्य विवरणमिति) श्रुतप्रकाशिकावाक्यमपि कथंचिन्नेयमिति वदन्ति । 'ख्यातिबाधयोश्चायोगात्' इत्यस्य ख्यातिबाधयोश्चायोगप्रसङ्गादित्यमुमर्थं स्फोरयति—**प्रतीतिभ्रान्तिबाधान्यथानुपपत्त्येति** । प्रतीतिरसद्विलक्षणत्वसाधिका, भ्रान्तिस्तु

सद्विलक्षणत्वसाधिका, बाधस्तूभयसाधारण इति विवेको द्रष्टव्यः । न च—सद्वादिनं प्रति भ्रान्तेर्हेतुत्वोपन्यासोऽयुक्तः, तन्मते भ्रान्तित्वस्यानभ्युपगतत्वात् । बाधेन भ्रान्तित्वसमर्थने च बाध एव हेतुरस्तु, किमनेन भ्रमत्वसमर्थनेनेति वाच्यम्, 'अहं रजततया अभ्राम्यम्' इत्यनुभवसिद्धतया भ्रमत्वस्य सद्वादिनाप्यप्रत्याख्येयतया हेतुत्वसंभवादिति भावः । **सद्भाव एवमिति** । परमतत्वाभावे दृष्टान्तः । **ब्रह्माश्रयत्वपक्षं दूषयतीति** । ब्रह्मणश्चिन्मात्रत्वेन तस्याश्रयत्वे पूर्वोक्तान्योन्याश्रयदोषप्रसङ्गः ।

" आश्रयत्वविषयत्वभागिनी निर्विशेष(र्विभाग)चितिरेव केवला ।
पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः ॥ "

इत्युक्तेरिति भावः । ज्ञानत्वेऽपि नैयायिकादिरीत्या जडत्वाभ्युपगमे स्वस्य स्वयाथात्म्यज्ञानविरोधित्वासंभवादाह—**स्वप्रकाशत्वं विवक्षितमिति** । विषयित्वलक्षणज्ञानत्वाभावात् स्वप्रकाशत्वं विवक्षितमिति केचिद्वदन्ति । ननु ब्रह्मस्वरूपतद्विषयकज्ञानयोः साधारणं स्वरूपप्रकाशत्वं किं स्वरूपाभिन्नप्रकाशत्वम्? उत स्वरूपविषयप्रकाशत्वम्? नाद्यः, तस्य प्रमाणज्ञानेऽभावात् । न द्वितीयः, अभेदे विषयविषयिभावाभावेन स्वरूपाव्यापनादित्याशङ्क्य तद्विषयव्यवहारानुगुण्यलक्षणं तद्विषयकत्वं प्रकृते विवक्षितमित्यभिप्रयन्नाह—**स्वरूपविषयज्ञानत्वे सतीत्यर्थ इति विषयवैषम्याभावादित्यर्थ** इति । विषयवैषम्याभावेन विशेषानवगमादित्यर्थ इत्यर्थः । न तु 'विशेषानवगमात' इत्यस्य विषयवैषम्याभावोऽर्थः । तथा सति 'कथं विशेषानवगमः' इत्याक्षेपानुत्थितेरिति द्रष्टव्यम् । **अयमेको देवदत्त** इति । एक इत्यस्याभेदोऽर्थः । स तु स्पष्टयार्थः । 'अयं देवदत्तः' इत्यभिज्ञायाः 'सोऽयं देवदत्तः' इति प्रत्यभिज्ञाया इव पुरोवर्तिनि देवदत्ताभेदविषयत्वमविशिष्टम् । न ह्यभेदे द्वैविध्यमस्ति, येन विषयवैषम्यं स्यात् । तथापि प्रत्यभिज्ञाया एव भेदभ्रमनिवर्तकत्वं नाभिज्ञाया इति द्रष्टव्यम् । न च प्रत्यभिज्ञायामेकस्मिन्वस्तुनि कालद्वयसंबन्धो विषयः, नाभिज्ञायामिति वाच्यम्—ऐक्यस्य कालद्वयसंबन्धस्य चाभिज्ञाभ्यामेव सिद्धेः अभिज्ञाद्वयानवगतार्थविषयकत्वाभावेनाभिज्ञाद्वयानिवर्त्यभेदभ्रमनिवर्तकत्वं न स्यादिति भावः । **द्वित्वभ्रमः** । भेदभ्रम इत्यर्थः । 'सत्यत्वज्ञानत्वादिरस्ति चेत् स स्वरूपानतिरिक्त इति दर्शयितुं स्वभावशब्दः' इति समीचीनः पाठः ।

'सत्यत्वज्ञानत्वस्वभावोऽस्ति चेत्' इति पाठे स्वभावशब्दो धर्मपरः। सत्यत्वज्ञानत्वादिधर्मोऽस्ति चेत्—स च स्वरूपानतिरिक्त इति दर्शयितुं स्वभावशब्द इत्यर्थः। **कालद्वयदेशद्वयसंबन्धित्वं ह्यैक्यमिति।** न चैतदप्यभिज्ञाद्वयसिद्धमिति प्रागेवोक्तमिति वाच्यम्, अभिज्ञाद्वये सत्यप्येकस्मिन् कालद्वयसंबन्धो मया ज्ञात इत्यनुभवाभावात्। सत्यां च प्रत्यभिज्ञायां तथानुभवदर्शनेनानुभवस्यैवात्र साक्षित्वात्। अनुभवापलापे चोपेक्षणीयत्वप्रसङ्गादिति भावः। द्वित्वभ्रमशब्दः सर्वत्र भेदभ्रमपरः।

ननु न प्रमाणज्ञानत्वं निवर्तकत्वप्रयोजकम्, अपि तु भ्रमविरोधित्वमेव। तच्च ब्रह्मस्वरूपेऽपि संभवतीति शङ्कां व्युदस्यति—**अधिष्ठानत्वाच्छुक्त्यादिवदिति।** यद्वा अनिवर्तकत्वे हेत्वन्तरमप्याह—**अधिष्ठानत्वादिति।** अधिष्ठानस्य भ्रमविरोधित्वं प्रमाणान्तरसापेक्षं, शुक्त्यादौ तथा दर्शनादित्यभ्युपगम्यमाने शुक्त्यादिवदेवाधिष्ठानस्फुरणमपि प्रमाणान्तरसापेक्षं स्यादिति प्रतिबन्द्या दूषयति—**अधिष्ठानत्वस्य ज्ञानान्तरविषयत्वमिति। अधिष्ठानत्वनिवृत्तिरितीति।** अधिष्ठानत्वनिवृत्तिः प्रसज्येतेत्यर्थः। यदि शुक्त्यादावधिष्ठानस्य भ्रमाविरोधित्वमापाद्यते, तर्हि तद्वदेवाध्यासाधिष्ठानत्वार्थं ज्ञानान्तरवेद्यत्वप्रसङ्गः। यदि च तत्र ज्ञानान्तरवेद्यत्वं जडत्वप्रयुक्तम्। तर्हि भ्रमाविरोधित्वमपि जडत्वप्रयुक्तमिति न ब्रह्मणि भ्रमाविरोधित्वमिति प्रघट्टार्थः। **प्रथमपक्षो दूषित इति।** स्वरूपज्ञानस्याज्ञानानिवर्तकत्वे साक्षिवेद्यसुखादावप्यज्ञानप्रसङ्गात्। किंच स्वरूपचैतन्यस्याज्ञानाविरोधित्वे घटादिवत् जडत्वप्रसङ्गात्। किंच विवरणे "अन्तःकरणपरिणामे ज्ञानत्वोपचारात्" इत्युक्तत्वेनौपचारिकज्ञानविरोधिनोऽज्ञानत्वायोगाच्च। न च यथा सौरप्रकाशान्धकारयोः परस्परविरोधे सत्यपि दिवाभीतादिकल्पितान्धकारस्य सौरप्रकाशाविरोधित्वम्, एवमज्ञानस्य कल्पितत्वतया न स्वरूपज्ञानविरोधित्वमिति वाच्यम्। सौरप्रकाशविरुद्धतत्समसत्ताकतमोऽन्तरवत् चैतन्यप्रकाशविरुद्धतत्समसत्ताकाज्ञानान्तराभावेनाताात्त्विकाज्ञानस्यैव ज्ञानेन विरोधस्य वक्तव्यतया अज्ञानासंभवात्। अहमर्थधर्मभूतवृत्तिज्ञानस्यैव विरोधित्वाभ्युपगमेऽज्ञानाज्ञानयोः समानाश्रयत्वस्य वक्तव्यतया 'अहमज्ञः' इति प्रतीत्यनुसारेण जीवाश्रयत्वपक्ष एवाङ्गीकृतः स्यात्, न ब्रह्माश्रयत्वपक्ष इत्यादि द्रष्टव्यम्। भाष्ये—**प्रपञ्चस्य स्वरूपज्ञानविरोधीत्यस्य** प्रपञ्चसत्यत्वततस्यति भासः

रूपाज्ञानविरोधीत्यर्थः, " प्रपञ्चसत्यत्वं तत्प्रतिभासश्च विक्षेपरूपाज्ञानम् " इति टीकाया-मुक्तत्वादिति द्रष्टव्यम्। **अज्ञानं हि ज्ञानप्रतिबन्धकमिति** । न च ज्ञाननिवर्त्यस्याज्ञानस्य कथं ज्ञानप्रतिबन्धकत्वमिति वाच्यम्, चरमवृत्तिनिवर्त्यस्याज्ञानस्य निरतिशयानन्दस्वरूपात्मस्फुरणप्रतिबन्धकत्वस्य तैरभ्युपेतत्वादिति द्रष्टव्यम् । **पराभ्युपगमादेवमुक्तमिति** । अत एव " अनिर्वाच्याविद्याद्वितयसचिवस्य प्रभवतः " इति प्रबन्धादौ वाचस्पतिनोक्तम् । तत्र ह्येका अनादिर्भावरूपा अविद्या देवताधिकरणोक्ता; अन्या चाध्यासभाष्य एव प्रदर्शिता—आत्मन्यनात्माध्यासं प्रस्तुत्य " तमेतमेवंलक्षणमध्यासं पण्डिता अविद्येति मन्यन्ते " इति । तथा (अयथा) व्याख्याने हेतुमाह—**न हि सत्तयेति** । सत्ताया एवाभावेन सत्तया सद्वितीयत्वस्याज्ञानरूपत्वासंभवात् सद्वितीयत्वज्ञानमेवाज्ञानमिति भावः । **सद्वितीयत्वविशिष्टब्रह्मगोचरज्ञान** इति । सद्वीतीयत्वज्ञानरूपे ब्रह्माज्ञाने निवृत्त इत्यर्थः। **स्वरूपं तु स्वानुभवसिद्धमिति** भाष्यं केचिदेवमवतारयन्ति—प्रपञ्चमिथ्यात्वं शास्त्रप्रतिपाद्यं चेत्, तस्यैव शास्त्रप्रतिपाद्यतया ब्रह्मणः शास्त्रात् सिद्ध्यभावेनाप्रामाणिकत्वमेव स्यादित्यत्राह—**स्वरूपं तु स्वानुभवसिद्धमिति**।

( तिरोधानानुपपत्तिः )

**तेषां तिरोधिरिति** । अत्र " उपसर्गे घोः किः " इत्यस्याप्रवृत्तावपि प्रयोगबाहुल्यात् " कृत्यल्युटो बहुलम् " इति बहुलग्रहणात् समर्थनीयम्। **ज्ञानस्यात्मासाधारणाकारस्येति** । इदमुपलक्षणम्; प्रत्यक्त्वादेरित्यपि द्रष्टव्यम् । **तस्यासाधारणत्वास्फुरणादिति** । ननु—असाधारणधर्मत्वं साधारणधर्मद्व्यावृत्तिः । सा च नैल्यस्य शौक्ल्यव्यावृत्तिरिव प्रत्यक्त्वादिस्वरूपाभिन्नैव । ततश्च प्रत्यक्त्वादिस्वरूपे भासमानेऽपि तदभिन्नायाः साधारणधर्मव्यावृत्तेरभासमानत्वकथनं परोक्ततिरोधानपर्यवसितमेवेति चेत्—न; प्रत्यक्त्वादौ साधारणधर्माभेदभ्रमदर्शनेन प्रत्यक्त्वादिगतायाः साधारणधर्मव्यावृत्तेः स्वरूपरूपत्वे प्रमाणाभावात् । नैल्यादौ तु शौक्ल्याभेदभ्रमस्य कदाप्यभावेन तत्र तद्व्यावृत्तेः स्वरूपरूपत्वात् । तत्रापि शौक्ल्याभेदभ्रमसत्त्वे स्वरूपातिरिक्ततद्व्यावृत्तेरिष्टत्वादिति द्रष्टव्यम् । **असदवस्थास्थानीय** इति । असदभिमतस्वप्रकाशधर्मभूतज्ञानविकासावस्थास्थानीय इत्यर्थः । सदा स्वप्रकाश इति यावत् । **स्वरूपनाश एव तिरोधानं स्यादित्यर्थ** इति । ननु—अस्तु

प्रकाशाभाव एव तिरोधानम् । न च प्रकाशाप्रकाशयोर्विरोधः, अप्रकाशस्यारोपिततयाऽविरुद्धत्वात् । 'त्वदुक्तमर्थं न जानामि' इत्यादौ श्रुत एवार्थे अज्ञातत्वस्याप्यनुभूयमानत्वाच्चेति चेत्—न । अधिष्ठानयाथात्म्येऽवभासमाने अप्रकाशकल्पनाया अप्यनुदयात् । वह्नावारोपितस्यावह्नित्वस्य वह्निकार्याप्रतिबन्धकत्वात् प्रकाशारोपितस्याप्रकाशस्य प्रकाशकार्याप्रतिबन्धकत्वाच्च । 'त्वदुक्तमर्थं न जानामि' इत्यादौ सत्तावधारणात्मकज्ञानाभावविषयत्वेन प्रकाशाप्रकाशविरोधसाधकत्वाभावात् । अन्यथा 'घटः प्रकाशते, न प्रकाशते च' इत्यनुभवापातात् । एतेन 'नास्ति, न प्रकाशते' इति विपरीतव्यवहारयोग्यत्वमेवावरणमिति निरस्तम्, विपरीतव्यवहारलक्षणावरणकल्पनाया अपि भासमानेऽधिष्ठाने असंभवात् । आनन्दस्वरूपस्य भासमानत्वेन तदंशे आवरणस्य वक्तुमशक्यत्वाच्च । न चानवच्छिन्नानन्दाप्रकाशादावरणमस्तीति वाच्यम्, आनन्दे भेदाभावेन तदस्फुरणस्य वक्तुमशक्यत्वात् । न च संसारदशायामानन्दे भासमानेऽप्यनवच्छेदो न भासत इति वाच्यम्, आनन्दस्य मोक्षकालीनस्य स्फुरणे सिद्धे अनवच्छेदांशस्यापुरुषार्थत्वात् तन्मते संसारमुक्त्योरविशेषप्रसङ्गात् । न च निरतिशयानन्दास्फुरणस्फुरणाभ्यां संसारमुक्त्योर्विशेष इति वाच्यम्, अद्वैतिमते वैषयिकानन्दस्य ब्रह्मानन्दातिरिक्तस्याभावेनोत्कर्षापकर्षायोगात् । आनन्दो भासते चेत् स एव मुक्तिकालीनानन्द इति संसारमोक्षयोरानन्दानुभवे न वैषम्यं मृषावादिमते सुवचम् । न च—यथा त्वन्मते जीवस्वरूपानन्दस्य, कैवल्यदशायामनुभूयमानस्य च स्वरूपरूपत्वेनाभेदेऽपि स आनन्द आवृत एव तस्येदानीमसत्त्वव्यवहारात् सातिशयानन्दो भातीत्यभ्युपगम्यते, एवमिहापि स्यादिति वाच्यम्—तत्रानन्दस्यैकत्वेऽपि तस्मिन्नानन्दे तीव्रत्वमन्दत्वादिभेदोऽस्ति, ततश्च संसारदशायामान[न्दे म?]न्दानुकूल्यं स्वरूपरूपज्ञानेन भासते, तद्गततीव्रानुकूल्यं तु कैवल्यदशायां धर्मभूतज्ञानेन भासत इति ह्यस्माकं प्रक्रिया । न तु तीव्रानुकूलत्वमपि स्वरूपरूपं स्वप्रकाशमित्यस्माभिरभ्युपगम्यते, येन दोषः स्यात् । तस्मात् तिरोधानं भासमानस्वरूपेऽनुपपन्नमिति भावः ।

( स्वरूपानुपपत्तिः )

**ज्ञातृत्वादीनां परमार्थतया हीति ।** अनुभूतेर्निराश्रयत्वे ज्ञातुरभावादेव ज्ञातृत्वादिरप्यपरमार्थो भवतीत्यर्थः । ननु 'निर्विषया निराश्रया' इत्येतत्परमतानु-

वादरूपम् । न च पर एव स्वमतदूषणावकाशमभिलषन् विशेषणं प्रयच्छति, अपितु स्वोक्तार्थोपयोगितयैव । प्रकृते च स्वाभिमतमिथ्यात्वोपयोगितया तस्य विशेषणस्य साफल्यमेव वक्तुमुचितम् । न तु परदूषणायेत्यस्वरसादाह—**यद्वा विषयाश्रयभेदानाभिति । असत्त्वप्रतिभासयोरुक्तिरिति** । 'निर्विषया निराश्रया' इत्यसत्त्वोक्तिः, 'अनुभूतिः' इति तत्प्रतिभासोक्तिरिति द्रष्टव्यम् । **किं स्वरूपव्यतिरिक्तेति** । अधिष्ठानब्रह्मस्वरूपव्यतिरिक्तेत्यर्थः । **अनवच्छिन्नदृशिद्वयानभ्युपगमादिति** । अनवच्छिन्नाधिष्ठानभूतदृशिस्वरूपापेक्षया अतिरिक्ताया दोषभूताया अपरमार्थभूताया अनवच्छिन्नदृशेरनभ्युपगमादित्यर्थः । **अनवच्छिन्नपक्षेऽपि समाने**ति । दृशेरवच्छिन्नानवच्छिन्नविकल्पस्य अपरमार्थशिरोऽन्तर्गततया अपरमार्थे सर्वत्र कल्पकान्तरापेक्षाया अविशेषादित्यर्थः । काल्पनिकशब्दस्य कल्पनप्रयोजनकत्वभ्रान्तिं व्युदस्यति—**अपरमार्थत्वेने**त्यर्थ **इति । अनुभूतेरेव दोषत्वादिति** । अविद्याकल्पकदोषत्वादित्यर्थः । **प्रवाहानादित्वेन परिहृते**ति । "तदधीनत्वादर्थवत्" इति सूत्रे वाचस्पतिना बीजाङ्कुरन्यायोपन्यासादिति भावः । इदं तु स्वरूपानादित्वस्याप्युपलक्षणम् । यथा निरंशेऽप्याकाशे घटस्तटस्थ एव तमुपलक्ष्य एकदेशं संपाद्य तेन संबध्यते, तद्वदविद्यापि तटस्थैव चिन्मात्रमुपलक्ष्य एकदेशरूपजीवं संपाद्य तत्रावतिष्ठत इति नेतरेतराश्रयत्वम् ।

"स्वेनैव कल्पिते देशे व्योम्नि यद्वद् घटादिकम् ।
तथा जीवाश्रयाविद्यां मन्यन्ते ज्ञानकोविदाः ॥"

जीवाज्ञानयोरनादित्वे उत्पत्तिज्ञप्त्यप्रतिबन्धाच्चान्योन्याश्रयो न दोषः" इति जीवाश्रयाज्ञानवादिवाचस्पतिना स्वरूपानादित्वस्याप्यभ्युपेतत्वादिति द्रष्टव्यम् । **दोषस्य स्वपरनिर्वाहकत्वेने**ति । नन्वेवं परिहारचातुर्विध्यात् परैरनवस्था त्रेधा परिहृतेति पूर्वोक्तविरोधः इति चेत्—अत्र केचित्—जीवाज्ञानवादिना प्रवाहानादित्वदुर्घटत्वस्वपरनिर्वाहकत्वानामेवोक्तत्वेन स्वरूपानादित्वस्यानुक्तत्वात्, ब्रह्माज्ञानवादिनापि प्रवाहानादित्वस्यानुक्तत्वाच्च त्रैविध्यमेवेति वदन्ति । **परमार्थत्वप्रयुक्ते**ति । परमार्थे वस्तुनि या उपपत्तिरपेक्षिता, सा परमार्थत्वप्रयुक्तोपपत्तिरित्यर्थः । **अपरमार्थत्वप्रयुक्तोपपत्ती**ति । दोषोऽप्यपरमार्थवस्तुसामग्रीकोट्यनुप्रविष्ट इत्यर्थः । अपार-

मार्थिकस्य वस्तुनः पारमार्थिकवस्तुसामग्रीनिरपेक्षत्वेऽप्यपारमार्थिकवस्तुसामग्रीसापेक्षत्वमस्त्येव । स्वल्पास्येन विपुलप्रासादनिगरणस्य परमार्थिकप्रासादनिगरणहेतुनिरपेक्षत्वेऽप्यपारमार्थिकप्रासादनिगरणहेतुभूतैन्द्रजालिकमन्त्रौषधादिसामग्रीसापेक्षत्वदर्शनादिति भावः । **अधिष्ठानाध्यस्तयोरैक्यप्रसङ्ग** इति । स्वपरनिर्वाहकत्वपक्षे तस्मिन्नेवाधिष्ठाने तदेवाध्यस्तमित्यागतम् । ततश्चाधिष्ठानत्वाध्यस्तत्वयोः परस्परविरोधाभावात् सर्वमपि स्वस्वरूप एव कल्पितमिति वक्तुं शक्यतया अध्यस्ताद्भिन्नमधिष्ठानान्तरं नापेक्षणीयं स्यादिति भावः ।

## (अनिर्वचनीयत्वानुपपत्तिः)

**व्याप्तिविरोधादिति चेदिति** । सत्त्वस्यासत्त्वाभावव्याप्तत्वादिति भावः । **सदसदात्मकत्वं दृष्टमिति** । भ्रान्तिबाधाभ्यां सदसदात्मकतया प्रतिपन्नत्वात् तदेव स्वीकर्तुमुचितमित्यर्थः । **अर्थस्थितौ सत्त्वमसत्त्वं वा स्यादिति** । वस्तुस्थितौ पर्यालोच्यमानायां सत्त्वासत्त्वयोरन्यतरदेव स्यादित्यर्थः । **सदसद्विलक्षणत्वं दृष्टमिति चेदिति** । सन्मात्ररूपत्वेऽप्युभयरूपत्वाभावादिति भावः । **अन्यथाख्यानादिभिरिति** । आदिपदेनाख्यातियथार्थख्याती विवक्षिते । **सत्त्वे सतीति** । सत्त्वे सत्येवेत्यर्थः । **भेदाग्रहेण ख्यातिबाधोपपत्तिरिति** । न च भेदाग्रहस्य ख्यात्युपपादकत्वेऽपि कथं बाधोपपादकत्वमिति वाच्यम्, 'वर्षकृतं दुर्भिक्षम्' इतिवदुपपत्तेः । अथवा भेदाग्रहेणेत्युपलक्षणम्—भेदाग्रहेण भेदग्रहेण च ख्यातिबाधोपपत्तिरित्यर्थः । तमर्थमुपपादयति—**सत एवेत्यादिना** । पुरोवर्त्यगृहीतासंसर्गभेदप्रतियोगितयानुपस्थितस्योपस्थितिः ख्यातिः । तत्र गृहीतभेदप्रतियोगितया तस्य वस्तुनः प्रतीतिर्बाध इति वदन्ति ।

## (प्रमाणानुपपत्तिः)

तद्विवरणरूपतामेवोपपादयति—**अहमज्ञ** इति । **अज्ञानस्वरूपकीर्तनमिति** । विषयावरणरूपकार्यविनिर्मुक्ताज्ञानस्वरूपकीर्तनम्—अज्ञ इति; **मामन्यं** चेत्यत्र तु विषयावरणकार्यविशिष्टाज्ञानकीर्तनमित्यर्थः । अत एव विवरणव्याख्याने तत्त्वदीपने—"अहमज्ञ इत्यज्ञानस्य साश्रयत्वम्; मामन्यं च न जानामीति सविषयत्वं प्रतीयते" इत्युक्तम् । 'अहमज्ञः' इति प्रतीत एवाज्ञानस्वरूपे सविषयत्वरूपधर्मान्तरवैशिष्ट्याव-

गाहित्वेन तद्विवरणरूपत्वमिति भावः। **कार्यरूपाज्ञानव्यावृत्तिरि**ति। "श्रूयतां चाप्यविद्यायाः स्वरूपं कुरु(ल)नन्दन। अनात्मन्यात्मबुद्धिर्या" इत्यादावनात्मन्यात्मबुद्धेरप्यविद्याऽज्ञानादिशब्दप्रयोगविषयतया तद्व्यावृत्तिरित्यर्थः। वक्ष्यति चानात्मन्यात्मबुद्धेरप्यज्ञानशब्दवाच्यत्वम्। **सौषुप्तिकमज्ञान**मिति। सुषुप्त्यनुवृत्तमज्ञानमित्यर्थः। अहंबुद्धिरूपस्य कार्यज्ञानस्य सुषुप्त्यनुवृत्तत्वाभावात् तद्व्यावृत्तिरित्यर्थः। ननु 'मामन्यं च न जानामि' इत्यनुभवः सुषुप्त्यनुवृत्ताज्ञाने न प्रमाणीकर्तुं योग्यः, सुषुप्तावहमर्थस्य तदन्यस्य वा विषयस्योल्लेखासंभवादित्याशङ्क्याह—**जागरितावस्थाया**मिति। सविकल्पकप्रत्यक्षरूपसाक्षिणा अहमर्थतदन्यरूपविषयावच्छिन्नाज्ञानानुभवो जाग्रद्दशायाम्; तस्यैवाज्ञानस्य निर्विषयतयानुभवः सुषुप्तावित्यर्थः। ततश्च कारणाज्ञानस्य जाग्रद्दशायां तत्त्वशुद्धिकारमते सर्वात्मना अप्रतीतिरिति न मन्तव्यम्, साक्षिभास्यस्याज्ञानस्याज्ञातत्वासंभवात्। न चाज्ञानस्य निर्विषयत्वावस्था न संभवति; निर्विषयत्वेनाज्ञानानुभवश्च न संभवतीति वाच्यम्—सुषुप्तौ प्रत्यगात्ममात्रविषयतयाऽज्ञानस्य भाने दोषाभावात्। ननु—जाग्रद्दशायां साक्षिणः 'घटं न जानामि' इति विषयोल्लेखित्ववत् सुषुप्तावपि विषयोल्लेखित्वे को दोषः? न हि साक्ष्युल्लेखानुल्लेखयोर्जागरणाजागरणे उपयुज्येते; अत एव—"सर्वं वस्तु ज्ञाततया अज्ञाततया वा साक्षिचैतन्यस्य सर्वदा विषय एव" इत्युक्तं विवरण इति चेत्,—सत्यम्; जाग्रद्दशायां 'घटं जानामि, पटं जानामि' इति विशिष्य विषयविशेषोल्लेखवत् सुषुप्तिदशायां विषयाणां विशिष्योल्लेखादर्शनेन तदनुरोधेन कस्यचिद्धेतोः कल्पनीयत्वात्। न केवलं तत्त्वशुद्धिकारादिभिराधुनिकैरुक्तम्। संप्रदायोऽपि तथैवेत्याह—**जागरितावस्थायामेवे**ति। **अज्ञानानुभवोऽय**मिति। 'अहमज्ञः; मामन्यं च न जानामि" इत्ययमज्ञानानुभव इत्यर्थः। ननु 'न जानामि' इत्यत्राज्ञानमात्रमनुभूयते, न तस्य कारणत्वमपि। तत् कथं कारणाज्ञानविषयं प्रत्यक्षमित्युच्यत इत्याशङ्क्याह—**न जानामीत्याच्छादकत**येति। कार्याज्ञानस्याच्छादकत्वाभावादिति भावः।

भाष्ये—**कारणाज्ञानविषयं प्रत्यक्षं ताव**दिति। 'अहमज्ञः, मामन्यं च न जानामि' इत्यपरोक्षावभासः कारणाज्ञानविषयं प्रत्यक्षमिति योजना। ततश्च प्रत्यक्षमपरोक्षावभास इत्यनयोर्न पौनरुक्त्यमिति ध्येयम्। भाष्ये **स हि षष्ठप्रमाण-**

**गोचर** इति । षष्ठप्रमाणमात्रगोचर इत्यर्थः । मात्रपदेन प्रत्यक्षगोचरत्वं निषिध्यते । प्रत्यक्षागोचर इत्यर्थः । अत एवोत्तरत्र 'अभावस्य प्रत्यक्षगोचरत्वाभ्युपगमेऽपि' इत्युक्तम् ।

**भवत्वयमपि षष्ठप्रमाणविषय** इति । अत्र चोदयन्ति — "अयं तु 'अहं सुखी' इतिवदपरोक्षः" इत्यत्र भाष्ये 'अयम्' इत्यनेनानुभवः परामृश्यते, न तु विषयः ; 'अहं सुखी' इतिवदितीतिकरणावमृष्टप्रत्यक्षानुभवस्य दृष्टान्तीकरणात् । न हि 'सुखादिवत्' इत्युक्तम् । किंचाभावः प्रत्यक्षायोग्यः । इदं तु ज्ञानं प्रत्यक्षरूपम् । अतो नानयोर्विषयविषयिभावः संभवतीत्यस्यार्थस्यैव प्रतिपादयितुमुचितत्वात् 'अयम्' इति ज्ञानपरामर्श एवोचितः, न विषयपरामर्शः । ततश्च 'भवत्वयमप्यनुभवः षष्ठप्रमाणजन्यः' इत्येवावतारिकया भवितव्यमिति — तन्न, उपायस्योपायान्तरादूषकत्वात् । **परोक्षप्रमाणविषयः प्रागभाव** इति । परोक्षैकविषय इत्यर्थः । ततश्च परोक्षप्रमाणविषयस्य वह्न्यादेरपरोक्षत्वस्यापि दर्शनात् नेदं युक्तमिति शङ्काया नावकाशः । **भावग्राहकप्रमाणेनेति** । प्रत्यक्षस्य संनिकृष्टार्थमात्रग्राहितया संयोगादिलक्षणस्य पञ्चविधस्य संनिकर्षस्य भावेष्वेव संभवेन भावग्रहणैकशीलस्यापि प्रत्यक्षस्य विशेषणतालक्षणसंनिकर्षान्तरपरिकल्पनेनाभावग्राहकत्वाभ्युपगमेऽपीति भावः । ततश्च—भाष्ये 'प्रत्यक्षत्वाभ्युपगमेऽपि' इति स्पष्टमर्थे प्रतीयमाने, 'भावग्राहकप्रमाणेनाभावस्य वेद्यत्वाभ्युपगमेऽपि इत्यवतारिकायां न सामञ्जस्यम् ; किं च भावग्राहिणां शब्दानुमानादीनामभावग्राहित्वस्य सर्वसिद्धत्वाच्चेति चोद्यस्य नावकाशः ।

**ग्राहकाभावान्न तदभावप्रतीतिरित्यर्थ** इति । ग्रहणकारणीभूताधिकरणप्रतियोगिज्ञानाभावादभावज्ञानं नोत्पत्तुमर्हतीत्यर्थः ; न तु ग्राहकस्याभावज्ञानस्येत्यर्थः, उत्तरत्र 'एतदुक्तं भवति' इति भाष्ये तथैव विवरणदर्शनात् । न च ग्राहकशब्दस्य ग्रहणजनकप्रतियोग्यधिकरणज्ञानपरत्वे अभावविषयकज्ञानस्य ग्राहकत्वादित्यव्यवहितशङ्काया अनुत्थानमिति वाच्यम्, आशयानभिज्ञस्य तथा चोद्यसंभवात् । केचित्तु **ग्राहकाभावात्** = अभावग्राहकस्य ज्ञानस्याभावात् ; **न तदभावप्रतीतिः** = न तदभावोल्लेख इत्यर्थः, 'एतदुक्तं भवति' इत्येतस्य कथंचिदुपपादकत्वमात्रत्वेनाप्युपपत्तेरिति वदन्ति । **ज्ञानप्रागभावस्य ग्राह्यत्व** इति । अत्र प्रागित्येतदविवक्षितम् ;

ज्ञानाभावस्य ग्राह्यत्व इत्यर्थः । इतरथा प्रागभावस्य यावज्ज्ञानप्रतियोगिकस्यासंभवेन व्यक्तिविशेषप्रतियोगिकस्यैव वक्तव्यतया तत्र विरोधाभावादिति द्रष्टव्यम् । **अभाव-धर्मितयात्मनो ज्ञानमस्तीति वक्तव्यमिति** । अभावधर्मित्वादात्मनस्तज्ज्ञानमस्तीति वक्तव्यमित्यर्थः ; न तु धर्मित्वेन प्रकारेण ज्ञानमिति भ्रमितव्यम्, तेन रूपेण तज्ज्ञानस्याहेतुत्वात् । **धर्मितया प्रतियोगितयावगतिरस्ति न वेति** भाष्य-स्याप्ययमेवार्थः । **अस्मिन् पक्ष** इति । प्रत्यक्षागोचरत्वपक्षाभ्युपगम इत्यर्थः । ततश्चानुमेयत्वमात्रेण कथमपरोक्षत्वविरोधः, वह्न्यादावुभयदर्शनादिति शङ्का परास्ता वेदितव्या ।

**घटाच्छादकमज्ञानं हि घटज्ञाने न विरुध्यत** इति । अयमर्थः—घटज्ञाने सति घटाच्छादकमज्ञानं न हि विरुध्यते ; घटाज्ञानविषयज्ञानधर्मिज्ञानाभ्यां च न विरुध्यते, भावाभावरूपत्वाभावात्; उभयोरपि भावरूपत्वादित्यर्थः । भाष्यस्वारस्यात्, "भावरूपाज्ञानप्रत्यक्षवादे तु सत्यप्याश्रयप्रतियोगिज्ञाने ज्ञानाभावस्येव भावान्तरस्यापि नानुपपत्तिर्नियन्तुं शक्यते" इति पुरोवादिपञ्चपादिकाविवरणग्रन्थानुसाराच्चोक्त एवार्थः । यथाश्रुतार्थग्रहणे साक्षाद्घटविषयज्ञानस्यैव 'घटं न जानामि' इति ज्ञान-विषयत्वप्रसङ्गेन ज्ञानासिद्धिप्रसङ्गात् । **वस्तुयाथात्म्यज्ञाननिवर्त्य**मिति । उभयोर्भाव-रूपत्वेऽपि तेजस्तिमिरयोरिव विरोधः सिद्ध इति भावः ।

भाष्ये — **साक्षिचैतन्यं न वस्तुयाथात्म्यविषय**मिति । साक्षिचैतन्यं वस्तुयाथात्म्यविषयकप्रमाणज्ञानं न भवतीत्यर्थः ; प्रमाणज्ञानस्यैवाज्ञाननिवर्तकत्वात् । **अन्यथे**त्यस्याज्ञानविषयमिति संनिहितविषयत्वसंभवेऽपि विप्रकृष्टवस्तुयाथात्म्यविषय-त्वानभ्युपगमप्रतिपादकत्वमयुक्तमित्यस्वरसादाह — **अज्ञानविषयत्वाभावे** वेति । **न हि रजतज्ञाने**नेति । साधकस्य बाधकत्वायोगादित्यर्थः ।

भाष्ये—**ननु चेदं भावरूपमप्यज्ञान**मिति । अत्र चोदयन्ति—"नन्वज्ञानस्य व्यावर्तको विषयः कथं साक्षिचैतन्येनावभास्यते ? प्रमाणायत्तत्वाद्विषयसिद्धेरिति । उच्यते—सर्वं वस्तु ज्ञाततयाऽज्ञाततया वा साक्षिचैतन्यस्य विषय एव ; तत्र ज्ञात-तया विषयः प्रमाणव्यवधानमपेक्षते, अन्यस्तु सामान्याकारेण विशेषाकारेण वा अज्ञानव्यावर्तकतया सदा भास्यते" इति **पञ्चपादिकविवरणग्रन्थानुवादरूपमिदं**

वाक्यम् । तस्य चायमर्थः- कथं 'मामन्यं च न जानामि ; त्वदुक्तमर्थं संख्यां वा शास्त्रार्थं वा न जानामि' इति विषयावच्छिन्नमज्ञानं साक्षिभास्यं स्यात् ? अज्ञानावच्छेदकस्य विषयस्य साक्षिणा भानासंभवात्; साक्षिणो बहिर्विषये नैयायिकमते मनस इव स्वातन्त्र्यासंभवात् । इतरथा प्रमाणान्तरवैयर्थ्यप्रसङ्गात् । ततश्चाज्ञानावच्छेदकस्य घटादेः प्रमाणत एव सिद्धिरेष्टव्या । प्रमाणज्ञानं चाज्ञानविरोधि ; न तु साक्षिवदज्ञानसाधकम्, येनाज्ञानं न विरुन्ध्यात् । ततश्चाज्ञानानुभवो न संभवतीति शङ्काभिप्रायः । स्वतो मनोग्राह्यत्वाभावेऽपि परमाणोः, 'ज्ञातः परमाणुः' इति ज्ञाततया मनोवेद्यत्ववत् तत्तदाकारवृत्त्यनुपहितेन केवलेन साक्षिणा स्वतो ग्रहणायोग्यमपि वस्तु ज्ञातत्वाज्ञातत्वान्यतराकारेण सदा भास्यत एव । इयांस्तु विशेषः—वस्तुनो ज्ञाततया भाने प्रमाणव्यवधानापेक्षा, ज्ञाततायाः प्रमाणोत्पाद्यत्वात् । अज्ञाततायास्तु स्वतःसिद्धत्वादज्ञाततया भाने न प्रमाणव्यवधानापेक्षा । ततश्च सर्वमपि वस्तु प्रमाणाप्रसरणदशायामज्ञाततया भासत एवेति न विषयभानार्थं प्रमाणापेक्षा, येनाज्ञानस्य विरोधः स्यात् । साक्षिरूपं च घटादिविषयज्ञानं नाज्ञानविरोधि, साधकतया तस्य बाधकत्वाभावादिति प्रागेवोक्तत्वादिति परिहाराभिप्रायः । एवमेव हीदं वाक्यं व्याख्यातं **तत्त्वदीपनकृता** । इह तु कथं तद्विहायान्यथानूद्यत इति ।

तत्रायं परिहारः—सत्यं विवरणवाक्यं तत्त्वदीपनकृता तथा व्याख्यातम् । तथापि जडस्याज्ञानविषयत्वमनभ्युपगच्छतो विवरणकारस्य मते प्रत्यगर्थावच्छिन्नमेवाज्ञानमभूयत इत्येव वक्तव्यम्, न तु घटादिविषयम् । ततश्च शङ्कापरिहारौ प्रत्यगर्थविषयावेव वक्तव्यावित्यभिप्रेत्य भगवता भाष्यकृता तदनुसारेण शङ्कापरिहारग्रन्थौ योजनीयावित्यभिप्रेत्य तथानूदितमिति द्रष्टव्यम् ।

## ( भावरूपाज्ञानानुमानविचारः )

**उपपादिताकारविशिष्टमिति** । प्रत्यक्षेण न्यायानुगृहीतेनाज्ञानस्य भावरूपत्वं 'न जानामि' इत्यनेनात्माश्रयत्वं च सिद्धमिति पूर्वमुक्तत्वेन स्वप्रागभावव्यतिरिक्तत्वस्वदेशगतत्वयोः सिद्धत्वादिति भावः । **न हि तमो दीपगतमिति** । दीपस्यैव प्रभाश्रयत्वात् प्रभादेशस्य प्रभाश्रयत्वं नास्ति, 'प्रभादेशः' इतिवत् 'प्रभाश्रयः' इति व्यवहाराभावादिति भावः । **वेद्यगतवित्त्यभिव्यक्तिप्रागभाव इति** । वेद्यगत-

वित्तिर्विषयाधिष्ठानचैतन्यम्, तन्निष्ठाभिव्यक्तिप्रागभाव इत्यर्थः। 'वेद्यगतं चैतन्यमभिव्यक्तं भवति' इत्युत्तरग्रन्थानुसारादयमेवार्थः। **अनुलोमव्याप्तिरिति**। अत्र स्वप्रागभावं स्वोत्पादकादृष्टं स्वप्रतिबन्धकादृष्टं विषयगतामज्ञाततां च व्युदसितुं क्रमेण विशेषणानीत्यपि वदन्ति।

**इयमुत्पत्त्यनुपपत्तिरिति**। दीपनिर्वापणसमसमयसौधोदरव्यापिसंतमसोत्पत्तिकारणं दुर्निरूपमित्यप्यनुपपत्तिरनुसन्धेया। **निमीलने नीलप्रतिभासवदिति**। अयं भावः—अस्ति तावन्निमीलितनेत्रस्य, 'नीलं तमः' इति प्रतीतिः। सा तु न प्रमा, बाधितविषयत्वात्। तथाहि—किमत्र बाह्यं तमः प्रतीयते, उतान्तरम्? नाद्यः, बहलालोकविततं देशे बाह्यस्यान्धकारस्याभावात्। न द्वितीयः, बहिःप्रसरणशीलानां नायनरश्मीनामान्तरतमोग्राहकत्वाभावात्। इतरथा नयनान्तःस्थाञ्जनग्रहणप्रसङ्गात्। तस्माद्भ्रान्तिरेवेति। **नीलप्रतिभानं बाधितविषयमिति**। यद्यपि विवरणादौ पिहितकर्णपुटस्यान्तरशब्दोपलम्भवत् निमीलितनेत्रस्यान्तर्मुखैर्लोचनरश्मिभिरान्तरं तमो गृह्यत इति 'नीलं तमः' इति प्रतीतेर्गोलकान्तर्वर्तितमोविषयतया प्रमात्वमेवोपपादितम्। अतस्तथैवानुवादो युक्तः—तथापि तस्य लोकविरुद्धत्वात् भ्रमत्वमभ्युपगम्येह परिहारान्तरमुपन्यस्तमिति द्रष्टव्यम्। **रूपोपलब्धिवेलायामिति**। सजातीयघटादिरूपोपलब्धिवेलायामित्यर्थः। **कारणनिरूपणायापह्नवमर्हतीति**। प्रयोजनार्थे चतुर्थी। प्रयोजनं च निवर्त्यमानतया, 'मशकेभ्यो धूमः' इतिवत्। कारणनिरूपणाभावायापह्नवमर्हतीत्यर्थः। कारणनिरूपणं प्रसज्येतेति भयादित्यर्थः। **स्वच्छद्रव्यत्वादिति**। प्रभावत् स्वच्छद्रव्यविशेषत्वात् स्पर्शानुपलम्भ इत्यर्थः।

## अविद्याप्रत्यक्षनिरासः

**प्रतिपन्नशब्देन भासनमुच्यत** इति। न तु विषयत्वपर्यन्तम्। तथाहि सति प्रत्यगर्थस्य प्रतिपन्नत्वकथनं व्याहतं स्यादिति भावः। **अभावप्रतियोगिभूताविशदज्ञानविषयत्वमिति**। अत्र चोदयन्ति—"आश्रयप्रतियोगिज्ञानं त्वविशदस्वरूपविषयम्" इति भाष्यस्य ह्ययमर्थः—यद्यपि 'अहं मां न जानामि' इत्यत्राश्रयज्ञानं प्रत्यगर्थविषयम्, तथा प्रतियोगिज्ञानमपि ज्ञानविषयतया प्रत्यगर्थविषयकम्—तथापि न तद्द्वयमपि विशदप्रत्यगर्थविषयकं, प्रत्यगर्थांशे तयोरविशदत्वात्। ततश्च मां न

जानामि = यथा विशदं भवति तथा न जानामि इत्यर्थः। मदर्थविषयकावधारणात्मकसाक्षात्काररूपज्ञानं नास्तीति पर्यवसितोऽर्थः। ततश्चाभावप्रतियोगिभूतज्ञानस्य वैशद्यं विद्यमानस्य प्रतियोगिविषयकज्ञानस्यावैशद्यं चाविरोधसिद्धये समर्थनीयम्। तद्विहाय तुरगारूढस्य तुरगविस्मरणन्यायेन प्रतियोगिभूतज्ञानस्यावैशद्यं कथं समर्थ्यत इति। अत्र ब्रूमः—सत्यं प्रतियोगिभूतज्ञानस्य वैशद्यमेव समर्थनीयम्। तथापि भाष्ये "आश्रयप्रतियोगिज्ञानं त्वविशदस्वरूपविषयम्" इत्युक्तेः साक्षाद्विषयप्रतियोगिभूतज्ञान एवाविशदत्वं समर्थनीयमित्यभिप्रेत्य तदुपपादनायायं संरम्भः कृतः। **स्वविषयं निवर्तकज्ञानमि**ति। **स्वविषयं निवर्तकज्ञानं** कर्म। **इदानीं ज्ञानं** कर्तृ। **स्व**शब्देन प्रतियोगिविषयकं ज्ञानमुच्यते। निवर्तकज्ञानं प्रतियोगिभूतज्ञानमित्यर्थः। **विद्यमानं हि स्वाश्रयमि**ति। स्ववृत्तिवर्तमानस्यापरोक्षत्वादित्यर्थः। वर्तमानमपि परकीयं न प्रत्यक्षम्। स्वीयमप्यतीतादिकं न प्रत्यक्षम्। स्ववृत्तिवर्तमानं च यज्ज्ञानं तदेव विशदमित्यर्थः। ततश्च स्वरूपतो विषयतश्चेदानीमभावप्रतियोगिभूतं ज्ञानमविशदमिति पर्यवसितोऽर्थः। **अन्यथा प्रमाणज्ञाननिवर्त्याज्ञाने**ति। प्रमाणज्ञानाभावानभ्युपगमे प्रमाणज्ञानस्य सत्त्वप्रसङ्गेन तन्निवर्त्यमज्ञानं कथमनुभूयेत? प्रमाणज्ञानस्य विरोधिनः सत्त्वादित्यर्थः। **तत्रायं परिहार** इति। ननु "विशदतदर्थप्रतीतिर्नास्ति" इति भाष्य एवास्याः शङ्कायाः परिहृतत्वात् किमिति टीकायां परिहारान्तरमुपन्यस्यत इति चेत् — न; विशदतदर्थप्रतिपत्तिनिषेधे विशदप्रतिपत्तेः स्मरणावश्यंभावेन स्मृत्यारूढाया अपि विशदप्रतिपत्तेः सत्त्वमपेक्षितमिति हि शङ्काभिप्रायः; तत्र च यथाश्रुतभाष्येण परिहारासंभवात् परिहारान्तरं टीकायामारब्धमित्यदोषः। यद्यपि भानसत्त्वे भासमानसत्त्वमपेक्षितमिति शङ्का मन्दा, अथापि सा मन्दविषन्यायेन परिहर्तव्येति परिहार उपन्यस्त इति द्रष्टव्यम्। **मेरुसाक्षात्कारः कथं निषिध्यत** इति। यद्यपि स्वस्य मेरुसाक्षात्काराभावेऽपि परकीयमेरुसाक्षात्कारस्य पुराणादिनावगतस्य स्वात्मनि निषेधे नानुपपत्तिः, तथापि स्वीयमेरुसाक्षात्कारनिषेधस्थले स्वीयमेरुसाक्षात्कारस्याप्रसिद्धत्वादिति शङ्काभिप्रायात्। **इहादृष्टचत्वरद्विरदे**नेति। चत्वरीयो द्विरदश्चत्वरद्विरदः। **नञर्थप्रतियोग्यवच्छिन्नतये**वेति। यद्यप्यभावस्येव भावरूपाज्ञानस्यापि विरोधितया नञर्थत्वमविशिष्टम्—तथाप्य-

भावत्वपक्षे अभावस्य प्रतियोग्यवच्छिन्नत्वेन भाननियमवत् भावत्वपक्षे ज्ञानविरोधित्वेनैव प्रतीतिनियमाभाव[ादि] इति भावः । **अभावस्य नञर्थत्वसंभवादिति** । 'भावरूपाज्ञानवादिना ज्ञानाभावत्वस्य सर्वात्मनाऽनभ्युपगमेऽपि' इति शेषः । **स्वरूपावच्छिन्नाज्ञानप्रतीता**विति । प्रत्यगर्थाज्ञानप्रतीतावित्यर्थः । **स्वरूपभूतज्ञानादन्यतया तत्सिद्धेरिति** । यद्यपि प्रमाणज्ञानादन्यतया तत्सिद्धावपि न निवर्त्यनिवर्तकविरोधः, अन्ततो गत्वा प्रमाणज्ञानविरुद्धतया तत्सिद्धावपि न निवर्त्यनिवर्तकविरोधः । न हि प्रमाणज्ञानविरुद्धमित्युल्लिख्यमानत्वमात्रेण विरोधिप्रमाणज्ञानमाविर्भूतमुपस्थितं स्यात्, येन विरोधो भवेत् । न हि 'तेजोविरुद्धोऽन्धकारः' इत्युल्लेखमात्रेणान्धकारस्य तेजसा निवृत्तिर्भवति । इयं च शङ्कापिशाची "स्मृतेः स्मर्यमाणसमकालवर्तित्वनियमाभावात्" इति पूर्वमेव प्रतिक्षिप्ता च । ततश्च किं वैषम्यमभिप्रेत्य 'स्वरूपज्ञानादन्यतया प्रतीतिरस्तु, न तु प्रमाणज्ञानविरोधितया' इत्युपन्यस्यते इति चेत् । अत्र ब्रूमः—प्रमाणज्ञानस्य तदानीमसत्त्वे प्रमाणज्ञानविरुद्धतयाऽज्ञानस्योल्लेखः साक्षिणा न युक्तः, ज्ञातत्वाज्ञातत्वोपरागाभावे साक्षिणः स्वाध्यस्तविद्यमानमात्रग्राहित्वात् । तथाच प्रमाणज्ञानस्य साक्षिणोल्लेखमभ्युपगच्छता प्रमाणज्ञानस्य सत्त्वमभ्युपगन्तव्यमिति । **न हि स्वरूपभूतं ज्ञानं साश्रयं सविषयं** चेति । यद्यपि स्वरूपज्ञानस्याज्ञानादिभासकस्य सविषयत्वमस्ति, तथापि साश्रयत्वाभावेन द्वित्वावच्छिन्नाभावमभ्युपेत्य तथोक्तमिति द्रष्टव्यम् । यद्वा 'मामहं न जानामि' इति प्रत्यगर्थकर्मकत्वस्य ज्ञाने प्रतीते स्वरूपज्ञानस्य स्ववृत्तित्वविरोधेन प्रत्यगर्थविषयत्वाभावमभिप्रेत्य स्वरूपज्ञानस्य सविषयत्वाभावकथनमिति द्रष्टव्यम् । ननु 'मामहं न जानामि' इत्यत्र न नञर्थप्रतियोगिनि ज्ञाने साश्रयत्वसविषयत्वप्रतीतिः, येनायं दोषः स्यात् । अपितु नञर्थ एवाज्ञान इत्याशङ्क्य तत्रापि प्रत्यगर्थविषयत्वं तदावरणत्वम्; तच्च तद्विषयकज्ञानप्रतिबन्धकत्वमिति घट्टकुटीप्रभातवृत्तान्त इत्याह – **स्वरूपं किमाश्रयतयेत्यादिना** । **स्वस्मादन्येन केनापी**ति । स्वरूपभूतज्ञानान्यमात्रार्थकत्वस्य परेणोक्ततया तदन्येन येन केनाप्याश्रितत्वमात्रं सिध्येदिति भावः । **प्रमाणज्ञानप्रतीत्यवश्यंभावादिति** । तत्प्रतीतौ प्रत्येतव्यस्य प्रमाणज्ञानस्य सत्त्वमावश्यकमिति भावः पूर्वोक्तो द्रष्टव्यः । **प्रतीयते चेति** व्याख्येयं पदम् ।

**न तूभयाभ्युपगत** इत्युक्तमिति । न तूभयाभ्युपेत एक इत्युक्तमित्यर्थः । "उभयाभ्युपेतो ज्ञानप्रागभाव एव ' अहमज्ञो मामन्यं च न जानामि ' इत्यनुभूयत इत्यभ्युपगन्तव्यम् " इति भाष्य उक्ततया न तदपलापश्चोदनीयः ।

**न तु भ्रमवेलायामपि विद्यमान**मिति । यद्यपि स्वानुभवैकस्वभावत्वस्यापि भ्रमवेलायां विद्यमानत्वमस्त्येव, अन्यथा तेन हेतुना अज्ञानानुभवप्रतिक्षेपायोगात्— तथापि तादृशस्य स्वानुभवैकस्वभावत्वस्य भ्रमवेलायां विद्यमानत्वं न पराभ्युपगतम्, अज्ञानानुभवस्वभावत्वस्याप्यभ्युपेतत्वादिति विशेषः ।

**नैतदित्यादिना दूषयती**ति । ननु—सिद्धान्तेऽपि "पराभिध्यानात्तु तिरोहितम् " इत्यादि कथमुपपादनीयम् ? अतिरोहितापहतपाप्मत्वाद्यवस्थस्य पुण्यापुण्यरूपपरमात्मसंकल्पेन तिरोधानं न संभवत्येव, प्रकृत्यात्मत्वस्वतन्त्रात्मत्वभ्रमशून्यावस्थायां कर्मणोऽप्रसक्तेः । अतस्तिरोधानानन्तरं पराभिध्यानस्य लब्धसत्ताकत्वम्, तस्मिंश्च सति तिरोधानमित्यन्योन्याश्रय इति चेत्—न । कर्मतिरोधानयोर्बीजाङ्कुरन्यायेन प्रवाहानादितयाऽदोषात् । तन्मते अविद्याया एकत्वाभ्युपगमेन प्रवाहानादित्वानभ्युपगमादिति भावः । **यौगपद्यपक्ष** इति । यद्यपि हेत्वन्तरेण तिरस्कृतमिति पक्षो न यौगपद्यपक्षः, तस्य दूषितत्वात्—तथापि **अनवस्था** चेत्यत्र चशब्दः पूर्वोक्तयौगपद्यपक्षेऽनुभवपूर्वकस्तिरस्कारः, तिरस्कारपूर्वकोऽनुभव इति पक्षद्वयोक्तदूषणद्वयमपि सूचयतीति भावः । **ज्ञानानिवर्त्यदूषणद्वयस्यापी**ति । इदं च तिरस्कारकहेत्वन्तरस्याननुभूयमानस्यैव काचादिवत्तिरस्कारकत्वमित्यभिप्रेत्योक्तम् । यदा तु तदपि हेत्वन्तरं हेत्वन्तरतिरस्कृतेनानुभूतमेव तिरस्करोतीत्यभ्युपगम्यते तदानवस्थैवेति द्रष्टव्यम् ।

**अनुमतिप्रदाने (मतप्रदर्शने) वर्तत** इति । पक्षान्तरपरिग्रह इत्यर्थः । **यः सांशः सविशेषः** इत्यादेः **अज्ञानकार्यं न संभवती**त्यन्तस्य भाष्यस्यायमर्थः— अविशदप्रकाशत्वं हि अविशदत्वविशिष्टं प्रकाशत्वम् । अविशदत्वं चाप्रकाशमानत्वम् । अप्रकाशमानत्वं च धर्मद्वारा धर्मिगतम् । प्रकाशमानत्वं च साक्षाद्धर्मिगतम् । ततश्चाप्रकाशमानधर्मकत्वे सति प्रकाशमानत्वमविशदप्रकाशत्वमित्येवावगन्तव्यम् । न

त्वविशदत्वप्रकाशमानत्वयोः साक्षादेकनिष्ठत्वम्, विरोधात्। य आकारोऽविशदः, तत्र प्रकाशमानत्वस्याभावेनाविशदप्रकाशमानत्वाभावात्। यश्च प्रकाशमानः, तत्राविशदत्वलक्षणाप्रकाशमानत्वाभावात्। ततश्चाविशदत्वलक्षणमप्रकाशमानत्वं धर्मद्वारकम्, प्रकाशमानत्वमद्वारकमित्येवाभ्युपगन्तव्यम्। ततश्च " निर्धर्मके ब्रह्मण्यविशदप्रकाशमानत्वं न संभवति " इति टीकाग्रन्थस्याप्यत्रैव तात्पर्यम्। **विशदस्वरूपं प्रागस्ति न वेति** विकल्पे विशदस्वरूपस्य प्रागसत्त्वे विशदस्वरूपस्यागन्तुकत्वेनानित्यत्वप्रसङ्ग एवापादनीयः। न मोक्षस्य, व्यधिकरणत्वात्। किंच मोक्षस्याविद्यानिवृत्तिरूपत्वेनाभावरूपतया कार्यत्वेऽपि नानित्यत्वापादनं युक्तमित्याशङ्क्य मोक्षस्येत्येतद्व्याचष्टे — **मुक्तस्वरूपस्येति**। **वैशद्यं च भावरूपमिति**। विशदस्वरूपं च भावरूपमित्यर्थः।

**तदनवभासेऽज्ञानानुभवायोगा**दिति। प्रमाणज्ञानानवभासे तदन्यत्वेनाज्ञानानुभवायोगात् प्रमाणज्ञानस्यावभासोऽपेक्षितः। ततश्चावभास्यमानस्य प्रमाणज्ञानस्यापि पूर्वोक्तरीत्या सत्त्वमपेक्षितमिति तदन्यरूपमज्ञानं कथमवभासेतेत्यर्थः। **निर्विकल्पकेन वा सविकल्पकेन** वेति। नित्येन वा, अनित्येन वेत्यर्थः। निर्विकल्पकसविकल्पकशब्दयोर्निष्प्रकारकसप्रकारकपरत्वे परमतेऽज्ञानान्तःकरणतद्धर्मादिभासकसाक्षिचैतन्यस्वरूपस्य निष्प्रकारकत्वाभावात् अखण्डार्थवाक्यजन्यस्य वृत्तिरूपज्ञानस्य निष्प्रकारकत्वदर्शनेन वृत्तिज्ञानस्य सप्रकारकत्वनियमाभावच्च निर्विकल्पकसविकल्पकशब्दाभ्यां साक्षिस्वरूपचैतन्यवृत्तिज्ञानपरिग्रहं सिद्धवत्कृत्य दूषणानुपपत्तेः नित्यानित्यज्ञाने एव निर्विकल्पकसविकल्पकशब्दाभ्यां विवक्षिते इत्येव युक्तमिति द्रष्टव्यम्।

## अविद्यानुमाननिरासः

भाष्ये — **हेतोरनैकान्त्यमिति**। अप्रकाशितार्थप्रकाशत्वरूपलिङ्गजन्यायाः स्वप्रागभावेत्यादिसाध्यविषयकानुमितेरप्यप्रकाशितार्थप्रकाशकत्वं स्वीकर्तव्यम्, इतरथा तस्याः प्रकाशितप्रकाशकत्वमप्रकाशकत्वं वा स्यात्। ततश्च तस्यामनुमितौ हेतुसत्त्वादनुमितिविषयीभूताज्ञानावारकाज्ञानानभ्युपगमेन स्वविषयावरणपूर्वकत्वलक्षणसाध्या-

भावेन हेतोरनैकान्त्यमित्यर्थः । यद्यपि परैः परोक्षस्थलमात्र एव वृत्तिनिर्गमाभावेनाज्ञानानिवर्तकत्वस्याभ्युपगमेन परोक्षवृत्तिमात्रे व्यभिचारः सुवचः, तथापि परोक्षस्थले विषयावच्छिन्नचैतन्यस्थाज्ञानानिवृत्तावपि प्रमातृगताज्ञाननिवृत्तेरभ्युपेतत्वात् परोक्षज्ञानमात्रे व्यभिचारो नोद्भावित इति वदन्ति । केचित्तु इदमुपलक्षणं परोक्षज्ञानमात्रस्येति मन्यन्ते । अत्र जडविषयकज्ञानमात्रे व्यभिचारश्च बोध्यः । जडावारकाज्ञानाभावात्, जडस्याप्रसक्तप्रकाशकत्वेन परैरावरणानभ्युपगमात् । न च जडावच्छिन्नचैतन्यावारकमज्ञानं संभवतीति वाच्यम्, घटविषयकज्ञानस्य घटावच्छिन्नचैतन्यावारकाज्ञाननिवर्तकत्वस्य भिन्नविषयत्वेनासंभवात् । न च "सर्वप्रत्ययवेद्ये च ब्रह्मरूपे व्यवस्थिते" इत्युक्तरीत्या घटादिज्ञानमपि तदवच्छिन्नचैतन्यविषयमिति वाच्यम्, "न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्" इत्यादिश्रुतिविरोधात् । तथा हि सति 'घटोऽस्ति' इति ज्ञाने सद्रूपब्रह्मस्फुरणेन ब्रह्मसाक्षात्कारादविद्यानिवृत्तिप्रसङ्गः । न च तस्य ब्रह्ममात्रविषयकत्वाभावान्नाज्ञाननिवर्तकत्वमिति वाच्यम्, 'दण्डी देवदत्तः' इति विशिष्टज्ञानस्य विशेष्याज्ञाननिवर्तकत्वानापत्तेरित्यादि दूषणं द्रष्टव्यम् । **तस्य प्रमाणज्ञानस्याप्रकाशितार्थप्रकाशकत्वात्** इत्यस्यानन्तरं 'तस्य हेतोः' इति शेषः पूरणीयः । अतः **स्वविषयावरणाज्ञानान्तरसाधनत्वे सती**त्यस्य नान्वयानुपपत्तिरिति द्रष्टव्यम् । **तद्विरोधादेव न हेतोरनैकान्त्यमिति** । न चासल्लिङ्गजन्याया अप्यनुमितेर्विषयाबाधेन प्रमात्वसंभवान्न विरोध इति वाच्यम्, असल्लिङ्गस्य प्रमायामसामर्थ्यात् । वह्निमत्पर्वते व्यभिचारिलिङ्गजन्यानुमितेरपर्वतीयवह्निविषयतया वा पर्वतस्थपाषाणादौ वह्नित्वविषयतया वा भ्रमत्वावश्यंभावात्, लिङ्गोपहितलैङ्गिकभानेन भ्रमत्वावश्यंभावाच्चेति भावः । **तत्र वृत्त्यभावादिति** । अप्रकाशितार्थप्रकाशकत्वस्याबाध्यव्यवहारानुगुण्यरूपप्रमात्वपर्यवसितस्य तत्रानुमितावभावादिति भावः । अज्ञानानुमितेः प्रमात्वे प्रकाशितार्थप्रकाशकत्वस्य व्यभिचारित्वावश्यंभावेन व्यभिचारिहेतोः प्रमाजनकत्वविरोधः, अप्रमात्वे प्रमात्वरूपहेतोरव्यभिचारित्वेन सल्लिङ्गत्वावश्यंभावेन तस्याप्रमाजनकत्वविरोध इत्यभिप्रायेण परिहरति — **उच्यत** इत्यादिना । **अन्यतराभावेऽपि साध्यसिद्ध्यभावादिति** । ननु ज्ञानसौष्ठवमात्रेणापि साध्यं सिध्यतीति चेत् । सत्यम् । तदपि हेत्वनैकान्त्येन सिध्य-

तीत्यत्र तात्पर्यात्। **अभावाद्विवेचनमात्रं क्रियत** इति। न चाभावविवेकस्याप्रकाशितस्य प्रकाशकतया व्यभिचारस्तदवस्थ इति वाच्यम्, अभावविवेकावारकाज्ञानसत्त्वेन तन्निवर्तकत्वस्यानुमितौ संभवेन व्यभिचाराभावात्। **अहमर्थधर्मभूते**ति। धर्मभूतज्ञानभिन्नेनेत्यर्थः। **अज्ञानसिद्धावनुमानप्रामाण्य**मिति। उक्तरीत्या अस्याभावविवेचनानुमितित्वेन व्यभिचाराभावादिति भावः। **भावरूपाज्ञानसिद्धि**रिति। भावरूपतयाऽज्ञानसिद्धिरित्यर्थः। **ज्ञातुरपि तत्कल्पितत्वा**दिति। ततश्चाज्ञानकल्पिताहमर्थधर्मभूतज्ञानस्यागन्तुकस्यानाद्यज्ञानभासकत्वासंभवेन। अनाद्यज्ञानभासकं नित्यं साक्षिचैतन्यमभ्युपेयमिति भावः। **तदुत्तीर्णसाक्षिचैतन्येने**ति ननूत्तीर्णचैतन्यसिद्धौ भावरूपाज्ञानसिद्धिर्नापेक्षिता। साक्षिसिद्धेस्तदेकोपायत्वाभावात्, धारावाहिकज्ञानसुखादिभासकत्वेनापि सिद्धिसंभवात्। किंच 'मामन्यं च न जानामि' इति साक्षिचैतन्येनाज्ञानसिद्धौ साक्षिणोऽहमर्थोत्तीर्णत्वसिद्धिरपि नोपजीव्या। न हि 'अयं घटः' इति ज्ञानेन घटसिद्धौ घटज्ञानस्य देहान्तःकरणात्मधर्मत्वादिविवेकोऽपेक्षित इति चेत्—सत्यम्। तस्याः प्रणाड्या अपि परैरुपन्यस्तत्वात्तद्रीतिमनुसृत्यान्योन्याश्रय उपन्यस्त इति द्रष्टव्यम्। भाष्ये—**सत्यपि दीप** इति। ज्ञानमनुत्पाद्य विषयप्रकाशकत्वायोगादित्यर्थः। ततश्च ज्ञानेन सहितस्य प्रकाशकत्वमस्तीति शङ्का निरस्ता। **असिद्धिः फलिते**ति। ज्ञानस्यैव हि साक्षात् प्रकाशकत्वमिति तस्यार्थ इति भावः। **इन्द्रियाणामित्यनेन तृतीयपक्ष** इति। "तर्हीन्द्रियाणामप्युपकारकत्वेन तेषामप्यप्रकाशितार्थप्रकाशकत्वमङ्गीकरणीयम्" इति भाष्येणेत्यर्थः, न तु "इन्द्रियाणामपि ज्ञानोत्पत्तिहेतुत्वमेव न प्रकाशकत्वम्" इति ग्रन्थेनेति भ्रमितव्यम्, एतस्य हेत्वभावसमर्थनपरस्य तद्विरुद्धानैकान्त्यसमर्थनाभिप्रायानुपपत्तेः। "नास्माभिर्ज्ञानतुल्यप्रकाशकत्वाभ्युपगमेन" इत्येतत्पर्यन्तभाष्यग्रन्थस्य साक्षात्प्रकाशकत्वरूपपक्षव्युदासकत्वेन पक्षान्तराप्रतिक्षेपकत्वात्। ननु यदि सर्वत्र ज्ञानस्यैव प्रकाशकत्वम्, तर्हीन्द्रियस्य प्रकाशकत्वं न स्यादित्याशङ्क्येष्टापत्त्या परिहरति भाष्ये—**इन्द्रियाणामपि ज्ञानोत्पत्तिहेतुत्वमेवेति। मात्रचार्थपरिच्छेदव्युदास** इति। अत्र "प्रमाणे द्वयसज्दघ्नञ्मात्रचः" इति मात्रच्प्रत्ययः प्रमाणार्थकः। विरोधिनिरसनपर्यन्तत्वरूपं प्रकाशकत्वं न संप्रतिपन्नमित्यर्थः। न तु 'क्षीरमात्रं पिब' इत्यत्रेवोत्तरपदत्वनियत-

व्यवच्छेदार्थकं मात्रपदम्। तथा हि सति, 'विरोधिनिरसनमात्रं न संप्रतिपन्नम्' इत्युक्ते 'इतरसहितं तु संप्रतिपन्नम्' इति प्रतीयेत। अतो यथोक्त एवार्थः। **तद्धि साध्यं न संप्रतिपन्नमिति**। ततश्च भाष्ये संप्रतिपन्नमिति शेषः पूरणीय इति भावः। नन्वप्रकाशितार्थप्रकाशकत्वहेतौ विकल्पेन दूषितेऽपि इन्द्रियादिव्यभिचार-वारणार्थं भासमानत्वविशेषिततया पूर्वमुपन्यस्तो हेतुर्न दूषित इत्याशङ्क्य विशेष्य-दूषणादेव विशिष्टोऽपि दूषित इत्याह—**भासमानत्वे सत्यप्रकाशितार्थप्रकाशक-त्वादिति हेतौ विशेषितेऽपीति**।

अनुमाने पक्षस्योभयसिद्धत्वस्यापेक्षितत्वान्नेदमनुमानरूपम्, अपितु प्रति-कूलतर्करूपमित्यभिप्रयन्नाह — **अथास्यानुमानस्येति**। प्रयोगशब्दस्यानुमान एव प्रयोगप्रसिद्धिमाशङ्क्याह—**तर्कस्यापि व्याप्तिमूलत्वादिति**। **यथाक्रममनुमान-त्रयमिति**। प्रतिकूलतर्कत्रयमित्यर्थः। ननु कथमेषामेतदनुमानप्रतिरोधित्वम्? प्रत्युत स्वविषयावरणस्वदेशगतेति विशेषणानुकूलत्वमेव। ताभ्यां हि विशेषणाभ्यां ज्ञानसमा-नाश्रयं ज्ञानसमानविषयं चा(ज्ञ)ज्ञानं साध्यते। तत् कथं प्रकृतानुमानविरुद्धमिति चेत्—न, अर्थानवबोधात्। स्वदेशगतत्वस्वविषयावरणत्वस्वनिवर्त्यत्वानां साधनं चिन्मात्रा-श्रितत्वचिन्मात्रविषयत्वप्रतिकूलं यथाक्रममनुमानत्रयम् अज्ञानं पक्षीकृत्योच्यत इत्यर्थः। अज्ञानं न प्रमात्राश्रितं, नापि प्रमेयजडविषयकम्, अपितु चिन्मात्राश्रितं चिन्मात्र-विषयकं चेति वदतः स्वदेशगतस्वविषयावरणेत्यनुमानोक्तिर्विरुद्धेति पर्यवसितोऽर्थः। **ज्ञानानाश्रयत्वप्रसङ्ग इत्युक्त** इति। अज्ञानं चेत्, ज्ञानं नाश्रयेदित्यर्थः। **ब्रह्मणो ज्ञाननिवर्त्याज्ञानत्व** इति। ज्ञाननिवर्त्याज्ञानविषयत्व इत्यर्थः। **उत्तरोत्तर-ज्ञानानां सपक्षत्वमपि ह्युपपद्यत** इति। अपिशब्दो भिन्नक्रमः। अज्ञानानुमितिवत् उत्तरोत्तरज्ञानानामपीत्यर्थः। अतो भाष्योक्तस्याज्ञानसाधनप्रमाणज्ञानस्यापि दृष्टान्तत्वं न विरुध्यत इति द्रष्टव्यम्। यद्वा अज्ञानसाधकप्रमाणज्ञानस्योभयसंप्रतिपन्नत्वाभावात् उत्तरोत्तरज्ञानानां सपक्षत्वमुक्तमिति द्रष्टव्यम्। **न वस्तुनो विनाशकमिति**। प्रागभावस्याभावरूपस्यावस्तुत्वात् वस्तुत्वेऽपि ज्ञानस्य स्वप्रागभावविनाशरूपत्वेन विनाशकत्वाभावाद्वा न बाध इति भावः। **व्यतिरेकव्याप्तिं द्विधा दर्शयतीति**। ईश्वरयोगिज्ञानादौ शक्तिविशेषोपबृंहणविरहरूपविशेषणविरहेण मुद्गरादौ ज्ञानत्व-

रूपविशेष्यविरहेणेति दर्शयतीत्यर्थः । भाष्ये—**अज्ञानं च दृष्टमिति** । ज्ञानभिन्नं च दृष्टमित्यर्थः ।

**पूर्वभ्रान्तिज्ञानोत्पन्नानामि**तीति । भ्रान्तित्वेन ज्ञायमानपूर्वज्ञानोत्पन्नानामित्यर्थः । बाध्यज्ञानोत्पन्नानामिति यावत् । न तु वस्तुसत् भ्रान्तित्वं विवक्षितम्, प्रमितिजन्यभयस्यापि भ्रमरूपबाधकज्ञानेन निवृत्तिदर्शनादिति द्रष्टव्यम् । '**क्षणिकत्वेन स्वयमेव नश्यती**ति भाष्यमयुक्तम्; दीपज्वालादौ व्यभिचारात्, तस्य कारणनाशनाश्यत्वेन स्वयमेव नाशाभावात् । किंच नाशकाभावेऽपि नाशे अहेतुककार्योत्पत्तिप्रसङ्गः' इत्याशङ्क्य 'क्षणिकत्वात् स्वयमेव नश्यति' इत्यस्य कारणनाशाद्यनाश्यं क्षणिकं फलविनाश्यमित्यर्थ इत्याह – **फलविनाश्यानि हीति । उक्तविशेषणेने**ति । यत् क्षणिकं तत् फलविनाश्यमित्युक्ते ज्वालादौ व्यभिचारः स्यात् । समवायिकारणनाशाद्यनाश्यं क्षणिकं फलविनाश्यमित्युक्ते तु न व्यभिचार इति भावः । **तथा भयाद्यपी**ति । तथा च भयाद्यपीत्यर्थः । **तर्हि सदा भयसंततिरुपलभ्येते**ति । नन्वयं दोषोऽक्षणिकत्ववादिनोऽपि समान एव, भयस्याक्षणिकत्वे सर्वदोपलब्धिप्रसङ्ग इत्यापादनसंभवादिति चेत्—सत्यम् । कस्यचित् तटस्थस्येदृशशङ्कासंभवात् । केचित्तु—बाधकज्ञानेन तेषामनाशे उत्पन्नबाधकज्ञानस्यापि पुंसो भयोपलम्भः किं न स्यादित्याशङ्क्य, किं पूर्वभयोपलम्भ आपाद्यते, उतोत्तरभयोपलम्भ इति विकल्प्य, पूर्वस्य स्वत एव नष्टत्वात् उत्तरस्य च कारणाभावेनानुत्पत्तेर्न भयोपलम्भप्रसङ्ग इत्याह भाष्ये—**क्षणिकत्वेन तेषामित्यादि**नेति टीकातात्पर्यं वदन्ति । **अनन्तरनिवृत्तेरन्यथासिद्धिमाहे**ति । अत्र केचित् — "क्षणिकत्वेन तेषां स्वयमेव नाशात्" इति ग्रन्थेनैव यावद्बाधं भयस्वरूपानुवृत्तेरनन्तरनिवृत्तेश्च हेतोरन्यथासिद्धिः संभवति । किंच "कारणनिवृत्त्या पश्चादनुत्पत्तेः" इत्यनेनानन्तरनिवृत्तेरन्यथासिद्धिरपि दुर्वचा, तस्य ग्रन्थस्य तदन्यथासिद्ध्युपपादकत्वाभावादिति चोदयन्ति । ननु तन्निवृत्तिर्दोषनिवृत्त्या चेत् 'नायं सर्पो रज्जुरेषा' इति ज्ञानस्योपदेशो न स्यादित्याशङ्क्य रज्जुत्वज्ञानस्य रज्जुत्वरूपविशेषादर्शनरूपदोषनिवृत्तिद्वारा सर्पपारमार्थ्याभिमानरूपभ्रमोत्पत्तिप्रतिबन्धमुखेन भयानुत्पत्तिहेतुत्वमित्यभिप्रयन्नाह — **नायं सर्पो रज्जुरेषेति ज्ञानमिति । स्वविषयव्यवहारहेतुरिति दृष्टान्तार्थम्** ।

यथा साक्षात् स्वविषयव्यवहारहेतुः, नैवं भ्रमनिवृत्तौ साक्षाद्धेतुरिति भावः । न च विशेषादर्शनरूपदोषस्य तन्निवर्त्यत्वाभ्युपगमेऽपि ज्ञानस्य वस्तुनाशकत्वाभ्युपगमप्रसङ्ग इति वाच्यम्, भावस्यैव विनाश्यत्वानभ्युपगमेन विशेषादर्शनस्य विनाश्यत्वाभ्युपगमे दोषाभावात् । न च सिद्धान्ते भावातिरिक्ताभावानभ्युपगमाद्विशेषादर्शनमपि भाव एवेति वाच्यम्, ज्ञानं स्वप्रागभावव्यतिरिक्तविनाशकं नेत्यभ्युपगमे विरोधाभावादिति भावः ।

## ( अनिर्वचनीयत्वानुपपत्तिः )

**विद्यमानभेदाग्रहणे**ति । विद्यमानस्य भेदस्याग्रहणेत्यर्थः । **स्वविषयान्यथात्वे**ति । अन्यस्यान्यात्मनाऽवभासेत्यर्थः । अत्र, अन्यस्यान्यात्मनेत्येव भ्रान्तिस्वरूपम् ; इतरांशेन तत्कार्यकारणयोः कीर्तनमिति द्रष्टव्यम् । **स्वविषयोल्लेखमात्रे**णेति । किमनिर्वचनीयोल्लेखित्वादासां प्रतीतीनां तत्र प्रामाण्यम्, उत सतो वाऽसतो वा प्रतीतिभ्रान्तिबाधविषयत्वासंभवादनिर्वचनीयत्वं कल्प्यत इत्यर्थः । उपपत्तिनिरपेक्षाणामेवैषां घटादिविषये 'अयं घटः' इति प्रत्यक्षस्येव तत्र प्रामाण्यम्, उतोपपत्तिभिर्निष्कृष्यमाणानामेवैषामिति पर्यवसितोऽर्थः । **प्रतीत्युल्लिख्यमान**मिति । न च विषयत्वमपि ह्युल्लिख्यमानत्वमेवेति प्रतीत्युल्लिख्यमानमेव प्रतीतिभ्रान्तिबाधोल्लिख्यमानमित्युक्ते प्रयोज्यप्रयोजकाभेद इति वाच्यम्, उल्लिख्यमानमेवोल्लिख्यमानतयाऽभ्युपगन्तुं युक्तमित्यर्थकत्वेनादोषात् ।

**विस्तरार्थं परमतमनुवद**तीति । ननु प्रतीतिभ्रान्तिबाधैरज्ञानस्यानिर्वचनीयत्वं प्रागुपन्यस्तम् । अधुना शुक्तिरूप्ये प्रतीतिभ्रान्तिबाधा उपन्यस्यन्त इति वैरूप्यात् कथमेतस्य पूर्वोक्तविस्तररूपत्वमिति चेत् — न, पूर्ववाक्यस्यापि शुक्तिरूप्यविषयत्वेन विरोधाभावात् । नन्वेवमपि "शुक्त्यादिषु रजतादिप्रतीतेः" इत्यादिभाष्यस्य पूर्वोक्तार्थविस्तररूपत्वं न संभवति । पूर्वं हि शुक्तिरूप्यादेः प्रतीतिभ्रान्तिबाधविषयत्वं सिद्धवत्कृत्य तदन्यथानुपपत्त्याऽनिर्वचनीयत्वं साधितम् । इदानीम् "अन्यस्यान्यथाभानायोगाच्च" इत्यन्यथाख्यात्यसंभव एव प्रतिपाद्यते । कथमनयोः संकोचविस्तररूपत्वमिति चेत् — न ; अन्यथाख्यातिरूपभ्रमासंभवात् सद्भिन्नविषयत्वेन

च भ्रमत्वस्योपपाद्यत्वात् तादृशभ्रमविषयत्वानुपपत्तिरेवेहापि प्रमाणीक्रियत इति संक्षेप-विस्तररूपत्वे नानुपपत्तिरिति द्रष्टव्यम् । **अस्ति चेद्यथार्थैव प्रतीतिरि**ति । इदं च दूषणं धर्मधर्मिणोर्मिथस्तादात्म्यपक्षेऽपि समानम् । **ज्ञानगतमन्यथात्वमि**त्यत्र किं शुक्तिज्ञानस्य रजतज्ञानत्वमन्यथात्वमित्यर्थः, उत शुक्तिज्ञानस्य रजतरूपत्वमन्यथात्व-मिति विकल्प्याद्यं दूषयति—**विषयोऽन्यो ज्ञानमन्यदेवेति नोपपद्यत** इति । अन्यविषयकज्ञानेऽन्यविषयकज्ञानत्वं नास्तीत्यर्थः । ततश्चासतो ज्ञानान्तरतादात्म्यस्य ख्याने असत्ख्यातिप्रसङ्ग इति भावः । द्वितीयं दूषयति—**आत्मख्यातिप्रसङ्गश्चेति। न हि पुरोवर्तिनि रजतधर्मिसंबन्ध** इति । न हि पुरोवर्तिनि रजताभेद इत्यर्थः। **अन्यत्र संबन्धमात्र**मिति । शुक्तिरजततादात्म्यस्य वा शुक्तिरजतवैशिष्ट्यस्य वा असत्त्वेऽपि रजतत्ववैशिष्ट्यस्य वा रजततादात्म्यस्य वा सत्यरजते प्रसिद्धत्वादिति भावः । **संबन्धद्वयानवभासादि**ति । अन्यत्र सतः संबन्धस्यान्यत्र भाने संबन्ध-संबन्धो भासत इत्यर्थः स्यात्। ततश्च संबन्धद्वयभानप्रसङ्ग इत्यर्थः । शङ्कते—**संबन्धस्य संबन्धान्तरानपेक्षत्वादि**ति । **निरन्तरं भात**मिति । अगृहीता-संसर्गतयैकप्रतीत्युपारूढमित्यर्थः । **न हि प्रतिबन्धे**ति । ततश्च प्रवृत्तिबाधमात्रस्य न प्रयोजकत्वम् । अपितु प्रवृत्तिबाधसचिवस्य ' नास्ति ' इति प्रत्ययस्यापीति भावः ।

**आरोप्यलिङ्गानुविधायी**ति । ग्रहणस्मरणात्मकत्वे ' इयं रजतम् ' इत्यपि स्यादिति भावः । **न तु तत्पक्ष उपन्यस्त** इति । तन्मते ज्ञानैक्यानभ्युपगमादिति भावः । भाष्ये—**विषयासद्भावपक्ष** इति । माध्यमिकमते ज्ञानमपि नास्ति । योगाचारमते ज्ञानाभिन्नतया विषयोऽप्यस्ति । एतन्मते तु ज्ञानमस्ति, विषयो नास्तीति विशेषः ।

**विद्यमानविषयकारणकत्वेने**ति । विषयजन्यत्वेनेत्यर्थः । कारणत्वे विद्यमानत्वमपि सिध्यतीत्यभिप्रेत्य **विद्यमाने**त्युक्तम् । **तस्या वृत्तिज्ञानत्वेने**ति । अपरोक्षवृत्तिज्ञानत्वेनेत्यर्थः । ततश्च परोक्षवृत्तिज्ञाने विषयरहितावस्थासंभवेन न दोष इति ध्येयम् । **विरम्य व्यापारवचनाच्चे**ति । निर्विषयमुत्पन्नं सत् विषयमुत्पाद्य पश्चाद्विषयीकरोतीति क्रमिकव्यापारद्वयाश्रयणात् विरम्य व्यापार इति द्रष्टव्यम् । **पुरुषगतत्वस्यापि संभवादि**ति । यद्यपीन्द्रियापेक्षया प्रमात्रपेक्षया दूरत्वं विषय-

गतमेव : न पुरुषगतम्—अथापि सामान्यतो दूरत्वमात्रस्य दोषत्वमिति वदन्तं प्रतीदं दूषणमिति द्रष्टव्यम् । **उभयत्रेति** । ननु विषय इव पुरुषेऽप्यविद्यावृत्तिरूपभ्रान्त्युत्पादनेनोभयत्र कार्यमुत्पाद्यत इति शक्यं वक्तुमिति चेत् — न । उभयत्रैकरूपकार्योत्पत्तिप्रसङ्ग इत्यत्र तात्पर्यात् । **तत्र कार्यकरत्वं दृष्टमिति** । विषयविषयकज्ञानोत्पत्तेरिति भावः । **दोषांशस्याकार्यकरत्वादिति** । चक्षूरश्म्यादेर्यथा तथा वास्तु । दोषांशस्य तु न क्वापि भिन्नाधिकरणे कार्यजनकत्वं दृष्टम् । अतो न प्रमात्राश्रितदोषस्य विषयनिष्ठानिर्वचनीयरजतोत्पादकत्वमिति भावः । ननु दुष्टेन्द्रियसंप्रयोगस्यागन्तुकदोषस्य संभव इत्याशङ्क्याह—**इन्द्रियसंयोगस्येति** । **दृष्टिविषादिन्यायस्येति** । दृष्टौ विषं येषां ते दृष्टिविषाः केचन सर्पविशेषाः । ते हि चक्षुरिन्द्रियसंप्रयोगेण विषमुत्पाद्य पुरुषान् घ्नन्तीति प्रसिद्धिः । तद्वत् दुष्टेन्द्रियसंप्रयोगमात्रेण रजतमुत्पाद्यतामित्याक्षेपाभिप्रायः । **तत्रैव कार्यविशेषमिति** । पुरुषविशेष एव ज्ञानादिकमुत्पादयति, न तु पुरुषान्तर इत्यर्थः । **यथा देशादिषु दोषाः प्रादुःष्युरिति** संभावनायां लिङ् । प्रादुर्भावसंभवः इत्यर्थः ।

भाष्ये—**सा किं परमार्थभूता, अपरमार्थभूता** वेति । सत्यरजते शुक्तिरूप्यादौ च प्रतीयमानेत्यर्थः । न च सत्यरजते सत्या, मिथ्यारजते मिथ्येति किं न स्यादिति वाच्यम्, तदा रजतत्वजातेः साधारणत्वाभावेनोभयत्राप्यैकरूप्यस्य वक्तव्यत्वादिति भावः । **व्यक्तिबाधेऽपि जातेरबाधितत्वप्रसङ्ग** इति । न हि 'इदं रजतम्' इति प्रतीयमानयोर्जातिव्यक्त्याकारयोरेकस्य बाध्यत्वमपरस्य नेति दृष्टम् । **आपणस्थरजतव्यक्तीति** । रजतत्वजातिमात्रस्यापारमार्थ्याभ्युपगमेनापणस्थरजतनिष्ठरजतत्वजातेरपि तथात्वावश्यंभावादिति भावः । **कदाचित् बाधितत्वप्रसङ्ग** इति । व्यक्तिः सती, जातिर्नास्तीति कदाचित् बुद्धिः स्यादित्यर्थः । **क्वचिदपि परमार्थबुद्धिशब्दहेतुत्वादर्शनादिति** । यद्यपरमार्थभूतापि जातिः परमार्थव्यक्तौ क्वचिद्वर्तेत, तदा व्यक्तिगतपरमार्थत्वैकार्थसमवायात् जातिः परमार्थभूतेत्येवं परमार्थबुद्धिशब्दयोः कथंचिन्निर्वाहकत्वदर्शनात् अपरमार्थव्यक्तिस्थलेऽप्यपरमार्थजातौ परमार्थबुद्धिशब्दयोर्निर्वाहः संभवेत् । यदि च क्वापि परमार्थव्यक्तिसंबन्धो न स्यात्, तर्हि क्वापि परमार्थबुद्धिशब्दनिर्वाहकत्वादर्शनात् भ्रान्तिस्थलेऽपि तन्निर्वाहो न स्यादित्यर्थः ।

( सत्ख्यातिः )

**पाठक्रमेणाण्डसृष्टेः** पश्चादिति । "नामरूपे व्याकरोत् । तासां त्रिवृतं त्रिवृतमेकैकामकरोत्" इति पाठक्रमेणेत्यर्थः । **संकल्पे तु (फलं) पूर्वभावीति** । फलेच्छा पूर्वं भवति ; पश्चात् तत्साधनेच्छा भवति ; उपायेच्छाया इष्टसाधनताज्ञान-जन्यत्वादिति भावः । **किं केन कथमित्यादाविति** । यद्यपीयं जिज्ञासारूपा शाब्द्याकाङ्क्षा, न तु फलोपायेच्छारूपा । अत एव हि 'करोति' इत्युक्ते 'किं करोति, सर्वस्वापहारं करोति, शिरश्छेदं करोति' इति भाव्ये जिज्ञासा जायते । अथापि फलोपायविषयकेच्छापि फलोपायजिज्ञासातुल्यशीलेति भावः । न च भाव्याकाङ्क्षायाः पूर्वभावित्वे समानपदोपात्तधात्वर्थस्यैव भाव्यत्वेनान्वयः स्यादिति वाच्यम्, समानप्रत्ययोपात्तविध्यवरुद्धाया भावनायाः समीहितभाव्यापेक्षितया यागस्य भाव्यतया नान्वयः, अपितु करणत्वेनेति स्वर्गकामाधिकरणे स्थितत्वादिति द्रष्टव्यम् । **अस्मिन्नर्थे निदर्शनमिति** । "बहु स्यां प्रजायेय" इत्यत्र, 'प्रजायेय' इति निर्दिष्टप्रजननापेक्षया 'बहु स्याम्' इति पूर्वनिर्दिष्टस्य बहुभवनस्य कार्यत्वदर्शनात् तद्वदेव "नामरूपे व्याकरवाणि । तासां त्रिवृतं त्रिवृतमेकैकां करवाणि" इत्यत्र संकल्पवाक्ये पूर्वनिर्दिष्टस्य नामरूपव्याकरणस्य कार्यत्वं निश्चीयते । ततश्च "नाम-रूपे व्याकरोत् । तासां त्रिवृतं त्रिवृतमेकैकामकरोत्" इति वाक्ये पाठक्रमो बाध्य इति भावः । ननु त्रिवृत्करणनामरूपव्याकरणयोः कार्यकारणभावे यस्य विप्रतिपत्तिः, तस्य बहुभवनप्रजननयोः कार्यकारणभावः कथं संप्रतिपन्नः स्यात् ? न ह्ययमर्थस्ततोऽपि सुप्रसिद्धः । किंच कथमस्य श्लोकार्धस्येदृशार्थसूचकत्वमिति चेत्—न । बहुभवन-प्रजननयोः कार्यकारणभावस्य सुप्रसिद्धत्वात् । इतरथा भाष्यकृता निदर्शनतयो-पादानासंभवात् । न च निदर्शनतयोपादानमस्मिन् श्लोकेऽसिद्धमिति वाच्यम्, व्याख्यानतो विशेषप्रतिपत्तिसंभवात् । **अस्यामुपनिषदीति** । छान्दोग्ये तेजः-प्रभृतिसृष्टेरेवोपात्तत्वात् आकाशवायुसृष्टेरनुक्तेः "तिस्रो देवताः । त्रिवृतं करवाणि" इत्युक्तिः । नैतावता पञ्चीकरणं नास्तीति मन्तव्यम्, त्रिवृत्करणस्य पञ्चीकरणोप-लक्षणार्थत्वादिति भावः । **अवस्थाद्वयमस्तीति** । ततश्च 'संहतिं विना, असमा-गम्य' इति पदद्वयस्य न पौनरुक्त्यमिति भावः । "समेत्यान्योन्यसंयोगम्" इति

संहृतत्वावस्थाकथनेऽपि कृत्स्नशःसमागतत्वरूपावस्थान्तरं नोक्तमिति शङ्कां व्युदस्यति--**उपात्तवचनानन्तर**मिति । पुराणे--

" समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः ।
एकसंघातलक्ष्याश्च संप्राप्यैक्यमशेषतः ॥ "

इति पाठक्रमादिति भावः ।

**सोमाभावे च पूतीकग्रहणं श्रुतिचोदितम् । सोमावयवसद्भावात्** इति भाष्यस्यायमर्थः-" यदि सोमं न विन्देत पूतीकानभिषुणुयात् " इत्यनेन सोमाभावे निमित्ते नैमित्तिकतया फलचमसवत् पूतीका न विधीयन्ते, अपितु सोमावयवस्य सोमसदृशद्रव्येषु सत्त्वात् प्रतिनिधित्वेन पूतीकानां तदतिरिक्तद्रव्याणां च प्राप्तौ पूतीकानेव गृह्णीयादिति नियमार्थं पूतीकग्रहणं श्रुतिचोदितमिति । ततश्च, "सोमावयवसद्भावात् पूतीकग्रहणं श्रुतिचोदितम् " इत्यस्य, चोदनायां सोमावयवसद्भावो हेतुः, अतश्चोदनानुपपत्त्या सोमावयवसिद्धिरित्यर्थ इति न भ्रमितव्यम्, सोमावयवसद्भावे न्यायस्यैव ज्ञापकतया चोदनाया अज्ञापकत्वात् । भाष्ये-**व्रीह्यभावे च नीवारग्रहणं** व्रीहिभावत इति नीवारग्रहणं न्याय्यमिति न्यायविदो विदुरिति योजना । षष्ठे प्रतिनिधिपेटिकायामस्य न्यायस्य व्युत्पादितत्वादिति भावः । एतत् सर्वमभिप्रेत्याह-**अयं विधिर्नियमार्थ** इति । **प्रतिनिधिश्रुत्यैवे**ति । प्रतिनिधिश्रुतेर्नियमविधित्वसंपादकन्यायेनेत्यर्थः । एवं हि स्थितिः षष्ठे -- " ब्राह्मणस्य तु सोमविद्याप्रजमृणवाक्येन संयोगात् " (६-२-३१) इत्यत्र सोमयागस्य, " वसन्ते वसन्ते ज्योतिषा यजेत ' इति वीप्सया वीप्सितवसन्तस्य निमित्तत्वावगमात् नित्यत्वं स्थापितम् । नित्ये च यथाशक्त्यङ्गोपसंहारेणाप्यधिकारोऽस्तीति सर्वशक्त्यधिकरणे स्थितम् । ततश्च सोमद्रव्यरूपाङ्गाभावेऽपि द्रव्यान्तरमादाय शक्याङ्गोपसंहारेण यागस्य कर्तव्यत्वं सिद्धम् । तत्र च सोमद्रव्यसदृशस्य वा तद्विसदृशस्य वा यागनिर्वर्तकतया यागविध्याक्षेपबलादुपादानं कर्तव्यमिति, " श्रुतिप्रमाणत्वाच्छिष्टाभावे नागमोऽन्यस्याशिष्टत्वात् " (६-३-१२) इत्यत्र स्थितम् । तत्र च सदृशद्रव्योपादाने तत्र सोमावयवानामपि सत्त्वात् सोमशास्त्रस्याप्यनुग्रहाय सोमसदृशद्रव्योपादानमेव युक्तमिति, " सामान्यं तच्चिकीर्षा हि" (६-३-२७) इत्यत्र स्थापितम् । तत्र च बहुषु सोमसदृशद्रव्येषु सत्सु पूतीकविधिर्नियमार्थः-यः सोमलताया अभावेन

सोमजातिपरिच्छिन्नान् सकलावयवान उपादातुमशक्तस्तत्सदृशान् विकलावयवान् उपादित्सते स पूतीकानेवेति नियमार्थमिति निर्णीतं "नियमार्था पुनःश्रुतिः" इति (३-६-४०) तृतीयाध्यायाधिकरणे, "वचनाच्चान्याय्यमभावे" (६-३-३१) इति षष्ठाध्यायाधिकरणे चेति । एवं च न्यायेनव सदृशे तदवयवस्थितिर्निर्णेया, न तु श्रुत्या । अतो यथोक्त एवार्थः । अत एवास्वरसादाह—**यद्वा त्रिवृत्करणेति ।**

**उपजीव्यत्वाय तदुक्तिरिति ।** "अदृष्टवशाच्चाम्बुनो ग्रहणम्" इत्युक्तेरुपलक्षणत्वादिति भावः । **पूर्वोत्तरज्ञानयोस्तथारूपत्वादिति ।** विद्यमानशुक्त्यवयवभूयस्त्वाग्रहरूपस्य रजतज्ञानस्य बाध्यत्वं विद्यमानभूयस्त्वग्रहस्य शुक्तिज्ञानस्य बाधकत्वमिति भावः । न च विद्यमानभूयस्त्वप्रतियोगिभूतरजतावयवानां 'नेदं रजतम्, किंतु शुक्तिः' इति ज्ञानकालेऽप्रतीतेः कथं तत्प्रतियोगिकं भूयस्त्वं भासेतेति वाच्यम्, वस्तुतो यदवयवा भूयांसः, तज्ज्ञानं बाधकम्; यदवयवा अल्पीयांसः, तज्ज्ञानं बाध्यम् । बाध्यत्वञ्च बाध्यप्रवृत्तिकत्वम्; विफलप्रवर्तकत्वमिति यावत् । अत एव "प्रवृत्तेर्बाधितत्वं विफलत्वं वा" इति वक्ष्यति । अत एव—क्वापि शुक्तौ शुक्तिज्ञानस्य रजतज्ञानेन बाधो न स्यात्, रजतज्ञानस्य वस्तुतोऽल्पविषयत्वेन वास्तवभूयोवयवविषयत्वाभावादिति शङ्का परास्ता । शुक्तौ शुक्तिज्ञानस्य विफलप्रवृत्तित्वाभावेन बाध्यत्वाभावादिति द्रष्टव्यम् । **धर्म्यन्तरनिष्ठत्वेति ।** रजतत्वादौ रूपे धर्म्यन्तरनिष्ठत्वभानविरहः रूपिणि शुक्त्यादौ रजतत्वविरोधिधर्मान्तराश्रितत्वभानविरहोऽप्यपेक्षित इत्यर्थः । **अत एव भेदग्रहणादिति ।** इष्टभेदाग्रहः प्रवर्तकः, अनिष्टभेदाग्रहो निवर्तक इत्यभ्युपगमेन भेदाग्रहमात्रस्य प्रवर्तकत्वानभ्युपगमादिति भावः । **अत्र त्विति ।** सिद्धान्ते त्वित्यर्थः । **विजातीयभूतारब्ध इति ।** विजातीयभूतावयवप्रचुरारब्ध इत्यर्थः । ततश्च विजातीयपृथिव्यवयवप्रचुरारब्धे शुक्तिशकले तद्विजातीयतेजोवयवप्रचुरारब्धरजतभ्रमौपयिकमित्यर्थः । **अण्डसृष्टेः पूर्वभावित्वादिति ।** तदानीं रजतादेरप्रसक्तेः ; येन तन्मिश्रणं स्यादिति भावः । **पाञ्चभौतिकेष्विति ।** सत्यरजतस्थले रजतपरिणामविशेषयोग्यतेजोंशसत्त्वात् तत्र रजतावयवारम्भसंभवात् याथार्थ्यमुपपद्यत इति भावः । **त्रिवृत्करणेन कार्यानुप्रविष्टस्येति ।** मरु मरीचिकारूपकार्यानुप्रविष्टस्य जलरूपस्य भूतस्य

समुद्रादिरूपकार्यान्तरावयवजलसमानपरिणामसंभवात् मरुमरीचिकारूपभौतिकान्तरे समुद्रादिलक्षणभौतिकान्तरबुद्धियाथार्थ्यं यथा घटते, तथेत्यर्थः। **अतः शुक्त्यादौ रजताद्यवयवसद्भाव उपपद्यत** इति। ननु त्रिवृत्करणं शुक्तौ रजतसद्भावप्रयोजकं चेत् त्रिवृत्कृततेजोंऽशस्य सर्वत्र पार्थिवे सत्त्वात् सर्वत्र रजतसादृश्यं स्यात्। तेजोवयवेषु तारतम्यासंभवात् पार्थिवेषु सर्वेष्वष्टमांशस्य तेजसः सर्वत्र सत्त्वात् सर्वत्र तद्भ्रमः स्यादिति चेत्—न। अदृष्टाधीनपरिणामविशेषस्य कार्यानुरोधेन क्वचिदेव कल्प्यत्वेनादोषात्। **अणुमात्रे च शुक्तित्वं पुष्कलमिति**। रजतत्वसुवर्णत्वपृथिवीत्वादिवच्छुक्तित्वादिजातिरवयवावयविनिष्ठा। न तु घटत्वपुरुषत्वादिवदवयविमात्रनिष्ठा, शुक्तिशकलेऽपि 'इयं शुक्तिः' इति व्यवहारात्। यदि चात्र विप्रतिपत्तिः, तर्हि शुक्तिपदं रजतभ्रमाधिष्ठानरङ्गादिपरम्, रङ्गत्वस्यावयवावयविनिष्ठत्वेऽविवादात्।

ननु पुरुषत्वादेरवयविमात्रनिष्ठत्वे स्थाणौ पुरुषत्वभ्रमः कथं निर्वोढव्यः? पुरुषत्वस्य पाणिपादसंघातवृत्तितया पुरुषावयवेषु पुरुषत्वस्याभावेनान्यथाख्यात्यापत्तेः। किंच व्रीहित्वजातेरप्यवयवावयविनिष्ठत्वाभावात् व्रीहिभ्रमनिर्वाहानुपपत्तिश्च। नीवारादौ व्रीहित्वजातिसत्त्वे च मुख्यत्वमेव स्यात्, न प्रतिनिधित्वम्। अत एव मीमांसकैरपि, "सामान्यं तच्चिकीर्षा हि" इत्यत्र,—'व्रीहिसदृशनीवारद्रव्येषु न व्रीहित्वजातिः। नापि व्यक्तिः, नीवारत्वजातितद्व्यक्त्योः व्रीहित्वजातितद्व्यक्त्यपेक्षया भिन्नत्वात्। तथापि सदृशद्रव्योपादाने व्रीहिशास्त्रस्य कियानप्यनुग्रहोस्ति। तथाहि—"व्रीहिभिर्यजेत इति" व्रीहित्वजातेः साधनत्वं बोध्यते। अमूर्तायाश्च जातेः स्वतो हेतुत्वासंभवात् व्यक्तिपरिच्छेदमुखेनेति वक्तव्यम्। व्यक्तेरपि पुरोडाशादिनिष्पत्तावघातादिशास्त्रपर्यालोचनया च तदवयवद्वारा हेतुत्वं वक्तव्यम्। ततश्च व्रीहित्वजातेर्व्रीहितदवयवपरिच्छेदमुखेनाङ्गत्वात् व्रीहित्वजातेरिव व्यक्तितदवयवानामप्यङ्गत्वं सिद्धम्। ततश्च जातिव्यक्त्यवयवा व्रीहिशास्त्रार्थाः। तत्र सदृशोपादाने जातिव्यक्त्योः शास्त्रार्थयोरलाभेऽपि तदवयवरूपशास्त्रार्थलाभेन व्रीहिशास्त्रमपि किंचिदनुगृहीतं भवतीत्युक्तमिति चेत्—न। यत्र जातिरवयवावयविवृत्तिस्तत्र तत्प्रतीतेर्याथार्थ्यमस्ति। इतरत्र तु प्राभाकरोक्तरीत्या अख्यातिः। यथा पञ्चलोहारब्धे कार्ये सर्वापि लोहप्रतीतिर्यथार्थेत्यत्रैव भाष्यकृतः संरम्भः।

**स्वप्नं पश्यतीति पूर्ववाक्यमि**ति । यद्यपि "स यत्र प्रस्वपित्यस्य लोकस्य सर्वावतो मात्रामुपादाय स्वयं निहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपिति । अत्रायं पुरुषः स्वयंज्योतिर्भवति । न तत्र रथाः" इत्येव श्रुत्याकारः— तथापीदं वाक्यं तत्समानार्थं लौकिकमुपात्तं द्रष्टव्यम् । **मुख्यार्थत्व** इति । स्वाप्नानां मुदादीनां जाग्रत्सुखादिवैलक्षण्यायोगात् विषयाणामेव विलक्षणत्वादित्यर्थः । **व्याघातपौनरुक्त्ये**ति । "न भवन्ति", "रथान् सृजते" इति व्याघातः "सृजते", "स हि कर्ता" इत्यनयोः पौनरुक्त्यमिति भावः । **शिरश्छेदादय** इत्युक्तत्वादिति छेदः ।

**दृष्टान्ते चायं भाव** इति । तत्र पीतिमविशिष्टसुवर्णद्रव्यस्यापि ग्रहणमस्तीति भावः । **चाक्षुषदोषसंसर्गो दुर्वच** इति । पित्तानुपहतनयनानामपि स्फटिके पीतत्वोपलब्धेरित्यर्थः । **अदृष्टस्य नियामकत्वा**दिति । ननु समीपस्थानां 'जलं नास्ति । एतावन्तं कालमिदं जलतयाऽभ्राम्यम् । असदेव जलत्वमभात्' इत्यादिपरीक्षितप्रत्यक्षाणां का गतिः? तेषामसंसर्गाग्रहरूपत्वाभ्युपगमे मरीचिकाजलप्रत्यक्षाणामल्पीयसामेव तद्रूपत्वं किं न स्यादिति चेत्—न । मरीचिकाजलप्रत्यक्षस्य त्रिवृत्करणशास्त्रानुगृहीतस्यासंसर्गाग्रहरूपत्वमनुचितमिति भाष्यकाराभिप्राय इति केचित् । समाधत्ते — **आपेक्षिको हि सव्यदक्षिणभाव** इति । स्वाभिमुखे दर्पणे स्वापेक्षया विपर्यस्तसव्यदक्षिणभावः सिद्धः स्वाभिमुखवस्तुनः स्वविरुद्धसव्यदक्षिणभावस्य संप्रतिपन्नत्वात् । तद्ग्रहणपूर्वकस्वमुखग्रहणे मुखस्य दर्पणस्य चान्तरालरूपविप्रकर्षस्याग्रहणात् दर्पणस्थत्वासंसर्गाग्रहोऽपि भवति । (तथा दर्पणगतविपर्यस्तसव्यदक्षिणभावस्य आभिमुख्यस्य अभिमुखस्य च असंसर्गाग्रहो भवति ।) ततश्च दर्पणस्थत्वस्वाभिमुखत्वविपर्यस्तसव्यदक्षिणभावप्रतीतीनां याथार्थ्यं सिद्धमि(द्धयती)त्यर्थः । ननु सोपाधिकभ्रमे अन्तरालाग्रहणमप्रयोजकम्, दर्पणबिम्बयोरन्तरालं पश्यतामपि पार्श्वस्थानां बिम्बे दर्पणस्थत्वभ्रान्तिदर्शनादिति चेत्, सत्यम्—उपाधिनिवृत्तिसहितान्तरालग्रहणे भ्रमदर्शनादुपाधिनिवृत्तिसहितान्तरालग्रहणस्याभावोऽपेक्षित इति तात्पर्यम् ।

**दिगन्तरप्रतियोगिनो दिगन्तरस्य** चेति । यस्मिन् प्रदेशे प्रत्यक्त्वभ्रमो जायते, तत्र प्रत्यक्त्वमवध्यन्तरापेक्षयाऽस्त्येव । स्वाश्रयदेशापेक्षया परं नास्ति ।

ततश्चान्यावधिकं प्रत्यक्त्वे स्वाश्रयदेशावधिकत्वासंसर्गाग्रह इत्यर्थः। **चन्द्रदेशौ द्वाविति प्रतीत्यभावहेतुरि**ति। एकस्य चन्द्रस्य द्वौ देशाविति प्रतीत्यभावहेतुरित्यर्थः। भाष्ये—**युगपद्देशद्वये**त्यत्र यौगपद्योक्तिः शैघ्र्याभिप्राया, एकस्मिन् क्षणे ज्ञानद्वयासंभवात्। भाष्ये—**ग्रहणभेदेन ग्राह्याकारभेदादि**ति। ग्रहणभेदेनोल्लिख्यमानदेशरूपग्राह्याकारभेदादित्यर्थः। न तु ग्रहणभेदायत्तं ग्राह्याकारद्वित्वमिति मन्तव्यम्, ग्राह्याकाररूपदेशद्वित्वस्य ग्रहणभेदानधीनत्वात्। तत्कृतं **ग्राह्याकारद्वित्वं च पारमार्थिक**मिति भाष्यस्याप्येवमेवार्थः। केचित्तु—तत्र सामग्रीद्वित्व-ग्रहणद्वित्वपारमार्थ्यसाधनसंरम्भात् ग्रहणद्वित्वेन ग्राह्याकारद्वित्वसमर्थनसंरम्भाच्च ग्रहणगतद्वित्वस्य चन्द्रस्य चासंसर्गाग्रह एव; न तु देशगतद्वित्वस्येति वदन्ति। तन्न; प्राभाकरमतप्रवेशापत्त्या, प्राभाकरमतवैषम्यप्रदर्शकोत्तरटीकाग्रन्थविरोधप्रसङ्गेन च तस्योपेक्षणीयत्वात्। **नेत्रवृत्तिर्द्विधाभूते**ति। ननु श्लोके द्वित्वं चन्द्रं चेति द्वित्वमात्रं प्रतीयते। वित्तिगतद्वित्वमिति कुतोऽवसीयते? नेत्रवृत्तेर्वित्तिग्रहणसामर्थ्याभावेन वित्तिद्वित्वग्राहकत्वासंभवादिति चेत् — न। "द्वे तु वित्ती वितन्वती" इति वित्तिगतद्वित्वस्य प्रकृतत्वेन स्वप्रकाशत्वेन च तस्यैव ग्रहणोपपत्तेः।

(अविद्यापरत्वाभिमतश्रुत्यर्थः)

**ऋताभावस्य ऋतविरोधिनश्चे**ति। न च घटस्य घटाभावाश्रयत्वात् ऋतस्य ऋताभावाश्रयत्वे को दोष इति वाच्यम्, भावाभावयोः सामानाधिकरण्यासम्भववत् आधाराधेयभावस्याप्यसंभवात्। न चैवं घटे घटाभावाभावे घटसत्त्वापत्तिरिति वाच्यम्, घटाभावे घटतदभावयोर्द्वयोरप्यभाववत् घटे घटतदभावयोर्द्वयोरप्यभावोपपत्तेः। अत एव प्रपञ्चाभावरूपस्य ब्रह्मणः प्रपञ्चाधिकरणत्वायोग्यतया ब्रह्माश्रितस्य प्रपञ्चस्य स्वाधिकरणत्वायोग्याधिकरणकत्वरूपं मिथ्यात्वमिति परे वदन्ति। अत एव रूपविरोधिनो रूपत्वस्य रूपाश्रितत्वादित्यपि शङ्का परास्ता, अत्र विनाश्यविनाशकभावलक्षणविरोधित्वस्य विवक्षितत्वात्। तन्मते च ज्ञानरूपब्रह्मणोऽज्ञाननाशकत्वादिति भावः। शङ्कते — **पुण्यमपि ही**ति।

**प्रतिबन्दीत्वेनानुसंधेय** इति। यदि "नासदासीन्नो सदासीत्" इति श्रुतिबलात् तमःशब्दितप्रकृतेरनिर्वचनीयत्वम्, तर्हि "अनादि मत्परं ब्रह्म न सत्तन्नास-

तुच्यते" इति प्रमाणबलात् ब्रह्मणोऽपि सदसद्विलक्षणत्वप्रसङ्ग इत्यर्थः। भाष्ये— **अचित्समष्टिभूते तमःशब्दाभिधेय** इति। ननु कथं सदसच्छब्दितयोश्चिद्चिद्व्यष्ट्योरचित्समष्टौ लय इति चेत्—न। योग्यतावशेन सूक्ष्मचिदचिच्छरीरके लय इत्यर्थकत्वेनादोषात्। भाष्ये—**सत्यं तमःशब्देनेति**। ननु तमःशब्देनाभिहितस्याचित्समष्टित्वमिति सिद्धान्तिनोक्ते सत्यमित्यादिनाऽचित्समष्टिभूतायाः प्रकृतेः सूक्ष्मावस्थोच्यत इति कथमनूद्यते? पूर्वत्र तमस एवाचित्समष्टित्वकथनेन प्रकृतेरचित्समष्टित्वस्य वा तमसस्तत्सूक्ष्मावस्थात्वस्य वाऽकथनादिति चेत्—न। उभयोरपि विरोधाभावेन तथानुवादोपपत्तेः। **क्रमेणोपादानविवक्षामिति**। पूर्वपक्षोपन्यासदशायां "तम आसीत्" इति वाक्यानन्तरं "मायां तु प्रकृतिम्" इति वाक्यमुपाददानस्य पूर्वपक्षिणो विवक्षामित्यर्थः। तमःशब्दात् सांख्याभिमतप्रकृतिरुच्यत इति शङ्काव्यावृत्त्यर्थं हि, मायां प्रकृतिं विद्यात् इति वाक्यं तदनन्तरमेवोपात्तमिति भावः। ननु "अस्मान्मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया संनिरुद्धः" इति वाक्यप्राप्तमायानुवादेन "मायां तु प्रकृतिं विद्यात्" इति वाक्येन प्रकृतिशब्दितमुपादानत्वं विधीयते, "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" इत्यादौ प्रकृतिशब्दस्योपादान एव प्रसिद्धेः। परैरपि तथा व्याख्यातत्वाच्च। तत एवोपादानमिथ्यात्वस्यापि सिद्धेर्मायानुवादेन प्रकृतित्वं विधीयत इत्येव परेण सुवचमिति चेत्—न। प्रकृतिशब्दस्योपादानपरत्वादपि प्रसिद्धिप्राचुर्येणाचित्समष्टिप्रकृतेरेवोपस्थित्या तस्या मायात्वरूपानिर्वचनीयत्वविधानस्यैव तन्मतेऽप्युचितत्वादिति भावः। **न मायामात्रसूत्रेति**। "मायामात्रं तु कार्त्स्न्येन" इत्यादिसूत्रे मायाशब्दस्याश्चर्यार्थकत्वप्रतिपादकभाष्येण विचित्रार्थसर्गकारित्वप्रतिपादकस्यास्य भाष्यस्य न विरोध इत्यर्थः। **बहुवचनादवगम्यत** इति। त्वदभिमताविद्याया एकत्वादिति भावः। **प्रतिभासस्तु द्वित्वादिविषयत्वादिति**। अविद्यमानचन्द्रद्वित्वादिविषयत्वादित्यर्थः।

## (अविद्यापरपुराणार्थः)

विशब्दस्य वैविध्यवैपरीत्यरूपार्थद्वयपरत्वसंभवमभिप्रयन्नाह—**विविधं ज्ञायतेऽनेन, विपरीतं ज्ञायतेनेनेति वा करणे व्युत्पत्तिरिति**। "करणाधिकरणयोश्च" इति ल्युट्। विज्ञानमविद्येत्यत्र प्रमाणमाह — **यदा तु शुद्धमित्यादिना**।

**तस्य हि व्यतिरेको वक्ष्यत** इति । विज्ञानशब्दस्य " विज्ञानमेकं निजकर्मभेद " इत्यत्रैव ब्रह्मस्वरूपज्ञानपरत्वे तद्व्यतिरेके प्रपञ्चव्यतिरेकप्रतिपादकस्य " यदा तु शुद्धम् " इत्यस्य श्लोकस्यासामञ्जस्यप्रसङ्गादिति भावः । ननु विज्ञाने = ब्रह्मणि विजृम्भितानि=कल्पितानीत्यर्थस्य वक्तुं शक्यत्वात् श्रीधरेण तथा व्याख्यातत्वाच्च कथं विज्ञानशब्दस्याविद्यार्थकत्वनिर्णय इत्याशङ्कयाह—**विज्ञाने विजृम्भितानीतीति । अस्वारस्या**दिति । " सप्तमी " इति योगविभागाश्रयणेन सप्तमीसमासस्य क्लिष्टत्वादिति भावः । **नपुंसकपदस्ये**ति पाठः । नपुंसकान्तपदस्येति पाठे नपुंसकत्वद्योतकविभक्त्यन्तपदस्येत्यर्थः । **पुंलिङ्गभेदशब्दविशेषणत्वायोगे**नेति । " जृभि गात्रविनामे " इत्यस्याकर्मकतया " गत्यर्थाकर्मक " इति कर्तरि क्तान्तस्य वा, ण्यन्तात् कर्मणि क्तान्तस्य वा विजृम्भितशब्दस्याश्रयणे विशेष्यनिघ्नताप्रसङ्गात्, " नपुंसके भावे क्तः " इति भावक्तान्तत्वपक्ष एव नपुंसकत्वस्य युक्तत्वाच्च भावप्रत्ययान्त एव विजृम्भितशब्दः । न च भेदानां कथं विजृम्भणरूपधात्वर्थत्वमिति वाच्यम्—उपचारेण तथा प्रयोगोपपत्तेः । ततश्च भावप्रत्ययान्तत्वे सिद्धे विजृम्भणरूपस्य भावस्य कर्त्राकाङ्क्षाया एवोत्कटत्वादधिकरणाकाङ्क्षाया अतथात्वात् षष्ठीसमास एव युक्त इति भावः । **बहुवचने न तात्पर्य**मिति । प्रत्यक्षादिसिद्धबहुत्वानुवादित्वादिति भावः । **जडोपलक्षित** इति । देहान्तःकरणादिभिः परस्परव्यावृत्ततया प्रतीते एकस्मिन् आत्मवस्तुनीत्यर्थः । **जडगतभेदा न संभवन्तीत्यर्थ** इति । अन्तःकरणाद्युपाधिप्रयुक्तभेदा न भवन्तीत्यर्थः । वस्तुभेदशब्दयोः कर्मधारयमभिप्रयन्नाह—**यद्वा एको वस्तुशब्द आकारपर** इति । प्रथमो वस्तुशब्दो जडपर इत्यभिप्रायः। अस्मिन् पक्षे कर्मप्रतिबद्धात्मनिश्चयैः सत्यत्वेनाऽऽलक्ष्यत इत्यस्य वक्तव्यतया सत्यत्वेनेत्यंशस्याध्याहारप्रसङ्गादुत्तरार्धस्य पूर्वार्धैकवाक्यत्वाभावाच्चापिशब्दमात्रमध्याहृत्य व्याचष्टे — **यद्वा न केवलमिति । तदुत्तरोत्तर**भावीति । अनेन भाष्ये भेददर्शनं निमित्तं यस्याज्ञानस्येति बहुव्रीहिरभिप्रेत इति भावः । अस्मिन् पक्षे कार्याज्ञानं ममकाररागद्वेषादि । **तस्यापि पूर्वकर्मैवेत्यर्थ** इति । न च भेददर्शननिमित्तकाज्ञाने भेददर्शनस्यैव हेतुत्वात् कथं कर्मणो हेतुत्वमिति वाच्यम्, मूलकारणं कर्मैवेत्यर्थात् । अस्मिन् पक्षे निजकर्मभेदविभिन्नचित्तैः बहुधाभ्युपेतमित्यस्यायमर्थः—

निजकर्मभेदेन विभिन्नचित्तैः सजातीयभेददर्शनैः । चित्तशब्दो बुद्धिपरः । बहुधाभ्युपेतं कार्याज्ञानयुक्तमिति । अस्मिन् पक्षे बहुधाभ्युपेतमित्यस्यातिक्लिष्टत्वात् पक्षान्तरमाह—**यद्वा देवादिशरीरभेदेति । सजातीयविजातीयभेदविरहानुवाद** इति । "विज्ञानमेकम्" इत्यर्धेन सजातीयात्मभेदस्य, "तस्मान्न विज्ञानम्" इत्यर्धेनानात्मभूतविजातीयभेदस्य च निषिद्धतया तन्निषेधानुवाद इत्यर्थः । **स्वगतभेदराहित्यमुच्यत** इति । तद्वदेव पूर्वार्धप्रतिपन्नमनूद्यत इत्यर्थः । द्वितीयपक्षे भाष्यानुगुण्यमाह — **एतदभिप्रायेण** हीति ।

**दशश्लोक्यामिति** । विष्णुपुराणे द्वितीयेंशे द्वादशाध्याये—

"इत्येष संनिवेशोऽयं पृथिव्या ज्योतिषां तथा ।
द्वीपानामुदधीनां च पर्वतानां च कीर्तितः ॥
वर्षाणां च नदीनां च ये च तेषु वसन्ति वै ।
तेषां स्वरूपमाख्यातं संक्षेपः श्रूयतां पुनः ॥"

इत्युपक्षिप्य—

"यदम्बु वैष्णवः कायस्ततो विप्र वसुंधरा ।
पद्माकारा समुद्भूता पर्वताब्ध्यादिसंयुता ॥
ज्योतींषि विष्णुर्भुवनानि विष्णुर्वनानि विष्णुर्गिरयो दिशश्च ।
नद्यः समुद्राश्च स एव सर्वं यदस्ति यन्नास्ति च विप्रवर्य ॥
ज्ञानस्वरूपो भगवान् यतोऽसावशेषमूर्तिर्न तु वस्तुभूतः ।
ततो हि शैलाब्धिधरादिभेदान् जानीहि विज्ञानविजृम्भितानि ॥
यदा तु शुद्धं निजरूपि सर्वकर्मक्षये ज्ञानमपास्तदोषम् ।
तदा हि संकल्पतरोः फलानि भवन्ति नो वस्तुषु वस्तुभेदाः ॥
वस्त्वस्ति किं कुत्रचिदादिमध्यपर्यन्तहीनं सततैकरूपम् ।
यच्चान्यथात्वं द्विज याति भूयो न तत्तथा तत्र कुतो हि तत्त्वम् ॥
मही घटत्वं घटतः कपालिका कपालिका चूर्णरजस्ततोऽणुः ।
जनैः स्वकर्मस्तिमितात्मनिश्चयैरालक्ष्यते ब्रूहि किमत्र वस्तु ॥

तस्मान्न विज्ञानमृतेऽस्ति किंचित् क्वचित् कदाचिद् द्विज वस्तुजातम् ।
विज्ञानमेकं निजकर्मभेदविभिन्नचित्तैर्बहुधाभ्युपेतम् ॥

ज्ञानं विशुद्धं विमलं विशोकमशेषलोभादिनिरस्तसङ्गम् ।
एकं सदैकं परमः परेशः स वासुदेवो न यतोऽन्यदस्ति ॥

सद्भाव एवं भवतो मयोक्तो ज्ञानं यथा सत्यमसत्यमन्यत् ।
एतत्तु यत् संव्यवहारभूतं तत्रापि चोक्तं भुवनाश्रितं ते ॥

यज्ञः पशुर्वह्निरशेष ऋत्विक् सोमः सुरा स्वर्गमयश्च कामः ।
इत्यादि कर्माश्रितमार्गदृष्टं भूरादिभोगा (भेदा) श्च फलानि तेषाम् ॥ "

इति दशश्लोकी पठिता। [यच्चैतद्भुवनगतमिति मूलोक्तपाठः।] **नात्र विगान**मिति। यद्यपि "यदस्ति यन्नास्ति च विप्रवर्य" इत्यत्रास्तिनास्तिशब्दयोर्भावाभावरूपेण प्रतिपन्नवस्तुपरतया योजयितुं शक्यत्वादस्तिशब्दस्यात्मपरत्वे विगानं संभवति—तथापि नास्त्यसत्यशब्दयोरचेतनपरत्वे न विवाद इत्यत्र तात्पर्यम्। **अपितु कर्मपरत्वमे**वेति। कर्ममूलवैविध्यानुसन्धानपरत्वमेवेत्यर्थः, उत्तरत्र तथाभिधास्यमानत्वात्। **वियुक्तं सूक्ष्मरूप**मिति। परस्परमुपकरणोपकरणिभाववियुक्तं प्रकृतिपुरुषयोः सूक्ष्मं रूपमुच्यत इत्यर्थः। **आदिभरतचरितं हृत्स्थ**मिति। "मैत्रेय तस्य चरितं कथयिष्यामि ते पुनः" इति प्रथमाध्याये उपक्षिप्तत्वादिदानीं हृत्स्थमिति भावः। ननु संक्षेपशब्दस्य सकलशास्त्रार्थसंक्षेपपरत्वसंभवे प्रथमाध्यायोक्तप्रतिज्ञावशेनादिभरतचरितस्य बुद्धिस्थत्वं परिकल्प्य, एतस्य तत्संक्षेपत्वकल्पनं क्लिष्टम्। किंच तत्संक्षेपरूपत्वं प्रतिज्ञातं चेत्, विस्तरकथनस्य स्वतः प्राप्ततया "भगवन् सर्वमाख्यातम्" इति मैत्रेयस्यादिभरतचरितप्रश्नो न युक्त इति चेत्—न। सकलसंक्षेपरूपत्वे वक्ष्यमाणसंक्षेपरूपत्वमपि संभवतीत्यत्र तात्पर्यात्। **सत्तामात्रमगोचर**मिति। यद्यपि नैतानि वाक्यान्येतत्प्रकरणस्थानि, तथापि "ज्ञानस्वरूपो भगवान् यतोऽसौ" इत्यादीनामेतत्प्रकरणस्थानां तत्समानार्थत्वं वक्तव्यमित्यभिप्रायेण तथोक्तमिति द्रष्टव्यम्। **अधीतानधीतशाखार्थज्ञापनार्थ**मितीति। अत्रेतिः समाप्तौ।

**विष्णुरात्मे**तीत्यस्य वाक्यस्य व्यवहितेनापि "शरीरात्मभावः" इत्यनेनान्वयसंभवे अभिप्रेत्येत्यध्याहारोऽनुचित इत्यभिप्रेत्याह—**शरीरात्मभाव इति वार्थ**

इति । **सकलश्रुतिगततादात्म्योपदेशोपबृंहणरूपस्येत्यत्र** सकलपदमनधीतशाखापरम् । तस्याश्चोपबृंहणं तदर्थविशदीकरणम् । अथवा सकलपदमधीतशाखापरम् । तस्याश्चोपबृंहणं तद्विरुद्धार्थवाक्यासत्त्वप्रतिपादनमिति द्वेधार्थसंभवमभिप्रेत्य व्याचष्टे—**अनधीतशाखास्वपीति**। **तादात्म्योपदेशोऽस्तीति** । य इति शेषः, उत्तरत्र 'तस्यायमेवार्थः' इति तच्छब्दश्रवणात् । **अत्रेतिशब्दत्रयस्येति** । एवमिहान्वयक्रमः—"यदम्बु वैष्णवः कायः" इति श्लोकेन सकलश्रुतिगततादात्म्योपबृंहणरूपस्य सामानाधिकरण्योपदेशस्य "ज्योतींषि विष्णुः" इत्यारभ्य वक्ष्यमाणस्य शरीरात्मभाव एव निबन्धनमित्यभिप्रेत्याम्बुनो विष्णोः कार्यत्वेनाम्बुपरिणामभूतं ब्रह्माण्डमपि विष्णोः शरीरमित्याहेति । न च 'विष्णुरात्मेत्यभिप्रेत्य' इति पूर्वग्रन्थविरोध इति वाच्यम्, तस्य व्याख्यानान्तरत्वेनादोषात् । केचित्तु—अनेन श्लोकेन तस्य विष्णुरात्मेत्यभिप्रेत्य शरीरात्मभाव एव सामानाधिकरण्ये निबन्धनमिति तात्पर्यत आहेति योजयन्ति । **विश्वरूपो यतोऽव्यय** इति । "सर्वेन्द्रियान्तःकरणं पुरुषाख्यं हि यज्जगत् । स एव" इति सामानाधिकरण्येन निर्दिश्य कथमिदं भिन्नयोः सामानाधिकरण्यमित्यपेक्षायाम्, "सर्वभूतात्मा विश्वरूपो यतोऽव्ययः" इति शरीरात्मभावस्य 'यतः' इति पञ्चम्या कण्ठतो हेतुतयोक्तेरित्यर्थः । इदं च वेदार्थसंग्रहे भाष्यकृता सुव्यक्तमुक्तम् ।

**पादत्रयस्यार्थ उच्यत** इति । "यदस्ति यन्नास्ति च विप्रवर्य" इति चतुर्थपादार्थस्य "अत्रास्त्यात्मकं नास्त्यात्मकं च" इत्यादिभाष्यग्रन्थेनानुवादमुखेन स्फुटीकरिष्यमाणत्वात् पादत्रयस्यार्थ उच्यत इत्युक्तम् । केचित्तु—असंकोचेन पादचतुष्टयस्याप्यर्थ उच्यते, श्लोकमात्रस्य शरीरात्मभावायत्ततादात्म्योपदेशपरत्वे विप्रतिपत्त्यभावात् । इयांस्तु विशेषः — पादत्रयगतानां ज्योतिरादिपदानां निर्णीतार्थतया न जिज्ञासा । चतुर्थपादगतास्तिनास्तिशब्दयोरनिर्णीतार्थतया तत्र जिज्ञासया तत्पादार्थमात्रस्यानुवादोपपत्तेरिति वदन्ति । **विशिष्टवाक्यार्थानुवादेनेति** । पर्यवसन्नवाक्यार्थानुवादेनेत्यर्थः । **नास्त्यात्मकत्वे हेतुरयमित्याहेत्युक्त**मिति । न त्वस्यास्त्यात्मकत्वे हेतुरयमित्याहेत्युक्तमित्यर्थः ।

"ज्ञानस्वरूपो भगवान् यतोऽसौ" इत्यंशेन 'इदमस्त्यात्मकम्, इदं नास्त्यात्मकम्, अस्य च नास्त्यात्मकत्वे हेतुरयम्' इत्यप्रतिपादनादाह — **प्रतीकमुपादात्त** इति। ननु भाष्ये—**अशेषक्षेत्रज्ञात्मनावस्थितस्येति** कथं लभ्यते? क्षेत्रज्ञस्य प्रागनिर्दिष्टत्वात्। न च "यदस्ति यन्नास्ति च विप्रवर्य" इत्यनेनास्तिशब्देन क्षेत्रज्ञस्योपस्थापनमस्तीति वाच्यम्, 'इदमस्त्यात्मकम्, इदं नास्त्यात्मकम्' इति विभागानभिज्ञं मैत्रेयं प्रति अस्तिशब्दस्य क्षेत्रज्ञोपस्थापकत्वाभावेनाशेषमूर्तिशब्देन क्षेत्रज्ञात्मनावस्थितस्य भगवत उपस्थापने प्रमाणाभावादित्याशङ्क्य, अस्तिनास्तिशब्दाभ्यामनुपस्थापनेऽपि ज्योतिरादिशब्दैः संसृष्टवचनैश्चेतनाचेतनयोरुपस्थितिसंभवात् तत्र चाचिच्छरीरके ज्ञानस्वरूपशरीरकत्वोपदेशस्य वा "न वस्तुभूतः" इति देवादिशरीरकत्वनिषेधस्य वाऽसंभवात् क्षेत्रज्ञशरीरक एव योग्यतावशेनाशेषमूर्तिशब्देन परामृश्यते। ततश्च क्षेत्रज्ञशरीरको भगवान् ज्ञानस्वरूपः ज्ञानशरीरको भवति, (स्वरूपशब्दः शरीरपरः।) वस्तुस्वरूपदेवादिशरीरको न भवतीत्युक्ते क्षेत्रज्ञस्य ज्ञानस्व(?)रूपत्वमस्ति, अर्थस्वरूपदेवादिशरीरत्वं नास्तीति फलति। ततश्च देहात्मविवेकोऽपि फलितो भवति। यथा 'अङ्गुलीयकवानसौ रजतवान्न सुवर्णवान्' इत्युक्ते 'अङ्गुलीयकं रजतरूपं न सुवर्णरूपम्' इति तद्वत्—इत्यभिप्रयन्नाह — **अशेषशब्देनाचितोऽपीति। वस्तुभावनिषेधोऽनुपपन्न** इति। चिच्छरीरकस्य भगवतः, "न तु वस्तुभूतः" इति देवमनुष्यशैलाब्धिधरादिवस्तुशरीरकत्वनिषेधस्य शरीरभूते अचिदंशे देवमनुष्यादिभावनिषेधपर्यवसितत्वादित्यभिप्रायः। **ऋत्विक्प्रचारकर्मविशेषणमिति**। यथा परंपरया प्रचारविशेषणमुष्णीषलौहित्यम्। **परम्परयेत्यस्य** प्रचारे ऋत्विजां विशेषणत्वम्, तत्र चोष्णीषस्य, तत्र च लौहित्यस्येत्यभिप्रायः। "काठिन्यवान् यो बिभर्ति तस्मै भूम्यात्मने नमः" इत्यत्रात्मस्वरूपे भूमिद्वारा काठिन्यमिति भावः। भाष्ये—**यत एवं तत एवेति**। ननु क्षेत्रज्ञस्य ज्ञानस्वरूपत्वेन देवादिरूपत्वाभावेऽपि देवादिभेदस्य तद्विज्ञानविजृम्भितत्वमनावश्यकम्, क्षेत्रज्ञभिन्नत्वमात्रेण तद्विज्ञानविजृम्भितत्वस्यानावश्यकत्वात्। इतरथा परमात्मनित्यविभूत्यादेरपि तथात्वप्रसङ्गात्। न च जीवभिन्नस्यानित्यत्वेन सिद्धस्य देवादेस्तद्विज्ञानविजृम्भितत्वमावश्यकमिति वाच्यम्, देवादिभेदस्याप्यनित्यत्वानिश्चयात्।

निश्चये वा तस्यासत्यशब्दिततत्त्वोपयुक्तानित्यत्वस्य सिद्धतया कर्मपरिणामरूपतयाऽनित्यत्वप्रतिपादनार्थं प्रवृत्तस्य, "ततो हि शैलाब्धिधरादिभेदान् जानीहि विज्ञानविजृम्भितानि" इत्यस्य वैयर्थ्यप्रसङ्गात् । किंच क्षेत्रज्ञात्मनावस्थितस्य देवादिभूतत्वाभावेन देवादिस्वरूपस्य विज्ञानविजृम्भितत्वे देवाद्यात्मनावस्थितस्य ज्ञानस्वरूपक्षेत्रज्ञभूतत्वाभावेन क्षेत्रज्ञस्यापि विज्ञानविजृम्भितत्वप्रसङ्ग इति चेत्—न । "न तु वस्तुभूतः" इति देवादिस्वरूपस्य क्षेत्रज्ञस्वरूपावस्थितपरमात्मस्वाभाविकरूपत्वे प्रत्याख्याते, पुनः किंरूपमित्यपेक्षायाम्, "विज्ञानविजृम्भितानि" इत्यागन्तुकरूपत्वमुच्यत इत्यदोषात् । अत एव भाष्ये **ज्ञानमेव स्वाभाविकं रूप**मिति स्वाभाविकपदं प्रयुक्तम् । **देवादिभेदहेतुत्वं सद्वारक**मिति । पूर्वपूर्ववैविध्यानुसन्धानेन, कर्मणा च देवादिभेदा इत्यर्थः । कर्माविद्ययोर्बीजाङ्कुरवत् परस्परहेतुत्वसंभवात् हेतुहेतुमद्भावव्यत्यासशङ्का न कार्या । **ज्ञानस्वरूपः विज्ञानविजृम्भितानीत्यनेन फलित**मिति । "ज्ञानस्वरूपः" इत्यनेन ज्ञानस्वरूपस्योक्ततया परिणामशून्यत्वावगमात् सत्यत्वम्, "विज्ञानविजृम्भितानि" इत्यनेन परिणामित्वं च फलितम् । अत एव "निजसिद्धज्ञानैकरूपत्वेन" इति भाष्यमिति भावः । ननु "यदा तु शुद्धम्" इत्यस्य पूर्वोक्तविवरणरूपत्वेन पूर्वपक्षिसंमतस्य कथं तदेव विवृणोतीति भाष्यकृताप्यभ्युपगम इत्याशङ्क्याविरुद्धांशे तदुपजीवनं न दोषायेत्याह—**पूर्वपक्षयोजनाया**मिति । **निर्दोषमित्यादिपदानामर्थविभाग** इति । अपास्तदोषमित्यादिपदानामिति वक्तव्ये लाघवार्थं निर्दोषपदमुपात्तमिति द्रष्टव्यम् । यद्वा, निर्दोषमित्यादीति छेदः । **पदाना**मिति श्लोकस्थपदानामित्यर्थः । **आत्मकल्पनामूलकर्मफलभूता** इति । आत्मकल्पना मूलं यस्येति बहुव्रीहिः । व्यक्तिभेदेन बीजाङ्कुरन्याये दोषाभावात् । **विज्ञानशब्दे संकल्पशब्देऽपी**ति । वैविध्यानुसन्धानस्य विज्ञानशब्दार्थस्य एकीकृत्यानुसन्धानस्य संकल्पशब्दार्थस्य च हेतुहेतुमद्भावेन करणत्वसंभवात् "विज्ञानविजृम्भितानि, संकल्पतरोः फलानि" इत्युक्त्योर्न विरोधः, अन्यतरस्योक्तावन्यतरस्यार्थसिद्धत्वादिति भावः । **भोग्यशब्दार्थः स्पष्टीकृतो भवती**ति । भोगार्था इत्यपक्षिप्तानामेव वस्तुभेदानामुत्तरवाक्ये भोग्यभूता इति परामर्शादित्यर्थः । **भोगसिद्धिप्रयोजनकत्वमेवे**ति । "तस्य निमित्तं संयोगो-

त्पातौ" इत्यस्मिन्नर्थे "गोद्व्यचः" इति भोगशब्दाद्यत्प्रत्ययः; न तु "ऋहलोर्ण्यत्" इति ण्यदन्तम्, तथात्वे भोगस्थानादीनां भोग्यशब्देन परिग्रहानापत्तेरिति भावः।

**व्याख्येयपदव्याख्यानार्थ**मिति। "वस्तुषु" इत्यादिपदस्याव्याख्यातत्वात् तदर्थमित्यर्थः। **व्याख्येयं पदमुदाहरती**ति। "भोक्ता भोग्यम्" इति श्रुतिगतभोग्यपदमित्यर्थः। **हेतुरनुक्त** इति। यद्यपि "ज्ञानस्वरूपः" इत्यनेनैवास्तिशब्दवाच्यत्वे हेतुरुक्तः, तथापि भाष्ये नोक्तः। अत एव पूर्वश्लोकव्याख्याने, "इतरदस्तिशब्दाभिधेयम्" इत्युक्तम्, न तु तत्र हेतुरुपन्यस्त इति भावः। **प्रयोजकशिक्षे**ति। अस्तिनास्तिपदप्रवृत्तिनिमित्तशिक्षेत्यर्थः। **अत्राभिधेय**मिति। अस्मिन् श्लोके अस्तिशब्दस्यास्तिशब्दाभिधेय एवार्थ इत्यर्थः। **स्वभोग्यभूतमचिद्वस्तु प्रतिक्षणमन्यथाभूतमालक्ष्यते** इति भाष्ये प्रतिक्षणमन्यथाभूतं वस्तु भोग्यत्वेनालक्ष्यते, भोग्यमचिद्वस्तु प्रतिक्षणमन्यथात्वेनालक्ष्यत इत्युद्देश्यविधेयभावभेदेनार्थद्वयसंभवमभिप्रेत्य द्वेधापि व्याचष्टे—**अस्थिर** इत्यादिना। **चाक्षुषज्ञाने प्रयोगप्राचुर्या**दिति। यद्यपि चक्षुषा प्रत्यक्षेणोपलक्ष्यते इत्युक्तावपि न दोषः, तथापि चाक्षुषज्ञानातिरिक्तप्रमाणान्तरसंग्रहायानुभूयत इति व्याख्यातमिति द्रष्टव्यम्। **श्लोकव्याख्यानपरिसमाप्ति**मिति। अस्यां योजनायामिति शेषः। अयं भावः—आलक्ष्यते अनुभाव्यते भुज्यत इति वा, भोग्यत्वेनालक्ष्यत इति वा पूर्वयोजनायामेतादृशाप्रसिद्धार्थप्रदर्शनपरतया 'इत्यर्थः' इत्यस्य साफल्यं संभवेत्। अस्यां तु योजनायामालक्ष्यत इत्यस्यानुभूयत इत्यर्थे प्रसिद्धिसत्त्वेन 'इत्यर्थः' इत्यस्य वैयर्थ्यात् समाप्तिद्योतकत्वमेव। अस्मिंश्च पक्षे एवंसतीत्युत्तरभाष्यं श्लोकद्वयाभिप्रायकथनपरम्। एतदेवाभिप्रेत्य वक्ष्यति—अथवा श्लोकद्वयाभिप्रायमाहेति। पूर्वयोजनायां तु 'इत्यर्थः' इत्यस्य समाप्तिद्योतकत्वाभावात् 'एवंसति' इत्युत्तरभाष्यं ब्रूहीत्यादिपदार्थकथनपरम्। एतत्पक्षाभिप्रायेण **ब्रूहीत्यादेरर्थमाहेत्या**दिग्रन्थ इति। अतः श्लोकव्याख्यानसमाप्तौ ब्रूहीत्याद्यर्थकथनं विरुद्धमिति न चोदनीयम्। **अस्तिशब्दार्थमित्यादि विशेषणं सामर्थ्यसिद्धतये**ति। न तु "वस्त्वस्ति किम्" इति शब्दाभिधेयतया, तत्रास्तिशब्दस्य भवत्यर्थकत्वादिति भावः। **वस्तुशब्दतुल्यत्वं न शङ्कनीय**मिति। "वस्त्वस्ति किम्" इत्यत्र वस्तुशब्दस्येत्यर्थः। **यद्वास्ति-**

**शब्दाभिधेय इत्यनेने**ति। पूर्वयोजनायामस्तिशब्दाद्देमित्यध्याहारः। अस्मिन् पक्षे तु भवत्यर्थकास्तिशब्दाध्याहार इति विशेषः। **पूर्वपक्षयोजनाया**मिति। अतश्च पूर्वपक्षे विभज्य श्लोकद्वयार्थानुक्तिर्न दोषायेति भावः। **अवच्छिन्नास्तिशब्दवाच्यत्वं चे**ति। 'तदानीमस्ति' 'इदानीमस्ति' इति पदान्तरसहितास्तिशब्दवाच्यत्वं चेत्यर्थः। **आकारैक्यपरत्वं स्पष्ट**मिति। "संख्याया विधार्थे धा" इति विधार्थभूतप्रकारे धाप्रत्ययविधानात् बहुधेत्यस्य बहुप्रकारमित्यर्थो वर्णनीयः। ततश्च तत्प्रतियोगिन एकशब्दस्यापि प्रकारैक्यमेवार्थः। न च 'एकं राशिं पञ्चधा कुरु' इत्यत्रेव "अधिकरणविचाले च" इति धाप्रत्ययोऽस्त्विति वाच्यम्, अधिकरण-विचालनं हि एकस्य वस्तुनोऽनेकधाकरणम्। संख्यान्तरापादनमित्यर्थः। न हि विज्ञानस्य संख्यान्तरापादनं स्वरसम्। तस्माद्विधार्थ एव धाप्रत्यय इति प्रकारैक्यमे-वैकशब्दस्याभ्युपेयमित्यर्थः। ननु "बहुधाभ्युपेतम्" इति विधार्थे धाप्रत्ययश्रवणे पञ्चधाभुंक्त इत्यत्रेव क्रियागतं प्रकारबहुत्वं प्रतीयत इति वक्तव्यम्; न तु विज्ञान-गतम्, क्रियाबहुत्वस्य धाप्रत्ययार्थत्वात्। ततश्च "बहुधाभ्युपेतम्" इत्यत्राभ्युप-गमक्रियागतप्रकारबहुत्वं पर्यवस्येत्; न तु ज्ञानप्रकारबहुत्वम्। ततश्च "विज्ञान-मेकम्" इत्यत्र विज्ञानप्रकारैक्यं कथं सिध्येत्? तद्बोधकाभावात्। एकत्वबहुत्व-योर्भिन्नविषयत्वादिति चेत् — न। अभ्युपगमक्रियाबहुत्वस्याभ्युपगम्यमानविज्ञान-बहुत्वपर्यवसिततयैकत्वबहुत्वयोः समानविषयत्वात् इति भावः। **औपाधिकमित्यर्थ** इति। ननु देवाद्यनुसंधानस्यौपाधिकत्वे किं प्रयोजनम्? "यदम्बु वैष्णवः कायः" इत्यादिश्लोकद्वयेनोक्तचिदचिदात्मकस्य जगतः संसृष्टत्वावस्थायां वियुक्तत्वावस्थायां च भगवच्छरीरत्वमुपपादितम्। "ज्ञानस्वरूपो भगवान् यतोऽसौ" इत्यादिश्लोकद्वयेन चिदचिद्विवेकः, चितः सत्यशब्दवाच्यत्वमचितोऽन्वयव्यतिरेकाभ्यां कर्मपरिणाम-तयाऽसत्यशब्दवाच्यत्वं चोपपादितम्। तदेवाचितोऽसच्छब्दवाच्यत्वं जगदुपलब्धि-प्रकारेणापि "वस्त्वस्ति किम्" इत्यादिश्लोकद्वयेनापि दृढीकृत्य, "तस्मान्न विज्ञानम्" इति श्लोकार्धेन चित एव सच्छब्दवाच्यत्वं नाचित इत्युपसंहृतमेवेति समर्थ-नीयान्तराभावात् "विज्ञानमेकम्" इति श्लोकार्धोपन्यासहेतुभूतशिष्यजिज्ञासाविषय-

भूतं किमपि न दृश्यत इति चेत्, सत्यम्; अचिद्वस्तुनोऽसत्यशब्दप्रवृत्तिनिमित्तभूतपरिणामित्वोपपादककर्महेतुकत्वोपसंहाररूपतया सार्थक्यात्।

**कर्मक्षयवाचिपदानन्तरपदस्येति**। कर्मक्षयवाचिपदं विशुद्धमिति पदम्। तदनन्तरपदं विमलमिति पदम्। **शरीरसंबन्धरहितपरत्वेनेति**। प्रकृतिस्पर्शरहितमित्यस्य शरीरसंबन्धरहितमित्यस्य च समानार्थत्वादिति भावः। **चिदचित्साधारणाविति**। चिदचिद्विवेकपरत्वादिति भावः। **अन्येष्वपि शब्देष्विति**। सदसदादिशब्देष्वित्यर्थः। ननु "स्वर्गमयश्च कामः" इत्यस्य काम्यमानस्वर्गपरत्वमेव किं न स्यादित्याशङ्क्य, "भूरादिभोगाश्च फलानि तेषाम्" इति फलस्य वक्ष्यमाणत्वात् स्वर्गेच्छापरत्वमेव युक्तमित्याह—**फलस्य वक्ष्यमाणत्वादिति**। ननु "यज्ञः पशुः" इत्यादिश्लोकस्य कथं कर्मस्वरूपप्रतिपादनपरत्वम्? पश्वदीनां यज्ञशेषतया तदनुप्रविष्टत्वेऽपि वह्निशब्दनिर्दिष्टदेवताया भूरादिभोगानां च फलभूतानामतच्छेषभूतानां कर्मत्वासंभवादित्याशङ्क्याह—**देवतायाः फलस्य चेति**। **सर्वत्र व्रजति हीति**। व्रजत्येवेत्यर्थः। **कर्मवश्यो हीति**। कर्मवश्य एवेत्यर्थः। **ध्रुवमचलं सदैकरूपमिति**।

> "यच्चैतद् भुवनगतं मया तवोक्तं सर्वत्र व्रजति हि तत्र कर्मवश्यः।
> ज्ञात्वैतद्ध्रुवमचलं सदैकरूपं तत् कुर्याद्विशति हि येन वासुदेवम्॥"

इति श्लोकस्थैः "ध्रुवमचलं सदैकरूपम्" इति पदैः क्रमेण स्वरूपतो रूपतो गुणतश्चैकरूप्यमुच्यत इत्यर्थः। सदैकरूपमित्यत्र रूपत ऐकरूप्यस्योचितत्वमभिप्रयन्नाह—**यद्वा स्वरूपतो गुणतो रूपतश्चेति**। **पूर्वेणान्वय** इति। सिद्धान्तोपक्रमगतप्रतिज्ञावाक्येन "नैतदेवम्" इत्यनेनान्वय इत्यर्थः।

**नासद्विलक्षणपराविन्यर्थ** इति। यथा ब्रह्मणि प्रयुज्यमानावस्तिसत्यशब्दौ न सदसद्विलक्षणपरौ, एवं प्रपञ्चेऽपि प्रयुज्यमानौ नास्त्यसत्यशब्दौ न सदसद्वैलक्षण्यपरावित्यर्थः। **अर्थद्वारको विरोध** इति। यद्यपि सदसद्विलक्षणत्वमपि सत्त्वविरुद्धं भवति—तथापि सत्त्वाभावमेवासच्छब्दो वदेत्, नातिरिक्तमिति भावः। **विनाशित्वमेव हि मिथ्यात्वमिति शङ्कायामिति**। तटस्थशङ्कायामित्यर्थः; मृषावादिनस्तादृश्याः

शङ्काया अनुत्थानात् । तथा सति विवादपर्यवसानात् । **विनाशित्वस्वरूपं शोधयतीति । एकेनाकारेणैकस्मिन् कालेऽनुभूतस्य कालान्तरे परिणामविशेषेणान्यथोपलब्ध्या नास्तित्वोपपादनादिति** भाष्यस्य परिणामविशेषेणान्यथोपलब्धिर्हि विनाशित्वमित्यभिप्रायं मत्वा विनाशित्वस्वरूपं शोधयतीत्यवतारिका रचिता । केचित्तु **एकेनाकारेणेत्यादि** भाष्यमेवमवतारयन्ति—ननु "वस्त्वस्ति किं, मही घटत्व"मित्यत्र नाशित्वमेव ह्युपपादितम्; न निष्प्रमाणकत्वं ज्ञानबाध्यत्वं वा" इत्युक्तम् । नात्र विनिगमकं पश्याम इत्याशङ्क्य, "वस्त्वस्ति किम्" इत्यादिश्लोकद्वयेन कालान्तरेऽन्यथोपलब्धस्य कालान्तरेऽन्यथोपलम्भेनोपपद्यमानस्य नास्तित्वस्य प्रमाणसंबन्धानर्हत्वलक्षणतुच्छस्वरूपे प्रतिपन्नदेशकालोपाधौ निषेधप्रतियोगित्वलक्षणमिथ्यात्वरूपे वा पर्यवसानासंभवेन, विनाशित्व एव पर्यवसानस्योचितत्वमभिप्रयन्नाह—एकेनाकारेणैकस्मिन् काल इतीति । अस्मिन् पक्षे विनाशित्वमेव मिथ्यात्वमिति शङ्कायाः कथं विनाशित्वं तुच्छत्वमिथ्यात्वव्यावृत्तमिति शङ्कायाश्च तटस्थशङ्कात्वाश्रयणक्लेशो नास्तीति च वदन्ति । **विनाशगर्भत्वं नास्तिशब्दप्रवृत्तिनिमित्तमित्यर्थ** इति । नश्वरत्वं नास्तिशब्दप्रवृत्तिनिमित्तमिति नास्त्यर्थत्वं नश्वरत्वस्य । अतश्च, **अचेतनं सर्वदा नास्त्यर्थगर्भमिति** भाष्यस्य सर्वदा नाशगर्भमित्यर्थ इति भावः । **स्वाभाविकास्तित्वयोगित्वबुद्धिविषयत्वमिति**। स्वाभाविकास्तित्वमपरमार्थ इत्यर्थः । अपरमार्थभूतस्वाभाविकास्तित्वयोगात् अचिद्वस्तुनोऽप्यपरमार्थत्वमिति भावः । न चापरमार्थस्वाभाविकसत्यत्वस्याचिद्रूपेऽभावात् कथं तद्योगेनाचेतनेऽपरमार्थत्वव्यवहार इति वाच्यम्, अचेतनमसत्सत्यत्वकमिति प्रतीत्या कस्यचित् संबन्धस्य बहुव्रीह्यर्थस्य वक्तव्यत्वात् । **अपरमार्थत्वगर्भास्त्यर्थोपेतत्वादिति**। अपरमार्थस्वभाविकसत्यत्वोपेतत्वादित्यर्थः ।

## ( निवर्तकानुपपत्तिः )

**तेनात्मवयविषयत्वं चेति** । तेन = निर्विशेषवस्तुनेत्यर्थः । यद्वा निर्विशेषवस्तुविषयत्वेनेत्यर्थः । **तत्र हि "अद्भ्यः संभूतो हिरण्यगर्भ इत्यष्टौ" इति प्रतीकोपादानं कृतमिति** । ततश्च "अद्भ्यः संभूतः" इत्युत्तरानुवाकपठितेन "वेदाहमेतं पुरुषं महान्तम्, आदित्यवर्णम्" इत्यनेन "सर्वे निमेषा

जज्ञिरे विद्युतः पुरुषादधि" इत्यस्य "अम्भस्यपारे" इत्यनुवाकगतस्यैकवाक्यत्वं वक्तव्यमिति भावः।

(तत्त्वमस्यर्थः)

**चतुर्धा हि परैः सामानाधिकरण्यमिति**। "व्याप्तेश्च समञ्जसम्" इत्यत्र शांकरभाष्ये सामानाधिकरण्ये अध्यासापवादैकत्वविशेषणानीति चत्वारः पक्षा उपन्यस्ताः। तत्र—'अध्यासो नाम—द्वयोर्वस्तुनोरनिवर्तितायामेवान्यतरबुद्धौ अन्यतरबुद्धिरध्यस्यते। यथा नाम्नि ब्रह्मत्वबुद्धावध्यस्तायामप्यनुवर्तत एव नामबुद्धिः, न ब्रह्मबुद्ध्या निवर्तते। यथा वा प्रतिमादिषु विष्ण्वादिबुद्धिरध्यासः। अपवादो नाम-यत्र कस्मिंश्चिद्वस्तुनि पूर्वनिविष्टायां निश्चितायां मिथ्यात्वबुद्धौ पश्चादुपजायमाना यथार्थबुद्धिः पूर्वनिविष्टाया मिथ्यात्वबुद्धेर्निवर्तिका भवति। यथा देहेन्द्रियसंघाते आत्मबुद्धिरात्मन्येवात्मबुद्ध्या पश्चाद्भाविन्या तत्त्वमसीत्यनया यथार्थबुद्ध्या निवर्तते। यथा दिग्भ्रान्तिर्दिग्याथात्म्यबुद्ध्या निवर्तते। एकत्वं च समानाधिकृतयोः शब्दयोर्द्वयोरनतिरिक्तार्थवृत्तित्वम्। तद्यथा 'सिन्धुरः करी', 'कोकिलः पिकः' इति। विशेषणविशेष्यभावे 'नीलमुत्पलम्''—इत्युपन्यस्तम्। तस्यापीदमुपलक्षणमिति द्रष्टव्यम्। **सर्वं खल्विदं ब्रह्मेत्यादाविति**। ननु शमविधिपरत्वेन, 'नाम ब्रह्म' इत्यादाविव सर्वस्मिन् ब्रह्मदृष्टिविधिपरत्वाभावेन अध्यासे सामानाधिकरण्यमिति परैर्न व्यवहृतम्; कथमेवमुच्यत इति चेत्—न। यदि न व्यवहृतम्, तर्हि 'नोदाहरणमादर्तव्यम्' इति न्यायेन संप्रतिपन्नमुदाहरणान्तरं द्रष्टव्यम्। **स्थित्यादिविशेषणविधुरेति**। तिष्ठतिक्रियाया आनयनदशायामसंभवादिति भावः। **स्थित्यादिविशेषणेनेति**। यत्प्रत्यायकव्यावृत्तिमत्तया ज्ञाते तात्पर्यविषयेतरविशेषणान्वयधीः, तत्त्वस्यैव विशेषणत्वरूपत्वम्; न तु विधेयान्वयिरूपत्वमिति भावः। **यथान्वयार्हमिति**। विधेयसमकालतया वा विधेयभिन्नकालतया वा यथान्वयार्हमित्यर्थः। अत एव 'सोऽयं देवदत्तः' इत्यादौ देशकालादीनामपि विशेषणत्वमिति भावः। **एकस्यापि परित्याग इति**। अत एव "संबन्धादेवमन्यत्रापि" इत्यधिकरणे व्याहृतिविद्यायाम् 'तस्योपनिषदहरित्यधिदैवतम्', 'तस्योपनिषदहमित्यध्यात्मम्' इत्यत्र तच्छब्दस्य पूर्वप्रकृतस्थानविशेषविशिष्टवचनत्वात् तत्तन्नाम्नो

व्यवस्थितिः, न तु विशेष्यमात्रवचनतयाऽव्यवस्थितत्वमिति समर्थितमिति भावः । **प्रकृतत्वं दूरोत्सारितमि**ति । अत एव निर्विशेषप्रतीतिस्तत्पदेन लक्षणयैवेति परैरपीष्यत इति भावः । **प्रतिसंधानानर्हत्वादि**ति । तत्पदजन्यप्रतिसंधानानर्हत्वादित्यर्थः । **कनकं प्रतिसन्धीयत** इति । न च तच्छब्दानुविद्धतया तदिति प्रात्यक्षिकप्रतिसंधाने सत्यपि तत्पदजन्यप्रतिसंधानविषयत्वस्यानुपपादितत्वात् कथमयमाक्षेप इति वाच्यम्, तच्छब्दानुविद्धप्रतिसंधानानर्हस्य तत्पदजन्यप्रतिसंन्धानानर्हत्वमपि संभवतीति तदभिप्रायात् । **शब्दस्त्वि**ति । वस्तुतस्तु प्रत्यक्षेण यत्राङ्गुलीयकत्वप्रहाणेन तदिति कनकं प्रतिसंधीयते, तत्रापि संस्कारसाचिव्यादङ्गुलीयकत्वविशिष्टमेव प्रतिसंधीयते । ततश्च तच्छब्दानुविद्धप्रत्ययस्थले सर्वत्रापि प्रकृताकारविशिष्टस्यैव परामर्श इत्युक्तावपि न दोषः । **प्रयोजकोपलक्षणाभिप्रायेणे**ति । ततश्च किंचिज्ज्ञत्वादिरूपमाभिमुख्यप्रयोजकमप्यचिद्विशिष्टेत्यनेन संगृहीतमिति भावः । **अन्यथाऽतीतानागते**ति । प्रतीतियौगपद्यमादाय विषययौगपद्याभ्युपगमे प्रत्येतव्यस्य प्रतीतिसमकालत्वमिति नियमोऽभ्युपगतः स्यात् । ततश्चातीतानागतविषयेऽपि विषयविषयिणोः समकालत्वनिर्वाहाय विषयिणो वाऽऽतीतत्वं विषयस्य वा विद्यमानत्वं स्यादिति भावः ।

**उक्तदृष्टान्तादि**ति । 'शुक्तिरेव रजतम्' इति दृष्टान्तादित्यर्थः । **उपलक्ष्यसामानाधिकरण्यादि**ति । "अन्वयमुखेनोपलक्ष्यवस्त्वैक्यपरम्" इति प्रतिपादित त् उपलक्ष्यसामानाधिकरण्यादित्यर्थः । **पाठो निरीक्षणीय** इति । आश्रयशब्दस्य नित्यपुंलिङ्गत्वादिति भावः । **आश्रयशब्दो विषयपर** इति । विषयीकरणपर इत्यर्थः । स्वसिद्धान्तमाह—**आरोप्याकाराधिकरणभूतमधिष्ठानमिति वार्थ** इति । भ्रम्यत इति भ्रमः, आरोप्याकारो रजतादिरेव । तस्याश्रयम् आश्रीयत इत्याश्रयम् "अकर्तरि च कारके" इत्यधिकारे कर्मणि "एरच्" इत्यच्प्रत्ययः । न च "अजबन्ताः पुंसि" इति पुंलिङ्गत्वमजन्तत्वे स्यात्,

"क्तल्यू नपुंसके भावे स्त्रियां क्तिन्नादयो यतः ।
अतो घञाद्याः पुंस्येव यथा पाकश्चयो लवः ॥"

इति वाच्यम् , तस्य भावार्थघञादिविषयत्वात् । यथोक्तम्—

"भावे घञाद्याः पुंस्येव कर्तृभिन्ने तु कारके ।
पुंनपुंसकयोरेव न कथंचित् स्त्रियां कचित ॥"

इति । तेन कर्मादिषु कारकेषु पुंनपुंसकत्वमस्तीति विशेष्यस्य नपुंसकत्वान्नपुंसकत्वमुक्तमिति द्रष्टव्यम् । **यथा पलाशपुष्पविपर्ययेति** । यद्यपि श्लोके भ्रमर्या वृन्ते भ्रमरभ्रमेण पलाशपुष्पविषयदावभ्रमे निवृत्ते पलाशपुष्पाश्लेषमात्रं प्रतीयते; 'भ्रमरभ्रमेण' इत्यस्य 'अदावभ्रमम्' इत्यनेनैवान्वितत्वेन 'आश्लिषत्' इत्यनेनान्वितत्वाभावात्, तावन्मात्रस्यैव प्रकृतोपयुक्तत्वाच्च—तथापि भ्रमरज्ञानस्य भ्रान्तित्वस्पष्टीकरणार्थं पलाशपुष्पाश्लेषस्य भ्रमरभ्रमनिवर्तकत्वमप्युपन्यस्तमिति द्रष्टव्यम् । **भ्रमविषयनिवृत्तेरिति** । निवृत्तिरपहारः, असत्त्वमिति यावत् । **पारमार्थिकधर्मतत्तिरोधानानभ्युपगमे भ्रान्तिबाधौ दुरुपपादौ** इति हि भाष्यम् । तत्र बाधो हि विषयापहारः, विषयासत्त्वमिति यावत् । तनश्च भ्रान्त्यन्तरं निवर्तताम्; मा वा । दावत्वरूपविषयस्यासत्त्वलक्षणो बाधः पारमार्थिकपलाशपुष्पत्वकृतः; विरोधिधर्मपारमार्थ्यायत्तत्वात् तद्विरोधिधर्मासत्त्वस्येति भावः । भ्रान्तिबाधो नाम भ्रान्तिविनाश एवेत्यभिप्रेत्याशङ्कते—**भ्रमरभ्रमेण दावत्वभ्रमनिवृत्तिरिति** चेदिति । **असत्ये सत्यत्वविषयभ्रमान्तरमिति** । ननु—तन्निवृत्तिरपि भ्रमान्तरेण, तन्निवृत्तिरपि भ्रमान्तरेणेत्याश्रयणे भ्रमपरंपरया निःशेषाविद्यानिवृत्त्यनुपपत्तिः इत्येतावतैव ग्रन्थेन विवक्षितार्थः सिध्यतीति, "ततः किम्? दावत्वबुद्धिनिवृत्तिः" इत्यादिग्रन्थस्य नातीव प्रयोजनं पश्यामः । किंच अभ्रमरे भ्रमरत्वविषयत्वेनैव भ्रमत्वोपपादनसंभवे सत्यत्वविषयत्वपर्यन्तोपपादनस्यापि न प्रयोजनमिति चेत्—न; विरुद्धाकारसत्यत्वावगाहिज्ञानस्यैव बलवत्त्वेन बाधकत्वमिति शिक्षणार्थत्वेनास्य ग्रन्थस्योपपत्तेः। **निःशेषाविद्यानिवृत्त्यनुपपत्तिरिति** । भ्रमेण भ्रमनिवृत्तिमात्रदर्शनेऽपि मोक्षे निःशेषाविद्यानिवृत्तिमभिलषता सुदूरमपि गत्वा पारमार्थिको धर्मः स्वीकरणीय इति भावः । **किंच भ्रमरभ्रमनिवृत्त्यनन्तरमिति** । वृन्तत्वज्ञानेन भ्रमरत्वव्यतिरेकनिश्चये निवर्तकीभूतभ्रमरत्वबुद्धेरपारमार्थ्यनिश्चयेन दावत्वबुद्धेः पारमार्थ्यबुद्धेरवर्जनीयत्वादिति भावः । **परमार्थपलाशपुष्पत्वग्रहणेनैव प्रतिनिवृत्त** इति । यद्यपि दावत्वभ्रमस्य वृन्ते भ्रमरत्व-

पारमार्थ्यभ्रममात्रेणापि तद्बाधकज्ञानानुत्पत्तिस्थले निवृत्तिः संभवति, तथापि भ्रमर्याः पलाशपुष्पत्वज्ञानादेव सा भ्रान्तिर्यत्र निवृत्ता तदभिप्रायेण तथोक्तमिति द्रष्टव्यम् । **न स्यादिति चेदि**ति । नश्येदिति चेदित्यर्थः । ननु--न तस्यैव मिथ्यात्वं सत्यत्वं च प्रसज्यते । विनाश्यविनाशकभावलक्षणबाध्यबाधकभावस्य मिथ्यात्वसत्यत्वनिरपेक्षत्वात्, तुल्यसत्ताकयोरेव पूर्वोक्तज्ञानयोर्विनाश्यविनाशकत्वलक्षणबाध्यबाधकत्वदर्शनात् । न च बाधकज्ञानविषयस्य सत्यत्वं बाध्यज्ञानविषयस्य मिथ्यात्वं चापेक्षितमिति चरमज्ञानविषयस्य मिथ्यात्वसत्यत्वे स्यातामिति वाच्यम्, तस्याद्याप्यसिद्धेरित्यस्वरसादाह-- **किंच प्रपञ्चोऽपीति । स्वयं नाशेऽपि नाशस्यावस्थान्तररूपत्वादि**ति । न च परतो नाशेऽपि नाशस्यावस्थान्तररूपत्वादिति सुवचमिति वाच्यम्, ज्ञानेन निवृत्तिस्थले मूलभूताविद्याया एव निवृत्तिरिति नावस्थान्तरापत्तिलक्षणो विनाश इत्यत्र तात्पर्यात् । अत एव यत्र मुद्गरप्रहारेण घटनाशस्तत्र स्वकारणे विलयमात्रमेव; न तु घटस्यात्यन्तनिवृत्तिः । यत्र तु शुक्तिज्ञानेन रजतनिवृत्तिः, तत्र स्वोपादानेन सह निःशेषनिवृत्तिः, न तु स्वकारणे विलय इति पराभ्युपगम इति भावः । **राजकुमारसमाधिरि**ति । समन्वयाधिकरणभाष्ये, "कश्चिद्राजकुमारः" इत्यादिना स्पष्टयिष्यते । उक्तं च परैरपि--

"राजसूनोः स्मृतिप्राप्तौ व्याधभावो निवर्तते ।
यथैवमात्मनोऽज्ञस्य तत्त्वमस्यादिवाक्यतः ॥" इति ।

**सार्वज्ञ्यादिगुणकत्वस्य प्रत्यक्षाद्यगोचरत्वादि**ति । यद्यपि पूर्वसंदर्भप्रतिपन्नस्य सार्वज्ञ्यादिगुणकस्योद्देश्यत्वं संभवति, तथापि तत्पक्षे 'असि' इति मध्यमपुरुषानुपपत्तिरिति दूषणं द्रष्टव्यम् । **अन्तर्यामिणः प्रत्यक्षागोचरत्वादि**ति । यदि चान्तर्यामी पूर्वप्राप्तः, तदोपदेशवैयर्थ्यमिति द्रष्टव्यम् । ननु "ऐतदात्म्यम्" इत्यनेन शरीरशरीरिभावस्य प्राप्तत्वेऽपि त्वंशब्दतदर्थतद्बुद्धीनां परमात्मपर्यन्तस्वरूपस्य "तत्त्वमसि" इति वाक्यप्रतिपाद्यार्थस्याप्राप्तत्वादुद्देश्योपादेयसिद्धिरित्याशङ्क्य तस्यापि प्राप्तिमुपपादयति--**अस्मिन्नेव प्रकरण** इति । इदं च त्वमादिशब्दानां परमात्मपर्यन्तत्वमिति "तत्त्वमसि" इत्यस्यार्थं इत्यभ्युपगम्योक्तमिति द्रष्टव्यम् । **उद्देश्योपादेयविभागवत्त्वभ्रान्तिरेवे**ति । ननु "अग्निर्हिमस्य भेषजम्" इत्यादौ

प्राप्यप्राप्तिनिबन्धनानुवाद्यत्वविधेयत्वाभावेऽपि निर्देशगतस्वातन्त्र्यपारतन्त्र्यरूपोद्देश्योपादेयविभागवत्त्वे न दोषः। न चानुवाद्यत्वविधेयत्वे एवोद्देश्यत्वोपादेयत्वे इति वक्तुं शक्यम् — "पौर्णमास्यां पौर्णमास्या यजेत" इत्यादावनुपादेयस्यापि कालस्य विधेयत्वदर्शनादिति भावः। केचित्तु—उद्देश्योपादेयशब्दावनुवाद्यत्वविधेयत्वपराविति वदन्ति। **प्रापकवाक्यस्थोद्देश्यवाचीति।** यद्यपि त्वंशब्दस्य "ऐतदात्म्यमिदम्" इति प्रापकवाक्यस्थविधेयवाचकैतदात्म्यशब्दवाच्यपरमात्मपर्यन्ततया विधेयत्ववाचित्वमपीति न विनिगमकमस्ति, तथाप्यसति विनिगमके द्वयोरपि प्रयोगार्हत्वात् मध्यमपुरुषः प्रयुक्त इति भावः। **तदनुरोधेन मध्यमनिर्देश इतीति।** यद्यपि—मानान्तरसिद्धत्वेऽपि त्वंशब्दार्थस्य तच्छब्दार्थप्रकृतित्वविवक्षायां प्रकृतेरेवासिक्रियाकर्तृत्वान्मध्यमपुरुषो भवति। अत एव "यदग्ने स्यामहं त्वं त्वं वा स्या अहम्" इति मन्त्रे 'अहं त्वं स्यां, त्वं वा अहं स्याः' इति प्रकृत्याश्रयःपुरुषो भवतीति "युष्मद्युपपदे" इति सूत्रे प्रतिपादितम्। ततश्च त्वदात्मक एव सर्वज्ञत्वादिगुणको जगत्कर्तेत्ययमर्थः पर्यवस्यति, विवक्षानुसारित्वाच्छब्दप्रवृत्तेः मानान्तरसदसद्भावयोरप्रयोजकत्वात्। अत एव हि "आत्मेति तूपगच्छन्ति" इत्यधिकरणे आचार्याः स्वयमेव तथा वक्ष्यन्ति—तथाप्यत्रोपायान्तरमुपन्यस्तमिति द्रष्टव्यम्। **सदायतना इत्यनेनाधाराधेयभाव उक्त** इति। "सन्मूलाः सत्प्रतिष्ठाः" इत्यत्र सच्छब्दो विशिष्टपरः। प्रजाशब्दोऽपि कार्यावस्थब्रह्मपरः, केवलस्योपादानत्वासंभवात्। "सदायतनाः" इत्यत्र तु सच्छब्दो विशेष्यस्वरूपमात्रपरः। प्रजाशब्दोऽपि न ब्रह्मपर्यन्तः, अपित्वचिद्विशिष्टजीवमात्रपरः। वैरूप्यमपि प्रामाणिकत्वादभ्युपेयम्। अथवा प्रजाशब्दः सर्वत्र विशेषणमात्रपरः। अस्मिन्नपि पक्षे उपपत्तिः प्रागेव दर्शिता। **सन्मूला इत्यादिवाक्यैकार्थ्यादिति।** "सर्वं खलु" इति वाक्ये इतिकरणेन हेतुत्वं स्पष्टम्; अन् इत्यस्य शरीरशरीरिभावार्थत्वमस्पष्टम्। "सदायतनाः" इत्यत्र शरीरशरीरिभावः स्पष्टः; हेतुत्वमस्पष्टम्। ततश्च नष्टाश्वदग्धरथन्यायेनोभयोरपि परस्पराकाङ्क्षतयार्थनिर्णायकत्वमिति भावः।

**शरीरात्मभावः फलित** इति। आत्मत्वप्रतिपादनेन शरीरत्वमपि फलितमिति भावः। **साधारण्यं स्यादिति।** ततश्चान्यतरमात्रेऽपि पर्यवस्येदिति भावः। **अयं**

**निर्देश** इति । "यस्यात्मा शरीरम्" इत्यादिनिर्देश इत्यर्थः । **अधिकरणाधिकर्तव्येति** । "य आत्मनि तिष्ठन्" इत्यधिकरणाधिकर्तव्यत्वमुक्तम्, "आत्मनोऽन्तरः" इति व्याप्यव्यापकभावः, "यमात्मा न वेद" इत्यज्ञप्राज्ञभावः, "य आत्मानमन्तरो यमयति" इति नियाम्यनियन्तृभावश्चोक्त इति भावः । **पृथिव्यन्नादीनामिति** । "ऋक्पूरब्धूः" इत्यप्रत्ययाभावः समासान्तविधेरनित्यत्वादिति द्रष्टव्यम् । अन्तर्यामिब्राह्मणेनैव चारितार्थ्यात् "यः पृथिवीमन्तरे संचरन्" इति सुबालवाक्योपादनस्य प्रयोजनमाह—**कारणावस्थमपीत्यादिना** । **जीवेन मयेति श्रवणादित्यत्राह—तदनुप्रविश्येतीति** । ननु श्रुत्यन्तरे तादृशवाक्यान्तरसद्भावेऽप्यश्रुतवेदान्तान्तरस्य श्वेतकेतोः "अनेन जीवेनात्मना" इत्यनेन वाक्येन जीवब्रह्माभेदसिद्धिः कस्मान्न स्यादिति चेत्—न; अत्रापि प्रकरणे "सन्मूलाः सोम्येमाः सर्वाः प्रजाः" इत्यनेन प्रजाशब्दार्थस्याचित्संसृष्टचेतनस्य सच्छरीरत्वादिकथनेन "सता सोम्य तदा संपन्नो भवति" इत्यादिभेदनिर्देशेन चाभेदभ्रमनिवृत्त्युपपत्तेः । **नामरूपाभ्यामितीत्थंभावे तृतीयेति** । यद्यप्येकीकृतं वस्तु नामरूपाभ्यां करणाभ्यां विभिन्नतयाऽक्रियत = अज्ञाप्यत इत्येवं व्याकरणे नामरूपयोः करणत्वमपि संभवति । कारकविभक्तित्वसंभवे उपपदविभक्तित्वं चान्याय्यम्—तथाप्युपायान्तरप्रदर्शनपरत्वाददोष इति ध्येयम् । **संज्ञासंज्ञिसंबन्धव्युत्पादक** इति । संकेतयितरि पित्रादावित्यर्थः । **गङ्गापदाग्निपदापेक्षया नामित्वाप्रसिद्धेरिति** । न च—घटपदवाच्यस्यापि कलशस्य नामित्वं नास्त्येव, घटशब्दस्य संज्ञाशब्दत्वाभावादिति वाच्यम्—अत्र नामशब्दस्य घटादिशब्दसाधारणवाचकत्वमात्रार्थकत्वेन संज्ञाशब्दपर्यायत्वाभावादिति भावः । **निष्पाद्यमानतत्तद्रूपवाचकशब्दव्युत्पादनमेवेति** । तत्तद्रूपवाचकशब्दवाच्यत्वसंपादनमेवेत्यर्थः । ननु-अस्तु नामव्याकरणं शब्दवाच्यत्वसंपादनम्; तथापि चिदचितोरेव नामवाच्यत्वसिद्धिः; न ब्रह्मणः, ब्रह्मपर्यन्तत्वे प्रमाणाभावात्; "तद्धेदं तर्ह्यव्याकृतमासीत्" इत्यत्रापीदंशब्दस्य जगद्वाचितया ब्रह्मवाचित्वाभावादित्याशङ्क्य नामवाच्यत्वस्य ब्रह्मपर्यन्तत्वमुपपादयति—**तत्र बहु स्यामित्यनेनेत्यादिना** । तत्र = नामव्याकरणस्य नामवाच्यत्वसंपादनरूपत्वे सतीत्यर्थः । **लोकतो व्युत्पत्त्यभावपरिहार** इति । लौकिकानामपूर्वे व्युत्पत्तिः कुतो नास्तीति शङ्कायाम-

पूर्वस्य लौकिकप्रमाणागोचरत्वेनेति यथा परिहारः क्रियते, तथेत्यर्थः । **वैयधिकरण्येन प्रतिज्ञातस्य उपसंहार** इति । "ऐतदात्म्यम्" इति बहुव्रीहिणा वैयधिकरण्येन, "इदं सर्वम्" इति सामान्येन च निर्दिष्टस्य शरीरात्मभावस्य, "तत्त्वमसि" इति सामानाधिकरण्येन विशेषे चोपसंहारः कृत इत्यर्थः । **न तु निगमनवाक्यानामिति** । ननु यथा 'धूमवान् सर्वोऽपि वह्निमान्' इति पर्वतसाधारण्येन धूमवत्त्वावच्छेदेन वह्निमत्त्वव्याप्त्युपदर्शनेन ज्ञातत्वेऽपि 'पर्वतो वह्निमान्' इति वाक्यस्यैतत्पर्वतत्वावच्छेदेन वह्निप्रतिपादकस्य (?) यथोद्देश्योपादेयत्वम्, एवमिह किं न स्यादिति चेत्—न; तत्रापि 'इमे पर्वता वह्निमन्तः' इति पुरोवर्तिपर्वतसाधारण्येन निश्चयस्थले उद्देश्योपादेयविभागाभावस्येष्टत्वादिति भावः ।

**भेदश्रुतिघटकश्रुत्यविरोधार्थमिति** । द्वाभ्यामपि सामानाधिकरण्यस्याविरोधार्थमित्यर्थः । **तन्त्रेणोक्तिरिति** । अचिद्ब्रह्मणोर्भेदाभेदौ स्वाभाविकौ; चिद्ब्रह्मणोस्त्वभेदः स्वाभाविकः, भेदस्त्वौपाधिकः; मुक्तावभेदवचनादिति भास्करमतम् । चिद्ब्रह्मणोरपि भेदाभेदौ स्वाभाविकौ, मुक्तौ भेदस्यापि निर्देशादिति यादवप्रकाशमतमिति विवेको द्रष्टव्यः । **स्ववाक्येन सत्यं ज्ञानमित्यादिनेति** । आदिपदेन "सदेव सोम्येदम्" इत्यादेः प्राकरणिकवाक्यस्यापि परिग्रहः । **परित्यागः फलित इत्यर्थ** इति । स्वारसिकार्थपरित्याग एवोपदेशपरित्यागः । न हि वेदस्य तदर्थत्यागादन्यस्त्यागोऽस्तीति भावः । ब्रह्मज्ञानेन जीवस्य दोषनिवृत्तेः शास्त्रसिद्धत्वान्नित्यदोषोपहितत्वं ब्रह्मणो बाधितमित्यस्वरसादाह—**यद्वा तत्तद्दोषसंबन्धार्हत्वमिति** । यथा जीवस्य दोषसंबन्धार्हत्वं स्वाभाविकम्, एवं तदभिन्नब्रह्मणोऽपि स्यादित्यर्थः । ननु—निर्दोषब्रह्मतादात्म्योपदेशविरोधो न संभवति । तन्मते ईश्वरस्यैव निर्दोषत्वम् । चिदचिदीश्वरसमुदायात्मकब्रह्मद्रव्यस्य न निर्दोषत्वम् । येन निर्दोषब्रह्मतादात्म्योपदेशविरोधः स्यादित्याशङ्क्याह -- **सद्ब्रह्मात्मादिशब्दानामिति** । **निर्दोषश्रुतिविरोधः फलित** इति । जीवस्य ब्रह्मतादात्म्ये प्रतिपाद्ये ब्रह्मणो निर्दोषत्वश्रुतिर्विरुध्येतेति पर्यवसितोऽर्थः । **हेयापहेति** । "स्रगियं यदि जीवितापहा" इतिवत् "अन्येभ्योऽपि दृश्यते" इति डप्रत्यये, "क्विप् च" इति क्विपि वा रूपम् । क्विप्पक्षे बह्वादिषु पाठसामर्थ्यात् ङीषभावे "ऋन्नेभ्यः" इति न ङीबिति धातुवृत्ता-

वुक्तमिति द्रष्टव्यम् । ततश्च "अपे क्लेशतमसोः" इति क्लेशतमसोरेवोपपदयोर्ड-प्रत्ययविधानमिति कथमिदं रूपमिति न चोदनीयम् ।

**दण्डादिव्यावृत्त्यर्थमाहेति** । "शरीरभावेन" इति पदसमभिव्याहारेण "विशेषणत्व" इति भाष्यस्यापृथक्सिद्धतया विशेषणत्वमिति लभ्यते, न विशेषण-त्वमात्रमिति भावः । **तत्र तत्र प्रयोगविपर्येष्वनुवृत्ताकारदर्शनादिति** । ननु जातिगुणद्रव्येष्वपृथक्सिद्धविशेषणत्वस्यानुगतस्य मत्वर्थप्रत्ययनिरपेक्षसामानाधिकरण्य-प्रयोजकस्य संभवेऽपि देवादिशब्दप्रवृत्तिनिमित्तस्य शरीरजीवपरमात्मसाधारणस्य प्रवाहतीरानुगतगङ्गापदप्रवृत्तिनिमित्तस्येवैकस्याभावात् तच्छब्दप्रवृत्तिनिमित्तदेवत्वादि-जात्याश्रयशरीरस्यैव मुख्यत्वम्, अतदाश्रयात्मनि तत्संबन्धाल्लक्षणैवास्त्विति चोद्यस्य कः परिहार उक्त इति चेत् — उच्यते—देवत्वादिकमेव देवादिशब्दस्य शरीरात्म-साधारणं प्रवृत्तिनिमित्तं 'स्थूलो मनुष्यो देवः' इत्याद्यबाधितप्रयोगवशात् देहस्य देवत्वाद्याश्रयत्वाभ्युपगमवत् 'देवोऽहं जानामि' इत्यबाधितप्रयोगवशात् देवत्वाश्रय-त्वस्यात्मन्यप्यभ्युपगन्तव्यत्वात् । न च देहात्मविवेककृतोऽयं प्रयोग इति वाच्यम्, 'नाहं देहः' इति देहात्मविवेकवतोऽपि 'नाहं देवो मनुष्यः' इत्यप्रतीतेः । न च—देहद्वारा देवत्वरूपप्रवृत्तिनिमित्ताश्रयत्वेऽप्यात्मनः साक्षात् प्रवृत्तिनिमित्ताश्रयत्वा-भावान्न तच्छब्दवाच्यत्वम् । अन्यथा घटद्वारा घटत्वाश्रयभूतलस्यापि घटशब्दवाच्य-त्वप्रसङ्ग इति वाच्यम्, तत्र 'भूतले घटत्वम्' इति वा 'भूतलं घटः' इति वा भूतलस्य घटत्वाश्रयत्वग्राहकस्याबाधितप्रमाणस्याभावेन तस्य घटशब्दवाच्यत्वाभावेऽपि 'देवोऽहं जानामि' इत्यबाधितप्रतीतेर्देवत्वरूपप्रवृत्तिनिमित्ताश्रयत्वस्य, तत्त्वेन तच्छब्द-वाच्यत्वस्याप्यावश्यकत्वात् । अपूर्वान्तरितस्यापि यागादेः स्वर्गसाधनत्ववत्, आस्त-रणान्तरितस्यापि पर्यङ्कादेः शयानदेवदत्ताधारत्ववत् शरीरान्तरितस्याप्यात्मनो देवत्वाद्या-श्रयत्वं न विरुध्यते । भूतलस्य तु घटाधारत्वमेव । न तु घटत्वाधारत्वम्, तथा अप्रतीतेरिति विशेषः । 'उष्णं जलम्' इत्यादौ त्वबाधितप्रतीतिव्यवहाराभावान्न नोष्णादिशब्दवाच्यत्वम् । अत एवापृथक्सिद्धविशेषणवाचिशब्दानां विशेष्यवाचित्वे दीपाद्यपृथक्सिद्धप्रभावाचिशब्दानामपि दीपादिवाचित्वप्रसङ्ग इत्यादिक्षुद्रोपद्रवाणामपि नावकाशः, दीपादेः प्रभात्वरूपप्रवृत्तिनिमित्ताश्रयत्वाभावात् ।

ननु "मनुष्यादिशरीराणाम्" इति भाष्ये तत्प्रकारत्वमपृथक्सिद्धविशेषणत्वरूपतयोच्यमानं दण्डादिष्वतिप्रसक्तमित्याशङ्कयाह—**अन्यतरान्वितमि**ति। नन्वात्मैकाश्रयत्वतदेकार्थत्वयोरन्यतरान्वितं प्रकारत्वमपृथक्सिद्धविशेषणत्वमित्ययुक्तम्, व्यर्थविशेष्यत्वात्। किंच तथा सत्यात्मैकाश्रयत्वतदेकप्रयोजनत्वान्यतरप्रयुक्तमित्येवोच्यताम्; किमित्यात्मैकाश्रयत्वं तदेकप्रयोजनत्वमिति निर्देश इत्यस्वरसादपृथक्सिद्धत्वप्रयोजकत्वयपरतया व्याचष्टे--**यद्वा प्रकारत्वशब्देनेति। उत्तरत्र प्रकारत्वविवरण** इति। न चात्मविशेषणतयैव प्रतीतेरिति भाष्यखण्डस्य प्रकारत्वप्रमाणोपन्यासपरत्वसंभवेन प्रकारत्वविवरणरूपत्वमसिद्धम्; अतः प्रकारत्वं प्रकारतैकस्वभावत्वमित्यर्थः किं न स्यादिति वाच्यम्—तथा हि सति तदेकाश्रयत्वतदेकप्रयोजनत्वतद्विशेषणत्वैः शरीरस्यापि तत्प्रकारतैकस्वभावत्वावगमादिति विशेषणत्वतत्प्रकारतैकस्वभावत्वयोरुपपद्योपपादकभावेन भेदेन निर्देशकं भाष्यं विरुध्येत। अतो विशेषणत्वं विशेषणतयैव प्रतीतत्वं विवक्षितमिति भावः। **भृत्यादिदेहेष्वि**ति। न च भृत्यदेहस्य स्वामिप्रयोजनसाधनत्वेऽपि स्वप्रयोजनादेरपि साधकतया नातिव्याप्तिः शक्यशङ्केति वाच्यम्, तथात्वे पत्नीपुत्रादिभोगसाधने शरीरेऽसंभवापत्तेरिति भावः। ननु प्रकारत्वं प्रकारतयैव प्रतीतिरिति व्याख्यातत्वात् विशेषणतया प्रतीतेः प्रकारतया प्रतीतत्वमित्युक्ते साध्याविशेष इत्याशङ्कयाह — **पञ्चमीनिर्देशस्त्वौपचारिक इति। एतत् त्रितयमि**ति। त्रित्वोक्तिः "मनुष्यादिशरीराणाम्" इत्यादिभाष्यद्वितीयव्याख्याभिप्रायेणेति द्रष्टव्यम्। **स्वरूपमि**ति। अत्र स्वशब्द आत्मीयवाचीति भावः। **प्रयोजकान्तराभावादेकसामग्रीवेद्यत्वं प्रयोजकमुच्यत** इति। एकसामग्रीवेद्यत्वमपृथक्सिद्धविशेषणत्वे प्रयोजकमिति तदभावान्नापृथक्सिद्धविशेषणत्वमित्युच्यत इत्यर्थः। एवं सत्येव "पृथग्ग्रहणयोग्यस्य" इति भाष्यावतारिकाग्रन्थैकरूप्यमुपपद्यत इति द्रष्टव्यम्। **एकसामग्रीवेद्यतास्वभावत्वव्यावृत्त्यर्थ** इति।

अत्र केचित्—"प्रकारतैकस्वरूपत्वं दुर्घटम्" इत्यत्रैकशब्दस्येवेहापि कदाचिदप्रकारत्वव्युदासकत्वस्यैव युक्तत्वात् तस्यैवेह कथनाच्च तदेव युक्तम्। न त्वेकसामग्रीवेद्यत्वस्वभावत्वव्यावृत्त्यर्थत्वम्, तदेकाश्रयत्वादीनामपृथक्सिद्धविशेषणत्वावगमकत्ववदेकसामग्रीवेद्यत्वाभावावगमकत्वाभावात्। अत एव "यदि तदेकाश्रयत्वादिरेवा-

पृथक्सिद्धविशेषणत्वे प्रयोजकः'' इत्युत्तरग्रन्थावतारिकापि न युक्ता, एकसामग्रीवेद्यत्वाभावस्योक्तरीत्या प्रागसमर्थितत्वेनैकाश्रयत्वादिरेवेत्यनुवादासंभवात्। ''कथं तर्हि सहोपलम्भनियमः'' इत्यप्ययुक्तम्। तस्य ह्ययमभिप्रायः — एकसामग्रीवेद्यत्वस्यापृथक्सिद्धविशेषणत्वाप्रयोजकत्वे अपृथक्सिद्धविशेषणेषु जातिव्यक्त्यादिष्वेकसामग्रीवेद्यत्वानवश्यम्भावेन तन्निबन्धनः सहोपलम्भनियमोऽपि न स्यादिति। एवमाक्षिपन्तं प्रति 'सहोपलम्भनियमस्त्वेकसामग्रीवेद्यत्वनिबन्धनः' इति परिहारस्यायुक्तत्वात्। तदभ्युपगमेनैवाक्षेपस्य प्रवृत्तत्वात्। जात्यादौ सहोपलम्भनियम इत्यध्याहारस्यापि क्लिष्टत्वाच्च। किंच ''पृथग्ग्रहणयोग्यस्य प्रकारतैकस्वरूपत्वं दुर्घटम्'' इति भाष्यस्य सहोपलम्भनियमशून्यस्य तत्प्रकारतैकस्वरूपत्वं दुर्घटमित्यर्थस्यैव स्वरसतः प्रतीतेः स एवार्थ उचितः। किं प्रकारतैकस्वरूपत्वे प्रमाणाभावात् तन्नास्तीत्यभिप्रायः ? उत प्रकारत्वस्य स्वभावत्वे यद्वस्तु यत्स्वभावविशिष्टं तद्वस्तु गृह्यमाणं तत्स्वभावयुक्तमेव गृह्यत इत्यपृथक्सिद्धत्वस्वभावत्वे तद्विशिष्टमेव गृह्येतेत्यभिप्राय इति विकल्प्य प्रथमं दूषयति—भाष्ये **जात्यादिवदिति**। द्वितीयं दूषयति—भाष्ये **सहोपलम्भनियमस्त्विति**। **सहोपलम्भनियमः** = सहैव प्रकारतयोपलम्भनियम इत्यर्थः, ''सहैवप्रकारतया प्रतिपादयति'' इत्युत्तरभाष्यानुगुण्यात्। वस्तुग्राहकं प्रमाणं तत्तत्स्वभावविशिष्टमेव गृह्णातीति नियमाभ्युपगमे बाधकं दर्शयति—**यथा चक्षुषेति**। पृथिव्याः स्वाभाविकगन्धरसादिसंबन्धित्वस्याग्रहवत् शरीरगतात्मप्रकारत्वस्वभावत्वस्याप्यग्रहणोपपत्तौ प्रमाणान्तरसिद्धप्रकारतैकस्वभावत्वस्यापह्नवानर्हत्वादिति भाव इति वदन्ति।

**प्रथमविकल्पे द्वितीयशिरसीति**। अनुयायित्वादेकसामग्रीवेद्यत्वमपि प्रयोजकमिति द्वितीयकल्प इत्यर्थः। **अनुगतप्रयोजकसद्भावादिति**। तदेकाश्रयत्वादिरूपानुगत प्रयोजकसद्भावादित्यर्थः। **द्वितीयशिरसि गन्धादाविति**। यद्यपि शरीरादिषु भिन्नसामग्रीवेद्येष्वपृथक्सिद्धविशेषणत्वस्य समर्थितत्वेनापृथक्सिद्धसामान्ये प्रयोजकत्वशङ्काया अनुत्थानात् जात्यादिगतापृथक्सिद्धत्वविशेषे एकसामग्रीवेद्यत्वस्य प्रयोजकत्वेऽपि तस्याप्रत्याख्येयत्वाच्च तत्प्रत्याख्यानं प्रकृतानुपयुक्तम्, तथापि पराभिमानखण्डनार्थमुक्तमिति द्रष्टव्यम्। **एकशब्द एकसामग्रीवेद्यत्वव्युदासपरः। एवकारः सहोपलम्भनियमव्युदासार्थ** इति। अत्र केचित् — एकशब्दोऽप्रकारत्वावस्था-

व्युदासपरः, एवकारः सहोपलम्भनियमैकसामग्रीवेद्यत्वव्युदासपर इत्येव युक्तमिति वदन्ति ।

भाष्ये—**पदार्थविवेकप्रदर्शनायेति** । देवादिशब्दैर्हि शरीरात्मानौ न विविच्य ज्ञापयितुं शक्यौ । शरीरादिशब्दैस्तु विविच्य ज्ञापयितुं शक्याविति भावः । **वैवक्षिकनिष्कर्षका** इति । विवक्षायां सत्यां निष्कर्षका इत्यर्थः । विवक्षायां भव इति अध्यात्मादित्वात् ठञ् । **जातिवाचिशब्दवदपृथक्सिद्धविशेषणवाचित्वाविशेषादिति** । ननु—नीलादिशब्दानां गवादिशब्दसाम्ये गवादिशब्दानां जातिमात्रे प्रयोगाभाववत् नीलादिशब्दानां गुणमात्रे प्रयोगो न स्यात् । प्रयुज्यते च 'पटस्य शुक्लः' इतीति चेत्, मैवम्—गोशब्दप्रवृत्तिनिमित्तस्य गोत्वानाश्रयत्वेन गोत्वस्य गोपदप्रयोगाविषयत्वेऽपि नीलपदप्रवृत्तिनिमित्तनीलत्वाश्रयत्वेन नीलरूपस्य तच्छब्दवाच्यत्वोपपत्तेः । **त्रिलिङ्गतया शब्दसाधुत्वायेति** । प्रत्ययान्तत्वे तु 'दण्डवान्, दण्डवती, दण्डवत्' इतिवत् शुक्लादिशब्दानां त्रिलिङ्गत्वं सिध्यति । उक्तं च भगवता कात्यायनेन—"गुणवचनेभ्यो मतुपो लुग् वक्तव्यः, तथा च लिङ्गवचनसिद्धिः । स्वरविशेषाय च भवति" इति । नीलादिशब्देषु अर्शआद्यजन्तत्वाश्रयणे स्वरभेदोऽपि सिद्धो भवतीत्यर्थः । **लिङ्गस्वरार्थं मतुब्लोपस्मरणमिति** । मतुब्लोपादिस्मरणमित्यर्थः । अतो मतुब्लोपस्य स्मरणा (स्वरा) र्थत्वोक्तिरयुक्तेति चोद्यं निरस्तम् । **अत एव हि रागशब्दस्येति** । "गुणवचनेभ्यो मतुपो लुक्" इत्यत्र गुणद्वारा गुणिवचनेभ्य एव मतुब्लोपस्मरणात् रागशब्दस्य अतथात्वान्न मतुब्लोप इत्यर्थः । वस्तुतस्तु मतुब्लोपस्य वा अर्शआद्यजन्तत्वस्य वा अभेदोपचारस्य वा लक्षणाया वा आश्रयणे नीलादिशब्दानां गुणिवाचित्वभङ्गप्रसङ्गात् मतुब्लोपादिकं सिद्धान्तेऽनभिमतमेव । "लिङ्गमशिष्यं लोकाश्रयत्वात्" इति त्रिलिङ्गता चोपपद्यत इति द्रष्टव्यम् । **पृथिव्याद्यपेक्षयैव गन्धादिशब्दानां नियतनिष्कर्षकत्वमिति** । यद्यपि 'गन्धः पृथिवी', 'जलं रसः' इत्यादिप्रयोगेषु गन्धरसादिशब्दानां पृथिवीजलादिपर्यन्तत्वं दृष्टम्, तत्र च तेषामौपचारिकत्वाश्रयणे "रसोऽहमप्सु" इत्यादीनां परमात्मन्यौपचारिकत्वं सुवचम्, रसाभेदोपचारस्यैव युक्तत्वात् । "रसोहमप्सु" इत्यादौ रसशब्दस्य रसवत्परत्वे 'अप्सु रसवान्' इत्यस्यायुक्तत्वाच्च — तथापि

बहूनां रसगन्धादिशब्दानां परमात्मनि प्रयुक्तानां मुख्यत्वे संभवति औपचारिकत्वाश्रयणमयुक्तमिति भावः ।

'व्यक्तीनामानन्त्येनानन्तासु व्यक्तिषु शक्तिग्रहासंभवात् व्यभिचाराच्च व्यक्तीनामशब्दार्थत्वम्, नियमलक्षणत्वात् संबन्धस्य; अनियमे सति तदयोगात् । व्यक्तौ शक्त्यभ्युपगमे शक्तीनामप्यानन्त्यप्रसङ्गाच्च जातिरेव शब्दार्थः । व्यक्तिलाभस्तु लक्षणया आक्षेपाद्वा भविष्यती'ति भाट्टोक्तरीत्या वा, 'जातेः परतन्त्रत्वलक्षणस्वभावविशिष्टतयैव भाने तद्रूपस्य व्यक्तिघटितमूर्तित्वेन व्यक्तिमनादाय स्वभावविशिष्टजातिबोधनासंभवात् जातिभानसामग्र्येव व्यक्तिमादाय जातिं बोधयति । यद्धि येन विना न भासते, तद्बोधकस्य तद्बोधकत्वनियमात् । न च जातिव्यक्त्योर्द्वयोरपि प्रत्याय्यत्वे व्यक्तावपि शक्तिः किं न स्यादिति वाच्यम्, जातिव्यक्तिविषयकज्ञानस्य शब्दजन्यत्वेऽविशिष्टेऽपि जात्यंश एव शक्तिः कल्प्यते, अनन्यलभ्यस्यैव शक्यत्वात् । व्यक्त्यंशस्य नान्तरीयकतयापि लाभसंभवात् । अतो नाक्षेपाल्लक्षणया वा व्यक्तिप्रतीतिरभ्युपेये'ति प्राभाकरोक्तरीत्या वा व्यक्त्युपस्थितिसंभवेन न व्यक्तौ शक्तिः कल्पनीयेत्येतदाशङ्क्य परिहरति—**यद्यपि शरीरवाचिशब्दा** इत्यादिना प्रघट्टकेन। **अयुतसिद्धविशेषणवाचिशब्दत्वस्य विशेष्यलक्षणाप्रतिबन्धकत्वादिति** । नीलत्वादिप्रवृत्तिनिमित्ताश्रयस्य तच्छब्दलक्ष्यत्वासंभवादित्यर्थः । ननु—जातिवाचित्वमते गवादिशब्दानां गोत्वं न प्रवृत्तिनिमित्तम् । अपितु तदेव शब्दार्थः । तथा चाधेयवाचिना शब्देनाधारलक्षणायां काऽनुपपत्तिरिति चेत्—न । स्वार्थादन्येन रूपेण तीरत्वादिनोपस्थित एव तीरादौ गङ्गादिपदस्य लक्षणा दृष्टा । न चात्र व्यक्तिः स्वार्थभूतजातिं विना रूपान्तरेणोपस्थिता । किंच 'गां पश्य, गौस्तिष्ठति' इत्यादौ सत्यपि जातेरन्वययोग्यत्वे तदनुपपत्त्यनुसन्धानं विनैव जातिविशिष्टव्यक्तिप्रतीतेर्न तत्र लक्षणा । प्रत्युत "गौर्नित्या, गौर्जातिः" इत्यादावन्वयानुपपत्त्यैव जातिधीरिति जातावेव लक्षणा युक्ता । किंच शक्तिग्राहकानयनादिव्यवहारयोग्यव्यक्तिपरित्यागेन तदयोग्यजातिशब्दार्थस्वीकारोऽसंगतः । तथा 'गौरनित्या, गौः शुक्ला, गौः सास्नादिमती, गां बधान, गौर्गच्छति, गामानय' इत्यादिप्रयोगप्रतीतिप्राचुर्यविषयव्यक्तिशक्तिपरित्यागश्चासंगतः । गवादि-

शब्दानां जातिमात्रविषयप्रयोगे त्वतलादिवैयर्थ्यं च स्यादित्यादिवक्ष्यमाणदूषणे तात्पर्यात्। **जात्यादिशब्दानामपि संबन्धानुपपत्त्यविशेषेणे**ति। न च जाति-रित्यादिशब्दानामपि संबन्धानुपपत्तिप्रतिसंधानदशायां लक्षणैवेष्टेति वाच्यम्, जात्यादि-शब्देषु लक्षणायाः क्वाप्यदृष्टचरत्वादिति भावः। नन्विदं सिद्धान्तेऽपि समानम्। जात्यादिशब्दानामप्यपृथक्सिद्धविशेषणवाचिशब्दत्वात् व्यक्तिवाचित्वं किं न स्यात्? निष्कर्षकशब्दत्वादिना वैलक्षण्यं तु तस्यापि सुवचम्, तथापि पूर्वोक्तदूषणे तात्पर्यात्।

प्राभाकरमतं दूषयति — **आकृतिरेव शब्दशक्तिविषय इति। पारतन्त्र्या-बोधनं विवक्षित**मिति। ननु जातिशब्देन जातेर्द्रव्यप्रकारतैकस्वभावत्वलक्षणपार-तन्त्र्यबोधनस्य विवक्षितत्वे व्यक्त्यभिधानस्य सिद्धत्वात् विशेषणान्तरान्वयानर्हत्वलक्षणस्य वा कारकभावानर्हत्वलक्षणस्य वा पारतन्त्र्यस्याभिधानं व्यर्थम्, व्यक्तिप्रतीत्यप्रतीत्यो-र्द्रव्यप्रकारतैकस्वभावत्वलक्षणपारतन्त्र्याभिधानानभिधानयोरेव प्रयोजकत्वादिति चेत्, सत्यम् — कस्यचिन्मन्दस्येदृशशङ्कासंभवादिति द्रष्टव्यम्। **किंतु विशेषणान्तरा-न्वये**ति। ननु 'जातिं पश्य व्यापिकाम्' इत्यत्र जातिशब्दोपात्ताया जातेर्व्यापकत्व-रूपविशेषणान्तरान्वयवत्, दृशिक्रियायां कर्मकारकत्वेन चान्वयवत् 'गौः शुक्ला तिष्ठति' इत्यादौ गोशब्दप्रतिपन्नाया जातेर्विशेषणान्तरान्वयो वा क्रियायां कारकत्वेनान्वयो वा यद्यपि न दृष्टचरः, तथापि तादृशपारतन्त्र्यं न शब्देनाभिधीयते। विशेषणान्तरा-न्वयानर्हत्वस्य वा कारकभावानर्हत्वस्य वा गवादिशब्देनाप्रतीतेः। न हि गौरित्युक्ते गोत्वं कारकभावानर्हमित्यपि शब्देन प्रतीयत इति चेत्, सत्यम् — कारकभावाद्य-नर्हत्वप्रयोजकः पारतन्त्र्यविशेषो गवादिशब्दात् प्रतीयत इत्यत्र तात्पर्यात्। **मुख्यार्थगुणसंबन्धी**ति। मुख्यार्थतद्गतगुणेति द्वन्द्वः। मुख्यार्थसंबन्धी लक्ष्यः तद्गतगुणसंबन्धी गौणः। **प्रचुरप्रयोगाभावात् प्रचुरप्रयोगाभाव इति परिहारो न घटत** इति। न च — 'गवादिशब्दानां व्यक्तौ निरूढलक्षणायोगात् जातौ प्रचुरप्रयोगाभाव' इत्यस्य व्यक्तौ प्रचुरप्रयोगात् जातौ प्रचुरप्रयोगाभाव इति ह्यर्थः, न तु प्रचुरप्रयोगाभावात् प्रचुरप्रयोगाभाव इति। ततश्चायमनुक्तोपालम्भ इति वाच्यम् - व्यक्तौ प्रचुरप्रयोगादित्यस्य जातौ प्रचुरप्रयोगाभावादित्यर्थपर्यवसितत्वेनानुक्तोपालम्भा-भावात्। **भावप्रत्ययानपेक्षत्वदर्शना**दिति। क्वचित् भावप्रत्ययानपेक्षत्वस्यापि

दर्शनादित्यर्थः । ततश्च "पटस्य शौक्ल्यम्" इत्यादौ क्वचित् भावप्रत्ययसापेक्षत्वदर्शनं न दोषायेति ज्ञेयम् । जातिस्थले तु न क्वचित् भावप्रत्ययानपेक्षत्वं दृश्यते; 'खण्डस्य गौः, मुण्डस्य गौः' इत्यादिप्रयोगस्य जातिविषयस्य क्वाप्यदर्शनादिति भावः । निरूढलक्षणाभ्युपगममुपपादयति—**शुक्लादिशब्दानां हीत्यादिना। निरूढिर्नाम सर्वप्रयोगानुगतिरिति चेदिति** । सर्वप्रयोगानुगता लक्षणा निरूढलक्षणेत्युच्यते, न तु प्रचुरप्रयोगानुगतिरिति चेदित्यर्थः । **अनुवृत्तो गोव्यवहार इति** । इदं त्वापाततः, भावप्रत्ययानपेक्षप्रयोगस्यात्रैव दृष्टत्वे, 'भावप्रत्ययानपेक्षत्वं च दुष्परिहर' मिति पूर्वग्रन्थविरोधापत्तेरिति द्रष्टव्यम् । **भवतां गौरवं स्यादिति** । जातिव्यक्त्योः शब्दार्थत्ववादिनामित्यर्थः । **प्रतिसंबन्धिभूतं द्रव्यमुपसर्जनतया प्रतीयेतेति** । जातिः व्यक्त्याश्रया भवितुमर्हति जातित्वादिति आक्षिप्ता व्यक्तिरुपसर्जनतया भायात्, पर्वतो वह्निमानित्यत्र वह्निवत् । **पुत्रः पितेतिवदिति** । पुत्रशब्दाक्षिप्तपितृवाचिना पितृशब्देन पुत्रशब्दस्य सामानाधिकरण्याभाववत् जातिव्यक्तिवाचिनोः 'गौः खण्डः' इत्याक्षेपकाक्षेप्यवाचिशब्दयोः सामानाधिकरण्यं न संभवतीत्यर्थः । **विवक्षितेति** । तात्पर्यविषयेत्यर्थः । विशेष्यत्वेनेत्येतद्व्याचष्टे— **प्रधानतयेति । तदवच्छेदार्थत्वात्तस्येति** । पुत्रव्यावृत्त्यर्थत्वात् पितुरित्यर्थः । यद्वा प्रधानतया तदवच्छेदार्थत्वादित्यन्वयः । प्रधानत्वेन तस्यावच्छेदः संबन्धः, तदर्थत्वात् । प्रधानीकरणार्थत्वादिति यावत् । विवक्षितार्थप्रतिसंबन्धितयेत्यत्र विवक्षितपदव्यावृत्त्यर्थ (व्यावर्त्य) माह—**गङ्गायां घोष इत्यत्रेति** । वस्तुतो गङ्गासंबन्ध्येव तीरं तीरत्वेनैव भासते; न तु गङ्गासंबन्धित्वेन; तथात्वे शक्त्या प्रवाहस्य लक्षणया तीरस्य च प्रतीतौ वृत्तिद्वयविरोधप्रसङ्गात् । अतः प्रवाहस्याविवक्षितत्वम् । जातेस्तु शब्दप्रतीतौ विषयत्वमस्तीति भावः । इदमुपलक्षणम्—कूलस्य लक्षणया वृत्त्योपस्थापितत्वात् प्राधान्येन भानं भवति; आक्षिप्ताया व्यक्तेः शब्दवृत्त्याऽनुपस्थितायाः प्राधान्येन भानं न संभवतीत्यत्र तात्पर्यात् । अयमिह प्रयोगक्रमोऽभिप्रेतः— यदि गोव्यक्तिः पदतात्पर्यविषयसंबन्धितया भासमानत्वे सति गोपदवाच्या न भवेत्, तर्हि गोपदजन्यप्रतीतिविशेष्या न भवेदिति । **शब्दविशेषणोपश्लिष्टेति**; शब्दादुपस्थितस्य शब्दादुपस्थितं प्रत्येव विशेषणत्वं, नाक्षिप्तं प्रतीत्यर्थः ।

**प्रकार्यैक्यं कार्यकारणैक्यं** चेति । उभयोरपि तत्त्वंपदार्थयोश्चिद्चित्प्रकारत्वं तयोरैक्यं चेत्यर्थः । **वाक्यभेदः शङ्कनीय** इति । यद्यपि तत्त्वमसीत्यस्यानुवादरूपत्वसमर्थनान्न वाक्यभेदप्रसङ्गः, तथाप्यभ्युपेत्योक्तमिति द्रष्टव्यम् ।

( परमते सामानाधिकरण्यानुपपत्तिसंकलनम् )

**विशेषणत्वाभ्युपगमे मुख्य** इति । पदान्तरवैयर्थ्यपरिहाराय सत्यादिपदलक्षितानां व्यावृत्तीनां विशेषणत्वाभ्युपगमे मुख्यानां सत्यत्वादीनामेव विशेषणत्वमस्तु, अविशेषादित्यर्थः । **यथाहमिच्छामी**ति । यद्यप्यहंशब्दस्यान्तःकरणोपहितेच्छादिवाचित्वाभावे 'अहमिच्छामि' इत्यादिप्रत्ययानुपपत्तिर्न परैः प्रमाणत्वेनोपन्यस्ता, अहंशब्दस्यान्तःकरणोपहितघटादिपरत्वाभाववत् तदुपहितेच्छावाचित्वाभावस्यापि प्रमाणाभावेनैव सिद्धेः — अथापि 'अहमिच्छामि' इतीच्छाया विशेषणतानुपपत्तिरपि प्रमाणीकर्तुं शक्येत्यभिप्रेत्यैवं व्यवहृतमिति द्रष्टव्यम् । **न हि ज्ञप्तिरेव ज्ञप्त्या विशेष्यत** इति । अहमर्थस्यैव ज्ञप्तित्वे 'अहं जानामि' इति प्रतिपन्नं ज्ञप्त्याश्रयत्वमहमर्थस्य न स्यादिति भावः । **यदर्थविवक्षये**ति । भ्रान्तिदशायामधिष्ठानत्वबुद्धेरेवाभावात् तदर्थविवक्षया न प्रयोगः ; प्रबोधदशायामधिष्ठानत्वधीसंभवेऽपि तद्विवक्षया न प्रयोग इति भावः । **यज्ञदत्तवाचित्वे मूलं भवती**ति । न चैवं वदतस्तदपीष्टमेवेति वाच्यम्, तथा सति वाच्यावाच्यव्यवस्थाभङ्गप्रसङ्गादिति भावः । **सर्पशब्दस्य प्रागनारोपिने**ति । प्रबोधदशाभाविनो 'रज्जुः सर्पः' इति प्रयोगस्यायमर्थः — एतावन्तं कालं सर्पपारमार्थ्यबुद्ध्या रज्जुः सर्पपदप्रयोगविषयोऽभूदिति । **आरोपितविषये**ति । आरोपितविषयोऽधिष्ठानमित्यर्थः । **द्वितीये जीवब्रह्मणोरैक्यमि**ति । त्वंशब्देन जीवभावाधिष्ठानस्वरूपमात्रस्य विवक्षितत्वेन जीवब्रह्मणोरविवक्षितत्वादिति भावः । **तदविवक्षितविशेषणे**ति । अविवक्षितविशेषणं जीवभावः । त्वंशब्दमुख्यार्थीभूतजीवसंबन्धिचिन्मात्रैक्यबोधनमात्रेण मुख्यार्थीभूतजीवब्रह्मैक्यं मुख्यार्थीभूतजीवसंबन्धिकर्तृत्वादिबन्धमिथ्यात्वं च तद्धर्माधिष्ठानमात्रपारमार्थ्यं च सिध्यति चेत्, जनपदलक्ष्यार्थीभूतजनप्रहृष्टैक्यबोधेऽपि जनपदशब्दमुख्यार्थैक्यं मुख्यार्थीभूतजनपदत्वादिधर्ममिथ्यात्वं तद्धर्माधिष्ठानमात्रपारमार्थ्यं च सिध्येदित्याह — **न हि प्रहृष्टो जनपद इति । तस्य तत्ताविधान** इति । तच्छब्दार्थ-

त्वविधान इत्यर्थः । **ज्ञप्तिवैयधिकरण्येने**ति, 'त्वं जानासि' इति त्वंशब्दज्ञाधात्वो-र्वैयधिकरण्येनेत्यर्थः । वाच्यैकदेशलक्षणासत्त्वेऽपि मुख्यार्थयोरभेदासिद्धौ तन्मूलतया मुख्यार्थधर्माणां मिथ्यात्वासिद्धौ च दृष्टान्तमाह—**न हि दूरस्थस्ये**ति । "पर्वतो ज्वलितः" इत्यत्र पर्वतशब्दो वाच्यान्तर्गतपर्वताग्रदेशलक्षकः, ज्वलितशब्दस्तदा-धारलक्षकः । ततश्च लक्षितयोरैक्यं स्यात् । न तु मुख्यार्थयोः पर्वताग्न्योः, न वा पर्वतधर्माणां सानुवृक्षादीनां ज्वलितशब्दमुख्यार्थवह्निधर्माणां वह्नित्वदग्धृत्वादीनाम-पारमार्थ्यं सिद्ध्यति । एवमिह तत्त्वंपदमुख्यार्थयोरैक्यं न सिध्येत्, न वा तद्धर्माणां किंचिज्ज्ञत्वसर्वज्ञत्वादीनां मिथ्यात्वं सिद्ध्येदिति भावः । यद्यपि मुख्यार्थयोरैक्यं बोध्यत इति न परमतम्, तथापि जीवब्रह्मैक्यं बोध्यत इति तन्मतप्रसिद्धिमवलम्ब्योक्तमिति द्रष्टव्यम् । **ईश्वर एव हि ब्रह्मे**ति । यादवमते चिदचिदीश्वरातिरिक्तमंशि ब्रह्मास्तीति । भास्करमते तु चिदचिदीश्वरातिरिक्तमंशिभूतं ब्रह्मद्रव्यं नास्तीति विवेको द्रष्टव्यः । **केनाप्याकारेणैक्य** इति । घटपटयोर्द्रव्यत्वादिनैक्येऽपि घटपट-पदप्रवृत्तिनिमित्तसद्भावासद्भावलक्षणभेदे प्रतीयमाने ऐक्यस्य विभक्तिबोध्यत्वादर्शना-दित्यर्थः । **कार्यकारणरूपेणे**ति । घटशरावादिकार्यात्मना भेदः, कारणमृदात्मना त्वभेद इत्यर्थः । **भिन्नत्ववदभिन्नत्व** इति । भेदाभेदाभ्युपगमेऽपीत्यर्थः । **पटस्यांशभेद** इति । प्रयुक्तानामिति शेषः । **पटशब्दाभिहितविशेष्यस्यांशतोऽप्यनतिरेकादि**ति । ननु "व्यक्तं विष्णुस्तथाऽव्यक्तं पुरुषः काल एव च" इति व्यक्ताव्यक्तपुरुषकालादिशब्दैर्भोक्तृभोग्यनियन्त्रंशेषूपस्थितेषु ब्रह्मशब्दस्य तदनति-रिक्तार्थवृत्तित्वसंभवात् सामानाधिकरण्यं संभवतीति चेत्—न; "व्यक्तं विष्णुस्तथाऽव्यक्तम्" इति प्रत्येकं विष्णुत्वोपदेशात् । ननु छिद्रेष्वाकाशत्ववत् भूशैलादिषु पृथिवीत्ववत् ब्रह्मत्वस्यापि प्रत्येकं पर्याप्त(वसित)त्वात् "ज्योतींषि विष्णुः" इत्यादौ सामानाधिकरण्यमुपपद्यत इति नानुपपत्तिरिति चेन्—न ; ब्रह्मत्वस्य साधारण्य-संभवेऽपि "व्यक्तं विष्णुः" इत्यादौ विष्णुशब्दनिर्दिष्टस्येश्वरत्वस्य चिदचिदंशयोर-भावेन "व्यक्तं विष्णुस्तथाव्यक्तम्" इति विष्णुसामामानाधिकरण्यासंभवात् । 'घटो मृत्, शरावो मृत्' इति निर्देशसंभवेऽपि 'घटः शरावः' इति निर्देशासंभवादिति दूषणे तात्पर्यात् । किं हस्तादीतिशब्देन हस्तपादादीन्द्रियं विवक्ष्यते, उत तदधिष्ठानगोलकमिति विकल्प्य, आद्यं दूषयति—**छेदनादावपी**ति । इदमुपलक्षणम्—

शरीरनाशेऽप्याकल्पस्थायिनामिन्द्रियाणामविनाशान्नापृथक्सिद्धविशेषणत्वमिति द्रष्टव्यम्। द्वितीयं दूषयति — **तत्तद्धोऽक्तस्येति** । **स्वाभाविकभेदाभेदपक्षेऽपीत्यादेः सामानाधिकरण्यं हीत्यन्तस्य** सामानाधिकरण्यस्यैक्यावगमकत्वेन तद्विशेषणान्वित-वस्त्वैक्यावगमकत्वेऽपि वस्त्वन्तरैक्यावगमकत्वाभावात्; तथात्वे बाधितार्थत्वप्रसङ्गाच्चेति भावः। **विवक्षितैकत्वासिद्धेरिति** । सदन्तरैक्यस्य विवक्षितत्वे तस्यासिद्धेः; सद्-द्रव्यमात्राभेदस्य च प्रत्यक्षसिद्धत्वेनोपदेशवैयर्थ्यमित्यर्थः। **यद्यंशविशेषासाधारणाकार** इति। ईश्वरत्वमित्यर्थः। **तदितरांशवाचिपदसामानाधिकरण्य** इति। 'घटः शरावः' इतिवदिति भावः। **असाधारणाकारान्तरस्येति**। ब्रह्मण-त्वादेरित्यर्थः।

( सिद्धान्त संग्रहोपन्यासः )

**पा रक्षण इति धातोरिति**। "पातेर्डतिः" इति डतिप्रत्ययान्तत्वेनेत्यर्थः। **पतिशब्दप्रयोगाच्चेति**। 'गृहपतिः' इति प्रयोगादित्यर्थः। **शेषिणि पतिशब्दो रूढ** इति। अत एव "अन्तर्वत्पतिवतोर्नुक्" इत्यत्र भर्त्रर्थ एव नुगित्युक्त्वा स्वाम्यर्थत्वे 'त्वया पतिमती पृथ्वी' इति शेष्यर्थत्वं सिद्धवत्कृत्यैव प्रत्युदाहृतं महाभाष्ये। "पत्युर्नो यज्ञसंयोगे" इत्यत्रापि भगवता पतञ्जलिना "पतिशब्दोऽय-मैश्वर्यवाची" इत्युक्तम्। पाणिनिनापि—"पत्यावैश्वर्ये" इत्यत्र ऐश्वर्यार्थत्वमा-विष्कृतम्। जैमिनिनापि, "मेधपतित्वं स्वामिदेवतस्य समवायात्" (९-३-३२) इति स्वामिवचनत्वं सिद्धवत्कृत्यैव ऊहानूहचिन्ता नवमे कृता। अतो न स्वामिवचनत्वे विप्रतिपत्तिः। अत एव "विश्वस्य पतिम्" इति विश्वेश्वरत्वे कथिते स्वस्यापी-श्वरान्तरशङ्काव्यावृत्त्यर्थम् "आत्मेश्वरम्" इति शेष्यन्तरनिषेध उपपद्यते। "धवः प्रियः पतिर्भर्ता" इति भर्तृवाच्यपि पतिशब्दोऽन्यः। "मेधपतिभ्यां मेधम्" इत्यत्र देवतायामपि प्रयोगात्, "मेधपतित्वं स्वामिदेवतस्य समवायात्" इति जैमिनिना स्वामिवाचित्वदेवतावाचित्वयोः प्रदर्शितत्वाच्च तत्रापि कामं शक्तिरस्तु वा मा वा; स्वामीश्वरापरपर्यायशेष्यर्थत्वे न विमतिः शक्या कर्तुमिति द्रष्टव्यम्। "इभ्य आढ्यो धनी स्वामी नायकः पतिरीशिता" इति च निघण्टुः। **द्वितीयाश्रुत्या प्रोक्षणादेरिति**। द्वितीयाश्रुतिप्रतिपादितसाध्यभावानां व्रीहीणां श्रुतिबलात् समीहित-साध्यापेक्षिण्या भावनयाऽन्वयबलात् समीहितसाध्यत्वलक्षणशेषित्वस्य सिद्धिवत् श्रुति-

प्रतिपन्नशरीरभावस्य जगतः शरीरत्वाक्षिप्तः शेषशेषिभावः, पत्यादिशब्दाभावेऽपि सिध्यतीत्यर्थः । **संघातपरार्थत्वादिति ।**

" संघातपरार्थत्वात् त्रिगुणादिविपर्ययादधिष्ठानात् ।
पुरुषोऽस्ति भोक्तृभावात् कैवल्यार्थप्रवृत्तेश्च ॥ "

इति सांख्यश्लोकः । संघातस्य सर्वस्यापि शयनासनादिवत् पारार्थ्यावश्यंभावात् देहस्यापि संघातरूपतया पारार्थ्यं सिद्धमित्यर्थः । " अजोऽन्यः " इति श्रुत्यंशेन प्रकृतिं जहति मुक्तेऽन्यत्वप्रतिपादनमभिप्रयन्नाह—**मुक्तौ भेदमाह अजामितीति । प्रधानप्रसङ्गोपेतत्वसाम्यादिति ।** यद्यपि " पृथगात्मानम् " इति पूर्ववाक्ये प्रधानप्रसङ्गोपेतत्वं नास्ति, तथाप्युपरितनवाक्यस्य प्रधानप्रसङ्गोपेतत्वात् तेन संगतिरस्तीति भावः । **ममेत्यनेनेति ।** षष्ठ्या व्यतिरेकनिर्देशेनेति भावः । **स्वभावासंकर इति ।** अध्यक्षत्वादिस्वभावासंकर इत्यर्थः ।

लयप्रकरणात् तमसोऽपि लय एवोच्यते ; ततश्च ब्रह्मपरिणामवाद एवाभ्युपगतः स्यादिति शङ्कां वारयति—**तमस एकीभावमात्रमिति । कार्यानुपयुक्ततमः शरीरक इति ।** अक्षराव्यक्तमहदादिरूपेण परिणतस्तमोंऽशोऽपरिणततमोंशश्चैक्यं प्राप्तावित्यर्थः । **इदमपि शरीरलक्षणमिति ।** "यस्य चेतनस्य यत् द्रव्यम्" इत्याद्युक्तलक्षणत्रयवत् अन्तःप्रविश्य नियाम्यत्वमपि भाष्यकाराभिमतं शरीरलक्षणमित्यर्थः ।

**अनुप्रवेशश्रवणाभावेऽपीति ।** "तन्नामरूपाभ्यां व्याक्रियत" इत्यत्रेति शेषः । सामान्यशब्दस्य विशेषपदोपस्थापिते पर्यवसानं हि सामान्यविशेषन्यायः । अनुप्रवेशपूर्वकत्वस्य तु नामरूपव्याकरणस्वरूपानन्तर्गतत्वेन विशेषपदप्रतिपाद्यत्वाभावात् नायं सामान्यविशेषन्यायविषयो भवितुमर्हतीत्यपरितोषादाह—**यद्वा सर्वशाखेति ।**

**यथा ग्राहकग्रहणेनेति ।** ग्राहकं साधिकारापूर्वम् ; फलवत् परमापूर्वमित्यर्थः । " दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत " इति वाक्यप्रतिपन्नमपूर्वं परमापूर्वम् । तत्संनिधिसमाम्नातानां " समिधो यजति, " " व्रीहीनवहन्ति " इत्यादि-

वाक्यानां कार्यान्विताभिधायित्वस्वभावानां परमापूर्वलक्षणकार्यान्वितप्रयाजावघातादि-लक्षणस्वार्थाभिधानमेव ग्राहकग्रहणम्। एवंरूपेण ग्राहकग्रहणेन सर्वेष्वपि द्रव्यगुण-क्रियारूपेषु शेषशेषिभूतपदार्थेषु खलेकपोतवदवगनग्राहकेदमर्थ्येषु यागस्य करणतया अद्वारकशेषत्वमवसीयते, व्रीहीणां यागद्वारा शेषत्वं प्रोक्षणादीनां च व्रीहिद्वारा शेषत्वं करणैदमर्थ्यद्वारैदमर्थ्यग्राहकश्रुत्यादिप्रमाणैरवसीयत इत्यर्थः। **बहु स्यामिति ग्राहकग्रहणेने**ति। ग्राहकस्थानीयः परमात्मा, तस्य ग्रहणं संकल्पः। **अत्र किञ्चिद्विवृतमि**ति। पूर्वं विस्तरेण विवृतमित्यर्थः।

**उभयथापि ज्ञानव्यपदेशयोग्यतामि**ति। यद्यपि "सत्यं ज्ञानम्" इत्यत्र ज्ञानमित्यस्य नैतावानर्थः, तथापि फलितार्थकथनमिति द्रष्टव्यम्। **उभयमप्युपपन्न-मित्यर्थ** इति। अत्र 'ज्ञानम्' इत्यस्य "तद्गुणसारत्वात्" इति न्यायेन ज्ञानगुण-कत्वार्थकत्वात् प्रत्युतानुगुणत्वमेवेति द्रष्टव्यम्। **ब्रह्मैव स्वसंकल्पादि**त्यादिभाष्ये 'ब्रह्मैव' इति ब्रह्मशब्दस्य निष्कृष्टपरमात्मपरत्वस्वारस्यानुरोधेन स्थिरत्रसरूपतयेतत् व्याचष्टे—**स्थिरत्रसशरीरतये**ति। **अब्रह्मात्मके**त्यत्रापि ब्रह्मशब्दं केवलपरमात्मपरतया व्याचष्टे—**ब्रह्मान्तर्यामिकत्वरहितत्वमुक्तमि**ति। स्थिरत्रसरूपतयेत्येतत्स्वारस्यानु-रोधेन ब्रह्मपदं चिदचिद्विशिष्टवस्तुपरमित्यभिप्रयन् व्याचष्टे—**यद्वा स्थिरत्रसरूप-तये**ति। **ऐक्यश्रुतीनां प्रकारैक्यपरत्वादि**ति। इदं तु सिंहावलोकितकेन प्रथमपक्षशेषभूतमिति द्रष्टव्यम्। भाष्ये—**सर्वं तं परादादि**ति। सर्वं कर्तृ तं परादात्= पराकुर्यात्। **निःश्वसितम्**; अनायासेनोत्पन्नम्, संकल्पमात्रविजृम्भितमिति यावत्।

**ऐन्द्राग्नश्चेति षड्यागा** इति। ऐन्द्रौ द्वौ आग्नेयश्चेति षड्यागा इति पाठः समीचीनः। ऐन्द्राग्नश्चेति पाठे एवमभिप्रायं केचिदूचुः—आग्नेयः पौर्णमास्याममा-वास्यायां च कर्तव्यः सायंप्रातःकालकर्तव्याग्निहोत्रहोमवदेक एव, कर्मभेदापादक-शब्दान्तरादेरनुपलम्भात्। अत एवाष्टमे, "एककर्मणि विकल्पोऽविभागो हि चोदनै-कत्वात्" (८-१-२६) इत्यत्र एकस्यैवाग्नेयस्य पौर्णमासीसंज्ञकत्वादमावास्यासंज्ञकत्वाच्च पौर्णमासीकाले क्रियमाणोऽप्याग्नेयोऽमावास्यासंज्ञको भवतीति तस्मिन्नेवाग्नेये "पञ्च-होत्रामावास्यामभिमृशेत्" इति शास्त्रवशात् पञ्चहोतृमन्त्रप्रयोगोऽपि पौर्णमास्यां किं न स्यात; अवैगुण्यात् इति चेत्—सत्यमाग्नेयस्यावैगुण्यम्; तस्योभयसंज्ञकत्वात; तेन सह

तत्कालकर्तव्यानामग्नीषोमीयादीनां हविषाममावास्यासंज्ञाभावेन वैगुण्यं पञ्चहोत्राऽभिमर्शे स्यात् । अतस्तेषामप्यनुग्रहाय क्रियमाणमभिमर्शनं चतुर्होतृकरणकमेव कर्तव्यमिति निर्णीतम् । न च पञ्चहोत्रा आग्नेयमभिमृश्य चतुर्होत्रा अग्नीषोमीयादीनामभिमर्शः किं न स्यादिति शक्यशङ्कम्, "आसन्नानि हवींष्यभिमृशति" इत्येकस्यैव विहितत्वात् । अत्र "हविरन्तरानुग्रहवशेन परं व्यवस्था" इति टुप्टीका (आपदेवीया) दिग्रन्थपर्यालोचनया एकमेवाग्नेयाख्यं कर्म पौर्णमासीत्रिके अमावास्यात्रिके चान्तःपतितम्; नाग्नेयकर्मभेदः । यदि भेदः स्यात्, प्रकृतौ पौर्णमासीकालकर्तव्यग्नेयाभिमर्शने पञ्चहोतृमन्त्रप्रसक्तेरेवाभावाद्व्यवस्थाशङ्कातत्परिहारावसंगतौ स्याताम् । ततश्च एकमेव कर्म कालद्वययोगि, यथाग्निहोत्राख्यं कर्म सायंप्रातःकालद्वययोगीत्येव युक्तम् । अतोऽसोमयाजिविहितैन्द्राग्नेनैव षट्त्वसंख्यापूरणं कर्तव्यमिति । अत्र "**उत्पत्तिवाक्यैः**="यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति" इत्येवमादिभिः । उत्पत्तिवाक्यमिति प्रथमप्रतिपत्तिजनकं वाक्यम् । **पृथगुत्पन्नान्**=पृथक्प्रतिपादितान्' इति पाठक्रमस्तु समीचीनः । **स्वर्गसाधनत्वाकारेणैकीकृत्य तत्कर्तव्यतया विदधातीत्यर्थ** इति । तत्समुदायद्वयमेकीकृत्य समुच्चित्य स्वर्गसाधनत्वाकारेण कामिकर्तव्यतया विदधाति । यथा—व्यापृते षडपि यागाः स्वर्गसाधनं भवन्ति, तथा व्यापरितव्यमिति साधनत्वेन विदधातीत्यर्थ इत्यर्थः । यद्वा, एकीकृत्य स्थितं तदिति योजना । समुदायीभूतं तत् कर्मेत्यर्थः ।

**कारणावस्थः कार्यावस्थश्च परमात्मैक एवेति** । अयमत्रान्वयक्रमः— "सदेव सोम्येदमग्र आसीत्", "ऐतदात्म्यमिदं सर्वम्," "सर्वं खल्विदं ब्रह्म" इत्यादि वाक्यं कर्तृ पृथक् प्रतिपन्नं वस्तुत्रितयं सद्ब्रह्मादिशब्दयुक्तवचनभङ्ग्या कारणवस्थः कार्यावस्थश्चैक एवेति प्रतिपादयतीति । **परमात्ममात्रवाचिभिः शब्दैरिति**; अक्षरसर्वज्ञादिशब्दैरित्यर्थः । अर्थसामर्थ्यं दर्शयति—**चिदचितोरिति** । शब्दसामर्थ्यं दर्शयति—**सद्ब्रह्मशब्दावित्यादिना** । दृष्टान्तदार्ष्टान्तिकवैषम्यहेतुप्रतिपादनं मन्दफलम्; आत्मशब्दस्य व्यापकवाचिनः शब्दसामर्थ्यात् व्याप्योपस्थापकत्वं च नास्तीत्यपरितोषात् स्वरूपपरिणामशङ्कानिवृत्त्यर्थतया "**चिदचिद्वस्तुशरीरिणः**" इति भाष्यमवतारयति—**यद्वा अक्षरात् संभवतीह विश्वमिति** ।

**पृषदाज्यनयादिति**। यथा पृषदाज्यसंस्काराय अचोदितमपि पात्रान्तरमुपादीयते, तद्वदित्यर्थः। दर्शपूर्णमासयोः "अष्टावुपभृति गृह्णाति" इति प्रयाजानूयाजार्थं चतुर्गृहीतद्वयमेकस्यामुपभृति युगपद्गृहीतम्; तथैव पशौ प्राप्तम्। तत्रानूयाजानां द्रव्यविकारः श्रूयते, "पृषदाज्येनानूयाजान् यजति" इति। पृषदाज्यं दधिमिश्रितमाज्यमेव। तत्र द्वयोरसंकरेऽवश्यंभाविनि चिन्ता—किं कालभेदेन तस्यामेवोपभृति द्वयं ग्रहीतव्यम्? उत एकस्मिन्नेव काले पात्रभेदेनेति। तत्र तु "अष्टावुपभृति गृह्णाति" इति पात्रैकत्वं श्रुतम्। पदार्थक्रमस्तु पदार्थानां गुणः; पाठकल्प्यश्च। अत एकस्मिन्नेव पात्रे पृषदाज्यं गृहीत्वा प्रयाजेषु हुतेषु पश्चात् पृषदाज्यं ग्रहीतव्यमिति प्राप्ते उच्यते—

"उभयोर्ग्रहणाङ्गत्वात् पात्रैक्यस्य क्रमस्य च।
विकृतौ चानुमानेन प्राप्तौ तुल्यं बलाबलम्॥"

इति। एवं चाविशेषे सति प्रयाजाज्यग्रहणेनोपस्थितस्यानूयाजाज्यग्रहणस्याकरणे न किंचित् कारणमस्तीति तदैव पात्रान्तरमुपादाय ग्राह्यमिति "विकारे त्वनूयाजानां पात्रभेदोऽर्थभेदात् स्यात्" इत्यत्र (४-२-१६.) चिन्तितम्। केचित्तु— पृषदाज्यशब्दार्थस्य दधिमिश्राज्यस्याज्यशब्देनैवभिधानसंभवात् "देवानाज्यपानावह" इत्यादिनिगदेष्वाज्यपानित्येवमविकृत एव प्रयोगः, न तु पृषदाज्यपानित्यूहेन प्रयोग इति दशमे (१०-४-२६.) निर्णीतम्। तद्वदिहापि विशेष्यमात्रवाचिनोऽपि शब्दस्य चिदचिद्विशिष्टे प्रयोग उपपद्यत इति वदन्ति।

(निवृत्त्यनुपपत्तिः)

**अर्थक्रियाकारित्वात्** इत्यनेन हेतुभावानुपपत्तिरुक्ता। **उत्पत्तिमत्त्वात्** इत्यनेन हेतुमद्भावानुपपत्तिरुक्तेति द्रष्टव्यम्। **हेतुसापेक्षत्वं च न दृष्टमिति**। प्रपञ्चस्य तु तत्सापेक्षत्वात् न मिथ्यात्वं युक्तमिति भावः। **न चाङ्कुरादिसामग्र्येव भ्रमसामग्रीति**। तद्भ्रमसामग्रीत्यर्थः। **भिन्नविषयस्याभेदज्ञानस्येति**। वस्तुतो भिन्ने विषये उत्पन्नस्याभेदज्ञानस्येत्यर्थः। "उत्तमः पुरुषस्त्वन्यः" इति स्मृत्युपबृंहणीयायाः "पृथगात्मानम्" इति श्रुतेः उपबृंहणात् पश्चादुपादानं कथमित्यत्राह— **स्मृतीवचसोरिति**। स्मृत्योरव्यवसायार्थमित्यर्थः।

**दावानलेति** । यथा दावानलः इन्धनानि विनाश्य इन्धननाशे स्वयमेव नश्यति, तथेत्यर्थः । **निवर्तकज्ञानं तद्विनाशश्च किमिति** । ननु विनाशस्यैव दूष्यत्वप्रतीतेर्ज्ञाने ब्रह्मव्यतिरिक्तत्वादिविकल्पोऽभिप्रेत इति कथमुच्यत इति चेत् — न । विनाशस्य न केवलं ब्रह्मव्यतिरिक्ततया मिथ्यात्वम ; अपि तु निवर्तकज्ञानस्य मिथ्यात्वेन तत्प्रतियोगिकस्य विनाशस्यापि मिथ्यात्वमिति दूषणस्फोरणाय निवर्तकज्ञानस्यापि ब्रह्मस्वरूपव्यतिरिक्तत्वादिविकल्पोऽभिप्रेत इत्युक्तम् । अत एव भाष्ये—**तत्स्वरूपतदुत्पत्तिविनाशानां काल्पनिकत्वेनेति** ज्ञानस्वरूपस्य काल्पनिकत्वमुक्तम् । नन्वेवं ज्ञानस्वरूपविनाशयोरेव काल्पनिकत्वस्य वक्तव्यतया ज्ञानोत्पत्तिकाल्पनिकत्वोक्तिः किमर्थेति चेत्—न । दृष्टान्ततया तदुपन्यासोपपत्तेः । केचित्तु—'तत्स्वरूपतदुत्पत्तिविनाशानां काल्पनिकत्वेने' त्यस्य विनाशकल्पनोपपादकत्वात्, 'तद्विनाशो ब्रह्मस्वरूपमेवेति चे'दिति भाष्येऽपि विनाशस्यैव प्रतीतेश्च विनाशपरिग्रह एव युक्तः ; अतो निवर्तकज्ञाने ब्रह्मव्यतिरिक्तत्वादिविकल्पो न हृदयङ्गम इति वदन्ति । **एवंरूपाविद्याया इत्यर्थ** इति । उपादानोपादेययोरभेदोपचारादेवमुक्तमिति द्रष्टव्यम् । **कालभेदव्यतिकरितगृहप्राङ्गणादिप्रदेश** इति । कालविशेषविशिष्टदेशविशेष इत्यर्थः । **तत्रापि चोद्यं तुल्यमिति चेदि**ति । निःशेषकर्मस्वरूपनाशो न स्यादिति भावः ।

**विकल्पाभिप्रायेणे**ति । चिन्मात्रेत्यनुक्त्वा ब्रह्मव्यतिरिक्तकृत्स्ननिषेधविषयज्ञानस्येत्युक्तौ ब्रह्मशब्दार्थे चिन्मात्रव्यतिरिक्तानामपि केषांचिदनुप्रवेशसंभवेन ब्रह्मशब्दार्थव्यतिरिक्तकृत्स्नपारमार्थ्यनिषेधे चिन्मात्रव्यतिरिक्तकृत्स्नपारमार्थ्यनिषेधाभावेन तस्य निषेध्यतया, निवर्तकज्ञानकर्मत्वादिति दूषणस्यालग्नकतापत्तेश्चिन्मात्रेति पदमावश्यकमिति भावः । **प्रथमं धर्मिप्रश्न** इति । उत्तरत्र ज्ञातृत्वधर्मविकल्पस्य करिष्यमाणत्वादेवमुक्तमिति द्रष्टव्यम् । स्वरूपमित्यस्य यथाश्रुतार्थत्वे ब्रह्मस्वरूपस्यैव ज्ञातृत्वे इति दूषणभाष्यासामञ्जस्यं मन्वान आह—**स्वरूपं स्वाभाविकमित्यर्थ** इति । भाष्ये—**अध्यस्तं चेदयं अध्यासस्तन्मूलाविद्यान्तरं चे**त्यादि । अध्यस्तस्य ज्ञातुर्निवर्तकज्ञानाश्रयत्वलक्षणज्ञातृत्वस्य तत्कल्पकाविद्यायाश्च निवर्तकज्ञानानुगुणतया निवर्तकज्ञानोपजीव्यस्य तद्बाध्यत्वाभावादित्यर्थः । अत्र तस्मादित्युपसंहारभाष्या-

वतारिकाग्रन्थपर्यन्तो ग्रन्थो लेखकदोषात् पतित इति वदन्ति[1]। भाष्ये **तस्यापि निरूपत्वादिति**। निवर्तकज्ञानान्तरस्य कल्पकाविद्याज्ञातृसापेक्षत्वेन निरूपत्वादित्यर्थः। प्रथमं कल्पं दूषयति भाष्ये—**ब्रह्मस्वरूपस्यैव ज्ञातृत्व** इति। ज्ञातृत्वस्य ब्रह्मस्वाभाविकत्व इत्यर्थः। तन्नाशस्य ब्रह्मस्वरूपत्वाभ्युपगमात् परमपुरुषार्थत्वमस्त्वित्याह भाष्ये—**तन्नाशस्य ब्रह्मस्वरूपत्वाभ्युपगम** इति।

**तस्मात् साधनचतुष्टयस्येति**। तस्मादिति व्याख्येयं पदम्। **आत्मयाथात्म्यबुद्धिसंस्कारशून्याकार** इति। भगवच्छेषत्वज्ञानपूर्वकत्वराहित्यं केवलाकारः। **हानमुपादानं च न संभवतीत्यर्थ** इति। नित्यनैमित्तिकरूपकं ब्रह्मोपासनमनन्तस्थिरब्रह्मप्राप्तिसाधनमित्यापातप्रतीतिरनवगतकर्मविचारस्य न संभवतीत्यर्थः। न तु हानोपादानशब्दाभ्यामननुष्ठानानुष्ठाने विवक्षिते, तादृशकर्माननुष्ठानानुष्ठानयोर्ब्रह्मोपासनोपयुक्तत्वेऽपि ब्रह्मविचारानुपयुक्ततया ब्रह्मविचारपूर्ववृत्तत्वकथनावसरेऽनुपयुक्तत्वादिति द्रष्टव्यम्।

(जिज्ञासाधिकरणशरीरम्)

ननु "वचनं व्याहतम्" इति वदतः कोऽभिप्रायः? विचारः कर्तव्य इति सूत्राक्षरयोजनानन्तरम्, न कर्तव्यमिति पूर्वपक्षप्रदर्शनमयुक्तमिति वा, उत सिद्धव्युत्पत्तेः सूत्रकारेणासूचनान्नैवं पूर्वोत्तरपक्षौ युक्ताविति वेति विकल्पमभिप्रेत्य प्रथमं दूषयति—**अथातो धर्मजिज्ञासेत्यत्रेति। प्राभाकरैरध्ययनस्याचार्यकाधिकारकत्वादिति**। अयं भावः—मतद्वयेऽप्यध्ययनस्यार्थज्ञानार्थत्वाभावाद्विचारो नारम्भणीय इति पूर्वपक्षः, अर्थज्ञानार्थत्वादारम्भणीय इति सिद्धान्तश्च समान एव। भाट्टमते विश्वजिन्न्यायेनाध्ययनस्य स्वर्गार्थत्वेनार्थज्ञानार्थत्वाभावात् धर्मविचारो नारम्भणीय इति पूर्वपक्षं कृत्वा—दृष्टे संभवत्यदृष्टकल्पनाया अन्याय्यत्वादर्थज्ञानमेव फलम्। न चाध्ययनस्यार्थज्ञानसाधनत्वस्य प्राप्तत्वात् विधिवैयर्थ्यं शङ्कनीयम्, नियमार्थतयाप्युपपत्तेरिति सिद्धान्तितम्। गुरुमते तु—

"आचार्यकनियोगार्थः स्वाध्यायस्तत्प्रयुक्तितः।
प्रथमावगतत्वेन तद्धि युक्तं प्रयोजनम्॥

---

1. अयत्वे ग्रन्थो मुद्रित एव।

न तु वाक्यार्थविज्ञानं तद्धि पश्चात् प्रतीयते ।
तेनाविवक्षितार्थत्वाद् वेदस्यार्थविचारणम् ॥

न कर्तव्यमतः शास्त्रं मीमांसाख्यमनर्थकम् ।"

"स्वाध्यायोऽध्येतव्यः" इति स्वाध्यायाध्ययनस्य प्रयोजनापेक्षायां प्रथमावगतत्वेनाचार्यकनियोग एवास्य प्रयोजनम् । न त्वर्थज्ञानम्, पश्चाद्भावित्वात् । यद्यपि पुरुषान्तरगामित्वेन बहिरङ्गमाचार्यकम्, तथापि प्रथमावगतत्वेन तत्सिद्धिरेवास्य प्रयोजनं युक्तम् । न त्वर्थज्ञानम्, पश्चाद्भावित्वात् । तेनान्यार्थत्वाद्वेदाध्ययनस्याविवक्षितोऽर्थः । अविवक्षितश्च न निर्णेतव्यः । निर्णिनीषितार्थप्रयोजनाभावात् । अनिर्णेतव्यश्चार्थो न विचारमर्हतीति तदात्मकं मीमांसाशास्त्रमनर्थकत्वादनारम्भणीयमिति पूर्वपक्षः । कथमाचार्यकरणविधिप्रयुक्तमध्ययनम्, न स्वविधिप्रयुक्तम्? उच्यते—न स्वाध्यायविधावस्ति नियोज्यः । तत्र चासति न प्रयोजकता युक्ता, प्रयाजादिनियोगवत् न ह्यनधिकारस्य स्वविषयानुष्ठापकत्वं संभवति, प्रयाजादिविधिवत् । न चाध्ययनविधेरधिकारी श्रूयते । तस्मान्नास्य प्रयोजकत्वं संभवति ।

"न च कल्पयितुं शक्यो नियोज्यः पितृयज्ञवत् ।
अकल्पितेऽपि तस्मिन् यदनुष्ठानं प्रसिद्ध्यति ॥"

स्यादेतत्—अश्रूयमाणोऽपि नियोज्यः पितृयज्ञवत् कल्प्यत इति । तन्न, अकल्पितेऽपि तस्मिन् यतोऽनुष्ठानं प्रसिध्यति । सिद्धे तस्मिन्नासौ कल्पयितुं शक्यः, अनुपपत्त्यभावात् । अनुष्ठानाधीनसिद्धिर्हि नियोगस्तत्सिद्ध्यर्थमनुष्ठातारमाक्षिपन् अनधिकारिणोऽनुष्ठातृत्वायोगात् अनियोज्यस्याधिकारासंभवात् नियोज्यं कल्पयति, प्रयाजादिनियोगवत् । संभवति चेहाचार्यकरणविध्यनुष्ठापितेनैव विषयेणाध्ययननियोगसिद्धिरिति न नियोज्यकल्पनासंभवः । कथं पुनराचार्यकरणविधिरध्ययनं प्रयुङ्क्ते? उच्यते—उपनीयाध्यापनादाचार्यकं भवति । न चाध्ययनमन्तरेणाध्यापनं संभवतीति तदाक्षिपति । उपनयनमध्यापनसमानकर्तृकमेवावगम्यमानं तदङ्गमेव विज्ञायते । कथं समानकर्तृकत्वम्? उपनीयेति क्त्वाश्रवणादेव । तस्मात् तदङ्गमेव । तस्य च द्वारापेक्षायामुपनेयासत्तिरेव लिङ्गात् द्वारमवगम्यते । उपनेयो हि नाकिंचित्करोऽङ्गमिति

तद्व्यापारापेक्षायामुपनयनप्रकरणाधीतमध्ययनमध्यापनोपकारित्वात् तद्व्यापारत्वेनाध्यवसीयते। एवं च वैधमेवाध्ययनं कुर्वन् माणवकोऽध्यापनस्योपकारीत्यवगमात् तद्विषयमेवाध्यापनमाचार्यकसाधनमिति तद्द्वारेण सर्वस्याध्ययनाङ्गस्य तदुपकारित्वादध्ययनार्थस्य व्रतादेस्तत एवानुष्ठानसिद्धिः। तस्मादाचार्यकरणविधिप्रयोजनकत्वादध्ययनस्याविवक्षितार्थत्वात् वेदस्य, तदर्थनिर्णयार्थं नारब्धव्यमिति।

सिद्धान्तस्तु — सत्यमाचार्यकरणविधिप्रयुक्तमध्ययनम्। न तु तत्सिद्धिरेवास्य प्रयोजनम्; बहिरङ्गत्वात्। अन्तरङ्गत्वादध्येतृगतमेवार्थज्ञानं प्रयोजनत्वेनाध्यवसीयते। ननु प्रथमावगतत्वेन प्रयोजनापेक्षमध्ययनमध्यापनविध्यवगतमाचार्यकमेव तावत् स्वीकरोति। स्वीकृते च तस्मिन्नपेक्षाभावात् पश्चादवगतत्वेनान्तरङ्गमप्यर्थज्ञानं न प्रयोजनीकरोति—नैवम्, प्रथममाचार्यकस्य प्रयोजनत्वानवकल्पनात्। यद्यकल्पिते तस्मिन्ननुष्ठानमध्ययनस्य न सिध्येत्, ततः कल्प्येत। न त्वेतदस्ति, अकल्पितेऽपि तस्मिन्ननुष्ठानलाभात्। अनुष्ठिते त्वस्मिन्नध्ययने प्रयोजनापेक्षायामन्तरङ्गत्वादर्थज्ञानमेव फलमङ्गीक्रियते। ननु नियोग एव शब्दादवगतः प्रयोजनं स्यात्, नार्थज्ञानम्। न, अर्थज्ञानस्यापि प्रतीयमानस्य त्यागायोगात्। तेनोभयोरपि प्रयोजनत्वं युक्तम्, अवगतत्वादर्थज्ञानस्य नियोगस्य च। तत्रार्थज्ञानरूपं प्रयोजनं न विचारमन्तरेणाध्ययनेन संपादयितुं शक्यत इत्यध्ययनविधिरेव तत्सिद्ध्यर्थं विचारमाक्षिपतीति तदात्मकं शास्त्रमारब्धव्यमिति व्याख्यातम्।

द्वितीयं दूषयति — **अक्षरयोजनायां ब्रह्मविचारारम्भ इति। प्रामाण्यसंभावनानुपपन्नेति।** उत्पन्नापीयमवगतिर्मूलाभावान्न समीचीना भवितुमर्हतीति प्रामाण्यसंभावना न भवतीति भावः। **चोदनालक्षणोऽर्थ एव वेदप्रतिपाद्य इतीति।** "अथातो धर्मजिज्ञासा" इति सूत्रे अथशब्दस्य वेदाध्ययनानन्तरमित्यर्थः। ततश्च वेदाध्ययनानन्तरं तदर्थजिज्ञासा इति सूत्रे कर्तव्ये, "धर्मजिज्ञासा" इति सूत्रयतो जैमिनेर्धर्म एव कृत्स्नवेदार्थ इति भावोऽवसीयते। ततश्च कृत्स्नवेदार्थस्य धर्मस्य चोदनैव प्रमाणमिति चोदनासूत्रे कथनात् कार्यप्रतिपादकमेव वाक्यं वेदार्थे धर्मे प्रमाणमित्युक्तं भवति। ततश्च कार्यमेव वेदार्थ इति फलति। ततश्चैवं वदतो जैमिनेः सिद्धार्थे व्युत्पत्तिरेव नास्ति। तत्प्रतिपादने प्रयोजनं च

नास्तीत्याशयोऽवसीयते। तत्र निष्प्रयोजनत्वं समन्वयाधिकरणे निराकरिष्यते। अधुना सिद्धार्थे व्युत्पत्तिः समर्थ्यत इति भावः। इदं चोपलक्षणम्, "आम्नायस्य क्रियार्थत्वात" इति कण्ठत एव सूत्रितत्वादित्यपि द्रष्टव्यम्। न च जैमिनेरेव पूर्वपक्षित्वे परस्परविरुद्धयोरैकशास्त्र्यं कथं निर्वहेदिति वाच्यम्, अन्वारुह्योक्तिप्रतिक्षेपमात्रेण शास्त्रैक्यसंभवात्।

## ( अधिकरणपूर्वपक्षः )

"ननु विषयो विशयश्चैव" इति न्यायेन 'अयं विषयः। इत्थं संशयः' इति प्रदर्शनीये कथं तदप्रदर्शनं भाष्ये युक्तमित्याशङ्क्याह — **अक्षरयोजनायामित्यादिना। तत्र प्रपञ्चसत्यत्वे स्थिते सतीत्यर्थ** इति। अत्र केचित् प्रपञ्चसत्यत्वस्थापनस्य च कार्ये व्युत्पत्तिसमर्थनस्य च हेतुहेतुमद्भावासंभवं मन्यमानाः **तत्रेति** भाष्यस्थपदस्य ब्रह्मविचारारम्भकर्तव्यत्वाकर्तव्यत्वसंशये सतीत्यर्थ इति मन्यन्ते। **संबन्धं गृहीत्वेति**। संबन्धो युज्यत इत्यभिप्रेत्येत्यर्थः। ततश्च गामानय, गां पश्य, गां बधान इति बहुप्रयोगानुस्यूतगोशब्दस्य सर्वक्रियानुस्यूतगोपिण्डोऽर्थः। व्यावर्तमानानामानय [न] ादिशब्दानां व्यावर्तमानाः क्रिया अर्था इति संबन्धग्रहस्यैवावापोद्धाराधीनशक्तिग्रहरूपतया क्त्वाप्रत्ययार्थपौर्वापर्यानुपपत्तिरिति शङ्काया नावकाशः। ननु हर्षहेतूनामानन्त्यादित्यनेनैव विवक्षितार्थसिद्धेः **कालत्रयवर्तिनामित्यनर्थकम्**। प्रत्युतायुक्तं च, इदानींतनहर्षेऽतीतानागतयोर्हेतुत्वासंभवात्, हर्षहेतुज्ञानपरत्वाश्रयणस्य क्लिष्टत्वाच्चेत्याशङ्क्य पञ्चिकोक्तानुवादरूपत्वाददोष इत्यभिप्रयन्नाह — **कालत्रयवर्तिनामिति पञ्चिकायामिति**।

ननु हर्षहेतुविशेषपरत्वानिश्चयेऽपि हर्षहेतुमात्रपरत्वं निश्चितमिति कथं व्युत्पत्त्यभाव इत्याशङ्क्याह — **व्युत्पत्तिर्नामेति**। **व्युत्पन्नेतरपदस्य पदान्तरार्थनिश्चयोदाहरणमिति**। यद्यपि भाष्ये **व्युत्पन्नेतरपदविभक्त्यर्थस्येति** इतरपदविभक्त्यर्थव्युत्पत्तिमात्रेणेवोदाहृतः। न प्रत्येकम्। प्रत्येकं व्युत्पत्त्यभिप्रायत्वे केवलविभक्तिमात्रव्युत्पत्तेरप्युदाहरणं प्रदर्शनीयं स्यात्—तथापि भाष्ये पदान्तरस्य

विभक्तेश्च व्युत्पत्तिद्वयमपि प्रयोजकतयोपात्तमिति केवलं पदान्तरव्युत्पत्तेरप्यर्थनिश्चायकत्वमभिप्रेत्य ग्रन्थकृता भाष्याभिप्रेतत्वेनोदाहृतमिति द्रष्टव्यम् । **व्युत्पन्नकःकूजतिशब्देने**ति क्वचित्पाठः । यद्यपि समभिव्याहृतपदान्तरस्यैव व्युत्पन्नत्वं वक्तव्यम् । "सांनिध्यतः सिद्धपदस्य वृद्धाः" इत्युक्तरीत्या प्रसिद्धपदसमभिव्याहारलक्षणसांनिध्यस्यैव शक्तिग्राहकत्वकथनात् । अत एव 'इह सहकारतरौ मधुरं पिको रौति' इत्यादौ प्रसिद्धपदसामानाधिकरण्यादिभिर्व्युत्पत्तिग्रह इति तार्किकैरप्युदाहृतम्—तथापि 'कः' इत्यस्य 'पिकः' इत्युत्तरं जानता तु निर्विचिकित्सं शब्दार्थाध्यवसानं संभवतीत्यभिप्रेत्यैवमुक्तमिति द्रष्टव्यम् । **व्युत्पन्नकूजतिशब्देने**ति पाठस्तु सुगम एव । **व्युत्पन्नेतरपदविभक्त्यर्थस्य प्रकृत्यर्थनिश्चयोदाहरणमिद**मिति । यद्यपि भाष्ये व्युत्पन्नेतरपदस्य पदान्तरार्थनिश्चयः, व्युत्पन्नविभक्तिकस्य प्रकृत्यर्थनिश्चय इति यथासंख्यान्वयः स्वरसतः प्रतीयते । न च विभक्तिमात्रव्युत्पन्नस्य प्रकृत्यर्थनिश्चयोदाहरणं नास्तीति शङ्क्यम्, यज्ञदत्तं घ्नन्तं देवदत्तं पश्यति व्युत्पित्सौ, 'देवदत्तो यज्ञदत्तं हन्त' इति केनचिद्वाक्ये प्रयुक्ते, सुप्तिङ्विभक्त्यर्थज्ञानवतस्तस्य कर्तृकर्मक्रियावाचिपदत्वनिश्चयद्वारा प्रकृत्यर्थनिश्चयसंभवात्—तथाप्ययमर्थः संभवतीत्यभिप्रेत्यैवमुक्तमिति द्रष्टव्यम् । 'पिकः कूजति' इत्यादौ कूजतिपदार्थनिश्चयेऽपि पिकपदगतप्रथमार्थापरिज्ञाने कारकान्तरशङ्कया पिक—कूजतिपदयोः सामानाधिकरण्याप्रतीतेरर्थानिश्चयात् पदान्तरव्युत्पत्तिविभक्तिव्युत्पत्त्योर्मिलितयोरेव पिकपदार्थनिश्चयकत्वात् । न च 'कः कूजति' इति प्रष्टुर्वाक्ये व्युत्पन्नस्य विभक्त्यर्थापरिज्ञानेऽपि कूजतिपदव्युत्पत्तिमतः पिकपदार्थनिश्चयः संभवतीति वाच्यम्, 'कः' इत्यत्रैव प्रथमाविभक्त्यर्थनिश्चयस्यावश्यकतया विभक्त्यैक्येन पिकपदविभक्तेरपि निश्चितत्वात् मिलितयोर्हेतुत्वमिति भाष्याभिप्रायः । न चैवं सति "पदान्तरार्थनिश्चयेन प्रकृत्यर्थनिश्चयेन वा" इति भाष्ये पदान्तरार्थनिश्चयोक्तिरयुक्ता स्यादिति वाच्यम्, लोकप्रसिद्ध्यनुसारेण पदान्तरार्थनिश्चयेनेत्युक्त्वा इत्थमेवानुशयानेन प्रकृत्यर्थनिश्चयेन वेति द्वितीयकल्पोक्तिरिति वदन्ति । भाष्ये—**पदान्तरार्थनिश्चयेन प्रकृत्यर्थनिश्चयेन** वेति । पदान्तरार्थनिश्चयदर्शनेन प्रकृत्यर्थनिश्चयदर्शनेन वेत्यर्थः । ततश्च तस्यैवाभिधाशक्तिनिश्चयरूपतया हेतुहेतुमद्भावासंगतिरिति न चोदनीयम् । **व्युत्पन्नवाक्यस्य-**

**कतिपयपददर्शना**दिति । ननु कार्यवाचिपदसमभिव्याहारदर्शनेन तत्समुदायान्तर्गत-पदान्तरस्यापि तदभिधायित्वनिश्चये घटवाचिपदान्तरसमभिव्याहारादितरपदस्यापि तथात्वप्रसङ्गात् प्रत्युत तस्य पर्यायपदत्वशङ्कावहत्वेन तदर्थकत्वाभावनिश्चय एव हेतुत्वादिति चेत्——न । उपक्रम एव पदजातस्य कार्यसामान्यवाचित्वं निश्चितवतः पुंसः प्रसिद्धपदसामानाधिकरण्येनोपपाद्यमानाया वाच्यवाचकभावप्रतीतेः तद्विशेष-रूपत्वेन प्रथमावगतकार्यसामान्यवाचित्वपरित्यागासंभवात् । "तदंशविशेषनिश्चय-रूपत्वात्" इति भाष्ये तच्छब्दं कार्यपरतया व्याख्याय संनिहितपदसमुदायपरतया व्याचष्टे—**यद्वा तदंशविशेष इति । तृतीये च कारकपदेषु व्यभिचार** इति । न च कारकान्वितस्वार्थाभिधायित्वसत्त्वेऽपि कार्यार्थत्वासिद्धेरेतत्पक्षनिरासो ऽनर्थ इति वाच्यम्, क्रियाया एव कारकान्वितत्वेन सर्वपदानां कारकान्वितस्वार्थाभि-धायित्वे कार्यवाचित्वस्यावर्जनीयतया तस्यापि प्रतिक्षेप्यत्वात् । ननु कारकान्वित-स्वार्थाभिधायित्वे कारकाणां क्रियाविनाभूततया क्रियामात्रवाचित्वसिद्धावपि कार्याभि-धायित्वस्य नावश्यंभावः, इतिहासपुराणादौ तथैवोपलब्धेरिति चेत्—सत्यम् । सिद्धान्तिना सर्वपदानां क्रियावाचित्वस्यापि प्रतिक्षेप्यतया अस्यापि पक्षस्योद्धाख्य निरसनोपपत्तेः ।

अत्र केचित्—वाचस्पतिना अनेन प्रकारेण सिद्धवस्तुप्रामाण्योपपादनप्रकारः कृतो न दृश्यते? तत्र हीत्थं वाचस्पतिवाक्यम्—"अपि च 'आम्नायस्य क्रियार्थत्वात्—' इति शास्त्रकृद्वचनम् । तत्रार्थग्रहणं यद्यभिधेयवाचि ततो भूतार्थानां द्रव्यगुणशब्दानामानर्थक्यमनभिधेयत्वं प्रसज्येत । न हि ते क्रियार्थाः । यद्युच्येत न क्रियार्थत्वं क्रियाभिधेयत्वम् । अपितु क्रियाप्रयोजनत्वम् । द्रव्यगुणशब्दानां च क्रियार्थत्वेनैव भूतद्रव्यगुणाभिधानम्; न स्वनिष्ठतया । यथाहुः शास्त्र-विदः—'चोदना हि भूतं भवन्तम्' इत्यादि । एतदुक्तं भवति—कार्यमर्थमवगमयन्ती चोदना [तदर्थं] भूतादिकमप्यर्थमवगमयतीति । न तावत् कार्यशेषभूत एवार्थे पदानां संगतिग्रह इत्येतदुपपादितं भूतेऽप्यर्थे व्युत्पत्तिं दर्शयद्भिः । नापि स्वार्थमात्रपरतैव पदानाम् । तथा सति न वाक्यार्थप्रत्ययः स्यात् । न हि प्रत्येकं स्वप्रधानतया गुणप्रधानभावरहितानामेकवाक्यता दृष्टा ।

तस्मात् पदानां स्वार्थमभिदधतामेकप्रयोजनवत्पदार्थपरतयैकवाक्यता । तथाच तत्तदर्थान्तरविशिष्टैकवाक्यार्थप्रत्यय उपपन्नो भवति । तथाच अर्थान्तरसंसर्गपरतामात्रेण वाक्यार्थप्रत्ययोपपत्तौ न कार्यसंसर्गपरत्वनियमः पदानाम् " इति । नास्मिन् वाचस्पतिवचनसंदर्भे एते विकल्पा दृश्यन्ते । नाप्यनेन प्रकारेण दूषणम् । अस्य हि संदर्भस्यायमर्थः—" आम्नायस्य क्रियार्थत्वात् " इत्यत्र किमभिप्रेतम्? सर्वपदानां कार्यवाचित्वम्? उत कार्यान्विततच्छेषवाचित्वम्? नाद्यः, 'द्रव्यगुणवाचिशब्देषु तदभावात् । न द्वितीयः, सिद्धार्थेऽपि व्युत्पत्तेरुपपादनात् । नन्वेवमितरान्वितार्थकत्वमपि न स्यादिति चेत्—न; स्वार्थाभिधायिशब्दैर्लक्षणयेतरान्वयविशिष्टप्रतीतेरिति । अत्र च श्रुतप्रकाशिकाग्रन्थोक्तविकल्पत्रयं न दृश्यते । दूषणप्रकारोपि नेदृशो लक्ष्यते । भूतार्थे व्युत्पत्तिदर्शनस्थलेऽपि नायं विकल्पः प्रदर्शितः । एवं हि तत्र वाक्यम्—*" इदमत्राकूतम्—

कार्यबोधे यथा चेष्टा लिङ्गं हर्षादयस्तथा ।
सिद्धबोधेर्थवत्तै (भवत्वे) वं शास्त्रत्वं हितशासनात् ।।

यदि हि पदानां कार्याभिधाने तदर्थस्वार्थाभिधाने वा नियमेन वृद्धव्यवहारे सामर्थ्यमवधृतं भवेत्, न भवेदहेयानुपादेयभूतब्रह्मात्मतापरत्वमुपनिषदाम्, तत्राविदितसामर्थ्यत्वात् पदानाम् । लोके तत्पूर्वकत्वाच्च वैदिकार्थप्रतीतेः । अथ तु भूतेऽप्यर्थे पदानां लोके शक्यः संगतिग्रहः, तत उपनिषदां तत्परत्वं पौर्वापर्यपर्यालोचनया अवगम्यमानमपह्नुत्य न कार्यपरत्वं शक्यं कल्पयितुम्, श्रुतहान्यश्रुतकल्पनाप्रसङ्गात् । तत्र तावदेवमकार्यार्थे न संगतिग्रहः, यदि तत्परः प्रयोगो लोके न दृश्येत, तत्प्रत्ययो वा व्युत्पन्नस्योन्नेतुं न शक्येत । न तावत् तत्परः प्रयोगो न दृश्यते लोके, कुतूहलभयादिनिवृत्त्यर्थानामकार्यपराणां पदसंदर्भाणां प्रयोगस्य लोके बहुलमुपलब्धेः । तद्यथा—'आखण्डलादिलोकपालचक्रवालाधिवसतिः सिद्धविद्याधरगन्धर्वाप्सरःपरिवारो ब्रह्मलोकावतीर्णमन्दाकिनीपयःप्रवाहपातधौतकलधौतमयशिलातलो नन्दनादिप्रमदवनविहारिमणिमयशकुन्तकमनीयनिनदमनोहरः पर्वतराजः सुमेरुः' इति, 'नैष भुजङ्गो रज्जुः' इत्यादि । नापि भूतार्थबुद्धिर्व्युत्पन्नपुरुषवर्तिनी न शक्या समुन्नेतुम्, हर्षादेरुन्नयनहेतोः संभवात्, तथाहि—अविदितार्यजनभाषार्थो द्रमिडो नगरगमनो

द्यतो राजमार्गाभ्यर्णं देवदत्तमन्दिरमध्यासीनः प्रतिपन्नजनकानन्दनिबन्धनपुत्रजन्मा वार्ताहारेण सह नगरस्थदेवदत्ताभ्याशमागतः, पटवासोपायनार्पणपुरःसरं 'दिष्ट्या वर्धसे । देवदत्त पुत्रस्ते जातः' इति वार्ताहारव्यवहारश्रवणसमनन्तरमुपजातरोमाञ्च-कञ्चुकं विकासिनयनोत्पलमतिस्मेरमुखमहोत्पलं विलोक्य देवदत्तमुत्पन्नप्रमोदमनुमिमीते; प्रमोदस्य च प्रागभूतस्य तद्व्याहारश्रवणसमनन्तरं भवतस्तद्धेतुकताम् । न चायमप्रतिपादयन् हर्षहेतुमर्थं हर्षाय कल्पत इति अनेन हर्षहेतुरर्थ उक्त इति प्रतिपद्यते । हर्षहेत्वन्तरस्याप्रतीतेः पुत्रजन्मनश्च तद्धेतोरवगमात् तदेव वार्ताहारेणाभ्यधायीति निश्चिनोति । एवं भयशोकादयोऽप्युदाहार्याः । तथा च प्रयोजनवत्तया भूतार्थाभिधानस्य प्रेक्षावत्प्रयोगोऽप्युपपन्नः । एवं च ब्रह्मज्ञानस्य परमपुरुषार्थहेतुभावात् अनुपदिशतामपि पुरुषप्रवृत्तिनिवृत्ती वेदान्तानां पुरुषहितशासनात् शास्त्रत्वं सिद्धं भवति" इति । अतः कथमिदमुक्तमिति न जानीम इति चोदयन्ति । तत्रेदमुत्तरम्—सत्यं युष्माभिर्न ज्ञायते । नैतावता विषयस्यासत्त्वम्, "न ह्ययं स्थाणोरपराधः, यदेनमन्धो न पश्यति" इति न्यायात्, स्थलान्तरे ग्रन्थान्तरे च प्रतिपादनसंभवात्, एषामपि वाक्यानां तात्पर्यतस्तदर्थप्रतिपादनसंभवाच्चेत्यलमतिक्षोदेन ।

शब्दस्य प्रवृत्त्यन्वयव्यतिरेकानुविधायित्वज्ञानोत्पाद्यस्य शब्दे प्रवर्तकार्थावबोधित्वावगमस्य कार्यबुद्धिप्रवृत्तिव्याप्तिबलनिष्पाद्यत्वाभावात् कार्यत्वबुद्धिप्रवृत्त्योः कार्यकरणभावाग्रहेऽपि शब्दस्य प्रवृत्त्यन्वयव्यतिरेकग्रहणमात्रेण प्रवर्तकार्थाभिधायित्वस्य ग्रहणसंभवात् इत्यभिप्रयन्नाह—**उत्तरत्र सर्वपदानामिति** । **अन्यतरांशासिद्ध्यभिप्रायेणेति** । केचित्तु—कृतकर्मविचारस्यावृत्तिविधानादिना कर्मफलानित्यत्वावगमरूपविशेषणसंभवस्याप्येतदधिकरणप्रदर्शनीयतया अंशद्वयासिद्धेरपि वक्तुं शक्यत्वेन यथाश्रुतमेव भाष्यं युक्तमिति मन्यन्ते ।

## ( अधिकरणसिद्धान्तः )

**सूत्रकारैः परिहारोऽभिधीयत** इति । इदमुपलक्षणम्—सूत्रकृदभिमतः परिहारोऽभिधीयत इत्यपि द्रष्टव्यम्; "एवं प्राप्ते प्रचक्ष्महे" इत्यादौ तथैव वर्णनीयत्वात् । **प्रमाणेनार्थं स्वीकुर्वन्त** इति । "तेन दीव्यति खनति जयति

जितम्" इति दीव्यत्याद्यर्थे ठक् प्रत्यय इति भावः। ननु 'अम्बाताततमातुलशशिपशुनरमृगपक्षि' इत्येकपद्येनैव निर्देष्टव्ये विभज्योपादानं किमर्थमित्याशङ्क्य विभागेनोपादानस्य प्रयोजनमाह— **अम्बाताताप्रभृतिरिति**। भाष्ये— **एनमवेहीति**। क्वचित् कोशे "अवैहि" इति पाठो दृश्यते। स तु लेखकस्खलनकृतः, "एत्येधत्यूठ्सु" इत्यत्र एचीत्यनुवृत्तेरिहीत्यस्यैजादित्वाभावात्, आङुपसृष्टत्वेऽपि "ओमाङोश्च" इति पररूपप्रसङ्गेनावैहीत्यस्यानिष्पत्तेरिति द्रष्टव्यम्। **एनं बोधकशब्दमिति**। नन्वादेशाभावात् कथमेना (मन्वा) देशः (ननु अन्वादेशाभावात् कथमेनादेशः) इति चेत्— न। व्युत्पादनस्थले पूर्वमम्बादिशब्दान् प्रयुक्तवतस्तद्विषयेऽन्वादेशसंभवात्। न च 'एनमवेहि' इति कथं शब्दविषये अङ्गुलीनिर्देश इति वाच्यम्, तस्य 'इमं चावधारय' इति निर्दिष्टार्थमात्रविषयत्वेनाप्युपपत्तेः। भाष्ये—**अवधारयेत्यभिप्रायेणेति**। अभिप्रायाकारकथने, बालोऽसावमुमर्थमवधारयतु, इत्यभिप्रायेणाङ्गुल्या निर्दिश्य'इत्येवं प्रथमपुरुषस्य वक्तुमुचितत्वात् तत्रैव तात्पर्यम्। **अमी शब्दाः संकेतिता इति मन्येरन्निति**। संबन्धान्तरादर्शनात् सङ्केतयितृपुरुषान्तरदर्शनाच्च' इति भाष्यानुरोधात् शङ्काद्वयव्युत्क्रमो द्रष्टव्यः। ननु—बालस्य व्युत्पत्तिग्रहात् पूर्वमम्बाताततमातुलादिशब्दैस्तदर्थबुद्ध्युत्पत्तौ न शक्तिग्रहो मूलम्, तस्याः तदानीमनिश्चयात्। अपितु तदर्थाभिमुखाङ्गुलिनिर्देशसाहचर्यलक्षणसंबन्धवशादेव शब्दस्यार्थप्रत्यायकत्वमिति वक्तव्यम्। एवंच स्वस्य तदर्थबुद्ध्युत्पत्तेरीदृशसंबन्धनिमित्ततां जानन् कथं वाच्यवाचकभावलक्षणसंबन्धान्तरं कल्पयेत्? किंच बालस्य धूल्यक्षराभ्यासदशायां धूलिरेखाविशेषमङ्गुल्या 'अयं ककारः, अयं खकारः' इति बहुशः शिक्षयन्ति। स च पश्चाल्लिपिविशेषदर्शने अक्षरं प्रतिपद्यते। अक्षरविशेषश्रवणे लिपिविशेषं च स्मरति। न तत्र बोध्यबोधकत्वलक्षणसंबन्धान्तरं कल्पयति। एवमिहास्त्विति चेत्, उच्यते— अर्थविशेषमेवाङ्गुल्या निर्दिश्याम्बादिशब्दं प्रयुञ्जते; नान्यमित्यत्र किंचिन्नियामकं मृगयमाणो बालः तयोरौत्पत्तिकं संबन्धविशेषं निश्चिनोतीत्युक्तौ दोषाभावात्। लिप्यादौ तु संकेतपूर्वकत्वापरिज्ञानदशायामौत्पत्तिकं संबन्धं निश्चिनोतु; का नः क्षतिः? संकेतपूर्वकत्वज्ञाने तु तद्बाध्यत इत्यदोषात्। **अन्विताभिधानप्रसङ्ग इति चेदिति**।

द्विविधं हि वाक्यार्थप्रक्रियाभेदमाहुस्तन्त्रनिष्ठाः—अन्विताभिधानम्, अभिहितान्वय इति ।

"पदजातं श्रुतं सर्वं स्मारितानन्वितार्थकम् ।
न्यायसंपादितव्यक्ति पश्चाद्वाक्यार्थबोधकम् ॥

इत्यन्विताभिधानम् । अयमत्र श्लोकार्थः—पदानि तावत् श्रूयन्ते । श्रुतानि च व्युत्पत्त्यनुसारेण पदार्थस्वरूपाणि परस्परानन्वितानि स्मारयन्ति । स्मृतेषु पदार्थेष्वाकाङ्क्षादिपरामर्शः । ततो न्यायप्रवृत्तिः । न्यायप्रवृत्त्या वचनव्यक्तिविशेषाभिव्यक्तिः संपद्यते । ततः सम्यङ्न्यायानुगृहीतानि पदानि नानापदार्थविशिष्टैकप्रधानार्थात्मकं वाक्यार्थमभिदधतीति । अभिहितान्वयावादिनस्त्वेवमभ्यधुः—पदैः पदार्थाः पृथक् पृथगभिधीयन्ते । तच्चाभिधानं पदार्थस्मरणमात्रे पर्यवसितम्, "पदमभ्यधिकाभावात् स्मारकान्न विशिष्यते" इति वचनात् । ते चाभिहिताः पदार्थाः योग्यत्वेन परामृश्यमानाः स्वयमेव विशेषसंसर्गात्मकं वाक्यार्थमवबोधयन्ति । न तत्र पदव्यापारः, अर्थैरेवार्थविशेषसिद्धेः । यथा कविभिरालोच्यमानाः पदार्था एव वाक्यार्थमर्थविशेषसंसर्गात्मकमवबोधयन्ति । पश्चादेव प्रतिपन्नार्थानुरोधेन शब्दरचना । एवमर्था एवार्थविशेषं बोधयन्तीति । ततश्च 'अस्यायमर्थः' इति व्युत्पत्तावेकैकस्य पदस्य तत्तदर्थमात्रपरतया व्युत्पत्तेस्तावन्मात्रस्यैवाभिधेयतया पदान्तरार्थान्वितार्थाभिधानं न सिध्येदिति भावः । **प्रातिस्विकव्युत्पत्तेरिति** । प्रतिपदव्युत्पत्तेरित्यर्थः । **अत्र तु पूर्वभाविनीति विशेष** इति । अयमर्थः - यादृच्छिकव्युत्पत्तिस्थले गवानयने प्रवृत्त्युपलम्भेन 'अस्य वाक्यस्य गवानयनकार्यत्वमर्थः' इति प्रथमतोऽवगत्य तत आवापोद्धारक्रमेण 'अस्य पदस्यायमर्थः' इति पदार्थत्वं निश्चिनोति । बुद्धिपूर्वकव्युत्पत्तिस्थले तु 'अस्य पदस्यायमर्थः' इति पदार्थत्वबुद्धिपूर्विका वाक्यार्थावगतिरिति । **शब्दैरपि परस्परान्वययोग्यत्वेन स्वार्थाभिधानमिति** । पदानामेव पदार्थेषु संसर्गबोधनशक्त्याधानशक्तिरित्यर्थः । अत्र केचिदाचार्याः—शक्तित्रयगौरवं नास्त्येव, पदानामेव पदार्थाभिधानशक्तेः स्वीकारात् । अर्थानां संसर्गबोधकत्वं तु स्वाभाविकमेव, शब्दाभिधानमन्तरेणापि प्रतीतानामर्थानां संसर्गबोधकत्वस्य संभवात्; इतरथा कविकाव्यमूलज्ञानानुपपत्तिप्रसङ्गात् । शब्दान्वयव्यतिरेकानुविधानेन शाब्दत्वस्याप्युपपत्तेः । अव्यवहितत्वस्या-

प्रयोजकत्वात् अभिहितान्वयपक्ष एव भाष्यकृदभिमत इति वदन्ति । **बुध्यस्वेति ह्युक्तं भवतीति** । अयं भावः—येन हि यत् सिषाधयिषितं तत् तस्यार्थः, दण्डेन सिषाधयिषितस्य घटस्य दण्डार्थत्वदर्शनात् । प्रकृते चाम्बादिपदेन बालस्य सिद्धार्थभूताम्बादिबुद्धिर्हि प्रतिपादयितुः सिषाधयिषिता । ततश्चाम्बादिपदप्रयोजनत्वेनार्थभूताया अम्बादिबुद्धेर्बालगतायाः साध्यत्वेन सिद्धत्वाभावात् कार्यार्थत्वमेव स्यादिति । इयं च शङ्का 'कार्यार्थाभिधायित्वम्' इत्यत्रार्थशब्दाभिधेययोरभिधेयप्रयोजनयोर्विवेकाग्रहनिबन्धनेति द्रष्टव्यम् । **गां क्रीणीहीति** । 'विक्रीणीहि' इति क्वचित् कोशे पाठो दृश्यते । तत्र विशब्दो लेखकस्खलनकृतः, इतरथा "परिव्यवेभ्यः क्रियः" इत्यात्मनेपदप्रसङ्गात् । क्रीणातेरेव विक्रयार्थत्वमपि संभवति, तथैव "क्य्यस्तदर्थे" इति सूत्रे भाष्यप्रदीपे प्रतिपादनात् ।

**उत्तरत्रेति** । देवताधिकरण इत्यर्थः । ज्ञानेच्छाकृतीनामेव सविषयत्वेनापूर्वस्य निर्विषयतया कथम् 'उपासनाविषयकार्याधिकृत' इत्युक्तिरित्याशङ्क्य कृतिसाध्यरूपकार्यशरीरानुप्रविष्टकृतेः सविषयत्वात् तद्द्वारा तस्य सविषयत्वमित्यभिप्रयन्नाह—**उपासनावच्छिन्नेति** । **विसिन्वन् हि विषय उच्यत** इति पाठः समीचीनः । विपूर्वात् सिनोतेः निष्पन्नत्वात् विषयशब्दस्य ।

"विशब्दो हि विशेषार्थः सिनोति(ते)र्बन्ध उच्यते ।
विशेषेण सिनोतीति विषयोऽतो नियामकः ॥"

इत्यभियुक्तोक्तेः । विशिंषन्निति पाठे तु वस्तुव्याख्यानमेतत् ; न शब्दव्याख्यानमिति द्रष्टव्यम् । **रात्रीरुपेयात् प्रतितिष्ठन्ति ह वा एते य एता रात्रीरुपयन्तीति हि श्रुतिरिति** । अत्र यद्वक्तव्यम्, तत् पूर्वमेवोक्तम् । **विधेयोपकारक** इति । विधेयाया अपगोरणनिवृत्तेः निवर्त्यापगोरणगतानिष्टसाधनत्वस्य उपकारकत्वात् । अपगोरणस्यानिष्टसाधनत्वाभावे निवृत्तेरेवासंभवादिति भावः । **अपगोरणशतयातनेति** । अपगोरणं वधोद्यमः । शतयातना नरकविशेषः । **मोक्षविरोधिफलेऽपीति** । "उदरमन्तरं कुरुते, अथ तस्य भयं भवति" इत्यादिवाक्येष्विति भावः । **कार्योपयोगितयैव सिद्धेरित्युक्त इति** । कार्योपयोगित्वमिति शेषः । कार्योप-

योगितया सिद्धेरित्यनेन अनुयायिहेतुः (कार्योपयोगित्वरूपः) कार्योपयोगित्वमित्युक्तमित्यन्वयः । अत एव "चरुमुपदधाति । बृहस्पतेर्वा एतदन्नम्, यन्नीवाराः" इत्यत्रार्थवादसमर्पितो देवतासंबन्धः स्थण्डिलनिर्वृत्त्यौपयिकचरूपधानविध्यनाकाङ्क्षितत्वान्नादर्तव्य इत्युक्तं द्वितीये, "संयुक्तस्त्वर्थशब्देन" इत्यधिकरणे (२-३-७.) ततश्च विध्यपेक्षितसमर्पकोऽर्थवाद आदर्तव्यः; नान्य इति भावः ।

## ( अपूर्वकार्यत्वखण्डनम् )

**अत्रार्थशब्देन प्राधान्यमिति** । नन्वर्थशब्दस्य प्राधान्यपरत्वे किं प्रमाणम्? न च "कार्यमर्थं प्रधानतया प्रतिपादयति" इति पञ्चिकावाक्यं प्रमाणमिति वाच्यम्, अर्थशब्दस्य प्राधान्यार्थत्वस्यास्माद्वाक्यादप्रतीतेः । तत्र "कार्यरूपोऽर्थः समभिव्याहृतयागाद्यपेक्षया शेषितया प्रतिपाद्यत इत्यस्यैव प्रतीतेः । नापि "कृतिसाध्यं प्रधानम्" इति प्रकरणशालिकावाक्यं प्रमाणम्, तत्रापि कृतिप्रधानत्वरूपार्थाप्रतीतेः । अर्थशब्दस्य प्रधानपरत्वे प्रमाणाभावाच्चेति चेत्—न । "कृतिसाध्यं प्रधानम्" इति समभिव्याहारात् कृतिप्रधानत्वलाभात्, तस्यैवार्थशब्दनिर्देशार्हत्वादिति भावः । **कृतिकर्मत्वं नाम प्रवर्तकत्वमित्यत्राहेति** । यत्प्रकारकं ज्ञानं प्रवर्तकम्, तत् प्रवर्तकत्वमित्यर्थः । भाष्ये—**कृत्युद्देश्यत्वं न किंचिदुपलभ्यते** इत्यत्र कृत्युद्देश्यत्वमित्यस्य प्रवर्तकत्वमित्यर्थ इति तु ग्रन्थकृतो भावः । अयं भावः—कृतिभावभावि कृत्युद्देश्यत्वं तन्मते कार्यत्वम् । कृतिसाध्यत्वे सति कृत्युद्देश्यत्वमिति तदर्थः । तत्र च विशेष्यभूतकृत्युद्देश्यत्वं कृतिकर्मत्वम् । तच्च प्रवर्तकज्ञानप्रकार इति स्थितम् । प्रवर्तकज्ञानप्रकारश्च कृतिसाध्यत्वे सतीष्टतमत्वमिति सिद्धम् । तत्र च कृतिभावभावीत्यनेनैव सत्यन्तस्य सिद्धत्वात् प्रवर्तकत्वमित्यनेन विवक्षणीयांशस्तु इष्टतमत्वमात्रमेव । ततश्च कृतिभावभावित्वे सति प्रवर्तकत्वं नाम कृतिसाध्यत्वे सतीष्टतमत्वमिति पर्यवसितमिति । **तत्र प्रेरकत्वं कृत्युद्देश्यत्वमिति** । कार्ये प्रेरकत्वज्ञानात् प्रवर्तते । ततश्च प्रवर्तकज्ञानप्रकारत्वात् कृतिकर्मत्वरूपप्रवर्तकत्वरूपत्वं प्रेरकत्वस्योपपद्यत इत्यर्थः (इति भावः)। **न हि दुःखनिवृत्तिः सुखं भवतीत्यर्थ** इति । अत्र केचित्—यथाश्रुतमेव युक्तम्, सुखव्यतिरिक्ताया अपि दुःखनिवृत्तेरनुकूलत्वदर्शनादिति शङ्काया यथाश्रुतेनैव निवर्त्यत्वादिति वदन्ति । **अनिष्टनिवृत्तिरूपतया**

**वेष्टत्व**मिति । नन्वनिष्टनिवृत्तेरपि सुखवत् पुरुषार्थान्तरसाधनत्वज्ञानानधीनेच्छाविषयतया कुतो न स्वत इष्टत्वम् ? न च दुःखनिवृत्तित्वप्रकारकज्ञानाधीनत्वात् तदिच्छाया न स्वत इष्टत्वमिति वाच्यम्, तथा सति सुखेऽपीच्छायाः सुखत्वप्रकारकज्ञानाधीनत्वात् स्वत इष्टत्वं न स्यात् । न च इष्टान्तरहेतुत्वानिष्टनिवृत्तित्वज्ञानमन्तरेणैवेष्टत्वं स्वत इष्टत्वं विवक्षितमिति वाच्यम्, तथा सति पारिभाषिकत्वापत्तेः । "साक्षादिषिविषयभूतसुखदुःखनिवृत्तिभ्यामन्यत्वात्" इत्युत्तरभाष्ये दुःखनिवृत्तेरपि साक्षादिषिविषयत्वकथनाच्चेति चेत्—अत्र केचित्—दुःखाभावे इच्छा दुःखद्वेषायत्ता । न तु स्वतः । अतो न स्वत इष्टत्वम । न च, द्वेषो नाम सिद्धान्ते जिहासैव । सैव च निवृत्तीच्छा इति दुःखे द्वेषस्य स्वाभाविकत्वं वदता, द्वेषस्य हानेच्छारूपजिहासारूपत्वं च वदता हानलक्षणनिवृत्तेः स्वत एवेष्टत्वमभ्युपेयमिति वाच्यम् — लोके अभावेच्छायाः प्रतियोगिद्वेषाधीनतयैव दर्शनेन द्वेषस्य हेयत्वप्रकारकज्ञानविशेषरूपत्वस्यावश्यं वाच्यतया तदधीनेच्छाविषयस्य दुःखाभावस्य न स्वत इष्टत्वमिति वदन्ति । ननु—अनुकूलत्वज्ञानं हीच्छाहेतुः । अनुकूलत्वस्येष्टतमत्वरूपे इष्टतमत्वज्ञानमिच्छायां हेतुरिति पर्यवसन्नम् । इष्टतमत्वज्ञानं च उच्छाविषयत्वरूपेष्टतमत्वायत्तमित्यात्माश्रय इति चेत्—न ; इच्छाविषयतानिबन्धनस्वरूपविशेषस्यैवानुकूलार्थत्वेनात्माश्रयाद्यभावात । नन्वनुकूलप्रतिकूलान्वयविरहे स्वरूपेणावस्थितिः दुःखनिवृत्तिश्चेत्, प्रतिकूलनिवृत्तेरिवानुकूलनिवृत्तेरपि दुःखनिवृत्तित्वप्रसङ्ग इत्याशङ्क्य प्रतिकूलनिवृत्त्यंशे दुःखनिवृत्तेः सामानाधिकरण्यमित्याह—**स्वरूपेणावस्थितिः सुखनिवृत्तिरूपेत्यादिना । दृष्टान्ताभिप्रायेण क्रियाद्युपादान**मिति । अत्र केचित्—"गामानयेत्यादिष्वपि वाक्येषु न कार्यार्थे व्युत्पत्तिः" इत्युपक्रमभाष्यानुसारात क्रियातदतिरिक्तापूर्वसाधारणकार्यत्वस्यैव निर्वचनीयत्वप्रतीतेस्तदनुरोधेन "क्रियादेरनुकूलत्वं न संभवति" इति भाष्यस्यापि क्रियाऽक्रियासाधारण्येनानुकूलत्वनिषेधपरतया योजयितुं शक्यतया, दृष्टान्ताभिपायेणेत्युक्तौ **न स्वारस्यं** पश्यामः । अत एव "फलभावार्थव्यावर्तकं कृतिप्रधानत्वं वर्ण्यते" **इत्यत्रा**पि न मूलं पश्यामः । ततश्चेष्टत्वातिरिक्तस्येष्टत्वाघटितस्य वा कृतिप्रधानत्वस्याभावात्, सुखदुःखनिवृत्तिभिन्नस्यापूर्वस्य स्वत इष्टत्वाभावात, अनन्यार्थतया प्रतिपन्नस्य त्वन्मते

सुखदुःखनिवृत्तिसाधनतयापीष्टत्वाभावात् न त्वदभिमतापूर्वे कार्यत्वमित्येवं भाष्याभिप्रायपर्यवसानप्रतीतेः भावार्थस्वर्गव्यावृत्तं पराभिमतं कार्यत्वं निराक्रियत इत्यत्र विनिगमकं न पश्याम इत्यपि वदन्ति । '**सुखार्थतयेति । न हि दण्डचक्रादिर्घटो भवती**' त्ययं ग्रन्थः "कुत इत्यत्राह-—दुःखात्मकत्वात्" इति ग्रन्थात् पूर्वं पठितव्यः । न क्वापि पठितव्यो वा, अनतिप्रयोजनत्वात् । अतो व्युत्क्रमेण प्रतीकग्रहणशङ्का न कार्या । **अयोगव्यवच्छेदो विवक्षित** इति । अत्यन्तायोगव्यवच्छेदो विवक्षित इत्यर्थः ।

( शेषलक्षणम् )

**यथावत् प्रदर्श्यत** इति । भाष्यकृतेति शेषः । **अस्यार्थ उच्यत** इति । मयेति शेषः । **सत्तालाभो ह्यतिशय इत्युक्त**मिति । न तु सत्तैवातिशय इत्युक्तमिति भावः । ननु परगतातिशयेत्यत्र परशब्दार्थस्याधिकरणकारकत्वप्रतीतेः पूर्ववर्तिन एव कारकत्वात् उत्पाद्यस्थले चोत्पत्तिरूपातिशयं प्रति अपूर्ववर्तिनः कथं कारकत्वमित्याशङ्क्य—अनुत्पन्नस्यापि बुद्धौ सूक्ष्मरूपेण विपरिवर्तमानत्वेन कारकत्वं संभवति । एवमेव हि जायमानस्य जनिकर्तृत्वमप्युपपादनीयम् । एवमेव हि नवमे भाविनोऽपूर्वस्य निमित्तत्वं समर्थितमित्यभिप्रयन्नाह — **स्वरूपस्याविद्यमानत्वेऽपीति । परातिशयः परमप्रयोजन**मिति । नन्वेवं स्वर्गस्य पुरुषशेषत्वं न स्यात् । तद्धि कामवशात् विधिवशाच्चावगन्तव्यम्, अन्यार्थस्य काम्यत्वासंभवात् । न ह्यस्वार्थं किंचित् कश्चित् कामयते । यदपि परार्थं किंचित् कामयते, तदपि परंपरया स्वार्थमेव । तथा विधिवशाच्च । विधिर्हि प्रवर्तनात्मा । स्वर्गस्यात्मार्थत्वाभावे तत्साधने पुरुषस्य प्रवर्तकत्वानुपपत्तेरिति युक्तिद्वयबलात् स्वर्गस्यात्मार्थत्वं साधनीयम् । यदि च [1]परार्थमेव कार्यत्वं तदर्थं प्रवृत्तिश्च, तर्हि युक्तिद्वयमप्यात्मार्थत्वसाधकं न भवेदिति चेत्—न । यजेतेत्यात्मनेपदबलेन स्वर्गस्य कर्तृगामित्वावगमेन पुरुषार्थत्वप्रतीत्युपपत्तेरिति द्रष्टव्यम् ।

**परगतातिशयाधानेच्छयोपादेयत्वमेव यस्य स्वरूपमित्यत्र** एवकारस्योपादेयत्वायोगव्यवच्छेदकतया कादाचित्कोपादेयत्वप्रयुक्तेषु प्रकृष्टकृपास्नेहान्वि-

1. परार्थत्वमेव काम्यत्वम् । पा०

तेषु नातिव्याप्तिरिति व्याख्याय, कृपास्नेहान्वितत्वकर्तृत्वादिविशेषोपहितेषु शेषत्वं दृष्टमिति मत्वा, एवकारस्य परगतातिशयाधानेच्छयेत्यनेनान्वयमभिप्रेत्यान्ययोगव्यवच्छेदकतया परातिशयैकप्रयोजनकत्वरूपार्थसंभवमभिप्रेत्य — यदा यस्य यदतिशयैकप्रयोजनकत्वम्, तदा स तच्छेष इत्यभिप्रेत्य व्याचष्टे- **अथवा केनचिदाकारेणे**ति। ननु परगतातिशयाधानेच्छयोपादेयत्वमेव यस्य [धर्मः], स तच्छेष इत्येवास्तु किं निरूपकधर्मवाचिस्वरूपपदेन ; व्यावर्त्याप्रसिद्धेरित्यत आह—**न च निरूपकशब्दस्ये**ति। स्वरूपशब्दस्य निरूपकधर्मे व्युत्पन्नत्वान्निरूपकेत्युक्तम् ; यदतिशयैकपरमप्रयोजनत्वं यस्य धर्मः, स तच्छेष इत्युक्तेऽपि न दोष इति भावः। **शेषभूतवस्तुगतातिशयान्तराधायकत्वेने**ति। शेषस्य शेष्यनुष्ठाप्यत्वेन शेषवस्तूत्पत्तेरपि शेषगतातिशयरूपतया शेषिणोऽपि तदाधायकत्वसंभवादिति भावः। **परमप्रयोजनत्वं परमशब्दव्युदसनीय**मिति। शेषगतातिशयस्येति शेषः। प्रकृष्टकृपान्वितेषु परातिशयस्य स्वरसतः परमप्रयोजनत्वावगतिमुपपाद्य स्नेहान्वितेष्वप्युपपादयति—**तथा मित्रादिष्वि**त्यादिना। **बन्धविशेषान्वितेष्वि**ति। संबन्धविशेषान्वितेष्वित्यर्थः। **पुरुषविशेषं प्रति न नियतं पुरुषभेदेनाप्यनियतं चे**ति। अस्य स्निग्धस्यामुं स्निग्धविशेषं प्रति परगतातिशयैकप्रयोजनत्वमस्तीति नियमोऽपि नास्ति। यथा भृत्यादेर्यावज्जीवं यत्किंचित् प्रति पारार्थ्यं नियतम्, एवं स्निग्धव्यक्तिविशेषनियमाभावेऽप्यन्यस्मिन् स्निग्धव्यक्तिविशेषे उपकारकतयैवावतिष्ठत इत्यपि न नियमोऽस्तीत्यर्थः। येषां स्वातन्त्र्यबुद्ध्या परातिशयाधानेऽपि स्वार्थत्वबुद्धिः, तेषामलक्ष्यतया न तत्राव्याप्तिर्दोषायेत्येकं परिहारम्, यदीदृक्त्वं न दृश्यते तेषां न भृत्यत्वमिति भाष्येणोक्त्वा अलक्ष्यत्वाङ्गीकरणस्यायुक्तत्वं मत्वा परिहारान्तरमाह—**यद्वा यद्यपि गर्भदासादय** इति। वास्तवं पारार्थ्यमेव लक्षणम्। न प्रतीयमानमिति भावः। **ज्ञायमानत्वं चास्य किंचित्कार** इति। लीलारसनिष्पादनं पूर्वोक्तं चशब्देन समुच्चीयते।

दूषणान्तरमेव दर्शयति—**एकपदेन कार्यमित्यादिना**। ननु लिङ्ष्वन्यतममेव कृतिसाध्यत्वेन प्रतीयत इत्ययुक्तम्। यागस्य सुखदुःखाभावेतरत्वात् साधनत्वप्रतीतेश्च प्रथमतोऽभावात् यागे कृतिसाध्यत्वप्रतीतिर्न स्यादित्याशङ्क्य, क्रियाति-

रिक्तस्यापूर्वस्य साक्षात् कृतिविषयतया साध्यत्वासंभवात् किंविषयकृतिसाध्यमपूर्व-मित्याकाङ्क्षायां यागविषयककृतिसाध्यमिति यागस्यावच्छेदकतया विषयत्वमात्रं प्रतीयते, न साध्यत्वमित्याह— **कृतेः क्रियातिरिक्तगोचरत्वादर्शनेनेति** । **सुखेत्यादेरेवं वार्थ** इति । पूर्वस्मिन् पक्षे कृतिसाध्यत्वे इष्टत्वं प्रयोजकतया नोपन्यस्तम्, अपितु सुखदुःखाभावतत्साधनान्यतमत्वमित्युक्तम् । अस्मिंस्तु पक्षे त्रिष्वप्यनुगतमिष्टत्वमेव कृतिसाध्यत्वप्रयोजकमुच्यत इति विशेषः । संभावितप्रकारान्तरेण प्रयोजनत्व-निराकरणपरतया पौनरुक्त्यपरिहारं दर्शयन् **अपिचेत्यादिभाष्यमवतारयति—पूर्वं तृतीयाकाररूपमित्यादिना** । **पर्यायशब्दबाहुल्यसंभवादिति** । नियोगपर्याय-मित्युक्ते नियोगशब्द एव पर्यायशब्द इति प्रतीयते । अपरशब्दप्रयोगे तु नियोग-वाचिशब्देषु सोऽपि कश्चित् पर्याय इति प्रतीयत इति भावः । भाष्ये—**पश्चात्तु भोक्ष्यत** इति । परिपाकदशायां सुखत्वेनानुभूयत इत्यर्थः । नियतैहिकानि कारीर्यभिचारादीनि । नियतामुष्मिकाणि स्वर्गार्थानि कर्माणि । पशुपुत्रान्नाद्यर्थानि त्वत्रैव जन्मनि कर्मणः परिपाके ऐहिकानि, इतरथा आमुष्मिकाणीत्यतोऽनियतैहिका-नीति पूर्वतन्त्रे स्थितम् । ततश्च भाष्ये अनुभूयमानान्नाद्यारोगतादिव्यतिरेकेणेत्य-नियतैहिकफलानामप्युपादा (पपाद) नात्, भाष्ये नियतैहिकशब्दो नियतामुष्मिकस्वर्गादि-साधनकर्मविलक्षणमात्रपर इति नियतैहिकशब्देन पश्वन्नाद्यर्थकर्मणामपि संग्रहं हृदि निधाय तेषु च कर्मसु सति प्रतिबन्धके तदानीमेवेह फलानुभवासंभवात् तदानीमनु-भूयमानान्नाद्यारोगतादिव्यतिरेकेणेति ग्रन्थासामञ्जस्यं मन्वानः सोपस्कारं व्याचष्टे — **अप्रस्तुतप्रतिबन्धकस्य कर्मण इत्यर्थ** इति । इति शेष इत्यर्थः । **अन्त्येष्टि-सापेक्षेति** । परिधानीये कर्मणि “ दक्षिणे हस्ते जुहूं सादयति ” इत्यादिवाक्य-विहितकर्मोपयुक्तजुह्वादिपात्रप्रतिपत्तेरपि स्वर्गाद्यर्थकर्माङ्गतया सर्वाङ्गापूर्वसाध्यपरमा-पूर्वस्य जुह्वादिप्रतिपत्त्यनन्तरभावित्वेन ततः पूर्वमनिष्पत्तेरिति भावः ।

**अर्थवादोक्तत्वात् त्यज्यत** इति । अर्थवादप्रामाण्यस्य सिद्धान्तेऽप्यभ्यु-पगतत्वेनार्थवादोक्तत्वमात्रेण त्यागं न ब्रूम इत्यर्थः । **व्युत्पत्तिर्नास्तीति विचार** इति । व्युत्पत्तिर्नास्तीति पूर्वपक्ष इत्यर्थः । वैविध्येन बुद्धेः संचारणं हि विचारः । ननु ब्रह्मविचारारम्भस्य न्यायसिद्धत्वे तद्विधायकं “ परीक्ष्य लोकान् ” इति वाक्यं

व्यर्थं स्यादित्याशङ्कयाह—**परीक्ष्य लोकानित्यादि वाक्यमिति** । **उद्देश्योपादेयविभागवदिति** । यद्यपि "तत्त्वमसि" इति वाक्यवदुद्देश्योपादेयविभागशून्यस्यापि वाक्यत्वं संभवति, तथापि सूत्ररूपवाक्यस्य तद्रूपत्वं वक्तव्यमिति भावः । **विधेयं ह्युपादेयमिति** । यद्यपि देशकालादिविधौ विधेयस्यापि देशकालादेर्नोपादेयत्वम्, तथापि प्रायिकत्वमभिप्रेत्यैतदुक्तमिति द्रष्टव्यम् । **व्युत्पत्तिर्नास्तीति वाक्येनेति** । पूर्वपक्षयुक्तिभिरित्यर्थः । अस्य सूत्रस्याप्रवृत्तप्रवर्तकत्वमपि संभवति । यथा "कृष्णलं श्रपयेत्" इत्यस्य श्रपणे प्रयोजनाभावेन निवृत्तस्य प्रतिप्रसवरूपतया विधित्वमित्याह—**अत्र हि रागतः प्रवृत्तिमत** इति ।

---

( जन्माद्यधिकरणम् )

**वाक्यतर्करूपत्वादिति** । वाक्यविचाररूपत्वादित्यर्थः । **सकलेतरपुरुषार्थेति** । कर्मणामल्पास्थिरफलत्वावगत्यनन्तरमनन्तस्थिरफलत्वेनापाततःप्रतिपन्नानां ब्रह्मतदनुबन्धितदुपासनतत्प्राप्त्यादीनां विचार्यत्वमिति हि जिज्ञासासूत्रार्थ इति भावः । ततश्चेतरत् परित्यज्य प्राप्यत्वेन प्रापकत्वेन ब्रह्म जिज्ञास्यमित्यस्य कथं सूत्रार्थत्वमिति न चोदनीयम् । व्याख्यात्रन्तरोक्तजिज्ञास्यपदप्रयोजनं दूषयति—**अनेन जिज्ञास्यमिति पद** इति । भाष्ये जिज्ञास्यमिति पदस्य संगतिसूचनार्थतया व्याख्यातत्वेन यत् कैश्चिदुक्तं 'जिज्ञास्यमिति पदे प्रधानाद्यौपचारिकार्वाचीनब्रह्मशब्दार्थव्यावृत्तिः' इति तत्रेत्यर्थः । ततश्च जिज्ञास्यपद इति सप्तमी ; न तु जिज्ञास्यपदेनेति तृतीयेति मन्तव्यम्, नेत्यस्य पृथक्पदत्वेन निषेधार्थकत्वात् । तत्र हेतुमाह—**तच्च व्यावर्तकस्येति** । तच्च व्यावर्तनमित्यर्थः । **वक्तव्यतया** । उक्त्येत्यर्थः । **अपिः** संभावनार्थः, एवकारार्थो वा । ततश्चायमर्थः—महामहिमशालित्वेन प्रसिद्धप्रणववेदप्रधानब्रह्मविष्णुरुद्राग्नीन्द्रादीनां मध्ये किं निरतिशयबृहदिति प्रश्ने, प्रणवादिव्यावृत्तिर्हि व्यावर्तकलक्षणोक्त्यैव सिध्यति, न ततः प्राक् प्रश्नसमये । ततश्च 'जिज्ञास्यम्' इत्यस्योक्तरीत्या संगतिसूचकत्वमेव । न तु प्रधानादिव्यावर्तकत्वमिति । **यदेव निरतिशयबृहदुक्तं तदेव जिज्ञास्यमिति** । नन्वेतद्ग्रन्थपर्यालोचनायाम्, "यतो वा इमानि" इति वाक्ये "तद्विजिज्ञासस्व" इति जिज्ञास्यत्वं विधीयत इति प्रतीयते । तदनुसाराच्च "अधीहि भगवः" इति प्रश्नोऽपि किं जिज्ञास्यमिति जिज्ञास्यविषयक

एव, इतरथा प्रश्नोत्तरयोर्वैयधिकरण्यप्रसङ्गात् । ततश्च तदनुसारिसूत्रेऽपि तथैव प्रश्नोत्तराभ्यां भवितव्यम् । न च तद्युज्यते । उत्तरत्र [हि?] ग्रन्थकारैरेव यत्नेन, "विजिज्ञासस्वेति न विचारस्योपासनस्य वा विधिः, अपितु ब्रह्मत्वस्यैव" इति वक्ष्यते । अतः कथं तयोरविरोध इति चेत्—अत्र केचित्—"इतरे त्वर्थसामान्यात्" इति सूत्रे "जगत्कारणतयोपलक्षितम्" इति भाष्यव्याख्याने "केषुचिदुपासनेषु जगत्कारणत्वमनुसन्धेयम् । केषुचिन्न । यत्रानुसन्धेयम्, तत्र ज्ञाप्यान्तर्गतत्वाज्जगत्कारणत्वं विशेषणम् । यत्र तु नानुसन्धेयम्, तत्रोपलक्षणम, ज्ञाप्यानन्तर्गतत्वात्" इति वक्ष्यमाणत्वेन तद्ग्रन्थपर्यालोचनायां "यतो वा" इति वाक्ये जिज्ञास्यत्वलक्षणमुपास्यत्वमेव विधीयते । ततश्च विधेये उपासने जगत्कारणत्वस्यान्वयानन्वयाभ्यां विधेयान्वयित्वानन्वयित्वलक्षणे विशेषणत्वोपलक्षणत्वे अपि संभवत इति प्रतीयते । ततश्च तद्ग्रन्थानुरोधेन "यतो वा" इति वाक्ये जिज्ञास्यत्वमेव विधीयत इति पक्षोऽप्याचार्याणामभिमत एव । "न विचारस्योपासनस्य वा विधिः" इत्युत्तरग्रन्थानुसारेण सोऽपि पक्षोऽभिमत इति, उभयथापि संप्रदायसत्त्वादिति च वदन्ति ।

**समासार्थनिर्णयार्थं वाक्यान्तरसापेक्षत्वेनेति** । वाक्यार्थकथनव्याजेनैव समासार्थव्याख्यानासंभवात् जन्मादिपदस्य पृथग् व्याख्यानमवश्यमपेक्षितमित्यर्थः । **ब्रह्मण एव निमित्तोपादानत्वाभिप्रायनिबन्धन** इति । इदं च "अखिल—" इत्यादिश्लोकव्याख्यानावसरे सुस्पष्टमुपपादितम् । **अत्र समुदितविवक्षेति** । दर्शपूर्णमासाभ्यामित्यत्रेत्यर्थः । **नपुंसकत्वं चेति** । "स नपुंसकम्" इति सूत्रेणेति भावः । **जन्मादीत्यत्रेतिकरणेनेति** । 'जन्मादिशब्देन' इत्यनुक्त्वा अनुक्रियमाणरूपाविनाशेन एकवचनान्तस्यैवानुकरणादिति भावः । शङ्कते—**ननु नेदं समुदितमपि लक्षणमिति । विशेषणं विशेष्यं चैककार्यान्वितत्वेनेति** । तस्यान्यपदार्थस्य गुणो वर्तिपदार्थः । तस्यापि कार्यान्विततया संविज्ञानं येन स तद्गुणसंविज्ञानो बहुव्रीहिरिति तत्पुरुषगर्भो बहुव्रीहिः । न तु स च गुणश्च तद्गुणाविति द्वन्द्व इति मन्तव्यम्, तथा हि सति "त्यदादीनि सर्वैर्नित्यम्" इत्येकशेषेण 'स च गुणश्च तौ" इति रूपप्रसङ्गेन तद्गुणेति रूपासिद्धिप्रसङ्गात् । समुदायस्य विवक्षितत्वे "सर्वादीनि" इति बहुवचनं न स्यादित्याशङ्क्याह—समु-

**दायिनो वान्यपदार्थतयेति । विशिष्टसमुदायान्तर्गतत्वाकारेणेति ।** अयं भावः — मत्वर्थे बहुव्रीहेरनुशिष्टत्वात् 'वासस्विनमानय' इत्यादौ वासःसंयोगस्यैव मत्वर्थतया प्रतीतेः, तस्य च वासो विना आनयनासंभवात् वासोविशिष्टस्यैवानयनम् । तद्वदेव 'शुक्लवाससमानय' इति तद्गुणसंविज्ञानबहुव्रीहौ वासःसंयोगस्यैव मत्वर्थानुशिष्टबहुव्रीह्यर्थतया प्रतीतेः अन्तरेण वासस्तस्यानयनासंभवात् तद्वत एवानयनम् । 'गोमन्तमानय' इत्यत्रेव 'चित्रगुमानय' इत्यत्रापि स्वामित्वस्यैव बहुव्रीह्यर्थतया प्रतीतेस्तस्य चानयनेऽपि चित्रगवीनां स्वामित्वलक्षणसंबन्धानपायान्न गवामानयनम् । तद्वदिहाप्यन्यपदार्थे जन्मस्थितिलयारब्धसमुदाये जन्मन आद्यावयवत्वेनानुप्रविष्टत्वात् अवयवावयविभावस्य च मत्वर्थविहितबहुव्रीह्यर्थत्वादवयवेन विनावयविनोऽभावाज्जन्मनोऽपि ग्रहणं सिद्धमित्यर्थः । **कृत्स्नस्य भुवनस्यैककार्याविशेषेणेति ।** कृत्स्नस्य कार्यवर्गस्यैककार्यवदनायासेन एकेन कर्त्रा संकल्पमात्रेण निर्मितत्वज्ञापनार्थमिति भावः ।

**प्रसिद्धवन्निर्देशरूपतयेति ।** ननु ग्रहाधिकरणे एकवचनार्थस्याविवक्षाङ्गीकारेऽपि प्रातिपदिकार्थतया कथं तस्याविवक्षाऽङ्गीकर्तुं शक्यत इति चेत् — न । यथा "यस्योभयं हविरार्तिमार्च्छेति" इत्यत्र प्रातिपदिकार्थेऽपि हविर्विशेषणीभूतोभयत्वे न श्रुतेर्विवक्षा, एवं "भूतानि" इत्यनेनैवोद्देश्यस्य लब्धत्वात् "इमानि" इति शब्दार्थे न विवक्षाऽङ्गीकर्तुं शक्येति हि तस्याभिप्रायः । न तु "इमानि" इत्यस्यैव पदस्योद्देश्यसमर्पकत्वमप्यङ्गीकृत्य विशेषणांशे न तात्पर्यमित्युच्यते । नन्वेवं सति 'प्रसिद्धवन्निर्देशरूपतयानुवादरूपस्य' इति व्यर्थम् ; इदंशब्दार्थे उद्देश्यविशेषणे तात्पर्याभावादित्येव सुवचमिति चेत् । मैवम् — इदंशब्दस्यार्थभूते उद्देश्यविशेषणे वाक्यस्य तात्पर्याभावेनेत्यन्वयः । अचिन्त्यरचनत्वादेः संनिहितवाचीदंशब्दार्थत्वोपपादकः "अनुवादरूपस्य" इत्यन्तो ग्रन्थ इति द्रष्टव्यम् । नन्वेवं "भूतानि" इत्यत्र बहुवचनमप्यविवक्षितं स्यात् । अन्ततो गत्वा यच्छब्दार्थतया अनुवाद्यस्य ब्रह्मणो विशेषणभूतं भूतकारणत्वमप्यविवक्षितं स्याद् । तथा "सर्वाणि ह वा इमानि भूतानि" इत्यादौ सर्वत्वमप्यविवक्षितं स्यादिति कोऽयमाक्षेप इति चेत् — न । न्यायसाम्यादापातत आक्षेपस्य तत्परिहारस्य च दर्शने दोषाभावात् । **ग्रहबहुत्वस्य विरुद्धं ह्येकत्वमिति ।** तत्र ह्युत्पत्तिवाक्ये ग्रहाणां दशत्वसंख्या अवगतैवेति

'कियन्तो ग्रहाः संमार्ष्टव्याः' इत्याकाङ्क्षाया अभावादनाकाङ्क्षिता संख्या अविवक्षिता। अत एव "चमसाध्वर्यून् वृणीते" इत्यत्र चमसाध्वर्यूणामुत्पादकवाक्यान्तराभावेनोत्पत्तिवाक्यावगतसंख्यान्तरसंबन्धाभावेन संख्याकाङ्क्षायाः सत्त्वात् "चमसाध्वर्यून्" इति बहुत्वस्य विवक्षाङ्गीकृता। तथा "मैत्रावरुणः प्रेष्यति चान्वाह च" इत्यत्र व्यस्तयोः प्रैषानुवचनयोर्निर्ज्ञातकर्तृकत्वेन समस्तयोरेव प्रैषानुवचनयोः कर्त्राकाङ्क्षासत्त्वात् प्रैषानुवचनरूपोद्देश्यगतं चशब्दावगतं साहित्यं विवक्षितम्। ततश्च सहितयोरेव प्रैषानुवचनयोर्मैत्रावरुणकर्तृत्वविधिरिति पूर्वतन्त्रे स्थितत्वात्। इह तु ब्रह्मण इतरव्यावृत्तमहामहिमप्रदर्शनार्थतया "इमानि" इत्यस्यापेक्षितत्वादिति भावः। **तत्र तत्राङ्गीकृतेति**। "यस्योभावग्नी अनुगतावभिनिम्रोचेदभ्युदियाद्वा पुनराधेयं तस्य प्रायश्चित्तिः" इत्यत्राग्निद्वयोत्पादनसमर्थविधेयाधानान्वयानुपपत्त्या वाक्यस्यायुक्तार्थत्वलक्षणानर्थक्यप्रसङ्गेनाग्न्युभयत्वस्य विवक्षा। तथा "युवं हि स्थः स्वःपती इति द्वयोर्यजमानयोः प्रतिपदं कुर्यात्" इत्यादौ द्वित्वादिविवक्षा; तामङ्गीकृत्य कुलायादिसूत्कर्षाभ्युपगमादिति भावः। किमयं तसिल्प्रत्ययः "तसेश्च" इति विहितस्तसिस्थानिकः, उत "पञ्चम्यास्तसिल्" इति विहितो वेति विकल्प्याद्यं दूषयति — **तसिप्रत्ययस्येति**। द्वितीयं दूषयति — **एवं तसिलोऽपीति**। **धर्मिस्वरूपस्य कल्याणतामाहेति**। ज्ञानत्वादेः कल्याणत्वे कथिते धर्मिणोऽपि कल्याणत्वं कथितं भवतीत्यभिप्रायः। **आदिशब्देन सत्यत्वमानन्त्यं च विवक्षितमिति**। इदमुपलक्षणं सार्वज्ञ्यादीनाम्। तेषामपि कल्याणत्वस्यावश्यबोध्यत्वादिति द्रष्टव्यम्। **हेयप्रत्यनीकत्वं पूर्वमुक्तमिति**। अतो न तत् आदिपदग्राह्यमिति भावः। वस्तुतस्तूक्तस्याप्यनन्तत्वकल्याणत्वबोधनार्थं तस्याप्यादिपदेन ग्रहणे न दोष इत्यपि द्रष्टव्यम्। नन्वादिशब्देनानन्त्यस्यापि ग्रहणे 'अनन्तकल्याणगु[णग]णात्' इति निर्दिष्टमानन्त्यं कथमन्वेतु, आनन्त्ये आनन्त्याभावादित्याशङ्क्याह — **आदिशब्देनानन्त्यस्य गृहीतत्वेऽपीति**। **अन्येषामनुभवितॄणामपीति**। स्वानुकूलत्वमानन्दत्वम्, अन्येषामप्यनुकूलत्वं कल्याणत्वमिति तयोर्भेदः। सौलभ्यानुक्तौ हेतुमाह — **संश्रितसौलभ्यं चेति**। ततश्च कारुणिकत्वेनैव सिद्धमित्याशयः। [illegible] दयायाः कारणत्वोपयोगित्वमुक्त्वा जिज्ञास्यत्वोपयोगमाह — **संश्रितेति**।

**विभूतेश्च जिज्ञास्यान्तर्भावज्ञापनार्थ**मिति । ननु 'यतो देवदत्त उत्पन्नः स उपास्यः' इत्युक्ते न हि देवदत्तस्याप्युपास्यत्वमस्ति । अतश्च कथं जगतोऽप्युपास्यत्वमिति चेत्---न । यत इत्यस्य चिदचिद्विशिष्टादित्यर्थकत्वेन यच्छब्दनिर्दिष्टस्य चिदचिद्विशिष्टस्यैव तच्छब्देन निर्देष्टव्यतया तस्याप्युपास्यत्वसिद्धेः । **उपासात्रैविध्यतत्क्रतुन्यायाभ्या**मिति । नन्वेवं ताभ्यामेवोपास्यत्वसिद्धेरस्योपास्यान्तर्भावज्ञापनं व्यर्थम् । किंच उपासात्रैविध्यस्थले तदुपास्यत्वसिद्धावपि सर्वत्रोपास्यतान्वये प्रमाणाभावः । नापि तत्क्रतुन्यायात् तत्सिद्धिर्युज्यते ।

"उपासितगुणादेर्या प्राप्तावप्यबहिष्क्रिया ।
सा तत्क्रतुनयग्राह्या नाकारान्तरवर्जनम् ॥"

इति न्यायेनोपास्यगुणानां प्राप्तिरित्येतावन्मात्रं सिध्यति, न त्वनुपासितगुणानामननुभवः । तथा हि सति मुक्तौ सर्वगुणविशिष्टस्य ब्रह्मणः प्राप्यतया सर्वासूपासनासु सर्वगुणविशिष्टमुपास्यमित्युपासनारूपभेदः क्वचिदपि न स्यादिति चेत्---न । 'उपास्यान्तर्भावः' इत्यस्य ब्रह्मशब्दार्थान्तर्भाव इत्यर्थः । सत्यत्वज्ञानत्वादौ लक्षणतया कथिते हि विशेष्यमात्रमेव ब्रह्मशब्दार्थ इति शङ्का स्यात्, तस्य विशेष्यमात्रनिष्ठत्वात् । जगज्जन्मादिहेतुत्वे लक्षणतया कथिते न सा शङ्काऽवतिष्ठते; जगत्कारणत्वस्य विशिष्टनिष्ठत्वादित्येव तात्पर्यात् । **हेत्वर्थत्वं च जन्मस्थितिलयसाधारणत्वा**दिति । यदि हि 'जन्मास्य यतः' इत्युच्येत, तदा "जनिकर्तुः प्रकृतिः" इत्युपादानार्थत्वशङ्का स्यात्, न तथेहेति भावः । **हेतौ पञ्चमी**ति । "विभाषा गुणेऽस्त्रियाम्" इत्यत्र योगविभागादगुणब्रह्मवाचिनो यच्छब्दात् पञ्चम्युपपद्यते । योगविभागे च ज्ञापकम् "हेतुमनुष्येभ्योऽन्यतरस्याम्" इत्यत्र हेतुग्रहणम् । तत्र हि 'नाव आगतं नौरूप्यम्' इत्यादावनुपादानभूताया नावो हेतुपञ्चमीं सिद्धवत्कृत्य "हेतुमनुष्येभ्यः" इति पञ्चम्यन्तात् रूप्यप्रत्ययो विधीयते ।

अत्र केचित्---"हेतुमनुष्येभ्यः" इत्यस्य यत्र "विभाषा गुणे" इति पञ्चमी 'जाड्यादागतः' इति, तत्र सावकाशत्वान्न ज्ञापकत्वं संभवति । न च "अइउण्" इत्यत्र "विवारभेदात्" इत्यत्र "विभाषा गुणे इति पञ्चमी" इत्युक्तत्वात् तद्वदि-

हापि पञ्चमीति वाच्यम्, तत्र "सत्त्वे निवेशिते (निविशते?) ऽपैति" इति पारिभाषिक-गुणस्य ग्रहणे "विकारभेदात्" इति भाष्यकारनिर्देशानुपपत्त्या परतन्त्रमात्रवाचि-गुणग्रहणेऽप्यपरतन्त्रब्रह्मवाचियच्छब्दात् पञ्चम्यां प्रमाणाभावात । ततश्च लोकदृष्ट्या जन्मस्थितिलयास्ततो विश्लिष्टा इव दृश्यन्ते इत्यपायावधित्वेनापादानत्वात् पञ्चमीति मन्यन्ते—तत् तुच्छम् ; "कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसंप्रत्ययः" इति न्यायेन तत्र शास्त्रे परिभाषितस्यैव गुणस्य ग्रहणौचित्यात् । वृत्त्यादौ च तदनुरूपत्वेनो-दाहरणप्रत्युदाहरणयोः दर्शितत्वाच्च । तेन 'विकारभेदात्' इति निर्देशो ज्ञापकः 'विभाषा' इति योगविभागस्य । अत एव "वह्निमान् धूमात्" इत्यादिप्रयोगः । अन्यथा धूमस्य द्रव्यत्वेना (न) पारिभाषिकगुणत्वस्याप्यभावात् पञ्चमी न स्यात् । तेन सुष्ठूक्तम्, 'हेतौ पञ्चमी' इति । यदुक्तम् "लोकदृष्ट्या ततो विश्लिष्टा इव भवन्ति" इति—तन्न; लोकदृष्ट्याश्रयणे "भीत्रार्थानाम्" इत्यादिसूत्राणां व्यर्थत्व-प्रसङ्गात् । 'मृदो घट, शृङ्गाच्छरो जायते, गोलोमाविलोमभ्यो दूर्वा जायन्ते' इत्यादौ घटदूर्वादीनां बिलात् दीर्घभोग्यपक्रमणवत् लोकदृष्ट्यापक्रमणदर्शनेनापाय-सत्त्वेन "ध्रुवमपाये" इत्येवापादानत्वस्य सिद्धत्वात् । यथान्यासं संप्रधारणायां तु हेतौ पञ्चमीत्येव गतिरित्यलं प्रपञ्चेन ।

ईश्वरस्य निर्विकारतया निमित्तत्वमेव, नोपादानत्वमित्यभिमन्यमानः शङ्कते — **नन्वीश्वर एवेति** । ननु लक्षणेऽपि जगज्जन्मादिनिमित्तत्वमेव विवक्षितमित्याशङ्क्याह **निमित्तमुपादानं चेति** । **अध्यस्तान्तरेति** । "पुरुष एवेदं सर्वम्". "ज्योतींषि विष्णुः" इत्यादिनिर्देशायोगादित्यर्थः । **ईश्वर एवोपास्यः प्राप्यश्चेति** । न त्वीश्वरातिरिक्तं ब्रह्मेत्यर्थः । नन्वेवं सत्यज्ञानादिकमेव लक्षणमुच्यतामित्याशङ्क्याह — **उपासनं च जगद्विशिष्टविषयमिति** । ननूपासनस्य विशिष्टविषयत्वे प्राप्तिरपि तद्विषया स्यादित्याशङ्क्य इष्टापत्त्या परिहरति — **प्राप्तिश्च विशिष्टविषयेति** । **जिज्ञास्यब्रह्मलक्षणं जन्माद्येवेति** । यद्यपि, "ब्रह्मविदाप्नोति परम्" इत्युक्ते, किं तद्ब्रह्म? कीदृशं वेदनम्? कीदृशी प्राप्तिरिति जिज्ञासाया-मेव "सत्यं ज्ञानमनन्तम्" इति मन्त्रप्रवृत्तेः सत्यत्वादिकं जिज्ञास्यब्रह्मलक्षणमेव इतरथा तत्कथनस्यानाकाङ्क्षिताभिधानत्वप्रसङ्गात् । उपासात्रैविध्यस्य सिद्धान्तेऽप्यभ्यु-

पगतत्वेन स्वरूपस्याप्युपास्यत्वाच्च — तथापि 'विभूतेरप्युपास्यान्तर्भावज्ञापनार्थम्' इति पूर्वोक्तयुक्त्यावेव तात्पर्यम्। **शोधकवाक्यार्थश्च यच्छब्देन गर्भित** इति। ननु कारणवाक्यप्रवृत्त्यनन्तरमेव कारणत्वशङ्कितदोषनिराकरणार्थतया शोधकवाक्यस्य प्रवर्तयिष्यमाणत्वात् न तद्वाक्यार्थस्यैतद्वाक्यप्रवृत्तिदशायां गर्भितत्वं संभवति। किंच भृगुवल्ल्याम्, "आनन्दाध्येव खल्विमानि भूतानि जायन्ते" इति निश्चायकवाक्यानां पश्चादेव प्रवृत्तेः 'सर्वेश्वरात् सत्यसंकल्पात्' इत्यादि विशेषणमपि यच्छब्दगर्भितं कथं स्यात्? शिष्येणाश्रुतवेदान्तेन भृगुणाऽस्य सर्वस्यार्थस्याज्ञानादिति चेत्—न, अस्त्वयमश्रुतवेदान्तः। अथापीदृशजगन्निर्मातृत्वमीदृशविशेषणविशिष्टस्य संभवेदिति संभावनां शिष्यस्य स्फोरयन्नाचार्यः प्रतिपादयतीत्युक्ते विरोधाभावात्। किंच पुंसूक्तसद्विद्यादिवाक्यैः सर्वज्ञस्य सर्वशक्तेर्लक्ष्मीपतेरेव कारणत्वं निश्चित्य तत्र निरतिशयब्रह्मत्वमजानतो भृगोः "अधीहि भगवो ब्रह्म" इति जिज्ञासया प्रश्नसंभवाच्च। ननु शिष्यस्य प्रागेव कारणविशेषनिश्चयवत्त्वे 'तद्विजिज्ञासस्व, तद्ब्रह्म' इत्येतावतैव कृतकृत्यत्वात् कारणविशेषनिश्चायकोत्तरसन्दर्भो व्यर्थः स्यादिति चेत् — न। सम्यग्निश्चयाभावेन तत्सार्थक्यात्। भाष्ये—**यत्प्रयन्त्यभिसंविशन्तीति**। प्रयन्ति सन्ति यदभिसंविशन्तीति योजना। प्रयन्तीत्यस्य प्रलीयमानानीत्यर्थः। अभिसंविशन्ति = प्राप्नुवन्तीत्यर्थः। अत्र प्रयन्तीत्यात्यन्तिकलयोऽपि विवक्षितः। अतो मुक्तप्राप्यत्वमप्यन्तर्भवति। अत एव ग्रन्थकृता, "प्रयन्तीत्येतदविशेषेणात्यन्तिकलयरूपं मोक्षमपि प्रतिपादयति, यच्छब्देन मुक्तप्राप्यतयापि ब्रह्म निर्दिष्टं भवति" इत्युक्तम्। ननु यत् प्रयन्ति, यदभिसंविशन्तीति यच्छब्दानुषङ्गेण लयस्थानत्वं मुक्तप्राप्यत्वमुच्यते; अभिसंविशन्तीति बन्धकत्वं वोच्यत इति चेत्—न। यच्छब्दावृत्तिप्रसङ्गादिति द्रष्टव्यम्।

**शास्त्रं प्रणाड्या विषय** इति। लक्षणवाक्यं लक्षणतो ब्रह्म प्रतिपादयितुं शक्नोति, न वेति विचारः, शास्त्रं ब्रह्मणि प्रमाणं न वेति विचारे प्रणाड्या पर्यवस्यतीति भावः। **कारणमनूद्यते** इति पाठः समीचीनः, उत्तरत्र 'कारणस्य ब्रह्मत्वं विधीयते' इत्युक्तेरिति द्रष्टव्यम्। **देवदत्तकेदारो बुभुत्सित** इति। अतो देवदत्तकेदारत्वमेव विधानयोग्यमित्यर्थः। **धीस्थः सारससंबन्धो दृष्ट** इति।

सारससंबन्धो धीस्थः=निश्चित इत्यर्थः । तत्र च हेतुः, दृष्ट इति । दृष्टत्वेन निश्चिततया न विधेयत्वमिति भावः । **तस्य देवदत्तकेदारलक्षणत्वं ह्यज्ञातमिति** । सारससंबन्धिनो देवदत्तकेदारत्वमज्ञातमित्यर्थः । लक्षणशब्दः स्वरूपवचनः । केचित्तु— देवदत्तकेदारो बुभुत्सितो धीस्थः । अतो न विधेय इति योजयन्ति । तन्न; सामान्यतो देवदत्तकेदारस्वरूपस्यावगतत्वेऽपि ‘ अयं देवदत्तकेदारः ’ इति विशिष्योद्देश्यसंबन्धितयाऽनवगतत्वाद्विधेयत्वोपपत्तेः । विशिष्य निश्चितत्वे बुभुत्साया एवानुपपत्तेः । ‘ देवदत्तकेदारलक्षणं किंचिदस्ति ’ इति निश्चयस्यापि सत्त्वेन देवदत्तकेदारलक्षणत्वस्याप्यविधेयत्वप्रसङ्गात् । यदि च सारससंबन्धे देवदत्तकेदारलक्षणत्वस्याज्ञातत्वाद्विधेयत्वम्, तर्हि सारससंबन्धिनि देवदत्तकेदारत्वस्याप्यज्ञातत्वाद्विधेयत्वोपपत्तेः ।

**तस्य निरतिशयबृहद्वस्तुलक्षणत्वमिति** । कारणस्य निरतिशयबृहद्वस्तुस्वरूपत्वमित्यर्थः । तादृशशब्दार्थमाह—**पूर्वपक्षानुगुणे**नेत्यादिना । **सिद्धस्वरूपं ब्रह्मे**त्यादिकं समन्वयाधिकरणभाष्यवाक्यम् । **किं सृष्ट्यादीनां विशेषणत्वेनोपलक्षणत्वेन** चेति । ननु—लोके हि व्यावर्तकं द्विविधं विशेषणमुपलक्षणं चेति विकल्पयन्ति । लक्षणे न तथा विकल्पो दृष्ट इति चेत्—न । लक्षणस्यापि व्यावर्तकत्वेन विकल्पोपपत्तेः । हेत्वाभासलक्षणे अनुमितिप्रतिबन्धकज्ञानविषयत्वं विशेषणमुपलक्षणं वेत्यादिविकल्पदर्शनात् । ननु पूर्वतन्त्रे “ यदि रथंतरसामा सोमः स्यादैन्द्रवायवाग्रान् ग्रहान् गृह्णीयात ” इत्यत्र विशेषणस्याव्यवच्छेदकत्वेन रथंतरारथंतरसामयुक्तज्योतिष्टोमे रथंतरस्य विशेषणत्वायोगात् तन्मात्रसामकं क्रत्वन्तरं विधीयत इति पूर्वपक्षं कृत्वा स्वविरोधिगुणव्यवच्छेदकत्वमात्रेणापि विशेषणत्वोपपत्तेः ‘ नीलमुत्पलम् ’ इत्यादौ दैर्घ्याद्यव्यवच्छेदकस्यापि नीलत्वादेर्विशेषणत्वदर्शनाच्च प्रकृतस्यैव ज्योतिष्टोमस्य रथंतरं साम विशेषणमिति व्यवस्थापितत्वात् तेनैव गतमिति चेत्—न । तत्र यदिशब्दश्रवणेन प्रकृतस्यैव ज्योतिष्टोमस्याग्रताविशेषं प्रति रथंतरसामावच्छिन्नत्वस्य निमित्ततावगतिस्वारस्यात् तत्र तथात्वेऽपीह तदभावेन पूर्वपक्षप्रवृत्त्युपपत्तेः । **स्वाश्रयसकलधर्मव्यावर्तकतयेति** । ननु—स्वाश्रयसकलधर्मव्यावर्तकतया विशेषणत्वं क्वापि न दृष्टचरम् । तथाहि सति एकधर्ममात्रपरिशेषापत्तेः । खण्डत्वादेरपि स्वाश्रये गोत्वद्रव्यत्वादिसहिष्णुत्वादिति चेत्—न । समभि-

व्याहृतविशेषणान्तरव्यवच्छेदकत्वस्य 'खण्डो मुण्डः' इत्यादौ दर्शनादित्यत्र तात्पर्यात्। नन्वीदृशं भेदकत्वमुपलक्षणपक्षेऽपि संभवत्येव, तस्यापि व्यावर्तकत्वादिति चेत्—भवत्विदं दूषणमुपलक्षणपक्षेऽपि समानम्। का नः क्षतिः? केचित्तु—जन्मादिविशिष्टस्य ब्रह्मत्वं वा? उत तदुपलक्षितस्य? विशेषणत्वे जन्मविशिष्टस्य स्थितिविशिष्टस्य लयविशिष्टस्य चैक्यासंभवात् विशिष्टानामप्यैक्ये विशेषणानामप्यैक्यप्रसङ्गादित्यादिः सत्यादिवाक्ये मृषावादिभिरुक्तो दोषः पूर्वपक्षेऽप्यनुसन्धेयः। उपलक्षणपक्षेऽस्य दोषस्यासंभवादाकारान्तराप्रतिपत्तिर्दोष इति पूर्वपक्षिणो भावः। सिद्धान्ते तु सत्यादिवाक्ये सिद्धान्त्युक्तरीत्यैकस्य विशेष्यस्यानेकविशिष्टत्वसंभवात् न ब्रह्मव्यक्तिबाहुल्यप्रसङ्गः। जन्मरूपविशेषणान्विततया ज्ञातस्यापि स्थितिरूपविशेषणान्विततया ज्ञातस्यापि ब्रह्मण ऐक्यसंभवेन विशिष्टै(शेष्यै)क्यस्यापि संभवात् जन्मादिविशेषणान्विते ब्रह्मत्वस्य सत्त्वेन विशिष्टं ब्रह्मेत्युक्तौ दोषाभावात्। यदि च विशिष्टान्वयिनो विशेषणान्वयित्वनियमात् जन्मादिविशिष्टे ब्रह्मत्वान्वये जन्मादावपि ब्रह्मत्वान्वयप्रसङ्गान्नायं विशेषणपक्षो युक्त इत्याग्रहः, तर्ह्युपलक्षणत्वपक्षो भविष्यति, आकारान्तरप्रतिपत्तेः स्थितत्वादिति सिद्धान्त्यभिप्रायः। ततश्च परस्परविरुद्धयोर्विशेषणत्वोपलक्षणत्वपक्षयोः कथं भाष्येऽभ्युपगम इति चोद्यस्य नावकाश इति वदन्ति। केचित्तु—"विजिज्ञासस्व" इत्यत्रोपासनस्य विधानाज्जगत्कारणत्वस्योपासनेऽन्वयानन्वययोः सत्त्वात् भाष्ये विशेषणत्वोपलक्षणत्वाभ्युपगमो न विरुद्धः। श्रुतप्रकाशिकाचार्यैरपि "इतरे त्वर्थसामान्यात्" इत्यत्र भाष्याभिप्रायस्याविष्कृतत्वाच्च तथैवाविरोधो नेय इति वदन्ति। अन्ये तु—विशिष्टनिष्ठं जगत्कारणत्वं, विशेष्यनिष्ठं तु सत्यत्वादिकमिति बहुशो ग्रन्थकृद्व्यवहारदर्शनात् भाष्ये च, "जगत्कारणत्वोपलक्षितस्वरूपस्ये"ति बहुशो व्यवहारदर्शनाच्च जगत्कारणत्वं चिदचिद्विशिष्टस्य ब्रह्मणो विशेषणभूतं लक्षणम्; शुद्धस्वरूपस्योपलक्षणम्। जगत्कारणत्वस्य शुद्धस्वरूपनिष्ठत्वाभावात्। तदभिप्रायेणैव विशेषणोपलक्षणाभ्युपगमः। न च शुद्धस्वरूपानिष्ठस्य विशिष्टनिष्ठस्य जगत्कारणत्वस्य कथं शुद्धस्वरूपोपलक्षणत्वमिति वाच्यम्, तटस्थस्यापि शाखाग्रस्य चन्द्रोपलक्षणत्वदर्शनादिति वदन्ति। पाराशर्यविजये तु—विशेष्यनिष्ठत्वानिष्ठत्वाभ्यां विशेषणोपलक्षणभेदमाश्रित्य जगत्कारणत्वस्य ब्रह्मनिष्ठतया

विशेषणत्वम्, प्रपञ्चगतजन्मादेस्तु ब्रह्मस्वरूपानिष्ठतयोपलक्षणत्वमिति प्रकारो दर्शितः।

**ननु न केवलं प्रमाणान्तरेणैवैक्यप्रतीतिरि**ति। ऐक्यप्रतीतिः प्रमाणान्तरेणैवेति नियमो नास्ति; **शाब्दी च विद्यते** = शब्दादपि संभवतीत्यर्थः। सर्वात्मना अज्ञातगोव्यक्तित्वे 'को गौः' इति जिज्ञासाया एवानुदय इत्याशङ्क्याह — **प्रत्यक्षेणादृश्यमानगोव्यक्तेरि**ति। **वाक्यप्रयोगासंभवव्युदासाये**ति। अजिज्ञासुं प्रति वाक्यप्रयोगासंभवादिति भावः।

'शाखाग्रमुपलक्षणम्' इत्यस्यानन्तरं 'कालविशेषे देशविशेषसंबन्ध उपलक्ष्याकारः। शाखाग्रचन्द्रयोश्च ऋजुप्रदेशवर्तित्वं संबन्धः' इति पाठश्चेत् सुश्लिष्टः। **स च संबन्धो वाक्यावगत** इति। वाक्यबोध्य इत्यर्थः। 'क चन्द्रः' इति बुभुत्सुं प्रति संबन्धस्यैव ज्ञाप्यत्वात्। **चन्द्रशब्दबोध्यम्**। चन्द्रशब्दवाच्यमित्यर्थः। अनयोरेतावान् विशेष इत्याह — **केदारन्वाद्याकार** इत्यादिना। केदारान् साक्षात्कुर्वन्नेव पृच्छति 'को देवदत्तकेदारः' इति। चन्द्रमपश्यंस्तं मृगयमाण एव पृच्छति, 'क चन्द्रः' इति। अतो वैशिष्ट्यमिति भावः। **शब्दोत्थापिते**ति। 'चन्द्रो दृष्टो वा' इत्यादिशब्दोत्थापितेत्यर्थः। **ज्ञाप्यबहिर्भूतो ज्ञाप्यप्रतीत्युपाय** इति। शाखाग्रस्य चन्द्रप्रतीतिदशायामप्रतीतेरुपलक्षणत्वम्। प्रकृष्टप्रकाशत्वस्य चन्द्रप्रतीतिदशायामपि विषयत्वमस्ति; प्रकृष्टप्रकाशविनिर्मुक्तस्य चन्द्रस्याप्रतीतेरिति भावः। **शब्दतो धीस्थतये**ति। यत् पदजन्यपदार्थोपस्थितौ विषयभूतं सत् वाक्यार्थप्रतीतिदशायां स्वविशिष्टप्रतीतिमादधाति, तद्विशेषणम्; अन्यदुपलक्षणमिति भावः। **स्थूलसूक्ष्मात्मने नम** इतिवदिति। इदं पुराणप्रक्रियायां स्पष्टम्। **व्यतिरिक्त-अन्तर**शब्दयोः पौनरुक्त्यमाशङ्क्याह— **आकारान्तरमाकारविशेष** इति। **बृहत् बृहणं च, उपलक्षणभूताश्चे**त्यादिचशब्दानामर्थमाह— **आकारत्रयपृथक्त्वे**ति। तदितराकारद्वयसमुच्चयार्थ इत्यर्थः। **यद्वा ब्रह्मशब्देने**ति। बृहत्त्वस्य धात्वर्थत्वेऽपि बृंहणत्वस्य कथं धात्वर्थत्वमिति भावः। अस्मिन् पक्षे निरतिशयपरित्यागो भेदकः। **अनवधिकातिशयशब्दे तात्पर्यमि**ति। पूर्वपक्षे अनवधिकातिशयविशिष्टबृहत्त्वमुपलक्ष्यम्। अस्मिंस्तु पक्षे **बृहत्त्वं नोप-**

लक्ष्यम् । अपितु तद्गतोऽतिशय इत्यर्थः । **इदानीं चशब्द इति** । **प्रतिपन्नं ब्रह्मेति** चेत्यत्र चशब्द इत्यर्थः ।

भाष्ये "लक्षणभूतान्यपि विशेषणानि" इत्यत्रासाधारणधर्मत्वपर्यन्त-विवक्षायाः प्रकृते प्रयोजनाभावादाह—**व्यावर्तकभूतानीत्यर्थ** इति । लक्षणत्व-विवक्षामभ्युपेत्यापि साध्याकारं व्याचष्टे—**यद्वा लक्षणभूतानामिति** । उत्तरग्रन्थेन पौनरुक्त्यमाशङ्क्याह—**अयं ग्रन्थः पक्षविषय इति** । **भिन्नविषयत्वमेव भेद-कत्वमिति** । भेदकत्वप्रयोजकमित्यर्थः ।

**जीवजातीयत्वशङ्काऽतिष्ठत** इति । ननु—जीवासंभावितजगत्कारणत्व-श्रवणेऽपि जीवजातीयत्वशङ्का भवति चेत्, सत्यत्वादिश्रवणेऽपि जीवजातीयत्वशङ्का तदवस्थैव । जीवत्वव्यापकासत्यत्वादिव्यावृत्त्या जीवत्वाभावसाधनवत् जीवत्वाभाव-व्याप्तजगत्कारणत्वेन जीवत्वाभावानुमानसंभवादिति चेत्—न । कारणत्वशङ्कित-दोषव्यवच्छेदकतया सत्यादिलक्षणसार्थक्यमस्तीत्यत्र तात्पर्यात् । **स्वरूपतो धर्म-तश्चैकरूपत्वं ज्ञापयतीति** । नन्वेवं परमात्मनोऽपि सत्यत्वं न स्यात्, धर्मभूतचिद-चितोर्विकारसत्त्वादिति चेत्—न । स्वरूपे वा धर्मभूतज्ञाने वा विकारशून्यत्वस्य तदर्थत्वात् । नन्वेवमपि परमात्मधर्मभूतज्ञानस्यापि सिसृक्षादिरूपपरिणामवत्त्वात् परमात्मनोऽपि सत्यत्वं न स्यादिति चेत्—न । कर्मकृतविकाराभावस्यैव तदर्थत्वात् । **ज्ञानत्वगुणे समवैतीति** । ननु—ज्ञानाख्यस्य द्रव्यस्य ज्ञानत्वगुणसमवेतत्वा-भावेऽपि, ज्ञानत्वं ज्ञानाख्यद्रव्यसमवेतम्, तच्चात्मनि समवेतमिति द्वारद्वारिभावः संगच्छत इति चेत्—न । तथा सति आत्मन्यद्वारकज्ञानत्वप्रतिपत्तिर्न स्यादिति भावः । ननु ब्रह्मशब्दोपस्थापितत्वेन धर्मस्यापि ज्ञानत्वबोधनेऽतिप्रसङ्गः, ब्रह्मत्वस्यापि ज्ञान-रूपत्वप्रसङ्गात् । [किंच] ब्रह्मत्वस्यैव विधेयत्वेन ब्रह्मानुवादेन ज्ञानत्वस्य विधेयत्वा-संभवाच्च । संकल्पादिषु ज्ञानरूपतया प्रतिपन्नेषु ज्ञानत्वबोधनस्य व्यर्थत्वाच्चेत्याशङ्का-मुपसंहारव्याजेन निरस्यति—**अतो यथोक्त एवार्थ** इति । अयं भावः—"सत्यं ज्ञानम्" इत्यत्रान्तोदात्ततया अर्शआद्यजन्तत्वेन ज्ञानगुणकत्वप्रतीतेः, "आत्म-ज्योतिः सम्राट्" इत्यत्रापि स्वरूपस्य प्रकाशत्वप्रसिद्धेश्चाविरोधादिति भावः । वस्त्वन्तराभावो वस्तुपरिच्छेद इति मृषावादिमतं दूषयति—**इहेदम् नान्यत्रेत्यादिना** ।

**विशेष्यांशस्य लक्षणं सत्यज्ञानादी**ति । ननु ज्ञानत्वस्य ब्रह्मशब्दार्थभूतविशेषण-निष्ठत्वस्य प्रागेव समर्थितत्वात्, कथं तस्य विशेष्यमात्रनिष्ठत्वम्? किंच सर्ववस्तु-सामानाधिकरण्यार्हत्वस्यानन्त्यस्य केवलविशेष्यस्वरूपेऽभावाच्च, तदपि विशिष्टनिष्ठ-मेवेति चेति चेन्न–विशेष्यांशस्य लक्षणमित्यस्य चिदचिद्विशिष्टलक्षणं न भवती-त्येवार्थः; न तु धर्मभूतज्ञानविशिष्टस्यापि व्यावृत्तिरिति द्रष्टव्यम् । सर्ववस्तु-सामानाधिकरण्यार्हत्वस्य विशिष्टगतस्य विशेष्येऽपि संभवेन विशेष्यलक्षणतयोक्तौ दोषाभावात् । अत एव हि जगत्कारणत्वं विशिष्टनिष्ठमपि विशेष्ये संभवतीत्यभि-प्रायेण **जगत्कारणतयोपलक्षितस्य स्वरूपस्ये**त्याद्युक्तिरप्युपपद्यत इति द्रष्टव्यम् ।

**पराभिमतयोजनाया**मपीति । यद्यपि शंकरभाष्य एवमर्थो न वर्णितः, तथापि गत्यभावात् तेन तथा वक्तव्यमित्यभिप्रेत्य तथोक्तमिति द्रष्टव्यम् । किंच, 'मिथ्याभूतस्य जगतो ब्रह्मलक्षणत्वं न संभवति, विरोधात् । न हि नित्यं कृतकत्वेन लक्षयितुं शक्यम् । नापि सत्यजगतस्तल्लक्षणत्वं संभवति, द्वित्वेनैकस्यैव सत्येन द्वितीयेनाद्वितीयस्योपलक्षणासंभवा'दिति पूर्वपक्षे, मिथ्याभूतजगत्कारणत्वस्यैव सत्य-ब्रह्मलक्षकत्वमुपपद्यते 'यद्रजतमभात् सा शुक्तिः' इतिवत् इति तदुपपादनस्य तैः कृतत्वात् तदभिप्रायेण तदुक्त्युपपत्तेश्चेति द्रष्टव्यम् । साध्याविशेषं परिहरति–**प्रकाश-शब्दवाच्यत्व**मिति ॥ २ ॥

## (शास्त्रयोनित्वाधिकरणम् । शास्त्रयोनित्वात् १-१-३)

**अमूर्तद्रव्येतरनिष्ठे**ति । कार्यत्वममूर्तद्रव्येतरनिष्ठम्; न तु वियदादिनिष्ठम् । तथा कार्यत्वमुपादानव्यतिरिक्तकर्तृपूर्वकत्वव्याप्तं चेति व्याप्तेश्चेत्यर्थः । कार्यत्वस्या-मूर्तद्रव्येतरनिष्ठत्वेन व्याप्तिः साकल्येन तदाश्रयत्वम्; न तु सामानाधिकरण्यलक्षणा व्याप्तिः । कार्यत्वस्य तूपादानव्यतिरिक्तकर्तृपूर्वकत्वेन सामानाधिकरण्यलक्षणा व्याप्ति-रिति द्रष्टव्यम् । यद्वा अमूर्तद्रव्येतरनिष्ठेत्यनेनामूर्तद्रव्येतरत्वं विवक्षितम् । ततश्च कार्यत्वस्यामूर्तद्रव्येतरत्वोपादानव्यतिरिक्त(पादानाभिज्ञ)कर्तृकत्वाभ्यां व्याप्तत्वादित्यर्थः । **ईश्वरप्रोक्ततया** चेति । वक्तृवाक्यार्थयथार्थज्ञान(वक्तुर्यथार्थवक्तृत्व) रूपगुणजन्यत्वादि-त्यर्थः । **निर्दोषज्ञानमूलत्वं** वाच्यमिति । वस्तुतो निर्दोषं यत् ज्ञानं तन्मूलत्वं

वाच्यमिति परिग्रहे ज्ञातव्यमित्यर्थः । **साध्याविशिष्टत्वं स्यादिति** । शास्त्रवेद्यत्वात् शास्त्रवेद्यमित्युक्ते साध्याविशिष्टता स्यादित्यर्थः ।

तुशब्दस्याप्राप्त इत्यनेनान्वयमभिप्रेत्यावधारणपरतया व्याख्याय शास्त्रमित्यनेनान्वयमभिप्रेत्य व्याचष्टे—**वैयर्थ्ये वेति ! शास्त्रस्य तु बुभुत्सितग्राहित्वेनेति** । यद्यपि शब्दोऽबुभुत्सितमपि प्रतिपादयति, तथापि शब्दस्य तादृशविषये प्रयोजनपर्यवसायित्वं न स्यात् । तच्च न युक्तम्, स्वाध्यायविध्यध्यापितवेदभागस्यावश्यं प्रयोजनपर्यवसायित्वस्य वक्तव्यत्वादिति भावः । **ईश्वरमात्रानभ्युपगमेनैकदेशित्वमिति** । इदं च किं तर्हि प्रमाणमिति प्रमाणसामान्याक्षेप इत्यभिप्रायेणोक्तम् । 'अत आगमादृते कथमीश्वरः सिध्यति' इत्युपसंहारपर्यालोचनायां तु सिद्धान्तिचोद्यत्वमप्युपपद्यत इति द्रष्टव्यम् । **देशसंनिकर्षं निशिंषतेति** । विद्यमानः संनिकर्षो यस्य स विद्यमानसंनिकर्ष इत्येवं संनिकर्षस्य विद्यमानत्वेन विशेषणे अविशेषात् द्वयोरपि ग्रहणमित्यर्थः । अत्र संनिकर्षशब्देन संयोगादिषड्विधसंनिकर्षग्रहणे नानुपपत्तिगन्ध इत्यपि द्रष्टव्यम् । न च संनिकर्षत्वाविशेषात् स्वभावसंनिकर्षस्यापि ग्रहणं किं न स्यादिति वाच्यम्, योग्यशब्देन पृथङ् निर्देशात् गोबलीवर्दनयेन तद्व्यतिरिक्तसंनिकर्षग्रहणमिति भावः(वात्?) । **अनुद्भवादिवशादयोग्यस्य व्यवच्छेद इति** । न च तस्याप्यतीन्द्रियतया स्वविषयशब्देनैव व्यवच्छेद्यत्वमस्त्विति वाच्यम्, स्वविषयसजातीयतया विषयत्वमस्तीति तात्पर्यात् । यद्वा योग्यशब्देन पित्तगतपीतिमाभिभूतशङ्खश्वैत्यादिव्यावृत्तिः । **बहिष्ट्वमेवोपपादितमिति** । ततश्च सुखदुःखव्यतिरिक्तेत्यस्य न वैयर्थ्यमिति भावः । **प्रमितिकारणाभावादिति** । अतिरिक्तविषयत्वे प्रमितत्वप्रयोजकाभावादित्यर्थः । **अधिकविषयत्वे दूषणमाहेति** । दूषणान्तरमप्याहेत्यर्थः । इन्द्रियसंबन्धाभावात् प्रमा च न भवेत्; दोषजन्यत्वावश्यंभावात् भ्रमश्च भवेदित्यर्थः । केचित्तु—**प्रमितिकारणाभावान्न प्रामाण्यमित्यर्थ इति** । प्रमितिशब्दः प्रत्यक्षपरः । प्रत्यक्षत्वप्रयोजकाभावान्न प्रत्यक्षत्वमित्यर्थः । तद्विषयप्रत्यक्षे तदिन्द्रियसंनिकर्षस्य कारणत्वादिति भावः । ननु प्रत्यक्षप्रमायामेवेन्द्रियसंनिकर्षः कारणम्, न प्रत्यक्षत्वावच्छिन्न इत्याशङ्क्य दूषणमाहेत्याह—**अधिकविषयत्वे दूषणमाहेति** इति व्याकुर्वन्ति ।

**नैयायिकैकदेशिभि**रिति। वक्ष्यमाणानुमानमेव मुख्यनैयायिकवक्तृकमिति भावः। **रुग्णपरशरीरे**ति। यद्यपि परशरीरस्याप्येकचेतनाधीनत्वमस्ति, तथापि दृष्टमित्यस्य स्वशरीर एव वक्तव्यत्वमभिप्रेत्य तथोक्तमिति द्रष्टव्यम्। यद्यप्यारब्ध-मेकचेतनाधीनमित्युक्तावप्यदोषादचेतनारब्धमिति व्यर्थम्, तथाप्यचेतनस्य चेतना-धीनत्वमपेक्षितमित्येतदभिप्रायेण तथोक्तमिति द्रष्टव्यम्। सिद्धान्तेऽवयवावयविनोर-भेदेनावयवसमवेतत्वाभावादाह -- **वैशेषिकादिमतेने**ति।

भाष्ये—**शक्यक्रिय**मिति। अस्मदादिनेति शेषः। **साध्यसमव्याप्तत्वमा**हेति। 'यत् शक्यक्रियं शक्योपादानादिविज्ञानं च तदेव हि तदभिज्ञकर्तृकं दृष्टम्' इति भाष्येण साध्यव्यापकत्वमुपपादितम्; 'घटमणिकादिसजातीयशक्यक्रियशक्योपादा-नादिविज्ञानवस्तुगतमेव कार्यत्वं बुद्धिमत्कर्तृपूर्वकत्वसाधने प्रभवति' इति भाष्येणो-पाधेरेव साधनत्वम्, केवलकार्यत्वहेतोरप्रयोजकत्वमिति प्रदर्शयता उपाधेः साध्यव्याप-क(व्याप्य?)त्वमुक्तं भवतीति समव्याप्तिः प्रदर्शिता भवतीत्यभिप्रेत्य समव्याप्तत्वमाहे-त्युक्तमिति द्रष्टव्यम्। **विशेषविरुद्धत्व**मिति। सिषाधयिषितसाध्यविशेषविरुद्धत्वमित्यर्थः।

**तयोरकार्यत्वशङ्काद्योतनार्थ**मिति। भूभूधरादितुल्यतया कार्यत्वविवादा-स्पदत्वद्योतनार्थमित्यर्थः। **अस्मदादिशरीरे सिद्धसाधनत्वा**दिति। कार्यत्वलक्षण-साध्यस्य सिद्धत्वादिति भावः। **ईश्वरशरीरस्यापि कार्यताज्ञापनार्थ**मिति। नन्वस्मदादिशरीरस्य कार्यत्वेन सिद्धस्य न विवादाध्यासितत्वम्। ईश्वरशरीरस्या-सिद्धतया न विवादाध्यासितत्वम्। ततश्च विवादाध्यासितं तनुभुवनादीति कथमुक्त-मिति चेत्—न; अस्मदादिशरीरे साध्यसिद्धावप्यदृष्टाद्वारकोपादानगोचरजन्यकृत्यजन्य-सावयवत्वरूपपक्षतावच्छेदकावच्छेदेन कार्यत्वरूपसाध्यासिद्धेर्नास्मदादिशरीरे अंशतः सिद्धसाधनमित्यत्र तात्पर्यात्। एतदस्वरसादेव वाऽऽह—**यद्वा सावयवत्वादेवेत्यादे**-**रिति। शरीरस्यापि विवादपदत्वा**दिति। ननु शरीरेऽदृष्टद्वारककृतिजन्यत्वस्य सिद्धत्वान्न विवादः। अदृष्टाद्वारककृतिजन्यत्वे साध्ये तत एवेश्वरस्य सिद्धत्वादनु-मानान्तरवैयर्थ्यमिति चेत्—न। उपादानाद्यभिज्ञत्वविशेषेण तत्सिद्ध्यर्थमनुमानान्तर-सार्थक्यसंभवादिति भावः। अत एवोक्तम्—**कर्ता सामान्यतः सिध्यती**ति। भाष्ये—**सावयवेषु द्रव्येष्वि**ति। सावयवेषु द्रव्येषु कार्यत्वस्य नियामकं सावयव-

त्वातिरेकि रूपान्तरं नोपलभामह इति योजना। 'इदमेव क्रियते, नेतरत्' इति नियामकं प्रदर्श्यते। न तु **सावयवेष्विति** निर्धारणे सप्तमीति मन्तव्यम्, सावयवेषु द्वैरूप्याभावादिति द्रष्टव्यम्। **उपाधिपरिहारसिद्धिरिति**। साधनव्यापकत्वादुपाधिपरिहारसिद्धिरित्यर्थः। **ज्ञानशक्ती अनुमीयेते** इतीति। शक्योपादानविज्ञानत्वादेः सकर्तृकत्वपर्यवसिततया नोपाधित्वमित्यपि तात्पर्यम्।

**सिद्धसाधनत्वनिरासार्थमिति**। कृतिजन्यत्वानुमाने धर्मादिद्वारककृतिमादाय सिद्धसाधनशङ्का स्यात्। धर्माधर्मपक्षकवक्ष्यमाणानुमाने न सिद्धसाधनशङ्कापीति भावः। **अङ्कुरादिशब्दोपादानेनेति**। तस्यापि पक्षान्तर्भावकथनादिति भावः।

हेतुत्वाभावेऽपि व्याप्तत्वे तस्याप्यवश्यंभावादाह— **व्याप्त्यभावोऽप्यभिप्रेत** इति।

मनसो वृत्तिमत्त्वाभावाद्विपक्षगामित्वं न संभवतीत्यत आह-**अनैकान्तिकत्वात् व्याप्त्यभावादिति**। मनःसंबन्धस्य वृत्तिमत्त्वादनैकान्तिकत्वमाह—**अशरीरस्या(रे)पि मनःसंबन्धस्येति**। **विभुद्रव्येति**। विभुद्रव्यसंयोगित्वं परिस्पन्दवत्त्वं च स्पर्शवत्त्वे प्रत्येकं प्रयोजकमित्यर्थः। संयोगित्वमात्रस्य विभुषु निःस्पर्शेष्वतिप्रसक्तत्वाद्विभुद्रव्येत्युक्तमिति द्रष्टव्यम्। भाट्टैर्मनसो विभुत्वाङ्गीकारात् विभुसंयोगाश्रयत्वस्य मनस्यभावादाह—**अयं प्राभाकरं प्रतीति**। **महिमगुणशालिन** इति। महत इत्यर्थः। **श्रुतिलिङ्गादिष्वपीति**। यद्यपि शीघ्रप्रवृत्तप्रत्यक्षप्रतिपन्ने जगति स्वतन्त्र्यव्युदासकस्य, "ऐतदात्म्यमिदं सर्वम्" इत्यादेर्धर्मिग्राहकोपजीव्यप्रत्यक्षविरुद्धस्यापि प्रामाण्यवत् उपजीव्यानुमानजातीयविरुद्धस्याप्यभिन्ननिमित्तोपादान[त्व?]स्य प्रतिपादनमस्त्विति नियमः संभवति—तथापि धर्मिण एवानुमानसिद्धत्वप्रतिक्षेपमुखेन परिहर्तुमेवं पूर्वपक्षोत्थापनमिति मन्तव्यम्।

**नियममन्तर्भाव्येति**। नियमं सिद्धवत्कृत्येत्यर्थः। **प्रथमं दूषयतीति** द्वितीयतृतीययोस्तु, 'न च क्षेत्रज्ञानाम्' इति भाष्येण दूषणं द्रष्टव्यम्। **शङ्काद्योतकमिति**। शङ्कासंभावकमित्यर्थः। **कार्यत्वस्यैकत्वं नामेति**। अत्र

केचित्–कार्यत्वस्यैकत्वं सामग्र्यैक्यात्। तस्याश्चैकत्वं कार्यैक्यादित्युपपादनात् एकं कार्यत्वमेकत्वसमानाधिकरणं कार्यत्वम् एककार्यत्वमित्यर्थः। न तु कार्यत्व ऐक्यम्। अत एव 'पृथग्भूतेषु कार्येषु' इति भाष्यमपि स्वरसम्। ततश्च कार्यस्यैकत्वे ह्येककालकर्तृकत्वसंभावनापि। न च तदस्तीति भाव इत्याहुः। **कर्तृकालैक्यनियमाभावादिति** पञ्चम्याः, 'निर्मिता इत्यत्र प्रमाणाभावात्' इति पञ्चम्यान्वयो न संभवतीत्यभिप्रेत्य, 'प्रमाणाभाव' इति प्रथमान्तपदमध्याहृत्य व्याचष्टे – **बहुषु चेत्यादिना**। **इतरासंभावितेति**। असंभावितजीवकर्तृनाकं पक्षासाधारणकार्यत्वमित्यर्थः। **अन्वयव्यतिरेकसिद्धान् धर्मानिति**। जीवत्वधर्माधर्मादीनित्यर्थः। नन्वीश्वरज्ञानप्रयत्नयोः कथं व्यभिचारापादनम्, स्वेन तदभ्युपगमादित्याशङ्क्याह – **अन्यतरानैकान्त्यादिति**। **सर्वसंहारदशायामिति**। सर्वसंहारदशायां स्वशरीरस्यापि संहृततया सर्गाद्यसमये संहृतत्वादित्यर्थः। **इदानीं क्रमेणोत्पत्तिविनाशाविति**। यदा क्रमो दृश्यते, न तदा दृष्टविरुद्धं यौगपद्यं कल्प्यते; अपितु सर्गाद्यसमये इति भावः। कार्यत्वस्योत्पत्तिमत्त्वरूपस्योत्पत्तिविनाशकल्पकत्वासंभवमभिप्रयन्नाह–**कार्यत्वं कृतिसाध्यत्वमिति**। कार्यत्वेनेति तृतीयायाः क्रियानुपादानेन कारकतृतीयात्वासंभवमध्याहारे तस्यैव दोषत्वं चाभिप्रेत्याह–**तृतीया चेत्थंभाव इति**। केचित्तु–कार्यत्वेनोत्पत्तिविनाशयोः कल्पनेऽपीति वा कल्प्यमानयोरिति वाऽध्याहृत्य व्याचक्षते। **व्युत्पत्त्यर्थो बुद्धिमच्छब्द इति**। कार्यानुकूलज्ञानादिमत्त्वलक्षणं कर्तृत्वमिह विवक्षितम्। न तु तदनुकूलव्यापारवत्त्वमात्रमिति भावः। भाष्ये 'साध्यविकलता च दृष्टान्तस्य' इत्यत्राप्रसिद्धविशेषणत्वेनैव दृष्टान्ते साध्यवैकल्यसिद्धिमपि मन्यमानाः केचित्–'चो ह्यर्थः, ततश्च दृष्टान्तस्य साध्यविकलत्वात् पक्षस्य साध्यवत्त्वे साध्येऽप्रसिद्धविशेषणत्वमिति हेतुहेतुमद्भावेन योज्यम्' इति व्याचक्षते। **युगपदुत्पत्त्या वेति**। महीमहीधरादिकमेककर्तृकं युगपदुत्पद्यमानकार्यत्वादिति वा, त्रैकाल्यवर्तिसमस्तकार्यत्वादिति वा हेतुशरीरमिति भावः। **विरुद्धत्वमित्यर्थ इति**। इदमुपलक्षणम्; सर्वकार्यत्वस्य पक्षीकृतमहीमहीधरादौ वा सपक्षे घटादौ वा अभावेन स्वरूपासिद्धिर्दृष्टान्तासिद्धिश्चेति द्रष्टव्यम्। **भिन्नकर्तृकत्वस्य प्रतिक्षेप इत्यर्थ इति**। यद्यपि यथाश्रुते नानुपपत्तिः, तथापि

साध्याभावव्याप्तत्वरूपविरुद्धप्रत्याख्यानप्रकरणत्वात् तथोक्तमिति ध्येयम् । ननु कुम्भकारशब्दनिर्दिष्ट एव रथकारशब्देनापि गृह्यताम्; मा भूत् कुम्भरथयोर्भिन्नकर्तृकत्वमित्याशङ्क्याह—**न हि कुम्भरथयोरि**ति ।

**सत्त्वादिगुणकद्रव्योपादानत्वमित्यर्थ** इति । अत्रोपादानशब्दः कारणमात्रपरः, उत्तरत्र 'कारणशब्दो निमित्तोपादानसाधारणः' इत्युक्तेः । **के ते सत्त्वादय** इति । अयमर्थः—कार्यगतसुखादिहेतुत्वलक्षणवैचित्र्यात् कारणेऽपि यद्वैजात्यं वक्तव्यम्, तत् सत्त्वादिभ्योऽन्यत् किं न स्यात्? किं च सत्त्वादिरूपत्वेऽपि तादृशं सत्त्वादिलक्षणं कारणवैचित्र्यमुपादानगतमेवास्तु, न तु निमित्तभूतकर्तृगतमिति । 'के ते सत्त्वादयः' इत्यत्र गर्भितैतच्छङ्काद्वयस्यापि निवर्तकं 'कार्यवैचित्र्यहेतुभूताः कारणगता विशेषाः सत्त्वादयः' इति भाष्यम् । तस्य चायमर्थः—सत्त्वादिव्यतिरिक्ते कारणगतवैजात्ये प्रमाणाभावात् सत्त्वादिकमेव वैजात्यम् । तच्च वैजात्यमविशेषादुभयविधकारणनिष्ठमिति निमित्तभूत आत्मन्यपि सत्त्वादिसंबन्धोऽवश्यंभावीति । भाष्ये — **अन्तःकरणविकारे**ति । चिकीर्षादिमुखेनेत्यर्थः । उद्भूतसत्त्वगुणयुक्तमृत्पिण्डदर्शनेनोद्भूतसत्त्वगुणयुक्तकुलालस्य सत्त्वगुणवशेन राग उत्पद्यते । ततो घटादि करोति । ततश्च चिकीर्षालक्षणो रागः कर्तुः सत्त्वयोगायत्तः । सत्त्वगुणयोगश्च कर्मसंबन्धायत्त इति भावः । भाष्ये — **तद्युक्तपुरुषान्तःकरणे**ति । तद्युक्तो यः पुरुष इत्यर्थः । **विषयविशेषविशेषिताया** इत्येतत् व्याख्येयं पदम्; तस्य व्याख्यानं **सर्गस्थेमादिविषयत्व**मिति । न त्वध्याहृत्य व्याचष्ट इति मन्तव्यम् । **न तद्विलक्षणत्वसिद्धिरित्याहे**ति पाठः । **अन्ये प्रतितर्का** इति । ईश्वरपक्षका इत्यर्थः । प्रतितर्केषु पराभ्युपगममादायापि तत् पक्षीकृत्य प्रतितर्कप्रयोगः संभवतीति भावः । ननु जगतोऽपीश्वरं प्रति साक्षात् प्रयत्नाधिष्ठेयत्वेन शरीरत्वान्न तदधिष्ठाने शरीरापेक्षेति पूर्वपक्ष्याशङ्कां निरस्यति—**तथा जगत** इति । **कर्मवश्यत्वप्रसङ्ग** इति । सिद्धान्ते तु श्रुत्या अपहतपाप्मत्वसिद्धिरिति भावः । **न चाङ्कुरादावि**ति । योग्यानुपलब्धिबाधितत्वात् कर्तृत्वे सशरीरत्वप्रसङ्गो नापादयितुं शक्यत इत्यर्थः । **प्रेरणोपपत्तेश्चे**ति । इदमुपलक्षणम् । बाधस्तर्केऽनुगुण इत्यपि द्रष्टव्यम् । **संख्याविशेषावच्छेदादि**ति । द्विपरार्धकालादित्यर्थः ।

**कर्मवश्यत्वप्रसङ्गपर्यन्तत्वमिति** । नन्वस्या अवस्थायाः सर्गाद्यसमयोत्पत्तिप्रतिबन्धकतया तत एव दूषितत्वसंभवात् कर्मवश्यत्वपर्यन्तत्वाभिप्रायः किमर्थः ? यदि च प्रलयदशायामपि बीजाङ्कुरन्यायेन शरीरसत्त्वम्, तदा प्रलयत्वव्याघात इति चेत्—सत्यम् । अदृष्टादिवत् अनन्यगत्येश्वरशरीरस्यापि सत्त्वमुपेयम्, इतरथा जगत्सर्गासंभवादिति यदि परो ब्रूयात्, तदा कर्मवश्यत्वपर्यन्तं दूषणं देयमित्यत्र तात्पर्यात् ।

संयोगलक्षणव्यापारस्य मुक्तेऽपि संभवादाह—**व्यापारश्च प्रयत्न इति** । **मात्रशब्देन सत्त्वादिगुणान्वयेति** । सर्गादिविषयविशेषानालिङ्गितेच्छामात्रस्य व्यापारत्वे सत्त्वादिगुणान्वयकर्मसंबन्धयोरपि व्यावृत्तिः फलतीति भावः ॥ ३ ॥

—:*:—

## समन्वयाधिकरणम् (४)

तत्तु समन्वयात् १–१–४.

सूत्रान्तरेषु तुशब्दः कुतो नोपादीयत इत्याशङ्क्याह—**तुशब्दः प्रदर्शनार्थ इति** । सर्वत्र सिद्धान्तसूत्रे तुशब्दोऽध्याहर्तव्य इति, अत्रत्यतुशब्देन सूच्यत इत्यर्थः । **विशेषनिर्धारणज्ञापनार्थं हीति** । ननु, 'ब्रह्मविदाप्नोति' इति वाक्यं श्रुतवतः किं ब्रह्मेति बुभुत्सायाम् ' 'यतो वा इमानि' इत्यादि वाक्यं प्रवृत्तम् । तस्य चानुवादरूपतया पुरोवादिवाक्ये पर्यालोच्यमाने, तत्र यदि, 'ब्रह्म वा इदमग्र आसीत्' इति वाक्यमुपन्यस्यते, तदा ब्रह्मशब्दः कथमर्थप्रत्यायकः स्यात्, अनिर्धारितब्रह्मशब्दार्थस्य तज्जिज्ञासोर्ब्रह्मशब्दश्रवणे तत्रापि जिज्ञासाया एवोदयादिति चेत्—सत्यमसौ न जानाति, इदं ब्रह्मशब्दार्थीभूतं निरतिशयबृहदिति । तथापि सद्ब्रह्मात्मशब्दानां समानप्रकरणपठितानां छागपशुन्यायेन विशेषपर्यवसानं सम्भवतीत्यत्र तात्पर्यम् । ननु कथं ब्रह्मशब्दस्य साधारणत्वम्, कथं वा तदपेक्षया आत्मशब्दस्य विशेषपरत्वमुच्यत इत्याशङ्क्याह—**ब्रह्मशब्दस्य साधारणत्वं नामेति** ।

आत्मशब्दस्य ब्रह्मशब्दानिवर्त्यसंशयनिवर्तकतया विशेषरूपत्वमाह — **न हि स्वारसिकेति** । साक्षात् कारणवाक्यस्थत्वाभावादिति । 'सेयं देवतैक्षत' इति वाक्यमपि, 'अग्र आसीत्' इत्यग्रादिपदाभावान्न साक्षात् कारणवाक्यमिति भावः । एतदस्वरसादाह—**देवतादिशब्दानां व्यक्तिविशेषे रूढत्वाभावादिति** । **निमग्नरूढितयेति** । योगरूढिमतां शब्दानां यौगिकार्थप्रतिसम्बन्ध्युपादाने रूढिर्निमिषति । 'पद्मानि यस्याग्रसरोरुहाणि प्रबोधयत्यूर्ध्वमुखैर्मयूखैः' इति श्लोके सरःप्रतिसम्बन्ध्यग्रपदोपादानेन सरोरुहशब्दरूढ्यनुन्मेषात् तस्य यौगिकार्थमात्रसमर्पकत्वात् पद्मानीति पद्मत्वजातिवाचिपदमुपात्तम् । इतरथा पद्मसरोरुहपदयोः पौनरुक्त्यप्रसङ्गात् । ननु, 'एको हवै नारायण आसीत्' इति महोपनिषद्वाक्ये हवैश्रवणेनानुवादरूपत्वप्रतीतेः पुरोवादसाकांक्षतया अनिर्णायकत्वमित्याशङ्क्याह—**वचनानि त्वपूर्वत्वादिति** । सोमे शेषभक्षो नास्ति, वचनाभावात् । 'पुरस्तादैन्द्रवायवं भक्षयति', 'वषट्कर्तुः प्रथमभक्षः', 'हविर्धाने ग्रावभिरभिषुत्याहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षयन्ति' इत्यादीनां भक्षानुवादेन गुणान्तरविधिपरतया भक्षविधानाभावादिति पूर्वपक्षं कृत्वा, भक्षस्य प्राप्त्यभावेन तदनुवादेन गुणान्तरविधानायोगादिमानि वचनानि गुणविशिष्टभक्षविधिपराणीति सिद्धान्तितम् - 'वचनानि त्वपूर्वत्वात्' (३-५-२१.) इति । 'विधिस्तु धारणेऽपूर्वत्वात्' इति (३-४-१५.) 'उपरि हि देवेभ्यो धारयति' इति जीवदग्निहोत्रे समिध उपरिधारणमाचारप्राप्तमनूद्यते । लोकेऽप्यभ्यर्हितं हि वस्तु आचारादाच्छाद्यैव नीयमानं दृष्टमित्युपरि धारणमनूद्यते । अत एव हिशब्दोऽप्युपपद्यत इति पूर्वपक्षे, समिध उपर्याच्छादनासमर्थतया उपरिधारणस्याचारप्राप्तत्वाभावात् हिशब्दस्वारस्यपरित्यागेनाप्राप्तमुपरिधारणं विधीयत इति सिद्धान्तितम् । **तदेकं सन्न व्यभवदिति** । तदेकं ब्रह्म क्षत्त्रादिपरिपालयित्रादिशून्यं सत्, न व्यभवत्=विभूतिमन्नाभूत्, कर्मणे न पर्याप्तमासीदिति यावत् । श्रेयोरूपं=प्रशस्तं रूपम् । अत्यसृजत=अतिशयेन तमसृजत् । देवत्रा=देवेष्वित्यर्थः । **देवमनुष्यपुरुषेति** । सप्तम्यर्थे त्राप्रत्ययः । क्षत्राणि=क्षत्रियानित्यर्थः । कानि पुनस्तानि क्षत्त्राणीत्यत्राह—**इन्द्रो वरुण** इत्यादि । शङ्कते—**कार्यकारणविषयेति** । ननु ब्रह्मणः कथमानन्दरूपत्वम्, आनन्दो हि धर्मभूतज्ञानावस्थाविशेष इत्याशङ्क्याह—**आनन्दत्वं हीति** । **निवर्त्यप्रातिकूल्येति** । अनिष्ट-

निवर्तकेत्यर्थः । **भगवतो मुक्तानामिति** । यो यस्यानुकूलः, स तस्यानन्दः, ततश्च सविभूतिकं ब्रह्म मुक्तानां स्वस्य चानुकूलमिति मुक्तानां स्वस्य चानन्द इत्यर्थः । ननु मुक्तान् प्रत्यानन्दत्वमस्तु ब्रह्मणः, नैतावता तत्प्रतिपादकवाक्यस्य पुरुषार्थपर्यवसायित्वम्, अस्मदानन्दरूपत्वाभावादिति चेन्न; अस्मान् प्रत्यप्यस्त्येवानुकूलत्वम् ; उपायदशाप्रभृति भगवज्ज्ञानं प्रीतिरूपमित्युक्तेः । वक्ष्यति च 'अपरोक्षरूपस्यापि सुखरूपत्वात्' इत्यादि । परन्तु मुक्तिदशायां निरतिशयानुकूलत्वं अधुना नेत्येतावान् विशेषः । ननु सर्ववस्तूनामपि मुक्तान् प्रत्यनुकूलतया आनन्दत्वमस्तीति भगवतः को विशेष इति चेन्न ; सत्यपि सर्वेषामानन्दत्वे भगवति निरतिशयानुकूलत्वसत्त्वेन विशेषोपपत्तेः । **स्वविषयज्ञानस्य स्वरूपस्य चे**ति । इदमुपलक्षणम् ; विभूतिगुणयोश्चेत्यपि द्रष्टव्यम् । **प्रवृत्तिनिवृत्त्यन्वयः प्रामाण्यव्यापक** इति । किं प्रयोजनान्तरपर्यवसायित्वसत्त्वेऽपि प्रवृत्तिनिवृत्तिरूपप्रयोजनान्तरपर्यवसायित्वस्य प्रामाण्यव्यापकत्वात् प्रवृत्तिनिवृत्तिप्रयोजनाभावात् न प्रामाण्यमित्यभिप्रायः, किं वा प्रवृत्तिनिवृत्त्यभावे प्रयोजनपर्यवसायित्वस्यैवाभावात् तस्य च प्रामाण्यव्यापकत्वात्तदभावे प्रामाण्याभाव इति विकल्पद्वयार्थः ।

अत्र केचित्—'प्रवृत्तिनिवृत्तिरूपप्रयोजनविरहादन्यपरत्व' मिति भाष्ये द्वावर्थौ प्रतीयेते, प्रवृत्तिनिवृत्ती एव प्रयोजने, प्रयोजनाभावाच्च न प्रामाण्यम् इति । तत्र प्रयोजनाभावान्न प्रामाण्यमित्यंशम्, 'स्वविषयावबोधित्वादि' त्यादिना दूषयित्वा प्रवृत्तिनिवृत्त्योरेव प्रयोजनत्वमित्यमुमंशं दूषयति—'न च प्रवृत्तिनिवृत्त्यन्वयविरहिणः प्रयोजनशून्यत्व'मितीत्यपि भाष्यं योजयन्ति । **चशब्दो व्यापकद्वयनिषेधसमुच्चय** इति । **न च प्रयोजनानुगुणा प्रमाणप्रवृत्ति**रित्यत्र **च**कारो भिन्नक्रमः । प्रमाणप्रवृत्तिः प्रयोजनानुगुणा च न, प्रवृत्तिनिवृत्त्यनुगुणा च न भवतीति भाष्यार्थ इति भावः । **व्याप्यत्वनिषेधद्वयसमुच्चय** इति । **न च प्रवृत्तिनिवृत्त्यन्वयविरहिणः प्रयोजनशून्यत्व**मित्यत्र चकारो भिन्नक्रमः । प्रयोजनशून्यत्वं च नेत्यर्थः । **च**शब्देन प्रामाण्यशून्यत्वं च समुच्चीयते । ततश्च प्रवृत्तिनिवृत्त्यन्वयविरहिणः प्रामाण्यशून्यत्वप्रयोजनशून्यत्वयोर्निषेधे प्रामाण्यप्रयोजनयोः प्रवृत्ति[निवृत्ति ?] व्याप्यत्वनिषेधः फलिष्यति । एतदभिप्रायेण **व्याप्यत्वनिषेधद्वयसमुच्चय** इत्युक्तम् । **प्रवृत्ति-**

**परत्वं निवृत्तिपरत्वं** **चेति** । प्रवृत्तिनिवृत्तिपरत्वमात्रमेवेत्यर्थः । एवमुत्तरेष्वपि द्रष्टव्यम् । प्रत्येकं व्यभिचारादिति भाव । ब्रह्मप्रतिपादनस्य सिद्धत्वेन तत्प्रतिक्षेपासम्भवादाह—**प्रतिपादनमेव न पूर्येतेति** । प्रामाण्यं न निर्वहतीति भावः ! भाष्ये—**ज्ञानादेव पुरुषार्थसिद्धप्रतीत्यर्थपरत्वाभावेनेति** । नन्वियं मर्यादा प्रवृत्तिपरवाक्येऽपि सुवचा । तत्रापि स्वरूपसत इष्टसाधनत्वस्याभावेऽपि प्रवृत्तिसम्भवाद्विषयसद्भावे न प्रमाणत्वं स्यादिति चेन्न ; बहुवित्तव्ययायाससाध्ये विफले कर्मणि प्रवर्तकस्य वेदस्य प्रतारकत्वप्रसङ्गेन तत्रेष्टसाधनत्वस्य तात्त्विकस्यैव वक्तव्यत्वात् । प्रकृते स्वतःफलहर्षजनकत्वेन तावतापि सफलस्य सिद्धवाक्यस्य स्वार्थसत्यत्वे तात्पर्याभावादिति भावः ।

**ध्याननियोगवादिमुखेन शङ्करादिमतं चेति** । अयं भावः—येन शङ्करेण, 'अरूपवदेव हि तत्प्रधानत्वात्' इत्यत्र निष्प्रपञ्चीकरणनियोगः, अस्मिंश्चाधिकरणे ध्याननियोगश्च दूषितः, तन्मतमेव ध्याननियोगवादिमुखेनास्मिन्नधिकरणे पूर्वपक्षिणा दूष्यत इति । **विधिरशक्य इत्यभिप्राय** इति । विधिवाक्यमशक्यार्थकमित्यभिप्रायः ; उत्तरत्र विधिशब्दस्य विधिवाक्यमिति व्याख्यास्यमानत्वात् । विधिशब्दस्य नियोगार्थत्वभ्रान्तिं व्युदस्यति—**विधिः विधिवाक्य**मिति । न च नियोगपरत्वे को दोष इति वाच्यम्—'न दृष्टेर्द्रष्टार' मिति विधिवाक्यप्रदर्शकोत्तरवाक्याननुगुणत्वप्रसङ्गात् । **आविद्यस्य प्रपञ्चस्य बुद्धिनिवृत्तिरूपो विलय** इति । बुद्ध्या निवृत्तिः बुद्धिनिवृत्तिरित्यर्थः । 'निष्प्रपञ्चतारूपेण साध्यत्व' मित्युत्तरभाष्यानुगुण्यात् । **आदिशब्दोपात्तेति** । 'उदरमन्तरं कुरुते', 'नेह नानास्ति' इत्यादिश्रुत्यन्तरैरित्यर्थः । ननु भावार्थान्यत्वप्रयुक्तशङ्कायामेवासाध्यत्वप्रयुक्तशङ्काप्यन्तर्भवति, भावार्थान्यत्वस्यासाध्यत्वनियतत्वादित्याशङ्क्याह—**भावार्थादन्यत्वं स्वर्गादावप्यस्तीति** । **विशिषन्निति** । विषिण्वन् हि विषय इति पाठः समीचीनः ; विषयशब्दस्य विपूर्वात् सिनोतेर्निष्पन्नत्वात् ।

**कृतिसाध्यापूर्वप्रतिपत्तिवेलाया**मिति । अपूर्वस्याक्रियारूपत्वेन साक्षात् कृतिसाध्यत्वाभावात् यागद्वारा कृतिसाध्यमपूर्वमिति प्रतीयते । ततश्च 'कृतितत्साध्यमध्यस्थो यागादिर्विषयो मतः' इत्युक्तरीत्या यागविषयकृतिसाध्यमपूर्वमिति अपूर्व-

प्रतीतौ अपूर्वसाधककृतिविषयत्वेन यागस्य भानात् अपूर्वं प्रति यागस्य विषयत्वम्, तत्र च फलं प्रत्यकरणस्य तत्कामकृतिविषयत्वासम्भवात् यागस्यापूर्वफले प्रति करणत्वमपि अभिधानापर्यवसानलक्षणोपादानप्रमाणतोऽवगम्यते । न चाग्नेयादियागस्य कथं फलापूर्वे प्रति करणत्वम्, फलापूर्वयोरक्रियारूपत्वादिति शङ्क्यम्—तयोरक्रियारूपत्वेऽपि तदुद्देशप्रवृत्तकृतेः क्रियारूपत्वेन तत्र करणत्वोपपत्तेः । यदेव फलापूर्वभावनयोः करणत्वम्, तदेव फलापूर्वकरणत्वमिति व्यपदिश्यते । न च प्रयत्नरूपभावनानिष्पाद्यस्य यागस्य कथं निष्पादिकायां भावनायां करणत्वमिति वाच्यम्—भावनायाः फलशिरस्कत्वस्य यागाधीनत्वात् तथा व्यवहारात् । न हि तस्या भावनाया यागविषयत्वाभावे फलशिरस्कत्वसिद्धिः । अतस्तद्रूपेण करणत्वात् फलभावनाकरणत्वमिति व्यवहारः । न च फलभावनाकरणस्य कथमपूर्वभावनाकरणत्वमिति वाच्यम् – तयोरेकलोलीभावेनापूर्वभावनाया एव फलभावनात्वोपपत्तेरिति द्रष्टव्यम् ।

**पुत्रजन्मादिवद्यदा सिध्येदिति** । अत्र केचित् याथात्म्यानुभवस्य स्वरूपाभिन्नत्वात् निमित्तत्वमस्त्वित्याशङ्क्याह- **निमित्तत्वे** चेत्यप्यवतारिकामाहुः । **भावार्थाः कर्मशब्दा** इति । कर्मतशब्दो वाचको येषां ते तथोक्ताः । कर्मशब्दवाच्या इत्यर्थः । केचित्तु—**अभावार्थत्वाच्च=क्रियारूपत्वाभावादित्यर्थः । भावार्थाः कर्मशब्दा** इति पाठः । 'भावार्थाः कर्मशब्दा' इत्येतत् 'भावार्थाः कर्मशब्दास्तेभ्यः क्रिया प्रतीयेत' (२-१-१.) इति जैमिनिसूत्रोपादानम् । तस्य चायमर्थः—भावो भावना । सोऽर्थो येषां ते तथोक्ताः । क्रियावाचिन इत्यर्थः । कर्मशब्दाः= कर्म कृतिसाध्यम्; यागः । तद्वाचिन इत्यर्थः । ततश्च ये भावनावचनास्सन्तः कर्मवचनाः यजेतेत्यादयः तेभ्य एव क्रिया प्रतीयेत, अपूर्वं प्रतीयेतेत्यर्थः । ततश्च भावः भावना इत्यादिशब्दानां भावनावचनत्वमात्रमस्ति । न च ते अपूर्वप्रत्यायकाः । कर्मवचनत्वमात्रं च याग इत्यादिशब्दानामप्यस्ति । न च ते अपूर्ववचनाः । अतो द्वयमपि प्रयोजकम् । ततश्च ब्रह्मशब्दस्याक्रियावाचिनोऽपूर्ववाचित्वाभावात् न ब्रह्मणो नियोगविषयत्वमिति जैमिनिसूत्रसंमतिः प्रदर्श्यत इत्याहुः ।

**साध्यत्वं फलस्याप्यस्ति** इति । असाध्यत्वमात्रे उपन्यस्ते साध्यत्वमात्रमेव विषयत्वप्रयोजकमिति शङ्का स्यात् । न च तद्युज्यते । स्वर्गादावति-

प्रसक्तत्वात् । अतो द्वयमपि प्रयोजकमित्यर्थः । यद्यपि भावार्थत्वमात्रमेव विषयत्वप्रयोजकमिति शक्यतेऽभ्युपगन्तुम् ; अत एव भाष्ये वक्ष्यति 'अभावार्थत्वान्न विधिविषयत्वम्' इति — तथाप्यभव्यरूपत्वादित्युपक्रमात् वाक्यस्य, न पाश्चात्येन भावरूपत्वादित्यनेन तद्वैयर्थ्यं सुवचम्, यथा अक्ष्णा काण इत्यत्राक्ष्णेत्यस्येति भावः । **हेत्वन्तरं कण्ठोक्त्येति** । अत्र साध्यत्वेऽपि फलत्वमेव, अभावार्थत्वान्न विधिविषयत्वमिति एकग्रन्थोऽस्तु ; न तु कण्ठतात्पर्याभ्यां हेतुद्वयपरत्वमित्यपि केचिद्योजयन्ति ।

'**अभावार्थत्वान्न विधिविषयत्व**' मिति पूर्वभाष्यानुसारेण '**साध्यत्वं च कस्य**' इति भाष्यं विषयत्वनिराकरणपरतया व्याचष्टे— **विशिष्टस्य विषयत्वानुपपत्तिरुक्तेति** । साध्यत्वशब्दस्वारस्यपरित्यागे कारणाभावाद्व्यवहितसाध्यत्वनिराकरणपरतया व्याचष्टे— **यद्वेति** । **आकारद्वयाभ्युपगम** इति । अयं भावः — निष्प्रपञ्चनियोगवादिनो हि द्वयी गतिः, प्रपञ्चनिवृत्तिः विषयः, अपवर्गः फलमित्येका । उक्तं च शाङ्करभाष्ये तन्मतोपन्यासे, यथा "स्वर्गकामस्य यागोऽनुष्ठातव्य उपदिश्यते, एवमपवर्गकामस्य प्रपञ्चविलयः । यथा च तमस्यवस्थितं घटादितत्त्वं बुभुत्समानेन तत्प्रत्यनीकं तमः प्रविलाप्यते, तथा ब्रह्मतत्त्वमवबुभुत्समानेन तत्प्रत्यनीकः प्रपञ्चः प्रविलापयितव्यः" इति । प्रपञ्चनिवृत्तिरेव फलम्, ज्ञानं विषय इति द्वितीया गतिः । उक्तं चेदं च शाङ्करभाष्ये, 'तद्विज्ञानविषयः प्रपञ्चविलयविषयो वा नियोगः स्यात्' इति । तत्र ज्ञानविषयनियोगपक्षे ज्ञानस्य मिथ्याभूतप्रपञ्चनिवृत्तौ नियोगद्वारकत्वासम्भवादिति दूषणस्य स्पष्टत्वात् प्रपञ्चनिवृत्तेरेव विषयत्वमिति पक्षः परिशिष्यते । तत्रापि प्रपञ्चनिवृत्तिव्यतिरेकेण नियोगसाध्यस्य ब्रह्मतत्त्वावबोधस्याभावात् तयोरैक्यं सिद्धवत्कृत्यान्योन्याश्रयेण दूषयतीति **किं निवर्तनीयः प्रपञ्च** इत्यादिना नियोगस्य दूष्यमाणत्वात्, पूर्वत्र विषयस्य दूषितत्वात् उभयोरेकविषयत्वाभावेन **अपि चे**त्युक्तिरयुक्तेत्याशङ्क्य अवान्तरदूष्यभेदेऽपि निष्प्रपञ्चीकरणप्रधानदूष्यैक्यात् **अपि चे**त्युक्तिरुपपद्यत इत्यभिप्रयन्नाह — **निष्प्रपञ्चीकरणपक्ष** इति । अवान्तरदूष्यैक्यपरत्वसम्भवे तत्त्यागानौचित्यात् पूर्वोत्तरयोरपि नियोगविषयत्वमित्याह — **यद्वा नियोगविषयेति** । **अनुग्राहको हि करणानन्तरभावीति** । यद्यपि प्रयाजादिर्न करणानन्तरभावी, तथापि प्रयाजाद्यपूर्वैः आग्नेया-

देरनुग्रहः करणोत्पत्त्यनन्तरभाव्येवेति द्रष्टव्यम् । **अभावादेवेत्येवकारेणेति । द्रष्टव्य इति तस्य दर्शनरूपतेति** क्वचित्कोशे पाठो दृश्यते । तस्य न सम्यक्त्वं पश्यामः । न हि ध्याननियोगवादिना तथाप्यभ्युपगम्यते । तन्मतमनुवदता वाचस्पतिनाप्युक्तम्, "तत्र चात्मदर्शनं न विधेयम्, तद्धि दृशेरुपलब्धिवचनत्वात् श्रवणं वा स्यात्, प्रत्यक्षं वा । प्रत्यक्षमपि लौकिकाहंप्रत्ययः, भावनाप्रकर्षपर्यन्तजं वा । तत्र श्रवणं न विधेयम्; स्वाध्यायविधिनैव सिद्धत्वात् कर्मश्रवणवत् । नापि लौकिकं प्रत्यक्षम्; तस्य नैसर्गिकत्वात् । न चौपनिषदात्मविषयं भावनाधेयवैशद्यं विधेयम; तस्योपासनाविधानादेव वाजिनवदनुनिष्पादि[त]त्वात् । तस्मादौपनिषदात्मोपासना अमृतत्वकामं नियोज्यं प्रति विधीयते । द्रष्टव्य इत्यादिविधयस्तु विधिसरूपा न विधय इति । तदिदमुक्तं तदुपासनाच्च शास्त्रदृष्टो मोक्षः फलं भविष्यति" इति वर्णितम् । तद्विरोधप्रसङ्गात्, "तद्ध्याननियोगेन तत्साक्षात्कारफलेन" इत्युत्तरभाष्यतद्व्याख्यानानुगुण्याभावाच्चायं ग्रन्थो लेखकस्खलनकृत इति प्रतिभाति । केचित्तु एतद्ग्रन्थानुसारात् ध्याननियोगवादिनां तादृशमपि मतमस्तीति वदन्ति । **तद्ब्रह्मेति कथं ज्ञायत** इति । यद्यपि स आत्मेति कथं ज्ञायत इति वक्तुमुचितम्, भाष्यानुगुण्यात्, तथापि ब्रह्मात्मशब्दयोः समानप्रकरणे पाठेन ऐक्यं सिद्धमिति भावः ।

भाष्ये **ध्याननियोगेन तत्साक्षात्कारफलेनेति** । अत्र चोदयन्ति—'ध्याननियोगवादिमते मोक्षस्यैव फलत्वमिति हि तत्प्रक्रिया; न तु साक्षात्कारः फलमिति । तथा शाङ्करभाष्येऽनुपन्यासात्' इति । ते प्रतिवक्तव्याः । ध्याननियोगवादिनां त्रयी गतिः ब्रह्मभावः फलम्, अविद्यापनयो वा साक्षात्कारो वेति । आद्यपक्षस्यातिदुर्बलतया अयमेव पक्षो भाष्यकृता उपन्यस्तः । अत एव तन्मतं दूषयता वाचस्पतिनाप्युक्तम् 'ब्रह्मभूयस्याविद्यापिधानापनयनमात्रेण सम्भवादविद्यापनयनस्य च वेदान्तार्थज्ञानादेव सिद्धेः, साक्षात्कारकारणमननसहकारिसंस्कारजनकत्वस्योपासनायामन्यतस्सिद्धेर्न विधिः' इति । **मोक्षस्याशरीररूपत्वश्रुत्या चेति** । अशरीरत्वलक्षणमोक्षस्य धर्माधर्मफलभूतप्रियाप्रियविरहप्रतिपादकश्रुत्येत्यर्थः । उत्तरग्रन्थानुरोधादिति द्रष्टव्यम् । **फलित इत्याह इत्यशरीरत्वरूपेति** इति पाठो दृश्यते । तत्राशरीरत्वरूपेति प्रतीकग्रहणमुचितं न त्वितिकरणयुक्तस्य । इतिकरणस्य तथा च

श्रुतिः 'न ह वै सशरीरस्येति' पूर्वान्वितत्वात् । **अन्यत्र धर्मा**दिति । यद्यपि शङ्करोपनिषद्भाष्यादौ, 'अन्यत्र धर्मात्=शास्त्रीयाद्धर्मानुष्ठानात् तत्फलात्तत्कारकेभ्यश्च पृथग्भूतम् ; तथा अन्यत्राधर्मात्=अधर्मानुष्ठानतत्फलादिविलक्षणम् ; अन्यत्रास्मात् कृताकृतात्=कृतं कार्यं अकृतं कारणं तस्मादप्यन्यत्र ; अन्यत्र भूताच्च=अतिक्रान्त-कालात्, भव्याच्च=भविष्यत्कालाद्वर्तमानकालाच्चान्यत्र=कालत्रयापरिच्छन्नं यत् पश्यसि तद्वदेत्यर्थ' इति व्याख्यातम्—तथापि तदविरुद्धत्वादिदमपि तदभिमतमिति वा ग्रन्थान्तरस्थत्वाद्वा तथानूदितमिति द्रष्टव्यम् ।

ननु मोक्षस्य नित्यत्वेनानुत्पाद्यत्वे वाक्यार्थज्ञानस्य मोक्षहेतुत्ववादिमतेऽपि वाक्यार्थज्ञानोत्पाद्याया बन्धनिवृत्तेरपि अविनाशित्वरूपनित्यत्वं नोपपद्येतेत्याशङ्क्याह— **निवृत्तेरुत्पाद्यत्वेऽपी**ति । **निर्विकारत्वेन क्रियाविषयत्वाभावः कथ**मिति । अत्र केचित्—निर्विकारत्वस्य क्रियाविषयत्वाभावहेतुत्वस्य भाष्ये अप्रतिपादितत्वेनास्याः शङ्काया अवकाशाभावात्—'नित्यनिर्विकारत्वेन स्वाश्रयाया' इत्यादिभाष्यस्य ह्ययमर्थः—नित्यनिर्विकारत्वेन स्वाश्रयायाः क्रियाया असम्भवात् अन्याश्रयक्रियां प्रति मण्याश्रयक्रियां प्रति आदर्शस्येवान्यस्याविषयत्वादिति । इतरथा पुरोवादरूपशाङ्करभाष्य-वैरूप्यापत्तेः । तत्र हि **शाङ्करभाष्ये**, "क्रियाश्रयत्वानुपपत्तेरात्मनः यदाश्रया क्रिया-तमविकुर्वती नैवात्मानं लभते । यद्यात्मा क्रियया विक्रियेत, अनित्यत्वमात्मनः प्रसज्येत । 'अविकार्योऽयमुच्यत' इत्यादीनि वाक्यानि बाध्येरन् । तस्मान्न स्वाश्रया क्रिया आत्मनः संभवति । अन्याश्रयायास्तु क्रियाया अविषयत्वान्नात्मा संस्क्रियेत" इत्युक्तम् । तद्व्याकुर्वता **वाचस्पतिना**, 'न तावद्ब्रह्मधर्मः क्रिया तस्याः स्वाश्रयविकारहेतुत्वेन नित्यत्वव्याघातात् । अन्याश्रया तु कथमन्यस्योपकरोति, अतिप्रसङ्गात् । न हि दर्पणे निघृष्यमाणे पाणिर्विशुद्धो दृष्ट' इति । ततश्च—तदनुरोधात् निर्विकारत्वात् क्रियाश्रयत्वप्रतिषेध एवोचितः । न तु तेनैव विषयत्व-प्रतिषेधः । अतश्च तदानुगुण्येन भाष्यस्याप्यर्थो वर्णनीयः । तथा अन्याश्रयक्रियां प्रति विषयत्वमसम्भावितमिति वक्तव्ये दर्पणस्य दृष्टान्तत्वाय स्वपरसमवेतक्रिया-विषयत्वसमर्थनपरोत्तरग्रन्थस्यापि न साङ्गत्यमिति—तन्न । शाङ्करमतस्यैव अविरुद्ध-युक्तियुक्तमार्गान्तरोपन्यासे दोषाभावात् । **तदा दर्पणाश्रयक्रिये**ति । न च

'घर्षणमिष्टकाचूर्णसंयोगविभागप्रचयो निरन्तर आदर्शतले समवेतः' इत्युक्तस्य घर्षणस्य निश्चलेऽपि दर्पणे सम्भवोऽस्तीति वाच्यम् — संयोगविभागप्रचयानुकूल-चेष्टाया एव घर्षणशब्दवाच्यत्वमिति तात्पर्यात् । **तत्सङ्गतः देहसङ्गत** इति । तदभेदाभिमानीति यावत् । **केवलशब्देन फलान्वयराहित्यं विवक्षितमिति तस्यालोपयोग** इति । इदमुपलक्षणम् । 'एको देवः', 'स पर्यगात्' इति मन्त्रद्वयं ह्यनाधेयातिशयत्वनित्यशुद्धत्वयोः प्रमाणतया उपन्यस्तमिति । उक्तं च शाङ्करभाष्ये, 'इमौ मन्त्रौ अनाधेयातिशयतां नित्यशुद्धतां च ब्रह्मणः प्रतिपादयतः' इति । अत एवोत्तरत्र भाष्ये, 'आत्मनः स्वरूपमनाधेयातिशयं निष्कृष्यत' इति वक्ष्यति । ततश्च **केवल** इत्यस्य फलान्वयराहित्यमात्रे न तात्पर्यं वर्णनीयम्, कर्तृत्वादिबन्धराहित्यस्यापि प्रतिपिपादयिषितनित्यशुद्धत्वोपयुक्तत्वादिति द्रष्टव्यम् । **अमन्यतेत्यर्थ** इति । आत्मानमिति शेषः । यद्यपि 'स पर्यगात्—सः आत्मा, 'यस्तु सर्वाणि भूतानि' इत्यादौ प्रकृत आत्मा पर्यगात् — परितः समन्तादगात्, सर्वगत इत्यर्थः । शुक्रमित्यादयः शब्दाः पुंलिङ्गत्वेन परिणेयाः स इत्युपक्रमानुसारात् । अकायो लिङ्गशरीररहितः । अव्रणः अक्षतः । अस्नाविरः सिरारहितः । अव्रणास्नाविर (रशब्दा ?) भ्यां स्थूलदेहराहित्यमुक्तम् । शुक्रमिति बाह्याशुद्धिविरह उक्तः । शुद्ध इति आन्तररागाद्यभावः । अपापविद्धः धर्माधर्मादिरहित' इति शङ्करादिभिर्व्याख्यातम्— तथापि तदविरुद्धत्वादिदमपि ग्राह्यमेव ।

**अविदितात् = ज्ञातुरित्यर्थ** इति । यद्यपि विदिताविदितशब्दौ कार्यकारण-परतयापि व्याख्यातौ —— तथापि तथा व्याख्याने ज्ञेयवैलक्षण्यानुक्तेरसङ्गतिं मत्वा तथा व्याख्यातमिति द्रष्टव्यम् । भाष्ये **येनेदं सर्वं विजानाति, तं केन विजानीया**दिति । येन प्रमाता इदं सर्वं लोको विजानाति, तं केन करणेन विजानीयात् । करणस्य ज्ञेयविषयतया ज्ञातर्यप्रवृत्तेः न ज्ञाता ज्ञेयः; किमुत साक्षीत्यर्थ इति परेषां व्याख्या । **तदेव ब्रह्मे**ति । 'यद्वाचानभ्युदितं येन वागभ्युद्यते' इत्यविषयत्वमुक्त्वा, तदेव प्रमातृत्वादिकल्पनाशून्यमेव ब्रह्म विद्धि, न तु यत् उपाधि-विशिष्टदेवतादि इदमित्युपासते जनाः । नेदं ब्रह्म त्वं विद्धीत्यर्थः । भाष्ये न

चैतावता शास्त्रस्य निर्विषयत्वमेति । ब्रह्मणः शास्त्रयोनित्वभङ्गो नास्तीत्यर्थः । पुरोवादिशाङ्करभाष्यानुरोधात् ।

**प्रमेयतयेत्यर्थ** इति । नन्वेवं हि पुरोवादिशाङ्करभाष्यम् — "अविषयत्वे ब्रह्मणः शास्त्रयोनित्वानुपपत्तिरिति चेन्न । अविद्याकल्पितभेद-निवृत्तिपरत्वाच्छास्त्रस्य । न हि शास्त्रमिदन्तया विषयभूतं ब्रह्म प्रतिपिपादयिषति । किंतु प्रत्यगात्मत्वेनाविषयतया प्रतिपादयदविद्याकल्पितं वेद्यवेदितृवेदनादिभेदमपनयति। तथा च शास्त्रम्, 'यस्यामतं तस्य मतं मतं यस्य न वेद सः । अविज्ञातं विजानतां विज्ञातमविजानताम् ।', 'न दृष्टेर्द्रष्टारं पश्येर्न मतेर्मन्तारं मन्वीथाः' इति चैव-मादि" इति । अस्य च ग्रन्थस्य वाचस्पतिना वर्णितोऽयमर्थः, "सर्वमेव हि वाक्यं नेदंतया वस्तुभेदं बोधयितुमर्हति । न हीक्षुक्षीररसादीनां मधुररसविशेष इदंतया शक्य आख्यातुम् । किं बहुना । गामानयेत्यादिवाक्येऽपि विवक्षितव्यक्तिविशेषो नाभिधातुं योग्यः । ततश्च प्रमाणान्तरसिद्धे लौकिक एवार्थे यदा गतिरीदृशी, तदा कैव कथा प्रत्यागात्मन्यलौकिके । अदूरविप्रकर्षेण तु कथञ्चित्प्रतिपादनात् शास्त्रयो-नित्वम्' । अदूरविप्रकर्षश्चेत्थम्—'तत्त्वमसी' ति सामानाधिकरण्येन त्वंपदार्थस्य प्रत्यगात्मनः प्रमातृत्वाद्यविषयभूतोदासीनतत्पदार्थाभेदप्रतिपादने जीवगतकर्तृत्वादीनामपि मिथ्यात्वे वेद्यवेदितृवेदनादिभेदापनयसम्भवेन निरस्तभेदतया ब्रह्मणः प्रतिपाद्यत्व-सम्भवाच्छास्त्रयोनित्वमुपपद्यते । उपन्यस्तश्चात्र श्लोको वाचस्पतिना —

> विगलितपराग्वृत्त्यर्थत्वं पदस्य भवेत् तदः
> त्वमिति च पदेनैकार्थत्वे त्वमित्यपि यत् पदम् ।
> तदपि च तदा गत्वैकार्थ्यं विशुद्धचिदात्मना
> त्यजति सकलान् कर्तृत्वादीन् पदार्थमलान् इमान् ॥'

इति । तस्य च श्लोकस्यायमर्थः — तदःपदस्य तत्पदस्येत्यर्थः । विगलित-पराग्वृत्त्यर्थत्वम्=प्रत्यगर्थत्वमित्यर्थः । तत् कदेत्यत आह त्वमिति च पदेनैकार्थत्व इति । प्रमातृत्वादिशून्येन ब्रह्मणा प्रमातृत्वादिमत्तया प्रतिभासमानस्याभेदे बोधिते जीवस्य प्रमातृत्वादिराहित्यं सिध्यति । प्रमातृत्वस्यासत्यत्वे प्रमातुरभावेन प्रमायास्त-

द्विषयस्य च मिथ्यात्वेन निर्भेदत्वं ब्रह्मणः सिध्यतीति। ततश्चेक्षुक्षीरादिरसभेदस्य शाब्दत्वप्रवादतुल्योऽयं ब्रह्मणः शास्त्रयोनित्वप्रवाद इति। अपरश्चानन्दगिरिणार्थो वर्णितः। तथा हि शास्त्रजन्यवृत्त्यभिव्यक्तचैतन्यविषयत्वलक्षणशास्त्रयोनित्वाभावेऽपि शास्त्रजन्यज्ञानजन्याविद्याध्वंसरूपातिशयवत्त्वेन शास्त्रजन्यज्ञानविषयत्वलक्षणं शास्त्रयोनित्वमुपपद्यत इति। एवञ्च पुरोवादानुगुण्यमनादृत्य कथमेवं व्याख्यायत इति चेत्—

सत्यम्। व्याख्याद्वयमपि न व्याख्येयस्वारस्यानुगुणम्। किं तु 'यस्यामतं तस्य मतम्' इत्यादिप्रमाणानुसारेण शास्त्रमप्रमेयत्वेनैव ब्रह्म प्रतिपादयति। न तु प्रमेयत्वेनेत्ययमर्थ एव व्याख्येयस्वारस्यानुगुणः। एतदेवाभिप्रेत्याचार्यैरिदंतयेत्यस्य प्रमेयतयेत्यर्थो वर्णितः। केचित्तु प्रमेयतयेत्यर्थ इत्यस्यापि व्याख्याद्वयान्यतरपरत्वमेवास्त्विति मन्यन्ते।

**न दृष्टेर्द्रष्टारमिति**। दृष्टेश्चक्षुर्जन्याया मनोवृत्तेर्द्रष्टारं स्वभावभूतया नित्यदृष्ट्या व्याप्तारं दृश्यया अनया दृष्ट्या न पश्येरित्यर्थः। ततश्च यस्यामतमित्यादिवदयमपि परेषां दृश्यत्वनिषेधपरोऽभिमतः।

भाष्ये—**न च ज्ञानादेव बन्धनिवृत्तिरित्यादि**। अत्र केचित् — समनस्केन्द्रियार्थसंनिकर्षबललब्धस्फीतालोकमध्यवर्तिघटानुभववत् शब्दसामर्थ्योत्पादितब्रह्मात्मज्ञानस्य कर्तुमकर्तुमन्यथाकर्तुमशक्यस्यापुरुषतन्त्रस्य विधातुमशक्यतया अविधेयज्ञानादेव निवृत्तिरित्यभ्युपगमे श्रवणमननादीनामपि यथावस्थितवस्तुविषयाणां वस्तुतन्त्रत्वेन पुरुषतन्त्रत्वाभावाद्विधिर्न स्यादिति तद्विधिवैयर्थ्यमित्येतावानर्थः। पुरोवादानुसारात्। एवं हि शाङ्करभाष्यम् 'या तु प्रसिद्धेऽग्नावग्निबुद्धिः, न सा चोदनातन्त्रा पुरुषतन्त्रा वा। किं तर्हि? प्रत्यक्षविषयवस्तुतन्त्रैव। एवं यथाभूतब्रह्मात्मविषयमपि ज्ञानं न चोदनातन्त्रम्। तद्विषये लिङादयः श्रूयमाणा अपि अनियोज्यविषयत्वात् कुण्ठीभवन्ति उपलादिप्रयुक्तक्षुरतैक्ष्ण्यादिवत् अहेयानुपदेयवस्तुविषयत्वात्। किमर्थानि तर्हि 'आत्मा वारे द्रष्टव्य' इत्यादीनि वचनानि? स्वाभाविकप्रवृत्तिविषयविमुखीकरणार्थानीति ब्रूमः' इति। ततश्च तदनुसारेणैवमर्थो वर्णनीय इति। केचित्तु न तद्वाक्यानुवादोऽयम्। अपि तु यत्पुनरुक्तं श्रवणात्प्राचीन-

योरपि मनननिदिध्यासनयोर्दर्शनान्न स्वरूपपर्यवसायित्वम् । अत एतिमात्रार्थत्वे मनन-निदिध्यासनयोरपि ब्रह्मावगत्यर्थमपेक्षितत्वेन तयोरपि रागप्राप्तत्वादिति—तदनुवाद इति मन्यन्ते ।

**पूर्वपक्षिणोक्तमिति** । श्रवणादिविधेः शङ्कराभिमतत्वात्तदानर्थक्यापादनं कर्तुं शक्यमिति भावः । भाष्ये—**स्वभावप्रवृत्तेत्यादि** । अयं भावः—अन्यतः प्राप्ता एव श्रवणादयो विधिसरूपैर्वाक्यैरनूद्यन्ते । न चानुवादोऽप्यप्रयोजनः, प्रवृत्तिविशेषकरत्वात् । तथा हि त[स्य?] दिष्टानिष्टविषयेप्साजिहासापहृतहृदयतया बहिर्मुखो न प्रत्यगात्मनि मनः समाधातुमर्हति । आत्मश्रवणादिविधिसरूपैस्तु वचनैर्मनसो विषयस्रोतः खिलीकृत्य प्रत्यगात्मस्रोत उत्पाद्यत इति प्रवृत्तिविशेषकरताऽनुवादानामस्तीति सप्रयोजनतेति । भाष्ये **सर्वविनाशमपेक्षत** इति, सर्पस्य नित्यनष्टत्वात् । यदि च मिथ्याभूतस्य ज्ञाननिवर्त्यत्वाभ्युपगमात् सर्पविनाशोऽस्त्येवेति तदपेक्षा भयनिवृत्तेर्दृष्टेति भाविबन्धनिवृत्तेः सशरीरत्वसापेक्षत्वमिति—तर्हि तस्य सशरीरत्वमपि नष्टमेव । शरीराभिमानस्य नष्टत्वेन सशरीरत्वस्यापि निवृत्तत्वात् । न हि सशरीरत्वाभिमानवत्त्वमन्तरेण सशरीरत्वं नाम किञ्चिदस्ति । शरीरस्यात्मनश्च सम्बन्धान्तरादर्शनात् । न च तत्कृतधर्माधर्मार्जितत्वात् वास्तवं सशरीरत्वमिति वाच्यम्; आत्मनः साक्षितया धर्माधर्मकर्तृत्वभावात् । ततश्च देहात्माभिमानवत्त्वमेव सशरीरत्वम् । तच्च विद्यमानेऽपि शरीरे सशरीरत्वं गतमेवेति न तत्प्रयुक्तं बन्धवत्त्वम् । तथा च ब्रह्मविद्विषया श्रुतिः यथा 'अहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीत, एवमेवेदं शरीरं शेते, अथायमशरीरो मृतो प्राणो ब्रह्मैव तेज एव' इति, 'सचक्षुरचक्षुरिव सकर्णोऽकर्ण इव सवागवागिव समना अमना इव सप्राणोऽप्राण इव' इति । अहिनिर्ल्वयनिः अहिकञ्चुकः । **इन्द्रियप्रधानकसामग्र्यननुप्रविष्टत्वादिति** । ज्ञानसामग्रीणां मध्ये इन्द्रियप्रधानकसामग्र्येवापरोक्षज्ञानसमग्री । अतो न व्यभिचार इति भावः । ननु ज्ञानसामग्रीष्वेवन्द्रियाण्येवापरोक्षज्ञानजनकानीत्ययुक्तम्, इन्द्रियाणां सामग्रीत्वानाश्रयत्वेन ज्ञानसामग्रीष्विति निर्धारणासम्भवादित्याशङ्क्याह—**आलोकादिसहकृतानीति शेष** इति । इन्द्रियघटितैव सामग्रीत्यर्थः । शब्दस्याविषयस्य कस्याप्यभावात् विषयनियमस्याप्रस्तुतत्वाच्चाह—**विषयशब्दः साध्यपर** इति । ननु

प्रत्यक्षसामग्रयाः कथं शीघ्रभावित्वम्, दशमत्वप्रत्यक्षे कारणीभूताया अपेक्षाबुद्धेर-भावादित्याशङ्क्याह—**तदा ह्युपदेशादिति। न च वाक्यजन्येऽपीति।** अयं भावः—ज्ञानस्यापरोक्षत्वं नेन्द्रियजन्यत्वरूपम्; सुखादिप्रत्यक्षाव्यापनात्, तस्य साक्षिरूपस्येन्द्रियाजन्यत्वात्। अपि त्वपरोक्षार्थविषयत्वमेव वृत्तेरापरोक्ष्यम्। अर्थस्य चापरोक्ष्यमनावृतसंविदभेद एव। ततश्च घटं पश्यतो घटोऽयमिति वाक्यजन्या लिङ्गजन्यापि वा प्रतीतिरपरोक्षैव। ततश्च दशमस्त्वमसीति वाक्य-जन्याप्यपरोक्षाहमर्थप्रतीतिरपरोक्षैवेत्यभ्युपगमेऽपि दशमत्वांशे नापरोक्षरूपता, तदंशे अपरोक्षत्वाभावादिति। न च विशेष्यांशेऽपि वा शाब्दापरोक्ष्याभ्युपगमे तदिष्ट-सिद्धिरिति वाच्यम्; विशेषणांशे ज्ञानस्याप्रत्यक्षत्वे विशेष्यांशेऽप्यप्रत्यक्षत्वात्। एकस्या एव ज्ञानव्यक्तेः प्रत्यक्षाप्रत्यक्षरूपत्वाभावादिति भावः।

**अतः प्रतिभासनिवृत्तिरि**ति। ननु, 'सशरीरत्वप्रतिभासे वर्तमाने यस्यायं प्रतिभासो मिथ्येति प्रत्ययः' इत्युक्तौ प्रतिभासनिवृत्तिपक्षस्यानुत्थित्या कथमस्य विकल्पस्यावकाशः विरोधादिति चेन्न—सशरीरत्वप्रतिभासे विद्यमाने यस्यायं प्रत्ययो मिथ्येति प्रत्यय उत्पन्नः, तस्य तदनन्तरभाविनी या सशरीरत्वप्रतिभासनिवृत्ति-रित्येवंपरतया योजनासम्भवात्। **एवं वैषम्यमुक्तमिति।** न तु पूर्ववत् पारमार्थिका-पारमार्थिकत्वाभ्यां वैषम्यमुक्तमिति भावः। **औडुलोमिमतानुसारेणे**ति। प्राग्भिन्नस्यैव जीवस्य मुक्तिकाले एकीभाव इत्याद्यनुसारेणेत्यर्थः। औडुलोमिमते प्रत्यक्षविरोधा दर्शनादाह—**यद्वा यथेदानीमि**ति। वसिष्ठावान्तरतपःप्रभृतीनां प्रेत्यापि शरीरान्तर-परिग्रहदुःखानुभवदर्शनादिति भावः। ननु प्रपञ्चसत्यत्वशङ्कापरिहारप्रवृत्तत्वे किञ्च-शब्दानुपपत्तिरित्याशङ्क्याह—**ध्याननियोगपक्षे**ति। **मिथ्यात्वनिबन्धना** इति। मिथ्याभूतस्य ध्याननियोगनिवर्त्यत्वं न सम्भवति, सत्यत्वप्रसङ्गादित्येतत् यज्ञदानादि-साध्यत्ववादिनस्तवापि समानम्। यदि च यज्ञादीनां नैर्मल्यद्वारेण वाक्यार्थावगति-हेतुत्वम्, न तु प्रपञ्चनिवृत्तावविद्यानये वा, तर्हि ममापि समानमिति भावः। **अपितु प्रकरणशेष** इति। पूर्वप्रकृतकृत्स्नोपसंहारपर इतिशब्द इत्यर्थः। **भास्कर-मतं दूषयितुमि**ति। जगतोऽपरमार्थभूतस्य कृत्स्नस्येत्युक्तिमसहमानस्य ब्रह्मणि मि-नित्यतां वदतो भास्करस्य मतं दूषयितुमित्यर्थः। इयं च सङ्गतिरुचरत्र भाष्ये

स्पष्टयिष्यते । **विरोधो द्विधेति** । एकस्मिन् देशे कदाप्यनवस्थानं हि नियमेन भिन्नाधारत्वम्, यथा शीतोष्णस्पर्शयोर्जलतेजोगतयोः । सहानवस्थाननियमस्तु एकस्मिन् काले एकस्मिन् देशेऽनवस्थानम्, यथा कालभेदेनैकाधिकरणयोरपि तमःप्रकाशयोरिति भिदा । भाष्ये **कार्यकारणयोर्जातिव्यक्त्योश्चेति** । कार्यत्वकारणत्वयोर्जातित्वव्यक्तित्वयोश्चेत्यर्थः । **अभिन्नस्य जातेरिति** । इदमुपलक्षणं कारणस्यापि । एवं **व्यक्तेरित्यत्रापि** कार्यस्याप्युपलक्षणं द्रष्टव्यम् । व्यक्तेराकारत्वासम्भवं मनसि निधायाह—**आकारभेदोंऽशभेद** इति । **भिन्नाभिन्नत्वमनिष्टमिति भाव** इति । यद्येवम्, खण्डमुण्डयोरपि खण्डत्वेनैक्यप्रसङ्ग इत्येवापादनसम्भवात् देहात्मपर्यन्तधावनं किमर्थमिति चेत्—मैवम्; देवोऽहमिति सामानाधिकरण्यप्रतीत्यभावेन तदापादनायोगादिति भावः । **तैः संयोगहेतुरित्यर्थ** इति । जीवान् कर्मभिः संयोजयतीत्यर्थः । **तद्वाक्यान्तरगम्यमिति** । यद्यपि ब्रह्मणेतीत्थंभावे तृतीया, सहशब्दश्च यौगपद्यपरः । ततश्च ब्रह्मणा उपलक्षितः ब्रह्मत्वं प्राप्तः सह=युगपत् सर्वान् कामानश्नुत इत्यर्थः । 'सोऽश्नुते सकलान् कामान् अक्रमेण सुरर्षभाः । विदितब्रह्मरूपेण जीवन्मुक्तो न संशयः ॥' इति स्मृतेः । ततश्च ब्रह्मसुखेऽनुभूयमाने सर्वमपि वैषयिकसुखं ब्रह्मानुभवाम्बुधिलवकणिकायमानमिति मृषावादिभिरभेदपरतया व्याख्यातम्—तथापि तस्यार्थस्य भास्करानभ्युपेतत्वात् तदभिमतयोजनायामस्य वाक्यस्य भेदाभेदोदासीनत्वात् वाक्यान्तरावगम्यमित्युक्तमिति भावः । भिन्ने ब्रह्मण्युपाधिसंयोग इत्येतदुपपादयति—**ईश्वरांश इतीति** । उपाधिसंयोगस्य भेदपूर्वकत्वाभावे ब्रह्मणोऽप्युपाधिसम्बन्धः स्यादिति भावः । **सङ्गतिस्थलं दर्शयितुमाहेति** । ध्याननियोगवादिनो भास्करमतनिरसनमस्थानविजृम्भितमिति शङ्कां व्युदसितुमित्यर्थः । भाष्ये **तद्विपरीतत्वमभेद** इति । तद्रहितत्वमित्यर्थः । **त्रिविधविरोधोपलब्धेरिति** । भिन्नाधारत्वसहानवस्थाननाश्यनाशकत्वरूपत्रिविधविरोधोपलब्धेरित्यर्थः । व्यक्तेराकारत्वासम्भवादाह—**आकारशब्दः पदार्थपर** इति । भाष्ये **निरुह्यमाणेति** पाठः । अङ्गावयवहलपरत्वाभावेन 'हल' इति दीर्घत्वाप्रसक्तेः । यद्वा, "अग्नौ परिचाय्ये"ति सूत्रे (?) 'ऊहोऽन्यार्थकस्य कथं वह्यर्थत्वमिति चेदूहेस्तदर्थत्वात्सिद्धम्' इति वार्तिक-[1]

---

1. अत्रवार्तिकं द्रष्टव्यम् ।

कृतोक्तत्वात् ऊहेरस्य रूपस्य सम्भवात्। न च 'उपसर्गाद्ध्रस्व ऊहते' रिति ह्रस्वत्वं शंक्यम्। ण्यन्ताद्ध्रस्वत्वाप्रसक्तेरिति द्रष्टव्यम्।

**मत्वर्थप्रत्ययनिरपेक्षसामानाधिकरण्यमि**त्यादि। अयं प्रपञ्चः प्रथमसूत्र एव द्रष्टव्यः। **सूक्ष्मपरत्वाभिप्रायसम्भवा**दिति। नन्वणुशब्दस्य 'अणवश्च' इत्यादि-सूत्रेष्विव सूक्ष्मवाचित्वाभिप्रायसम्भव इति चेन्न; अत्र परिमाणशब्दस्याविवक्षितत्वमिति तात्पर्यात्। **भिन्नाभिन्नत्वाभ्युपगमात्पश्चम** इति। अत्रश्चोपाधेरेवो-पहितब्रह्मत्वोक्तिः सङ्गच्छत इति भावः। कथं चार्वाकमतपरिग्रह इत्याशङ्क्याह— **अचिद्द्रव्यस्यैव चेतनवचनत्वा**दिति। दूषणान्तरमाह—**तस्य चेतनब्रह्मे**ति। ननु प्रवृत्तिनिवृत्तिविरहादनवबोधकत्वमित्ययुक्तम्; निष्प्रयोजनानामपि काकदन्तादि-वाक्यानां बोधकत्वदर्शनादित्याशङ्क्याह—**दुःखसाध्यश्रवणादा**विति। काकदन्तादि-वाक्यानां स्पष्टार्थतया श्रवणनैरपेक्ष्येणार्थप्रत्यायकत्वेऽपि वेदान्तेषु श्रवणमन्तरेण बोधकत्वाभावात् श्रवणस्य च प्रयोजनाधीनबुभुत्सासाध्यत्वात् प्रयोजनाभावेऽर्थाव-बोधकत्वं न सम्भवतीति भावः। **प्रथमसूत्रे विधिशेषतये**ति। कार्यार्थत्वेऽपि वेदस्य ब्रह्मविचारः कर्तव्य एवेति अभ्युच्चयतया तदधिकरणभाष्ये उक्तम्; न तु तत्सूत्रकाराभिमतमित्यपि द्रष्टव्यम्।

प्रतिपत्तिशब्दस्य ज्ञाने प्रसिद्धिमभिप्रेत्याह — **ज्ञायत इति वार्थ** इति। इदमुपलक्षणम्, सूत्रकारः प्रतिपद्यते जानातीत्यर्थः। कर्तरि कर्मणि च रूपस्याविशिष्टत्वादित्यपि वदन्ति। व्याख्यातस्य व्याख्यानमनर्थकमित्याशङ्क्याह — **विस्तरेण व्याचष्ट** इति। पूर्वत्र सम्यगन्वय इत्यादेरनुन्यासात् संक्षेप इति भावः। भाष्ये **अभिधेयतयान्वया**दिति। अभिधेयत्वलक्षणान्वयादित्यर्थः। ततश्चान्वय-शब्दस्याभिधेयत्वलक्षणोऽन्वयोऽर्थः। समिति अस्य परमपुरुषार्थरूपत्वं विवक्षितमिति भावः। **अर्थवशाद्वाक्यार्थप्रतिपत्तृपुरुषस्थान** इति। प्रयोजनलम्भकस्यापि वाक्यगणस्य स्वयंप्रयोजनवत्त्वाभावेन प्रयोजनवतो वाक्यार्थप्रतिपत्तुरेव तत्स्थाननिवेश इति भावः। **योग्यानुपलब्धिशङ्काव्युदासाये**ति। परस्य ब्रह्मणोऽनवधिकाति-शयानन्दजनकत्वं बाधितम्, इदानीं तदनुपलब्धेरिति शङ्काव्युदासार्थमित्यर्थः। **सम्प्रदानलाभाये**ति। सम्प्रदानं प्रतिग्रहीता, 'कर्मणा यमभिप्रैति स सम्प्रदान' मिति

स्मरणात् । यद्यपि दशरूपकादौ 'गाम्भीर्यं यत्प्रभावेन विकारो नोपलभ्यते' इत्येवं प्राप्तेष्वपि महासुखरोषहर्षेषु तत्सूचकविकाररहित्यरूपमित्येवं वर्णितम् — तथापि तस्य परमात्मन्यप्रसक्तत्वादेवं वर्णितमिति द्रष्टव्यम् । **तदसम्भवे ब्रह्मोपदेष्टृपुरुषमात्राभिप्राय** इति । 'आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापत्' इति श्रुतेः । अस्याश्च श्रुतेरयमर्थः—आचार्यः उपनीयाध्यापयिता, तत्सकाशादवाप्तविद्या साधुतां प्राप्नोतीति । ततश्च तदसम्भवे अन्यतो ग्राह्या । अत एव श्वेतकेतोरनाचार्यादपि पितुस्सकाशात् ब्रह्मविद्याश्रवणम् । तदाचार्यस्याब्रह्मवित्त्वात् । अत एव 'न वै नूनं भगवन्तस्त एतदवेदिषुः ; यद्ध्येतदवेदिष्यन्, कथं मे नावक्ष्यन्; भगवांस्त्वेव मे तद्ब्रवीतु' इति स्वाचार्यस्याज्ञानमुद्घाट्य पितरमेव ब्रह्मविद्यां प्रार्थितवानिति आचार्यस्यासम्भवे अन्यतो ब्रह्मविद्या ग्राह्येति भावः ।

**आपातप्रतिपन्नोऽप्यर्थोऽविरुद्ध एवेति (न्यार्थोऽप्यविरुद्धइति)**, परमव्योमनिलये भगवत्यपि ईदृशवृत्तान्तविज्ञापयितृणामाचार्याणां सम्भवात् । न च सर्वज्ञे तस्मिन् वृत्तान्तविज्ञापनस्य वैफल्यमिति वाच्यम् ; प्रभुधर्मत्वेन तस्याप्युपपत्तेः । इतरथा ब्रह्मादीनां क्षीराब्धिगमनविज्ञापनादीनां वैफल्यप्रसङ्गात । केचित् आतपादिपीडारहिते भगवल्लोके मण्डपोद्यानवापीकूपादीनामपि वैयर्थ्यप्रसङ्गात्; तत्रत्यानां सर्वेषामपि सर्वसाक्षात्कारसमर्थतया द्वारपालादीनामपि वैयर्थ्यप्रसङ्गादित्याहुः । **पूर्वमेवार्थार्थीति।** पूर्वमेव, 'अर्थार्थी' त्यादिलौकिकवाक्यस्योदाहृतत्वात् क्रियातिरिक्तकार्यमात्रपरत्वं पूर्वपक्षिणापि न सुवचमिति भावः । **दुष्टरत्नवर्जनमप्यनर्थजिहासाव्या(प्रा)प्तमिति ।** ततश्च तद्वर्जनं न बोधनीयमिति भावः । न च व्याकरणस्य सुशब्दापशब्दविभागज्ञापकत्वम्, साधुभिरेव भाषितव्यमिति नियमज्ञापकत्वं च यथा, एवं रत्नेष्वपि सदसद्विवेचनं धार्याधार्यविधिनिषेधपरत्वं च रत्नशास्त्रस्याप्यस्त्विति वाच्यम्; स्मृतिवचनत एव सद्रत्नधारणदुष्टरत्ननिषेधयोः सिद्धेः रत्नशास्त्रस्य सदसद्विवेकमात्रपरत्वादिति भावः ।

भाष्ये **अर्थसद्भावाभावे निश्चिते सतीति ।** नन्वर्थसद्भावाभावनिश्चयेऽपि कल्पितकथासु हर्षादीनां दर्शनात् कथं तदभावनिश्चयस्य हर्षप्रतिबन्धकत्वम् । सत्यपि वा तदभावनिश्चयस्य प्रतिबन्धकत्वे प्रकृते तदभावनिश्चयाभावमात्रमपेक्षितम् ; न

तु वस्तुसत्यत्वनिश्चयोऽपि। ततश्च कथं वस्तुसत्यत्वं सिध्येत्। किञ्च वेदान्तानां सिद्धार्थपरत्वे प्रयोजनानवाप्तेः, 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते', 'विधिनात्वेकवाक्यत्वात् स्तुत्यर्थत्वेन विधीनां स्युः' इति पूर्वोत्तरपक्षसूत्रोक्तन्यायेन वेदान्तानां कर्मविधिशेषतया कर्मप्राशस्त्य एव तात्पर्यम्, न तु प्रतीयमाने सिद्धार्थे इति पूर्वपक्षे प्राप्ते—'पिता ते सुखमास्ते', 'नायं सर्पो रज्जुः' इत्यादिवत् सप्रयोजनतया निरतिशयानन्दे ब्रह्मणि तात्पर्यमस्तीति ब्रह्मणि तात्पर्यविषयत्वस्य समर्थितत्वात् तत एवार्थासत्यत्वशङ्काया अनुत्थानात् कथं बालातुराद्युपच्छन्दनवाक्यसाम्यशङ्का वैदिकंमन्यस्य पूर्वपक्षिण उत्तिष्ठेत्। न हि वैदिकः कश्चिद्वेदतात्पर्यविषयस्यासत्यत्वं शङ्कते। इयं हि शङ्का कर्मविधिशेषत्वपक्षे परं युज्यते। तत्र हि 'सोऽरोदीत्', 'आत्मनो वपामुदखिदत्' इत्यादाविव कर्मप्राशस्त्यमात्रपरतया प्राशस्त्यद्वारभूते तात्पर्याभावेन तत्सत्यत्वानवश्यम्भावात्, 'औषधं पिब; शिखा वर्धिष्यते इत्यादिबालाद्युपच्छन्दनवाक्यसाम्यमिति; न तु सप्रयोजनत्वाद्ब्रह्मणि तात्पर्यमिति सिद्धान्तपक्षेऽपि। वेदतात्पर्यविषयत्वेऽपि असत्यत्वशङ्काया उत्थाने कर्मकाण्डे तच्छङ्कां को वारयेत्। न हि विधिभागव्यावृत्तो वेदान्तभागे कश्चिद्धेतुरस्ति। किञ्च ब्रह्मप्रतिपादकवेदान्तवाक्यानां श्रोतृहर्षजनकत्वेन स्वातन्त्र्येण प्रामाण्ये, 'वायुर्वै क्षेपिष्ठा देवता', 'यन्न दुःखेन सम्भिन्न' मित्यादिवाक्यानामपि तादात्विककुतूहलजनकत्वेन प्रामाण्यसम्भवात् 'विधिना त्वेकवाक्यत्वा' दिति सूत्रोक्तन्यायोऽनाश्रयणीयः स्यात्। तत्रापि दुःखासम्भिन्नसुखरूपे प्रतीते, स स्वर्गः केन प्राप्यत इत्याकांक्षायां ज्योतिष्टोमादिविधिप्रवृत्तिरित्यपि सुवचत्वादिति चेत्—

उच्यते। इत्थं हि शङ्कापरिहारौ—तादात्विकहर्षमात्रपर्यवसायिनां वाक्यानां स्वार्थे तात्पर्यस्य प्रामाण्यस्य वानुपलम्भात् वेदान्तवाक्येष्वपि हर्षमात्रपर्यवसायिषु स्वार्थे तात्पर्यं वा प्रामाण्यं वा न स्यादिति चेत्—तर्हि प्रवृत्तिनिवृत्तिपर्यवसायिषु विप्रलम्भकवाक्येषु स्वार्थे प्रामाण्यादर्शनाद्विधिभागेष्वपि स्वार्थे प्रामाण्यं न स्यात्। यदि च विधिभागानां न प्रवृत्तिमात्रपर्यवसायित्वम्, अपि तु स्वर्गादिफलपर्यवसायित्वमेव; ज्योतिष्टोमादिकं कर्मानुष्ठाय स्वर्गादिकं फलं लभतामिति हि वत्सलतरायाः श्रुतेराशय इति—तर्हि वेदान्तभागेष्वप्येतदर्थश्रवणेन हृष्टस्सन् उपासनादिकमनुष्ठायापवर्गं लभतामित्येवाशय

इति समः समाधिरिति । न च स्वर्गादिवाक्येष्वपि स्वातन्त्र्यप्रसङ्ग इति वाच्यम्; तत्र प्रतिपन्नायाः विध्येकवाक्यतायास्त्यागे हेत्वभावात् स्वरूपोपदेशपरवेदान्तवाक्येष्वसन्निहित विध्येकवाक्यताकल्पने प्रामाणाभावादिति। **पाराशर्यविजये** तु सद्विद्यायामुपासनाविध्यभावेन प्रवृत्तिपर्यन्तत्वाभावात् हुंफडादिवददृष्टार्थत्वम्। अत इतरेषामपि वेदान्तानां तथात्वमिति पूर्वपक्षं कृत्वा, सद्विद्यायामपि 'तस्य तावदेव चिर'मिति वाक्ये उपासनाविधिः समर्थ्यतेऽस्मिन्नधिकरण इत्युक्तम् ।

**आमकतये**ति क्वचित् पाठो दृश्यते । तत्राण्यन्तत्वे, "नोदात्तोपदेशस्य मान्तस्यानाचमेः" इति वृद्धिनिषेधप्रसङ्गेन ण्यन्तत्वे 'मितां ह्रस्व' इति ह्रस्वत्वप्रसङ्गेन च आमकेति रूपासिद्धावपि 'प्रज्ञादिभ्यश्च' इति प्रज्ञादित्वात्, स्वार्थे अणि रूपसिद्धिर्द्रष्टव्या । यद्वा 'मितां ह्रस्व' इति सूत्रे, 'केचित वेत्यनुवर्तयन्ती'ति काशिकायामुक्तत्वात् साधुत्वं द्रष्टव्यम्। **कर्मविधीनामिति** । कर्मविध्यपेक्षितदेहातिरिक्तात्मसमर्पकत्वेन कर्मविधिशेषतया सप्रयोजनत्वादध्यापनाद्युपपत्तिरित्यर्थः ।

**शास्त्रारम्भसिद्ध्यर्था एषा चतुस्सूत्री**ति । इदञ्च सिद्धान्ताभिप्रायेण । मृषावादिमते प्रथमाधिकरणस्यैवारम्भार्थत्वात्। तन्मते हि इत्थं चतुस्सूत्री व्याख्याता– **विवरणकारमते** प्रत्यग्ब्रह्मैक्यं शास्त्रस्य विषयः । तच्च न सम्भवति । कर्तृत्वादेर्विरुद्धधर्मस्यत्रैवयायोगात् । सत्यत्वादेव कर्तृत्वादिबन्धनिवृत्तेर्न प्रयोजनत्वमिति पूर्वपक्षं प्राप्य कर्तृत्वादेर्मिथ्यात्वाद्विषयप्रयोजने सिध्यत इति सिद्धान्तितम्–**वाचस्पतिना** तु प्रत्यगात्मन एव ब्रह्मत्वात् तस्य चाहंधीसिद्धत्वेनासन्दिग्धतया तस्य न विषयत्वमुपपद्यते। अविद्यानिवृत्तेश्च न प्रयोजनत्वम्, ब्रह्मज्ञाने सत्यप्यविद्यानिवृत्तेरदर्शनादिति पूर्वपक्षं कृत्वा, 'ज्ञानानन्दैकरसासंसार्यात्मस्वरूपस्य शास्त्रविषयत्वमुपपद्यते; तज्ज्ञानस्याविद्यानिवृत्तिप्रयोजनत्वं चोपपद्यत' इति सिद्धान्तितं जिज्ञासासूत्रे। जन्मादिसूत्रे, तु 'यतो वा इमानि' इति श्रुत्युक्तजगत्कारणत्वं ब्रह्मणो न लक्षणं भवितुमर्हति, प्रपञ्चस्य सत्यत्वे तेन निर्विशेषब्रह्मावगत्यसम्भवात्; असत्यत्वे च कृतकत्वेन नित्यस्येव असता प्रपञ्चेन सत्यस्य ब्रह्मणो लक्षयितुमशक्यत्वात् जगत्कारणत्वं लक्षणं न सम्भवतीति प्राप्ते, यद्रजतमभात् सा शुक्तिरित्यादौ मिथ्याभूतेनापि रजतेन सत्यायाः शुक्तेरिव मिथ्याभूतेनापि जगज्जन्मादिना सत्यस्य ब्रह्मणो लक्षणं सम्भवत्येव । तत्र च जगज्जन्मादिकं

चन्द्रस्य शाखाग्रमिव तटस्थलक्षणम्। प्रकृष्टप्रकाशादिवत् सत्यत्वादिकं स्वरूपलक्षणमिति वर्णितम्। शास्त्रयोनित्वादित्यत्र जगज्जन्मादिकारणत्वाक्षिप्तं सर्वज्ञं सर्वार्थप्रकाशकवेदकर्तृत्वेनापि दृढीकृतं प्रथमवर्णके। द्वितीयवर्णके तु जगत्कर्तुरनुमानत एव सिद्धेः, तन्निर्विशेषत्वस्य प्रपञ्चमिथ्यात्वानुमानादेव सिद्धेर्ब्रह्मण औपनिषदत्वं न सम्भवतीति पूर्वपक्षं कृत्वा ईश्वरानुमानानां प्रपञ्चमिथ्यात्वानुमानस्य च प्रत्यनुमानप्रतितर्कपराहततया निर्विशेषब्रह्मणः शास्त्रैकप्रमाणकत्वमित्युक्तम्। समन्वयसूत्रे तु अस्मदुक्तरीत्या विध्येकवाक्यत्वनिरासकतया एकं वर्णकम्; सिद्धव्युत्पत्तिसमर्थनपरतया अपरं वर्णकमिति।

**वास्तववेद्यत्वाभावविरहाभावादिति।** पारमार्थिकवेद्यत्वस्यासत्त्वेन वेद्यत्वाभावरूपसाध्यस्यैव सत्त्वादित्यर्थः। **साध्याव्यावृत्तो हि स्यादिति।** साध्यवानेव स्यादित्यर्थः। **त्रिविधं प्रागेव प्रपञ्चितमिति।** प्रमाणान्तरेण भेदवासनाया दोषत्वानिश्चयात् अन्योन्याश्रयः, बाध्यबाधकयोस्तुल्यदोषत्वम्, मूलोच्छेदित्वं चेति त्रिविधमित्यर्थः। **संविदवच्छिन्नान्तःकरणस्येति।** संविद्विशिष्टस्येत्यर्थः, "विशिष्टैक्येऽभ्युपगम्यमान" इत्युत्तरग्रन्थानुसारादिति द्रष्टव्यम्। **यदा सुप्तः स्वप्नं न कथञ्चन पश्यतीति।** 'यदा सुप्तः स्वप्नं न कथञ्चन पश्यति अथास्मिन् प्राण एवैकधा भवति, तदैनं वाक् सर्वैर्नामभिस्सहाप्येति, चक्षुस्सर्वै रूपैः सहाप्येति, श्रोत्रं सर्वैः शब्दैः सहाप्येति, चक्षुः सर्वैर्ध्यानैःसहाप्येति। स यद् प्रबुध्यते यथाग्नेर्विष्फुलिङ्गा विप्रतिष्ठेरन् एवमेवैतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः' इति कौषीतकीश्रुतिः। **त्रितयोत्तीर्णस्येति।** ज्ञातृज्ञेयतदवच्छिन्नज्ञानातिरिक्तस्येत्यर्थः।

**प्रयोजनं द्विविधमिति।** शास्त्रस्य प्रयोजनं द्विविधमित्यन्वयः। ननु शास्त्रानारम्भो जीवैक्यपक्षे आपाद्यते, उत तन्नानात्वपक्षे। नाद्यः— तत्पक्षे इतः पूर्वं कस्यापि ज्ञानानुत्पत्तेः शास्त्रमारब्धव्यमेव। न च वसिष्ठादीनामसम्भावितमितःपरं कथमन्यस्य स्यादिति शङ्क्यम्— सिद्धान्तेऽप्यतीतेष्वनन्तेषु जन्मस्वसम्भावितं मोक्षसाधनमितःपरं कथं स्यादिति शङ्कायास्तत्रापि (?) सम्भवात्। न द्वितीयः— अन्यस्य ज्ञानान्मुक्तत्वेऽपि इतरस्य मुक्त्यर्थं शास्त्रारम्भोपपत्तेरित्यस्यास-

दाह—**प्रपञ्चस्य सत्यत्वादेवेति** । ननु 'नित्यं विज्ञानमानन्द' मित्यादिवाक्यैरापाततो नित्यपुरुषार्थप्रतिपादनावगमे तद्विचारप्रवृत्तिसम्भव इति नान्योन्याश्रय इत्यस्वरसादाह **शास्त्रान्तरेष्वपीति** ।

**कथं कारणत्वे लक्षण** इति । कारणत्वं ब्रह्मव्यतिरिक्तेऽपि कुतो न सम्भवेदिति शङ्कायाः सम्भवादित्यर्थः । **इदंशब्दवाच्यं कार्यमात्रं प्रतीति** । न तु सर्वकार्यं प्रतीत्यर्थः । येन तस्य सत्यत्वं सिध्येदिति भावः । **न तु यतोवाइमानीत्यादि श्रुतिरिति** । नन्विह सूत्रे पूर्वसूत्राल्लक्ष्यसमर्पकं ब्रह्मेतिपदमनुवर्तते । तत्र प्रत्यगभिन्नप्रपञ्चवस्तुपरम्; प्रकरणोपपदादिसङ्कोचकराहित्येन तस्य त्रिविधपरिच्छेदपरिपन्थिनिरतिशयबृहत्त्वाचित्त्वात् । बृहत्त्वमात्रवाचित्वेऽपि वैपुल्यापरपर्यायस्य बृहत्त्वस्य 'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा' इति श्रुत्या वस्तुपरिच्छेदपरिपन्थिनो लक्षणस्य दर्शितत्वात् । न हीदं लक्षणं ब्रह्मणः प्रत्यगभिन्नत्वे प्रपञ्चस्य सत्यत्वे घटते । तथा सति तत्कारणत्वाधारत्वनियन्तृत्वादीनां सत्त्वे, यत्र नान्यत्पश्यतीत्यनुपपन्नम् । एवञ्च परब्रह्मशब्दार्थतया प्राप्तस्य निष्प्रपञ्चत्वस्य यद्रजतमभात् सा शुक्तिरितिवत् अध्यारोपापवादन्यायेन सिध्यर्थमिदं हि तटस्थलक्षणमेव भवितुमर्हति, न तु सत्यत्वादिवत् स्वरूपगतं स्वरूपलक्षणमिति हि तेषां रहस्यमिति चेन्न — जगत्कारणत्वस्य विशिष्टनिष्ठतया तस्य त्रिविधपरिच्छेदशून्यत्वाभावेन तदुपपादकत्वाभावात् । किञ्च यथा देशापरिच्छेदः सर्वदेशव्यापित्वम्, कालापरिच्छेदः सर्वकालव्यापित्वम्, एवं वस्त्वपरिच्छेदोऽपि तादृश इति सर्ववस्त्वनुवृत्तत्वं न निष्प्रपञ्चत्वपर्यवसितम् । सर्ववस्तुभेदशून्यत्वेऽपि उपादानोपदेययोरभेद एवास्तु, न तु प्रपञ्चस्यासत्यत्वम् । अतस्तन्मतश्रद्धालुभ्य एव तद्रोचतामिति भावः । **सार्वज्ञ्येन वस्तुन्युपलक्षित** इति । ततश्च शाङ्करभाष्ये जन्मस्थितिभङ्गं यतः सर्वज्ञात् सर्वशक्तेः कारणात् भवतीति सार्वज्ञ्यसर्वशक्तित्वयोरुपलक्षणतयोपन्यासो न युक्त इति भावः । **तदन्यथासिद्धिप्रतिविधानं चेति** । शास्त्रप्रत्यक्षविरोधान्यथासिद्धिप्रतिविधानमित्यर्थः । ननूक्तरीत्या भ्रमनिवृत्तिरूपपुरुषार्थपर्यवसानासम्भवेऽपि प्रवृत्तिनिवृत्तिरूपपुरुषार्थपर्यवसानं स्यादित्यशङ्क्याह—**प्रवृत्तिनिवृत्तीति** । **एकेन वाक्येनेति** । जिज्ञासासूत्रे प्रधानादिष्विदमेव ब्रह्मेति विधाय

पुनस्तदेवानूद्य जिज्ञास्यत्वविध्यसम्भवादिति भावः । **अनुवादः क्रियत इति शङ्कापरिहारार्थमिति** । अनुवादः क्रियत इति या शङ्का तत्परिहारार्थमित्यर्थः । **शास्त्रेणानुवादासम्भव** इति । यतो वा इमानीति शास्त्रेणेत्यर्थः ।

इति समन्वयाधिकरणम् । चतुःसूत्री पूर्णा ।।

—:※:—

## ईक्षत्यधिकरणम् (५)

(ईक्षतेर्नाशब्दम् १-१-५)

**प्रथमे सूत्रे उद्देशः कृत** इति । अत्रायं विवेकः—प्रथमद्वितीयपक्षयोः तृतीयचतुर्थाधिकरणे लक्षणलक्ष्यस्वभावनिबन्धनपरीक्ष्यत्वशङ्कानिवर्तकत्वेनैका[1] पेटिका । तत्रापि यतो वा इमानीत्यादिवाक्ये जगत्कारणानुवादेन ब्रह्मत्वं विधीयत इति पक्षानुसारेण प्रथमः पक्षः । यतो वा इमानीति वाक्ये कारणत्वानुवादेन लक्षणत्वं विधेयमिति पक्षानुसारेण द्वितीयः पक्षः । न्यायशास्त्रस्य उद्देशलक्षणपरीक्षारूपत्वस्य आवश्यकत्वेऽपि अस्य शास्त्रस्य तदनावश्यकत्वात् प्रथमद्वितीयाधिकरणयोर्नोद्देशलक्षणार्थप्रवृत्तत्वम् ; अपि तु व्युत्पत्त्यभावप्रतिपत्तिदौःस्थ्यमानान्तरसिद्धत्वाफलत्वनिबन्धनानारम्भशङ्कानिवर्तकत्वेन चतुर्णामप्यधिकरणानामेकपेटिकात्वमिति तृतीयः पक्षः । **क्षेत्रज्ञमात्रमिति** । जीवसामान्यमित्यर्थः ।

**सद्विद्याद्वारेणेति** । न्यायतौल्यात् तेषां पक्षसमत्वमिति भावः । उपनिषदन्तरगतगतिसामान्यादेर्ब्रह्मविषयत्वं सिद्धवत्कृत्य तस्य हेतुतयोपन्यासाच्च सद्विद्यावाक्यस्यैव विषयत्वमित्याह — **तदनुग्राहकत्वेन चेति** । सिद्धान्तानुग्राहकत्वेनेत्यर्थः । न चैवं वेदान्तान्तराणामपि पक्षतुल्यत्वमिति पूर्वग्रन्थविरोध इति वाच्यम् ; तस्योत्तरत्र समाधास्यमानत्वादिति द्रष्टव्यम् । **उपादानत्वोचितेति** । विकारित्वादिति भावः । नन्वचेतनत्वशङ्कायाः प्रतिक्षेप्यत्वेऽपि ब्रह्मपदादियुक्त-

1. प्रथमपक्षे द्वितीयपक्षे च तृतीयचतुर्थाधिकरणे प्रथमद्वितीयाधिकरणाभ्यां सह नैक पेटिकेत्यर्थः ।

वाक्यस्य विषयत्वमस्त्वित्यत आह—**सद्ब्रह्मादीति** । सत्त्वस्य ब्रह्मत्वापेक्षया साधारणतया तस्यैव विचारो युक्त इति भावः । **विशेषे तु प्रतिपन्ने** हीति । प्रथमत एवाकाशेन्द्रादिपदावलम्बनेन पूर्वपक्षे निरस्ते सदादिसामान्यशब्दावलम्बनपूर्वपक्षो दण्डापूपन्यायपराहतः स्यात् । अत एतस्यैव पूर्वप्रवृत्तत्वमुचितमिति भावः । **अतः संशयमाहेति** । सच्छब्दयुक्तवाक्य एवेति शेषः । केचित्तु सन्दिग्धे हि न्यायप्रवृत्तिः । अतो न्यायावतारार्थं संशयसद्भावमाहेत्येकग्रन्थतया योजयन्ति । **विप्रतिपत्तिर**पीति । परोक्तमित्यनेन स्वोक्तस्याप्याक्षेपा द्विरुद्धार्थप्रतिपादकवचनद्वयरूपविप्रतिपत्तिरुपन्यस्ता भवति । तत्र परोक्तमित्यनेन त्रिगुणात्मकत्वस्य सूचितत्वात् कार्यसालक्षण्यरूपहेतुरनुगृहीतो भवति । स्वोक्तमित्यनेन चेतनत्वस्य सूचनात् मुख्येक्षितृत्वस्यानुग्रहो भवतीति भावः । **पादशेषसाधारणो विचार** इति । नन्वयं विचारोऽध्यायमात्रसाधारण एवेति कथं पादशेषमात्रसाधारणत्वमुच्यत इति चेन्न ; सर्वाण्यपि वेदान्तवाक्यानि प्रधानादिप्रतिपादनपराणि उत तद्विलक्षणपराणीति तदर्थात्, प्रथमपादे चिदचिद्विलक्षणास्तित्वस्य सिद्धत्वेन त्रिपाद्या अन्ययोगव्यवच्छेदार्थत्वेन कतिपयवाक्यमात्रविषयत्वादिति द्रष्टव्यम् । **ब्रह्मपरत्वविरो**धीति ।(?) (?) साधको न वेत्यर्थः । तत्रश्चात्मशब्दस्य तेजःप्रभृतिशब्दब्रह्मपरत्वविरोधित्वस्य पूर्वपक्षिणाप्यनभ्युपेतत्वात् कथमियमुक्तिरिति शङ्का परास्ता । एवमुत्तरत्रापि द्रष्टव्यम् ।

**अन्यतरशिरस** इति । अनयोर्मध्ये किं वा शिरो युक्तिमत्तया निर्धारणार्हमित्याकांक्षां दर्शयतीत्यर्थः । **सुखदुःखमोहान्वयहेतुत्वदर्शनादिति** । यथा एका स्त्री रूपयौवनकुलशीलसम्पन्ना स्वामिनं सुखाकरोति, तत् कस्य हेतोः ? स्वामिनं प्रति तस्याः सुखरूपसमुद्भवात् । सैव स्त्री सपत्नीं दुःखाकरोति, तत् कस्य हेतोः ? तां प्रति तस्याः दुःखरूपसमुद्भवात् । एवं तामविन्दत् पुरुषान्तरं सैव मोहयति। तत् कस्य हेतोः ? तत् प्रति तस्या मोहरूपसमुद्भवात् । अतः सर्वे पदार्थाः सुखदुःखमोहान्वयहेतुत्वात् सुखदुःखमोहरूपाः । अतस्तादृशसत्त्वरजस्तमोमूलका इत्यर्थः । **तत एव च कार्यकारणयोरनन्यत्वमि**ति भाष्ये तत इत्यस्य(तीदम् ?) अभिधीयत इत्युक्ताभिधानपरतया व्याख्याय सदेवेति श्रुतिपरतया व्याचष्टे—**यद्वा इदमग्र**

आसीदिति। **अत्रायं प्रयोगो वेदितव्य** इत्यस्यानन्तरं प्रयोगस्वरूपप्रतिपादकग्रन्थो लेखकदोषात् पतितः[1] । स तावदित्थम्—इदं जगदेकोपादानविज्ञानविज्ञातं कार्यत्वात् संप्रतिपन्नैकमृत्पिण्डारब्धकार्यवदिति ।

भाष्ये **यस्मिन् शब्द एव प्रमाणं न भवतीति** । अत्र केचित्—एवकारो भिन्नक्रमः । शब्दः प्रमाणमेव न भवतीत्यर्थः । सांख्यमते श्रुतेरनुमानसिद्धानुवादितया श्रुतेरप्रमाणत्वात् अशब्दत्वमस्त्येव । उक्तं च वाचस्पतिना—'प्रधानं जगदुपादानकारणमनुमानसिद्धमनुवदन्त्युपनिषद इति सांख्याः' इति । अत एव टीकायां प्रमाणान्तरप्राप्तं शास्त्रं न प्रतिपादयतीति चेदित्यादिचोद्यपरिहारयोरपि नावकाशः । श्रुतेः प्रमाणत्वाभ्युपगमेऽपि अशब्दशब्दात् शब्दभिन्नप्रमाणवचनात् अर्शआद्यचि आनुमानिकमित्यर्थलाभात् । टीकायामप्यानुमानिकादिशब्दवदिति परमतदूषणे वक्ष्यमाणत्वाच्च । शब्द एव प्रमाणं न भवतीति अवधारणगर्भतया व्याख्यानमतिक्लिष्टम् । तथा सति घटपटवति भूतले अघटमिति प्रयोगापत्तेरिति वदन्ति । अन्ये तु—एकमात्रकर्तृकत्वरहिते रथगोपुरादौ एककर्तृकत्वं नेति प्रयोगदर्शनात् शब्दमात्रप्रमाणकत्वाभावमादाय अशब्दत्वोक्त्युपपत्तिः । न च तन्मते शब्दस्यानुमानसिद्धानुवादितया शब्दप्रामाण्यानभ्युपगमात् टीकाकृदाक्षेपपरिहारयोरस्थानविजृम्भितत्वमिति युक्तं वक्तुम् । अनुवादितयैव पूर्वपक्षः प्रवर्तयितव्य इति निर्बन्धाभावात्, श्रुत्यनुमाने परस्परसहकारिणी सती प्रतिपादयत इति पूर्वपक्षसम्भवादिति वदन्ति । **तस्यानुपपन्नताञ्च ज्ञापयितुमिति** । पूर्वपक्ष्यभिमतं शब्दातिरिक्तप्रमाणकत्वलक्षणमशब्दत्वं प्रदर्शयता सूत्रकृता पूर्वपक्षिणो व्याहतवादित्वमाविष्कृतं भवतीति भावः । **वाक्यनिरूपणपरत्वादिति** । समन्वयलक्षणस्य सर्वस्यापि वाक्यप्रतिपाद्यत्वविचाररूपत्वादिति भावः । **व्यधिकरणासिद्धीति** । हेतोः स्वरूपासिद्धिव्युदास इत्यर्थः । **इक्श्तिपाविति** । धातुनिर्देशे धात्वनुकरण इत्यर्थः । शित्त्वाच्छप् । शित्त्वसामर्थ्याच्चाकर्तृवाचिन्यपि सार्वधातुके शबित्याहुः । **ईक्षितेरिति हि वक्तव्यमिति** । नन्वीक्षतेर्गुरुत्वात्, 'गुरोश्च हलः' इत्यङि ईक्षेत्येव भाव्यम्, न तु, 'स्त्रियां क्तिन्' इति क्तिन् । स्त्र्यधिकारे च 'वासरूप' विध्यभावात् । सति च

1. मुद्रितकोशे उपलभ्यत एव ।

क्तिनि ईक्षितेरिति रूपप्रसङ्गः, 'तितुत्र–' इति इटो निषेधात्, स्कोरिति कलोपे ईष्टेरित्येव रूपं तदा स्यादिति चेन्न – इतिशब्दः प्रकारार्थः । तदयमर्थः – 'गुरोश्च हलः' इत्यङि ईक्षेति रूपं स्यात् । स्त्रियां क्तिन्नबादिभ्यश्चेति वक्तव्यमिति क्तिन्नन्तत्वेन प्रयोगोऽस्तीति चेत्; आप्तिदीप्त्यादिवदत्रापि अङपवादः क्तिन् स्यात् । 'आङ्बादयः प्रयोगतोऽनुसर्तव्याः' इति वृत्तिकारेणोक्तेः । क्तिनि च ईक्षितिरिति प्रयोगोऽस्तीति चेत्; तितुत्रेष्वग्रहादीनामित्युक्तत्वान्निगृहीत्यादिवदत्रापाट् स्यात् । अन्यथा ईग्निरिति स्यात् । न कथञ्चिदपीक्षतेरिति स्यादिति । **विवक्षितार्थे स्वारस्यं सूचित**मिति । ईक्षणादित्यर्थस्वरूपानुपादानेन ईक्षतेरिति शब्दरूपोपादानस्य धातुस्वारस्यसूचकत्वादिति भावः । **सूत्रविवक्षे**ति । ततश्च सौत्रमीक्षतिपदं षष्ठ्यन्तम्, श्रवणादिति चाध्याहर्तव्यमिति भाष्यकाराभिप्राय इति न भ्रमितव्यमिति भावः । **चेतनमात्रादपी**ति । जीवसामान्यादपीत्यर्थः । **न तस्य सङ्कल्पप्रतिबन्धे**ति । अप्रतिबद्धसङ्कल्पत्वमेव सत्यसङ्कल्पत्वमिति भावः । **चिदचितोश्शरीरत्वं कथ**मिति । इदमुपलक्षणम्, विलक्षणयोः कार्यकारणभावः कथमित्यपि द्रष्टव्यम्; 'न विलक्षणत्वात्' इत्यस्य तच्छङ्कानिराकरणप्रवृत्तत्वात् ।

**तदभावान्न तद्विवक्षेति भाव** इति । न च 'तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ' इति कार्यलिङ्गोपन्यासादनुमानविवक्षा प्रतीयत एवेत्यानुमानिकमेव प्रधानमिह प्रतिपाद्यम् । श्रुत्येकसमधिगम्ये ब्रह्मणि लिङ्गोपन्यासासम्भवादिति वाच्यम्– उपन्यस्तप्रतिज्ञादृष्टान्तानुसारिहेत्वनुपन्यासात् । ब्रह्मण्यपि श्रुत्यनुग्राहकानुमानप्रवृत्त्यविरोधाच्च । श्वेताश्वतरे, 'कालस्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष इति चिन्त्यम् । संयोग एषां न त्वात्मभावादात्माप्यनीशः सुखदुःखहेतोः ॥' इति मन्त्रेण कालस्वभावकर्म(?)महाभूतप्रकृतिपुरुषातिरिक्तब्रह्मण्येव कार्यलिङ्गानुमानोपन्यासदर्शनाच्च । न चैवं श्रुतेः निरपेक्षत्वहानिः; श्रुतितात्पर्यनिर्णयाय मीमांसाशास्त्रग्रथितन्यायकलापापेक्षावत् श्रुतिदर्शितस्वानुग्राहकानुमानापेक्षायामपि, निर्णीते तात्पर्ये अर्थसंवादाय प्रमाणान्तरानपेक्षणात् । उपक्रमोपसंहाराद्यन्तर्गतोपपत्तिरूपतया अनुमानस्य तात्पर्यनिर्णयार्थमपेक्षायाः सम्प्रतिपन्नत्वात् । न चासम्भवाशङ्काव्यावृत्त्यर्थो मृत्पिण्डादिदृष्टान्त एवोपन्यसनीयः, नानुमानमिति वाच्यम् ।

'न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते अविनाशित्वादात्मनः' इत्यादावनुमानरूपोपपत्तेरपि दर्शनेन तदसंग्रहायोगात्। ननु तर्हि किमर्थं हेतुवन्निगदाधिकरणे, 'शूर्पेण जुहोति तेन ह्यन्नं क्रियते' इत्यत्र हेतुत्वान्वयनिरास इति चेन्न; अन्नकरणस्य हेतुत्वेनान्वये, यद्यदन्नकरणं तेन तेन होतव्यमिति व्याप्त्याक्षेपे दर्वीपिठरादीनामपि होमसाधनत्वानुमानादानुमानिकैः दर्वीपिठरादिभिः प्रत्यक्षश्रुतस्य शूर्पस्य अन्याय्यो विकल्पः स्यात् इति तदर्थं हेत्वन्वयनिरासः, न तु तस्य हेत्वन्वये सापेक्षत्वेन प्रामाण्यं स्यादिति तद्व्यावृत्त्यर्थम्। अत एव तत्रैवाधिकरणे न्यायसुधायाम् आनिष्ट्येष्टौ 'चतुर्गृहीतान्याज्यानि भवन्ति; न ह्यत्रानूयाजा इज्यन्ते' इत्यत्र चतुर्गृहीतान्तरपरिसंख्यायां अनुयाजाभावस्य हेतूकरणात्, यत्र यत्रानूयाजाभावः, तत्र सर्वत्र चतुर्गृहीतान्तराभाव इति सिध्यतीत्युक्तम्—अप्रामाण्यनिरासार्थं हेत्वन्वयनिराकरणमिति निबन्धनकारनिर्बन्धमात्रम्। अतः प्रधानानुमापकत्वेन सांख्याभिमतहेतोरिहानुपन्यासान्न प्रधानपरत्वमित्यत्र तात्पर्यम्।

**सर्वविज्ञानं धर्मैक्या**दिति। धर्मैक्याद्वा भवेदतिरिक्तवस्तुनोऽभावाद्वा भवेदिति वाक्यार्थः। **घटपटादि**ष्विति। अन्यसाव्यतिरेकेणान्वयेन घटपटादिषु धर्मैक्यस्य समानाकारयोगस्य चाभावादित्यन्वयः। 'अन्यसाव्यतिरेकेणान्वयेन' इत्यनेन वस्त्वन्तरासत्त्वलक्षणवस्त्वन्तरव्यतिरेकस्याभाव उपन्यस्तो भवति। व्यतिरेकेणान्वयेन=व्यतिरिक्ततया सद्भावेनेति हि तदर्थः॥ ५॥

अमुख्येक्षणस्यापि चेतनगतत्वात् चेतनत्वसाधनतया यदीक्षणमुक्तमित्यस्यैवोद्भावनार्हत्वाच्च चेतनगतमित्यस्य चेतनत्वसाधकमित्यर्थ इति व्याचष्टे—**चेतनत्वानुगुण**मिति। ऐकरूप्याय **प्रधानगत**पदमपि तथा व्याचष्टे—**अचेतनत्वानुगुणमित्यर्थ** इति। **अग्र्यप्रायन्यायो बाधकाभावे ही**ति। श्रेष्ठप्रायलेख्ये लिखितस्य श्रेष्ठत्वमग्र्यप्रायन्यायः। ननु बाधकाभावे ह्यग्र्यप्रायन्यायः। अस्ति चात्र बाधकम्। ईक्षणश्रुतेरेव बाधकत्वात्। सन्निधिलक्षणाग्र्यप्रायन्यायस्य ईक्षणश्रुतिविरोधे दुर्बलत्वात्। 'विशये प्रायदर्शनात्' इति न्यायेन सन्देह एव प्रायपाठन्यायावतारात्। प्रकृते चेक्षणश्रुतिसत्त्वेन सन्देहाभावादिति चेन्न—सत्त्वादिमयस्य तादृशकारणारब्धत्वं वक्तव्यमित्यनुमानविरोधेन ईक्षणश्रुतेर्निष्परिपन्थित्वाभावेन

प्रकृते संशयस्यैवावतारे प्रायपाठेन निर्णयसम्भवादिति तात्पर्यात् । **अनेनैव न्यायेन** इति । अत्र प्रायन्यायेनेत्यर्थः । 'हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि', 'इमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरोत्', 'यथा तु खलु सोम्येमास्तिस्रो देवताः' इति तेजोबन्नेषु गौणदेवताशब्दानां बहूनां सत्त्वात् प्रायत्वमुपपद्यत इति द्रष्टव्यम् । अतो यदत्र **तूलिकायां** यद्यप्यचेतनविषय एक एव देवताशब्दः श्रूयते, तथापि बहुवचनान्ततया कृतैकशेषत्वाच्छब्दत्रयमस्तीति प्रायत्वमिति भाव इत्युक्तम्, तस्य न सम्यक्त्वमिति ध्येयम् ।

गौणश्चेन्नात्मशब्दात् १-१-६.

**आत्मशब्दोऽपीति** । 'ऐतदात्म्यमिदं सर्वम् स आत्मा' इत्यात्मशब्दद्वयाभिप्रायेण मृदात्मको घटः, घटस्य मृदात्मेति द्वयमपि निर्दिष्टमिति द्रष्टव्यम् । **स्वरूपैक्यं सम्भवतीत्यर्थ** इति । सिद्धान्ते तु शरीरप्रतिसम्बन्धित्वलक्षणमात्मत्वं सम्भवतीति भावः । **अपि**शब्दं समुच्चयपरतया व्याख्याय विरोधपरतयापि व्याचष्टे—**अतदात्मकत्वेन त्वदभिमतानामपीति वेति** । भाष्ये **मुख्य एवेक्षणव्यपदेश** इति । ननु तेजोबन्नेषु सृष्टेषु 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' इति सङ्कल्पपूर्वकपरमात्मानुप्रवेशः कथं तत्पूर्वकालीनतेजोजलकर्तृकेक्षणमुख्यत्वं साधयेदिति चेन्न — नोदाहरणमादर्तव्यमितिन्यायेन परमात्मन आत्मत्वप्रतिपादकानां प्रमाणानां सत्त्वात् शरीरवाचिशब्दानां शरीरिपर्यन्तत्वस्य च आकृत्यधिकरणसिद्धत्वादित्यर्थः । **इति सूत्राभिप्राय इतीति** । सूत्रेऽनेकाभिप्रायत्वस्यालङ्कारत्वादिति भावः । **मुख्यामुख्यार्थानुग्राहकेष्विति** । यद्यपि मुख्यार्थानुग्राहकप्रायपाठस्य सन्निधिरूपस्य मुख्यानुग्राहकात्मश्रुत्यपेक्षया दुर्बलत्वान्न प्रायपाठानुसारेण ईक्षणस्य गौणत्वमित्येव भाष्ये प्रतीयते; न तु मुख्यार्थानुग्राहकत्वेनैवानुरोद्धव्यत्वम् — तथापि तस्यापि न्यायस्य व्युत्पादनं सम्भवतीत्यत्र तात्पर्यम् । **अवान्तरसाध्यविषयत्वशङ्कामिति** । गौणत्वाभावरूपावान्तरसाध्यविषयत्वशङ्कामित्यर्थः । **कारणत्वौपयिकेक्षणधर्मनिरूपणेनेति** । ननु प्रधानस्यैव जगत्कारणत्वमिति वदन्तं प्रति ईक्षणाभावात् मुमुक्षुध्येयत्वाभावात्

न जगत्कारणत्वमित्युक्ते न समीचीनमुत्तरं स्यात्। परेण ईक्षणमुमुक्षुध्येयत्वयोर्जगत्काणत्वव्यापकत्वानभ्युपगमेन तद्व्यतिरेकेण कारणत्वव्यतिरेकसाधनासम्भवात्। ततश्च न प्रधानं सद्विद्याप्रतिपाद्यम्; उपक्रमगतेक्षणस्य तत्रासम्भवात् उपसंहारश्रुतानामपि तत्रासमवायान्न वाक्यसन्दर्भप्रतिपाद्यत्वमित्येवोपन्यसनीयमिति चेन्न—अस्यापि ग्रन्थस्य तत्रैव तात्पर्यात्॥ ६॥

तन्निष्ठस्य मोक्षोपदेशात् १-१-७.

**अनुसन्धानार्थत्वं कथमवगतमिति**। ततश्च सदात्मकत्वानुसन्धानमुपदिश्येत्ययुक्तमिति भावः। ननु 'तत्त्वमसि' इति सदात्मकत्वानुसन्धानमुपदिश्ये'ति भाष्यस्यायमर्थः—तत्त्वमसीति प्रतिपन्नस्य सदात्मकत्वस्यानुसन्धानम्, 'आचार्यवान् पुरुषो वेद' इत्युपदिश्येति इति वक्तव्यम्। अन्यथा तत्त्वमसीत्यनेन सदात्मकत्वोपदेशेऽपि सदात्मकत्वानुसन्धानोपदेशासम्भवात्। ततश्चैवमर्थे कथिते अनयोः शङ्कापरिहारयोरनुत्थितिरिति चेत्—सत्यम्। **वेद**शब्दप्रतिपन्नस्यानुसन्धानस्य उपासनारूपत्वसमर्थनार्थतया साफल्यसम्भवात्।

उपक्रमोपसंहाराभ्यासफलार्थवादैरुपासनतात्पर्यं वाक्यसन्दर्भस्य प्रतिपादयति—**उच्यत इत्यादिना। विजज्ञाविति पदमावर्तितमिति**। अनेनाभ्यासरूपमुपासनतात्पर्यलिङ्गमुपपादितं भवति। न च द्विरुक्तेरध्यायपरिसमाप्तिद्योतनार्थत्वान्न तस्या द्विरुक्तेरभ्यासतया तात्पर्यलिङ्गत्वमिति वाच्यम् — अध्यायपरिसमाप्तिद्योतकत्वेऽपि अभ्यासरूपत्वानपायात्। ननु 'त्रिवृदेकैका भवति तन्मे विजानीहि', 'स्वप्नान्तं मे सोम्य विजानीहि', 'भूय एव मा भगवान् विज्ञापयत्विति,' 'तद्धास्य विजज्ञौ' इति प्रकरणगतानां विज्ञानशब्दानां शब्दज्ञानपरत्वमेव; नोपासनपरत्वम्। न हि तद्धास्य विजज्ञावित्यस्योपासाङ्गक इत्यर्थः; येनेदं युक्तं स्यादित्यस्वरसादाह—**मध्येऽप्याचार्यवान् पुरुषो वेदेति। अनुसन्धेयत्वे लिङ्गमिति**। आचार्यवत्ताफलत्वेनोपासनस्य स्तुतिरुपासनतात्पर्ये लिङ्गमित्यर्थः। ननु 'यदाऽस्य वाङ्मनसि सम्पद्यते' इत्यस्य वस्तुतो देहोत्क्रमणविषयत्वेऽपि तत्र देहस्यानुपात्तत्वात् इत्यस्वरसादाह—**अन्यत्र अस्माच्छरीरात्समुत्थायेति शरीरमित्यवगम्यत** इति। शरीरारम्भकं प्रारब्धकर्मेत्यर्थः। 'भोगेन त्वितरे क्षपयित्वा' इति सूत्रभाष्ये, 'तस्य

तावदेव चिरं यावन्न विमोक्ष्ये ' इति भोगेन तयोः कर्मणोर्विमोक्ष इति वक्ष्यमाणत्वात् । वसिष्ठावान्तरतपःप्रभृतीनां विद्यायोनिदेहपातानन्तरमपि ब्रह्मसम्पत्त्यभावाच्चेत्यपि द्रष्टव्यम् । विमोक्ष्ये सम्पत्स्ये इत्यत्र पुरुषव्यत्ययश्छान्दसः । विमोक्ष्यते सम्पत्स्यते इत्यर्थः । अचेतनसम्पत्तिरित्यत्र सम्पत्तिशब्दस्य तत्स्वरूपतापत्तिपरत्वशङ्कां व्यावर्तयितुं व्याचष्टे—**अचित्प्राप्तिरिति** । सम्पत्तिशब्दस्य प्राप्तिपरत्वानिश्चायकं किमित्यत आह—**सम्पत्तिशब्दस्येति** । तापत्रयाभिहतिहेतुत्वप्रतिपादनात् अचित्प्राप्तेरेव तापत्रायभिहतिहेतुत्वाच्च सम्पत्तिशब्दस्य प्राप्तिवाचित्वं निश्चीयत इत्यर्थः ॥ ७ ॥

## हेयत्वावचनाच्च १-१-८.

प्रतिसूत्रं वा सर्वान्ते वा समुच्चयपरशब्दे कार्ये मध्ये चशब्दप्रयोगः किंनिबन्धन इति शङ्कां परिहरति—**एवं तदैक्षतेत्यादिना** । उपरितनवाक्यगतहेतुसमुच्चयार्थो मध्ये चशब्दप्रयोग इत्यर्थः । एवं विभज्य समुच्चयप्रतिपादने प्रयोजनमान्द्यात् अन्यथा चशब्दप्रयोजनमाह—**यद्वा उपदेयतयोक्तयेत्यादिना** ॥ ८ ॥

## प्रतिज्ञाविरोधात् १-१-९.

**चिदंशस्याकार्यतया च ज्ञानसम्भवादित्यत्राहेति** । प्रधाने ज्ञाते तदकार्यत्वेन चिदंशस्य ज्ञानं सम्भवति, प्रधानापरिज्ञाने तदकार्यत्वेन चिदंशस्य ज्ञानासम्भवात् प्रधानज्ञानस्य तदकार्यत्वप्रकारकचिद्विशेष्यकज्ञानहेतुतया तज्ज्ञाने तदकार्यत्वेन चिज्ज्ञानमप्युपपद्यत इति भावः ॥ ९ ॥

## स्वाप्ययात् १-१-१०.

' स्वप्नान्तं मे सोम्य विजानीहि ' इति स्वप्नान्तः = सुषुप्तिः । **मे** उपदिशतो मम वचनात् जानीहीत्यर्थः । **अर्थान्तरत्वशङ्कामिति** । सता सोम्येत्यत्र सच्छब्दस्य ब्रह्मणोऽर्थान्तरभूतजीवपरत्वशङ्कामित्यर्थः । **धातुस्वभावभेदादित्यभिप्राय** इति । सता सम्पन्न इति कर्मणि निष्ठान्तप्रयोगवत्, सता अपीत इति न वक्तुं शक्यत इत्यादि धातुस्वभावायत्तमिति भावः । ननु स्वसच्छब्दयोरेकार्थपर्यवसायित्वे अन्यतरवैयर्थ्यमित्याशङ्क्याह—**जीवेनात्मनेति** । यथा ' अनेन जीवेना-

त्मना ' इत्यत्र आत्मशब्देन स्वरूपेणोपस्थितस्य परमात्मनो जीवशरीरकत्वप्रतिपत्त्यर्थत्वात् जीवशब्दस्य, नान्यतरवैफल्यम् । एवं सच्छब्देन स्वेन रूपेणोपस्थितस्य परमात्मनो जीवशरीरत्वज्ञापकत्वात् स्वशब्दस्य, पदद्वयसाफल्यमिति भावः । **स्वेन रूपेणे**ति । परमात्मरूपेणेत्यर्थः । **जीवादर्थान्तरे सती**ति । **सति** सच्छब्दते इत्यर्थः । न तु सतिसप्तमीति भ्रमितव्यम् । दूषणान्तरमाह — **कार्यकारणयोरन-न्यत्वादि**त्यादिना । **नापि निष्कृष्टपरमात्मपर** इति । स्वशब्द इति शेषः । **स्वरूपेण धारणस्य महाप्रलयेऽपि तुल्यत्वादि**ति । स्वरूपमात्रबलेन धारकत्वे उच्यमाने महाप्रलयेऽपि शरीरधारकत्वप्रसङ्ग इत्यर्थः । **देहस्य जीवं प्रत्यपृथक्-सिद्धिः देहलक्षणं च न घटत** इति । ननु जीवस्य देहे सत्त्वेनापृथक्सिद्धौ काऽनुपपत्तिरिति चेन्न—जीवस्वरूपापृथक्सिद्धिर्नापृथक्सिद्धिः, तथा सति सौभरि-शरीरेषु सर्वेषु जीवस्वरूपापृथक्सिद्ध्यसम्भवात् शरीरत्वानापत्तेः । अपि तु धर्म-भूतज्ञानव्याप्तत्वम् । अत एव 'यदेकां शाखां जीवो जहाति अथ सा शुष्यति' इति । यत्प्रदेशे धर्मभूतज्ञानव्याप्त्यभावः, तदंशस्य शोषप्रतिपादनात् जीवधर्मभूतज्ञानापृथक्-सिद्धिरित्यर्थः । **जीवस्य देहापरित्यागादि**ति । ज्ञानव्याप्तेः सत्त्वादित्यर्थः । बहिर्निर्गमने इन्द्रियादिसापेक्षतया बहिर्निर्गमनाभावेऽपि देहधारणोपयुक्तज्ञानप्राप्तिमात्र-सत्त्वादिति भावः । **धारणयोग्यत्वाच्चे**ति । धार्यमाणत्वादित्यर्थः । ननु कारणावस्था न्वयिनि अन्तर्भावो लयश्चेत्, यावतो लयस्थानत्वं न तावत उपादानत्वम्, यदंशस्यो-पादानत्वं न तस्य लयाधारत्वम्; तदंश एव तस्यान्तर्भावासम्भवादित्याशङ्क्याविरोधमाह— **एकस्य परमात्मन** इत्यादिना । **व्याख्यानान्तरव्यावृत्त्यर्थ**मिति । स्वभाष्यस्य महर्षिप्रणीतव्याख्यानानुरोधित्वलक्षणवैलक्षण्यसूचनार्थं मध्ये [मध्ये] वृत्तिकारं कीर्तयतीत्यर्थः । असम्पत्तिशब्दस्य निर्गमनपरत्वमस्वरसमिति अन्यथा व्याचष्टे—**यद्वा पर-मात्मनी**ति । **वृत्तिकारस्य भाव** इति । ततश्च स्वाप्ययादिति सूत्रस्य सोऽप्यर्थ इति वृत्तिग्रन्थसंवादेन सूचनं तदुदाहरणस्यानन्यथासिद्धं फलमिति भावः ॥ १० ॥

## गतिसामान्यात् १-१-११.

ननु भाष्ये 'आत्मा वा इदमेक एवाग्र आसीत्' इत्यादिश्रुत्यन्तरैकार्थ्यात् चेतनकारणत्वं वक्तव्यमित्युपसंहारे कर्तव्ये सर्वेश्वर एव कारणमिति विशिष्योपसंहारः

कथम्? अचेतनव्यावृत्तिमात्रस्यैव प्रकृतेऽपेक्षितत्वादित्याशङ्क्याह — **पूर्वसूत्रे प्राज्ञेने-** त्यादि। भाष्ये 'निःश्वसितमेतद्यदृग्वेद' इति। ऋग्वेदादिनिखिलप्रपञ्चो निःश्वास-वदनायासेनोत्पन्न इत्यर्थः ॥ ११ ॥

श्रुतत्वाच्च १-१-१२.

**न त्वेतत्सूत्रविषयवाक्यत्वेने**ति। अत्र केचित्—पूर्वसूत्रे चेतनत्वावगमक-गतिसामान्यं विवक्षितम्। इह तु बहूनां परमात्मासाधारणानां श्रवणमुच्यत इति विशेषः। अयमेव विशेषः पूर्वसूत्रोदाहृतश्रुतिभ्योऽत्रोदाहृतश्रुतीनाम्। इतरथा एतदुपनिषद्गतानां गतिसामान्यादित्यनेनापरिग्रहे हेत्वभावादिति वदन्ति। ननु श्रुत्यन्तरोदाहरणे प्रथमोक्तनामरूपव्याकरणप्रतिपादकश्रुत्यन्तरे प्रथमोदाहर्तव्ये, 'न तस्य कश्चित् पति'रिति गुणान्तरवाक्यस्य कथं पूर्वमुपादानमित्याशङ्क्याह — **नात्र क्रमविवक्षे**ति।

**ब्रह्माज्ञानवादिनोऽननुगुणत्वं पूर्वमुक्त**मिति। जन्मादिसूत्रे, 'एव-मुत्तरेषामपि सूत्राणा'मित्यादिनोक्तमित्यर्थः। **प्रामाणिकस्याप्रामाणिकत्वाभि-माना**दिति। प्रामाणिकस्याप्यपसिद्धान्तता दृष्ट्वा अप्रामाणिकत्वाभिमानादित्यन्वयः। अपसिद्धान्तता असिद्धान्तत्वमित्यर्थः। यथा ब्रह्मोपादानत्वस्य शास्त्रान्तरसिद्धत्वाभाव इति भावः। **सूत्रकारश्रुत्योर्निर्देश** इति। श्रुतिनिर्देशात् सविशेषत्वं प्रामाणिकम्। सूत्रकृतोक्तत्वात् असिद्धान्तत्वशङ्कापि नास्तीत्यर्थः। **अपिशब्दाभिप्राय** इति। ज्ञातृत्वसमुच्चयार्थोऽपिशब्द इति भावः। **अत एव निर्विशेषचिन्मात्र** इत्यादि-भाष्यस्यायमर्थः — **जिज्ञास्यब्रह्मणः** पारमार्थिकेक्षणगुणयोगित्वस्थापनात् निर्विशेष-ब्रह्मवादः सूत्रकृता निरस्तः। न च जिज्ञास्यब्रह्मणो गुणयोगेऽपि परस्य ब्रह्मणो न तथात्वमिति वाच्यम्; वेदान्तवेद्यब्रह्मण एव जिज्ञास्यत्वं प्रतिज्ञाय तस्य चेतनत्व-लक्षणेक्षितृत्वं प्रतिपाद्य तद्द्वारा प्रधानव्यावृत्तिप्रतिपादनात्। न च चिद्रूपत्वलक्षण-चैतनत्वलक्षणमीक्षितृत्वं प्रधानव्यावर्तकतयोच्यत इति वाच्यम् — चेतनशब्दस्या-तदर्थत्वात्। तत(सत?)श्च चेतनत्वलक्षणेक्षितृत्वासिद्धौ व्यावृत्त्यसिद्धेरिति। **वेदान्त-वेद्य**मिति भाष्यस्य पूर्ववाक्योक्ताक्षेपपरिहारपरत्वं स्वरसमिति व्याचष्टे — **यद्वा स्वरूपमेव साक्षित्व**मिति। द्रव्यत्वाभ्युपगमात् द्रव्यभिन्नगुणवचनत्वं नेत्यत आह—

गुणशब्दो धर्मपर इति । तत्क्षमत्वमभ्युपगम्येति । तदुभयरूपत्वाभावेऽपि तत्क्षमत्वसम्भावनामभ्युपगम्येत्यर्थः ।

ननु, 'यत्तु कालान्तरेणापि नान्यसंज्ञामुपैति वै ।
परिणामादिसम्भूतां तद् वस्तु नृप तच्च किम् ॥'

इति वस्तुत्वस्य परमात्ममात्रनिष्ठस्य न प्रमाणविषयत्वप्रयोज्यत्वम्, प्रमाणविषयेष्वपि अचिद्वस्तुषु तादृशवस्तुत्वाभावादित्याशङ्कयाह—**वस्तुत्वं चिदचित्साधारण**मिति ।

**परैस्त्वि**त्यादि । **जीवं निर्दिश्य सच्छब्दवाच्यस्ये**ति । 'अनेन जीवेनात्मनानुप्रविश्य' इति वाक्य इति शेषः । अनेन जीवेनात्मना=मम स्वरूपेण अनेन जीवेनेति सच्छब्दिताया देवताया वाक्यमिदमिति भावः । **ननु गौणश्चेन्न** जीवशब्दादित्युक्तेऽपि न स्वारस्यम्, जीवस्यात्मत्वव्यपदेशादित्यस्यार्थस्यासिद्धेरिति अस्वरसादाह—**स्वरूपपर आत्मशब्दः सापेक्ष** इति । अत एव 'यत् योन्यां गायति तदुत्तरयोर्गायति' इत्यत्र उत्तरशब्दस्य ग्रन्थविशेषसंज्ञारूपेण रूढत्वात्तस्यैव ग्रहणम्, न तु योन्युत्तरयोः । सम्बन्धिशब्दत्वेन सापेक्षत्वे विलम्बितप्रतीतिकत्वादित्युक्तम् 'नैमित्तिकं तूत्तरात्वमानन्तर्यात् प्रतीयते' इत्यत्र नावमिकाधिकरणे(९-२-५) । ममात्मा भद्रसेन इतिवत् 'अनेन जीवेनात्मना' इत्यात्मशब्दो गौण इत्याशङ्कय तन्निराकरणार्थं 'तन्निष्ठस्य मोक्षोपदेशात्' इति सूत्रमिति परैर्व्याख्यातम्, तद्दूषयति— **चिदचिदात्मकेति । परमसाध्यस्य हेतुवाचीति युक्त**मिति । अत एवास्वारस्यात् शङ्करभाष्येऽपि, अथ वा पूर्वसूत्र एवेत्यादिना परमसाध्य एव हेतुतया तृतीयसूत्रं योजितमिति द्रष्टव्यम् । **यथा सोम्य मधुकृत** इत्यादि । मधुकृतो मक्षिकाः । मधु निस्तिष्ठन्ति=निष्पादयन्ति नानात्ययानां=नानादिक्कानां वृक्षाणां रसान् समवहारं= समाहृत्य एकताम् एकभावं मधुत्वेन, रसं गमयन्ति=मधुत्वमापादयन्ति । ते रसा मधुत्वेनैकीभूताः तत्र मधुनि विवेकं न लभन्ते, अयमस्य वकुलस्य रसः, न चूतस्य रसः—एवं सतैकीभूता अपि प्रजा विवेकं न लभन्त इत्यर्थः । (अ. ५.)

---

# अथ आनन्दमयाधिकरणम् (६)

—:※:—

आनन्दमयोऽभ्यासात् १-१-१३.

**प्रत्यगात्मन्यवतरन्ती बुद्धिरिति** । कारणत्वबुद्धिरित्यर्थः । ननु नासिद्धिकरणे जगत्कारणं जीव इति पूर्वपक्षीकृत्य तदतिरिक्तं ब्रह्मेति सिद्धान्त्यते; अपि त्वानन्दमयो जीवः परमा वेति विचार्यानन्दमयो जीव इति पूर्वपक्षं कृत्वा ब्रह्मेति सिद्धान्त्यते । इतरथा जगत्कारणं जीव इति पूर्वपक्षे जीवासंभावितधर्मप्रतिपादकसकलश्रुत्युपन्यासस्यैव युक्ततया आनन्दवल्लीमात्रार्थनिर्णायकन्यायग्रथनस्यायुक्तत्वप्रसङ्गात्, श्रुतत्वाच्चेति पूर्वाधिकरणगुणसूत्रोदाहृतश्रुतिप्रतिपादित — जीवासंभावितधर्मैरेव जीवातिरिक्तब्रह्मसिद्धेश्च । 'अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात्', 'अधिकं तु भेदनिर्देशात्' इत्यादिभिः कृतकरत्वाच्च । अत आनन्दवल्लीप्रतिपाद्यानन्दमयः किं जीवः, उत परं ब्रह्मेत्येव चिन्तनीयम् । न च कारणविषयत्वाभावे समन्वयाध्यायासङ्गतिः स्यात् इति वाच्यम् — त्रिपादीविचारवदुपपत्तेः । न च तत्रापि कारणत्वचिन्तात्मकत्वमेवेति वाच्यम् — तत्तद्गुणाकरत्वं ब्रह्मणः प्रतिपाद्यत इति भाष्योक्तेः । "अधिकरणगुणैस्तद्गुणानुद्गृणाती" त्यधिकरणसारावल्युक्तेश्च । न तु सामान्यतो जगत्कारणं जीवो वा ब्रह्म वेति चिन्तनीयमिति चेत् —

सत्यम् । तथैव चिन्त्यते । किन्त्वानन्दमयस्य जीवत्वे जीवातिरिक्तब्रह्मकारणत्ववादे किञ्चिच्छ्रद्धावैकल्यं जायेतापि इत्येतदभिप्रेत्यायोगव्यवच्छेदोक्त्युपपत्तेः । अत एव ज्योतिरधिकरणे—निरूपितमित्याशङ्क्य, संशयहेत्वभावादिति परिहृत्य, पुनस्तर्हि चिदचिद्विलक्षणकारणास्तित्वविषयस्य प्रथमपादस्यानारंभः स्यादिति परिचोद्य, बहूनां वेदान्तवाक्यानां प्रकृतिपुरुषकारणमात्रपरत्वे, पुरुषसूक्तेऽपि संशयप्रसङ्गात् न वैयर्थ्यमस्तीति परिहरिष्यति । अन्ये तु, अन्ययोगव्यवच्छेदार्थायां त्रिपाद्याम्, "आनुमानिकमप्येकेषामिति चेत्" इत्यपिशब्देन प्रधानमपि जगत्कारणं भवत्विति प्रदर्शयता सूत्रकृता प्रधानादिकमेव जगत्कारणं ब्रह्मेति प्रथमपादपूर्वपक्ष्याशय उन्नीयते । अत एव कल्पतरुग्रन्थे आनुमानिकाधिकरणे, 'पूर्वत्र हि प्रधानाद्येव सर्ववेदान्तार्थ इति

प्रत्यवस्थितं निषेधेन, इह तु तदभ्युपेत्य प्रधानाद्यपि कारणमिति प्रत्यवस्थीयते, सूत्रकारोऽप्यपिशब्दं प्रयुञ्जानो ब्रह्माभ्युपगमेन काचित्कोऽयं विचार इति सूचयामासेत्युक्तम्' इति वदन्ति ।

कारणवाक्यविचारपरे अस्मिन्नधिकरणे, 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः" इत्यारभ्य श्रूयते इति वक्तव्ये भाष्यकृता किमिति, "स वा एष' इत्यादिकमुदाहृतमित्याशङ्क्याह — **कारणविषयस्येति । आत्मशब्दव्याख्यानोपक्रमभूतमिति ।** ततश्चात्मशब्दव्याख्यानानां मध्ये स वा एष इत्यस्योपक्रमभूतत्वात्, विषयभूतकारणवाक्योपक्रमत्वाभावेऽपि प्रकृतेत्युक्तिरुपपन्नेति भावः । **चेतनत्वादावभ्युपगम इति ।** सर्वज्ञशब्दप्रतिपन्नचेतनत्वेऽभ्युपगमः । सर्वेश्वरशब्दप्रतिपन्नजीवातिरेके नाभ्युपगम इत्यर्थः । ततश्च जीवातिरिक्तत्वादेः प्रागनुक्तत्वात् अनुक्तांशे कथं सत्यशब्दप्रयोग इति न चोदनीयम् । इदमुपलक्षणम् । उक्तांशे अङ्गीकारः, उक्तस्य वास्तवत्वांशे त्वनङ्गीकारः, **सत्यमुक्त**मितिग्रन्थस्वारस्यादित्यपि द्रष्टव्यम् । **अस्वारस्यसूचक इति ।** क्रियासङ्गतैवकारस्यात्यन्तायोगव्यवच्छेदार्थपरत्वादिति भावः । ननु सांख्यमते जीवस्य प्रत्ययार्थीभूतकर्तृत्वाभावात् ईक्षितृत्वमनुपपन्नमित्याशङ्क्य, प्रत्ययार्थानुपपत्तावपि प्रकृत्यर्थोपपत्तिरित्यभिप्रयन्नाह — **साक्षित्वमेवेति ।** नन्वस्मिन्नधिकरणे जीवब्रह्माभेदः पूर्वपक्ष्यभिमतः, तद्भेदस्तु सिद्धान्त्यभिमत इति भाष्यकृता जीवब्रह्माभेदद्वेषानुबन्धवशात् परं व्याख्यायते । न त्वेवं सूत्रकृदभिप्रायः, तादृशाभिप्रायज्ञापकाभावादित्यत आह —**भेदव्यपदेशाच्चेतीति । जीवव्यतिरेकासिद्धेरिति ।** जीवभिन्नत्वासिद्धेरित्यर्थः । **नैकरूपज्ञानस्येति ।** ज्ञानसंकोचविकासरूपावस्थायोगित्वादिति भावः । **प्राप्यत्वानुगुणेति ।** अचिद्वियुक्तस्वरूपस्य प्राप्यत्वे आनन्दमयतया पुरुषार्थत्वमित्यभिप्रायः । **ज्ञायते अनेनेति व्युत्पत्त्येति ।** मनोबुद्ध्यहङ्कारभेदेन अन्तःकरणत्रैविध्यस्य सांख्याभिमतत्वात् सांख्यमते बुद्धिशब्दस्यान्तःकरणपरत्वेन तत्र विज्ञानशब्दस्य व्युत्पत्तिसंभवादिति भावः । **विकारपरत्वाभावाच्चेति ।** ननु पूर्वपक्षिणा विकारपरत्वप्रत्याख्यानम्, "विकारशब्दान्नेति चेन्न प्राचुर्या' दिति सूत्रविरुद्धम्, तस्मिन् सूत्रे विकारार्थत्वस्यैव पूर्वपक्षहेतुतयोपन्यासात्, मयट्प्रत्ययस्वार्थिकत्वविकारार्थत्वयोः

पूर्वपक्षसाधकत्वस्य तदर्थचिन्ताग्रन्थ एव प्रदर्शितत्वेन स्वोक्तिविरोधाच्चेति चेत्— अत्राहुः — अस्मिन्नधिकरणे पूर्वपक्षो द्विविधः । सांख्यपक्षावलम्बी पुच्छब्रह्मावलम्बी च । तत्रानन्दमय इत्यत्र मयट्प्रत्ययः स्वार्थिकः । स च प्राप्यमुक्तस्वरूपपरः । न तु विकारार्थः, न वा प्राचुर्यार्थः; प्राप्यस्वरूपस्य निर्विकारत्वात् । अतो द्वितीयपूर्वपक्षवादिनः सिद्धान्तिनो वा नावकाश इति प्रथमः । मयट्प्रत्ययः विकारार्थः, न तु स्वार्थिकः प्राचुर्यार्थो वा । ततश्च विकारवाचिमयट्प्रत्ययानुरोधेन सुखाकारवृत्तिप्रतिबिंबिततया तदुपहिततया वा आनन्दविकारत्वेन आनन्दमयो जीव एवेत्यपरः । तत्र प्रथमे 'विकारशब्दान्नेति चे' दित्याक्षेपः तटस्थकर्तृकः । द्वितीये तु पूर्वपक्षिकर्तृक इति विवेकः । एवं च विकारपरत्वाभावाच्चेति ग्रन्थः प्रथमपक्षाभिप्रायेणेति द्रष्टव्यम् । केचित्तु—विकारपरत्वाभावाच्चेति, विज्ञानमयशब्दस्येत्यर्थः, विकारपरत्वाभावादित्युपलक्षणं, प्राचुर्यार्थकत्वाभावादित्यपि द्रष्टव्यम । विकारप्राचुर्यान्यतरार्थत्वे हि विज्ञानमयशब्दस्य जीवपरत्वशङ्का स्यादिति वदन्ति ।

**प्रतिष्ठातद्वद्भावेने**ति । प्रतिष्ठारूपस्य ब्रह्मणः तद्वदानन्दमयेन ऐक्यासंभवादिति भावः । **पुरुषविध** इति । 'तस्य पुरुषविधतामन्वयं पुरुषविध' इति श्रुतिवाक्ये—तस्य विज्ञानमयस्य पुरुषविधत्वमनुकृत्य, अयमानन्दमयः पुरुषविधः, तदनुकारी पुरुष इत्यर्थः । **व्यतिरेकनिर्देशस्वारस्यं सिद्ध्यतीति** । आत्मशब्दस्य मध्यभागपरत्वानादरेण स्वरूपपरत्वाङ्गीकारे घटस्य स्वरूपमित्यादिवदस्वारस्यं स्यादिति भावः । का नः क्षतिरित्यभिप्रायेण प्रतिवक्ति **ततः किमिति** । पुच्छब्रह्मत्वस्य उभयाभ्युपेतत्वे शान्तो विवाद इत्यभिप्रायेण पृच्छति — **किं तर्हीति** । त्वया पुच्छस्यैव ब्रह्मत्वम्, नानन्दमयस्येत्युच्यते । अस्माभिस्तु उभयोरप्यैक्यात् ब्रह्मत्वमुच्यत इति विवेक इति भावः । **अर्थात्परिहरन्निति** । ब्रह्मशब्दस्यानन्दमयविषयत्वमसिद्धमिति परिहरन्निति भावः । **सद्भावेऽप्याशङ्कावाद** इति । न हि घटं प्रमेयं वेद चेदित्याशङ्कावादो युज्यत इति भावः । **किमत्र क्रियत इतीति** । रूपणस्यापि इतरव्यावृत्तस्वरूपप्रतिपत्त्यर्थत्वादित्याशयः । **प्रधानप्रतिपाद्यत्वाभावादिति** । ननु सर्वपर्यायसाधारण्यं न प्राधान्यविरोधि; अन्तर्यामिब्राह्मणे, 'यः पृथिव्यां तिष्ठ' न्नित्यादौ सर्वपर्यायसाधारण्येऽपि सर्वत्र यच्छब्दनिर्दिष्टस्यैव प्राधान्यं प्रतीयते, तद्वदिहापि

पञ्चस्वपि पर्यायेषु, 'तस्यैष एव शारीर आत्मे'ति आत्मशब्दनिर्दिष्टस्यैव प्राधान्यम्। ततश्च पुच्छब्रह्मण एवात्मशब्दनिर्दिष्टत्वात् तस्यैव, सोऽकामयतेति पुल्लिङ्गतच्छब्देन परामर्शः संभवतीति चेत्—उच्यते। 'तस्यैष एव शारीर आत्मे'त्यत्र एष इति पुल्लिङ्गस्य आनन्दमय एव स्वरसत्वात् तद्वाक्येऽपि न ब्रह्मणः परामर्श' इति भावः। **प्रधानपरामर्शित्वस्वारस्याच्चे**ति। 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षे'त्यत्र आनीयमानेनापि दध्ना व्याप्यमानस्य पयसः प्राधान्यात् तस्यैव तच्छब्देन परामर्शो युक्तः; न त्वप्रधानस्य सन्निहितस्यापि दध्नः। अतः पय एव घनीभूतमामिक्षेति पूर्वतन्त्रे चतुर्थाष्टमयोर्व्यवस्थापितत्वादिति भावः। **विज्ञानं ब्रह्मेति व्यजानादि**ति। भृगुवल्ल्यामिति भावः। **स्थानप्रमाणेनानन्दानन्दमयशब्दयो**रिति। ननु भृगुवल्ल्याम्नातानन्दस्थानसाम्यादपि अन्नमयादिषु पञ्चस्वपि मयट्प्रत्ययसारूप्येणानन्दमयस्थानसाम्यस्यैव प्रबलतया ततोऽपि भृगुवल्ल्याम्नातानन्दमयस्य ब्रह्मत्वसिद्धिरिति चेत् — मैवम्। आनन्दवल्ल्याम्नातानन्दमयस्याद्याप्यब्रह्मत्वानिश्चयात् अनिश्चितस्थानसाम्यस्याप्रयोजकतया निश्चितब्रह्मभावानन्दस्थानसाम्यस्यैवार्थनिर्णायकत्वात्। 'एतमानन्दमयमात्मानमिति प्रकृतानन्दपरामर्शकैतच्छब्दश्रुतिबलादपीति भावः। **उक्तं हि या तु भार्गवी**ति। शाङ्करभाष्य इति शेषः। **निर्हरणादिरूपमिति आदि**पदेन परमात्मपक्षे प्रसाद्यत्वं विवक्षितम्। ननु परमात्मपक्षे कथं शोध्यत्वम्; प्रागशुद्धिमतो हि शुद्धिराधेया। न च नित्यशुद्धस्य ब्रह्मणः प्रागशुद्धिरस्तीति चेत्—न। अत्र शुद्ध्यशुद्धिशब्दाभ्यां कोपप्रसादौ विवक्षितौ। ब्रह्मणः कोपरूपाशुद्धिसद्भावेऽपि अपहतपाप्मत्वलक्षणनित्यशुद्धत्वस्याविरोधात्। इतरथा, गङ्गाजलं कतकैः शोध्यतामित्युक्तिरपि नोपपद्येत। नित्यशुद्धस्य गङ्गाजलस्य प्रागशुद्ध्यभावात्। यदि च नित्यशुद्धस्यापि गङ्गाजलस्य कर्दमसंबन्धादिकृतकालुष्यरूपाशुद्धिरभ्युपेयते, तर्हि प्रकृतेऽपि दीयतां दृष्टिः।

**ब्रह्मविषयस्योपरितनश्लोकस्ये**ति। अन्नमयादिपर्यायेषु प्रधानानां तत्तत्पर्यायगतश्लोकविषयत्वदर्शनेन स्वपर्यायगतश्लोकाविषयस्य तस्याप्राधान्यादिति भावः। **प्रकरणस्य स्वस्मादनतिरिक्तैरि**ति। न च मनोमयशिरःपक्षपुच्छानां ऋग्सामयजुरथर्वाङ्गिरसां मनोमयादतिरिक्तत्वदर्शनेन प्रकरणस्य, स्वस्मादनतिरिक्तैः

स्वावयवैरेव शिरःपक्षादिरूपणपरत्वमसिद्धमिति वाच्यम्—तत्र ऋक्सामादिशब्दानां तत्तद्विषयकमनोव्यापारपरत्वेन तेषामपि मनोमयादनतिरिक्तत्वात् । **आनन्दमये पर्यवसितत्वादिति** । ननु, "श्रुतं ह्येव मे भगवद्दृशेभ्यः, तरति शोकमात्मवित्" इति आत्मजिज्ञासयोपसेदुषे नारदाय नामादिषु उत्तरोत्तरमर्थान्तरोपदेशे, "अस्ति भगवो नाम्नो भूय इति, वाग्वाव नाम्नो भूयसी" इत्यादिप्रश्नप्रतिवचनपरंपरायाः प्राण एव समापनेऽपि विनैव तादृशप्रश्नप्रतिवचने प्रवृत्तस्य 'एष तु वा अतिवदति यः सत्येनातिवदती" त्यादेः तुशब्दश्रुत्या, "आत्मतः प्राण" इति प्राणोत्पत्तिलिङ्गेन च प्राणादर्थान्तरोपदेशपरत्वमिति तत्रैवात्मोपदेशपर्यवसानमभ्युपगम्यते; न तु प्राचीने प्राणे । एवमिहापि पूर्वोपन्यस्तप्रमाणैः प्रधानतया अवगते पुच्छब्रह्मण्येव उपक्रान्तोपदेशपर्यवसानमभ्युपगन्तुं युक्तमिति चेन्न—भूमविद्यायां प्राणोपदेशे नामादिष्वनुक्तस्यातिवादस्योक्त्या तत्पर्यन्त एवात्मोपदेश इति मत्वा शिष्ये भूयः प्रश्नमकुर्वति स्वयमेवाचार्यः तथा अर्थान्तरसत्त्वमुपचिक्षेपेति युज्यते । इह तूत्तरोत्तरमात्मोपदेशे दृष्टायाः, "तस्माद्वा एतस्मात्" इति शैल्याः ब्रह्मणि परित्यागे कारणाभावादिति भावः । **पुच्छवद्विषयत्वादिति** । न च, "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह, आनन्दं ब्रह्मणो विद्वान् न बिभेति कदाचनेती"ति मनोमयपर्यायगतस्य श्लोकस्य ब्रह्मविषयस्य मनोमयविषयत्वाभावात् प्रकरणस्थश्लोकानां पुच्छवद्विषयत्वमसिद्धमिति वाच्यम्—'यतो ब्रह्मानन्दाद्वाचोऽप्राप्य निवर्तन्ते, तं ब्रह्मानन्दं कल्याणगुणजातं ब्रह्मणा सह विशुद्धेन मनसा विद्वान न बिभेती'त्यर्थकतया तस्यापि श्लोकस्य पुच्छवन्मनोमयप्रशंसापरत्वसंभवात् । न चैवम्, 'असन्नेव स भवती'ति श्लोकस्यापि, 'स आनन्दमयो जीवः असद्ब्रह्मेति वेद चेत्, असन्नेव भवति; अस्ति ब्रह्मेति वेद चेत्, सन् भवती'ति पुच्छवदानन्दमयविषयत्वमस्त्विति वाच्यम्—स इत्यस्य आनन्दमयविषयत्वे तत्स्तावकत्वाभावेन तत्परत्वाभावप्रसङ्गात् ॥

## (सिद्धान्तः)

ननु ईक्षतेर्नाशब्दम्, नेतरोऽनुपपत्तेः, भेदव्यपदेशाच्चान्यः इति सौत्रपदानुकर्ष इहाभिप्रेतश्चेत्, तदेव पदं प्रयुज्यताम्; किं परमात्मशब्दानिर्देशेनेत्याशङ्क्याह—

**अन्तरात्मपरंपरेति** । परमशब्देन निरतिशयत्वप्रतिपादनादिति भावः। **साध्यांशे हेत्वाकाङ्क्षामिति** । परमात्मपदानन्तरमेव कुतश्शब्दप्रयोगात् परमात्मस्वरूपसाध्यांश एव हेत्वाकाङ्क्षा प्रदर्शिता भवति ; न तु व्यवहिते आनन्दमयत्वे इति भावः । यद्यप्यानन्दमयः परमात्मा अभ्यासादित्येतावत्युक्तेऽपि अभ्यासादित्यस्योक्तरीत्या समनन्तरनिर्दिष्टपरमात्मत्व एव हेतुत्वेनान्वय इति सुवचम् – तथाप्युपायान्तरस्य उपायान्तरादूषकत्वात्, स्थितस्य गतेर्वक्तव्यत्वाच्च तथोक्तमिति द्रष्टव्यम् । **स्ववाक्यस्थत्वाच्चेति** । "अन्योऽन्तर आत्मानन्दमय" इत्यस्य विषयवाक्यतया तत्स्थत्वात्, आनन्दमयो भेदव्यपदेशादित्येव सूत्रयितव्यमिति भावः। **अनुग्राहकयुक्त्यपेक्षेति** । मुक्तेऽपि तादृशानन्दोऽस्त्विति शङ्काया असंभावितत्वरूपयुक्त्यन्तरेण निवर्तनीयत्वात्, "विकारशब्दान्नेति चेत्" इत्यादिसूत्रद्वयसापेक्षत्वाच्चेत्यर्थः । 'निरतिशयदशाशिरस्कत्वेन अभ्यस्यमान' इत्यस्य हेतुगर्भत्वं स्फोरयति–**शतगुणितोत्तरक्रमेणेति** । स एको ब्रह्मण इति वाक्यस्य प्राजापत्यानन्दपरत्वं वर्णयतां पक्षे सूत्रविरोधं दर्शयति – **स एको ब्रह्मण इति वाक्यस्येति** । **स यश्चायं पुरुष इतीति** । "ब्रह्मविदाप्नोति परम्" इत्यारभ्य, "स एको ब्रह्मण आनन्दः" इत्येवमन्तेन उक्तानन्तस्वरूपरूपगुणविभवस्य ब्रह्मण एव, "स यश्चायम्" इति तच्छब्देन परामर्शादिति भावः । **भगवदानन्दप्रसङ्गसापेक्षत्वादिति** । इतरथा, अस्य श्लोकस्यापि प्राजापत्यानन्दपरत्वप्रसङ्गादिति भावः । श्रौतार्थं विहाय फलितार्थकथने बीजमाह—**तच्च हेतोर्वैयधिकरण्यशङ्काव्युदासार्थमिति** । **सदृशवस्त्वेकदेशतयेति** । यद्यपि, "स एको ब्रह्मण आनन्दः" इति शतगुणितचतुर्मुखानन्दसादृश्यं ब्रह्मानन्दस्यैव कथ्यते, न तु तदेकदेशस्य–तथापि "यतो वाचो निवर्तन्त" इति वाक्यार्थमभिप्रेत्य तथोक्तमिति द्रष्टव्यम् । अभ्यासशब्दस्य ब्रह्मानन्दे औपचारिकत्वाश्रयणमयुक्तमित्यस्वरसादाह्—यद्वा **मुहुर्मुहुरुक्तिरिति** । ननु निरतिशयानन्दांशे न मुहुर्मुहुरुक्तिः ; आनन्दमात्रे मुहुर्मुहुरुक्तिस्तु आनन्दमात्रतात्पर्ये लिङ्गम् ; न तु निरतिशयानन्दतात्पर्ये । आनन्दमात्रञ्च न जीवव्यावर्तकमिति चेन्न – 'स एको ब्रह्मण आनन्दः', 'यतो वाचो निवर्तन्त' इति मनोमयानन्दमयपर्यायोक्तिद्वयस्यापि निरतिशयानन्दविषयतया निरतिशयानन्दस्य मुहुर्मुहुरुक्त्युपपत्तेः । **निवर्तकत्वं विवक्षितमिति** । अनन्याधीननिवृत्तिर्विवक्षितेत्यर्थः ; उत्तरग्रन्थानुसारादिति द्रष्ट-

व्यम् । **निरतिशयत्वश्रवणविरोधेनेति** । हेत्वधीनत्वे हेतोरेव तदपेक्षया अतिशयिततया हेत्वधीनस्य वस्तुनः सातिशयत्वमेव स्यात् । यदपेक्षया अतिशायतं नास्ति, तस्यैव निरतिशयत्वादिति भावः । ननु परमात्मानन्दस्यानन्याधीनत्वेन तस्यैवानन्दस्य, 'स एको ब्रह्मण आनन्दः; श्रोत्रियस्य चाकामहतस्य' इति श्रवणात् मुक्तेऽप्यनन्याधीनत्वमेवेत्याशङ्क्यानन्दस्यैकरूपत्वेऽपि ब्रह्मणि स आनन्दो निर्हेतुकः, मुक्ते तु सहेतुकः, तत्राकामहतस्येति हेत्वन्तरस्य पृथङ्निर्देशादित्याह— **श्रोत्रियस्य चाकामहतस्येतीति** । **इति श्रुत्यन्तर**मिति । तत्रत्याकामहतशब्दस्याप्येवमेवार्थ इति भावः ।

तस्य वाक्यस्य तादृशतर्कसूचकत्वमुपपादयति — **अत्र हीति** । **अन्यत्र-शक्त्या दर्शित**मिति । मयट्प्रत्ययस्य प्राचुर्यार्थत्वादिति भावः । भाष्ये **न बुद्धिमात्र**मिति । ननु बुद्धिशब्दस्यान्तःकरणपरतयैव टीकाकृता व्याख्यातत्वात् , न बुद्धिरित्यनेनैव तत्प्रतिक्षेपसंभवात् मात्रपदवैयर्थ्यम् । यदि च बुद्धिशब्दस्य ज्ञप्तिपरत्वम्, तदैव हि केवलज्ञप्तिमात्रपर्यवसानज्ञापनाय मात्रपदं सफलं स्यात् । यदि च मात्रपदमनुजिघृक्षितम्, तदा, 'तदन्तरभूताश्च बुद्धि' मिति पूर्वपक्षभाष्यस्थो बुद्धिशब्दो ज्ञप्तिपरतयैव व्याख्येयः; नान्तःकरणपरतयेति चेत्—उच्यते । न बुद्धिमात्रमित्येतत् तन्त्रावृत्त्यैकशेषाणामन्यतमाश्रयणेनान्तःकरणस्य ज्ञप्तेश्च व्युदासकम् । ततश्च ज्ञप्तिव्युदासपक्षे तद्वत्त्वेव पर्यवसानम्; न तु तन्मात्र इति प्रतिपादनाय मात्रपदं सार्थकम् । केचित्तु सर्वत्र बुद्धिशब्दो ज्ञप्तिपर एव, न तु करणव्युत्पत्या अन्तःकरणपर इत्याहुः । 'मयट्प्रत्ययेन व्यतिरेकप्रतीतेः' इति भाष्यस्य स्वार्थिकत्वाश्रयणे मयट्प्रत्ययवैयर्थ्यप्रसङ्गात् इत्येतत्पर्यन्तोऽभिप्राय इति दर्शयति — **प्रत्ययवैयर्थ्यं विशदयतीति** । नीलादिशब्दानामपि सङ्ग्रहार्थं व्याचष्टे— **अयुतसिद्धधर्मवाचिशब्दा इति** । **सूत्रन्यायाभ्यामिति** । यावदात्मभावित्वाच्चेति शारीरकसूत्रन्यायाभ्यामित्यर्थः । **प्रथमपक्षे कर्तृपरत्वं कल्पनीयमिति** । अत्यन्तागतिकबाहुलककर्त्रर्थत्वमाश्रयणीयमिति भावः । **गणान्तर्भाव** इति । नन्द्यादिगणे अस्यापठितत्वादिति भावः । **प्रत्यक्षानुगुण्यादित्यादि** । आत्मनो विज्ञानमयत्वस्य जानामीति प्रत्यक्षसिद्धत्वात्, योऽयं विज्ञानमय इति श्रुतिसिद्धत्वात्, विज्ञानं यज्ञं तनुत इत्येतदपेक्षया

विज्ञानमयशब्दस्य प्रथमश्रुतत्वेनासञ्जातविरोधित्वात्, ज्ञायतेऽनेनेति व्युत्पत्त्या विज्ञानमयशब्दस्यान्तःकरणपरत्वेऽपि प्रकृतिप्रत्ययास्वारस्यात्, जीवपरत्वे द्वयोरपि स्वारस्यापरित्यागात्, विज्ञानमयशब्दानुरोधेनैव विज्ञानशब्दो नेय इति भावः। **चेतनपरत्वाद्वेत्यर्थ** इति। 'व्यपदेशाच्च क्रियायाम्' इति सूत्रे 'विज्ञानं यज्ञं तनुते' इति वाक्यस्य जीवकर्तृत्वे प्रमाणतया परैरप्युपन्यासादिति भावः। **बोद्धुरेव हि कर्तृत्व**मित्यादि। जानामि करोमीति प्रत्यक्षेण, 'एष हि द्रष्टा श्रोता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुष' इत्यादिश्रुतिभिः, 'कर्ता शास्त्रार्थवत्त्वा' दित्यादि-सूत्रैश्चेत्यर्थः।

ननु न कर्तृत्वं चेतनैकान्तम्, अचेतनानामपि कर्तृत्वसंभवात् 'शुक्रं यजमानोऽन्वारभत' इत्यादिविहितशुक्रान्वारंभणादौ अस्थियागपक्षे अचेतनानाम् अस्थ्नां स्वातन्त्र्यलक्षणकर्तृत्वासंभवात् शुक्रान्वारम्भणादिकमकर्तव्यमिति पूर्वपक्षं कृत्वा, काष्ठानामपि ज्वलनादौ कर्तृत्वसंभवेन कर्तृत्वस्य चैतन्यानपेक्षत्वेन अस्थ्नां कर्तृत्वं संभवतीति दशमे सिद्धान्तितत्वात् इत्यभिप्रेत्याशङ्कते — **ननु सर्वेषा**मिति। **विज्ञानशब्दास्वारस्यमुभयोरविशिष्ट**मिति। 'विज्ञानं यज्ञं तनुत' इत्यत्र विज्ञान-शब्द इत्यर्थः। न तु विज्ञानमयशब्दगतविज्ञानशब्दे। सिद्धान्ते तत्रत्यविज्ञान-शब्दस्य ज्ञप्तिपरत्वेनास्वारस्याभावादिति द्रष्टव्यम्। **स च प्रकरणानुवृत्तश्चे**दिति। 'विज्ञानमयात्प्राचीनेष्वन्नमयादिषु' इति भाष्ये सर्वेष्विति पदमध्याहर्तव्यमिति भावः। **अनुप्रवेशश्रवणा**दिति। अनुप्रवेशकर्मत्वश्रवणादित्यर्थः। व्याप्यत्वश्रवणादिति यावत्। **आत्मान्तरस्थितिश्रवणा**दिति। न च 'स्वे महिम्नि प्रतिष्ठित' इतिवत् भेदस्यौपचारिकत्वमिति वाच्यम् — 'उभयेऽपि हि भेदेनैनमधीयत' इति सूत्रे — विज्ञानशब्दस्य जीवपरत्वमेव, न तु परमात्मपरत्वम्, अभेदे भेदोपचारक्लेशस्यानाश्रय-णीयत्वादिति परैरेवोक्तत्वादिति द्रष्टव्यम्। **सर्वत्र प्रयुक्तस्ये**ति। 'विज्ञानं चाविज्ञानं च', 'विज्ञानं यज्ञं तनुत' इत्येवंभूते सर्वत्र वाक्ये प्रयुक्तस्य विज्ञानशब्दस्य कर्तृवाचिप्रत्ययान्तत्वे, 'नपुंसके भावे क्तः', 'ल्युट् च' इति विहितभावार्थल्युडन्तस्यैव नपुंसकतया, तदतिरिक्तार्थस्य ल्युडन्तस्य विशेष्यनिघ्नतया नपुंसकत्वनियमाभावेन आत्मविषयस्य विज्ञानशब्दस्य पुल्लिङ्गत्वापत्तिरिति भावः। **श्लोकस्य ज्ञातृपरत्वा-**

**भावेऽपीति** । वस्तुशब्दस्येहानुपात्ततया तदभिप्रायेण नपुंसकलिङ्गनिर्देशो न युक्तः । अत एव सारस्वत्यां मेष्यां पशुशब्दाभिप्रायेण, 'प्रास्मा अग्निं भरते' ति निर्देशो युक्त इति पूर्वपक्षं कृत्वा, पशुशब्दस्य प्रागनुपात्ततया सारस्वत्याश्च मेष्या वस्तुतः स्त्रीत्वात, प्रास्या इत्येवं स्त्रीलिङ्गनिर्देशः कर्तव्य इति पूर्वतन्त्रे नवमे स्थितत्वात्, वस्तुशब्दाभिप्रायेण नपुंसकलिङ्गनिर्देशोऽनुपपन्नः । किन्तु, 'अन्योऽन्तर आत्मा विज्ञानमय' इत्यात्मशब्देन प्राङ्निर्देशात् पुल्लिङ्गनिर्देश एवोचितः । अतो 'विज्ञानं यज्ञं तनुत' इति नपुंसकविज्ञानशब्देन ज्ञप्तेः परामर्श इत्यभ्युपगमेऽपीत्यर्थः । तन्मयस्तद्विकार इति पदद्वयस्य प्रयोजनमाह—**तन्मय इतीति** । **विरुद्धधर्माध्यासप्रतिपत्त्येति** विरुद्धधर्माश्रयत्वप्रतिपत्त्येत्यर्थः ।

**सहेतुकमविरुद्धमिति** । हेयप्रत्यनीकत्वदोषाश्रयत्वयोरविरोधसमर्थनं प्रथमशिरःपरिग्रहं हेतूपन्यासपूर्वकं परमुखेन शङ्कत इत्यर्थः । हेयसंबन्धप्रतिभासो मिथ्यारूप इति भाष्यं व्याचष्टे — **हेयं दुःखं मिथ्याप्रतिभास इति** । ननु प्रतिभासो मिथ्यारूप इत्ययुक्तम् । साक्षिरूपस्याविद्यावृत्तिरूपस्य वा स्वरूपतस्सत्यत्वेन मिथ्यात्वाभावादित्याशङ्क्याह — **भ्रान्तिज्ञानमिति** । 'तत्कार्यदुःखप्रतिभासाश्रयत्वं चैव हि हेयसंबन्धः' इति भाष्यमयुक्तम् । तथा हि सति दुःखाश्रयत्वस्य हेयसंबन्धरूपत्वं न स्यादित्याशङ्क्यात्यस्यैवकारस्य हेयसंबन्धत्वरूपविशेषणान्वितया तदयोगव्यवच्छेदकत्वमेव, नान्ययोगव्यवच्छेदकत्वमित्यभिप्रयन्नाह — **न केवलं दुःखमेवेति** । क्षणिकस्य यागादेः श्रुतकालान्तरभाविस्वर्गसाधनतोपपत्तये तावत्पर्यन्तस्थायी अपूर्वलक्षणो व्यापारः परिकल्प्यते, न तु विनष्टस्यासत एव यागस्य कार्यजनकत्वमिति वा, तस्यैव फलपर्यन्तस्थायित्वमिति वा कल्प्यते, तस्य सर्वप्रमाणविरुद्धत्वात्, इत्यपूर्वाधिकरणे निर्णीतत्वात् इति भाष्याभिप्राय इत्यभिप्रयन्नाह — **परिहरतीति** । **अप्रामाण्यं प्रसजेदित्यर्थ इति** । काकदन्तमीमांसासदृश्यां (सादृश्यात्) कर्ममीमांसायां कस्यापि अप्रवृत्त्या मीमांसारूपाङ्गासहकृतस्य च वेदस्याप्रत्यायकत्वात् प्रमितिजनकत्वरूपं प्रामाण्यं न स्यादित्यर्थः । **तद्विषयान्तर्गतमिति** । ज्ञानान्तर्गतत्वोक्त्या विषयान्तर्गतत्वं लक्ष्यत इति भावः । **सर्वमिति शेष इति** । सर्वज्ञानविषयभूतवस्तुजातं

सर्वं यद्येकज्ञानविषयान्तर्गतमित्यर्थः । **न तु ज्ञातत्वविशिष्टाकारेणेति** । एकत्वावस्थस्यैव सर्वत्वाभावादिति भावः । **सर्वत्वविशिष्टाकारेणेति** । सर्वत्वरूपविशेषणस्याज्ञातत्वादिति भावः । एतत्कालादिविशिष्टतया ज्ञातत्वमितिच्छेदः ।

समानाधिकरणवृत्तानामित्यादेः सोऽयं देवदत्त इति समानाधिकरणवाक्यपर्यवसानं प्रतीयते । तावन्मात्रपर्यवसाने, तत्त्वमसीत्यादिपक्षविषयग्रन्थस्य कस्याप्यभावात् प्रकृतानुपयोगमाशङ्क्याह — **पक्षविषयसङ्ग्रहरूप** इति । ततश्च नीलमुत्पलमित्यादिग्रन्थस्य पक्षविषयसङ्ग्रहविधिविस्तररूपत्वात् पौनरुक्त्यादिशङ्कापि परिहृता भवतीति भावः । भाष्ये **न हि नैल्यविशिष्टाकारेणेति** । इदमुपलक्षणम् ; 'न हि उत्पलत्वविशिष्टाकारेण तद्वस्तु नैल्येन विशेष्यते, जातिगुणयोरन्योन्यसमवायप्रसङ्गात्' इत्युत्तरभाष्यानुसारादिति द्रष्टव्यम् । **विशेषणान्वये स्फुटेऽपीति** । विशेषणान्वये अस्फुटतात्पर्याभावमुदाहरणमुक्त्वा, स्फुटतात्पर्याभावमुदाहरणान्तरमाहेति पर्यवसितोऽर्थः । **तत्र विशेषणान्वयस्य स्फुटत्वादिति** । एकस्मिन्नीलत्वदशायामेव उत्पलत्वान्वयासम्भवादिति भावः । **अशक्ये कचिद्व्यापाराभावादिति** । अशक्यविषयव्यापारस्यैव लक्षणात्वात्, प्रकृते च तदभावान्न लक्षणेति भावः । अशक्यव्यापाराभावमेवोपपादयति — **व्यापारविषयांशेऽपीति** । शक्ये व्यापाराभावादिति पाठे शक्यैकदेशे कचिद्व्यापाराभावमात्रेण न शक्यांशेऽपि लक्षणेत्यर्थः ।

ननु नीलमुत्पलमानयेत्यत्र उत्पले नीलत्ववैशिष्ट्यप्रतीतिः न समानाधिकरणवाक्यायत्ता, अपि तु प्रत्यक्षादेवेति शङ्कां व्युदसितुं भाष्यकृता विन्ध्याटव्यामिति परोक्षोदाहरणमुपन्यस्तमित्यभिप्रयन्नाह — **प्रत्यक्षविषयं परोक्षविषयं चेतीति । अत एव ह्यानीयते प्रतीयत इत्युक्तमिति** । ननु नीलमुत्पलमानयेति वाक्ये आनयेत्युक्त्या आनीयत इति वक्तुमुचितत्वात् तथोक्तम्; न तु प्रत्यक्षत्वस्फोरणार्थमिति चेन्न — शब्दजन्यप्रतीत्याकारस्यैवोपन्यसनीयतया आनयनपर्यन्तोपन्यासस्य तदभिप्रायकत्वादिति भावः । **विभक्त्यर्थोऽनादृत** इति । न तु प्रकृत्यर्थ इति भावः । अत एव 'संस्काराद्वा गुणानामव्यवस्था स्यात्' इत्यधि-

करणे ग्रहैकत्ववत् प्रातिपदिकार्थग्रहत्वस्याप्यविवक्षामाशङ्क्य प्रातिपदिकार्थाविवक्षा-कारणाभावाद्विवक्षितमिति सिद्धान्तितमिति भावः। **निवृत्तिरूपार्थत्वं न कल्प्य-मिति**। ततश्च सत्यज्ञानादिवाक्ये सत्यादिशब्दस्यानृतादिव्यावृत्तिपरत्वकल्पनं परस्या-नुपपन्नमिति भावः। **तदसंभवे व्युत्पत्त्यन्तरकल्पन**मिति। शक्त्यन्तरकल्पन-मित्यर्थः। अनन्यलभ्यस्यैव शब्दार्थतया लक्षणादिलभ्ये शक्तेरकल्पनीयत्वात्, अत एव गङ्गापदस्य न तीरे शक्तिः कल्प्यते। सैन्धवादौ तु शक्यसंबन्धाभावात् नाना-शक्तिमत्त्वमभ्युपेयत इति भावः। **बाह्लीक** इति। बाह्लीको नाम देशविशेषः, तत्स्थो जनो गोसदृश इत्यर्थः। **विशेषणान्तरसंबन्धित्वाद्विलक्षणमित्यर्थ** इति। विशेषणान्तरसंबन्धित्वाद्व्यधिकरणमित्यर्थः। तेन धर्मवैलक्षण्येऽपि धर्मिभेदासिद्धेः नेदं परानिष्टमिति चोद्यं परास्तमिति वेदितव्यम्। केचित्तु विशेषणान्तरप्रतिसंबन्धित्वा-दिति भाष्यस्य विशेषणान्तरेण प्रतिसंबन्धित्वं यस्य स विशेषणान्तरप्रतिसंबन्धित्वः विशेषणान्तरप्रतिसंबन्धीति यावत्। एवं च न प्रथमपक्षवत् भावप्रधानत्वम्; न वा द्वितीयपक्षवदध्याहार इति वदन्ति। **युतसिद्धत्वादिविभागव**दिति। विशेषणत्व-मेव विरोधप्रयोजकमिति वदतः युतसिद्धत्वादिविशेषणस्याननुगतत्वेन विरोधाप्रयोज-कत्वस्य सिद्धतया सिद्धान्तीकरणं संभवतीति; द्रष्टव्यम्। **अन्यथे**ति व्याख्येयं पदम्। **शाखायां न तात्पर्य**मिति। तत्रापि तात्पर्ये शाखाऋजुप्रदेशावस्थान-दशायामेव चन्द्रत्वं स्यात्। अतः शाखोपलक्षितस्वरूपविशेषे चन्द्रत्व एव तात्पर्यमिति भावः। **तद्द्वारकस्याभिधानस्यानुपपत्ते**रिति। शक्तिजन्यप्रतीतेः शक्यताव-च्छेदकप्रकारकत्वनियमादिति भावः। ननु सोऽयं देवदत्त इत्यत्र एकस्य द्वयमिति न्यायेन देशद्वयसंबन्धस्य कालद्वयसंबन्धस्य च परस्परानादरेण वस्तुनिष्ठतयैव प्रतीय-मानत्वादन्यतरस्यान्यतरोपाधित्वं कथमित्याशङ्क्याह—**वस्तुविशेषणतया निर्दिष्टा-वपीति। कालोपाध्यन्तराणा**मिति। गुणक्रियाद्युपाध्यन्तराणामित्यर्थः। देशान्तर-संबन्धितया अतीतस्येति व्याख्येयं पदम्। **अतीतत्वं चान्यापेक्षये**ति। शब्द-प्रयोगाधारकालापेक्षयेत्यर्थः। लोके ह्यतीतकाल इत्युक्ते, शब्दप्रयोगकालात् पूर्वकालः प्रतीयते। आगामिकाल इत्युक्ते शब्दप्रयोगाधारकालादुत्तरकालः प्रतीयते। वर्तमानध्वंसप्रतियोगित्वस्य वर्तमानप्रागभावप्रतियोगित्वस्य चातीतागामिशब्दार्थत्वात्,

वर्तमानकाल इत्युक्ते शब्दप्रयोगाधारकालः प्रतीयत इत्यनुभवसिद्धत्वादिति द्रष्टव्यम् । **न तु उभयकालानुगतेति** । यद्यपीदमप्रसक्तप्रतिषेधात्मकं, न ह्यतीतकालसंबन्धी घट इत्युक्ते घटापेक्षया घटस्यातीतकालसंबन्धप्रतीतिरस्ति — तथापि लोकसिद्ध-व्युत्पत्तिप्रदर्शनप्रकारोऽयमिति द्रष्टव्यम् ।

**विवक्षिता**नीति । आनन्दमयाधिकरणसिद्धान्तिनेति शेषः । **द्रव्य-पर्यन्तत्वं निर्णीत**मिति । द्रव्याक्षेपकत्वं निर्णीतमित्यर्थः । आक्षेपादेव द्रव्य-लाभसंभवेऽपि न शक्तिरस्तीति निर्णीतम् । अतो गुणमात्रपर्यन्तत्वमुभयत्रानुयायीति भावः । नन्वाकृत्यधिकरणे आकृतिवाचिन एव शब्दा विचारिताः, न तु गुणवाचिनः, अतोऽरुणाशब्दस्य न गुणमात्रपर्यन्तत्वं पूर्वमीमांसायां सिद्धमित्याशङ्क्याह—'**आक्षिप्त-द्रव्ये** इति, **तत्र चात्र चे**ति । ननु 'अस्माकं तु पूर्वपक्षे सिद्धान्ते च द्रव्य-पर्यन्तत्वमनुयायीत्या'दिग्रन्थेनैव आकृत्यधिकरणसिद्धद्रव्यपर्यन्तत्वोपजीवनेन अरुणा-धिकरणप्रवृत्तेः आविष्कृततया, आकृत्यधिकरणारुणाधिकरणयोर्विचार्यभेदस्य स्पष्टं प्रतीतेर्गतार्थत्वशङ्कायाः कथमुत्थानमिति चेन्न — आकृत्यधिकरणारुणाधिकरणयोः व्युत्पाद्यभेदमजानानस्य एतादृशचोद्यसंभवात् । **क्रयस्यैकहायन्यवरुद्धतये**ति ।

नन्वरुणावरुद्धत्वात्क्रयस्य एकहायन्या निवेशो न संभवतीति वैपरीत्यं किं न स्यात् । किञ्चारुणाशब्दोऽयं अकृत्यधिकरणन्यायेन गुणिवाचकः, एकहायनीशब्दः बहुव्रीहितया लक्षकः, ततश्च श्रौतारुणावरुद्धत्वात् एकहायनीलक्षितद्रव्यविशेषो न संभवतीत्येव वक्तुं युक्तम् । किञ्च एकहायन्यवरुद्धत्वात् पिङ्गाक्ष्या निवेशो न संभव-तीत्यपि सुवचम् । खलेकपोतन्यायेन युगपत्प्रवृत्तौ उच्यमानायामन्यतरावरुद्ध इत्युक्तेर्निरालम्बनत्वाच्चेति चेत् — उच्यते । यदुक्तमरुणावरुद्धत्वादेकहायनी-निवेशो न संभवतीति वैपरीत्यं सुवचमिति, तत् सत्यमेव । अन्यतरावरुद्धे अन्यतरस्य निवेशासंभवात्, द्वयोरेकेन वाक्येन विधानासंभवादित्यत्र तात्पर्यात् । यच्चोक्तमरुणाशब्दस्य श्रौतत्वम्, एकहायनीशब्दस्य लाक्षणिकत्वमित्यादि — तन्न । एकहायनीपदस्यापि बहुव्रीहितया निरूढलक्षणात्वेन शक्तितुल्यकक्ष्यत्वात् । यत्तूक्तं पिङ्गाक्ष्या अपि निवेशो न संभवतीति, तत् तथैव । पिङ्गाक्षीशब्दस्याप्येत-

१. दीपशिखावाक्यमिदम् ।

दधिकरणे अरुणापदवत् विषयत्वात् । यदुक्तं खलेकपोतन्यायेनेत्यादि, तन्न । शाब्द-बोधे क्रमिकान्वयबोधस्यैव दर्शनेन खलेकपोतन्यायस्यासंप्रतिपत्तेरिति तात्पर्यात् । **आकाङ्क्षोत्थापक-चशब्दद्वन्द्वाद्यभावाच्चेति** । इदमुपलक्षणम् । आकाङ्क्षोत्थापक-चशब्दद्वन्द्वादिसत्त्वे च अरुणाशब्दस्य द्रव्यान्तरत्वप्रसङ्गेन अरुणैकहायनीशब्दयोः सिद्धान्त्यभिमतसामानाधिकरण्यासिद्धितादवस्थ्यापातादित्यपि द्रष्टव्यम । न च यज्ञेन दानेनेत्यादिवाक्ये चशब्दाभावेऽपि यज्ञदानाद्यर्थविधानवत् अरुणैकहायन्येति कारकद्वयविधानमस्त्विति वाच्यम्—तत्र चशब्दस्याध्याहर्तव्यत्वात् । अत्र चशब्दा-ध्याहारेऽरुणैकहायन्योरैक्यासिद्धेश्चशब्दाध्याहारासंभवात् । वस्तुतस्तु अरुणयेति वाक्ये क्रयस्यापि न विधानम् ; 'तं वै दशभिः क्रीणाती' ति वाक्येन दशभिरित्यंशे 'वाससा क्रीणाति, हिरण्येन क्रीणाती' ति वाक्यप्राप्तसंख्यानुवादरूपेण क्रयविधि-संभवात् अन्यत एव क्रयसिद्धेः । अतो गुणमात्रविधानं सिद्धम् । अत्र प्राप्त-क्रयानुवादेनारुणाद्रव्यस्य एकहायनीद्रव्यस्य च विधाने वाक्यभेदप्रसङ्गात् अरुणिम-विशिष्टैकहायनीद्रव्यविधानं वक्तव्यम् । तच्च न संभवति । कारकविभक्त्यन्तत्वस्य सामानाधिकरण्यविरोधित्वेनान्यतरविशिष्टस्यान्यतरस्य विधानायोगादिति पूर्वपक्षं कृत्वा, कारकविभक्त्यन्तत्वस्य च सामानाधिकरण्याविरोधित्वात् , अन्यतरविशिष्टस्या-न्यतरस्य क्रयानुवादेन विधानमिति सिद्धान्तवर्णनं भाष्यकृतामभिमतम् । न च सामानाधिकरण्यवशेनान्यतरविशेषितस्यान्यतरस्य क्रये विधाने, 'अग्नेयोऽष्टाकपालः' इत्यत्रापि सामानाधिकरण्यवशेनान्यतरविशेषितस्यान्यतरस्य द्वन्द्ववाक्यविहितकर्मानु-वादेन विधानसंभवात् पौर्णमास्यधिकरणविरोध इति वाच्यम्—यत्र क्रियान्वयात् प्रागेव विधिमनादृत्यैव सामानाधिकरण्येन षष्ठ्या वा मिथस्संबन्धितया शब्देन प्रति-पादितानि मन्त्रार्थवादादिप्रसिद्धानि, तत्रान्यतरविशिष्टस्यापि प्राप्तकर्मानुवादेन विधिः संभवति । अत एवाभ्युदयेष्ट्याम्, 'येऽणिष्ठास्तान् विष्णवे शिपिविष्टाय शृते चरुम्' इत्यादौ शिपिविष्टत्वविशिष्टो विष्णुः प्राप्तानुवादेन विधीयते, प्रसिद्धश्च विष्णुः शिपिविष्टो मन्त्रार्थवादादिषु, नैवमाग्नेयस्याष्टाकपालस्य लोकतो मन्त्रार्थवादतो वा प्रसिद्धिरस्ति । एवमेव ह्यध्वरमीमांसायां वार्तिकादौ पौर्णमास्यधिकरणे वर्णितम् । तत्रश्चारुणैकहायनीद्रव्यस्य लोकप्रसिद्धत्वात्, क्रियान्वयात् प्रागेव सामानाधिकरण्यवशेन मिथस्संबन्धित्वावगमात् आरुण्यविशिष्टैकहायनीद्रव्यं विधीयते । अमुमेवारुणाधि-

करणन्यायमवलंब्य, 'विष्णवे शिपिविष्टाये'त्यत्र शिपिविष्टत्वविशिष्टो विष्णुः प्राप्तानुवादेन विधीयत इति मीमांसकप्रवादोऽपि। अत एव 'तं वै दशभिः क्रीणाती'ति वचनमप्युपपद्यते। मीमांसकमतानुसारेणारुणिमगुणस्यापि पृथक्साधनत्वे साधनानामेकादशत्वसिद्ध्या, दशत्वसंख्यातिरेकात् दशभिरिति वादो नोपपद्येत, द्रव्यमात्राभिप्राया दशत्वसंख्येत्याश्रयणं च क्लिष्टम्। अत एव 'चतुरो मुष्टीन् निर्वपती'त्यत्र अध्वरमीमांसकमते चतुस्संख्याया मुष्टिद्रव्यानादरेण, अरुणिम्नः क्रयान्वयवत् निर्वापक्रियान्वये संख्यया कर्मभेदप्रसङ्गः। न चेष्टापत्तिः। चतुर्मुष्टिनिर्वापस्य एकपदार्थत्वात् चतुर्मुष्टिनिर्वापेणानुसमयः, न तु तदवयवेनैकैकमुष्टिनेति पाञ्चमिकाधिकरणविरोधप्रसङ्गादिति वदन्ति।

भाष्ये सामानाधिकरण्येनान्वयदूषणानुक्तौ हेतुमाह — **स किं पदयोरित्यादिना**। स इत्यनेन च भाष्यस्थपूर्ववाक्यस्थैकहायन्यन्वयनियमः परामृश्यते। न तु टीकास्थः क्रयान्वयद्वारा एकहायन्यन्वय इत्यर्थः परामृश्यते। तथात्वे तावत् पदद्वयसामानाधिकरण्येन एकहायन्यन्वयनियमः, 'न' इत्युत्तरग्रन्थस्याप्रसक्तप्रतिषेधत्वापातात्; परस्परसंबन्धानादरेण क्रयान्वयानन्तरम्; आर्थिकस्य परस्परान्वयस्यैव क्रयद्वारा एकहायन्यन्वयरूपत्वात्; सामानाधिकरण्यस्य च तद्विरुद्धत्वादिति द्रष्टव्यम्। **पृथक्करणवाचीति**। परस्परैक्यानापन्नकरणवाचीत्यर्थः। **वाक्यभेदे सति स्ववाक्यस्थत्वाभावादिति**। ननु वाक्यभेदे सत्यपि तच्चारुणयेत्यध्याहृततत्पदेन एकहायनीमात्रान्वयसिद्ध्या प्राकरणिकसर्वद्रव्यान्वयासिद्धिरिति चेन्न। पूर्वपक्षे एकहायनीसाध्यक्रयस्यापि वाक्यान्तरगतत्वाविशेषात्; बुद्धिस्थत्वमात्रस्य एकहायनीसाध्यक्रय इव वासःप्रभृतिसाध्यक्रयेऽपि सत्त्वात्; अत्यन्तसन्निधानस्य चाप्रयोजकत्वात्; वाक्यभेदाश्रयणे महाप्रकरणेन सर्वान्वयित्वसंभवे तत्पदाध्याहारस्याप्रामाणिकत्वाच्चेति भावः। न च तच्चेत्यध्याहारे अरुणयेत्यस्य कथमन्वय इति वाच्यम् — अरुणयेति तृतीयया प्राकरणिककरणद्रव्याण्यनूद्य तत्रारुण्यं विधीयते। तत्र चावान्तरप्रकरणमात्राश्रयणे वासःप्रभृतिक्रयसाधनेष्वप्यारुण्यसिद्धिः, महाप्रकरणाश्रयणे यजमानादिप्राकरणिकसर्वद्रव्यनिष्ठत्वमारुण्यस्य सिद्ध्यतीति द्रष्टव्यम्। **विशेषणविशेष्यभावः प्रातिपदिकावसेय इति**। आकृत्यधिकरणन्यायेनारुणाशब्दो

द्रव्यपर्यन्तवाचीत्यर्थः। **विशेष्यैक्यं सामानाधिकरण्यावसेय**मिति। समानविभक्तिलक्षणश्रुतिगम्यमित्यर्थः। कारकविभक्तेः समानविभक्तित्वाकारेण विशेष्यैक्ये शक्तेरेवाभ्युपगमात्, न तु पूर्वतन्त्र इव पदद्वयसामानाधिकरण्यरूपपदान्तरसमभिव्याहारलक्षणवाक्यावसेय इति मन्तव्यम्। **क्रयान्वयो वाक्यावसेय** इति। ननु कारकविभक्तित्वाकारात् क्रयान्वयबोधनम्, एकवचनत्वाद्याकारात् संख्यान्वयबोधनम्, समानविभक्तित्वाकारात् परस्परान्वयबोधनमिति वदतः सिद्धान्तिनो मते क्रियाकारकसंबन्धस्यापि विभक्तिलक्षणश्रुतिगम्यत्वेन श्रौततया कथं वाक्यगम्यत्वम्। अध्वरमीमांसकैरपि क्रियाकारकसबन्धस्य श्रौतत्वाभ्युपगमादिति चेत्—सत्यं क्रियाकारकसंबन्धः श्रौतः, विभक्त्याख्यश्रुतिगम्यत्वात्। अथापि क्रयाख्यक्रियाविशेषान्वयप्रतीतेः क्रिणातिपदसमभिव्याहारलक्षणवाक्यगम्यत्वात् तथोक्तमिति द्रष्टव्यम्। यद्वा क्रयान्वयो वाक्यावसेय इत्यस्यायमर्थः—कारकविभक्तिलक्षणश्रुतिगम्य कारकसंबन्धविशिष्ट क्रयविधानमेव वाक्यकृत्यमिति। अयं भावः—यद्युभयत्र विधिव्यापारः स्यात्, तदा विध्यावृत्तिलक्षणो वाक्यभेदः स्यात्। इह तु विभक्तिश्रुतिसमर्पितारुणिमगुणाश्रयद्रव्याभिन्नैकहायन्यन्वयविशिष्टे क्रये विहिते, तद्विशेषणानामाक्षेपत एव विधानसिद्धेर्न विध्यावृत्तिलक्षणो वाक्यभेद इति। **द्वारान्वयद्वार्यन्वयरूपार्थयो**रिति। गुणस्य हि क्रयान्वये गुणपरिच्छिन्नं द्रव्यं द्वारम्। ततश्च द्वारिणो गुणस्य द्वारभूतद्रव्यान्वयस्य क्रयान्वयस्य च बोध्यत्वाद्वाक्यभेदप्रसङ्ग इत्यर्थः।

भाष्ये **सर्वविशेषणविशिष्टोऽर्थ एक इति ज्ञापयित्वे**ति। नन्वरुणिमाश्रयद्रव्याभिन्नत्वेन प्रतीताया एकहायन्याः क्रयसंबन्धे खलेकपोतन्यायेनारुणायाः क्रयसंबन्धो न स्यात्। न चेष्टापत्तिः। तथा हि सति 'चतुरो मुष्टीन्निर्वपति' इत्यत्र मुष्टीनामेव चतुस्संख्यापेक्षया विशेष्यत्वेन प्राधान्यात् मुष्टीनामेवानुग्राह्यत्वेन संख्याया एव बाधप्रसङ्गेन संख्यामुष्ट्यधिकरणविरोधापत्तेः। तथाहि—वाजपेये श्रूयते, 'बार्हस्पत्यो नैवारः सप्तदशशरावश्चरुर्भवती'ति। अस्ति च प्रकृतौ, 'चतुरश्चतुरो मुष्टीन्निर्वपती'ति। तत्र न मुष्टीनां द्वितीयाश्रुतिबलात् निर्वापसंस्कार्यत्वमुपपद्यते। निर्वापसंस्कृतानां मुष्टीनां सूत्रभाव्युपयोगाभावेन चतुसंख्याया मुष्टिभिश्च निर्वापः कर्तव्य इति तस्यार्थ इति

सिद्धम् । ततश्च चतुस्संख्या मुष्टिद्रव्यं च इह चोदकप्राप्तम् । तत्र चतुर्भिर्मुष्टिभिः सप्तदशशरावपरिमाणश्चरुः संपादयितुं न शक्य इति अर्थवशाद्बाधेऽवश्यंभाविनि तत्र एकबाधेनोपपत्तौ, नोभयबाधनं युक्तम् । तस्मात् संख्यामुष्ट्योरन्यतरबाधे कर्तव्ये संख्याया द्रव्याङ्गत्वात् प्रधानस्य मुष्टिद्रव्यस्यानुग्रहः, संख्यायास्तु बाध इति पूर्वपक्षं कृत्वा — न संख्याया मुष्ट्यङ्गत्वम्; संख्याया मुष्टिसंबन्धस्य सामानाधिकरण्यलक्षणवाक्यबोध्यत्वात् निर्वापक्रियान्वयस्य द्वितीयाश्रुतिगम्यत्वात् वाक्यगम्यमुष्टिद्रव्यसंबन्धपरित्यागेन संख्याया अपि श्रुत्या निर्वापक्रियान्वय इति द्वयोरपि निर्वापाङ्गत्वमिति संख्यामुष्ट्योः परस्परविशेषणविशेष्यभावाभावात् द्वयोरपि साम्ये सिद्धे, संख्यायाः प्रक्रमश्रुतत्वेन प्रबलतया मुष्टीनामेव बाध इति सिद्धान्तितम् । तद् भज्येत भवन्मते। संख्याविशेषितमुष्टीनामेव क्रियान्वयित्वात् । ननु नास्माकं मते अनुपपत्तिः, विभक्तिबलेन चतुर्भिरभिन्नानां मुष्टीनां मुष्टिभिरभिन्नानां चतुर्णां च क्रियान्वयोऽस्तु । ततश्चोभयोरपि क्रियान्वयित्वाविशेषात् समप्राधान्यं सिद्ध्यति । परस्पराभिन्नानां क्रियान्वयमात्रं हि नस्सिषाधयिषितम्, न तु द्रव्यवाचिपदस्य विशेष्यवाचित्वं गुणवाचिपदस्य विशेषणवाचित्वमित्यपि संरंभ इति चेन्न—द्रव्यगुणवाचिपदयोः सन्निधाने द्रव्यवाचिपदस्य विशेष्यत्वम्, गुणवाचिनो विशेषणत्वमित्यस्य लोकसिद्धत्वेन अप्रत्याख्येयत्वात् । अन्यथा नीलोत्पलमित्यत्र नीलपदस्य विशेष्यतापत्तेः; ततश्च विशेषणं विशेष्येणेति समासे उत्पलनीलमित्यपि स्यादिति चेत्—उच्यते । नात्र पदार्थयोर्मध्ये कस्यचित्प्राधान्यम्, इतरस्य चाप्राधान्यं प्रतीयते; किंतु परस्परैक्यमात्रम्। ततश्च परस्पराभिन्नत्वेन प्रतीतयोश्चतुस्संख्याश्रयमुष्टिद्रव्ययोः खलेकपोतन्यायेन निर्वापक्रियान्वये, द्वयोरपि समत्वात् तत्र चतुस्संख्याश्रयद्रव्यस्य प्रक्रमश्रुतत्वेन प्रबलत्वात् चतुस्संख्याश्रयानुग्रहेण मुष्टिबाध एव न्याय्यः । नन्वेवमपि मुष्टिद्रव्याभिन्नचतुस्संख्याश्रयद्रव्यस्यैव निर्वापक्रियाङ्गत्वात्, मुष्टिद्रव्यबाधे तदभिन्नचतुस्संख्याश्रयद्रव्यस्यैव बाधिततया कथं मुष्टिद्रव्यबाधेन संख्यानुग्रह इति चेन्न—चतुस्संख्याश्रयद्रव्यमङ्गम्, तद्धर्मो मुष्टिद्रव्याभेदः । तत्र मुष्टिद्रव्याभेदस्यासंभवात् त्यागेऽपि संभवतश्चतुस्संख्याश्रयद्रव्यस्य धर्मिणः त्यागायोगात् । अत एव 'गुणलोपे च मुख्यस्ये' ति दाशमिकाधिकरणे (१०-२-२७.) पवमानेष्टिषु, 'अग्निहोत्रहवण्या हवींषि निर्वपती' ति चोदकप्राप्तो निर्वापः कर्तव्यो न वेति संशये—यत्राऽग्निहोत्रं हुतम्, साऽग्निहोत्रहवणीति पवमानेष्ट्युत्तरभाव्यग्निहोत्र-

नन्तरभाविन्या अग्निहोत्रहवण्याः पवमानेष्टिवेलायामसंभवात्, तत्साधनको निर्वापो न कर्तव्य इति पूर्वपक्षं कृत्वा — अग्निहोत्रहवण्यास्तदानीमसंभवात्तत्राङ्गयुक्तनिर्वापस्य कर्तुमशक्यत्वेऽपि अग्निहोत्रहवणीरूपाङ्गत्यागेन संभवतः केवलस्य निर्वापस्य संभवादङ्गानुरोधेनाङ्गिनः प्रधानस्य त्यागो न युक्त इति निर्वापः कर्तव्य इति सिद्धान्तितम्। तद्वदेव बार्हस्पत्यचरौ चतुस्संख्याश्रये मुष्टिद्रव्याभेदस्यासंभवतस्त्यागेऽपि चतुस्संख्याश्रयस्य त्यागोऽनुचित इति भावः। अन्ये तु, 'नन्वेकपदस्याकारकविभक्ति'रित्यारभ्य टीकायां क्रियान्वयसंख्यान्वययोरविलंबितप्रतीतिकत्वम्, परस्परान्वयस्य तु पदान्तरपरामर्शसापेक्षत्वेन विलम्बितत्वमिति दर्शयिष्यमाणतया परस्परान्वयानादरेणैवाध्वरमीमांसकवत् खलेकपोतन्यायेन क्रियासंबन्ध एवाभ्युपेयते। इयांस्तु विशेषः— अध्वरमीमांसकमते क्रियान्वयानन्तरमार्थो द्रव्यगुणसंबन्धः, अस्माकं तु शाब्दः परस्पराभेदान्वय इति। ननु परस्परान्वयप्रतीतेः पदान्तरपरामर्शसापेक्षतया विलम्बप्रतिपादकस्याग्रिमटीकाग्रन्थस्य, 'विशिष्टोऽर्थ एक इति ज्ञापयित्वा तस्य क्रियासंबन्धाभिधानमविरुद्धम्' इति भाष्यग्रन्थेन विरोध इति चेन्न — तस्य विरोधस्य टीकाकृतैव समाधास्यमानत्वादिति वदन्ति। **प्राबल्यदौर्बल्यहेतुरिति।** बाध्यबाधकभावहेतुरित्यर्थः। अयं भावः—अविलम्बितं प्रबलमित्यप्यस्तु; विलम्बितं दुर्बलमित्यप्यस्तु; अथापि न हि प्रबलं प्रबलमित्येव दुर्बलस्य बाधकम्; अपि तु सति विरोध इति। **अविरुद्धार्थैकत्वमिति।** नीलं श्वेतं चानयेत्यादावपि समानविभक्तेरैक्याबोधकत्वादविरुद्धार्थैक्यमुक्तमिति द्रष्टव्यम्। **अन्योन्यसमवायप्रसङ्गहेतुत्वादिति।** ननु, 'विशिष्टमुपस्थाप्य विशिष्टोऽर्थ एक इति ज्ञापयित्वे'त्यस्य विशेषणानां अन्योन्यैक्यप्रसङ्गोत्थापकत्वमेव; नान्योन्यसमवायप्रसङ्गोत्थापकत्वमिति चेत्— सत्यमैक्यप्रसङ्गस्यैवोत्थापकत्वम्, विशिष्टमुपस्थाप्येत्यत्र एकविशेषणविशिष्टे विशेषणान्तरविशिष्टमुपस्थाप्येत्यपि प्रतीयत इत्यभिप्रेत्य एवमुक्तमिति द्रष्टव्यम्। **तावन्मात्राभिप्रायत्वशङ्का चेति।** करणकारकविभक्त्यन्तत्वमात्रस्य सामानाधिकरण्याभिप्रायकत्वशङ्केत्यर्थः। **कृत्यत्रयस्येति।** विशिष्टत्वप्रतीतिविशिष्टैक्यप्रतीतिक्रियान्वयप्रतीतिरूपकृत्यत्रयस्यापि उक्तरीत्या वाक्यार्थप्रतीतिरूपत्वेन वस्तुतः एकत्वेन क्रमाभावाद्विशिष्टार्थत्वतदैक्यक्रियान्वयानां परामर्शदशायां क्रमेण परामर्शसंभवात् तदभिप्रायेण ल्यबन्तोक्तिरित्यर्थः। एतेन—अन्वयबोधस्य युगपद्भावित्वे वाक्यात् श्रुतेः प्राबल्यम्। तत्राप्येक-

पदश्रुत्यपेक्षया एकप्रत्ययश्रुतेः प्राबल्यम् । अतएव सोमेन यजेतेत्यादौ लिङर्थभावनायां समानपदोपात्तधात्वर्थस्यैव करणत्वेनान्वयः, न भिन्नपदोपात्तसोमलतादेः, तथा पशुना यजेतेत्यत्र एकत्वसंख्याया एकप्रत्ययोपात्तकरणकारकशेषत्वमेव, न त्वेकपदोपात्तपश्वङ्गत्वमित्यादि व्याकुप्येत, श्रुतिवाक्यबलाबलयोः प्रतीतिविलम्बाविलम्बप्रयुक्तत्वादिति शङ्का पराकृता — परामर्शदशावर्तिविलम्बाविलम्बावादाय प्राबल्यदौर्बल्योपपत्तेरिति तात्पर्यात् । केचित्तु, — 'विशिष्टोऽर्थ एक इति ज्ञापयित्वा, तस्य क्रियासंबन्धाभिधानमविरुद्धम्, 'अनेकविशेषणविशिष्टं प्रतिपन्नं युगपत्क्रियायामन्वेति' इत्यादिक्रमप्रतिपादकभाष्यस्वारस्यात् मीमांसाविरोधात् वाक्यार्थबोधयौगपद्यप्रदर्शकस्य टीकावाक्यस्यैवान्यपरत्वं वर्णनीयमित्याहुः ।

**असाधारणार्थं च व्युदस्यतीति** । 'यत् पुनः क्रयस्यैकहायन्यवरुद्धतये' त्यादिना वक्ष्यमाणार्थोऽसाधारणार्थ इति ध्येयम् । **तदभ्युपगम्येति** । उपात्तद्रव्यकवाक्यस्थत्वस्य गुणमात्रपर्यन्तत्वप्रयोजकत्वमभ्युपगम्य, तदपवादकतया पराभिमतस्य सामानाधिकरण्यस्य सत्त्वान्न गुणमात्रपर्यन्तत्वमिति दूषयतीत्यर्थः । **असमानाया विभक्तेर्निर्देश** इति । असमानायाः सुब्विभक्तेर्निर्देश इत्यर्थः । ततश्च श्वेतो धावतीत्यत्र तिङोऽपि विभक्तितया असमानविभक्तिनिर्देशसत्त्वात् केवलगुणाभिधायित्वप्रसङ्ग इति चोद्यस्य नावकाश इति ध्येयम् । **विशेष्यवाचिभागशब्देनेति** । ततश्च विशेष्यवाचिशब्देनासमानविभक्तिनिर्देश एव केवलगुणमात्रवाचित्वे प्रयोजकः । ततश्च पटशब्देनासमानविभक्तिनिर्देशोऽप्रयोजक इति भावः । **यथा त्वत्पक्ष इति** । गुणमात्रापवादकभागशब्दसामानाधिकरण्यबलेन धर्मिपर्यन्तत्वेऽप्युपात्तद्रव्यकवाक्यस्थत्वस्य गुणमात्रवाचित्वप्रयोजकत्वस्य उत्सृष्टस्य यथा न हानिरित्यर्थः । ननु कल्पनागौरवं भाष्ये कुतो न कण्ठोक्तमित्यत आह— **इदमर्थसिद्धमितीति** । अध्वरमीमांसकैरेवं पूर्वपक्षः कृतः—अरुणाशब्दोऽयमाकृत्यधिकरणन्यायेन गुणवचन एव; न द्रव्यवचनः । तत्रारुणाशब्देन गुणपरिग्रहे अमूर्तस्य गुणस्य क्रयसाधनत्वं न संभवतीति तदनुपपत्त्या लक्षणया द्रव्यपरिग्रहेऽपि अरुणाशब्देन लक्षणया एकहायनीद्रव्यं विधीयते, द्रव्यान्तरं वा । न तावदेकहायनीद्रव्यं लक्षणया विधीयते । एकहायनीपदेन श्रुत्यैव विहितस्य एकहायनीद्रव्यस्या-

रुणापदेन पुनर्विधानायोगात्। न च तदतिरिक्तम्; श्रुतैकहायन्यवरुद्धतया लक्षित-द्रव्यान्तरविधानायोगादिति। तदेतदनुभाषते—भाष्ये **यत्पुनरि**ति। भाष्ये **तदाश्रयगुणाभिधानेने**ति। तदाश्रयगुणद्वारा गुण्यभिधायित्वया गुणिनोऽपि वाच्यत्वेन, 'श्रुतैकहायन्यवरुद्धे अरुणापदलक्षितस्य निवेशो न संभवती'त्युक्तेरयुक्तत्वादिति भावः। टीकाग्रन्थोऽप्येवमेव योजनीयः। **वाक्यैकत्वे कथंचित्संभव**तीति। अमूर्तस्यापि गुणस्य द्रव्यपरिच्छेदमुखेन क्रयसाधनत्वसंभवेन क्रय एव करणतयान्वयसंभवेन एकवाक्यत्वसंभवादित्यर्थः।

**निर्विशेषवादिन इत्येतावता पर्याप्तत्वेऽपी**ति। लघुत्वात् तथैव निर्देष्टुं शक्यत्वेऽपीत्यर्थः। **द्वारद्वारिभावविपर्यये**ति। त्वंशब्दस्य जीवद्वारा परमात्माभिधायित्वे तच्छब्दस्य वा परमात्मद्वारा जीववाचित्वं किन्न स्यात् इति शङ्कानिरासार्थश्चायमारम्भ इत्यर्थः। ततश्च समर्थितस्य पुनस्समर्थनं व्यर्थमिति चोद्यं निरस्तमिति ज्ञेयम्। **तत्त्वंपदसामानाधिकरण्ये**ति। सामानाधिकरण्यबलात् तत्त्वंपदावगतविशेषणानां स्वीकार्यत्वात् प्रवृत्तिनिमित्तत्यागे सामानाधिकरण्यभङ्गप्रसङ्गादिति भावः। **सद्वारकमवसीयत इत्यनुसन्धेय**मिति। नामरूपभाक्त्वमिति शेषः। **अद्वारकश्च गुणान्वय** इति। किञ्चिज्ज्ञत्वादिगुणानां सद्वारकत्वम्; सर्वज्ञत्वादिगुणानां त्वद्वारकत्वमिति भावः। **जगदाकारकथन**मिति। 'देवादिविचित्रसंस्थानसंस्थित'इति जगदाकारकथनं वक्ष्यमाणचिदचिदंशविभागार्थमिति योजना। ततश्च विचित्रसंस्थानसंस्थिते जगतीति निमित्तसप्तमी। विचित्रसंस्थानसंस्थितजगन्निर्माणार्थमित्यर्थ इति भावः। **जीवकर्तृकप्रवेशव्यावृत्त्यर्थ**मिति। परतन्त्रजीवकर्तृकप्रवेशाद्वैलक्षण्यसिद्ध्यर्थमित्यर्थः। **स्वपर्यन्तेष्वि**ति। देवाद्याकारसंघातेषु स्वपर्यन्तेष्वेव नामरूपे व्याकरोत्, न तु संघातमात्र इति भावः। **ल्यबन्तनिर्दिष्टाना**मिति। सृष्ट्वानुप्रविश्येति प्राङ्निर्दिष्टानामित्यर्थः। **स्वं रूपं च स्वरूप**मिति पाठः। स्वरूपशब्दविग्रहवाक्यस्य तादृशस्यैवोचितत्वात्, स्वशब्देन शरीरी ईश्वर उच्यत इति वक्ष्यमाणत्वाच्च। स्वयंरूपं चेति पाठे विग्रहवाक्यसमानार्थकं वाक्यान्तरमिति द्रष्टव्यम्। **अस्मद्वाचित्वे सति ही**ति। यद्यपि मयेत्येकवचनानुसारात्, 'मद्वाचित्वे सति ही'त्येव वक्तुमुचितम्—तथाप्यस्मच्छब्दार्थवाचित्वमस्तीति तथा व्यवहृतमिति द्रष्टव्यम्। नन्विदं

सर्वमित्यत्र सर्वशब्दस्यासंकोचेन चेतनाचेतनपरत्वे विवदमानं प्रति इदं सर्वमिति निर्दिष्टचेतनाचेतनवस्तुद्वयमिति सिद्धवत्कृत्य भाष्ये निर्देशोऽनुपपन्न इत्याशङ्क्याऽह — **असङ्कोचोऽभिप्रेत** इति । सर्वशब्दसंकोचे हेत्वभावादित्ययमर्थोऽभिप्रेत इति भावः । नन्वसंकोचस्य स्वतःप्राप्तत्वे, 'इदं सर्वमसृजत यदिदं किञ्च, तत्सृष्ट्वा तदेवानुप्राविशत्' इत्येतावति वक्तव्ये, 'तदनुप्रविश्य सच्च त्यच्चाभव'दिति वाक्यं किमर्थमित्याशङ्क्य, सर्वशब्दासङ्कोचदार्ढ्यार्थमित्याह — **तदनुप्रविश्येत्यादि** ।

**पूर्वमुदाहृतेति अत्राभिप्रेतेति** । अत्राभिप्रेतापि नोदाहृतेति भावः । **परमविशेष्यवाचीति** । विशेष्यविशेष्यवाचीत्यर्थः । गुणवाचिशब्दानां न तद्गतजातिवाचित्वमिति शङ्कितुरभिमानः । **स्वतःप्राप्तत्वं विवक्षितमिति** । यदपृथक्सिद्धम्, तदपृथक्प्रतीतिकमित्युत्सर्गसिद्धमिति भावः । ततश्चात्मशरीरयोः परस्परेण विनापि भासमानत्वेऽपि न दोष इति भावः । **सहोपलंभनियमादेरिति** । मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्ये सहोपलम्भनियमैकसामग्रीवेद्यत्वादिकमेव प्रयोजकम्, शरीरात्मनोश्चातथात्वान्न मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्यमित्यादिचोद्यतत्परिहारक्रमौ तत्रैव द्रष्टव्यावित्यर्थः ।

**प्राणमयपर्यायस्थशारीरात्मशब्दो मनोमयपर** इति । एष इति पदं वक्ष्यमाणपरम् । यः पूर्वस्यान्नमयस्य शारीर आत्मा प्राणमयः, तस्य वक्ष्यमाणो मनोमयः शारीर आत्मेति वाक्यार्थोऽभिप्रेतः। इदमुपलक्षणम्, योऽयं प्रणमय, एषः तस्य पूर्वस्यान्नमयस्य शारीर आत्मेति परोक्तरीत्यन्तरस्यापीति द्रष्टव्यम्। **परमात्मशरीरत्वमर्थादवगम्यत इत्यर्थ** इति । नन्वात्मन आकाशः संभूत इत्यत्रात्मशब्दनिर्देशादेव वक्ष्यमाणान्नमयाद्यात्मत्वावगतौ तयैव रीत्या प्राणमयादीन् प्रत्यपि आत्मत्वमवगम्यत इति प्राणमयपर्याये 'तस्यैष एव शारीर आत्मे' त्यात्मत्वप्रतिपादनं मुधेति चेन्न — 'तस्माद्वा एतस्मादन्नरसमयादन्योऽन्तर आत्मा प्राणमयः' इति प्राणमये आत्मशब्दप्रयोगात् प्राणमये अन्यशरीरत्वं न प्रतीयेत इति प्राणमयस्य, 'आत्मन आकाशः संभूतः' इति आकाशादिकारणत्वेन निर्दिष्टस्यात्मनश्च शरीरात्मभावप्रतिपत्त्यर्थम्[1], तस्यैष एवेति निर्देशस्यार्थवत्त्वात् । नचैवमन्नमयेऽपि, अयमात्मेति निर्दे-

१. एतदुपरि मुद्रितपाठः अशुद्धः । तालकोशवाक्यानि ततः परिष्कृत्य निवेद्यन्ते ।

शात् आत्मन आकाशः संभूत इति निर्दिष्टात्मापेक्षया शरीरत्वं न प्रतीयेतेति वाच्यम् — तत्र अयमात्मेति आत्मशब्दस्य मध्यकायवाचित्वेन शरीरत्वप्रतिपत्त्यविरोधात् । ननु 'स वा एष पुरुषोऽन्नरसमय' इत्यारभ्य प्रवृत्तो हि श्रुतिवाक्यसन्दर्भः, 'सत्यं ज्ञानमिति मन्त्रवर्णप्रतिपाद्यस्य ब्रह्मणः, 'आत्मन आकाशः संभूत' इति निर्दिष्टं आत्मत्वमन्नमयादिसर्वान्तरत्वव्यञ्जनद्वारा व्याचष्ट इति सिद्धान्तेऽभ्युपगम्यते । तत्रान्नमयप्राणमयमनोमयविज्ञानमयान्तरत्वं प्रतिपिपादयिषितम् । तत्र विज्ञानमयपर्याये 'तस्यैष एव शारीर आत्मा, यः पूर्वस्ये' ति यो मनोमयस्यात्मा, स एव विज्ञानमयशब्दितजीवान्तर्यामीत्यस्यार्थस्य सिद्धत्वेन सर्वान्तरत्वस्य सिद्धतया, 'तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्मानन्दमय' इत्युपक्षेपो व्यर्थः । प्रत्युत आनन्दमयलक्षणतत्त्वान्तरबुद्धिजनकतया विपरीत एव । न च मन्त्रवर्णादिनिर्दिष्टस्यान्नमयादिजीवपर्यन्तान्तर्यामित्वेऽवगतेऽपि तस्य प्रियमोदादिमत्त्वबोधनार्थं तत्पर्यायारम्भ इति वाच्यम्—तथापि 'तस्यैष एव शारीर आत्मे' ति विज्ञानमयपर्यायगतवाक्यानन्तरम् 'तस्य प्रियमेव शिर' इत्यादि कथ्यताम्; न तु, तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्मानन्दमय इतीति चेत्—उच्यते । 'तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्मानन्दमय' इत्यनुक्तौ 'विज्ञानं ब्रह्म, चेद्वेद तस्माच्चेन्न प्रमाद्यति, शरीरे पाप्मनो हित्वा सर्वान् कामान् समश्नुत' इति विज्ञानमयपर्यायगतश्लोकश्रवणात् तत्रैव परमात्मत्वप्रतीतिः स्थिरा स्यात् । 'तस्यैष एव शारीर आत्मा' इति निर्देशोऽप्यनन्यात्मत्वप्रदर्शनार्थं इति प्राप्नुयादित्यतः, 'तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्मानन्दमय' इति निर्दिष्टमिति न दोषः । व्युदासायेति । व्युदासायापीत्यर्थः ॥ १३ ॥

विकारशब्दान्नेति चेन्न प्राचुर्यात् १-१-१४

सुखप्रतिसंबन्धितयेति । दुःखस्य विरोधित्वेन सुखप्रतिसंबन्धितया, सुखस्य प्राचुर्ये तद्विरोधिदुःखाल्पत्वं सहचरिततया शीघ्रमुपस्थितं भवति । अतः तदेव प्रतियोगीति भावः । तत्राप्यर्थे प्रथमतरमितीति । प्रथमं धियमारोहतीत्युक्ते प्राचुर्यरूपार्थस्य विकारार्थापेक्षया प्राथम्याभावेऽपि अवयवरूपार्थापेक्षया प्राथम्यस्य सत्त्वात् तद्वैलक्षण्यसिद्ध्यर्थं प्रथमतरमित्युक्तमित्यर्थः । भाष्ये प्रयोगप्रौढ्या चेति ।

प्राप्तमिति शेषः। **लिङ्गबाध्यमिति**। अर्थसामर्थ्यरूपलिङ्गबाध्यमित्यर्थः। अर्थविरोधबाध्यमिति यावत्। **अर्थान्मयट्प्रत्ययस्येति**। अस्वार्थिकमयट्प्रत्ययस्येत्यर्थः। **प्राचुर्येण सह संबन्धमभिदधातीति**। प्राचुर्यञ्च संबन्धञ्चाहेत्यर्थः। अन्नमयो यज्ञ इत्युक्ते अन्नप्राचुर्यस्य, अन्नयज्ञयोस्संबन्धस्य च प्रतीतेः, तत्प्रकृतवचने मयडित्यत्र, 'प्रकृतं प्राचुर्येण प्रस्तुतमुच्यते अत्रेति प्रकृतवचनम्; सप्तम्यर्थे प्रत्ययः' इत्युक्तेरिति भावः। **कृत्स्नमुख्यार्थहानादपीति**। स्वार्थिकत्वपक्षे कृत्स्नमुख्यार्थहानमित्यभिप्रायः। प्राचुर्यविशिष्टाधाराधेयभावसंबन्धवाचिमयट्प्रत्ययस्य केवलसंबन्धवाचित्वे लक्षणा अवर्जनीयेत्यङ्गीकृत्याह — **यद्वा प्राणाख्येति**। स्वार्थिकत्वरूपानर्थक्याश्रयणापेक्षया मयट्प्रत्ययस्य संबन्धमात्रलक्षणापि ज्यायसीति भावः। **तद्व्याहतमिति**। तत्प्राचुर्यतदल्पत्वयोर्विरोधादिति भावः। **यदि विजातीयमिति**। यदि विजातीयाल्पत्वमित्यर्थः। एवमुत्तरत्रापीति द्रष्टव्यम्। **अन्याश्रयमपि सजातीयं विजातीयं वेत्यत्र** विजातीयमिति पक्षः संभावनामात्रेण आशङ्क्य निरस्तः। ब्राह्मणप्रचुरोऽयं ग्राम इत्यादौ ग्रामान्तरे ब्राह्मणाल्पत्ववत् ग्रामान्तरे शूद्राल्पत्वस्याप्रतीतेरिति द्रष्टव्यम्। एतेन मयटः प्राचुर्यार्थकत्वपक्षेऽपि; जीवस्यैवानन्दमयत्वं सिद्ध्यति, आनन्दप्राचुर्यस्य प्रतियोगिदुःखाल्पत्वगर्भत्वात्। प्राचुर्यस्य विशेषणत्वे व्यधिकरणसजातीयाल्पत्वस्य निरूपकत्वेऽपि, विशेष्यत्वे समानाधिकरणविजातीयाल्पत्वमेव निरूपकमिति हि व्युत्पत्तिसिद्धम्। अत एव प्रचुरब्राह्मण इत्यत्र प्राचुर्यस्य ग्रामान्तरगतब्राह्मणाल्पत्वापेक्षत्वेऽपि, ब्राह्मणप्रचुरो ग्राम इत्यत्र तद्ग्रामगतशूद्राल्पत्वापेक्षमेव प्राचुर्यं प्रतीयत इति परोक्तं परास्तम्। यतः प्रचुरप्रकाशः सवितेतिवत् प्रकाशप्रचुरः सवितेत्यत्रापि व्यधिकरणनक्षत्रादिगतप्रकाशाल्पत्वापेक्षमेव प्राचुर्यं प्रतीयते; न तु सवितृगततमोल्पत्वापेक्षम्; तत्र तमसा बाधितत्वात्। वस्तुतस्तु सर्वं वाक्यं सावधारणमिति न्यायेन यत्र यत्संबन्धो बोध्यते, तदितरत्र तद्व्युदासः प्रतीयते। ततश्च यदा ग्रामगतेषु ब्राह्मणेषु प्राचुर्यपरं वाक्यम्, ग्रामगताः ब्राह्मणाः प्रचुरा इति, तदा तद्गतानां शूद्राणामल्पत्वं प्रतीयते। यदा च ग्रामे ब्राह्मणप्राचुर्यं विधीयते, तदा ग्रामान्तरे ईदृशब्राह्मणप्राचुर्यं नास्तीति ब्राह्मणाल्पत्वं प्रतीयत इति त्व(त?)दभिमतव्युत्पत्तिविरुद्धैव व्युत्पत्तिरनुभवसिद्धा। ततश्च प्रचुरब्राह्मण इत्युक्ते व्यधिकरणसजातीयाल्पत्वं प्रतीयते, ब्राह्मणप्रचुर इत्युक्ते समानाधिकरणविजातीयाल्पत्वापेक्षं प्रतीयत इत्येतत्

तन्मतश्रद्धालुभ्य एव रोचतामित्यास्तां तावत् । **बलवत्तर इत्युक्त** इति । यद्यपि "द्विवचनविभज्योपपदे तरबीयसुनौ ' इति द्विवचनादिविशेषणवशात् आतिशायनिक-प्रत्ययेषु व्युत्पत्यन्तरकल्पनेऽपि मयटि न व्युत्पत्यन्तरकल्पनमस्ति । तथा हि सति मयट्प्रत्ययस्थले तरप्प्रत्यय इव समानाधिकरणविजातीयाल्पत्वापेक्षं प्राचुर्यं न प्रतीयते-तथापि पूर्वोक्तयुक्तौ तात्पर्यम् । **मयटो व्युत्पत्तिसिद्धमिति । इदमुपलक्षणम् ।** अत्र ' नित्यं वृद्धशरादिभ्यः ' इति सूत्रे ' मयड्वैतयोर्भाषायाम् ' इत्यतो भाषायामित्यनुवृत्त्या, तस्य सूत्रस्य भाषाविषयत्वेन, आनन्दमय इत्यादौ न तेन सूत्रेण मयट्प्राप्तिः; एतस्य छन्दोविषयत्वात् । नापि द्व्यचश्छन्दसीत्यनेन प्राप्तिः । आनन्दशब्दस्य द्व्यच्त्वाभावात् । तस्मात् तत्प्रकृतवचने मयडिति प्राचुर्यार्थमयडेवोचित इत्यर्थोऽत्राभिप्रेत इति द्रष्टव्यम् । **कथं दुःखाज्ञानेति** । अत्र क्रमो न विवक्षितः, ज्ञानानन्दाविति निर्देशानुसारेण तत्प्रतिद्वन्द्वितया कथमज्ञानदुःखसंभव इत्येव निर्देष्टव्यत्वादिति द्रष्टव्यम् ॥ १४ ॥

## तद्धेतुव्यपदेशाच्च १-१-१५

सूत्रस्य भाष्येणानवतारितत्वात् स्वयमवतारयति — **हेत्वन्तरं चाहेति** । आनन्दयितृत्वस्यानन्दप्रचुरत्वे उत्पादकतया हेतुत्वमुक्त्वा, उत्पाद्यतया ज्ञापकत्वलक्षण-हेतुमाह — **धनप्रचुरो हीति । इति सूत्रानन्तर्यमिति** । अस्य सूत्रस्य पूर्वसूत्रार्थोपपादकत्वात् तदानन्तर्यमित्यर्थः । **पूर्वोक्त एव सम्यगर्थ** इति । द्वितीयपक्षवत् ' अन्यात्, प्राण्यात् ' इत्युभयत्रापि धात्वोरर्थवैरूप्याभावात्, पृथक्कीर्तनीयभोगमोक्षयोः अपृथक्कीर्तनस्यायुक्तत्वाच्चेत्यर्थः ।

## मान्त्रवर्णिकमेव च गीयते १-१-१६

मन्त्राणां प्राबल्यं केचिद्वदन्तीति कोशेषु दृश्यते । प्रथमसूत्रे मन्त्रापेक्षया ब्राह्मणप्राबल्यवादोऽनुपपन्न इत्युक्तेः, तदविरोधाय मन्त्राणां(णाम?) प्राबल्यमिति पाठो युक्त इति । केचित्तु मन्त्रप्राबल्यमपि वर्णयन्ति, तदनेन ग्रन्थेनानूद्यत इत्यपि वर्णयन्ति । **तद्व्युदासार्थमाहेति** । अत्र तद्व्युदासार्थमप्याहेत्यपिशब्दोऽध्याहर्तव्यः । ततश्च, किमुक्तं भवतीत्यत्राहेत्यवतारिते ग्रन्थे पुनरवतारिकादानमनर्थकमिति न चोदनीयम् । **नित्यनिर्दोषत्वाविशेषादिति** । यद्यपि नित्यनिर्दोषत्वाविशेषेऽपि उप-

संहारापेक्षया उपक्रमस्य प्राबल्यम्, पूर्वापच्छेदशास्त्रादुत्तरापच्छेदशास्त्रस्य, वाक्यात् श्रुतेः प्राबल्यमित्यादे दृश्यते। तथा 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इत्यत्र ऐन्द्रीमन्त्रगतेन्द्रपदस्य गार्हपत्यलक्षकत्वम्; न तु ब्राह्मणगतस्य गार्हपत्यपदस्य, अप्राप्तप्रकाशकतया तस्य बलवत्त्वादित्याद्युक्तम्—तथापि उपक्रमत्वाप्राप्तप्रकाशकत्वादिकं प्रयोजकम्; मन्त्रत्वब्राह्मणादिकं प्राबल्यदौर्बल्यादावप्रयोजकमिति भावः।

नेतरोऽनुपपत्तेः १-१ १७.

**कारणाविद्या आच्छादिकाविद्येति**। आच्छादिकाविद्या या कारणाविद्या, विक्षेपकाविद्यारूपा या कार्याविद्या, सा सर्वापि समस्तशब्देन विवक्षितेत्यर्थः। **गन्धशब्देनापारमार्थिकत्वमिति**। सूपगन्धिभोजनमित्यादाविव गन्धशब्दस्याल्पवाचित्वात्, तस्या अल्पत्वं च मिथ्यात्वमेवेति भावः। यद्वा - गन्धशब्देन वासनोच्यते। सवासनानिवृत्तेः ज्ञानाधीनत्वेन ज्ञाननिवर्त्यत्वलक्षणमिथ्यात्वं सिद्धमिति भावः। **अपुनस्संबन्ध इति**। निश्शेषनिवृत्तिरित्यर्थः। **पञ्चम्यर्थं पश्चाद्वक्ष्यन्निति**। **इतिशब्देनेति** भावः। इतिशब्दः सूत्रस्थपञ्चमीव्याख्यानमिति वक्ष्यमाणत्वात्। **भवदभिमतमुक्तस्येति**। निर्विशेषस्येत्यर्थः। भाष्ये **विविधं पश्यच्चित्त्वं हीति**। पश्यच्चित्त्वस्य वैविध्यं नाम नानाविधार्थविषयकत्वमिति भावः। न तु विविधमिति द्वितीयान्तं भावप्रत्ययान्तं (न प्रकृत्यर्थैकदेशान्वयदौर्घट्यात्। केचित्तु द्वितीयान्तत्वेऽपि गमकत्वमस्तीति मन्यन्ते?)। अन्ये तुविविधमित्येतत् पश्यशब्दार्थक्रियाविशेषणमिति मन्यन्ते। **विविधं पश्यच्चित्त्वमित्यत्र बहुव्रीहिरिति**। विविधं पश्यच्चित्त्वमिति वाक्ये पश्यन्ती चित् यस्येति पश्यच्चित्, तस्य भावः पश्यच्चित्त्वमिति बहुव्रीहिरित्यर्थः। न तु विविधंपश्यच्चित्त्वमित्येतावतोऽप्यैकपद्यम्; सुब्लोपप्रसङ्गात्। **यदीत्यनुज्ञाप्रदर्शनार्थमिति**। यतो वाच इति वाक्यमतिशयेयत्ताया निवृत्तिपरं न भवति, अपि तु ब्रह्मस्वरूपान्निवृत्तिपरमिति त्वदभ्युपगमो यदीत्यर्थः। **ब्रह्मणस्तुच्छत्वं व्याहतमित्यत्राहेति**। ततश्चाव्याहतत्वात्, ब्रह्मणो निर्विशेषत्वमेव प्रतिपादयतीति भावः, 'निर्विशेषत्वेऽपि तुल्य' मित्युत्तरग्रन्थानुसारात्। अत्र च निष्प्रमाणकत्वेऽपि तुल्यमित्यनुक्त्वा निर्विशेषत्वेऽपीति वदतः आचार्यस्य वाङ्मनसयोः

ब्रह्मणि प्रवृत्त्यभावेन निष्प्रमाणकं ब्रह्मेत्युच्यत इति भ्रान्तजल्पितमिति भाष्ये निष्प्रमाणकमित्यस्य निर्विशेषमित्यर्थ इत्याशय उन्नीयते । **कश्चैष मौन** इति ।

> कश्चैष मौनः कतरं तु मौनं प्रब्रूहि विद्वन्निह मौनभावम् ।
> अनेन विद्वाननुयाति मौनं कथं मुने मौनमिहाचरन्ति ॥
>
> यतो न वेदा मनसा सहैनमनुप्रविश्यन्ति तवाथ मौनम् ।
> यत्र स्थितो वेदशब्दस्तथायं न तन्मयत्वेन विभाति राजन् ॥

इति महाभारतसनत्सुजातश्लोकद्वयैकार्थ्यमनुसन्धेयमित्यर्थः । **व्याहतिपरिहारोऽभिमतश्चेदिति** । यतो वाच इति वाक्यं किमपि न प्रतिपादयतीति न व्याहतिरिति चेदित्यर्थः । **इत्यनेनापि शब्देनेति** । इत्येतत् **अनेनापि शब्देन** स्वेनापि शब्देनेत्यर्थः । सत्यकामस्सत्यसङ्कल्प इत्यादौ न कामनासङ्कल्पादीनां स्वरूपतस्सत्यत्वमुच्यते ; किन्तु अमोघत्वरूपसत्यविषयत्वमेव । इतरथा अस्मदादिष्वपि सत्यकामत्वादिव्यपदेशप्रसङ्गात् । अस्मदादिसङ्कल्पस्यापि पारमार्थिकत्वात् । सत्यकामशब्दस्य नित्यविभूतिमत्त्वपरत्वेन सत्यसङ्कल्पपदस्यापि सङ्कल्पमात्रसिद्धसर्वार्थत्वपरतया च दहराधिकरणे व्याख्यास्यमानत्वात्, वेदार्थसङ्ग्रहेऽपि तथैव प्रतिपादितत्वाच्चेत्यस्वरसादाह — **त इमे सत्याः कामा** इति । तत्र कामशब्दनिर्दिष्टानामपहतपाप्मत्वादीनां गुणानां सत्यत्वाभिधानात् सत्यत्वं कण्ठोक्तमिति भावः । **उभयमुख्यत्वं सिद्ध्यति चेत्, तदेव युक्तमिति** । यत्र मुख्यार्थसङ्कोचलक्षणैकदेशबाधेनैव वाक्ययोरविरोधसंपादनम्, तत्र सर्वात्मना मुख्यार्थत्यागरूपलक्षणा नाश्रयितुमुचितेत्यर्थः । **विषयविभागो मुख्यत्वानुरोधी दृश्यत** इति । गामनय बलीवर्दमानयेत्युक्ते गोशब्दस्य सर्वात्मना मुख्यार्थपरित्यागेन बलीवर्दव्यतिरिक्तगोविषयत्वेन सङ्कोच एव कल्प्यते; न तु सर्वात्मना मुख्यार्थबाधेन लक्षणा समाश्रीयते, तद्वत् वाच्यत्वप्रतिपादकप्रमाणानां 'यतो वाचो निवर्तन्त' इत्यादिना विरोधे इयत्तया वाच्यत्वव्यतिरिक्तवाच्यत्वपरतया सङ्कोच एव कार्यः ; न तु सर्वात्मना वाच्यत्वरूपार्थपरित्यागेन वाच्यमित्यस्य लक्ष्यमित्यर्थाश्रयणमित्यर्थः । **अतोऽत्र स्ववाक्यस्थहेतुश्चोक्तो भवतीति** । ननु, स्ववाक्यस्थकथनरूपान्तरङ्गप्रत्यासत्त्या, स्ववाक्यैकदेशमयडन्तपदवाच्यनिरतिशयानन्दयोगप्रतिपादकायसूत्रत्रयानन्तर्यमस्य सूत्रस्य कुतो

न स्यादिति चेत् — सत्यम् । आदिमध्यान्तगतहेतुपरामर्शकमसङ्गतिविशेषाभिप्रायेण इह सङ्गत्युपपत्तेः ।

भेदव्यपदेशाच्च १-१-१८.

**एकावस्थाया**मिति । 'एतस्माद्विज्ञानमयादन्योऽन्तर आत्मे' ति बद्धं जीवं परामृश्य, अन्योऽन्तर आत्मेति, तस्यामेव दशायामन्तरात्मत्वेनानन्दमयस्य भेदकीर्तनादित्यर्थः ।

कामाच्च नानुमानापेक्षा १-१-१९.

**स्यादिति जीवस्ये**ति । स्यादित्यभिप्रेत्य जीवस्येत्युक्तमित्यर्थः । केचित्तु जीवस्येति प्रतीकग्रहणं तद्वाक्ये व्याख्यायत इति सूचनार्थमिति वदन्ति ।

अस्मिन्नस्य च तद्योगं शास्ति १-१-२०.

**अस्मिन्निति विषयसप्तमी**ति । अस्य जीवस्यास्मिन्नानन्दमये विषये आनन्दयोगं शास्ति, आनन्दमयविषयकानुभवरूपानन्दयोगं शास्तीत्यर्थः । जीवस्यानन्दरूप आनन्दमयानुभवोऽस्तीति यावत् । एवं च, 'रसं ह्येवायं लब्ध्वानन्दी भवती' ति श्रुतिवाक्यस्यायमर्थः — रसं लब्ध्वा — रसस्वरूपमानन्दमयं लब्ध्वा अनुभूय, आनन्दी भवति—लाभरूपानन्दी भवतीति । विषयसप्तमीत्येतदुपलक्षणम् । अस्मिन् परमात्मनि लब्धे सति अस्य जीवस्यानन्दयोगं 'रसं ह्येवायं लब्ध्वानन्दी भवती' ति शास्त्रं शास्तीत्यर्थाश्रयणेऽपि न दोष इति द्रष्टव्यम् । ननु जीवस्यानन्दमयानुभवरूपानन्दशालित्वं कथं जीवानन्दमययोर्भेदं साधयेत ? अभेदेऽपि तत्संभवात्, परमात्मनोऽपि स्वानुभवसत्त्वादिति चेत् — उच्यते । आनन्दमयस्य जीवाभिन्नत्वे आनन्दी भवतीति शास्त्रेण शिष्यमाणानन्दमययोगो नोपपद्येत, स्वस्य स्वयोगासंभवात्, सूत्रे तद्योगं शास्तीत्यत्र तच्छब्द आनन्दरूपानन्दमयपर इति न कोऽपि दोषः ।

**आनन्दे ह्यानन्दयोगं वदती**ति । रसं ह्येवायं लब्ध्वाऽऽनन्दी भवतीत्युक्तेरिति भावः । ननु, 'एव मानन्दमयः परं ब्रह्मेति निश्चिते सती' त्यादिभाष्यस्यैवमवतारिकायाम्, अस्मिन्नस्य च तद्योगं शास्तीति सूत्रार्थनिश्चयस्यानन्दमय-

परब्रह्मनिश्चयोत्तरभावितया इदं सूत्रमानन्दमयपरब्रह्मत्वनिर्णयाप्रयोजकमेव स्यात् । ततश्चानन्दमयस्य परब्रह्मत्वे, 'यदेष आकाश आनन्दो न स्यात्, विज्ञानमानन्दं ब्रह्म, आनन्दो ब्रह्मेति व्यजानादित्यादीनामानन्दस्य जगत्कारणत्वब्रह्मत्वप्रतिपादकानां वाक्यानां विरोधमाशङ्क्य परिहरतीत्येवावतारिका युज्यत इति चेत् — उच्यते । अवतारिकान्तरसद्भावेऽपि अस्यामवतारिकायां दोषाभावात् । न चोक्तदोष इति वाच्यम् ; अभ्युच्चययुक्तितयोपन्यासे दोषाभावात् । **पूर्वोक्तहेतव** इति । स्वप्रकाशाद्वा ज्ञानपदवाच्यत्वं तद्गुणसारत्वाद्वेत्येवमादय इत्यर्थः । **भाष्ये यथा विज्ञानशब्देन विज्ञानमय** इति । ननु विज्ञानशब्देन विज्ञानमयोक्तौ, तद्गुणसारत्वात्तद्व्यपदेशः प्राज्ञवदिति सूत्रकृता, 'यदेष आकाश आनन्दो न स्यात्, आनन्दो ब्रह्मेति व्यजानात्' इत्यानन्दशब्देन प्राज्ञस्य निर्देशो दृष्टान्तीकृतः । इह तु आनन्दशब्देनानन्दमयस्य निर्देशे विज्ञानशब्दो दृष्टान्तीक्रियत इति तदेतदितरेतराश्रयं स्यात् । इतरेतराश्रयाणि च कार्याणि न प्रकल्पन्ते । यथा नौर्नावि बद्धा नेतरेतरत्राणाय भवतीति — मैवम् । सूत्रकृता तद्गुणसारत्वादिति युक्तिसाम्येनापतति धर्मिपर्यन्तत्वे आनन्दशब्दस्य दृष्टान्तीकरणेऽपि आनन्दशब्दस्य धर्मिपर्यन्तत्वे विज्ञानशब्दस्य सूत्रकृता दृष्टान्तीकृतत्वाभावात्, एकोनसहस्राधिकरणन्यायेन तत्तद्विप्रतिपत्तिदशायां तस्य तस्य दृष्टान्तीकरणे दोषाभावात् । प्राज्ञवदित्यत्र, सत्यं ज्ञानमिति ज्ञानशब्दस्यैव दृष्टान्तत्वसंभवाच्च । **आनन्दानन्दमयशब्दयोरेकविषयत्वेनेत्यर्थ** इति । आनन्दो ब्रह्मेत्यादौ ब्रह्मपदसमानाधिकृतानन्दशब्दस्यानन्दमयपरत्वाभावे, आनन्दं ब्रह्मणो विद्वानित्यादौ आनन्दस्यानन्दं विद्वानिति पर्यवस्येत् । ततश्चानन्वयः स्यादिति भावः । नन्वन्नं ब्रह्मेति व्यजानात्, प्राणो ब्रह्मेति व्यजानादित्यादिपर्यायेष्विव आनन्दो ब्रह्मेत्यत्रापि आनन्दशब्दस्य वस्तुतो ब्रह्मपरत्वाभावेन नानयोरेकविषयत्वम्, आनन्दमयशब्दस्य ब्रह्मपरत्वादानन्दशब्दस्याब्रह्मपरत्वादित्याशङ्क्य, पुनर्भृगोर्वरुणोपसत्त्यभावेनानन्दो ब्रह्मेति व्यजानादित्यत्रानन्दशब्दस्य ब्रह्मपरत्वस्य सर्वाभ्युपेतत्वादानन्दमयब्रह्मत्वस्य समर्थितत्वाच्च एकविषयत्वमुपपन्नमित्याह — **परमात्मत्वं हि पराङ्गीकृतमिति** । ननु अन्यात्, प्राण्यादिति पदाभ्यां सांसारिकमोक्षसुखहेतुत्वोक्तिरनुपपन्ना । एकेनैव पदेनोभयोक्तिसंभवात् इत्यस्वरसादाह — **अथवा अन्यादिति सत्ताहेतुत्वमिति** ।

**पुल्लिङ्गान्तेति**। कारणत्वप्रतिपादके, 'सोऽकामयते' त्यनन्तरवाक्ये पुल्लिङ्गशब्देनानन्दमयस्य परामर्शात्। **रूपणं चाप्यनन्यैरिति**। स्वस्मादनतिरिक्तैरवयवैः शिरःपक्षपुच्छादिरूपणप्रकरणादित्यर्थः। **षष्ठ्यादिश्चांशभावादिति**। समुदायावयवविषयतया तस्य पुच्छमिति षष्ठ्युपपत्तेरित्यर्थः। **निरतिशयनयेति**। निरतिशयानन्दे सदसद्भावशङ्कासंभवादित्यर्थः। **रूपणादिति**। अवयवित्वस्यापि पुच्छत्वस्येव रूपणसंभवादित्यर्थः। **आनुरूप्यादिति**। शोध्यत्वस्य वस्त्वनुरूपत्वादित्यर्थः। **पर्यायत्वादिति**। ब्रह्मात्मानन्दमयशब्दानां पर्यायत्वात् श्लोकगतब्रह्मशब्दस्य तत्परत्वादित्यर्थः। **अनन्यात्मेति**। तस्यैष एव शारीर आत्मेत्यस्येत्यर्थः।

**'यदा ह्येवैष' इत्यादिवाक्यविषयतयेति**। अस्मिन्नानन्दमये प्रतिबोध्यस्य जीवस्य तद्योगम् — अभययोगम्, 'यदा ह्येवैष—एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते, अथ सोऽभयं गतो भवती' ति शास्त्रं शास्तीत्येवं तस्य सूत्रस्य तद्व्याख्यातत्वादिति भावः।

**मन्त्रवर्णं विषयीकुर्वतीति**। 'यो वेद निहितं गुहायां परमे व्योमन्, सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते' त्येतावत्पर्यन्तस्य विषयत्वादित्यर्थः। **तदेव वक्तव्यमिति**। अस्मिन्नस्येति सूत्रे, रसं ह्येवायं लब्ध्वानन्दी भवतीत्येतदेव प्राप्यत्वानन्दहेतुत्वप्रतिपादकं विषयत्वेन वक्तव्यमित्यर्थः।

इत्यानन्दमयाधिकरणम्।

---

## अन्तरधिकरणम् (७)

अन्तस्तद्धर्मोपदेशात् १ १-२१.

**आनन्दमयस्यैवादित्यमण्डलवर्तित्वमुक्तमिति**। ननु 'जीवमुख्यप्राणलिङ्गात्' इति सूत्रे, यश्चासावादित्ये इति वाक्यस्य विग्रहातिदेशकत्वमिति वक्ष्यमाणत्वात् कथमात्मैक्यपरत्वमिति चेन्न — उभयपरत्वस्य तत्रैव समर्थयिष्यमाणत्वाददोषात्। **कर्मकृतत्वं हि लोकप्रसिद्धमिति**। करचरणादिमत्कमनीयदेहस्य तद्भोगोपकरणभूततया तत्कर्मार्जितत्वस्यैव वक्तव्यत्वादिति भावः। इदमुपलक्षणम्।

'रमणीयचरणा रमणीयां योनिमापद्यन्ते' इति श्रुत्या कर्मजन्यतावच्छेदकं शरीरत्वमिति युक्त्यनुगृहीतया शरीरमात्रस्य कर्मजन्यत्वावगमादिति च द्रष्टव्यम्। **विज्ञानमयं प्रति शरीरिण आनन्दमयस्ये**ति। ननु 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इत्यादिवाक्यपर्यालोचनायामेव वक्ष्यमाणाकाशादीन् अन्नमयान्तान् प्रति आत्मत्वमवगम्यत इति आनन्दमयाधिकरणे प्रतिपादिततया आनन्दमयस्यापि करचरणादिमच्छरीरकत्वमवगम्यत इति चेत्—सत्यं तत्रैवानन्दमयाधिकरणे करचरणादिमच्छरीरकत्वमवगतम्। तथापि तस्य, 'अन्योऽन्तर आत्मे'ति ततोऽप्यन्तराणां केषाञ्चित् श्रवणेन सद्वारकत्वकथनादद्वारककरचरणादिमच्छरीरकत्वं कर्मजन्यमेवेति भावः। नन्वेतद्वाक्यस्यानुवादरूपस्य पुरोवादिवाक्यानुसारेणैवार्थनिर्णयो भवतीति किमेतद्वाक्यविषयविचारेणेत्यत आह— **य इति प्रसिद्धवन्निर्देशादि**ति। एतेन– रूपवत्त्वं तु ब्रह्मणोऽपि संभवति, सत्यस्य नीरूपशास्त्रविरोधित्वेऽपि मायामयस्य तदविरोधित्वात्, ब्रह्मणि च रूपस्य 'माया ह्येषा मया सृष्टा यन्मां पश्यसि नारदे'ति वचनानुसारेण मायामयस्यैवाङ्गीकारात्। न च तद्बोधकवचनानामप्रामाण्यप्रसङ्गः। मायाविदर्शितमायादृष्ट्यनुवादवत् प्रामाण्योपपत्तेः। इह च 'हिरण्मयः पुरुषो दृश्यते', 'यन्मां पश्यसी'ति दृष्ट्यनुवादस्य स्पष्टं प्रतीतेरिति परेषां मतमपास्तं वेदितव्यम्; एवंरूपस्य मानान्तराप्राप्तत्वेन श्रुत्येकसमधिगम्यत्वात्।

ननु, 'य एषोऽन्तरादित्य', इत्यत्रादित्यशब्दाभिलप्यजीवाधारतया प्रतिपन्नस्य कथमादित्यशब्दाभिलप्यजीवस्वरूपपूर्वपक्षोत्थितिरित्याशङ्कयाह— **आदित्यशब्द** इति। आदित्यशब्दात्, 'दित्यदित्यादित्ये'ति, 'तस्येद'मित्यर्थे ण्यप्रत्यये, अल्लोपे, 'हलो यमां यमि लोप' इति प्रथमयकारस्य लोपे च आदित्यशब्दो निष्पन्नः। अत आदित्यादिः आदित्यादिबिम्बमध्ये वर्तितुमर्हतीति भावः। **हृदा मनीषा चे**ति। भक्त्या धृत्या चेत्यर्थः। इदं च, 'सर्वत्रप्रसिद्धोपदेशा'दित्यत्र स्पष्टम्। 'न संदृशे तिष्ठति रूपमस्ये'त्यत्र रूपशब्देन विग्रहस्य निर्दिष्टत्वेऽपि, 'न चक्षुषा पश्यति कश्चनैनम्, हृदा मनीषामनसाभिक्लृप्त' इति वाक्ये, अस्येति षष्ठ्यन्तेन निर्दिष्टस्य परमात्मस्वरूपस्यैव एनमिति द्वितीयान्तनिर्दिष्टतया, तस्यैव मनसाभिक्लृप्तत्वरूपमनोग्राह्यत्वं सिद्ध्येदित्यस्वरसादाह — **यदा पश्यः पश्यत** इति। 'न ह्यारोपितं

दृश्यत इति श्रूयत इति, 'ईक्षतिकर्मव्यपदेशात् सः' इत्यत्र ईक्षणस्य तत्त्वविषयत्वमेव वक्तव्यमिति मृषावादिभिरेव समर्थितत्वादिति द्रष्टव्यम् । **सूत्रविहितसमासत्वादिति।** यद्यपि, 'अनेकमन्यपदार्थे', 'षष्ठी' त्यादिसूत्रविहितेषु बहुव्रीहितत्पुरुषादिष्वप्यन्त्येव लक्षणा — तथापि शास्त्रमूललक्षणापेक्षया पुरुषबुद्धिमूललक्षणा दुर्बला । उपपादितं चेदमस्माभिः पाराशर्यवचस्सुधामिति श्लोकव्याख्यानावसरे तत्रैव द्रष्टव्यम्। **उपमानोपमेयवाचकशब्दसद्भावाच्चेति ।** तत्र समभिव्याहृतसामानाधिकरण्यनिर्वाहाय यथातथा वास्तु । इह त्वसति बाधके तथाश्रयणमन्याय्यमिति भावः । **मुख्य एवेति ।** मुख्यतुल्य इत्यर्थः । अभ्युपगन्तुमुचित इति यावत् । **अनन्तरवाक्यस्थेति ।** 'तस्योदिति नामे'त्यनन्तरवाक्ये षष्ठ्यन्ततच्छब्देन परमात्मन एव परामर्शेन उपासकस्य परामर्शासंभवादिति भावः । **अक्षिविद्यायां च य एषोऽक्षिणीति स्थानस्योक्तत्वादिति ।** ननु अन्तरादित्यविद्याप्रकरणाम्नातस्यास्य वाक्यस्य अक्षिविद्यायां स्थानविधायकत्वशङ्काया अप्रसक्तेरप्रसक्तप्रतिषेधः । न च प्रकरणे निवेशासंभवात् अप्रकृतायामक्षिविद्यायां निवेशशङ्का संभवतीति वाच्यम् — तद्वदप्रकृतत्वाविशेषात् विद्यान्तरेऽपि निवेशशङ्का प्रसज्येतेति चेत् — उच्यते — 'हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात् सर्व एव सुवर्णः' इति हिरण्मयविग्रहविशिष्टं प्रस्तुत्य, 'तस्यैतस्य तदेव रूपं यदमुष्य रूपम्' इत्यतिदेशात् अक्षिविद्यायां रूपवत् तत्समभिव्याहृतस्थानस्यापि विधानमस्त्वित्याक्षेपस्य तत्परिहारस्य च संभवादिति द्रष्टव्यम् । **अक्ष्णः स्थानत्वे विहिते सतीति ।**

ननु द्वेधा हि गुणानां भेदकत्वम्, उत्पत्तिशिष्टगुणावरुद्धे गुणान्तरस्य निवेशासंभवात् । यथा, 'सा वैश्वदेव्यामिक्षा । वाजिभ्यो वाजिनम्' इत्यत्रामिक्षावरुद्धे यागे वाजिनस्य निवेशासंभवात् कर्मभेदः; प्राप्ते कर्मण्यनेकगुणविधानासंभवाद्वा; यथा विद्वद्वाक्यविहितपौर्णमास्यमावास्यासंज्ञयोः कर्मणोः, यदाग्नेयोऽष्टाकपाल इति वाक्येन द्रव्यदेवतयोर्विधाने कर्मान्तरत्वं स्यादित्युक्तं पौर्णमास्यधिकरणे । न चेह तदुभयं संभवति । उभयोरपि स्थानयोरुत्पत्तिशिष्टत्वेन वा उत्पन्नशिष्टत्वेन वा विधानसंभवात् विद्याभेदाप्रसक्तेः । अतएव पूर्वतन्त्रे, 'अष्टाकपालनवकपालादीनां

द्रव्याणां युगपदनुपसंहरणीयानामप्येकस्यामपि जातेष्टौ गुणतया विधानमस्तु । ततश्च सर्वेषामपि द्रव्याणां उत्पत्तिशिष्टत्वम् उत्पन्नशिष्टत्वं वा भविष्यती' ति पूर्वपक्षः प्रवर्तित इति चेत् —

अत्र केचित् — 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यत' इत्येतदेव उत्पत्तिवाक्यम् । **दृश्यते**—द्रष्टव्यः योगिभिरित्यर्थः । ततश्चादित्यमण्डलस्य उत्पत्तिशिष्टत्वात् तद्विरुद्धस्थानस्य तत्र निवेशासंभवात् विद्याभेदोऽवश्यं वक्तव्य इत्यत्र तात्पर्यात् । ननु 'य एषोऽन्तरादित्य इति वाक्यस्य उत्पत्तिवाक्यत्वे, उत्पत्तिशिष्टगुणावरुद्धे, 'तस्य यथा कप्यास' मिति वाक्येन सिद्धान्त्यभिमतस्य पुण्डरीकदलामलायताक्षत्वस्य वा, उदिति नाम्नो वा कथं निवेश इति चेन्न — उत्पत्तिशिष्टगुणावरुद्धे तद्विरुद्धगुणान्तरस्य निवेशासंभवेऽपि तदविरोधिनो गुणस्य विधाने अनुपपत्त्यभावात् । नन्वेवम्, 'सर्वत्र प्रसिद्धोपदेशा' दित्यत्र उत्पत्तिशिष्टसार्वात्म्यावरुद्धे मनोमयत्वादिगुणविधानासंभवात् 'सर्वं खल्विद' मिति वाक्यं नोत्पत्तिवाक्यमिति ग्रन्थकारोक्तिविरोधः, तत्राप्युत्पत्तिवाक्यत्वेऽपि विरोधाभावादित्येव परिहारसंभवादिति चेन्न—तद्ग्रन्थस्यापि तदभिप्रायत्वान्न विरोध इति वदन्ति । **वाक्यभेदः स्यादिति** । यद्यपि सिद्धान्तेऽपि गुणविधित्वेन वाक्यभेदोऽस्ति, तथापि —

"प्रधानविधिवाक्यं खल्वङ्गवाक्येन संयुतम् ।
अङ्गप्रधानसंयुक्तां विधत्तेऽपूर्वभावनाम् ॥"

इति न्यायेनाङ्गप्रधानविध्योर्वाक्यैकवाक्यत्वं संभवति । विद्याभेदपक्षे तदपि न संभवतीति भावः । **विधेयत्वं गम्यत इति चेदिति** । ततश्चोत्पत्तिवाक्यश्रुतं अन्तरादित्य इत्येतत् अविवक्षितमिति भावः ।

आशयमविद्वानाह—**उपक्रमविरोध** इति । आशयमुद्घाटयति **उपक्रमेऽप्यादित्यमण्डलस्येति** । **अनुवाद इति चेदिति** । अविवक्षेति चेदित्यर्थः । **रूपातिदेशानुपपत्तिश्चेति** । 'तस्यैतस्य तदेव रूपं यदमुष्य रूप' मित्यतिदेशानुपपत्तिरित्यर्थः । नन्वियमक्षिविद्यैव भवतु, तथापि न रूपातिदेशानुपपत्तिः,

अक्षिस्थानकविद्यात्वाविशेषेऽपि विद्ययोः परस्परभेदसम्भवेनातिदेशसम्भवादित्याशङ्क्य तथा सति परस्पराभेदोऽपि दुर्वार इत्याह — **न केवलं कप्यासवाक्यमात्रस्येति** ।

**हीनोपमाश्रयणायोगाच्चेति** । ननु हीनोपमाया आलङ्कारिकैर्दोषत्वेन परिगणनात् सा त्यज्यते चेत्, सिद्धान्तेऽप्यमङ्गलस्य कप्यासशब्दस्य प्रयोगादश्लीलत्वं स्यात् । तथा अप्रसिद्धार्थत्वात् निहतार्थत्वं च स्यादिति दोषद्वयं सिद्धान्तेऽप्यस्तीति चेन्न— अश्लीलत्वस्य सर्वपक्षसाधारणत्वात् । निहतार्थत्वं तु एतादृशजुगुप्सितार्थस्वीकारापेक्षया ज्याय इति तदेव युक्तमिति भावः । **गानविशेषाविति** । यद्यपि 'गीतिषु सामाख्ये' ति सूत्रोक्तरीत्या साम्नो गीतिरूपत्वेन तदाश्रयभूताया ऋचो गानरूपत्वं नास्ति—तथापि गानशब्देन स्तुतिहेतुत्वमुच्यते । स्तुतिश्च गुणिनिष्ठगुणाभिधानम् । तत्र ऋचां साक्षादेव हेतुत्वम्, साम्नां तु ऋगक्षराभिव्यक्तिद्वारेति विवेकः । परैस्तु— अधिदैवतं ऋचः पृथिव्यन्तरिक्षद्युनक्षत्रादित्यगतशुक्लभारूपत्वं, साम्नश्चाग्निवाय्वाकाशचन्द्रादित्यगतनीलभारूपत्वम्, 'इयमेवर्गग्निस्साम' इत्यादिना प्रतिपन्नम् । तथाध्यात्मं च, 'वागेव ऋक् प्राणस्साम' इत्यादिना वाक्चक्षुश्श्रोत्राक्षिगतशुक्लभारूपत्वमृचः, प्राणच्छायात्ममनःपरःकृष्णरूपत्वं साम्नः प्रतिपन्नम् । एवंभूतऋक्सामयोः गेष्णत्वरूपं पर्वत्वमुच्यते । गेष्णशब्दो हि पर्ववचनः । पर्वस्वेव छन्दोगानां गेष्णशब्दप्रसिद्धेः । ततश्च ऋक्सामात्मकपृथिव्यग्न्यादीनां परमात्मशरीरतया तत्कार्यतया च तत्पर्वत्वमुच्यते । ततश्च यत एवायमुन्नामा, ऋक्सामगेष्णश्च, तस्मादुद्गेष्ण इति वक्तव्ये उद्गीथ इत्युच्यते परोक्षेण परोक्षप्रियत्वाद्देवानामित्यर्थो वर्णितः । तत्र गेष्णशब्दस्य पर्ववचनत्वादपि, गा स्तुतौ इत्यतः, 'गादाभ्यां चे'त्यौणादिकव्युत्पत्त्यनुसारात् गेष्णशब्दस्य गानार्थत्वमेवोचितम् । ऋक्सामशब्दयोरपि प्रसिद्धार्थत्वमेव; न तु पृथिव्यग्न्यादिपरत्वमित्यभिप्रेत्य एवं व्याख्यातमिति द्रष्टव्यम् । **अधिदैवतं देवतायामुपासनमिति** । 'विभक्त्यर्थे यदव्यय' मिति समासे अधिदैवतमित्यस्य देवतायामित्येवार्थः, उपासनमित्येतत्तु प्रकृताभिप्रायेणेति द्रष्टव्यम् । **अमुष्येत्येत**च्छ्रुतिगतं व्याख्येयं पदम् । **विद्याद्वितयमपि सङ्गृहीतमिति** । 'सम्बन्धादेवमन्यत्रापि' इत्यधिकरणे उद्गीथे आदित्यमण्डलस्थपुरुषानुचिन्तनस्याक्षिस्थपुरुषानु-

चिन्तनस्य च एकविद्यात्वस्य परैरभ्युपेतस्य भाष्यकृता निराकरिष्यमाणत्वात् विद्याद्वयमित्युक्तौ नानुपपत्तिरिति द्रष्टव्यम् ।

**चतुर्धासंशय** इति । 'तदर्थमिह पाप्मशब्द' इत्यारभ्येत्यर्थः । 'सर्वेभ्यः पाप्मभ्य उदित इति वाक्ये च संशयद्वयम् । अजायमानादित्यवर्णवाक्ययोश्च संशयद्वयमिति त्रिषु वाक्येषु संशयचतुष्टयं द्रष्टव्यम् । **जन्मनिषेधश्च न कर्ममूलजन्मविषय** इति । नन्वजत्वश्रुतेर्जन्मसामान्याभावविषयत्वं वदतः पूर्वपक्षिणः तस्याः श्रुतेः किं परमात्मा विषय इत्यभिप्रायः, उत जीव इति । नाद्यः, तस्यैवानभ्युपगमात् । न द्वितीयः — जीवस्य जन्ममात्रशून्यत्वाभावात् । तस्मादेतच्छ्रुतिविचारस्य तदर्थचिन्ताकोटावन्वयोऽनुपपन्नः । किञ्च सर्वपाप्मोदितत्वस्य सर्वकर्मात्यन्ताभावरूपत्वे सिद्धे, तादृशे चात्मनि प्रतिपन्नस्य शरीरस्य 'सम्भवाम्यात्ममायया' इति प्रमाणानुसारेण कर्मातिरिक्तहेतुकत्वं सिध्यति ; ततश्चाजायमानत्वश्रुतीनां कर्मकृतशरीराभावपरत्वं सिध्यतीति तस्य; फलकोटिपर्यवसन्नस्याजत्वादिश्रुत्यर्थस्य प्रथमोपपादककोटौ निवेशमभ्युपेत्य चतुर्धा संशयवर्णनमहृद्यमिति चेन्न — अजायमानत्वश्रुतेर्जीवस्वरूपानादित्वपरत्वमिति पूर्वपक्षिणोऽभिप्रायसम्भवात् । अत एवास्यापि वाक्यस्य विचार्यत्वात् तदर्थचिन्ताकोटौ निवेशो युज्यत इति न पूर्वोक्तदोष इति ध्येयम् । भाष्ये **कर्मसम्बन्धरहितस्य मोक्षस्येति** । अत्र कर्मसम्बन्धशब्दः कर्मफलभूतप्रियाप्रियसम्बन्धपरो द्रष्टव्यः । 'न ह वै सशरीरस्य सतः प्रियाप्रिययोः' इत्युदाहरिष्यमाणश्रुत्यर्थानुगुण्यात् । **अशरीरतया प्राप्यत्वेनोच्यत इत्यर्थ** इति । शरीरराहित्यरूपकारणेन प्रसाध्य इत्यर्थः । **ज्ञानशक्त्यादिकं लोककामेशत्वादिकं चेति** । 'ये चामुष्मात्पराञ्चो लोकास्तेषां चेष्टे देवकामानां चे'ति, 'ये चैतस्मादर्वाञ्चो लोकास्तेषां चेष्टे मनुष्यकामानां चे'ति वाक्यप्रतिपन्नं सर्वलोककामेशत्वं तदाक्षिप्तं ज्ञानशक्त्यादिकं चेत्यर्थः ।

**जीवेष्वसम्भवन्नयं धर्म** इति । अनेन सर्वपापोदितत्वरूपं ब्रह्मलिङ्गं सशरीरत्वरूपजीवलिङ्गापेक्षया चरमश्रुतमप्यनन्यथासिद्धत्वात् प्रबलमिति न्याय उपन्यस्तो भवति । अत्र सर्वपापोदितत्वस्य 'उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद' इति सर्वपापोदितत्वलक्षणफलरूपतात्पर्यलिङ्गोपेतत्वात् अतादृशात् सशरीरत्वरूपजीवलिङ्गादाधिक्यं द्रष्टव्यम् । **वाक्यकारवच** इति । ननु, 'न जरा न मृत्युर्न

शोको न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्ते ' इति प्रयोगानुसारेण जन्मजरादीनामपि पापशब्दवाच्यत्वं स्यात् । ततश्च ' अपहतपाप्मे ' त्यनेनैव जरादीनां व्युदस्तत्वात् ' विजरो विमृत्यु ' रित्यादिना पुनर्व्युदासवैफल्यं स्यादिति चेन्न— ' अपहतपाप्मे ' ति वाक्ये पाप्मशब्दस्य गोबलीवर्दन्यायेन जरादिव्यतिरिक्तपापपरत्वात् । न च शोकादिषु पाप्मशब्दस्यामुख्यत्वेऽपि सुकृतदुष्कृतयोः प्रवृत्तिनिमित्तसम्भवान्न मुख्यत्वं त्याज्यमिति लघुसिद्धान्तटीकाविरोध इति वाच्यम् — तस्याभ्युपेत्यवादत्वेनादोषत्वात् । केचित्तु तद्विरोधादिदमेवान्यपरतया व्याख्येयमिति वदन्ति । ननु पाप्मशब्दस्य सुकृतसाधारणपरत्वसमर्थनं मुधा । पाप्मशब्दस्य लोकप्रसिद्ध्यनुरोधेन दुष्कृतमात्रपरत्वे पापवश्यतागन्धराहित्यरूपस्य तस्य जीवेऽसत्त्वेन जीवव्यावृत्तिः सिध्यतीति चेत् — सत्यम् । अथापि वस्तुस्थित्यनुसारात् सुकृतसाधारण्यमुपपादितम् । **अपहतपाप्मशब्दोऽसङ्कोचा**दिति । ' सर्वे पाप्मानोऽतो निवर्तन्ते अपहतपाप्मा ह्येष ब्रह्मलोक ' इति पापनिवर्तकत्वस्यापहतपाप्मशब्दप्रवृत्तिनिमित्तया श्रुतावेवाविष्करणादिति द्रष्टव्यम् । नन्वपहतपाप्मशब्दो यथा तथा वास्तु । प्रकृतस्तु पाप्मोदितशब्दो न तादृशार्थकः प्रमाणाभावादिति चेन्न— अत्रापि ' उदेति हवै सर्वेभ्यः पाप्मभ्यो य एवं वेद ' इति परपापनिवर्तकत्वप्रतीत्यविशेषादिति ध्येयम् । केचित्तु — अपहतपाप्मशब्दोऽसङ्कोचेन स्वस्मिन् परत्र च पापघातकत्वं वदतीति चेत्, जीवस्य कदापीदृक्त्वाभावेन परिशुद्धात्मविषयस्यापहतपाप्मशब्दस्याप्ययमेवार्थ इत्युत्तरग्रन्थविरोधप्रसङ्गात्, कर्मवश्यतागन्धरहितत्वमित्यर्थ इति भाष्यविरोधाच्चेदमतिवादमात्रमिति वदन्ति । नन्वेवं नित्याविर्भूतापहतपाप्मत्वादिगुणानां नित्यमुक्तानामपि अन्तरादित्यविद्याविषयत्वप्रसङ्ग इति चेन्न — अनन्याधीनमपहतपाप्मत्वमिह विवक्षितम् । तच्च न नित्येषु सम्भवति । तेषामपहतपाप्मत्वस्य भगवत्सङ्कल्पाधीनत्वादिति भावः । **हिंसारूपधात्वर्थासम्भवा**दिति । मरणोद्देश्यकमरणानुकूलव्यापारस्यैव हिंसात्वादिति भावः । **विषशब्दस्यैवे**ति । यद्यपि विषशब्दो विषत्वजातिवचनो न सप्रतियोगिकः । ' न हि गौः किञ्चित्प्रत्यगौः ' इति न्यायेन कस्यचिद्वस्तुनः कञ्चित्प्रति विषत्वम्, कञ्चित्प्रति न विषत्वमिति हि न सुवचम् — तथापि यस्य यन्मरणसाधनम्, तस्य तद्विषमिति कृत्वेदमुक्तमिति द्रष्टव्यम् ।

तत्पूर्वकं स्वरूपोपाधिकमित्यत्र तत्पूर्वकमित्येतत् हेतुगर्भविशेषणमित्यभिप्रयन्नाह—**अपहतपाप्मत्वपूर्वकत्वा**दिति । **तत्पूर्वकसर्वभूते**ति । यद्यपि 'सर्वभूतान्तरात्मापहतपाप्मा' इत्यपहतपाप्मत्वमेव सर्वभूतान्तरात्मत्वपूर्वकं निर्दिष्टम्, न त्वपहतपाप्मत्वपूर्वकं सर्वभूतान्तरात्मत्वम्—तथापि अपहतपाप्मत्वसहपठितमित्यत्र तात्पर्यम्। ननु परभाष्ये, 'ये चामुष्मात्पराञ्चो लोकास्तेषां चेष्टे देवकामानां चे' ति आदित्यान्तर्वर्तिनः परिच्छिन्नैश्वर्यश्रवणं 'ये चैतस्मादर्वाञ्चो लोकास्तेषां चेष्टे मनुष्यकामानां च' इत्यक्ष्यन्तर्वर्तिनश्च परिच्छिन्नैश्वर्यश्रवणं पूर्वपक्षहेतुतया परैराशङ्क्य परिहृतम्। तद्भगवता भाष्यकृता किमिति नादृतमित्याशङ्क्य तत् सुनिरसतया नोपन्यस्तमित्यभिप्रयन्नाह — **अत एवे**ति । निरुपाधिकसत्यसङ्कल्पत्वादेवेत्यर्थः । नन्वादित्यपुरुषः केषाञ्चिदीष्टे, अक्षिपुरुषः केषाञ्चिदिति निर्देशभेदादैश्वर्यमर्यादासिद्धिरित्याशङ्क्याह— **तदवच्छेद** इति । **ऐच्छतयान्यथासिद्ध** इति । ऊर्ध्वलोकदेवकामेशितृत्वेच्छाया-मूर्ध्वलोकदेवकामेशितृतयोपासनं कर्तव्यतया चोद्यते । नैतावता लोकान्तरकामान्तरेशितृत्वं परिसंख्यायत इति भावः । **सत्त्व**मिति ।

'सत्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलं च रजः ।
गुरु वरणकमेव तमः प्रदीपवच्चार्थतो वृत्तिः ॥'

इति श्लोकस्यायमर्थः—सत्त्वं गुणः लघु — वस्तुन उद्गमनहेतुर्धर्मो लाघवं गौरवप्रतिद्वन्द्वी धर्मः, येन ह्यग्नेरूर्ध्वज्वलनं वायोस्तिर्यग्गमनम्—प्रकाशकं चेष्टम्। सांख्याचार्यैरिति शेषः । रजस्तु चलम्। त्रैगुण्यद्रव्यं चलयति ; प्रवर्तकम्। उपष्टम्भकम्। सत्वस्येति शेषः। सत्त्वं हि स्वयमक्रियत्वात् स्वकार्यं प्रत्यवसीदति, तद्रजसा उपष्टभ्यते—प्रवृत्त्युन्मुखतया क्रियते। ततश्च रजसोपष्टम्भात्सर्वत्र प्रवृत्तौ, गुरुणा आवृण्वता च तमसा प्रतिबन्धात् क्वचिदेव प्रवृत्तिर्न सर्वत्र । एवं परस्परविरुद्धकार्याणामपि सत्त्वरजस्तमसामेकप्रयोजने प्रवृत्तिरुपपद्यते । यथा वर्तितैलानलानां परस्परविरुद्धानामपि प्रकाशलक्षणकार्यकरत्वम्, तथेति । ततश्च परस्परविरोधिस्वभावतया ज्ञानावारकतया च हेतुत्वं प्रतीयत इति भावः । केचित्तु — 'प्रीत्यप्रीतिविषादात्मका गुणाः प्रकाशप्रवृत्तिनियमार्थाः' इति सत्त्वरजस्तमसां सुखदुःखमोहात्मकत्वप्रतिपादकपूर्वश्लोकसहितस्यास्य श्लोकस्य हेयतासूचकत्वमित्याहुः ।

**तच्च जानात्येवेति** । निरतिशयानन्दस्वरूपं सर्वज्ञत्वाज्जानात्येवेत्यर्थः । **अलिङ्गञ्चेति** । अप्रतर्क्यमित्यर्थः । **स्वभावसिद्धिरिति** । स्वप्रकाशेत्यर्थः । इन्द्रियाकारा — नयनगोलकादियुक्ता । अङ्गप्रत्यङ्गव्यञ्जनवती — हस्तपादतदवयवपुंस्त्वादिव्यञ्जकश्मश्र्वादिमतीत्यर्थः । **मोहाद्यस्पृष्टत्वमभिप्रयन्नाहेति** । इयं च पदावतारिका, पूर्वोक्ता तु वाक्यावतारिकेति भेदः । **जीवानुप्रवेशेष्विति** । आवेशावतारभूतेषु परशुरामादिष्वित्यर्थः । **प्रधानव्यावृत्त्यर्थ** इति । ब्रह्मशब्दस्य प्रधानादिसाधारण्यात् ब्रह्मशब्दसमानाधिकृतः परशब्दः प्रधानव्यावृत्त्यर्थ इत्यर्थः । **परब्रह्मशब्द** इति । परब्रह्मशब्दानुप्रविष्टः परशब्द इत्यर्थः । **नारायणशब्दो घटक** इति । सामान्यविशेषयोरेकविषयत्वघटक इत्यर्थः । ननु प्राकृतहेयदेहसम्बन्धं प्रतिषिध्य कल्याणरूपं वदतीत्यस्यैव प्रकृतोपयुक्ततया हेयगुणान् प्रतिषिध्य कल्याणगुणान् वदतीत्युक्तिः प्रकृतानुपयुक्तेत्याशङ्क्याह — **गुणविभागकथन**मिति । **वादिविवादशमनार्थ**मिति । गुणसामान्यनिषेध इति वादिविवादशान्तय इत्यर्थः । ननु तमःपारवर्तित्वात् कथमप्राकृतत्वसिद्धिरित्यत्राह — **अतिसूक्ष्मप्रकृतिर्हीति** । **अस्तातिप्रत्ययस्येति** । यद्यपि, दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिरिति अस्तातिप्रत्ययस्य प्रथमान्तादपि विधानमस्ति — तथापि प्रातिपदिकानधिकार्थतया वैयर्थ्यं स्यादिति भावः । **आदित्यवर्णतोक्तेश्चेति** । न च स्वप्रकाशत्वं तदर्थ इति वाच्यम्; तत्र तस्य शब्दस्यास्वरसत्वादिति भावः । **संस्थानशब्दश्च विवृणोतीति** । देवमनुष्यादिसंस्थानशब्देनेति भावः । **स्वाभाविक इत्युक्त**मिति । अकर्मोपाधिक इत्यर्थः ।

## भेदव्यपदेशाच्चान्यः १-१-२२.

**शरीरसम्बन्धावच्छिन्नैश्वर्येति** । शरीरसम्बन्धावच्छिन्नैश्वर्यस्य च श्रवणेन कर्मवश्यत्वस्य सिद्धत्वादित्यर्थः । **श्रुत्यन्तरैकार्थ्येति** । 'स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयान्', 'न कर्मणा वर्धते नो कनीयान्' इत्यादिश्रुत्यन्तरैकार्थ्यं विवक्षितम् । **हेतुतः फलतो द्रव्यतश्चेति** । भगवतो हि विग्र-

ह्स्वीकारे भगवदिच्छैव हेतुः; उपासकानुग्रहः फलम्; शुद्धसत्वं द्रव्यमिति भावः। **पेटिकाभेदेति**। साधारणासाधारणशब्दविषयतया पेटिकाभेद इत्यभिप्रायः।

इत्यन्तरधिकरणम्

---

## आकाशाधिकरणम् (८.)

—:※:—

आकाशस्तल्लिङ्गात् १-१-२३.

**गतिरित्यादिवाक्यमुपात्तमिति**। ततश्च गतित्वमेव विधेयमिति भावः॥ **गतिः — प्राप्यमिति**। आकाशः परायणमित्युत्तरत्र वक्ष्यमाणत्वादिति भावः। **परमात्मविषयत्वासम्प्रतिपत्तेरिति** — यद्यप्येकोनसहस्राधिकरणन्यायेन परमात्मविषयत्वसम्प्रतिपत्तिः सुवचा। किञ्च "यदेष आकाश आनन्दो न स्यात्" इत्यादौ पूर्वाधिकरण एव प्रतिपादितपरब्रह्मप्रतिपादकताकानन्दवल्लीगताकाशशब्दस्य ब्रह्मणि प्रयोगः सिद्धः — तथापि कचित् बाधकवशात् अमुख्यवृत्त्या प्रयोगदर्शनमात्रस्य संशयहेतुतयोपन्यासो न युक्त इत्यत्र तात्पर्यात्। **कथञ्चिन्नेयत्वेनेति**। इदमुपलक्षणम्, आकाशस्य जगत्कारणत्वे ज्यायस्त्वादिकं मुख्यमपि सम्भवतीत्यपि पूर्वपक्षतात्पर्यं द्रष्टव्यम्। **रूढिशक्तेः स्थितत्वादिति**। ननु रूढिशक्तेरेव, 'आत्मन आकाशः सम्भूत' इत्यत्र आत्मशब्दस्य स्वरूपपरत्वसम्पादकतया तस्या एव प्रथमोपपादककोटौ निवेशनीयतया तस्याः कथमुपपाद्यकोटौ निवेश इति चेत् — सत्यम्, रूढिशक्तिरेव मूलयुक्तिः। अथापि तस्य निरपवादत्वे आत्मन आकाश इत्यत्रात्मशब्दस्य स्वरूपपरत्वं ज्यायस्त्वादिगुणानां कथञ्चिन्नेयत्वञ्चोपजीव्यम्। अत एव स्थितत्वादित्युक्तम्। निरपवादतया स्थितत्वादिति हि तदर्थः। न चैवं रूढिशक्तौ स्थितायां ज्यायस्त्वादीनामन्यथानयनम्, तदन्यथानयने च रूढिशक्तिस्थितिरिति अन्योन्याश्रय इति शंक्यम् — आत्मशब्दस्य ज्यायस्त्वादीनां सम्भवदन्यथासिद्धिकतया रूढिशक्तेः स्थितत्वादाकाशशब्दः प्रसिद्धाकाशपर इति फलफलिभावकथने विरोधाभावात्। **तदनुरोधादैक्यहानमिति**। धर्मिग्राहकप्रमाणविरोधाभावादिति भावः। ननु

विशेषप्रतीतेराकाश इति निश्चीयत इति भाष्यमनुपपन्नम्, विशेषप्रतीतिनिश्चययोरभेदेन हेतुहेतुमद्भावासम्भवादित्याशंक्याह — **एतद्वाक्यविशेषेणेति । आकाश एवेति निश्चित इत्यर्थ** इति । सर्वकारणवाक्योपसंहारेणेति शेषः । **नानार्थसाधारणरूढिशक्तेरिति** । यत्र नानारूढिसमावेशः, तत्र रूढीनां परस्परकलहे योगस्य लब्धात्मकत्वादिति भावः । इदञ्च जगद्वाचित्वादित्यधिकरणे स्पष्टयिष्यते ।

**अनूदितस्य हेतुतया विवक्षितत्वादिति** — "स एष सर्वेभ्यः पाप्मभ्य उदितः" इति पूर्वाधिकरणविषयवाक्ये सर्वपाप्मोदितत्वस्य मानान्तराप्राप्तत्वेन उपदेशत्वमेव युज्यते, न तु लिङ्गत्वम्, मानान्तरप्राप्तसाध्यसम्बन्धत्वाभावात् । न च तद्धर्मोपदेशादिति हेतुत्वोपन्यासबलादेव मानान्तराप्रसिद्धस्यापि व्याप्तिराक्षेप्तुं शक्या, यथा — "चतुर्गृहीतान्याज्यानि भवन्ति; न ह्यत्रानुयाजा इज्यन्ते" इत्यत्र अनुयाजाभावस्य चतुर्गृहीताभावव्याप्तेः पूर्वाप्रसिद्धत्वेऽपि हिशब्दश्रुतिसमर्पितहेतुत्वबलात् व्याप्तिपरिकल्पनं दृष्टमिति वाच्यम् — श्रुतौ तथा सम्भवेऽपि न्यायनिबन्धनात्मकेऽस्मिन् शास्त्रे लिङ्गिसंम्बन्धित्वेन प्रमाणान्तरोपलब्धमेव लिङ्गतयोपन्यासार्हमिति । वस्तुतस्तु "अपहतपाप्मा दिव्यो देव एको नारायणः" इति अपहतपाप्मत्वस्यापि वाक्यान्तरे ब्रह्मलिङ्गत्वेनावगमात् अन्तस्तल्लिङ्गोपदेशादिति सूत्रणेऽपि न दोषः । तथापि स्थितस्य गतिश्चिन्तनीयेति तथोक्तमिति द्रष्टव्यम् । **निमित्तान्तराश्रवणादिति** । इदमुपलक्षणम् — "आकाशादेव समुत्पद्यन्त" इति अवधारणश्रवणादित्यपि द्रष्टव्यम् । **वाक्यान्तरैकार्थ्याच्चेति** । "ब्रह्म वनं ब्रह्म स वृक्ष आसीत्—ब्रह्माध्यतिष्ठत् भुवनानि धारयन्" इत्यादिनिमित्तोपादानैक्यप्रतिपादकवाक्यान्तरैकार्थ्यादिति भावः। **स्वरूपबहिर्भूतत्वादिति**। आनन्दस्वरूपबहिर्भूतत्वादित्यर्थः । स्वयमा(मना?)नन्दत्वादिति यावत् । **सकलपुरुषार्थ**पदं साक्षात्पदाध्याहारेण षष्ठीतत्पुरुषतया व्याचष्टे **सकलानां जीवानामिति** । निषादस्थपत्यधिकरणन्यायेन कर्मधारयस्याभ्यर्हितत्वमभिप्रेत्य, **हेयस्येत्यनेनैव** प्रतिपिपादयिषितमोक्षविरोधित्वस्य सिद्धत्वात् सकलपुरुषार्थविरोधिन इत्येतत् तदितरपुरुषार्थत्रयविरोधित्वपरतया व्याचष्टे — **यद्वा मोक्षेति** । निषिद्धविषयप्रावण्यजननेनार्थकामरूप-

पुरुषार्थविरोधित्वाभावादन्यथा व्याचष्टे – **सर्वविधसुखस्य मोक्षेऽन्तर्भावादिति** । सकलपुरुषार्थशब्दस्यौपचारिकत्वादन्यथा व्याचष्टे – **यद्वा कारणावस्थायामिति** ।

**प्रकाशकत्वात्, आकाशते, आकाशयतीति** त्रीण्यपि व्याख्येयपदानि । आकाशते, आकाशयतीत्येतद्भाष्यं प्रवृत्तिनिमित्तान्तरकथनपरतया व्याख्याय **प्रकाशकत्वादिति** भाष्यविवरणतया व्याचष्टे—**यद्वा प्रकाशकत्वादिति णिजन्तत्वेनेति**। परस्मै सर्वार्थप्रकाशकत्वं वा, स्वस्मै प्रकाशमानत्वं वा, स्वस्मैइतरप्रकाशकत्वं वा अन्यतममाकाशशब्दप्रतिपाद्यमिति प्रथमपक्षः । द्वितीये तु ण्यन्तादण्यन्ताच्चाङ्पूर्वात् काशतेः, सर्वधातुभ्यो ऽज्वक्तव्य इत्युत्सृष्टेऽच्प्रत्यये तन्त्रावृत्त्येकशेषाणामन्यतमेन रूपसिद्धिरिति भावः । **रूढ्यपरित्यागेनेति** – यद्यपि – " परविद्यासु जीवोक्तिः निरुक्त्यादेः पराश्रया । तल्लिङ्गानन्यथासिद्धौ तद्विशिष्टावलम्बिनी " ति जीवमुख्यप्राणलिङ्गादिति सूत्रोक्तन्यायेन अनन्यथासिद्धलिङ्गस्थले आकाशादिशब्दस्य तच्छरीरकपरमात्मार्थकत्वाश्रयणेऽपि अस्मिन् विषयवाक्ये भूताकाशानन्यथासिद्धलिङ्गानुपलम्भेन तदर्थकत्वाश्रयणमन्याय्यम् । किञ्च भूताकाशशरीरकात् ब्रह्मणः सकलभूतोत्पत्त्यभावेन, " सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्त " इत्यपि नोपपद्यते — । तथाऽपि — मार्गान्तरसम्भावनाप्रदर्शनमात्रमिति द्रष्टव्यम् । **अनुवदिष्यमाणत्वाच्चेति** । " सर्वत्र प्रसिद्धोपदेशा"दित्यधिकरणे आकाशात्मपदव्याख्यानावसरे, " आकाशस्यात्ममूत इति वा आकाशात्मा । स्वयं च प्रकाशते, अन्यांश्च प्रकाशयती'ति वा आकाशात्मे"ति वक्ष्यमाणत्वादिति भावः । **विलम्बद्वयवत्त्वादुपेक्षितमिति** । आकाशशब्देन तत्कारणाव्याकृतलक्षणायामेको विलम्बः, तेनाव्याकृतशरीरकपरमात्मनो लक्षणायामन्यो विलम्ब इति विलम्बद्वयवत्त्वमिति भावः । **विशेषसमर्पणक्षमेणापीति** छेदः ।

ननु अनुवादसारूप्यमात्रम्, " उपरि हि देवेभ्यः ", " एको ह वै नारायण " इत्यादिवाक्यसाधारणम्, अतस्तद्वैषम्यमप्रयोजकम् । अयोग्यार्थत्वं परमवशिष्यते । तदपि न सम्भवति, अचेतनस्य चेतनमिश्रसकलजगत्कारणत्वासम्भववत् परमात्मनोऽप्यपरिणामिनश्चेतनस्याचेतनमिश्रचेतनोपादानत्वासम्भवात् । " न विलक्षणत्वात् " इति न्यायेन परिहारस्योभयत्र समत्वाच्च । श्रुत्येकसमधिगम्ये वस्तुनि यथाश्रुति

प्रतिपत्तव्यत्वात्, "सन्मूला" इत्यादिना सर्वेषां चेतनाचेतनानां तदाधेयविशेषत्वेन तच्छरीरत्वप्रतिपादनात् ब्रह्मकारणवादे विशेषणद्वारा परिणामवत् आकाशकारणत्ववादेऽपि चेतनाचेतनानां भूताकाशापृथक्सिद्धविशेषणत्वेन ईक्षणादीनामपि चेतनरूपविशेषणद्वारा भूताकाशेऽपि सम्भवात्, इतरासम्भावितसकलजगत्कारणत्वानन्याधीनसार्वज्ञ्यादीनां क्वचिदपि चेतनान्तरे अदृष्टचराणां कस्मिंश्चित् नारायणशब्दिते चेतनविशेषे श्रुतिवशादभ्युपगमवत् भूताकाशेऽप्यचेतनान्तरादृष्टसकलजगत्कारणत्वाभ्युपगमे बाधकाभावादिति चेन्न — अचेतनस्य चेतनशरीरत्वसम्भवेनाचेतनद्वारा चेतनस्य परिणामोपपत्त्या उपादानत्वसम्भवेऽपि चेतनस्याचेतनशरीरत्वासम्भवेन चेतनद्वारा ईक्षणादेरचेतने उपपादयितुमशक्यतया अचेतनस्य, 'आकाशादेव समुत्पद्यन्त' इति प्रतिपादितस्याभिन्ननिमित्तोपादानत्वस्यासम्भवेनायोग्यत्वादिति भावः।

**उपक्रमवशादन्यपरत्वं स्फुटमिति** । गतिशब्दस्य प्राप्यवचनत्वेनापुरुषार्थस्याचेतनस्य प्राप्यत्वासम्भवेन चेतनपरत्वं स्फुटमिति भावः। **केचित्तु** स्वर्गादीनामचेतनानां सामादिगतित्वस्य प्रागुपन्यस्ततया गतित्वस्य चेतनैकान्तत्वाभावं मन्यमानाः, "अस्य लोकस्य का गतिः" इति सर्वलोकगतेरेव पृष्टतया सर्वलोकगतित्वरूपलिङ्गस्य प्रक्रमस्थतया आकाशश्रुत्यपेक्षया प्राबल्यमिति भाव इति वदन्ति। ननु "अस्य लोकस्य का गति" रिति पृथिवीलोकविषयत्वे प्रतीयमाने कथमस्य सर्वकारणप्रश्नरूपत्वम्, येनोपक्रम एव ब्रह्मपरः स्यादिति चेन्न— "त्रयो होद्गीथे कुशला बभूवुश्शिलकश्शालावत्यश्चैकितायनो दाल्भ्यः प्रवाहणो जैवलिरिति। ते होचुरुद्गीथे वै कुशला स्मः; हन्तोद्गीथे कथां वदाम" इति दाल्भ्यशालावत्यजैवलिभिरुपक्षिप्तायां कथायां सामगतिपरम्पराविश्रान्तिभूमित्वेन दाल्भ्येनोपक्षिप्तं स्वर्गलोकं ज्योतिश्चक्रलग्नत्वेन बम्भ्रम्यमाणतया अप्रतिष्ठितत्वेन, "अप्रतिष्ठितं वै किल ते दाल्भ्य साम" इति दूषयित्वा सामगतिपरम्पराविश्रान्तिभूमित्वेन निश्चलं पृथिवीलोकमुपक्षिप्तवतः, "अन्तवद्वै किल ते शालावत्य साम" इति अन्तवत्याः पृथिव्याः सामगतिविश्रान्तिभूमित्वे साम्नोऽन्तवत्त्वं स्यादिति जैवलिना दूषितस्वपक्षतया शिष्यभावं प्राप्तस्य शालावत्यस्य जैवलिं प्रति प्रश्नोऽयम्। अत्र हि प्रष्टुश्शालावत्यस्यायमाशयः—मदुपक्षिप्तं पृथिवीलोकमन्तवत्त्वेन दूषितवता जैवलिनाऽनन्तं वस्तु प्रतिपि-

पादयिषितम्, तस्य चानन्त्यं सकलजगत्कारणत्व एव सिद्ध्यति। अतस्सर्वजगत्कारणमेव प्रष्टव्यमिति। ततश्च तदभिप्रायेणैव, अस्य लोकस्य का गतिरिति पप्रच्छेति वक्तुमुचितम्। ततश्चोपक्रम एव सर्वकारणत्वस्य ब्रह्मलिङ्गस्य प्रतिपादनात् सर्वविषयत्वं सिद्धम्। न च लिङ्गात् श्रुतिबाधः पूर्वतन्त्रे क्वापि नोक्त इति वाच्यम्, "हस्तेनावद्यति, स्रुवेणावद्यति, स्वधितिनावद्यती" त्यादौ हस्तस्रुवस्वधितीनामवदानसामान्यसाधनत्वश्रवणेऽपि हस्तादिसामर्थ्यरूपानन्यथासिद्धलिङ्गबलेन सङ्कोचसहिष्णूनामवद्यतिश्रुतीनां पुरोडाशादिकठिनद्रव्याज्यादिद्रवद्रव्यमांसावदानविषयतया सङ्कोचरूपबाधस्याङ्गीकृतत्वात्। "कृष्णलं श्रपयेत्" इत्यत्र कृष्णलेषु विक्लेदनफलकव्यापारासम्भवेन अधिश्रयणादीनामुष्णीकरणसामर्थ्यदर्शनेन मुख्यार्थबाधेन उष्णीकरणलक्षणा समाश्रिता। लोकेऽपि, "अग्निरधीते", "गङ्गायां घोषः" इत्यादौ अध्येतृत्वघोषाधिकरणत्वरूपलिङ्गेनाग्निगङ्गापदश्रुत्योः बाध आश्रितः। तस्मादनन्यथासिद्धप्रतिपिपादयिषितसकलकारणत्वानन्तत्वपरायणत्वादिलिङ्गविरोधे अभ्यस्ताया अपि श्रुतेर्बाधो युक्त एव। न चैषां धर्माणां प्रतिपिपादयिषितत्वे किं मानमिति वाच्यम् — परपक्षमन्तवत्त्वेन दूषितवतो जैवलेरनन्तत्वे तात्पर्यस्यावश्यम्भावात् तदुपपादकत्वेन जगत्कारणत्वादिष्वपि तात्पर्यकल्पनस्यावश्यम्भावादिति।

इति आकाशाधिकरणम्।

---

## प्राणाधिकरणम् (९)

**अत एव प्राणः १-१-२४.**

**प्राणमेवाभिसंविशन्तीति**। प्राणे लीयन्त इत्यर्थः। **प्राणमभ्युज्जिहते** — प्राणादुद्गच्छन्तीत्यर्थः। **प्रस्तावमन्वायत्ता**। प्रस्तावभक्तिमनुगतेत्यर्थः। **आत्मसत्ता न लभ्येतेत्यर्थ इति**—अन्धत्वबधिरत्वादौ हि सति आत्मसत्ता लभ्येतापि। मूर्धपाते तु आत्मसत्तालाभोऽपि नास्तीति फलितार्थकथनमिदम्। न तु शब्दार्थकथनं शब्दस्य अतदर्थकत्वात्; यथाश्रुते अनुपपत्त्यभावाच्च। न च देवतापरिज्ञानमन्तरेण प्रस्ता-

वादिषु प्रवर्तमानानामपि मूर्धपाता सम्भवात् (दर्शनात्) यथाश्रुतार्थग्रहणासम्भवेन तथा व्याख्यातमिति वाच्यम् – 'तथोक्तस्य मये' त्युत्तरवाक्ये "मूर्धा ते व्यपतिष्यत्" इत्युक्त्यनन्तरमपरिज्ञानेन प्रस्ताव एव मूर्धपातस्य प्रदर्श्यमानतया तत्र बाधकानुपलम्भादिति द्रष्टव्यम् । **प्रत्युदाहरणमिति** – प्रतिवाक्यमित्यर्थः । **प्रवृत्तिहेतुभूतज्ञानचिकीर्षे च** इत्यस्यानन्तरम् उच्येते इति विपरिणामेनानुषङ्गः । श्रौतस्याप्यादिशब्दग्राह्यत्वे सम्भवति तत्त्यागोऽनुचित इत्यभिप्रेत्याह – **यद्वा यदा वै पुरुष** इति । **प्रकरणमात्रस्य पूर्वपक्षावलम्बनत्वेनेति** संनिधिलक्षणाब्रह्मप्रायपाठमात्रेणेत्यर्थः । ततश्च भाष्योक्तरीत्या ब्रह्मलिङ्गान्यथासिद्धिरेव पूर्वपक्षहेतुः । तत्र परोक्तः प्रायपाठोऽनुग्राहकोऽस्त्विति भावः । **बुद्धावनारोहा**दिति छेदः ।

ननु "प्राण इति होवाच सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते । सैषा देवता प्रस्तावमन्वायत्ता", "आदित्य इति होवाच सर्वाणि ह वा इमानि भूतान्यादित्यमुच्चैस्सन्तं गायन्ति सैषा देवता उद्गीथमन्वायत्ता", "अन्नमिति होवाच सर्वाणि ह वा इमानि भूतान्यन्नमेव प्रतिहरमाणानि जीवन्ति सैषा देवता प्रतिहारमन्वायत्ते"ति प्रस्तावोद्गीथप्रतिहारभक्त्यनुगतत्वेन देवतात्वेन च निर्दिष्टेषु प्राणादित्यान्नेषु प्राणस्यैव परमात्मत्वम्; आदित्यान्नयोस्तु न तथात्वमित्यत्र किं विनिगमकम्? चेतनवाचिदेवताशब्दस्त्रिष्वपि समानः, प्राणवाक्यशेषे प्रसिद्धप्राणासम्भावितासङ्कुचितसर्वभूतसंवेशनोद्गमनाधारत्वस्य श्रवणवत् आदित्यान्नवाक्यशेषयोरप्यसङ्कुचितसर्वभूतगेयत्वस्य सर्वभूतोपजीव्यत्वस्य च प्रसिद्धान्नादित्ययोरसम्भावितस्य श्रवणमविशिष्टम् । यदि च आदित्यवाक्ये सर्वभूतशब्द आदित्यगानयोग्यचेतनविशेषपरतया, अन्नवाक्यशेषे च अन्नोपजीवनयोग्यचेतनविशेषपरतया च सङ्कोच्यते । चेतनवाचिदेवताशब्दश्च "अभिमानिव्यपदेशस्तु विशेषानुगतिभ्यां" इति नविलक्षणत्वादित्यधिकरणगुणसूत्रोक्तन्यायेनाभिमानिदेवतापरतया च योज्यते–तर्हि प्राणेऽपि तथाऽस्तु; विशेषाभावादिति चेत्–उच्यते । प्राणशब्दस्य "प्राणबन्धनं हि सोम्य! मनः", "प्राणस्य प्राणम्" इत्यादिषु परमात्मन्यपि निरूढलक्षणा अस्ति, वाक्यशेषस्वारस्यमप्यस्तीति परमात्मपरत्वम् । नैवमादित्यान्नशब्दयोः । ततश्चादित्यान्नशब्दौ तदधिष्ठातृदेवतापरौ, चेतनवाचिदेवताशब्दस्य प्रश्नप्रतिवचनगतस्याचेतने अन्नेऽसम्भवात्,

अन्नशब्दस्तदभिमानिदेवतापरः । देवतायाश्च भूतोपजीव्यत्वं तदधिष्ठेयान्नेनाभेदारोपेण (भेदोपचारेण) उपपद्यते । "सर्वाणि ह वा इमानि भूतान्यादित्यमुच्चैस्सन्तं गायन्ती" ति प्रतिपादितं सर्वभूतगेयत्वं परमात्मनोऽपि न सम्भवति ; भूतशब्दो हि प्राणिनिकाये महाभूते च रूढः । महाभूतस्य गातृत्वप्रसक्तेरेवाभावात् प्राणिनिकायपरत्वं वक्तव्यम्, तदपि न सम्भवति । न हि सर्वे प्राणिनः परमात्मानं गायन्ति, स्थावरेषु पश्वादिषु चाभावात् । तस्माद्गानयोग्यप्राणिविशेषपरत्वेन सङ्कोचः परमात्मपरत्वेऽप्यावश्यक इति आदित्यशब्दस्य लोकव्युत्पत्तिविरुद्धपरत्वं नाश्रयणीयम् । एवमन्नवाक्यशेषेऽपि "प्रतिहरमाणानी" ति भक्ष्यमाणत्वं न परमात्मनो मुख्यम् । अत आदित्यान्नशब्दितस्याब्रह्मत्वेऽपि प्राणशब्दितस्य ब्रह्मत्वं सिद्धमिति भावः ।

इति प्राणाधिकरणम् ।

---

## ज्योतिरधिकरणम् (१०)

### ज्योतिश्चरणाभिधानात् १-१-२५.

**आकाशादिशब्दत्रयं-सिद्धान्तितमि**ति । सिद्धान्त्यभिमतमित्यर्थः । ततश्च शब्दत्रयस्यापि सिद्धान्तरीत्या परमात्मवाचित्वेन कार्यकारणभावापन्नाकाशवायुतेजोरूपभूतत्रयवाचित्वाभावात् तत्प्रयुक्ता सङ्गतिः कथं सिद्ध्येदिति भावः । **न लिङ्गाल्पत्वं विवक्षितमिति** । एकवचनादेकत्वं न विवक्षितम् । 'अध्यात्मसम्बन्धभूमा ह्यस्मिन्' इति सूत्रकृतैव भूयसां लिङ्गानामुपन्यासादिति भावः ।

नन्वेवं सति पूर्वपक्षोत्थितिः कथमित्याशङ्क्याह — **विश्वतः** — **कृत्स्नभूमिप्रदेशादि**ति । भाष्ये निरतिशयदीप्तियुक्तोऽर्थः किमादित्यादिज्योतिरेव, उत पुरुषोत्तम इति कोटिद्वये प्रदर्शनीये आदित्यादिज्योतिरेव कारणभूतं ब्रह्मेति प्रदर्श्यते । न च तद्युज्यते, निरतिशयदीप्तियुक्तस्य कारणभूतस्य ब्रह्मत्वे पूर्वपक्षिसिद्धान्तिनोर्विवादादर्शनादिति यथाश्रुते अनुपपत्त्युद्घाटनपूर्वकं **कारणं ब्रह्मे**त्ययमंशोऽपि

पक्षप्रदर्शक इति स्वाभिमतयोजनां दर्शयति – **निरतिशयदीप्तिरेव कारणत्वाक्षेपकं लिङ्गमित्यादिना।** **व्याप्तिग्रहणस्थानोपनिषदिति** । जगत्कारणत्वनिरतिशयदीप्त्योः व्याप्तिग्रहणस्थानभूतमुण्डकोपनिषदि प्रसिद्धमित्यर्थः ।

भाष्ये **परमात्मत्वव्याप्तलिङ्गविशेषादर्शनादिति** । नन्वेवं कारणत्वव्याप्तनिरतिशयदीप्तियोगादित्युत्तरग्रन्थो विरुद्ध्येत; निरतिशयदीप्तियोगस्य परमात्मत्वव्याप्तकारणत्वव्याप्तत्वेन, "व्याप्यव्याप्यस्य सुतरां व्याप्यत्वम्" इति न्यायेन निरतिशयदीप्तियोगस्यापि परमात्मत्वव्याप्यत्वात् । न च दीप्तेर्जगत्कारणत्वव्याप्त्यनभ्युपगमेन पूर्वपक्षः, तथा सति कारणत्वव्याप्तनिरतिशयदीप्तियोगादिति ग्रन्थविरोधापत्तेः । न च समस्तचेतनाचेतनं प्रति अभिन्ननिमित्तोपादानत्वलक्षणं कारणत्वं ब्रह्मलिङ्गम्; तच्च न स्ववाक्योपात्तमिति वाच्यम्—'जगत्कारणं (कारणभूतं?) ब्रह्म भवन्' इत्युक्त्यनुपपत्तेः । जन्मादिसूत्रप्रतिपाद्यजगत्कारणत्वमभ्युपेत्यैव पूर्वपक्षप्रवृत्तिदर्शनादिति चेत्—उच्यते । आकाशप्राणादाविव जगत्कारणत्वादिरूपब्रह्मलिङ्गानुपलम्भान्न परमात्मपरत्वमित्येव पूर्वपक्षिणः संरम्भः । न च निरतिशयदीप्तिरूपं जगत्कारणत्वव्याप्तमुपलभ्यत इति शङ्क्यम् — "अथ यदतः परो दिवो ज्योतिर्दीप्यत" इत्यत्र दीप्तिमात्रप्रतीतावपि निरतिशयदीप्त्यप्रतीतेः, दीप्यत इति श्रूयमाणा दीप्तिश्च रूपवत्पदार्थनिष्ठा भवतीत्यभिप्रेतमिति दीप्तेरपरमात्मत्वहेतुतयैवोपन्यासेन कारणत्वाक्षेपकतयाऽनुपन्यासात् । प्रसिद्धमादित्यादिज्योतिरेव ज्योतिश्शब्दितमिति वदतः पूर्वपक्षिणः, "न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति" इति वाक्यप्रतिपाद्यादित्याद्यभिभावकतेजसा ऐक्याभ्युपगमायोगात् । तदैक्याभ्युपगमे च, 'अदृश्यत्वादिगुणकः', 'द्युभ्वाद्यायतन' मित्यादौ तस्य परमात्मत्वप्रतिपादनादेव "अथ यदतः पर" इति वाक्यार्थनिर्णयस्यापि सम्भवेन एतदधिकरणविचारवैफल्यात् । तस्मात्परमात्मत्वव्याप्तस्य व्याप्तव्याप्तस्य च लिङ्गस्यानुपलम्भात्, "इदं वाव तद्यदिदमस्मिन् अन्तःपुरुषे ज्योति" रिति ज्योतिरात्मकतया उपास्यं ज्योतिः प्रसिद्धमादित्यादिज्योतिरेवेत्येव पूर्वपक्षिहृदयम् । कारणवाक्यसमन्वयाध्यायसङ्गतिलोभादयोगव्यवच्छेदार्थप्रथमपादसङ्गतिलोभाच्च परमात्मकारणत्वाक्षेपपर्यवसाय्यपि प्रसजेदिति भाष्यटीकयोः सूचितमिति न तत्राभिनिवेष्टव्यमिति युक्तमुत्पश्यामः ।

**प्राकृततेजस्तत्त्वकार्यतयेति** – ब्रह्ममुखप्रसूतत्वादग्निब्राह्मणयोः, "अग्निर्वै ब्राह्मणः" इत्यादिनिर्देशवदिति भावः। "तस्यैषा दृष्टिः"। तस्य कौक्षेयज्योतिषः अयं दर्शनोपायः; यत्र–यस्मिन् काले अस्मिन् शरीरे हस्तेनोपलब्धे संस्पर्शेनोष्णमानं विजानाति। तस्यैषा श्रुतिः – श्रवणोपायः। कर्णावपिगृह्य – कर्णौ पिधाय निनदमिव–रथध्वनिमिव, नदथुमिव–ऋषभकूजितमिव ज्वलतोऽग्नेरिव शब्दं शृणोति। स शब्दः – आभ्यन्तरस्य जाठराग्नेः शब्द इत्यर्थः। पिहितकर्णपुटेनोपलभ्यमानस्य शब्दस्य बाह्यत्वासम्भवादान्तरत्वमुपेयमिति भावः। **ब्रह्मणोऽप्युपपद्यत इति** – यद्यपि सौर्यादेस्तेजसः सावयवत्वेन तदेकदेशस्य मर्यादासम्भवात् तस्य चोपास्यत्वेन विधानं सम्भवेत्; ब्रह्मणस्त्वनवयवस्यावयवोपासनानुपपत्तेः, अवयवकल्पनायाश्च सत्यां गतावयुक्तत्वादिति तयोर्वैषम्यं शङ्करभाष्यवाचस्पत्ययोरेव दर्शितम् – तथाऽपि "अन्तस्तद्धर्मोपदेशात्" इत्यत्रैव मर्यादारूपवत्त्वादीनां ब्रह्मणि सम्भवस्य प्रदर्शिततया न पूर्वपक्षसाधकत्वमित्यभिप्रेत्य भाष्ये अनुदाहृतमित्यभिप्रायः। **विद्यानुकूलसकलफलप्रदत्वादिति**। "अन्नादो वसुदानः" इत्यादिश्रुतेरिति भावः।

**क्वचिन्न दृश्यत इति**–क्वचिदपि न दृश्यत इत्यर्थः। "विश्वस्मादिन्द्र उत्तरः," "अग्निस्सर्वा देवताः" इति वाक्यद्वयं प्रकर्षप्रतिपादकम्। "तस्य वज्रमादाय," "अग्निं वै जातम्" इत्यादि तद्बाधकं द्रष्टव्यम्। "जनितेन्द्रस्य जनितोऽत विष्णोः," "तद्धैतद्घोर आङ्गिरसः कृष्णाय देवकीपुत्रायोक्त्वोवाच, अपिपास एव स बभूव" इत्यादिभिर्मन्त्रार्थवादैः परमात्मनोऽपि कार्यत्वं कर्मवश्यत्वमस्तीत्यत आह— **अनन्यपरवाक्येनेति**। **एषा वैष्णवीति**। "इदं विष्णुः प्रक्षस्य विष्णुः प्रकाव्यमुशने बभ्रुवाणो वाराहमन्त्यं पुरुषव्रते चे" ति पुरुषसूक्तं प्रस्तुत्य, "एषा वैष्णवी नाम संहिते" ति संहिताया वैष्णवत्वश्रवणादिति भावः। **ऋचा तु पुरुषोत्तममित्यादिनेति**। पुरुषसूक्तगतानां षोडशानां ऋचां षोडशसूपचारेषु विनियोगादिति भावः। **नारायणानुवाकैकार्थ्याच्चेति**–नारायणानुवाके, "विश्वमेवेदं पुरुषः" इति श्रुतत्वेन तस्य, "पुरुष एवेदं सर्वम्" इति पुरुषसूक्तगतवाक्येन प्रत्यभिज्ञानादिति भावः। **केचिदिति**। मृषावादिन इत्यर्थः। ते ह्येवमाहुः– सर्वाणि भूतानि स्थावरजङ्गमात्मकानि अस्य परमात्मन एकः पादः, अस्य त्रिपादमृतं

दिवि द्योतमाने स्वात्मन्यवस्थितम्, यथा कार्षापणश्चतुर्धा विभक्तः एकस्मात् पादात् पादत्रयीकृतो महान्, एवमल्पं प्रपञ्चं पादमपेक्ष्य अपरिच्छिन्नमात्मस्वरूपं त्रयः पादा उच्यन्त इत्यर्थः। ततश्च "ततो ज्यायांश्च पूरुषः" इति पुरुषज्यायस्त्वमुपपद्यत इति। **क्लिष्टता स्पष्टेति**—स्वे महिम्नि प्रतिष्ठित इतिवत् अनन्याधारकत्वकथनस्य क्लिष्टत्वादिति भावः। **न हि हृदयाकाशो दिव उपरितनेषु लोकेष्विति**। येन हृदयाकाशस्थितस्य, विश्वतः पृष्ठेष्विति श्रुतिप्रतिपाद्यत्वं स्यादिति भावः। **तद्विषयं तद्वाक्यमिति चेदिति**। ततश्च वाक्यद्वयस्यापि भिन्नविषयत्वमस्त्विति भावः।

**दिवी**त्यस्य द्योतमानात्मस्वरूपपरत्वे सप्तम्यस्वारस्यात् वाचस्पतिना व्याख्यान्तरं कृतम्। तदनूद्य दूषयति **जाग्रत्स्वप्नसुषुप्त्यवस्थास्विति। त्रेधा विभक्तकार्या-काशप्रदेशविशेषास्त्रयः पादा** इति। "योऽयं बहिर्धा पुरुषादाकाशः, अयं वाव स योऽयमन्तः पुरुष आकाशः। अयं वाव सोऽयमन्तर्हृदय आकाश" इति श्रुतेर्बाह्याकाश-शरीरान्तर्वर्त्याकाशहृदयाकाशभेदेन त्रेधाविभक्तकार्याकाशप्रदेशविशेषाः त्रयः पादा इत्यर्थः। ननु "पद्यते ज्ञायते एभिस्तुरीय" मिति विश्वतैजसप्राज्ञास्त्रयः पादाः। एते यस्य तत् त्रिपात्। तुरीयं तद्विश्वतैजसप्राज्ञस्वरूपपादद्वारा बाह्याकाशशरीराकाश-हृदयाकाशेष्ववस्थितम् इति मन्त्रस्यार्थो वर्णितः। ततश्च त्रेधाविभक्तकार्याकाशवर्तिनां विश्वादीनामेव पादत्वे वक्तव्ये कथं कार्याकाशप्रदेशविशेषाणां पादत्वमुच्यत इति चेत्। **अत्र केचित्**—आधुनिकेन कल्पतरुकारेण तथोक्तत्वेऽपि वाचस्पत्ये तथा अप्रतीतेरनुवादो न दोषायेति वदन्ति। **अन्ये तु** त्रेधा विभक्तः कार्याकाशप्रदेशविशेषः आधारविशेषो येषां त इति कार्याकाशप्रदेशशब्देनापि विश्वादय एवोक्ता इति वदन्ति।

**मुक्तप्राप्यदेशस्य नाकशब्देनोक्तत्वादि**ति। आत्मस्वरूपमात्रे नाकशब्द-प्रयोगाभावेन स्थानविशेषवाचित्वं स्पष्टमिति भावः। **निवासशब्दा**दिति। "क्षि निवासगत्योः" इति धातोः तौदादिकात् शतरि छान्दसे गुणे निष्पन्नत्वात् क्षयन्त-मित्यस्य तदर्थलाभः। **व्यतिरेकनिर्देशा**दिति। सप्तम्या, सप्तम्यन्तविहितातसि-प्रत्ययेन चेत्यर्थः।

**लिङ्गं प्रकरणश्च दुर्बलमिति चेदि**ति। यद्यपि आकाशस्तल्लिङ्गादित्यादौ अभ्यस्ताकाशश्रुत्यपेक्षया लिङ्गप्राबल्यमुक्तम्, तथाऽपि नेदं द्युसम्बन्धित्वं तादृशमनन्यथा-

सद्धं ब्रह्मत्वसाधकं लिङ्गम्; अपि तु प्रकृतसर्वभूतचरणाभेदसम्भावकमात्रम्, अत एव, ‘प्रत्यभिज्ञापक’मित्युक्तमिति ध्येयम्। **अनुवादलक्षणयच्छब्दसमभिव्याहारेणेति**। यच्छब्दसम्बन्धेन द्युसम्बन्धिज्योतिषोऽयमनुवादः प्रतीयते। स च प्राप्तिमपेक्षते। प्राप्तिश्च द्युसम्बन्धित्वेन। तच्च सर्वभूतपादस्य ब्रह्मण इति तदेव बुद्धौ विपरिवर्तमानं यच्छब्देन ग्रहणार्हम्; न प्रसिद्धं ज्योतिः। तस्य द्युसम्बन्धितया बुद्धौ अविपरिवृत्तेरिति भावः। **प्रथमप्रतिपन्नयच्छब्दश्रुत्येति**। न च यच्छब्द एव ज्योतिश्शब्दस्वारस्याबाधाय प्रकृतपरामर्शित्वं परित्यज्य ज्योतिश्शब्दोपस्थापितप्रसिद्धज्योतिःपरामर्शी स्यादिति वाच्यम्—सर्वनाम्नां समानाधिकृतशब्दस्वारस्यमतिलङ्घ्यापि प्रकृतपरामर्शित्वस्य व्युत्पत्तिसिद्धतया यच्छब्दानुसारेणैव ज्योतिश्शब्दस्य नेयत्वात्। अत एव प्रयुक्तिलक्षणे, “तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा; वाजिभ्यो वाजिनम्” इति श्रुतावामिक्षापदवाच्यं पयसोऽर्थान्तरं दधिपयस्संसर्गजन्यं द्रव्यमभ्युपेयम्; पयः, आमिक्षा इति व्यपदेशभेदादिति तस्यैव द्रव्यान्तरस्य कठिनस्य मधुराम्लरसस्य वैश्वदेवयागद्रव्यत्वे, आमिक्षापदसमानाधिकृततत्पदस्याऽपि तद्द्रव्यपरत्वे च प्राप्ते—सर्वनाम्नः प्रकृतपरत्वस्वाभाव्यात् तत्पदमानयनक्रियां प्रति प्रधानकर्मतया दध्यानयनाधिकरणत्वेन निर्दिष्टं पयः परामृशतीति पय एव यागद्रव्यम्। तत्पदे स्त्रीलिङ्गमामिक्षापदसामानाधिकरण्यकृतम्। आमिक्षापदं तु न संसृष्टद्रव्यान्तरविधायकम्। किन्तु अस्मादेव वैदिकव्यवहारात् घनीभूतपयोमात्रवाचकम्; न तद्द्र(तज्जन्य)व्यान्तरवाचकम्। अम्लरसोऽपि न यागद्रव्यगतः, किन्तु तत्संस्कारकद्रव्यगत इति पयोरूपामिक्षाप्रयुक्तमेवेदं दध्यानयनम्; न वाजिनप्रयुक्तमपीति निर्णीतं चतुर्थे(४-१-९)। “दधि मधु घृत धानाः करम्भा उदकं तण्डुलाः तत्संसृष्टं प्राजापत्यम्” इति चित्रायागविधौ दध्यादिसप्तद्रव्यमेलनरूपसंसृष्टद्रव्यक एको यागः। तत्पदं च संसृष्टपरमिति प्राप्ते—तत्पदं प्रकृतपरामर्शित्वस्वाभाव्यात् असंसृष्टसप्तद्रव्यादिपरम्; न तु संसृष्टैकद्रव्यपरमिति दध्यादिसप्तद्रव्यकाः सप्तयागाः। सप्तस्वपि द्रव्येषु तदिति नपुंसकैकवचननिर्देशः “नपुंसकमनपुंसकेन” इत्यनुशासनात् उपपादनीयः। संसृष्टपदं तु यागभेदेऽपि एकदेवत्यतया सान्नाय्यवत् दध्यादीनां सह प्रक्षेपे संसर्गसत्त्वात् तदनुवादकं योज्यमिति निर्णीतं टुप्टीकायामष्टमद्वादशाध्याययोः॥

छन्दोऽभिधानान्नेति चेन्न तथा
चेतोऽर्पणनिगमात्तथा हि दर्शनम् १-१-२६.

"गायत्री वा इदं सर्वं भूतं यदिदं किञ्च, वाग्वै सा गायत्री वाग्वा इदं सर्वं भूतं गायति च त्रायते च। या वै सा गायत्री इयं वाव सा येयं पृथिवी, अस्यां हीदं सर्वं भूतं प्रतिष्ठितमेतामेव नातिशीयते। या वै सा पृथिवी इयं वाव सा यदिदमस्मिन् पुरुषे शरीरम्, अस्मिन् हीमे प्राणाः प्रतिष्ठिताः एतदेव नातिशीयन्ते। यद्वै तत्पुरुषे हृदयम्। अस्मिन् हीमे प्राणाः प्रतिष्ठिताः एतदेव नातिशीयन्ते। सैषा चतुष्पदा षड्विधा गायत्री। तदेतदृचाभ्यनूक्तम्, 'तावानस्य महिमा ततो ज्यायांश्च पुरुषः। पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवीति। यद्वै तद्ब्रह्मेति इदं वाव तत् योऽयं बहिर्धा पुरुषादाकाशः। यो वै बहिर्धा पुरुषादाकाशः, अयं वाव स योऽयमन्तःपुरुष आकाशः, यो वै सोऽन्तःपुरुष आकाशः, अयं वाव स योऽयमन्तर्हृदय आकाशः। तदेतत् पूर्णमप्रवर्ति। पूर्णामप्रवर्तिनीं श्रियं लभते, य एवं वेद"। अनन्तरम्, "तस्य ह वा एतस्य हृदयस्य पञ्च देवसुषय" इत्यादिना, "य एतानेवं पञ्च ब्रह्मपुरुषान् स्वर्गस्य लोकस्य द्वारपान् वेदे"त्यन्तेन द्वारपोपासनविधानानन्तरं श्रूयते — "अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेषु अनुत्तमेषु उत्तमेषु लोकेषु, इदं वाव तत यदिदमस्मिन् अन्तः पुरुषे ज्योतिः। तस्यैषा दृष्टिः यत्रैतदस्मिन् शरीरे संस्पर्शेनोष्णिमानं विजानाति। तस्यैषा श्रुतिः यत्रैतत्कर्णावपिगृह्य निनदमिव नदथुरिवाग्नेरिव ज्वलत उपशृणोति। तदेतत् दृष्टं च श्रुतं चेत्युपासीत। चक्षुष्यश्श्रुतो भवति य एवं वेद य एवं वेद"इति श्रुतिक्रमः।

**उत्तरवाक्य** इति। "अथ यदतः परो दिवो ज्योतिर्दीप्यत" इति वाक्येऽपि द्युसम्बन्धित्वेन दृष्टिविशेषणीभूतब्रह्मण एव प्रत्यभिज्ञोपपद्यत इति भावः। **अश्रुतं हेतुमि**ति। तावानस्येति मन्त्रप्रतिपाद्यसर्वभूतचरणत्वस्येव ब्राह्मणोक्तस्य सर्वभूतवागात्मकत्वस्य पूर्वसूत्रे अश्रुतत्वादिति भावः। **स्ववाक्यस्थहेतुविवक्षा न्यायेनेति चेदि**ति। मन्त्रवर्णोक्तहेतुस्तु न गायत्रीवाक्योक्तः। अतो "गायत्री वा इदं सर्व"मिति गायत्रीस्वरूपनिर्देशकब्राह्मणवाक्योक्तभूतादिपादव्यपदेशविवक्षा आवश्यकीति भावः। **कचिदुक्तस्य हि अन्यत्रे**ति। ज्योतिर्व्यावर्तनायोक्तस्य सर्वभूत-

चरणत्वस्य, प्रसिद्धगायत्रीनिरासेऽपि तस्यैव हेतुतया छन्दोऽभिधानादिति सूत्रखण्डाभिप्रेतत्वमुचितम् । तथा पूर्वसूत्रानुक्तस्य ब्राह्मणोक्तसर्वभूताद्यात्मकत्वस्य भूतादिपादव्यपदेशोपपत्तेश्चेत्यनेन कण्ठतः प्रतिपादनं ह्युचितम्; न तु ज्योतिश्चरणाभिधानादिति सूत्रोक्तसर्वभूतचरणत्वस्यैव भूतादिपादव्यपदेशोपपत्तेश्चैवमिति सूत्रेण कण्ठतः प्रतिपादनमुचितम् । पूर्वसूत्रकण्ठोक्तस्य पुनरुत्तरसूत्रे कण्ठोक्तेरनुचितत्वादिति भावः । **सा चेत् सिध्यतीति**। अनुक्तस्योक्तिः सिध्यति चेदित्यर्थः । **चेतोर्पणनिगमशब्दौ विवृताविति** । एवं हि वदता, चेतोर्पणनिगदादिसूत्रपाठो नास्मत्सम्प्रदायसिद्ध इति सूचितम । न च निगमशब्दस्य गोचरादिसूत्रेण करणाधिकरणयोः संज्ञायां घान्ततया निपातितत्वात, तस्य च करणार्थत्वे वेदे रूढत्वादधिकरणार्थत्वे च, 'स्थानीयं निगम' इति स्थानीये रूढत्वात् कथं निगमशब्दस्य उपदेशार्थकत्वम्; रूढ्यर्थत्वान्निपातनस्य रूढेर्योगापहारादिति वाच्यम्—रूढ्यर्थत्वस्यात्र बाधितत्वेन योगार्थोपस्थितेः सम्भवात् । "ग्रहवृदृनिश्चिगमश्चे"ति गमेरकर्तरि कारके भावे च अपो विहितत्वेन भावसाधनाप्प्रत्ययान्तनिगमशब्दस्य उपदेशार्थकत्वसम्भवात् । **चतुष्पात्त्वलक्षणमिति** । चतुष्पात्स्वरूपमित्यर्थः । **य एवं वेदेति श्रवणादिति** । ततश्च पूर्णत्वाप्रवर्तित्वयोरेवानुसन्धेयत्वं फलत्वं चेत्यर्थः । **प्रकरणे तस्य फलान्तराविधानाच्चेति** । चतुष्पात्त्वोपदेशस्य उपासनव्यतिरिक्तफलाभावादित्यर्थः ।

**चतुष्पाद्ब्रह्मण उपासनं विधीयत** इति । ननु पूर्णत्वचतुष्पात्त्वयोर्विरुद्धत्वात् कथं तयोरेकविद्यासमावेशः । अत एव "सम्भृतिद्युव्याप्त्यपि चातः" इत्यधिकरणे द्युव्याप्तत्वादीनामल्पायतनविद्यासु न समावेश इत्युक्तमिति चेत् — सत्यम् — चतुष्पात्त्वावच्छिन्ने ब्रह्मणि पूर्णत्वासम्भवेऽपि तदुपलक्षितस्वरूपे तत्सम्भवात् । अत एवाल्पायतनविद्यास्वपि स्वरूपतोऽनन्तत्वमुपसंहर्तव्यमित्युक्तमिति द्रष्टव्यम् ।

**भाष्ये चतुष्पदा च गायत्री क्वचित् दृश्यत** इति । न च—सर्वगायत्रीप्रसिद्धं रूपं विहाय काचित्केन रूपेण सादृश्यग्रहणं न युक्तम्; न हि सर्वत्र गवां चतुष्पात्त्वेऽपि क्वचिदौत्पातिकी गौर्द्विपादुत्पन्ना दृष्टेति, "वाराहं गावोऽनुधावन्ती" त्यत्र वायसे द्विपात्त्वेन औत्पातिकगोसादृश्यं भवति इति—वाच्यम्—

सम्भवति — प्रसिद्धार्थग्रहणे अप्रसिद्धार्थग्रहणमयुक्तम्। इह तु प्रसिद्धगायत्री-सादृश्यग्रहणे चतुष्पात्त्वासम्भवादगत्या अप्रसिद्धाया एव गायत्र्या ग्राह्यत्वात्।

न च परभाष्यरीत्या यथा गायत्री षडक्षरैः पादैः चतुष्पदा, एवं ब्रह्मापि मन्त्र-वर्णोक्तरीत्या चतुष्पादिति सादृश्यात् ब्रह्मणि गायत्रीशब्दो गौणोऽस्त्विति वाच्यम्— "तेषामृक् यत्रार्थवशेन पादव्यवस्था"(पू.मी २-१-३५) इत्यर्थवशेन नियमितां पाद-व्यवस्थामपहाय केवलमक्षरगणनया पादकल्पनाया अयोगात्। अन्यथा बृहस्पतिसवे प्राकृतेष्वेव नानाछन्दस्सु अक्षरगणनया अक्षरलोपेन वा गायत्रीत्वसम्पादनसम्भवेन प्राकृतीनामृचां अबाधः सम्भवतीति पूर्वपक्षं कृत्वा, अष्टाक्षरैस्त्रिभिः पादैः युक्ताया एव गायत्रीत्वात्, "गायत्रमेतदहर्भवती" ति वचनबलान्नानाछन्दांस्यपहाय मुख्य-गायत्र्य एव ग्राह्या इति पूर्वतन्त्रे अष्टमाधिकरणे (८-३-५) निर्णीतम्; तद्विरो-धापत्तेः। न च गायत्रीशब्दो गायत्र्यनुगतब्रह्मलक्षक इति मार्गान्तरस्यापि परभाष्ये उपन्यस्तत्वात् स एव मार्गः समाश्रीयतामिति वाच्यम्। तथाहि सति गायत्री-शब्देन गायत्र्यवच्छिन्नब्रह्मण एव लक्ष्यत्वापातात्। नचेष्टापत्तिः। तत्र भूतादिपाद-व्यपदेशस्यानुपपत्तेरिति द्रष्टव्यम्।

भाष्ये **ते वा एत** इति। "ते वा एते पञ्चान्ये पञ्चान्ये दश सन्तः तत् कृतम्; तस्मात् सर्वासु दिक्षु अन्नमेव दशकृतम् सैषा विराडन्नादी" ति श्रुतिः। अस्याः श्रुतेः अयमर्थः — संवर्गविद्यायामधिदैवतम् अग्निसूर्यचन्द्र-सलिलानि वायौ लीयन्ते, अध्यात्मं च वाक्चक्षुश्श्रोत्रमनांसि प्राणे संहृयन्त इत्युक्तम्, 'यदा वाऽग्निरुद्वायती'त्यादिना। तत्राधिदैवतं वायुना सह पञ्चान्ये, अध्यात्मं तेभ्योऽन्ये प्राणेन सह पञ्च दश सन्तस्तत्कृतम्। मिलितानां दशसङ्ख्याश्रयत्वात् कृतं भवति। कृतनामा कश्चिदयो द्यूतशास्त्रे प्रसिद्धः। स च चतुरङ्को दशात्मकः। कथं चतुरङ्कस्य दशात्मकत्वम्। इत्थम्। चतुरङ्के अये त्रिद्व्येकाङ्कानां त्रयाणामप्यन्त-र्भावात्। ततश्च शतं सहस्रेषु सम्भवतीति न्यायेन एकस्मिन्नेव चतुरङ्काये चतुरङ्कद्व्यङ्कत्र्यङ्कैकाङ्कायानामन्तर्भावात् अङ्कानां दशत्वसङ्ख्या सम्पद्यते। ततश्च संवर्गविद्यान्तर्गतपदार्थानां दशत्वसङ्ख्याश्रयत्वेन कृतनामकायसादृश्यात् तत्र कृत-

मित्युच्यते । 'तस्मात् सर्वासु दिक्षु चान्नमेव दशकृतम्'— उक्ताद्धेतोः सर्वासु दिक्षु वर्तमानमग्निवाय्वादिदशकं कृतनामकायस्थानीयमन्नमेव भवति । तस्यान्नत्वे हेतुमाह— **सैषा विराडिति**। "दशाक्षरा विराट् विराडन्न'मिति श्रुतेः दशसङ्ख्याया विराट्त्वम्, विराट्त्वादन्नमित्यर्थः । विधेयाभिप्रायः स्त्रीलिङ्गनिर्देशः । विराट्त्वेनान्नभूतानामेवैषां कृतनामकायत्वेनान्नादित्वमप्यस्ति । कृतसंज्ञके ह्यये दशत्वसङ्ख्याया अन्तर्भूतत्वात् । दशत्वसङ्ख्यायाश्च विराट्त्वेनान्नत्वादन्नं कृतेऽन्तर्भूतम् । तत उपचारात् कृतमन्नादी-त्युच्यते । अत अन्नादित्वेन वाय्वादय उपास्या इति परैर्वर्णितः । आचार्यैस्तु अन्नादिति पाठमाश्रित्य अनेनैव पदेन विराट्त्वकृतत्वायत्वान्नत्वान्नादित्वयोर्लाभमभिप्रेत्य **अन्नं च तदत्ति चेति** व्याख्यातम् ।

**ततोऽपि गायत्र्या ऐवेति** । लक्ष्यार्थस्तुतिपरत्वकल्पनापेक्षया मुख्यार्थ-स्तुतिपरत्वस्यैव युक्तत्वादिति भावः । **तत्सदृशब्रह्मपरत्वादिति** । ततश्च गायत्री-पदप्रतिपन्नसादृश्यसिद्ध्यर्थतया, सैषा चतुष्पदेति ब्राह्मणप्रतिपाद्यचतुष्पात्त्वं विवक्षित-मित्यर्थः ।

सू – भूतादिपादव्यपदेशोपपत्तेश्चैवम् ३-१-२७.

**यादवप्रकाशैस्त्वित्यादि** । ननु, "गायत्री वा इदं सर्वं भूतम्" इत्यादि-ब्राह्मणस्य चतुष्पात्त्वपरत्वाभावे, "सैषा चतुष्पदा षड्विधे" ति चतुष्पात्त्वषाड्विध्य-योर्द्वयोरपि निगमनं नोपपद्येतेत्याशङ्क्य, षाड्विध्यांश एव निगमनम्, चतुष्पात्त्वांशे तु विधानमित्याह – **सैषा चतुष्पदा षड्विधेति वाक्यं चेति** । **मन्त्रवर्णप्रति-पाद्यमिति**। मन्त्रवर्णस्तद्विवरणरूप इत्यर्थः । **वाक्प्राणयोर्गानत्राणादिवदिति** । अस्मन्मते विधात्वेनाभिमतानां गानत्राणसर्वभूतप्रतिष्ठात्वतदनतिवर्त्यत्वप्राणप्रतिष्ठात्व-तदनतिवर्त्यत्वानां षण्णां प्राधान्यतः प्रतिपाद्यत्वाभावेन विधात्वमनभ्युपगच्छतः तव मते, "गायत्री वा इदं सर्वं भूतं या वै सा गायत्री इयं वाव सा येयं पृथिवी, या वै सा पृथिवी इदं वाव तद्यदिदमस्मिन् पुरुषे शरीरम्, यद्वै तत् पुरुषे शरीरमिदं वाव तत् यदिदमस्मिन्नन्तःपुरुषे हृदयमि" ति भूतपृथिवीशरीरहृदयानां गायत्र्यादि-भेदेनानन्यार्थतया प्राधान्येन निर्देशवत् वाक्प्राणयोरपि प्राधान्येन निर्देशाभावात् न

विधात्वं सम्भवतीति भावः। अन्यार्थत्वमेवोपपादयति — **गानत्राणाभ्यामिति**। **षाड्विध्यं च विवक्षुरिति चकारात्** गायत्रीशब्दवाच्यत्वं च समुच्चीयते।

ननु शरीरशब्दस्य निष्कर्षकशब्दतया कथं गायत्रीसामानाधिकरण्येन निर्देश इत्याशङ्क्याह—**भूतपृथिव्योर्गायत्रीसामानाधिकरण्येनेति। प्राणशब्दस्य जीवपरत्वं केचिदाहुरिति। भूतप्राणशब्दौ** एकार्थौ। ततश्च पृथिवीशरीरहृदयानां भूतप्रतिष्ठात्वसाम्यादन्योन्याभेदव्यपदेश उपपद्यत इति मृषावादिन आहुरित्यर्थः। **भूतप्राणशब्दयोरिति**। "अस्यां हीदं सर्वं भूतं प्रतिष्ठितम्", "अस्मिन् हीमे प्राणाः प्रतिष्ठिताः" इत्यनयोरित्यर्थः। **षाड्विध्यं च निगमयतीति**। ननु "सैषा चतुष्पदे" ति ब्रह्मणः प्रतिपादनं न सम्भवति। "टाबृची" ति ऋचि वाच्यायामेव पाद-न्ताट्टापो विधानादिति चेन्न — ब्रह्मणि ऋगभेदारोपेण टाप्प्रत्ययोपपत्तेरिति भावः।

ननु "तावानस्य महिमे"ति साक्षितयोदाहृतो मन्त्रः पुरुषसूक्तगतः। तत्र च तावच्छब्दः, "स भूमिं विश्वतो वृत्वे" ति प्रकृतभूमिमात्रपरः। स कथं मन्त्रः चतुष्पात्त्वरूपमहिमानुवादी स्यादित्याशङ्क्याह—**स भूमिं विश्वतो वृत्वेत्युक्त्वेति। अन्तर्गतानीति**। ततश्च स भूमिं विश्वतो वृत्वेत्यनेनैव चतुष्पात्त्वमहिम्नः प्रतिपादनसम्भवात् तत्त्वेन तावानस्येत्यनेन तदनुवादः सम्भवतीति भावः। **जाग्रदाद्यवस्थात्रयोपलक्षितं बाह्यशारीरहार्दरूपेणेति**। जाग्रदाद्यवस्थासञ्चारभूमिबाह्यशारीरहार्दाकाशस्थितविश्वतैजसप्राज्ञरूपपादत्रयोपलक्षितमित्यर्थः। **कारणस्वरूपमिति**। द्योतमाने आत्मस्वरूपे अवस्थितमपरिच्छिन्नं परमार्थभूतमात्मस्वरूपं वेत्यर्थः। एवं हि वाचस्पतिना व्याख्यातम्। तत्प्रकारश्चास्माभिः पूर्वमेव प्रदर्शितः। **चतुष्पाद्ब्रह्म वाक्पादः प्राणः पाद इत्यादि**। यद्यत्र वाक्पादः प्राणः पाद इत्यादिना ब्रह्मप्रतीकस्य मनस एव पादाः कथ्यन्ते, अग्निः पादो वायुः पाद इत्यादिना च ब्रह्मप्रतीकस्याकाशस्य पादाः कथ्यन्त इति मतम्—तदा, "प्राची दिक् कला प्रतीची दिक् कला दक्षिणा दिक् कला उदीची दिक् कला। एष वै सोम्य चतुष्कलः पादो ब्रह्मणः" इति सम्प्रतिपन्नमुदाहरणान्तरं द्रष्टव्यम्। अत्र च वक्तव्यं सर्वम्, बुद्ध्यर्थः पादवदित्यत्र स्पष्टयिष्यते। **पुरुषसूक्तप्रक्रियानुगुण्यादिति**। तावानिति मन्त्रस्य तत्र परिच्छेद-

व्युदासकत्वदर्शनादिति भावः। **अनन्तरवाक्यानुगुण्यादिति**। 'तदेतत्पूर्णमप्रवर्ति' त्यनन्तरवाक्ये परिच्छिन्नत्वशङ्काव्युदासकत्वदर्शनेन तदानुगुण्याच्चेत्यर्थः।

**हृदयस्थाकाशस्येति**। हृदयस्य स्तुत्यर्थं हार्दाकाशस्य महत्त्वं वक्तुमित्यर्थः।

ननु तदेतत्पूर्णमिति वाक्ये अव्यवहितत्वात् हृदयमात्र एव ब्रह्मोपासनं विधीयते; न तु गायत्र्याख्यस्य चतुष्पाद्ब्रह्मणः; तस्य विच्छिन्नत्वात्। [अतः]ज्योतिर्वाक्ये न तस्य ग्रहणमित्याशङ्क्याह—**नात्र हृदयमात्रमिति**। **सप्तम्यश्रवणादिति**। हृदि ब्रह्मोपासीतेति हृदयान्तर्वर्तिब्रह्मोपासनाश्रवणादित्यर्थः।

ननु "तस्य ह वा एतस्ये" त्यादिविहितद्वारपोपासनेन गायत्र्युपासनप्रकरणं विच्छिन्नमित्याशङ्क्य तस्याङ्गतया न व्यवधायकत्वमित्याह — अथ **ब्रह्मोपासनाङ्गत्वेनेति**। "चक्षुष्यः श्रुतो भवती" त्यस्यार्थमभिप्रायं चाह — **आभिरूप्यकीर्तिमत्त्वेति**। **ज्योतीरूपत्वेनोपासनेति**। ज्योतिश्शरीरकतयोपासनेत्यर्थः।

**कार्योत्पत्तिप्रसङ्ग इति**। न चानुत्पादनवत् उत्पादनस्यापि ईश्वराधिष्ठानसापेक्षत्वात् नोत्पादनापादनं युक्तमिति वाच्यम् — तर्हि स्वापे उभयोरपि विरहप्रसङ्ग इति तात्पर्यम्। **यत् सप्तान्नानि मेधयाऽजनयत्पितेति** — अत्र बुद्धिसौकर्यार्थं व्याख्यास्यमाना श्रुतिर्लिख्यते—

"यत्सप्तान्नानि मेधया तपसाऽजनयत्पिता। एकमस्य साधारणम् द्वे देवानभाजयत्। त्रीण्यात्मनेऽकुरुत पशुभ्य एकं प्रायच्छत्। तस्मिन् सर्वं प्रतिष्ठितं यच्च प्राणिति यच्च न। तस्मात्तानि न क्षीयन्ते अद्यमानानि सर्वदा। यो वैतामक्षितिं वेद सोऽन्नमत्ति प्रतीकेन। स देवानपिगच्छति स ऊर्जमुपजीवतीति श्लोकाः। यत्सप्तान्नानि मेधया तपसाऽजनयत्पितेति। मेधया हि तपसाऽजनयत्पिता। एकमस्य साधारणमिति। इदमेवास्य तत्साधारणमन्नम्, यदिदमन्नमद्यते। स य एतमुपास्ते न स पाप्मनो व्यावर्तते मिश्रं ह्येतत्। द्वे देवानभाजयदिति, हुतं च प्रहुतं च। तस्माद्देवेभ्यो जुह्वति प्र च जुह्वति। अथो आहुः दर्शपूर्णमासाविति। तस्मान्नेष्टियाजुकः स्यात्। पशुभ्य एकं प्रायच्छदिति। तत् पयः। पयो ह्येवाग्रे मनुष्याश्च पशवश्चोपजीवन्ति।

तस्मात् कुमारं जातं घृतं वैवाग्रे प्रलिलेह्यन्ति, स्तनं वाऽनुधापयन्ति । अथ वत्सं जातमाहुरतृणाद इति । तस्मिन् सर्वं प्रतिष्ठितं, यच्च प्राणिति यच्च नेति । पयसि हीदं प्रतिष्ठितम्, यच्च प्राणिति यच्च न । तद्यदिदमाहुः संवत्सरं पयसा जुह्वत् अप पुनर्मृत्युञ्जयतीति । न तथा विद्यात् यदहरेव जुहोति तदहः पुनर्मृत्युमुपजयति । एवं विद्वान् सर्वं हि देवेभ्योऽन्नाद्यं प्रयच्छति । कस्मात्तानि न क्षीयन्ते अद्यमानानि सर्वदेति । पुरुषो वा अक्षितिः । स हीदमन्नं पुनः पुनर्जनयते । यो वै तामक्षितिं वेदेति । पुरुषो वा अक्षितिः । स हीदमन्नं धिया धिया जनयते कर्मभिः । यद्धयेतन्न कुर्यात्, क्षीयते ह । सोऽन्नमत्ति प्रतीकेनेति । मुखं प्रतीकम् । मुखेनेत्येतत् । स देवानपिगच्छति स ऊर्जमुपजीवतीति प्रशंसा । त्रीण्यात्मनेऽकुरुतेति । मनो वाचं प्राणम् । तान्यात्मनेऽकुरुते अन्यत्रमना अभूवं नापश्यम् । अन्यत्रमना अभूवम्, नाश्रौषमिति । मनसा ह्येव पश्यति मनसा शृणोति । कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्वं मन एव । तस्मादपि पृष्ठत उपस्पृष्टो मनसा विजानाति । यः कश्च शब्दो वागेव सा । एषा ह्यन्तमायत्तैषा हि न । प्राणोऽपानो व्यान उदानस्समानोऽन इत्येतत् सर्वं प्राण एव । एतन्मयो वा अयमात्मा वाङ्मयो मनोमयः प्राणमयः । त्रयो लोका एत एव । वागेवायं लोको मनोऽन्तरिक्षलोकः प्राणोऽसौ लोकः । त्रयो वेदा एत एव । वागेव ऋग्वेदो मनो यजुर्वेदः प्राणस्सामवेदः । देवाः पितरो मनुष्याः एत एव । वागेव देवा मनः पितरः प्राणो मनुष्याः । पिता माता प्रजा एत एव । मन एव पिता वाङ्माता प्राणः प्रजा । विज्ञातं विजिज्ञास्यमविज्ञातमेत एव । यत्किञ्चिद्विज्ञातं वाचस्तद्रूपं वाग्विज्ञाता । वागेवैनं तद् भूत्वाऽवति । यत्किञ्च विजिज्ञास्यं मनसस्तद्रूपम् । मनो हि विजिज्ञास्यम् । मन एनं तद् भूत्वाऽवति । यत्किञ्चाविज्ञातं प्राणस्य तद्रूपम् प्राणो ह्यविज्ञातः । प्राण एनं तद्भूत्वाऽवति । तस्यै वाचः पृथिवी शरीरं ज्योतीरूपमयमग्निः । तद्यावत्येव वाक् तावती पृथिवी तावानयमग्निः । अथैतस्य मनसो द्यौश्शरीरं ज्योतीरूपमसावादित्यः तद्यावदेव मनस्तावती द्यौस्तावानसावादित्यः । तौ मिथुनं समैताम् । ततः प्राणोऽजायत । स इन्द्रः । स एषोसपत्नः । द्वितीयो वै सपत्नः । नास्य सपत्नो भवति, य एवं वेद । अथैतस्य प्राणस्यापश्शरीरं ज्योती रूपमसौ चन्द्रः । तद्यावानेव प्राणस्तावत्य आपस्तावानसौ चन्द्रः ।

त एते सर्व एव समाः । सर्वेऽनन्ताः । स यो हैतान् अन्तवत उपास्ते, अन्तवन्तं स लोकं जयति । अथ यो हैतान् अनन्तानुपास्ते, अनन्तं हि लोकं जयति । स एष संवत्सरः प्रजापतिः षोडशकलः तस्य रात्रय एव पञ्चदश कलाः । ध्रुवैवास्य षोडशी कला स रात्रिभिरेवा च पूर्यते, अप च क्षीयते । सोऽमावास्यां रात्रिमेतया षोडश्या कलया सर्वमिदं प्राणभृदनुप्रविश्य ततः प्रातर्जायते, तस्मादेतां रात्रिं प्राणभृतः प्राणं न विच्छिन्द्यात्, अपि कृकलासस्य, एतस्या एव देवताया अपचित्यै । यो वै संवत्सरः प्रजापतिष्षोडशकलोऽयमेव सोऽयमेवंवित् पुरुषस्तस्य वित्तमेव पञ्चदश कला आत्मैवाऽस्य षोडशी कला । स वित्तेनैवा च पूर्यतेऽप च क्षीयते तदेतन्नभ्यं यदयमात्मा प्रधि वित्तम्, तस्माद्यद्यपि सर्वज्यानिं जीयते आत्मना चेत् जीवति प्रधिनागादित्येवाहुः । अथ त्रयो वाव लोकाः मनुष्यलोकः पितृलोको देवलोक इति सोऽयं मनुष्यलोकः पुत्रेणैव जय्यो नान्येन कर्मणा । कर्मणा पितृलोको विद्यया देवलोकः देवलोको वै लोकानां श्रेष्ठस्तस्माद्विद्यां प्रशंसन्ति ।

अथातस्संप्रत्तिः — स यदा प्रैष्यन् मन्यतेऽथ पुत्रमाह त्वं ब्रह्म त्वं यज्ञस्त्वं लोक इति । स पुत्रः प्रत्याहाहं ब्रह्माहं यज्ञोऽहं लोक इति । यद्वै किञ्चानूक्तं तस्य सर्वस्य ब्रह्मेत्येकता । ये वै के च यज्ञाः तेषां सर्वेषां यज्ञ इत्येकता । ये वै के च लोकास्तेषां सर्वेषां लोक इत्येकता । एतावद्वा इदं सर्वं एतन्मा सर्वं सन्नयमितोऽभुनजदिति । तस्मात् पुत्रमनुशिष्टं लोक्यमाहुः । तस्मादेनमनुशासति । स यदैवंविदस्माल्लोकात् प्रैति, अथैभिरेव प्राणैस्सह पुत्रमाविशति । स यद्यनेन किञ्चिदक्ष्णया कृतं भवति, तस्मादेनं सर्वस्मात् पुत्रो मुञ्चति । तस्मात्पुत्रो नाम स पुत्रेणैवास्मिन् लोके प्रतितिष्ठति । अथैनमेते देवाः प्राणा अमृता आविशन्ति पृथिव्यै चैनमग्नेश्च दैवी वागाविशति । सा वै दैवी वाग् यया यद्यदेव वदति तत्तद्भवति । दिवश्चैनमादित्याच्च दैवं मन आविशति । तद्वै दैवं मनो येनानन्द्येव भवति; अथो न शोचति । अद्भ्यश्चैनं चन्द्रमसश्च दैवः प्राण आविशति । स वै दैवः प्राणो यस्सञ्चरंश्चासञ्चरंश्च न व्यथते अथो न रिष्यति । स एवंविद् सर्वेषां भूतानामात्मा भवति । यथैषा देवता, एवं स यथैतां देवतां सर्वाणि भूतान्यवन्त्येवं हैवंविदं सर्वाणि भूतान्य-

वन्ति । यत् किञ्चेमाः प्रजाश्शोचन्ति, अमैवासां तद्भवति । पुण्यमेवामुं गच्छति । न ह वै देवान् पापं गच्छति ।

**परमात्मनः सङ्कल्पादिति** । सङ्कल्पादुत्पत्तिमुक्त्वेत्यन्वयः । **प्रसिद्धं मन एवेति** । न भवदभिमतेश्वरव्यूहप्रत्याशेति भावः । **अवच्छेदकमिति** । विषय इत्यर्थः । **पूर्ववद्योजनेति** । मनसस्तद्रूपमित्यादीनां वाचो रूपमित्यादिवदर्थ इति भावः । **तस्यै वाच इति** । तस्या वाच इत्यर्थः ।

**प्रतिस्पर्धिविरहितत्वमिति** । तस्यैव प्राणसंवादे ज्यैष्ठ्यस्य निर्धारितत्वादिति भावः ।

ननु मनःप्राणयोः प्रद्युम्नवाय्वाद्यधिष्ठेयत्वश्रवणात् कथमादित्यचन्द्राधिष्ठेयत्वमित्याशङ्क्याह — **मनःप्राणयोरिति** । ननु तलवकारिणां छन्दसि, ऋतं ज्योतिष्मदुदप्लवत सत्यं ज्योतिष्मदुपप्लवत तपो ज्योतिष्मदुपप्लवतेति ऋतसत्यतपश्शब्दितानां वाङ्मनःप्राणशब्दितानां प्रलयावस्थिततया श्रूयमाणानामीश्वरव्यूहरूपत्वात् , तलवकारिश्रुतिरेव व्यूहत्रये प्रमाणमित्याशङ्क्य निराकरोति — **ननु तलवकारिणां श्रुताविल्यादिना** ।

व्यूहत्रयस्य प्रमाणशून्यत्वादेव वाङ्मयपत्नीकात् मनोमयात् प्राणमयोत्पत्तिरिति चानुपपन्नमित्याह — **यत एवमिति** । बृहदारण्यके — वाङ्मयपत्नीको मनोमयः प्रतिपाद्यत इति शङ्कते — **ननु बृहादारण्यक एव षष्ठे अध्याय इति** । **पत्नीवतः पुरुषस्येति** । ततश्च पुत्रस्य प्राणमयस्य इन्द्रत्वप्रतिपादकसप्तान्नब्राह्मणेन दक्षिणाक्षिस्थस्य मनोमयस्य पितुरिन्द्रत्वप्रतिपादकस्यास्य वचनस्य विरोध इत्यर्थः । **अधिकरणे घञिति** । यद्यपि, 'यज्ञे समि स्तुव' इति यज्ञविषय एव घञ् । तथाऽपि छान्दसत्वाद्वा यज्ञत्वारोपाद्वा भविष्यतीति भावः । नन्वघमर्षणसूक्ते "ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायते" ति तपश्शब्दवाच्यमनोमयात् ऋतसत्यशब्दवाच्यवाङ्मयप्राणमययोरुत्पत्तिप्रतीतेः ईश्वरव्यूहप्रतिपादनं दृश्यत इत्याशङ्क्याह — **तलवकारिश्रुताविति** । प्रसङ्गादन्यदपि यादवप्रकाशोक्तं दूषयति — **किञ्च वाङ्मयपत्नीकादिति** ।

**चतुर्मुखोत्पत्तेः पूर्वमेवेति** । वाङ्मयस्तमोगुणोपाधिकतया रुद्रः, प्राणमयो रजोगुणोपाधिकतया चतुर्मुखः, मनोमयस्तु सत्त्वोपाधिकतया विष्णुरिति सिद्धत्वात् रुद्रपत्नीकाद्विष्णोश्चतुर्मुखजनिरुक्ता स्यादिति भावः । शैलालिब्राह्मण-शतपथब्राह्मणादिकं समन्वयसूत्रे द्रष्टव्यम् । **योजना त्वस्वरसेति** । न च सिद्धान्तेऽपि तमस्त्वावस्थाया अनादित्वाद्विभागस्य च जननरूपत्वाभावात्, तमस्सञ्जायत इति वाक्यस्वारस्यं नास्तीति वाच्यम् — विभागरूपावस्थान्तरसम्बन्धमादाय सञ्जायत इति प्रयोगोपपत्तेरिति भावः । **अक्षरं तमसि लीयत इति लयश्रवणविरुद्धा चेति** — अक्षरत्वावस्थाया आद्यावस्थात्वोक्तिरिति शेषः । **किञ्च स्वप्रकरण इति** । तदक्षरे परमे व्योमन्निति प्रकरण इत्यर्थः । **स्थानविशेषस्य संनिहितत्वाच्चेति** । 'ते ह नाकं महिमानस्सचन्त' इति स्थानविशेषस्य संनिहितत्वादित्यर्थः । ननु तमसः परस्तादित्यस्य परस्वरूपगततमोवैलक्षण्यप्रतिपादकत्वाभावे परमात्मस्वरूपस्य सर्वगततया परस्तादित्युक्त्यनुपपत्तिरित्याशङ्क्याह—**देशविशेषवर्तिपरमात्मविशेषण-त्वोपपत्तेरिति** । विग्रहविशेषविशिष्टपरमात्मस्वरूपस्य तमःपारवर्तित्वं सम्भवतीति भावः । **अतस्तमसः परस्य स्थानस्येति** । तमोविभागरूपस्य मुक्तपरमात्मस्थानस्य प्रत्यभिज्ञानासम्भवादित्यर्थः ।

उपदेशभेदान्नेति चेत् नोभयस्मिन्नप्यविरोधात् १-१-२८.

**सप्तम्यन्तर्बहिरिति** । पुरोवादिवाक्यगताया अपि अनेकार्थसाधारण-सप्तम्याः अनुवादिवाक्यगताया अपि एकार्थनियतया पञ्चम्या कांस्यभोजिन्यायेन अर्थनिर्णयो भवतीति भावः । यत्र हि गुरोः कांस्यभोजननियमो नास्ति, शिष्यस्य तु सोऽस्ति, तत्र क्रमेणोभयोरेकपात्रभोजने प्रसक्ते गुरुणाऽपि गुणभूतं शिष्यमनुसृत्य कांस्यभोजनमेवाद्रियते । सोऽयं कांस्यभोजिन्यायः । **स्थानविशेषादुपरिस्थिति-रिति**। स्थानविशेषस्योपरिस्थितिरिति पाठःसमीचीनः । अतर्थप्रत्यययोगे, षष्ठ्यतसर्थ-प्रत्ययेनेति षष्ठ्या एव युक्तत्वात् ।

इति ज्योतिरधिकरणम् ॥

---

## इन्द्रप्राणाधिकरणम् (११)

प्राणस्तथानुगमात् ११-२९.

कारणत्वाक्षेपकेति । जीवविशेषकारणत्वसाधकलिङ्गभूयस्त्वमित्यर्थः । श्रुतावुपयुक्तांशो लिख्यते — "प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम" मनुष्यस्येन्द्रलोकगमने हेतुमाह – "युद्धेन च पौरुषेण च ।" युद्धपौरुषाभ्यां प्रीतस्येन्द्रस्य धाम जगामेत्यर्थः । "तं हेन्द्र उवाच प्रतर्दन वरं ते ददानीति । स होवाच प्रतर्दनः, त्वमेव वरं वृणीष्व यं त्वं मनुष्याय हिततमं मन्यस इति । तं हेन्द्र उवाच एतदेवाहं मनुष्याय हिततमं मन्ये यन्मां विजानीयात्। त्रिशीर्षाणं त्वाष्ट्रमहनम्; अरुन्मुखान् यतीन् सालावृकेभ्यः प्रायच्छम्; बह्वीस्सन्धा अतिक्रम्य दिवि प्राह्लादीनतृणहम् अन्तरिक्षे पौलोमान् पृथिव्यां कालकञ्जान् । तस्य मे तत्र न लोम चामीयते । स यो मां विजानीयात् नास्य केनच कर्मणा लोको मीयते न मातृवधेन न पितृवधेन न स्तेयेन न भ्रूणहत्यया, नास्य पापं चकृषो मुखं नीलं वेति । स होवाच प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्स्व आयुः प्राणः प्राणो वा आयुः प्राण उवा अमृतम्। यावद्ध्यस्मिन् शरीरे प्राणो वसति तावदायुः । प्राणेन ह्येवामुष्मिन् लोके अमृतत्वमाप्नोति प्रज्ञया सत्यसङ्कल्पमिति । स यो मामायुरमृतमित्युपास्ते सर्वमायुरस्मिन् लोके एति आप्नोत्यमृतत्वम्"–इन्द्र उवाच "अस्तित्वे च प्राणानां निःश्रेयसम्" इति । मुख्यप्राणस्यास्तित्व एवेतरेषामिन्द्रियाणां श्रेय इत्यर्थः। तदेवोपपादयति, "जीवति हि वागपेतो मूकान् हि पश्यामः। जीवति चक्षुरपेतोऽन्धान् हि पश्यामः"इति – अथ खलु प्राण एव प्रज्ञात्मा इदं शरीरं परिगृह्योत्थापयति। तस्मादेतदेवोक्थमुपासीत। यो वै प्राणस्सा प्रज्ञा या वै प्रज्ञा स प्राणः । सह ह्येतावस्मिन् शरीरे वसतः । सहोत्क्रामतः तस्यैषैव दृष्टिः एतद्विज्ञानाति यत्रैतत्पुरुषस्सुप्तः स्वप्नं न कथञ्चन पश्यति अथास्मिन् प्राण एवैकधा भवति । तदैनं वाक् सर्वैर्नामभिस्सहाप्येति चक्षुस्सर्वै रूपैस्सहाप्येति श्रोत्रं सर्वैश्शब्दैस्सहाप्येति मनः सर्वैर्ध्यानैस्सहाप्येति, स यदा प्रतिबुध्यते यथाग्नेर्विस्फुलिङ्गा विप्रतिष्ठेरन् एवमेतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते, प्राणेभ्यो देवा देवेभ्यो लोकाः—

"यो वै प्राणः सा प्रज्ञा या वै प्रज्ञा स प्राणस्सह ह्येतावस्मिन् शरीरे वसतः। सहोत्क्रामतः, अथ खलु यथा प्रज्ञायां सर्वाणि भूतान्येकीभवन्ति तद्व्याख्यास्यामः – वागेवास्या एकमङ्गमदूदुहत् तस्याति नाम परस्तात् प्रतिविहिता भूतमात्रा। घ्राण एवास्या एकमङ्गं अदूदुहत्, तस्य गन्धः परस्तात् प्रतिविहिता भूतमात्रा। चक्षुरेवास्या एकमङ्गं अदूदुहत् तस्य रूपं परस्तात् प्रतिविहिता भूतमात्रा। श्रोत्रमेवास्या एकमङ्गं अदूदुहत् तस्य शब्दः परस्तात् प्रतिविहिता भूतमात्रा, जिह्वैवास्या एकमङ्गं अदूदुहत्, तस्या रसः प्रतिविहिता भूतमात्रा। हस्तावेवास्या एकमङ्गमदूदुहत्, तयोः कर्माणि परस्तात् प्रतिविहिता भूतमात्रा। शरीरमेवास्या एवमङ्गमुदूदुहत् तस्य सुखदुःखे परस्तात् प्रतिविहिता भूतमात्रा। उपस्थ एवास्या एकमङ्गमदूदुहत्। तस्यानन्दो रतिः प्रजातिः प्रतिविहिता भूतमात्रा, पादावेवास्या एकमङ्गमदूदुहत, तयोरित्याः परस्तात् प्रतिविहिता भूतमात्रा, प्रज्ञैवास्या एकमङ्गमदूदुहत, तस्यै धियो विज्ञातव्यं कामाः परस्तात् प्रतिविहिता भूतमात्रा।" इन्द्रियाणां मध्ये वागेवास्याः प्रज्ञाया एकमवयवमदूदुहत्, पूरितवती सम्पादितवती, तस्याः वाचस्सकाशात्, प्रज्ञायाः परस्ताद्वागे नामरूपा भूतमात्रा आहिता भवति। विषयाणां प्रज्ञांशत्वादिति भावः। एवमुत्तरत्रापि द्रष्टव्यम्। "प्रज्ञया वाचं समारुह्य वाचा सर्वाणि नामान्याप्नोति, प्रज्ञया प्राणं समारुह्य सर्वान् गन्धानाप्नोती"त्यादि। "प्रज्ञयैव धियं समारुह्य प्रज्ञयैव धियो विज्ञातव्यं, कामानाप्नोति" मनसा संयुक्तानि बाह्येन्द्रियाणि स्वकार्यकराणीत्यर्थः। तदेवोपपादयति – "नहि प्रज्ञापेता वाङ्नाम किञ्चन प्रज्ञापयेत् अन्यत्र मे मनोऽभूदित्याह नाहमेतं नाम प्रज्ञासिषमिती"त्यादि। "न वाचं विजिज्ञासीत वक्तारं विद्यात्। न गन्धं विजिज्ञासीत घ्रातारं विद्यात्" इत्यादि। "न इत्या विजिज्ञासीत एतारं विद्यात्"। इत्याः गम–नीत्यर्थः। "न मनो विजिज्ञासीत मन्तारं विद्यात् ता वा एता दशैव भूतमात्रा अधिप्रज्ञं दश प्रज्ञामात्रा अधिभूतम्। यद्धि भूतमात्रा न स्युः न प्रज्ञामात्राः स्युः, यद्वा प्रज्ञामात्राः न स्युः न भूतमात्राः स्युः न ह्यन्यतरतो रूपं किञ्चन सिद्ध्येत्। नो एवैतन्नाना", मात्राद्वयमप्यन्योन्याविनाभूतमित्यर्थः। "तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरावर्पिताः एवमेवैता भूतमात्रा प्रज्ञामात्रास्वर्पिताः, प्रज्ञामात्राः प्राणे अर्पिताः,

स एष प्राण एव प्रज्ञात्मा आनन्दोऽजरोऽमृतः स न साधुना कर्मणा भूयान् नो वासाधुना कर्मणा कनीयान्। एष ह्येवैनं साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषति। एष ह्येवैनमसाधु कर्म कारयति तं यमेभ्यो लोकेभ्योऽधो निनीषति। एष लोकपाल एष लोकाधिपतिरेष सर्वेशः। स म आत्मेति तद्विद्यात् स म आत्मेति तद्विद्यात्।"

**उपक्रमे इन्द्रशब्दनिर्दिष्टत्वा**दिति। अत्र केचित् — इन्द्रस्य प्रियं धामोपजगामेत्यत्रत्येन्द्रशब्दनिर्दिष्टस्य प्रसिद्धेन्द्रत्वं पूर्वपक्षसिद्धान्तसाधारणम्। अत इन्द्रशब्दनिर्दिष्टो जीवः परो वेति विप्रतिपत्त्यसम्भवात् इन्द्रप्राणशब्दनिर्दिष्ट इति भाष्यस्थेन्द्रशब्देन इन्द्रप्रयुक्तो मामितिशब्द एव विवक्षणीयः। तस्य च द्वितीयान्तत्वेन हिततमोपासनकर्मतयेति भाष्यस्वारस्यमपि सिद्ध्यतीत्याहुः। **नत्विन्द्रशब्दे**नेति। न तु मामिति शब्देनेत्यर्थः। इन्द्रशब्दनिर्दिष्टे विप्रतिपत्त्यभावस्य प्रागेव दर्शितत्वादिति द्रष्टव्यम्। तथा च, मदर्थस्तथानुगमादित्येवंरीत्या न सूत्रितमिति भावः। ननु परमतवज्जीवो वा मुख्यप्राणो वा इन्द्रदेवता वा परमात्मा वेति चतुष्कोटिकसंशयः किमिति न प्रदर्शित इत्याशङ्क्याह — **जीवमात्रलिङ्गसद्भावेऽपी**ति। **विशेषाकाङ्क्षाया**मिति। छागपशुन्यायेति भावः। **प्राधान्येन प्रतिपाद्यत्वशङ्काया** इति। नन्वेवं जीवमुख्यप्राणलिङ्गान्नेति चेदिति शङ्कायाः कथमुत्थानमिति चेत्, तस्य मुख्यप्राणलिङ्गनिर्वाहप्रकारप्रश्ननिर्वाहपरतया अदोषादिति भावः। **यदा स्वावस्थपरमात्मोपासनोपदेश** इति — ननु स्वावस्थपरमात्मोपासनोपदेशत्वसिद्धेः प्राणशब्दनिर्दिष्टपरमात्मत्वसिद्ध्युपजीवितया तदुपपाद्यस्य कथं तदुपपादककोटौ निवेश इति चेन्न — 'मामुपास्व' त्यस्यासम्भवदन्यथासिद्धिकत्वे प्राणशब्दस्य परमात्मपरत्वमिति सिद्धान्तकोटेरेवानुत्थितेस्तस्यापि तदुपपादककोटिनिवेशावश्यम्भावादिति भावः। **स्ववाक्ये**ति। विषयवाक्येत्यर्थः। **साधकाकारपरामर्शित्वेने**ति। परमात्मत्वसाधकानन्दादिमत्त्वेनानुगमादित्यर्थो विवक्षित इति भावः। **परमात्मत्वानुगुण्येनानुगमा**दित्यस्यापि स एवार्थः। **परमात्मतयानुगमा**दित्यस्यापि स एवार्थ इति द्रष्टव्यम्। नन्वेवं साध्यसाधकधर्मद्वयपरामर्शित्वे **तथा**शब्दस्यावृत्त्यादिप्रसङ्ग इत्याशङ्क्याह — **प्राणः परमात्मा तथानुगमा**दिति।

ननु तथाशब्दस्यानुगमविशेषणत्वे कथं तथा सत्येवोपपद्यत इति साध्य-धर्मपरामर्शित्वानुगुणभाष्यनिर्वाह इत्याशङ्क्य प्राणः परमात्मा तत्साधकानन्दत्वादि-योगादित्युक्ते अर्थात् साध्यस्यापि परामर्शित्वं सम्भवतीत्याशयेनाह—**बुद्धिस्थसाध्य-साधकधर्मेति । अन्यविशेषणभूतपरमात्मलिङ्गत्वादिति ।** तं मामायुरमृत-मित्युपास्वेत्यत्रामृतत्वादेर्ब्रह्मलिङ्गस्य उपासनान्विततया निर्देशादिति भावः । **सूत्रा-न्तरैकार्थ्यादिति ।** तेन कृतकरत्वादित्यर्थः ॥

**न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन् १-१-३०.**

**सालावृकयतिप्रदानेति ।** — "त्रिशीर्षाणं त्वाष्ट्रमहनमरुन्मुखान् यतीन् सालावृकेभ्यः प्रायच्छं बह्वीः सन्धा अतिक्रम्य दिवि प्राह्लादीनतृणहम् । अन्तरिक्षे पौलोमान् पृथिव्यां कालकञ्जान् तस्य मे तत्र न लोम चामीयते" इति श्रवणादिति भावः । अरुन्मुखान्, रौतीति रुत् वेदान्तवाक्यम्; तत्र मुखं येषां ते रुन्मुखाः, ततोऽन्ये अरुन्मुखाः तान् । यतीन् सालावृकेभ्यः वनश्वभ्यः प्रायच्छम्; बह्वीः सन्धाः बह्वीः प्रतिज्ञा अतिक्रम्य दिवि स्थितान् प्राह्लादीन् प्रह्लादपुत्रान् अतृणहं हिंसित-वानस्मि । पौलोमान् पुलोमपुत्रान्, कालकञ्जान् कालकञ्जाख्यानसुरान् अतृणहमिति पूर्वेण सम्बन्धः । तस्य एवं हिंसितवतो मे तत्र तादृशेऽतिघोरे दुष्कर्मणि सत्यपि लोमापि नामीयत नाहिंस्यत इत्यर्थः । **भूयस्त्वशब्देन व्याख्यात** इति । फलतो व्याख्यात इत्यर्थः । एतेन बहुशब्दात् पृथ्वादित्वादिमनिचि, "बहोर्लोपो भू च बहोः" इति निष्पन्नस्य भूमशब्दस्य बहुत्वमेवार्थः, न तु बहुतरत्वापरपर्यायं भूयस्त्वमिति शङ्का निराकृता । **भूमशब्दप्रकृतिं दर्शयितुमिति ।** प्रकृतिप्रत्ययव्युत्पत्ति-सिद्धार्थं दर्शयितुमित्यर्थः । बहुत्ववाचिना शब्देन भूयस्त्वस्य फलितत्वप्रकारं दर्शयति — **आपेक्षिकं हीति ।** बहुत्वस्य सावधिकत्वादवध्यपेक्षायां जीवलिङ्गानां संनिहितत्वात् ततो बहुत्वस्य सिद्धौ विवक्षितभूयस्त्वं सिद्ध्यतीति भावः । भाष्ये **वक्तरि परमात्मन्येव हि संभवति** इति । **वक्तरि** वक्त्रन्तर्यामिणीत्यर्थः । यद्वा वक्तरि परमात्मनीति व्यधिकरणे सप्तम्यौ, वक्तर्यनुप्रविष्टपरमात्मनीत्यर्थः; वस्तुतो वक्तुरिन्द्रस्य परमात्मत्वासम्भवादिति द्रष्टव्यम् । **स एष प्राण एवेत्यादिक-मुपात्तमिति ।** ततश्च पूर्वसूत्रविषयवाक्यस्य इहोपादानं न दोषायेति भावः ।

ननु, "नाम परस्तात् प्रतिविहिता भूतमात्रा गन्धः परस्तात् प्रतिविहिता भूतमात्रा" इत्यादिना नामगन्धरूपशब्दरसकर्मसुखदुःखानन्दगतिज्ञानव्यानामेव भूतमात्रात्वेन श्रुतौ दर्शनान्नामगन्धादीनामेव भूतमात्रात्वं तद्ग्राहिवाग्घ्राणादीनामेव प्रज्ञामात्रात्वं च युक्तमित्यभिप्रयन्नाह – **यद्वा भोग्यगन्धादय** इति । **अनुक्ताः पदार्थाश्चेति** । दशेन्द्रियमध्ये अनुक्तवायुस्पर्शनेन्द्रियेत्यर्थः । **दश दशोक्ता** इति । दशैव भूतमात्रा अधिप्रज्ञं दश प्रज्ञामात्रा अधिभूतमिति प्रत्येकं दशत्वेनोक्ता इत्यर्थः । **नो एवैतन्नानेति** । नानाशब्दो विनार्थः । भूतमात्रास्वरूपं प्रज्ञामात्रास्वरूपाविनाभूतमित्यर्थः । **प्रज्ञामात्राशब्द इतीति** । न च वाच्यमित्यनेनान्वयः । **न हि वागादीन्द्रियाणि भूतमात्राणामाश्रय** इति । ननु "दशैव भूतमात्रा अधिप्रज्ञम्" इति वाक्ये भवतामपीयमनुपपत्तिः समाना; तत्र प्रज्ञामात्राशब्दस्य इन्द्रियपरत्वात् । तत्र च गौणतया निर्वाहे प्रकृतेऽपि तस्य सुवचत्वादित्यस्वरसादाह – **तथा दशैवेति** ।

**तत्तदर्थविषयज्ञानपर इति चेदिति** । तत्र च विषयतया अर्पितत्वं सम्भवतीति भावः । **एकदेशभूतानि हि चिदचित्तत्त्वानीति** । ततश्च भूतमात्राः प्रज्ञामात्रास्वित्यस्य चिदचिद्विशिष्टब्रह्मैकदेशभूताचित्त्वं तादृशे चित्त्वेऽर्पितमित्यर्थ इति भावः । दृष्टान्ततया निर्दिष्टस्य प्राणशब्दस्यानेकार्थप्रयोगमुपपादयति – **प्राणशब्दस्तावदित्यादिना** । विशेषतो जीवे प्रयुक्तत्वमुपपादयति – **तथा प्रज्ञाशब्दश्चेत्यादिना** । **उपरितनखण्डगतप्रज्ञाशब्दवदिति** । "प्रज्ञया वाचं समारुह्य – न हि प्रज्ञापेता वाक् नाम किञ्चन प्रज्ञापयेत् अन्यत्र मनोऽभूत्" इत्युत्तरखण्डगतप्रज्ञाशब्दवदित्यर्थः । **प्राणोऽनूत्क्रामतीति श्रुत्यन्तरैकार्थ्याच्चेति** । न च सहोत्क्रमणानूत्क्रमणश्रुत्योः कथमैकार्थ्यमिति वाच्यम् – अनुगन्तर्यपि सहप्रयोगदर्शनेन तयोरैकार्थ्यसम्भवादिति भावः । **एकं भवतीत्युपक्रम्येति** । उपकारकत्वेन एकं भवतीत्यर्थः । **नेत्यमिति** । "नेत्यां विजिज्ञासीत एतारं विद्यात्" इति श्रुतिः । इत्या – गमनम् ।

**प्राथम्यप्रत्यार्थसिद्धत्वादपीति** । वस्तुतस्तु प्रथमव्याख्यायाम्; तद्यथा रथस्येति वाक्यार्थीभूतस्य निखिलचिदचिद्‌गोचरत्वस्यैव हेतुत्वोपन्यासेनाक्षर-

विस्वारस्यप्राबल्यस्य फलितत्वमपि नास्तीति द्रष्टव्यम्। अध्यात्मशब्दस्यात्मनीत्यर्थ इति। "विभक्त्यर्थे यदव्ययम्" इत्यव्ययीभावसमास इति भावः। अस्यां ति.ति— अधिगतः — आधारत्वेनाधिगतः आत्मा — परमात्मा येस्ते अध्यात्मानः, परमात्मासाधारणधर्मा इत्यर्थः। अध्यात्मनां सम्बन्धो अध्यात्मसम्बन्ध इत्यर्थ इति भावः। आयुषः प्रभुत्वमिति। "यावद्ध्यस्मिन् शरीरे प्राणो वसति तावदायुः" इति श्रुतेरिति भावः। इन्द्रियाश्रयत्वमिति। "अस्ति वे च प्राणानां निश्श्रेयस" मिति प्राणशब्दवाच्यस्य परस्यास्तस्य एव प्राणशब्दितसर्वेन्द्रियाणां निःश्रेयसशब्दितपुरुषार्थप्रतिपादनादिति भावः। शरीरोत्थापकत्वमिति। "जीवति वागपेतो मूकान् हि पश्यामः। जीवति चक्षुरपेतोऽन्धान् हि पश्याम" इत्यस्य "इदं शरीरं परिगृह्योत्थापयती" ति श्रवणादिति भावः। विषयेन्द्रियादिविज्ञानप्रतिक्षेपेणेति। यद्यपि शङ्करभाष्ये— "एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिताः स एष प्राण एव प्रज्ञात्माऽऽनन्दोऽजरोऽमृतः" इति विषयेन्द्रियव्यवहाराधारभूतं प्रत्यगात्मानमेवोपसंहरति। "स म आत्मेति विद्यात्" इति चोपसंहारः प्रत्यगात्मपरिग्रह एव साधुः—इत्येव वर्तते, न तूक्तरूपेण, तथापीदं फलितार्थकथनम्, तथा हि—भूतमात्राशब्दितानां विषयाणां प्रज्ञामात्राशब्दितेषु इन्द्रियतज्जन्यज्ञानेषु अर्पितत्वं नाम तदधीनव्यवहारत्वम्, तद्भास्यत्वमित्यर्थः। एवं प्रज्ञामात्राणामपि प्राणेऽर्पितत्वं तादृशमेव। ततश्च सर्वभासके तस्मिन् इतरेषां कल्पितत्वात् तस्यैव विज्ञेयत्वम्; नेतरेषामिति फलतीति भावः। इन्द्रशरीरेऽपि सम्भवतीति। ततश्च तदिन्द्रियाश्रयत्वतच्छरीरस्थापकत्वतदायुरवधित्वानामिन्द्रदेवतायामपि सम्भवादुक्तहेतुभिरिन्द्रप्रतिक्षेपो न सम्भवतीति भावः। शङ्कते—सदेव सोम्येदमितीति। इदमुपलक्षणम्। "यतो वा इमानि भूतानि जायन्ते", "यदिदमस्मिन्ब्रह्मपुरे", "अस्माच्छरीरात्समुत्थाय" इत्यादिष्वपि संनिहितव्यक्तिविशेषपरामर्शित्वादर्शनादित्यपि द्रष्टव्यम्। सर्वनामपदस्य साधारणत्वादिति। ततश्च सर्वशरीरगतायुरवधित्वसर्वशरीरोत्थापकत्वसर्वेन्द्रियाश्रयत्वानामनन्यकरणाद्युपहितत्वेन परामृष्टेन्द्रदेवताया न सम्भव इति भावः। इन्द्रस्यापि स्वात्मत्वाभिमानमिति। अहमिति भासमानत्वेन प्रत्यक्त्वमिति। प्रथमसूत्रोक्तरीत्यैव दिन्द्रदेवताया अपि प्रत्यक्त्वमस्तीति भावः।

**शास्त्रदृष्ट्या तूपदेशो वामदेववत् १-१-३१.**

**तत् कथमिन्द्रशब्देनेति** । मामिति शब्देनेत्यर्थः । न तु, इन्द्रस्य प्रियं धामेत्यत्रत्येन्द्रशब्देनेति भ्रमितव्यम्, तत्रेन्द्रशब्दस्य जीवपरत्वे विवादाभावादिति ध्येयम् । **तद्दैतत्पश्यन्नित्येतद्व्याख्यानमिति** । ननु शरीरवाचिशब्दानां शरीरिपर्यवसानस्य, "तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत् तथर्षीणां तथा मनुष्याणाम्" इति पूर्ववाक्यनिर्दिष्टत्वात् तदेतच्छब्दाभ्यां कथं परामर्शः । किञ्च शरीरवाचिशब्दानां शरीरिपर्यन्तत्वज्ञानस्य शरीरिणि शरीरवाचिशब्दप्रयोगौपयिकत्वेऽपि अहं मनुरभवमिति प्रतिपत्तावहेतुत्वात् तत्कथनञ्च निष्प्रयोजनमिति चेन्न — "ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेदहं ब्रह्मास्मीति । तस्मात्तत्सर्वमभवत्" इति तत्पूर्ववाक्ये ब्रह्मणः, "सर्वमभवत्" इति सर्वात्मकत्वप्रतिपादनेन सर्वशब्दवाच्यत्वप्रतीत्या शरीरवाचिशब्दानां शरीरिपर्यन्तत्वस्यापि आक्षेपतः प्रतीतत्वेन तस्य, तद्दैतत्पश्यन्नित्यत्र परामर्शे दोषाभावात् । यच्चोक्तं शरीरवाचिशब्दानां शरीरिपर्यन्तत्वज्ञानस्य शब्दप्रयोगौपयिकत्वेऽपि प्रतीत्यनुपयुक्तत्वादिति, तदपि न—अत्र अहं मनुरित्यादिप्रतीतेरपि शब्दानुविद्धतया तादृशशब्दप्रतीतौ तज्ज्ञानस्याप्युपयुक्तत्वादिति दिक् ।

**जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् १-१-३२.**

**उपदेष्टुमिति हि वक्ष्यत इति** । "तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्" इति तुमुनः प्रकृत्यर्थीभूतोपदेशप्रयोजनत्वाभिधायित्वादिति भावः । **वक्तारं मां च विजानीहीत्यर्थ इति** । ननु, "न वाचं विजिज्ञासीत वक्तारं विद्यात् न गन्धं विजिज्ञासीत घ्रातारं विद्यात्" इत्यादिप्रकरणं सामान्यतो वागादीन्द्रियाणां ज्ञेयत्वनिषेधेन तद्विलक्षणस्य तदुपकरणकस्यात्मनो ज्ञेयत्वप्रतिपादनपरमिति प्रतीयते ; न तूक्तपरतयेति चेत्— सत्यम्, तथैवार्थः । "न वाचं विजिज्ञासीत वक्तारं विद्यात्" इति जीवासाधारणतया प्रतीतोऽपि वक्तृत्वादीनामिन्द्रियादीन्द्रलिङ्गानुसारेण इन्द्रे एव पर्यवसानं वक्तव्यमित्यत्रभिप्रेत्य वक्तारं मामित्यर्थकथनमुपपद्यते । अत्र चकार एवकारार्थकः । भाष्ये मुख्यप्राणलिङ्गान्युक्तानि । "प्राणो हि भूतानामायुः", "यस्मिन्नुत्क्रान्ते शरीरं पापिष्ठतरमिव दृश्यते" इत्यादिश्रुत्या आयुष्प्रदानस्वातन्त्र्यशरीरस्थापकत्वयोर्मुख्य-

प्राणधर्मत्वावगमादिति भावः। इदमुपलक्षणम्—"यो वै प्राणस्सा प्रज्ञा या वै प्रज्ञा स प्राणः सहैतावस्मिन् शरीरे वसतः; सहोत्क्रामतः" इति द्विवचनश्रुतेः सहोत्क्रमणलिङ्गानुगृहीतायाः परब्रह्मणि योजयितुमशक्यतया जीवमुख्यप्राणलिङ्गानामपि प्रतिपिपादयिषितत्वमस्तीत्यपि द्रष्टव्यम्। **अनतिविप्रकृष्टमिति**। नाध्यात्मसंबन्धभूम्नः सम्प्रतिपन्नस्याक्षेपो न सम्भवति। किन्तु जीवमुख्यप्राणलिङ्गानामपि सत्त्वान्न परं ब्रह्मैवात्र प्रकरणे प्रतिपाद्यते। अपि तु त्रयोऽपीति चेदित्येव निषेध्याध्याहारो युक्त इति चेन्न— मुख्यप्राणलिङ्गादध्यात्मसम्बन्धभूमा नेत्यस्याध्यात्मसम्बन्धभूमा प्रकरणस्य ब्रह्ममात्रप्रतिपादकत्वबाधको नेत्येवाभिप्रायात्। **स्वरूपेणानुसन्धानमित्यस्य** निर्विशेषात्मस्वरूपोपासनपरत्वभ्रान्तिं वारयति — **अद्वारकगुणविशिष्टेति**। दिव्यात्मस्वरूपनिष्ठाः सत्यत्वादयो गुणाः अद्वारकगुणाः। ननु तत्सृष्ट्वेत्यादिप्रकरणस्य स्वरूपोपदेशपरत्वेन उपासनविध्यश्रवणात् कथं तत्रोपासात्रैविध्यसिद्धिरित्यत आह — **सत्यं ज्ञानमनन्तमितीति**। प्रतिपादितस्येति शेषः। **वेद्यत्वविधानादिति**। उपास्यत्वविधानादित्यर्थः। एवमुत्तरत्रापि विदिरुपासनपरो द्रष्टव्यः। **उपासनमुच्यत इति चेदिति**। ननु त्वदुक्तं चिदचिच्छरीरकोपासनम्; सच्च त्यच्चाभवदित्यस्य, स य एवंविदित्यत्रासन्निहितत्वादिति भावः। **विद्याभेदप्रसङ्गादिति**। ननु, "अनुत्तमेषूत्तमेषु लोकेषु" इतिवत् अन्तर्यामिब्राह्मणादिवच्चानेकस्थानस्थितस्य ब्रह्मण एकस्यां विद्यायामुपास्यत्वं सम्भवतीति चेत्— "सम्बन्धादेवमन्यत्रापी" त्यधिकरणे स्थानभेदे विद्याभेदस्य समर्थयिष्यमाणत्वादित्यभिप्रायः। **विग्रहातिदेश इति**। "यश्चासावादित्ये स एकः" इत्यत्र एक इत्यनेन एकाकारविग्रहवत्त्वं स्वरूपत ऐक्यं चोच्यत इति भावः। **बुभुत्साहेतुत्वमिति**। प्रश्नहेतुत्वमित्यर्थः; "अथातोऽनुप्रश्नाः" इति प्रश्नस्यैव समभिव्याहारादिति ध्येयम्। **तत्पुरुषे तुल्यार्थेति**। "तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः" इत्यव्ययस्य पूर्वपदप्रकृतिस्वरविधानात् आद्युदात्तत्वं स्यादिति भावः। **अहंग्रहेणेति**। आत्मत्वबुद्ध्येत्यर्थः। **अर्थसिद्धः प्रश्न इति**। यद्यपि "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" इति प्राचीनमन्त्रवर्णतन्त्र एव इयं शङ्का व्यावर्तिता, तथापि तद्दृढीकरणार्थत्वात् प्रश्नानां नानुपपत्तिरिति द्रष्टव्यम्। **अन्नमयमात्मानमुपसङ्क्रामतीत्यादिवाक्यगतान्नमयादिशब्दार्थमाह — अन्नमयादिव्यष्टिसमष्टिविभू-**

तिक्रमिति। **स्थानविशेषोपलक्षणार्थं स यश्चायमित्याद्युक्तमिति।** इद-मुपलक्षणम् — आनन्दमयस्य देवताविशेषत्वनिर्धारणार्थतयाऽपि तद्वाक्यमाफल्यम्; आदित्यान्तर्वर्तिनः पुण्डरीकाक्षत्वेन नारायणत्वस्य सिद्धत्वादित्यपि द्रष्टव्यम्। "सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्" इति त्रैविध्यप्रतिपादकस्फुटतरवाक्ये विद्यमाने भाष्ये आनन्दवल्लीवाक्योदाहरणस्य प्रयोजनमाह — **भोक्तृभोग्ययोरित्यादिना।**

**पाशुपताधिकरणे तथा अनुवदिष्यमाणत्वादिति।** केवलपरतत्त्व-प्रतिपादनपरनारायणानुवाकसिद्धतत्त्वपराः केषुचिदुपासनवाक्येषु श्रुताः प्रजापति-शिवेन्द्रादिशब्दा इति, "शास्त्रदृष्ट्या तूपदेशो वामदेववत्" इत्यत्र प्रतिपादित-मित्यनुवदिष्यमाणत्वादित्यर्थः। **परमात्मासाधारणधर्मयोगादिति।** ननु "आकाश इति होवाच सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते" इत्यादिषु परमात्मासाधारणधर्मयोगोऽस्ति — तथाऽपि तत्र न तद्विशिष्टोपासनम्, योगादेव परमात्मनि आकाशादिशब्दानां वृत्तिसम्भवादिति चेन्न — यत्रानन्यथासिद्धं चिद-चिल्लिङ्गं परमात्मलिङ्गं च तादृशस्थले तद्विशिष्टवाचित्वमिति तात्पर्यात्, अत एवोक्तं श्रीवेदान्ताचार्यैः — "परविद्यासु जीवोक्तिर्निरुक्त्यादेः पराश्रया।

तल्लिङ्गानन्यथासिद्धौ तद्विशिष्टावलम्बिनी॥"

इति। अत एव सर्वपरविद्यासु त्रिविधोपासनवादोऽपि निरस्त इति वेदितव्यम्।

**कैश्चिदेवं वर्णितमिति।** मृषावादिभिरित्यर्थः। **तत्सङ्कीर्तनमिति।** प्राण-व्यापारकीर्तनं परमात्मन्यप्यविरुद्धमिति शेषः। **तस्यौपाधिकभेदप्रतिक्षेपेणेति।** ज्ञानशक्तिक्रियाशक्त्याश्रययोः प्रत्यगात्मोपाधिभूतयोः बुद्धिप्राणयोर्निर्देशमुखेन तत्त-दुपाधिकृतभेदपरित्यागेन जीवस्वरूपं ब्रह्मैवात्र प्रकरणे प्रतिपाद्यमिति ज्ञापनार्थम्। अत एवोपाधिद्वयोपहितस्य प्रत्यगात्मनः स्वरूपेणाभेदमभिप्रेत्य, "यो वै प्राणस्सा प्रज्ञा या वै प्रज्ञा स प्राणः" इत्यभेदो निर्दिष्ट इति वदन्तीति भावः।

**एकवाक्येनैव हि विधीयत इति।** ननु तावता इन्द्र-त्वष्ट्प्राणविशिष्ट-ब्रह्मोपासनलाभेऽपि इन्द्रस्य, तं मामिति विशेषणेन पूर्वोक्तत्वाष्ट्रहननादिगुणकत्वलाभेऽपि वक्तृत्वप्रवृत्त्यादिगुणकत्वस्य वक्ष्यमाणस्यालाभात् प्राणस्यायुष्ट्वादिगुणकत्वलाभेऽपि इन्द्रियनिःश्रेयसहेतुत्वशरीरोत्थापकत्वादिगुणकत्वस्य वक्ष्यमाणस्यालाभाच्च तत्तद्गुण-

विशिष्टेन्द्रप्राणविशेषितब्रह्मोपासनसिद्धये, वक्तारं विद्यादित्यादिषु, एतदेवोक्थमुपासीतेत्यत्र च जीवमुख्यप्राणोपासने विध्यन्तराणां स्वीकरणीयत्वेन वाक्यभेददोषो दुस्तरः। न चावाक्यभेदार्थं वक्ष्यमाणगुणविशिष्टेन्द्रप्राणविशेषितब्रह्मोपासनम्, "तं मामायुरमृतमित्युपास्स्व" इत्यत्रैव विधेयमस्त्विति वाच्यम्। अत्र वक्ष्यमाणतत्तद्गुणसमर्पकशब्देषु तत्तद्गुणोपासनाविधिषु चाग्रे श्रूयमाणेषु तथा स्वीकारस्यायुक्तत्वात्। अन्यथा, "अग्निहोत्रं जुहोती"त्यत्रापि अवाक्यभेदार्थं प्रकरणगतविध्यन्तरश्रुतदध्यादिवैकल्पिकसकलद्रव्यविशिष्टाग्निहोत्रविधिरिति कल्पनापत्तेरिति चेन्न — अग्निहोत्रवाक्येन दध्यादिवाक्यानामिव, "तं मामायुः" इत्यादिवाक्येन "एतदेवोक्थ"मित्यादिवाक्यानां गुणविधायकतया वाक्यैकवाक्यत्वेन निर्वाहे दोषाभावात्। किञ्च ज्ञेयब्रह्मपरमेवेदं प्रकरणमिति वदतः तव मतेऽपि भूमविद्यायां ज्ञेयब्रह्मप्रकरणमध्ये नामवागाद्युपासनविधिस्वीकारवत् जीवमुख्यप्राणयोरपि उपासनस्वीकारः किं न भवेत्। यदि च जीवमुख्यप्राणोपन्यासस्य शुद्धब्रह्मप्रतिपत्त्यर्थत्वम्, तर्हि, "इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः" इत्यादौ, "आध्यानाय प्रयोजनाभावात्" इत्यधिकरणोक्तरीत्या इन्द्रियार्थाद्यनुक्रमणस्य परमपुरुषप्रतिपत्त्युपायत्ववत् भूमविद्यायां नामादिप्रतिपादनस्यापि उत्तरोत्तरभूयस्त्वप्रतिपादनद्वारा ब्रह्मणः सर्वतोभूयस्त्वप्रतिपादन एव तात्पर्यमिति वक्तुं सुशकत्वेन वैश्वानरविद्यायां व्यस्तोपासनवत् नामाद्युपासनविधेरपि त्यागप्रसङ्ग इत्यलमतिचर्चया। ननु तथापि स्वरूपोपासनविधेः, तं मामायुरित्यादावलाभेन, स म आत्मेति विद्यादित्यत्रैव विधिः स्वीकर्तव्य इति वाक्यभेदोऽवश्यम्भावी। न च, अमृतमित्यनेन स्वरूपोपासनलाभः। 'प्राणो वा आयुः प्राण उ वा अमृत'मिति वाक्यशेषेणामृतत्वस्य प्राणविशेषणतयाऽवगमेन ब्रह्मस्वरूपावगमकत्वाभावादिति चेन्न — केवलप्राणे अमृतत्वासम्भवेन प्राणशब्दस्यामृतशब्दितब्रह्मस्वरूपे प्राणविशिष्टप्रतिपादनपरत्वादिति ध्येयम्। **स्थानप्रमाणेनेति।** तच्च प्रागेव दर्शितमनुसन्धेयम्।

इति दशोपनिषद्भाष्यकार - षष्टिप्रबन्धनिर्माणकर्मीण - श्रीरङ्गरामानुजमुनिविरचितायां श्रुतप्रकाशिकाव्याख्यायां भावप्रकाशिकायां प्रथमस्याध्यायस्य प्रथमः पादः।

श्रीमते रङ्गरामानुजमहादेशिकाय नमः॥

श्रीः

श्रीमते रङ्गरामानुजमहादेशिकाय नमः ।

# श्रुतप्रकाशिकाव्याख्या भावप्रकाशिका ।

## प्रथमाध्याये द्वितीयपादे सर्वत्रप्रसिद्ध्यधिकरणम् (१)

**पादानुयायिनोऽर्थस्येति** । चिदचिद्विलक्षणकारणास्तित्व [वाद] स्येत्यर्थः । नन्वर्थभेदादेव पादक्रमोपपत्तौ सङ्गतिः कुतः सूत्रकाराभिमतेत्याशङ्क्याह — **पादभेदो ह्यर्थभेदादिति** । न तु क्रमविशेष इति भावः । **सङ्गतिविशेषादिति** । पौर्वापर्यनियामकजिज्ञासाविषयत्वस्यैव सङ्गतित्वादिति भावः । **तत्र किं प्रमाणमिति** । सङ्गतिविशेषस्य सूत्रकाराभिमतत्वे किं प्रमाणमित्यर्थः । ननु जन्मादिसूत्रत्रयस्यापि प्रथमाधिकरणाधीनारम्भत्वेऽपि शास्त्रारम्भसिद्ध्यर्थत्वमव्याहतमेव; ईक्षत्यधिकरणोपक्रमत्वात् शास्त्रस्य । ततश्च प्रथमाधिकरणस्य शास्त्रारम्भसिद्ध्यर्थत्वकीर्तनमयुक्तमित्याशङ्क्याह— **यद्वा जन्मादित्रिसूत्र्या इति । प्रथमपादे सङ्गतिरप्यस्तीति** । शास्त्रान्तर्भूतत्वमप्यस्तीत्यर्थः । नन्वीक्षत्यधिकरणादारभ्यैव शास्त्रम्; न ततः प्राचीनस्य शास्त्रत्वम्, शास्त्रारम्भार्थतया शास्त्रान्तर्भावस्तु प्रथमाधिकरणस्यापि समानः । अतः प्रथमाधिकरणानुक्रमे, 'शास्त्रारम्भसिद्धये' इत्युक्तमयुक्तमित्याशङ्क्याह— **यद्वा शास्त्रारम्भसिद्ध्य इति पदमिति । आत्यन्तिकलयपर्यन्तत्वाभिप्रायेणेति** । आत्यन्तिकलयो मोक्षः । मोक्षस्यानन्दरूपत्वादिति भावः । वस्तुतः परमसाम्यावृत्तेः मुक्तगतामृतत्वस्य कथं तदसाधारणत्वमित्याशङ्क्याह—**प्रदेयत्वेनेति** । **चिह्नभूतमित्यर्थ इति** । तथा चानन्दधर्मस्यापि तच्चिह्नत्वमुपपद्यत इति भावः । **भाष्ये अतिपततीति** । प्रमाणान्तरविषयत्वगन्धशून्य इत्यर्थः । **औत्पत्तिकसूत्र इति** । 'औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः' इति सूत्र इत्यर्थः । **प्रत्यक्षसूत्र इति** । 'सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षम्' इति सूत्र इत्यर्थः । **अन्ययोगव्यवच्छेदस्त्वपाद्या क्रियत इति** । आक्षेपपरिहारमुखेन नायोगव्यवच्छेदद्वाढ्यमित्यर्थः । **ब्रह्मलिङ्गगतमिति परैरुक्तमिति** । स्पष्टब्रह्मलिङ्गादि-

वाक्यानि प्रथमपादे चिन्तितानि; अस्पष्टब्रह्मलिङ्गादिवाक्यानि द्वितीयतृतीययोः विचार्यन्ते। तत्र द्वितीयपादः सविशेषप्रधानः। तृतीयस्तु निर्विशेषप्रधानः। चतुर्थस्तु कारणवाक्यविगानपरिहारपरः" इति परैरुक्तमित्यर्थः। **लिङ्गिप्रतिपादनमिति।** अव्यक्तादिशब्दैः प्रधानादेः प्रतिपादनादिति भावः। **न तल्लिङ्गप्रतिपादनमिति।** द्वितीयतृतीयपादयोरिव न लिङ्गमात्रप्रतिपादनमिति भावः।

सर्वत्र प्रसिद्धोपदेशात् १-२-१.

**सर्वं खल्विदमित्यादिरिति।** 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत, अथ खलु क्रतुमयः पुरुषः। यथाक्रतुरस्मिन् लोके पुरुषो भवति, तथेतः प्रेत्य भवति। स क्रतुं कुर्वीत, मनोमयः प्राणशरीरो भारूपः सत्यसङ्कल्पः आकाशात्मा सर्वकर्मा सर्वकामस्सर्वगन्धस्सर्वरसस्सर्वमिदमभ्यात्तोऽवाक्यनादरः। एष म आत्मान्तर्हृदयेऽणीयान्, व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामाकतण्डुलाद्वा। एष म आत्मान्तर्हृदये ज्यायान् पृथिव्या ज्यायान् अन्तरिक्षात् ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्यः सर्वकर्मा सर्वकामस्सर्वगन्धस्सर्वरसस्सर्वमिदमभ्यात्तोऽवाक्यनादर एष म आत्मान्तर्हृदये। एतत् ब्रह्मैतमितः प्रेत्याभिसंभवितास्मीति यस्य स्यादद्धा न विचिकित्सास्तीति ह स्माह शाण्डिल्यश्शाण्डिल्यः" इति श्रुतिः। व्याख्यान्तराभिमतां विषयशुद्धिं दर्शयति भाष्ये **स क्रतुं कुर्वीतेति। मनोमय उपास्यतया संबध्यत इति।** अयं भावः — मनोमयादिपदानां प्रथमान्ततया 'स क्रतुं कुर्वीते' ति प्रकृतोपासनकर्तृविशेषणसमर्पकत्वमेव युज्यते; न तूपास्यविशेषणसमर्पकत्वमिति न वाच्यम्, मनोमयादिपदानामनपेक्षितोपासनकर्तृसमर्पकत्वं परित्यज्य विभक्तिविपरिणामेन उपास्यविशेषणसमर्पकत्वस्यैव युक्तत्वादिति। **फलवत्सन्निधाविति।** 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीते' ति वाक्ये शान्त्यर्थतया उपासनविधानेन तस्य फलवत्त्वात्। 'स क्रतुं कुर्वीते' ति वाक्ये फलाश्रवणात्, फलवदफलन्यायेन तदङ्गत्वं प्रसज्येतेति भावः। **विहितोपासनाधिकृतस्यैवेति।** न च तस्यैवोपासनान्तरं विधीयत इत्यत्र किं मानम्; येनास्याः शङ्काया उत्थितिः स्यात्; उपकोसलदहरादिविद्यावत् विद्यान्तराननधिकृताधिकारिविषयत्वसंभवादिति वाच्यम् — शान्तेः ब्रह्मोपासनाङ्गतया शान्त्यर्थोपासनाविधि-

कृतस्यैव 'स क्रतुं कुर्वीते'त्युपासनायामप्यधिकृतत्वादित्याशयात्, यद्यपि शान्त्यर्थ-तया उपासनविधानमिति न परेषां मतम्; मृषावादिभिस्तदनभ्युपगमात्। इत्थं हि तन्मतम्, 'स क्रतुं कुर्वीते'ति वाक्ये उपासनं विधीयते। तदनुवादेन तदङ्गतया 'शान्त उपासीते'ति वाक्येन शमगुणो विधीयते। तस्य विधेरयमर्थ-वादः, 'सर्वं खल्विदं ब्रह्म तज्जलान्' इति। तज्जत्वतल्लत्वतदनत्वैस्सर्वस्य ब्रह्मात्म-कत्वेन एकरसकत्वाद्रागद्वेषादेः कर्तुमयुक्तत्वेन शम एव कर्तुमुचित इति, 'शूर्पेण जुहोति, तेन ह्यन्नं क्रियत' इतिवदिति—तथापि व्याख्यात्रन्तराभिमतमिति तथोक्तम्। अत एवोत्तरत्र व्याख्यात्रन्तरशब्दोऽपि मृषावादिव्यतिरिक्तविषय एवेति द्रष्टव्यम्। उपासनप्राचुर्याद्विति। 'क्रतुमयः पुरुष' इत्यत्र क्रतुशब्द उपासनपरः, मयट्-प्रत्ययश्च प्राचुर्यार्थे इति भावः।

क्रतुविधिपरत्वादस्येति। यागविधिपरत्वादित्यर्थः। प्रकृतोपास्यविषयत्व इति। 'सर्वं खलु' इति वाक्यविहितोपासनोपास्यविषयत्व इत्यर्थः। ननु मनोमय-त्वादीनां 'सर्वं खल्विदं ब्रह्मे'ति वाक्यप्रकृतब्रह्मविशेषणत्वादेव प्रकृतोपास्य-विशेषणसमर्पकत्वं भविष्यतीत्याशंक्याह — ब्रह्मपरत्वानिश्चयादिति। मनोमय-त्वादिगुणके संशय इति भाव इत्यनन्तरं सूच्यत इति शेषः। ततश्च उपासनस्येति पदेनेति तृतीयान्तपदस्य नान्वय इति शङ्का अपास्तेति ध्येयम्। उपकरणोपकरणित्वलक्षणसंबन्धविशेषस्यास्पष्टत्वादिति। इद-मुपलक्षणम् — उदाहृताज्जीवलिङ्गादपि वाक्योपक्रमगततज्जत्वतल्लत्वादिहेतुक-सार्वात्म्यरूपब्रह्मलिङ्गस्य स्पष्टतया अस्पष्टब्रह्मलिङ्गानां द्वितीयपादे विचार्यत्वमिति मृषावाद्युक्तमयुक्तम्। न च भिन्नविषयवाक्यस्य मनोमय इत्यादेः पूर्वपक्षे भिन्नवाक्यतया मनोमयवाक्ये ब्रह्मलिङ्गस्यास्पष्टतेति वाच्यम्—तर्हि ज्योतिर्वाक्यस्यापीह पादे विचार्यत्वापत्तेः, तत्पूर्ववाक्ये सर्वभूतचरणत्वरूपब्रह्मलिङ्गस्य स्पष्टत्वेऽपि ज्योतिर्वाक्ये अस्पष्टत्वस्य तस्यापीह चिन्त्यत्वप्रसङ्गादित्यास्तां तावत्। उभयाकाङ्क्षेति व्याख्येयं पदम्॥ परस्परान्वय इति। 'न वक्तुं युक्त'मित्यनेन 'उभयाकाङ्क्षानिबन्धन-सिद्धे'रिति परस्परान्वय इत्यर्थः। वाक्ये योजनां मासिसमाप्य वाक्यान्तर्गतस्य मनोमयत्वादिगुणकेनेत्यस्य विशेष्यालोचनेन प्रयोजनं दर्शयति — मनोमयत्वादि

चेत्यादिना। **परैर्व्याख्यातमिति।** यद्यपि परैर्नैवं व्याख्यातम्; अपि तु परमेव ब्रह्मेह मनोमयत्वादिभिर्धर्मैः उपास्यम्। कुतः? सर्वत्र प्रसिद्धोपदेशात्, यत्सर्वेषु वेदान्तेषु प्रसिद्धं ब्रह्मशब्दस्यालम्बनं जगत्कारणम्, इह च 'सर्वं खल्विदं ब्रह्मे'ति वाक्योपक्रमे श्रुतम्, तदेव मनोमयत्वादिधर्मविशिष्टमुपदिश्यत इति व्याख्यातम् – तथापि फलितार्थमादाय तथोक्तमिति द्रष्टव्यम्। **कथं युक्त्यन्तरोक्तिरिति।** परोक्तयुक्त्यनादरेण किमर्थं युक्त्यन्तरमुपन्यस्यत इत्यर्थः। **पूर्वार्धमेकरूपं पठित्वेति।** तथा च पूर्वार्धयोरैकार्थ्यात् उत्तरार्धयोरप्यैकार्थ्यं युक्तमिति भावः। **समाहितात्मा परिपश्यतीत्यनेन च** विशुद्धमनोग्राह्यत्वमुक्तम्; आत्मशब्दस्य मनःपरत्वादिति भावः। "धृत्या समाहितात्मा भक्त्या पुरुषोत्तमं पश्यति – साक्षात्करोति प्राप्नोतीत्यर्थः। 'भक्त्या त्वनन्यया शक्य इत्यनेनैकार्थ्यात्' इति वेदार्थसङ्ग्रहे प्रतिपादितमिहानुसन्धेयम्। ननु सर्वाणि ह वा इत्यादिवाक्यं प्राणशरीरकत्वे कथं प्रमाणं भवितुमर्हति? यौगिकवृत्त्या परमात्मपरत्वस्य पूर्वं साधितत्वादित्याशंक्याह –**सर्वाणीत्यादिवाक्य इति।** **अपर्यवसानवृत्त्येति।** आकृत्यधिकरणन्यायादिति भावः। **वैश्वानराधिकरणन्यायेनेति।** साक्षादप्यविरोधं जैमिनिरित्युक्तत्वादिति भावः। **सुखदुःखेच्छाद्वेषादय इति।** यद्यपि 'सर्वगन्धस्सर्वरस' इत्यादौ कल्याणगन्धरसपरत्ववत् मनोमयशब्दस्यापि कल्याणसुखादिमनोविकारपरत्वे वा, 'सर्वं खल्विदं ब्रह्मे'त्यादिवदसंकुचितपरत्वेऽपि वा न विरोधः – अथापि मनोग्राह्यत्वरूपार्थस्य संभवे अन्तःकरणप्रतिबिम्बतया मनोविकारभूतजीवाभेदोपचारेण मनोमयत्वोक्तिरयुक्तेति भावः।

**प्रतिज्ञावाक्यस्याध्याहार्यत्वादिति।** कृत्स्नस्येति शेषः। ततश्च पूर्वयोजनायामिव द्वितीययोजनायां न कृत्स्नाध्याहार इति भावः। **ननूपासनविधेरिति।** विधीयमानोपासनस्येत्यर्थः। **उत्पत्तिशिष्टसर्वात्मकत्वेति।** उत्पत्तिवाक्यविहितेत्यर्थः। उत्पत्तिवाक्यं प्राथमिकाप्रतिजनकं वाक्यम्। **उपासनविध्येकवाक्यत्वमिति।** ननु ब्रह्मशब्दस्य द्वितीयान्तत्वे द्वितीयान्तस्य 'खलु' इत्यनेन एकवाक्यतया अन्वयो न संभवेत्। तज्जत्वतल्लत्वतदनत्वैः सर्वस्य ब्रह्मात्मकत्वं शास्त्रादवगम्य रागद्वेषादिरहितस्सन् वक्ष्यमाणगुणकं ब्रह्मोपासीतेत्यर्थे इति वक्ष्यमाणरीत्या शमविध्यर्थत्वादतया परमतवदेकवाक्यत्वं संभवत्येव, 'सर्वं खल्विदं

ब्रह्म तज्जलानि ' त्यस्य, 'शूर्पेण जुहोति, तेन ह्यन्नं क्रियते,' इत्यस्येव हेतुवन्निगदार्थवादत्वं मतद्वयेऽपि साधारणम्। इयांस्तु विशेषः। परमते, 'स क्रतुं कुर्वीते' ति उपासनं विधीयते, सर्वं खल्विति वाक्ये तदनुवादेन शमो विधीयते, अस्मन्मते तु सर्वं खल्विति वाक्ये शमविशिष्टमुपासनं विधीयते। 'स क्रतुं कुर्वीते' ति वाक्ये तु सर्वं खल्विति वाक्यविहितोपासनानुवादेन मनोमयत्वादयो गुणा विधीयन्त इति। न च प्राप्तोपासनानुवादेन कथमेकस्मिन् वाक्ये मनोमयत्वाद्यनेकगुणविधानमिति वाच्यम् – मनोमयत्वादीनां नानात्वेऽपि 'एतमितः प्रेत्याभिसंभवितास्मी' त्यत्रेतिशब्देन क्रमविशेषरूपप्रकारविशिष्टतया प्रतीतेर्विधेयनानात्वेऽपि विधेयतावच्छेदकैक्याद्वाक्यभेदाप्रसक्तेः। ततश्चास्मन्मतेऽपि, 'सर्वं खल्विदं ब्रह्म' इति वाक्येऽपि एकवाक्यत्वं सिद्धमेव, कथं [वाक्य]भेद इति चेत्, उच्यते, सत्यमेकवाक्यत्वम्; तथाप्युपास्याकाङ्क्षायां रात्रिसत्रन्यायेन शमविध्यर्थवादप्रतिपन्नं ब्रह्मैवोपास्यतया संबध्यते; न तु सर्वात्मकत्वविशिष्टं ब्रह्म; ब्रह्ममात्रेणोपास्याकाङ्क्षाशान्तेः; येनोत्पत्तिशिष्टगुणाविरोधशङ्कापि स्यादिति भावः। वस्तुतस्तु सार्वात्म्यस्योत्पत्तिशिष्टस्यापि वक्ष्यमाणमनोमयत्वाद्यविरोधात् न वक्ष्यमाणानां मनोमयत्वादीनामनन्वय इत्यपि द्रष्टव्यम्। अत एव 'तं मामायुरमृतमित्युपास्वे' त्युपासनविधौ 'आनन्दोऽजरोऽमृतः' इति औपसंहारिकगुणानामुपास्यतया विधानमिति 'प्राणस्तथानुगमात्' इत्यधिकरणे वर्णितम्। [तथा 'ओमित्येतदक्षरमुद्गीथमुपासीते' ति विहिते उद्गीथावयवत्वगुणकप्रणवोपासने रसतमत्वादीनामप्युपास्यत्वमिति 'स्तुतिमात्रमुपादानात्' इत्यत्र समर्थितम्] अत एव शाण्डिल्यविद्यायां सार्वात्म्यस्योपास्यत्वमिति बहुषु स्थलेषु भाष्यटीकयोः व्यवहारः। न च शान्त्यर्थतयोपदिष्टस्य सार्वात्म्यस्य कथमुपास्यविशेषणत्वमिति शङ्कनीयम् – ब्रह्मण इव सर्वात्मकत्वस्यापि उपास्यत्वोपपत्तेः। इतरथा ब्रह्मणोऽपि शमार्थनिर्दिष्टतया उपास्यत्वं न स्यात्। न चेष्टापत्तिः, ब्रह्मशब्दवाच्यस्योपास्यत्वसिद्धवत्कारेणैव पूर्वोत्तरपक्षयोः प्रवर्तनादिति द्रष्टव्यम्। [केचित्तु "गुणानां च परार्थत्वात्" इत्यत्रादृष्टकार्येणापि निरपेक्षतया श्रुतेन पूर्वावगतेनाधानेनावरुद्धे अग्नौ भिन्नादृष्टकार्याणामपि पवमानेष्टीनां न निवेशो युक्तः। अत एवाग्नेयावरुद्धे प्रयाजादिर्न करणम्। अन्यथा समप्राधान्यं स्यात्" इति नयविवेकोक्तेः, 'अविरोधेऽपि न निवेशो युक्त' इति वदन्ति।] भाष्ये क्वचित्क्वचित्

ब्रह्मशब्द इति । 'इदं ब्रह्मायाति,' 'तज्ज्ञानं ब्रह्मसंज्ञित'मित्यादिष्विति भावः । भाष्ये ब्रह्मशब्देन तदात्मतया विधीयमानमिति । तदात्मतया—अन्तर्यामितयेत्यर्थः । सर्वस्य जगतः अन्तर्यामितया विधीयमानमिति यावत् । तज्जलानिति हेतुन इति भाष्यस्य जन्मस्थितिलयानां तत्कृततादात्म्यस्य च प्रसिद्धत्वेनोपदेशादित्यर्थः इति यदुक्तम्—तदयुक्तम् । तद्विवरणे भाष्ये, 'यस्मात् जगज्जन्मस्थितिलयाः प्रसिद्धा' इति कारणत्वप्रसिद्धिमात्रप्रतिपादनादित्याशंक्याह — कारणत्वनिबन्धनतादात्म्यस्य चेति । जगज्जन्मस्थितिलयानां हेतुत्वप्रसिद्धौ प्रसक्तायां तत्साध्यतादात्म्यप्रसिद्धिरप्यर्थादुक्तेति भावः । प्रसिद्धत्वमस्त्विति । जगज्जन्मस्थितिलयहेतुत्वेन वेदान्तप्रसिद्धमेव प्रतीयतामित्यर्थः । तस्यैव भाष्ये पूर्ववाक्ये प्रतिपादितत्वादिति द्रष्टव्यम् । तादात्म्यमप्यर्थसिद्धमित्याहेति । तादात्म्यमप्यर्थसिद्धमित्यभिप्रायेणाहेत्यर्थः । भाष्ये – तदात्मकतया तादात्म्यमुपपन्नमित्यत्र साध्याविशेषमाशंक्य—श्रुत्यन्तरसिद्धतदात्मकत्वं हेतुः; एतच्छ्रुतिप्रतिपन्नतादात्म्यमुपपाद्यमित्याह — तदात्मकतयेति श्रुत्यन्तरविषयमिति । इदमुपलक्षणम् । तदात्मकतया तादात्म्यमित्यस्य वाक्यस्य शरीरशरीरिभावेन तादात्म्यमिति वाक्यतुल्यत्वान्न साध्याविशेषशङ्कापीत्यपि द्रष्टव्यम् । उभयलिङ्गकस्य ब्रह्मण इति । तथा च प्रलयदशायां ब्रह्ममात्रपरिशेषे ब्रह्मस्वरूपस्यैव परिणामप्रसक्त्या सविकारत्वरूपदोषप्रसङ्गादिति भावः । श्रुत्यन्तरैः कण्ठोक्तं चेति । 'तम आसीत्', 'यस्य तमश्शरीर' मित्यादिभिरित्यर्थः । ततः किमुभयलिङ्गकत्वस्येत्यत्राहेति । पूर्वपक्षिणा आपादितस्योभयलिङ्गत्वविरोधस्य कः परिहारः उक्तः स्यादिति शङ्कार्थः ॥

## विवक्षितगुणोपपत्तेश्च १-२-२.

निषेधवाक्यविरोधेति । 'अप्राणो ह्यमना' इति वाक्यविरोधपरिहारायेत्यर्थः । विशेषवाक्यानुगुणमिति । 'मनसा तु विशुद्धेने'ति वाक्यानुगुणमित्यर्थः । धर्मभूतज्ञानव्यावृत्त्यर्थमाह — स्वस्मै प्रकाशमानीत्यर्थ इति । सत्यज्ञानपदैकार्थ्यादिति । सत्यज्ञानपदस्य नित्यविभूतिस्वार्थकत्वं दहराधिकरणे स्पष्टयिष्यते । अत्र स्वीकरणरूपगुणविधिरिति । नन्वेतदनुचितम्, तद्गुणकब्रह्मप्रतिपादनेन तदुपादानस्य सिद्धत्वादिति चेन्न — सर्वकर्मेत्यादेः पुनःपाठस्य सद्भाव—

पठितमनोमयत्वादिगुणोपास्यत्वपरिसंख्यार्थत्वशंकानिरसनाय प्रागुक्तसर्वगुणोपास्यत्वप्रतिपादनार्थतया सार्थक्यमित्याशयात् । पुनःपाठस्य तु प्रयोजनमुत्तरत्र वक्ष्यते । **नाय आदिकर्मणीति** । आरम्भ आदिकर्म, "गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्चे" ति कर्तरिक्तप्रत्ययविधानमाशंक्य निराकरोति **न चाभ्यादद्यादिति**रित्यादिना । **तेनैव कर्त्रर्थकत्वं क्तप्रत्ययस्य कल्प्यतामिति** । लक्ष्यप्राधान्यवादिनोऽयं परिहारः । गत्यर्थत्वमङ्गीकृत्य कल्प्यतामित्यर्थः । **महाभाष्ये** 'कथं भुक्ता ब्राह्मणाः पीता गावः' इत्याशंक्य अर्शआद्यजन्ततया निर्वाहः कृतः । तदनुरोधेन निर्वाहं दर्शयति — **यद्वा कर्तरिक्तप्रतिपत्तिरिति** । क्त इत्यनेन क्तप्रत्ययान्तजन्यप्रतिपत्तिः लक्ष्यत इति भावः । **न तु वाक्सामर्थ्यविरह इत्यर्थ** इति । 'अत्राकी' त्यनेन प्रतिपाद्यत इति शेषः ॥

## अनुपपत्तेस्तु न शारीरः १-२-३.

**तुशब्दाभिप्राय इत्याशयवतोक्तमिति** । बद्धे संशयहेतोः सतोऽन्यथासिद्धिः कार्या; मुक्ते तु संशयस्य हेतुरपि नास्तीत्येवं रूपवैषम्यं तुशब्देन द्योत्यत इत्यर्थः । **जीवधर्मैरिति** । मनोमयत्वादिभिरित्यर्थः ।

## कर्मकर्तृव्यपदेशाच्च १-२-४.

**परमसाम्यस्य हेतुमाहेति** । विवक्षितगुणानुपपत्तिद्वारा साम्ये जीवव्यतिरेके हेतुरुच्यते अनेन सूत्रेण; न तु विवक्षितगुणानुपपत्ताविति भावः ॥ **प्राप्यप्रापकाभावश्च हीति** ॥ "एतमितः प्रेत्याभिसंभवितास्मी" त्यत्र एतच्छब्देन प्राक्प्रस्तुतोपास्यस्य परामर्शादिति भावः । **स्वरूपस्यैवेति** । "दशमस्त्वमसी" त्यादाविव स्वरूपस्यैव प्राप्यत्वं प्राप्तृत्वं च संभवतीति शङ्कार्थः ॥ **श्रुतिस्वारस्यभङ्ग इति** ॥ "एतमितः प्रेत्ये" ति श्रुतिस्वारस्यभङ्ग इत्यर्थः ॥ नन्वेवम्, 'एतमितः प्रेत्याभिसंभवितास्मी' ति वाक्ये प्राप्यस्य पुंल्लिङ्गतया निर्देशात् **प्राप्तुरन्यदेवेदमिति विज्ञायत इति** भाष्ये नपुंसकनिर्देशः कथमित्याशङ्क्याह— **अन्यदिदमिति निर्देश इति** ॥

शब्दविशेषात् १-२-५.

**नान्योन्याश्रय** इति । शब्दविशेषस्य जीवपरविषयत्वसिद्धौ जीवपरविषयक-शब्दविशेषेणोपास्योपासकभेदसिद्धिः; उपास्योपासकभेदसिद्धौ जीवपरविषयत्वसिद्धिः इति अन्योन्याश्रय इत्यर्थः ॥

स्मृतेश्च १-२-६.

**सर्वभूतशब्दोऽपि जीवविषय** इति । न देहादिसङ्घातविषयः । येनोपास्यो-पासकयोर्जीवपरयोर्भेदो न सिद्ध्येदिति भावः । **भ्रान्त्याश्रयत्वादिति** 'भ्रामयन् सर्वभूतानी' ति प्रतिपाद्यभ्रान्त्याश्रयत्वादित्यर्थः । **अवान्तरशङ्कापरिहारेति** । अवस्थाभेदेन प्राप्यत्वप्राप्तृत्वोपपत्तिरिति शङ्कानिराकरणार्थसूत्रद्वयोक्तहेतुसमुच्चयार्थ इत्यर्थः । श्रुतिस्मृत्योस्साम्यासंभवादाह – **अन्वाचये वेति** । अस्मिन् सूत्रे शाङ्कर-भाष्ये, "कः पुनरयं शारीरो नाम परमात्मनोऽन्यः, यः प्रतिषिध्यते, 'अनुपपत्तेस्तु न शारीरः' इत्यादिना, श्रुतिर्हि, 'नान्यदतोऽस्ति द्रष्टा नान्यदतोऽस्ति श्रोते'त्येवं-जातीयका परमात्मनोऽन्यमात्मानं वारयति । तथा **स्मृतिरपि**='क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारते' त्येवंजातीयकेति – अत्रोच्यते, सत्यमेवमेतत् । पर एव ह्यात्मा देहेन्द्रियमनोबुद्ध्युपाधिभिः परिच्छिद्यमानो बालैः शारीर इत्युपचर्यते । यथा घटकरकाद्युपाधिवशादपरिच्छिन्नमपि नभः परिच्छिन्नवदवभासते, तद्वत् । तदपेक्षया च कर्मकर्तृत्वादिभेदव्यवहारो न विरुध्यते प्राक् 'तत्त्वमसी' त्युपदेशग्रहणात् । गृहीते त्वात्मैकत्वे बन्धमोक्षादिसर्वव्यवहारपरिसमाप्तिरेव स्यात्" इत्युक्तम् । तदनूद्य दूषयति=**अत्र केचिदिति** । **अन्येषां जीवेश्वरभ्रमाभावाच्चेति** । वेद एव भ्रान्तो व्यपदिशतीति पक्ष इति भावः । **अन्येषां जीवेश्वरभेदभ्रान्त्यभावेऽपीति** । ईश्वरस्य मानान्तरागोचरत्वेन तद्भेदभ्रमासंभवेऽपीत्यर्थः । **त्वमित्येवोपदेष्टव्यमिति** । श्वेतकेतु भवतीति शेषः । **मनुसूर्यादिजन्मस्मरणपरत्वसंभवादिति** । अनद्यतनलङ्-निर्देशस्वारस्यादिति भावः । **मुक्तप्राप्यत्वादीनामनुमातुमशक्यत्वाच्चेति** । ततश्च श्रुत्येकसमधिगम्यानां तेषामनुवादो न संभवतीति भावः । **उपास्यत्वादि-निबन्धन** इति । उपासनार्थ इत्यर्थः । तदेवोपपादयति **तत्तत्फलविशेषार्थिना-**

मिति । **श्रुतिःकल्पयतीति चेत्** इति । ननु श्रुतिकल्पितकर्मकर्तृभेदो न भेदकार्यं साधक इति कथमियं शङ्केति चेत्? अत्यन्तागतिकस्य एतादृशशङ्कोपपत्तेः । किञ्च उपासने प्रवर्तमानस्य उपास्योपासकभेदबुद्धेरेवापेक्षितत्वेन वास्तवभेदानपेक्षत्वेन शङ्कोपपत्तेरिति द्रष्टव्यम् । **जीवविलक्षणं दर्शयति** । जीवभेदं प्रतिज्ञायेत्यर्थः । 'न ह्यतात्त्विकभेदः प्रतिज्ञात' इत्युत्तरग्रन्थानुसारात् । **अपरमार्थभेदं [दव्यपदेशं] विज्ञानमिति** । कर्मकर्तृभावलक्षणं भेदमित्यर्थः । **तत्त्वार्थहेतुतयेति** । जीवविलक्षणत्वरूपभेदहेतुतयेत्यर्थः । **ब्रह्मजिज्ञासेत्युपक्रमविरोधादिति** । इतरथा, 'अथातोऽतात्त्विकभेदजिज्ञासे'त्येव सूत्रयेदिति भावः ॥

अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च १-२-७.

परव्याख्यां दूषयति = **व्योमवद्द्रष्टव्यमित्युक्त** इति । **प्रमाणाकाङ्क्षा भवतीति** । अर्भकौकस्त्वादिकं व्योमवदौपाधिकं द्रष्टव्यमित्युक्ते, स्वाभाविकमेव किं न स्यात् औपाधिकत्वे प्रमाणाभावादिति प्रमाणाकाङ्क्षा भवतीति भावः । **प्रमाणमेव दर्शितं भवतीति** । श्रुत्या व्यपदिश्यत इति हि तस्यार्थः । अतः प्रमाणमेव दर्शितं भवतीति भावः । ननु, 'प्रशस्यस्य श्रः', 'ज्य चे'ति प्रशस्यशब्दस्य ज्यादेशविधानात् प्रशस्यशब्दात् इयसुन्प्रत्यये ज्यायश्शब्दनिष्पत्तिः, न तु वृद्धशब्दादित्याशंक्याह=**ज्य च वृद्धस्य चेति हि सूत्रमिति** । ज्य च, वृद्धस्य चेति हि सूत्रक्रम इत्यर्थः । अयं भावः=वृद्धस्य चेत्यत्र ज्य चेत्यनुवर्तते । वृद्धशब्दादीयसुन् प्रत्यये वृद्धस्य चेति वृद्धशब्दस्य ज्यादेशो, 'ज्यादादीयस' इति ईयसुन्नीकारस्य आकारादेशे ज्यायश्शब्दनिष्पत्तिरिति । **न तु प्रशस्यस्य श्र इति तन्निष्पत्तिरिति** । 'प्रशस्यस्य श्रः' इत्यधिकारे पठितेन 'ज्य चे' ति सूत्रेण प्रकृते न तन्निष्पत्तिरित्यर्थः । अत्रापि हेतुः, 'अणीयस्त्वप्रतिसंबन्ध्याकारपरत्वाज्ज्यायश्शब्दस्ये'ति वक्ष्यमाण एव द्रष्टव्यः । **ततोऽपि ज्यायस्त्वश्रवणादिति** । 'ज्यायान् पृथिव्या' इत्यादिना पृथिव्यादिभ्योऽपि ज्यायस्त्वश्रवणादित्यर्थः । **तस्य वाक्यान्तरस्थत्वादिति** । यद्यपि, 'ब्रह्मात्मकत्वं सर्वस्य शास्त्रादवगम्य रागद्वेषादिरहितस्सन्' इत्यादिना एकवाक्यत्वमुत्तरत्र वक्ष्यते, तथापि ब्रह्मणः सर्वात्मकत्वस्य शमशेषत्वादित्यत्र तात्पर्यम् । **वस्तुतस्तु**

यथा शान्त्यर्थतयोद्दिष्टस्यापि ब्रह्मणः 'भूमा शाखां परिहास्योपवेषं करोती'त्यनेनापि आकाङ्क्षावशेनान्वयवदन्वयोऽभ्युपेयते, तथा सर्वात्मकत्वस्यापि अन्यार्थनिर्दिष्टस्योपास्यत्वे न विरोध इति द्रष्टव्यम्। पूर्वमप्येतत् प्रतिपादितम्। **लक्षणतो धर्मिनिर्देश** इति। कारणत्वरूपलक्षणोक्तिमुखेन ब्रह्मरूपधर्मिनिर्देश इत्यर्थः। भाष्ये **प्राप्तिनिश्चयानुसन्धानं च विधायेति**। प्राप्तिनिश्चयरूपानुसन्धानमित्यर्थः। प्राप्तिनिश्चयोपेतस्येत्युत्तरभाष्यानुगुण्यात् श्रुत्यानुगुण्याच्चेति द्रष्टव्यम्। **उपास्यतया प्राप्यतयेति**। यद्यप्युपास्यत्वे प्राप्यत्वं सिद्धम्, तथापि द्विः पाठः तेन क्रमेणानुसन्धानार्थ इति द्रष्टव्यम्। **हृदि स्थितेः द्विरुक्तिरिति**। "एष म आत्मान्तर्हृदय" इति द्विरुक्तिरित्यर्थः॥

संभोगप्राप्तिरिति चेन्न वैशेष्यात् १-२-८.

**भोगप्रसञ्जने सुखग्रहणमिति**। अपुरुषार्थप्रसञ्जन इत्यर्थः। उक्तार्थे श्रुतेः संमुखतया प्रमाणत्वासंभवात्, तथा च श्रुतिरित्येतद्व्याचष्टे — **तथा च श्रुतिरिति**। **जीवस्यानभ्युपगम इति**। जीवस्यानभ्युपगमादित्यर्थः। **अवगतश्च** इति। अवश्याभ्युपगन्तव्ये सतीति शेषः। आनन्दगिरीयविकल्पमुपन्यस्यति— **किं शास्त्रादवगमः, उतासद्वाक्यादिति**। **परस्य भोक्तृत्वाभावोऽपीति**। परस्य जीवस्येत्यर्थः। शारीरस्यैव तावदुपभोक्तृत्वं वारयतीति शाङ्करभाष्यानुसारात्। भोक्तृजीवाभेदकृतभोक्तृत्वप्रसक्तेः तथैव परिहर्तव्यत्वाच्च। **द्वितीये तु भ्रान्तिसिद्धेति**। अस्मदुक्तया जीवब्रह्मैक्यमवगतं चेत्, तथा तत्पक्षदोषपरिहारप्रकारोऽपि मदुक्तरेवावगन्तव्यः; तत्रापि किमर्थं भवतीयन्त्रासेनेति भावः। **अनभ्युपगमनिरस्तमिति**। द्वितीयपक्षस्य स्फुटत्वादिति भावः॥

॥ इति सर्वत्रप्रसिद्ध्यधिकरणम् ॥



# अथ अत्त्रधिकरणम् (२)

**अत्ता चराचरग्रहणात् १-२-९.**

**साक्षादग्निरस्तात्राभावादिति ।** साक्षादग्निर्मुख्याग्निः ज्वलनरूपाग्निः । तदाधारतया ह्यग्निशब्दः स्थण्डिलरूपाग्नावुपचर्यत इति भावः । ननु स्थण्डिलाग्निविषय एव संशयः, तस्यैवात्त्रादत्वप्रसिद्धिश्चास्तीत्यत्राह — **अग्निप्रकरणस्येति । ओदनोपसेचनसामर्थ्यागतस्येति ।** ओदनादेर्भोग्यत्वेन लोकप्रसिद्धेर्भोक्तृत्वस्यैव प्रथमं बुद्धाववतारादिति भावः । ननु मन्त्रे मुख्य ओदनो न श्रुतः, येन तत्प्रतिसंबन्धी अत्ता भोक्ता स्यात् । किं तु ब्रह्मक्षत्रिययोरोदनरूपणमात्रं क्रियते । न ह्युपचरितस्यौदनस्यापि तत्प्रतिसम्बन्धिना भोक्त्रा भवितव्यम् । न च "अस्य मृगयाविनोदिनो मृगाः परनृपतय" इत्यत्रामृगेषु मृगत्वरूपणे वस्तुतो मृगहन्ता क्षत्रिय एव तत्प्रतिसम्बन्धी प्रतीयते, न तु श्रोत्रियः कश्चित् ब्राह्मण इति वाच्यम् — तथा नियमाभावात् । 'त्वत्कृपाणभुजङ्गस्य क्षीरं विद्विषतां यशः' इत्यत्रोपचरितक्षीरप्रतिसम्बन्धिनि कृपाणे पातृत्वस्याप्रतीतेः । सत्यामपि प्रतीतौ वास्तवपातृत्वादर्शनादिति चेत्—उच्यते, अवश्यं तावदिहानोदनविषयेण ओदनशब्देन वाच्यगतं कञ्चित् गुणमपेक्ष्य वर्तितव्यम् । तदिह भोग्यतया प्रसिद्धस्य वाच्यस्य गुणो भोग्यत्वरूपः पर्यवस्यतीति तत्प्रतिसम्बन्धिनो यस्येतिपदोपात्तस्य भोक्तृत्वप्रतीतिरनिवार्या । कृपाणभुजङ्गस्येत्युदाहरणेऽपि कृपाणे समारोपिततत्पातृत्वप्रतीतिरस्त्येव । न च — तत्र भुजङ्गत्वरूपणात् पातृत्वप्रतीतिः, न तु यशःक्षीरत्वरूपणमात्रात् । ततश्च ब्रह्मक्षत्रस्यौदनत्वरूपणमात्रेण कथं भोक्तृत्वप्रतीतिरिति वाच्यम् — 'करवालस्य ते वीर क्षीरं विद्विषतां यशः' इत्यत्रादौ भुजङ्गत्वरूपणाभावेऽपि क्षीरत्वरूपणमात्रेण पातृत्वप्रतीतेः । न चैवं तद्वदेव भोक्तृत्वमप्यारोपितमस्तु । ततश्च वस्तुनः तत्सम्बन्धिनः अभोक्तृत्वमेव पर्यवस्यतीति कथं भोक्तृत्वं जीवत्वसाधकं स्यादिति वाच्यम् — असति बाधके भोक्तृत्वप्रतीतेः प्रमात्वस्योचितत्वेन जीवत्वसाधनसंभवादिति भावः । **स्त्रीपुंनपुंसकात्मकत्वादिति ।** स्त्रीणां भोग्यत्वं सिद्धमेव, पुंनपुंसकयोरपि भृत्यादिरूपेण भोग्यत्वमिति भावः । **द्विधेय इत्यभिप्रायेणेति ।** अबाधक इत्यभिप्रायेणेत्यर्थः ।

ननूपसेचनशब्देन साधारणनबाधकत्वमात्रं न लक्षयितुमुचितम्, अपि तु स्वयमद्यमानत्वे सति अन्यादनहेतुत्वम्। तादृशं चादनं संहारयितृपरब्रह्मपक्ष एव घटते, नान्यत्रेति चेत् — नैष दोषः; प्रथमश्रुतौदनशब्देन भोग्यत्वस्य प्रतीतत्वात्, तदनुरोधेनैव चरमश्रुतोपसेचनशब्दस्यापि अबाधकत्वार्थकत्वस्यैव युक्तत्वात्। न चोपसेचनपदानुसारेण ओदनपदस्य विनाश्यत्वपरत्वमस्त्विति वाच्यम्, चरमश्रुतस्वारस्यानुरोधेन प्रक्रमश्रुतस्वारस्यान्यथानयनायोगात्।

**साधारणाकारं विहायेति।** अत एव, 'प्रैतु होतुश्चमसः प्र ब्रह्मणः प्रोद्गातृणां प्र यजमानस्ये'ति, अध्वर्युप्रैषे उद्गातृशब्दस्य बहुवचनानुसारेण रूढिपूर्वकलक्षणया बहुषु वृत्तौ वक्तव्यायां षोडशर्त्विक्साधारणाकारं विहाय विशेषाकारेण उद्गातृगणमात्रलक्षणा पूर्वतन्त्रे निर्णीता। भाष्ये **तदुपसिच्यमानस्येति।** तन्मिश्रितस्येत्यर्थः। **विष्णोः श्रूयमाणत्वादिति।** यद्यपि 'सोऽध्वनः' इत्यादिवाक्यं प्रकरणाचेत्युत्तरसूत्रस्य विषयः; न तस्य सूत्रस्य। अत्र निखिलचराचरसंहर्तृत्वस्यैव हेतूकरणात्, तस्य च मृत्यूपसेचनसमभिव्याहारलभ्यत्वान्नान्यापेक्षा—अथापि मृत्यूपसेचनसमभिव्याहारस्य प्रकरणमप्युक्तमक्रमिति सूचनार्थं तथोक्तमिति द्रष्टव्यम्। **मृत्यूपसेचनत्वसामर्थ्येति।** ननु प्रक्रमश्रुतौदनपदस्वारस्यगतिभ्नभोग्यत्वानुसारेण चरमश्रुतं मृत्यूपसेचनत्वमबाधकत्वाभिप्रायेण नेयमित्युक्तमिति चेत् — उच्यते। इह ब्रह्मक्षत्रयोर्मृत्योश्च तावदोदनोपसेचनभावरूपेण तु दध्यन्नरीत्या संबन्धः प्रतीयते। तथा च मृत्युमिश्रणप्रतीत्यनुसारेण ब्रह्मक्षत्रशब्दाभ्यां चराचरात्मकं विनाशिवस्तुमात्रं लक्षणीयम्। मृत्यूपसेचनत्वरूपणसन्निधानादेव ओदनशब्देनापि विनाश्यत्वं लक्षणीयम्; स्वबुद्ध्युपस्थापनीयविशेषाकाररूपगुणग्रहणादपि एकवाक्यतापन्नपदान्तरोपस्थापितगुणग्रहणस्य बुद्धिलाघवेन, एकवाक्यतासामर्थ्येन च न्याय्यत्वात्। अत एव—'अक्ताश्शर्करा उपदधाती'त्यत्र विधेयाञ्जनस्य साधनापेक्षायाम्, 'तेजो वै घृत'मिति वाक्यशेषे श्रुतं घृतमेव ग्राह्यम्, न तु पुरुषबुद्धिकल्पनीयं द्रवद्रव्यमात्रमिति पूर्वतन्त्रे निर्णीतम्। ननु तथापि कथं ब्रह्मक्षत्रशब्देन चराचरग्रहणसिद्धिः; ओदनशब्दस्य गौणत्वात्रयंभवेन तस्य समभिव्याहृतपदार्थान्तरोपस्थापितगुणलक्षकत्वेऽपि, 'ब्रह्म च क्षत्रं चे'त्यस्य मुख्यार्थवृत्तिसंभवात्। न च मृत्यूपसेचनकीर्तनात्, तदुपसिच्यमानं सर्वं तेन

ग्राह्यमित्युक्तं युक्तम्; 'शूर्पेण जुहोति तेन ह्यन्नं क्रियते' इत्यत्र शूर्पशब्दस्य वाक्यशेषे अन्नकरणत्वकीर्तनेऽपि यद्यदन्नकरणं तत्र सर्वत्र लक्षणानुपगमात्। ननु [तत्र] शूर्पमात्रस्याप्यन्नकरणत्वेन स्तुतिस्संभवति। अन्नकरणत्वस्य शूर्पे दर्वीपिठरादौ च व्यासज्यवृत्त्यभावात् इति चेत् — इहापि ब्रह्मक्षत्रमात्रस्यापि मृत्युमिश्रणप्रतिपादनं संभवतीति तुल्यम्। किञ्च - व्यर्थं ब्रह्मक्षत्रशब्दयोः कृत्स्नचराचरलक्षकत्वोपपादनम्। ओदनशब्दस्य संहार्यत्वलक्षकत्वोपपादनमात्रेणापि तत्प्रतिसम्बन्धी अत्ता संहर्तेति सिद्धौ शब्दवृत्त्यसङ्कोचप्राप्त—सर्वकल्पानुयायिसकलब्रह्मक्षत्रजात्यालिङ्गितव्यक्तिसंहर्तृत्वलिङ्गेनैवात्तुः परमात्मत्वसिद्धेरिति चेत्? उच्यते, अत्तृत्वं — भोक्तृत्वमुपसंहर्तृत्वमिति पक्षद्वयेऽपि ओदनपदवत् ब्रह्मक्षत्रपदयोरपि लक्षकत्वमवश्यम्भावि। न हि भृत्यादिरूपभोग्यतया वा भक्ष्यतया वा ब्रह्मक्षत्रयोरेव भोक्ता कश्चित् जीवोऽस्ति। न वा परमात्मा तदुभयमात्रसंहर्ता। न चाधिकभोक्तृत्वसंभवेऽपि विशिष्य तदुभयमात्रग्रहणे प्रयोजनमस्ति। न चान्तरादित्यविद्यायाम्, 'ये चामुष्मात्पराञ्चो लोकास्तेषां चेष्टे देवकामानां चे'ति सर्वलोककामेशितरि परमात्मनि लोकविशेषकामविशेषेशितृत्ववत् सर्वसंहर्तर्यपि परमात्मनि ब्रह्मक्षत्रसंहर्तृत्वोपपत्तिरिति चेन्न — तत्राक्ष्यादित्यस्थानभेदेन, 'स एष येचामुष्मात् पराञ्चो लोकास्तेषां चेष्टे मनुष्यकामानां च' इति निर्देशभेददर्शनात्। तत्र व्यवस्थासिद्धावपि इह तन्मात्रग्रहणे नियामकाभावात् ब्रह्मक्षत्रग्रहणमुपलक्षणम्, न स्वार्थमात्रनिष्ठमिति उपलक्षणीयाकाङ्क्षायां पश्चात्तनमृत्यूपसेचनकीर्तनात् तदुपसिच्यमानं सर्वमुपलक्षणीयमिति निश्चीयते। किञ्च ओदनशब्दस्य उक्तयुक्त्या संहार्यत्वलक्षणास्थितौ यच्छब्दयोगेनानुवादकेऽस्मिन् मन्त्रे संहार्यसमर्पकस्य 'ब्रह्म च क्षत्रं चे'त्यस्य, 'सन्मूलास्सोम्येमाः सर्वाः प्रजाः सदायतनास्सत्प्रतिष्ठाः' इत्यादिपुरोवादानुसारेण चराचरात्मकविनाशिमात्रोपलक्षकत्वमावश्यकमित्यास्तां तावत्॥

## प्रकरणाच्च १-२-१०.

**प्राकरणिको(क) हेतुरत्रोच्यत इति। प्राकरणिकः प्रकरणसहित इत्यर्थः। प्रकरणाच्चेति सूत्रे चशब्देन लिङ्गं समुच्चीयते। एवं च परमात्मप्रकरणात्, 'क इत्था वेदे'ति दुर्विज्ञानत्वरूपलिङ्गप्रत्यभिज्ञानाच्चेत्यर्थः। न तु विषयवाक्यात्**

पूर्ववाक्यस्थमहत्त्वविभुत्वादिहेतुरित्यर्थः । ब्रह्मणः प्रकृतत्वे विवादाभावेन लिङ्गेन तस्यासमर्थनीयत्वात् सूत्रभाष्यगतप्रकरणशब्दस्वारस्याच्च । **एकप्रकरणत्वं कथमितीति** । यद्यपि महान्तं विभुमित्यादौ ब्रह्म प्रकृतम्; न प्रकृतं च हातुं योग्यम् — अथापि 'न जायते म्रियते' इत्यादौ जीवस्यापि प्रकृतत्वात् ब्रह्मण एव ग्रहणे न प्रमाणं पश्याम इति भावः । **परस्य स्थितिरिति जिज्ञास्यत इति** । सामान्यतः शरीराधारत्वं जानता शिष्येण शरीरे प्रदेशविशेषः पृच्छ्यत इत्यर्थः ॥ १० ॥

**प्रकरणविच्छेदं दर्शयतीति** । 'ऋतं पिबन्तौ' इति वाक्यस्य परमात्मप्रकरणविच्छेदं दर्शयतीत्यर्थः । **यस्य ब्रह्म चेत्यादिवाक्यापेक्षयेति** । ऋतपानलिङ्गबलात् ऋतं पिबन्ताविति वाक्ये यस्य ब्रह्मचेत्यस्य पश्चात्पठिते परमात्मप्रकरणविच्छेदेऽपि नास्तु: परमात्मत्वहानिः । यस्य ब्रह्म चेत्यादिवाक्यस्य महान्तं विभुमित्यादिना एकप्रकरणतया, ऋतं पिबन्तावित्यनेन एकप्रकरणत्वाभावादिति शङ्काभिप्रायः । **व्यवहितत्वात् विच्छेदो युक्त इति** । ननु महान्तं विभुमित्यत्रापि अव्यवधानमस्ति । एवं हि पाठक्रमः । 'महान्तं विभुमात्मानं मत्वा धीरो न शोचति', 'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्', 'नाविरतो दुश्चरितान्नाशान्तो नासमाहितः । नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात्', 'यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः । मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः', 'ऋतं पिबन्तौ सुकृतस्य लोके' इति । ततश्चाव्यवधानं द्वयोरप्यविशिष्टम । तत्र च प्रकरिष्यमाणपरामर्शलोभेन प्रकृतहानमयुक्तम् । प्रकृतप्रत्यभिज्ञापकं दुरधिगमत्वलिङ्गं च वर्तते । अतः कथम्, ऋतं पिबन्ताविति खण्डान्तरस्योत्तरवाक्यैकप्रकरणत्वलोभेन प्रकृतैकवाक्यत्वपरित्याग इति शङ्केति चेत्—उच्यते, प्रकरणाच्चेति सूत्रे प्रकरणशब्देन परमात्मप्रतिपादकवाक्यसन्दर्भमध्यगतत्वं विवक्षितम् । तदिह 'गुहां प्रविष्टा' विति सूत्रे आक्षिप्य समाधीयत इत्यनवद्यम् । यद्यपीमौ शङ्कापरिहारौ, 'तदेकप्रकरणत्वात् पूर्ववस्तुतोऽत्रापि स एव भवितुमर्हती' ति भाष्याभिप्रेतौ, तत्रैव वक्तव्यौ च—तथाप्यनन्तरमितिपदस्यैकप्रकरणत्वोपपादकत्वादिहोक्ताविति द्रष्टव्यम् । सम्भावनान्यशङ्कापरिहारार्थमिति । तथा हि सति परमात्मनः प्रतिपाद्यत्वशङ्कापि स्यादिति भावः ।

**बुद्धिप्राणयोरन्यतर**त्वमिति । बुद्धिशब्देनान्तःकरणमुच्यते । **न हि सर्वसंहर्तृत्वमुच्यत इति**वदिति । यस्य च ब्रह्म चेत्यादिवाक्य इति शेषः । **यथाकथञ्चि**दिति व्याख्येयं पदम् । युक्त्यन्तरमाह—**तत्र प्रथमत इति** । **अनेकै**रिति । समभिव्याहृतैरिति भावः । **यया न विरुध्यत इति** । ननु द्वयोरप्यजहत्स्वार्थलक्षणाप्रतिपाद्यत्वाविशेषात् कथं कस्यचित्प्राधान्यं कस्यचिदप्राधान्यम् । न हि 'काकेभ्यो दधि रक्ष्यता' मित्यादौ काकानां प्राधान्यम् । न वा 'स्त्रष्टीरुपदधाति', 'प्राणभृत उपदधाति', 'पृष्ठैः स्तुवते' इत्यादौ शक्यार्थस्य प्राधान्यमन्यस्याप्राधान्यमुपलभ्यत इति चेन्—उच्यते—लोके श्रेष्ठवाची शब्द एव हि अश्रेष्ठे उपचरितो दृश्यते । अत एव हि महाभाष्ये, "कारकान्तरे कर्तृवाची शब्द उपचर्यते; न कर्तरि कारकान्तरशब्दः" इत्युक्तम् । ततश्च यद्वाचिशब्दो यत्रोपचारेण प्रयुज्यते, स तदपेक्षया श्रेयानिति उत्सर्गसिद्धमेतत् । ततश्च तेन न्यायेन मुख्यार्थस्यौपचारिकार्थापेक्षया प्राधान्यं सिद्धमिति भावः । **उपकरणभूतान्तःकरणस्य द्वितीयत्व इति** । एतेन, 'त्रयाणामेव चैवमुपन्यासः प्रश्नश्चे' ति सूत्रोक्तरीत्या उपायोपेयोपेतॄणामेवोपन्यसनीयतया बुद्धिप्राणयोश्च त्रिष्वनन्तर्भावेन तत्परपूर्वपक्षस्य कथमुत्थितिरिति शङ्का परास्ता । बुद्धिप्राणयोरप्युपासननिर्वृत्त्युपकरणतया उपायकोटावेवान्तर्भावसंभवेन पूर्वपक्षोदयसंभवादिति ध्येयम् ॥ १ ॥

## गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् १-२-११.

**परमात्मत्वोपपादकत्वसूचक इति** । अत्तुः परमात्मत्वोपपादकत्वं सूत्रार्थस्य दर्शयति हिशब्द इत्ययमर्थ उत्तरत्र स्पष्टः । **दृश्यत इत्यन्वय इति** । अन्वयः अनुषङ्ग इत्यर्थः । एवमुत्तरत्रापि द्रष्टव्यम् । **जीवोपासनमङ्गत्वेन विधीयत इति** । तथा च **अध्यात्मयोगाधिगम**शब्दस्य जीवोपासनमर्थ इति भावः । **भूम्नौ च वेदप्रसिद्धेरिति** । 'अदित्यास्त्वोपस्थे सादयामी' त्यादौ भूम्नै च प्रयोगादिति भावः । **सजातीययोरेव द्विवचननिर्देशार्हत्वमिति** । विजातीयपरिग्रहे जातिव्यक्त्योर्द्वयोरप्युपस्थापनीयतया गौरवम्; सजातीयपरिग्रहे तु व्यक्तिमात्रस्यैवोपस्थाप्यतया लाघवमिति भावः ।

विशेषणाच्च १-२-१२.

तत्तद्वाक्योदितविशेषणान्तराणीति। ब्रह्मजज्ञत्वसेतुत्वादीनीत्यर्थः। उपास्यत्वोपासकत्वेति। ततश्चोपास्यस्य परमात्मनः उपासकदवीयस्त्वशङ्कानिरासाय हृदयगुहायां द्वयोरप्यवस्थितिम् ऋतं पिबन्ताविति वाक्यं प्रतिपादयतीति भावः। भाष्ये, यस्सेतुरीजानानामिति। यज्वनां सेतुः प्रतिष्ठापक इत्यर्थः। ननु भाष्ये, 'इहापिच्छायातपावित्यज्ञत्वसर्वज्ञत्वाभ्यां तावेव विशिष्य व्यपदिश्येते 'इत्युक्तिरयुक्ता। छायातपशब्दयोरज्ञत्वसर्वज्ञत्वपरत्वस्य पूर्वपक्षिणं प्रत्यसिद्धत्वेन विशेषणस्य हेतूकरणासंभवादित्याशङ्क्य छायातपशब्दयोर्ज्ञाज्ञाविति श्रुतिस्मारकतया हेतूकरणं संभवतीत्याह — अज्ञत्वसर्वज्ञत्वाभ्यामित्यनेनेत्यादिना। भाष्ये सर्ववेदसदक्षिणक्रतुसमाप्तिवेलायामिति। अत्रोपयुक्ता श्रुतिर्लिख्यते —

'उशन् ह वै वाजश्रवसः सर्ववेदसं ददौ'। उशन् कामयमान इत्यर्थः। 'तस्य ह नचिकेता नाम पुत्र आस। तं ह कुमारं सन्तं दक्षिणासु नीयमानासु श्रद्धा विवेश। सोऽमन्यत। पीतोदका जग्धतृणा दुग्धदोहा निरिन्द्रियाः। अनन्दा नाम ते लोकास्तान् स गच्छति ता ददत्'। जरद्गवीः प्रयच्छन् अनन्दान् सुखरहितान् लोकान् प्राप्नोतीत्येवममन्यतेत्यर्थः। 'स होवाच पितरं तत कस्मै मां दास्यसीति। द्वितीयं तृतीयम् तं होवाच, मृत्यवे त्वा ददामीति'। एवं पित्रा कुपितेनोक्तो नचिकेताः परिदेवयांचकार, 'बहूनामेमि प्रथमो बहूनामेमि मध्यमः। किं स्विद्यमस्य कर्तव्यं यन्मयाद्य करिष्यती'ति। अहं बहूनां पुत्राणां शिष्याणां वा मुख्यो मध्यमो वा; न सर्वथा अधमः। ईदृशमपि मां कुतो यमाय प्रादात्। तस्य वा प्रेतेन मया किं प्रयोजनमित्यर्थः। अथापि पितृवचनं मृषा मा भूदिति मत्वा किं मयोक्तमिति शोकाविष्टं पितरमाह — 'अनुपश्य यथा पूर्वे प्रतिपश्य तथा परे। सस्यमिव मर्त्यः पच्यते सस्यमिवाजायते पुनः'। पूर्वेषां पितृपितामहादीनां वर्तमानानां च साधूनां चरितानि शरीरानित्यतां च ज्ञात्वा यमाय मां प्रेषयेत्यर्थः। एवमुक्तेन पित्रा प्रेषितं यमभवनद्वारि तिस्रो रात्रीर्वसन्तं दृष्ट्वा, प्रोष्यागतं यमं प्रति आर्याणां वाक्यम्, 'वैश्वानरः प्रविशत्यतिथिर्ब्राह्मणो गृहान्। तस्यैतां शान्तिं कुर्वन्ति हर वैवस्वतोदकम्'। अर्घ्यादिपूजां कुर्वित्यर्थः। अकरणे प्रत्यवायं चोचुः, 'आशा-

प्रतीक्षे संगतं सूनृतां च इष्टापूर्ते पुत्रपशूंश्च सर्वान् । एतद्वृङ्क्ते पुरुषस्याल्पमेधसः यस्यानश्नन् वसति ब्राह्मणो गृहे '। कामसङ्कल्पसत्संयोगसत्यवचस्त्वेष्टापूर्तपुत्रपश्वादीनुपवसन्नतिथिर्नाशयतीत्यर्थः । एवममात्यैरुक्तस्य मृत्योर्वचनम् — 'तिस्रो रात्रीर्यदवात्सीः गृहे मे अनश्नन् ब्रह्मन्नतिथिर्नमस्यः । नमस्तेऽस्तु ब्रह्मन् स्वस्ति मेऽस्तु तस्मात्प्रति त्रीन् वरान्वृणीष्व '। इत्येवमुक्तो नचिकेतास्त्वाह 'शान्तसङ्कल्पः सुमना यथा स्यात् वीतमन्युर्गौतमो माभि मृत्यो । त्वत्प्रसृष्टं माभिवदेत् प्रतीतः, एतत् त्रयाणां प्रथमं वरं वृणे '। **शान्तसङ्कल्पः** निवृत्तविचार इत्यर्थः । **मा अभि** मां प्रतीत्यर्थः । त्वत्प्रसृष्टं मामभि **प्रतीतः** सोऽयं पुत्र इति प्रत्यभिजानन् **वदेत्** संलपत्वित्यर्थः । एवमुक्तस्य मृत्योरुत्तरम्, 'यथा पुरस्ताद्भविता प्रतीतः औद्दालकिरारुणिः मत्प्रसृष्टः । सुखं रात्रीश्शयिता वीतमन्युस्त्वां ददृशिवान् मृत्युमुखात् प्रमुक्तम् '। यथापूर्वं प्रत्यभिजानात्वित्यर्थः । **ददृशिवान्** दृष्टवानित्यर्थः । पुनर्नचिकेता आह — 'स्वर्गे लोके न भयं किञ्चनास्ति न तत्र त्वम्; न जरया बिभेति '। तत्र वर्तमानो जरया युक्तस्सन् त्वत्तो न बिभेतीत्यर्थः । एवं स्वर्गं प्रशस्याह — 'स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि तं श्रद्दधानाय मह्यम् । स्वर्गलोका अमृतत्वं भजन्ते एतत् द्वितीयेन वृणे वरेण '। **स्वर्ग्यं** स्वर्गसाधनमित्यर्थः । एवमुक्तो मृत्युराह — 'प्र ते ब्रवीमि तदु मे निबोध स्वर्ग्यमग्निं नचिकेतः प्रजानन् — अनन्तलोकाप्तिमथो प्रतिष्ठां विद्धि त्वमेतं निहितं गुहायाम् '। अनन्तलोकप्राप्तिप्रतिष्ठासाधनभूतं विद्वद्बुद्धौ निविष्टमग्निं जानीहीत्यर्थः । तत्र श्रुतिवाक्यम् 'लोकादिमग्निं तमुवाच तस्मै या इष्टका यावतीर्वा यथा वा '। इष्टकास्वरूपतत्संख्यादिकमुपदिदेशेत्यर्थः । 'स चापि तत्प्रत्यवदद्यथोक्तमथास्य मृत्युः पुनराह तुष्टः '। **प्रत्यवदत्** अन्ववददित्यर्थः । "तमब्रवीत्प्रीयमाणो महात्मा वरं तवेहाद्य ददामि भूयः । तवैव नाम्ना भवितायमग्निः सृङ्कां चेमामनेकरूपां गृहाण '। **सृङ्का** रत्नमयी माला । 'त्रिणाचिकेतस्त्रिभिरेत्य सन्धिं त्रिकर्मकृत्तरति जन्ममृत्यू । ब्रह्मजज्ञं देवमीड्यं विदित्वा निचाय्येमां शान्तिमत्यन्तमेति । त्रिणाचिकेतस्त्रयमेतद्विदित्वा य एवं विद्वांश्चिनुते नाचिकेतम् । स मृत्युपाशान् पुरतः प्रणोद्य शोकातिगो मोदते स्वर्गलोके । यो चाप्येतां ब्रह्मजज्ञात्मभूतां चितिं विदित्वा चिनुते नाचिकेतम् ।

स एव भूत्वा ब्रह्मजज्ञात्मभूतः करोति तद्येन पुनर्न जायते । एष तेऽग्निः नचिकेतः ! स्वर्ग्यो यमवृणीथा द्वितीयेन वरेण । एतमग्निं तवैव प्रवक्ष्यन्ति जनासः तृतीयं वरं नचिकेतो वृणीष्व । येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नायमस्तीति चैके । एतद्विद्यामनुशिष्टस्त्वयाहं वराणामेष वरस्तृतीयः ' । एषां वाक्यानामर्थो ग्रन्थकृतैवानुमानिकाधिकरणे वक्ष्यते । एवमुक्तो मृत्युराह – " देवैरत्रापि विचिकित्सितं पुरा न हि सुज्ञेयमणुरेष धर्मः । अन्यं वरं नचिकेतो वृणीष्व मा मोपरोत्सीरति मा सृजैनम ' । मा मोपरोत्सीः अतिमा सृजैनम्, मां मा बाधस्व; एनं वरं मां प्रति अतिसृज – मुञ्चेत्यर्थः । एवमुक्तो नचिकेता आह, ' देवैरत्रापि विचिकित्सितं किल त्वं च मृत्यो यन्न सुज्ञेयमात्थ । वक्ता चास्य त्वादृगन्यो न लभ्यः नान्यो वरस्तुल्य एतस्य कश्चित् ' । एवमुक्तो मृत्युराह, ' शतायुषः पुत्रपौत्रान्वृणीष्व बहून् पशून् हस्तिहिरण्यमश्वान् । भूमेर्महदायतनं वृणीष्व स्वयं च जीव शरदो यावदिच्छसि ' । आयतनं निवासस्थानमित्यर्थः । ' एतत् तुल्यं यदि मन्यसे वरं वृणीष्व वित्तं चिरजीविकां च । महाभूमौ नचिकेतस्त्वमेधि कामानां त्वा कामभाजं करोमि । त्वमेधि त्वं महाभूमौ राजा भवेत्यर्थः । ' ये ये कामा दुर्लभा मर्त्यलोके सर्वान् कामान् छन्दतः प्रार्थयस्व । इमा रामाः सरथाः सतूर्याः न हीदृशा लम्भनीया मनुष्यैः । आभिर्मत्प्रत्ताभिः परिचारयस्व नचिकेतो मरणं माऽनु प्राक्षीः ' । मरणसंबद्धं येयं प्रेत इति प्रश्नं न प्रष्टुमर्हसीत्यर्थः । एवं प्रलोभितोऽपि नचिकेता आह, ' श्वोभावा मर्त्यस्य यदन्तकैतत् सर्वेन्द्रियाणां जरयन्ति तेजः । अपि सर्वं जीवितमल्पमेव तवैव वाहास्तव नृत्तगीते ' । श्वः अभावो येषां ते श्वोऽभावाः । त्वदुपन्यस्तभोगाः सर्वे अतिविनश्वरा इत्यर्थः । सर्वेन्द्रियाणामिति । किं च ते भोगाः सर्वेन्द्रियबलनाशका इत्यर्थः । तवैव वाहाः तव नृत्तगीते इति । वाहा रामादयो नृत्तगीतादिकं च तवैव सन्त्वित्यर्थः । ' न वित्तेन तर्पणीयो मनुष्यो लप्स्यामहे वित्तमद्राक्ष्म चेत् त्वाम् । जीविष्यामो यावदीशिष्यसि त्वं वरस्तु मे वरणीयः स एव ' । वित्तं न तृप्तिहेतुः । किञ्च त्वद्दर्शने धनायुषोः को भारः । अतः स एव वरणीयः इत्यर्थः । ' अजीर्यताममृतानामुपेत्य जीर्यन्मर्त्यः क्वधःस्थः प्रजानन् । अभिध्यायन् वर्णरतिप्रमोदान् अतिदीर्घे

जीविते को रमेत'। **क्वधःस्थः** भूरूपाधोलोके वर्तमानः **प्रजानन्** विवेकी मनुष्यः देवानामपि समीपं गत्वा वैषयिकभोगप्रवणः अत्यल्पे जीविते को रमेतेत्यर्थः। 'यस्मिन्निदं विचिकित्सन्ति मृत्यो यत् सांपराये महति ब्रूहि नस्तत्'। यस्मिन् परलोके देवानामपि विचिकित्सा, तन्मे (मेव) ब्रूहीत्यर्थः। अतः परं श्रुतिवचनम्, 'योऽयं वरो गूढमनुप्रविष्टो नान्यं तस्मान्नचिकेता वृणीते'। अतः परं मृत्युवचनम्— 'अन्यच्छ्रेयोऽन्यदुतैव प्रेयस्ते उभे नानार्थे पुरुषं सिनीतः। तयोः श्रेय आददानस्य साधु भवति हीयतेऽर्थाद्य उ प्रेयो वृणीते'। **सिनीतः** बध्नीतः। भिन्नप्रयोजने श्रेयःप्रेयसी पुरुषसंबन्धिनी भवतः। तयोर्मध्ये श्रेय आददानस्य साधुत्वम्; अन्यस्य तदभावश्चेत्यर्थः। 'श्रेयश्च प्रेयश्च मनुष्यमेतः तौ संपरीत्य विविनक्ति धीरः। श्रेयो हि धीरोऽभि प्रेयसो वृणीते प्रेयो मन्दो योगक्षेमाद् वृणीते'। **एतः** प्राप्नुवत इत्यर्थः। **संपरीत्य** सम्यगालोच्य प्रेयोपेक्षया अभ्यर्हितं श्रेयः धीरो वृणीते। मन्दस्तु प्रेयोरूपशरीराप्यायकान्नपानादि वृणीत इत्यर्थः। 'स त्वं प्रियान् प्रियरूपांश्च कामानभिध्यायन् नचिकेतोऽत्यस्राक्षीः। नैतां सृङ्कां वित्तमयीमवाप्तो यस्यां मज्जन्ति बहवो मनुष्याः'। **सृङ्का** कुत्सिता गतिः। 'दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता'। **विषूची** विरुद्धगती इत्यर्थः। 'विद्याभीप्सिनं नचिकेतसं मन्ये न त्वा कामा बहवो लोलुपन्त'। **विद्याभीप्सिनं** विद्याभिलाषिणमित्यर्थः। "अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितं मन्यमानाः। दन्द्रम्यमाणाः परियन्ति मूढाः अन्धेनैव नीयमाना यथान्धाः'। **दन्द्रम्यमाणाः** कुत्सितां गतिं गच्छन्त इत्यर्थः। 'न सांपरायः प्रतिभाति बालं प्रमाद्यन्तं वित्तमोहेन मूढम्। अयं लोको नास्ति पर इति मानी पुनः पुनर्वशमापद्यते मे'। बालमज्ञं प्रति **सांपरायः** परलोको न भातीत्यर्थः। 'अयं लोक' इत्यस्यार्थः, 'संयमने त्वनुभूये' त्यत्र वक्ष्यते। 'श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोऽपि बहवो यन्न विद्युः। आश्चर्योऽस्य वक्ता कुशलोऽस्य लब्धा आश्चर्यो ज्ञाता कुशलानुशिष्टः'। यस्य श्रवणम्, वेदनम्, वक्ता, लब्धा ज्ञाता वा दुर्लभ इत्यर्थः। **कुशलानुशिष्टः** कुशलेनाचार्येणानुशिष्टः इत्यर्थः। 'न नरेणावरेण प्रोक्त एष सुविज्ञेयो बहुधा चिन्त्यमानः। अनन्यप्रोक्ते गतिरत्र नास्ति अणीयान् हि अतर्क्यमणुप्रमाणात्'। **अवरेण** अल्पज्ञेन आचार्येण प्रोक्तोऽयमात्मा न ज्ञातुं शक्यः वादिभिर्बहुधा उत्प्रेक्ष्य-

माणः। अन्येन प्राकृतेन मनुष्येण प्रोक्ते उपदिष्टे सत्यवगतिर्नास्ति, यतोऽयमणोरप्यणीयानित्यर्थः। तदेवाह, 'नैषा तर्केण मतिरापनेया प्रोक्ताऽन्येनैव सुज्ञानाय प्रेष्ठ। यां त्वमापस्सत्यधृतिर्बतासि त्वादृङ् नो भूयान्नचिकेतः! प्रष्टा'। आत्मविषया मतिः तत्पा (तर्कपा?) प्या न भवति, हे प्रेष्ठ प्रियतम! अन्यप्रोक्तापि=आगमानभिज्ञप्रोक्तापि (?) सुज्ञानाय न भवति। यद्विषयिणीं मतिं त्वं प्राप्तवानसि, स आत्मा दुरधिगमः। त्वं यतः प्रलोभ्यमानोऽपि अविचालितः, अतस्त्वं धीरः। तस्मात्त्वादृश एव नः शिष्यः स्यादित्यर्थः। 'जानाम्यहं शेवधिरित्यनित्यं न ह्यध्रुवैः प्राप्यते हि ध्रुवं तत्। ततो मया नाचिकेतश्चितोऽग्निरनित्यैर्द्रव्यैः प्राप्तवानस्मि नित्यम्'। कामस्याप्तिं जगतः प्रतिष्ठां क्रतोरनन्त (रानन्त्य) मभयस्य पारम्। स्तोमं महदुरुगायं प्रतिष्ठां दृष्ट्वा धृत्या धीरो नचिकेतोऽत्यस्राक्षीः। तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम्। अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति। एतत् श्रुत्वा संपरिगृह्य मर्त्यः प्रवृह्य धर्म्यमणुमेतमाप्य। स मोदते मोदनीयं हि लब्ध्वा विवृतं सद्म नचिकेतसं मन्ये। अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात् कृताकृतात्। अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद। सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति। यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत् ते पदं सङ्ग्रहेण ब्रवीम्योमित्येतत्। एतद्ध्येवाक्षरं ब्रह्म एतद्ध्येवाक्षरं परम्। एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत्। एतदालम्बनं श्रेष्ठमेतदालम्बनं परम्। एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते। न जायते म्रियते वा विपश्चिन्नायं कुतश्चिन्न बभूव कश्चित्। अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे। हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम्। उभौ तौ न विजानीतो नायं हन्ति न हन्यते। अणोरणीयान् महतो महीयान् आत्माऽस्य जन्तोर्निहितो गुहायाम्। तमक्रतुः पश्यति वीतशोको धातुप्रसादान्महिमानमीशम्। आसीनो दूरं व्रजति शयानो याति सर्वतः। कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हति। अशरीरं शरीरेष्वनवस्थेष्ववस्थितम्। महान्तं विभुमात्मानं मत्वा धीरो न शोचति। नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते तेन लभ्यः तस्यैष आत्मा विवृणुते तनूं स्वाम्। नाविरतो दुश्चरितान्नाशान्तो नासमाहितः। नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात्। यस्य ब्रह्म च क्षत्रं च उभे भवत

ओदनः । मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः । ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्ध्ये । छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः । यः सेतुरीजानानामक्षरं ब्रह्म यत् परम् । अभयं तितीर्षतां पारं नाचिकेतं शकेमहि । आत्मानं रथिनं विद्धि शरीरं रथमेव च ' इत्यादि ।

**निर्विशेषतापत्तिर्मोक्षश्चेदिति** । ततश्चोपायविशेषनिर्धारणं विना सत्तावधारणात्मकमोक्षस्वरूपनिर्धारणं न संभवतीति मोक्षज्ञानार्थत्वं तदनुबन्धिज्ञानस्य युज्यत इति भावः । **ज्ञातेतरविषयत्वादिति** । देहातिरिक्तस्य नित्यस्यात्मनो ज्ञातत्वेन प्रश्नस्य तद्व्यतिरिक्तविषयत्वादित्यर्थः । **श्रुत्यन्तरसंवादमिति** । " न प्रेत्य संज्ञास्ती " ति वाक्यस्य मोक्षदशायां स्वाभाविकापरिच्छिन्नज्ञानसङ्कोचाभावेन भूतसंघातेनैकीकृत्यात्मनि देवादिरूपज्ञानं नास्तीत्यर्थकत्वादिति भावः । **परावरात्मतत्त्वविज्ञानमिति** व्याख्येयं पदम् । **प्राकरणिकपूर्ववाक्यस्थहेतुपरं द्वितीयमिति** । अत्र यद्वक्तव्यम्, तत् पूर्वमेवोक्तम् ।

**हिशब्दपञ्चम्यन्तपदयोः उभयोः श्रवणादिति** । इतरथा हिशब्दस्यापि हेतुत्वर्थकत्वेन पौनरुक्त्यप्रसङ्गादित्यर्थः । स्वपक्षे पौनरुक्त्याभावमुपपादयति = **गुहां प्रविष्टयोरिति** । **सूत्रार्थस्य दर्शयतीति** । गुहाप्रविष्टयोरात्मत्वरूपसूत्रार्थस्येत्यर्थः । गुहाप्रविष्टयोरात्मत्वात् अत्ता परमात्मेत्यर्थः । नन्वेवं हि परेषां योजना—गुहां प्रविष्टौ जीवपरावेव । कुतः? आत्मानौ हि तौ । चेतनौ हि तावित्यर्थः । द्वयोरपि चेतनत्वेन सजातीयत्वात्, ऋतपानलिङ्गेन निश्चितस्य द्वितीयापेक्षायां सजातीयस्य चेतनान्तरस्यैव ग्रहणमुचितम् । अस्य गोर्द्वितीयोऽन्वेष्टव्य इत्युक्ते द्वितीयोऽपि गौरेवान्विष्यते ; नाश्वादिः । यदुक्तं परमात्मनो गुहाहितत्वं नोपपद्यत इति – तन्न ; श्रुतिस्मृतिषु परमात्मनोऽपि गुहाहितत्वदर्शनात् । अतो भवत्पक्ष इव अस्मत्पक्षेऽपि गुहां प्रविष्टाविति सौत्रं पदं न पूर्वपक्षपरम् । इयांस्तु विशेषः—भवत्पक्षे गुहांप्रविष्टाविति सौत्रं पदं सिद्धान्तयुक्तिसूचकम् ; अस्मन्मते तु पूर्वपक्षयुक्तिसूचकम् । अतः पूर्वपक्षद्योतकनिर्देशो नावश्यक इत्यस्वरसादाह—**अर्भकौकस्त्वादिति** । **परस्योपपन्न इतीति**च्छेदः । **कृतकरत्वादिति** । अर्भकौकस्त्वादिति सूत्रेणेत्यर्थः । अस्मिन्नधिकरणे, " एष एव न्यायः, " द्वा सुपर्णा सयुजा सखाया " इत्यादिष्वपि " इति शाङ्करभाष्ये यदुक्तम्—

तद् दूषयति, **द्वासुपर्णाविति वाक्य** इत्यादिना । ननु पैङ्गिरहस्यब्राह्मणानुसारेण द्वा सुपर्णेति मन्त्रस्य बुद्धिजीवपरत्वेन एतन्न्यायातिदेशस्य तद्भाष्य एव दूषितस्य दूषणं किमर्थं क्रियत इत्याशंक्य तदभिमतबुद्धिजीवपरत्वमपि न संभवतीत्याह — **तस्य च वाक्यस्येति** ॥

इति अत्त्रधिकरणम् ॥

---

## अन्तराधिकरणम् (३)

---

**अन्तर उपपत्तेः १-२ १३.**

स्वरूपसत्संनिधानस्य प्रसिद्धावनुपयोगात् सर्वेन्द्रियकन्दभूते हृदये वर्तमानस्य चक्षुषि संनिधानाभावाच्च व्याचष्टे—**सन्निधानावगमादिति** । **चक्षुष्यवगमादित्यर्थ** इति । चक्षुषावगमादित्यर्थः; उत्तरग्रन्थानुसारात् । **ननून्मीलितं हीत्यादि** भाष्येण चक्षुषो देहे जीवस्थितिगतिनिश्चायकत्वमुपपादितम् । नैतावता, 'अक्षिणि पुरुषो दृश्यत' इति सप्तम्यर्थ उपपादित इत्याशंक्याह — **अस्मिन् कर्मणीति** । अनेन कर्मणा अस्य सामर्थ्यं दृष्टमिति वक्तव्ये, अस्मिन् कर्मण्यस्य सामर्थ्यं दृष्टमितिवत् अक्ष्णा दृश्यत इति वक्तव्ये अक्षिणि दृश्यत इत्युक्तिरिति भावः । **दृष्टमिति** सूचितमित्यर्थः । उत्तरत्र **सूचकम्** इति ग्रन्थानुसारात् । अथ वा **सूचकमित्यस्य** दर्शकमिति वार्थः समाश्रयणीयः । ननु, 'य एषोऽन्तरक्षिणि पुरुषो दृश्यत' इत्यस्य परमात्मपरत्वस्य अन्तस्तद्धर्मोपदेशादित्यधिकरणेन समर्थितत्वात् कथं तत्तुल्यनिर्देशेऽस्मिन् वाक्ये अस्य पूर्वपक्षस्य उत्थितिरिति चेत्— सत्यं तत्र जीव इति पूर्वपक्षस्तत्रत्यानन्यथासिद्धलिङ्गेन प्रत्याख्यातः; इह तु बाधकलिङ्गाभावात् प्रसिद्धिदृश्यत्वाभ्यां प्रतिबिम्बादिपूर्वपक्षस्योत्थितिः । नन्वेवमपि, "एतं संयद्वाम इत्याचक्षते, एतं हि सर्वाणि वामान्यभिसंयन्ति । सर्वाण्येनं वामान्यभिसंयन्ति, य एवं वेद । एष उ एव वामनीः । एष हि सर्वाणि वामानि नयति । सर्वाणि वामानि नयति, य एवं वेद । एष एव भामनीः । एष हि सर्वेषु लोकेषु भाति । सर्वेषु लोकेषु भाति य एवं वेद" इत्यादिना प्रदर्शितानां सर्वकामोपेतत्व-

सकलशुभप्रापकत्वसर्वलोकभासमानत्वरूपाणां संयद्वामत्ववामनीत्वभामनीत्वानां तत्तदनुरूपफलरूपतात्पर्यलिङ्गानुगृहीतानाम्, 'एष आत्मेति होवाच एतदमृतमेतदभयमेतद् ब्रह्म' इति श्रुतिप्रतिपादितानामौपसंहारिकाणां बहूनामात्मत्वामृतत्वाभयत्वब्रह्मत्वानामनन्यथासिद्धिब्रह्मलिङ्गानां सत्त्वे प्रसिद्धिदृश्यत्वलिङ्गाभ्यां प्रथमश्रुताभ्यामपि कथं पूर्वपक्षोत्थितिरित्याशंक्याह = **इतिकरणं चार्थतात्पर्यद्योतकमिति**। 'मनो ब्रह्मेत्युपासीते' त्यादौ इतिशब्दप्रयोगे अर्थे तात्पर्यादर्शनादिति भावः। शिष्यबुद्धिसौकर्यार्थमाह **राद्धन्ते त्विति**। व्याख्यायत इति शेषः। बहुवचनाभिप्रायं वक्तुं पुनरपि तमेव प्रतीकं गृह्णाति **एषामितीति**। **अर्थपरमेव दृष्टमिति चानुसन्धेयमिति**। इतिशब्दस्तत्रैवार्थविवक्षां वारयति, यत्र ज्ञानसंबन्धो विवक्ष्यते, यथा 'मनो ब्रह्मे त्युपासीते' त्यादौ। यत्र तूक्तार्थावच्छेदेन वचनसम्बन्धः, तत्र इतिशब्दो नार्थविवक्षां वारयति यथा "इति, ह स्मोपाध्यायः कथयती" त्यादाविति भावः। परोक्तसिद्धान्तयुक्तिं दूषयति — **तद्यद्यप्यस्मिन्नित्यादिना**॥

### स्थानादिव्यपदेशाच्च १ २-१४.

**व्यतिरेकस्य वक्ष्यमाणत्वादिति**। स्थितिव्यतिरेकस्य हेतूकरिष्यमाणत्वात् तदन्वयो हेतूकर्तुमुचित इति भावः। **न तु प्रदेशपरतयेति**। न परमतवत् अधिकरणपरतयेत्यर्थः। **जीवात्मनि संभवतस्तस्येति**। नन्वाकाशवत् सर्वगतस्य ब्रह्मणः कथमत्यल्पाक्षिस्थानत्वमित्याशंक्य, यः पृथिव्यां तिष्ठन्नित्यादिस्थानव्यपदेशवत्, नामरूपरहितस्यापि ब्रह्मणः, तस्योदिति नाम, हिरण्यश्मश्रुर्हिरण्यकेश इति नामरूपोपदेशवच्च सर्वगतस्यापि ब्रह्मण उपलब्ध्यर्थं स्थानविशेषो न विरुध्यत इत्येव परैरुक्तम्; न तु नामरूपवत्ताया अपरमात्मत्वसाधकत्वमुपन्यस्तम्; येनायं दोषः स्यादिति चेत् — उच्यते, सर्वगतस्य ब्रह्मणः कथमत्यल्पाक्षिस्थानकत्वमिति शङ्कायाम्, यश्चक्षुषि तिष्ठन्निति श्रुत्यन्तरे चक्षुषः स्थानत्वेन व्यपदेशादित्येवमस्मदुक्तरीत्या वक्तुं शक्यत्वेन नामरूपरहितस्य ब्रह्मणोऽनुचितस्थाननामरूपाणां व्यपदेशदर्शनादिति शिरोवेष्टनेन नासिकाग्रहणस्यायुक्तत्वादित्यत्र तात्पर्यात्। **असत्पक्षेऽपि संभवतीति**। अन्यथासिद्धिः फलितेति शेषः। **अर्थतः शब्दतश्चेति**। यश्चक्षुषि तिष्ठन्नित्यादावर्थतः प्रसिद्धिः। 'दृश्यते त्वग्र्यये' त्यादौ शब्दतः। **इदमुपलक्षणम्** — य एषोऽक्षिणि

पुरुषो दृश्यत इत्यक्षिविद्यायां शब्दतोऽर्थतश्च प्रसिद्धिर्द्रष्टव्या। **साधकान्तरप्रदर्शन-परमिदं सूत्र**मिति। ननु चक्षुषि स्थितिनियमनादिकं मिलितं परमात्मत्वसाधकम्, उत स्थितिमात्रम्? नाद्यः, स्थितिनियमनादेर्मिलितस्य परमात्मत्वसाधकत्वेऽपि य एषोऽक्षिणीति वाक्ये मिलितस्याश्रवणात्। न द्वितीयः, स्थितिमात्रस्य परमात्मव्यतिरिक्तेष्वपि सत्त्वेन तदसाधारणत्वाभावात्। अतः पूर्वपक्षोक्तयुक्त्यन्यथासिद्धिपरत्वमेव वक्तव्यमिति चेत्—उच्यते, उत्तरत्र सूत्रार्थनिष्कर्षावसरे श्रुत्यन्तरप्रदर्शनमुखेन स्ववाक्यस्थशङ्कापरिहारपरं द्वितीयसूत्रमिति आचार्यैरेव वक्ष्यमाणत्वान्न तत्राग्रहः॥

## सुखविशिष्टाभिधानादेव च १-२-१५.

"उपकोसलो ह वै कामलायनस्सत्यकामे जाबाले ब्रह्मचर्यमुवास, तस्य ह द्वादशवर्षाण्यग्नीन् परिचचार। स ह स्मान्यान् अन्तेवासिनस्समावर्तयंस्तं ह स्मैव न समावर्तयति। तं जायोवाच तप्तो ब्रह्मचारी कुशलमग्नीन् पर्यचारीत्, मा त्वाऽग्नयः परिप्रवोचन् प्रब्रूह्यस्मा इति। तस्मै हाप्रोच्यैव प्रवासांचक्रे, स ह व्याधिनाऽनशितुं दध्रे। तमाचार्यजायोवाच—ब्रह्मचारिन् अशान किं नु नाश्नासीति, स होवाच बहव इमेऽस्मिन् पुरुषे कामा नानात्यया: व्याधिभिः प्रतिपूर्णोऽस्म, नाशिष्यामीति। अथ हाग्नयस्समूदिरे, तप्तो ब्रह्मचारी कुशलं न पर्यचारीत् हन्तास्मै प्रब्रवामेति। तस्मै होचुः, प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति। स होवाच—विजानाम्यहं यत्प्राणो ब्रह्म कं च तु खं च न विजानामीति। ते होचुः, यद्वाव कं तदेव खम्, यदेव खं तदेव कमिति, प्राणं च हास्मै तदाकाशं चोचुः। अथ हैनं गार्हपत्योऽनुशशास। पृथिव्यग्निरन्नमादित्य इति। य एष आदित्ये पुरुषो दृश्यते, सो हमस्मि स एवाहमस्मीति। स य एतमेवं विद्वानुपास्ते, अपहते पापकृत्याम्, लोकीभवति, सर्वमायुरेति, ज्योग्जीवति, नास्यावरपुरुषाः क्षीयन्ते, उप वयं तं भुंजामोऽस्मिंश्च लोके अमुष्मिंश्च य एतमेवं विद्वानुपास्ते। अथ हैनमन्वाहार्यपचनोऽनुशशास, आपो दिशो नक्षत्राणि चन्द्रमा इति। य एष चन्द्रमसि पुरुषो दृश्यते, सोऽहमस्मि स एवाहमस्मीति। स य एतमेवं विद्वानुपास्ते, अपहते पापकृत्या लोकीभवति, सर्वमायुरेति ज्योग्जीवति नास्यावरपुरुषाः क्षीयन्ते। उपयं वतं भुंजामोस्मिंश्च लोके अमुस्मिंश्च य एतमेवं विद्वानुपास्ते" इत्यादि पूर्ववत्। "अथ हैनमाहवनीयोऽनुशशास, प्राण आकाशो

द्यौः विद्युदिति। य एष विद्युति पुरुषो दृश्यते, सोऽहमस्मि स एवाहमस्मीति। स य एतमेवं विद्वानुपास्ते "इत्यादि। "ते होचुरुपकोसलैषा सोम्य तेऽस्मद्विद्या चात्मविद्या च। आचार्यस्तु ते गतिं वक्तेति। आजगाम हास्याचार्यः तमाचार्योऽभ्युवाद उपकोसल इति। भगव इति ह प्रतिशुश्राव। ब्रह्मविद इव सोम्य ते मुखं भाति; को नु त्वानुशशासेति। को नु माऽनुशिष्यात् भो इति इहापेव निह्नुते। इमे नूनमीदृशा अन्यादृशा इति हाग्नीनभ्यूदे। किं नु सोम्य किल तेऽवोचन्निति, इदमिति ह प्रतिजज्ञे। लोकान्वाव किल सोम्य ते अवोचन्, अहं तु ते तद्वक्ष्यामि, यथा पुष्करपलाशे आपो न श्लिष्यन्ते, एवमेवंविदि पापं कर्म न श्लिष्यत इति। ब्रवीतु मे भगवानिति। तस्मै होवाच, य एषोऽक्षिणि पुरुषो दृश्यते, एष आत्मेति होवाच; एतदमृतमेतदभयमेतत् ब्रह्मेति। तद्यद्यप्यस्मिन् सर्पिर्वा उदकं वा सिञ्चति, वर्त्मनी ह्येव गच्छति। एतं संयद्वाम इत्याचक्षते; एतं हि सर्वाणि वामान्यभिसंयन्ति। सर्वाण्येनं वामान्यभिसंयन्ति य एवं वेद। एष उ एव वामनीः; एष हि सर्वाणि वामानि नयति, सर्वाणि वामानि नयति य एवं वेद। एष उ एव भामनीः; एष हि सर्वेषु लोकेषु भाति। सर्वेषु लोकेषु भाति य एवं वेद। अथ यदु चैवास्मिन् शव्यं कुर्वन्ति, यदु च न, अर्चिषमेवाभिसंभवन्ति अर्चिषोऽहरह्न आपूर्यमाणपक्षम्, आपूर्यमाणपक्षाद्यान् षडुदङ्ङेति मासांस्तान्, मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतम्। तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति। एष देवपथो ब्रह्मपथः। एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्त" इति श्रुतिक्रमः।

श्रुत्यनुरोधेन सूत्रं योजयित्वा सूत्रानुरोधेन श्रुतिं योजयति—**तद्गुणसारत्वादिति न्यायेनेति। अयं तु हेतुर्व्यतिरेकोक्तिनिरपेक्ष इतीति।** इदमुपलक्षणम्—स्वसद्भावसाधने, हेत्वन्तरनिरपेक्ष इति द्रष्टव्यम्। अत एव भाष्ये सामान्यतः, "एवकारो नैरपेक्ष्यं द्योतयती"त्युक्तम्। ततश्च ब्रह्मणः प्रस्तुतत्वेऽप्यग्निविद्याव्यवहितत्वात् नास्य परामर्शः। अतः सुखविशिष्टाभिधानादिति हेतोरसिद्धिरिति या शङ्का, सापि नैरपेक्ष्यद्योतकेनैवकारेण सूत्रकृता व्यावर्त्यत इति भाष्याभिप्राय इति भावः। **अङ्गानामप्यङ्गिफलाविरुद्धेति।** पात्रधारणोपयुक्तप्रस्तरप्रतिपत्तिरूपतया क्रत्वर्थस्यैव सतः प्रस्तरप्रहरणस्य श्रुतिविनियुक्तायुरादिफलप्रतिपादकसूक्तवाककरणकत्वान्यथानुपपत्त्या फलसाधनत्ववत्,

ब्रह्मविद्याङ्गभूताया अग्निविद्याया अपि फलार्थत्वमुपपद्यत इति भावः । उपक्रमोपसंहारयोरुभयत्रेति योजना; न तु व्याख्येयं पदम्; तद्वाक्यस्योत्तरत्रावतारयिष्यमाणत्वादिति मन्तव्यम् । **हेतुचतुष्टयेने**ति । यद्यप्युपक्रमोपसंहारयोः ब्रह्मसंशब्दनमपि, आचार्यस्तु ते गतिं वक्तेति अग्निवचनवत् अग्निविद्यायाः प्राक् ब्रह्मविद्याया असमाप्तावेव हेतुः, ततश्च प्रस्तुतब्रह्मविद्योपक्रमतदुपसंहारमध्यपतितत्वात्, 'अथ हैन' मित्यन्वदेशात्, समुच्चित्योपदेशाच्चेति हेतुत्रयमेवोपन्यस्यत इति वक्तुं शक्यम् । भाष्येऽपि तथैव प्रतीयते, न प्रकारान्तरेण—तथापि साक्षात्परम्परोपपादकसाधारण्येन चतुष्टयमुपन्यस्तं द्रष्टव्यम् । **पुनः परामर्शो ह्यन्वादेश** इति । क्रियान्तरसम्बन्धितया शब्दतः प्रकृतस्य पुनः क्रियान्तरसम्बन्धितया शब्दतः प्रतिपादनमन्वादेश इत्यर्थः । **उपदेष्टव्यत्वविशेषविवक्षये**ति । मोक्षफले समप्रधानत्वाभावेन समुच्चयाभावेऽप्युपदेशक्रियायां समुच्चयः संभवतीति भावः । **यद्वा सम्बन्धमात्रपर** इति । न तु समप्राधान्येन सम्बन्धपर इत्यर्थः । 'द्रव्यसंस्कारकर्मसु परार्थत्वात फलश्रुतिरर्थवादस्स्यात्' इति जैमिनीयसूत्रपाठः । द्रव्यगुणसंस्कारकर्मस्विति क्वचित् कोशे पाठो दृश्यते । स तु लेखकस्खलनकृतः । एतत्सूत्रार्थश्च, शेषत्वात् पुरुषार्थवाद इत्यत्रास्माभिः स्पष्टयिष्यते । **ब्रह्मविद्यानुगुणफलत्वं दर्शयती**ति । सत्पुत्रपौत्रादिसन्तत्यभिवृद्धेः पितृपितामहाद्यार्जितविद्यार्थपुण्यकर्मफलाभिवृद्धौ हेतुत्वादित्यर्थः । 'विशिष्टेषु कर्मसु वर्तमानाः पूर्वेषां सांपराये कीर्तिं स्वर्गं च वर्धयन्ती' त्यापस्तम्बोक्तेरिति द्रष्टव्यम् । भाष्ये **श्रुत्यन्तरे ब्रह्मविद्याफलत्वेन यत** इति । न चाग्निविद्याया ब्रह्मविद्योपयुक्तसत्संततिरूपफलजनकत्वकीर्तनावसरे सत्सन्ततेः ब्रह्मविद्याफलत्वप्रापकश्रुत्यन्तरोदाहरणमयुक्तमिति वाच्यम्—निर्दिष्टफलानां पूर्वपक्ष्यभिमतब्रह्मविद्याविरोधित्वप्रतिक्षेपमात्रे तात्पर्यात् । अङ्ग्यनुकूलफलजनकत्वाभावेऽपि अङ्गिविरुद्धफलजनकत्वाभावे अङ्गत्वं संभवतीत्येव भाष्यकृत्संरम्भात् । अत एव वक्ष्यति, 'अन्यथात्वं शब्दा' दिति सूत्रे, "आर्थवादिकमपि फलं तदविरुद्धं ग्राह्यमेवे"ति । **उपशब्दार्थ** इति । पर्यन्तवाचिना परीत्युपसर्गेण **उप**शब्दार्थभूतं सामीप्यं सूच्यते । अतो विघ्ननिवारणपर्यन्तत्वलाभ इति । **एकप्रकरणत्वे स्थितेऽपी**ति । पूर्वं ब्रह्मणः प्रकृतत्वे अग्निविद्याव्यवधानाभावे च सत्यपीत्यर्थः । 'स ह व्याधिनाऽनशितुं दध्र इति वाक्यार्थ-

मभिप्रयन्नाह भाष्ये **अनाश्वांस**मिति । 'उपेयिवाननाश्वान्' इति नञ्पूर्वादश्नातेरनाश्वानिति रूपम्; अभुक्तवन्तमित्यर्थः ।

## अत एव च स ब्रह्म १-२-१६.

**याव**तेत्येतद्व्याचष्टे – **प्रत्युतेति । न तु ब्रह्मशब्देनेति** । ब्रह्मोपदिष्टं चेत्, ब्रह्मोचुरित्येव निगमनं स्यादिति भावः । **निगमनवाक्यस्थपुंल्लिङ्गेति** । 'प्राणं च हास्मै तदाकाशं चोचुः' इति निगमनवाक्यस्थेत्यर्थः । न चाकाशशब्दस्योभयलिङ्गतया पुंल्लिङ्गत्वसंभवेऽपि नपुंसकलिङ्गतत्पदसमभिव्याहारात् निगमनवाक्यस्थाकाशशब्दस्यापि नपुंसकतया कथं तत्कटाक्षेण स इति पुंल्लिङ्गप्रयोग इति वाच्यम् – स चासावाकाशश्च तदाकाश इति तदाकाशपदस्य समस्ततया तस्य नपुंसकलिङ्गत्वे प्रमाणाभावेन, 'आत्मन आकाशस्संभूतः', 'आकाश इति होवाच', 'आकाशो ह वै नामरूपयोर्निर्वहिता', 'यदेष आकाश आनन्दो न स्यात्' इत्यादिप्रयोगानुसारेण, आकाशशब्दस्य पुंल्लिङ्गतया प्रसिद्धिप्राचुर्येण च पुंल्लिङ्गत्वोपपत्तेः । **इदं चोपलक्षणम्** – कं ब्रह्म खं ब्रह्मेति वाक्यानाम्, नाम ब्रह्मेत्यादिवाक्यसारूप्यात् दृष्टिविधित्वमस्त्विति वदतः प्राणो ब्रह्मेति वाक्येऽपि दृष्टिविधित्वमभिमतम् । अतः प्राणो ब्रह्मेत्यत्रापि दृष्टिविधित्वपरिहारेण प्राणस्यापि ब्रह्मत्वमिह सूत्रे सिसाधयिषितम् । अतः प्रक्रमश्रुतपुंल्लिङ्गप्राणशब्दानुरोधात् स इति प्राणः परामृष्ट इत्युक्तौ दोषाभावात् । न चैवं कंखशब्दनिर्दिष्टयोः ब्रह्मत्वं नोक्तं स्यादिति वाच्यम्–खशब्दाभिधेयो यः, स आकाश इत्युक्तावपीतरयोः समत्वात् । यदि चैकस्य निर्देशे इतरयोरपि निर्दिष्टत्वं सिद्धमिति मतम्, तदस्मत्पक्षेऽपि समानमित्यास्तां तावत् । **वाक्यद्वयस्थाविति** । 'य एषोऽक्षिणि पुरुष' इत्यत्र स्थानगुणविध्यर्थं कं ब्रह्मेति वाक्योक्तसुखविशिष्टाभिधानव्यक्तिविशेष एकः पूर्वसूत्रे साधकतयोक्तः, इह तु, यद्वाव कं तदेव खमिति वाक्यगताभिधान व्यक्तिविशेष एक इति द्वौ व्यक्तिविशेषावित्यर्थः । **अर्थसामर्थ्यात् श्रुतिव्यक्तिविशेषसिद्धिरिति**। 'नात्मा श्रुते'रित्यत्रात्मानुत्पत्तिप्रतिपादिका, न जायते म्रियते इत्यादिका विवक्षिता या श्रुतिः, न सा श्रुतिव्यक्तिः, 'ज्ञोऽत एवे'त्यनन्तरसूत्रे अतश्शब्देन परामृश्यते–अपि तु ज्ञत्वप्रतिपादिका, 'विज्ञातारमरे केने' त्यादिकाऽन्यैव श्रुतिः–तद्वदित्यर्थः । नन्वश्रुत-

वेदान्तस्योपकोसलस्य मुमुक्षवे प्रतीकोपासनं नोपदेश्यमिति ज्ञानम् , तथा प्राणो ब्रह्मेत्यत्र प्राणस्य शरीरत्वं शरीरत्वे च शरीरवाचिशब्दानां शरीरिपर्यन्तत्वमित्येतावत् ज्ञानं कथं स्यात्; शरीरं नियाम्यमिति ज्ञानं च कथम्; तथा, 'कं ब्रह्म खं ब्रह्म' त्यत्र 'प्राणो ब्रह्मे, त्यत्रेव वैषयिकसुखभूताकाशशरीरकत्वनिश्चयस्यैव संभवेनान्योन्यविशेषणभावस्य काप्यदृष्टचरस्य कथं प्रतिपाद्यत्वशङ्कोत्थानम्। अतश्चैतादृशविचारसंभवः कथमितीमामाशङ्कां परिहरति – **मुमुक्षोः प्रतीकोपासनमित्यादिना** । **संभवति तद्वदिति** छेदः । प्रतीकोपासनशङ्काया मुमुक्षूपदेश्यत्वज्ञाताज्ञातविभागकथनानुपपत्तिनिरास्यत्वे सौत्रहेतोर्निरासकत्वं न स्यादित्याशंक्य सौत्रहेतोरपि निरासकत्वं समर्थयते **यद्वाव कं तदेव खमित्यादिना** । **न ह्यर्थान्तराज्ञानस्येति** । अन्यतरप्रकारं न जानामीति वदन्तं प्रतीत्यर्थः । **अज्ञानवचनादिति**। दृष्टिविधित्वेन सर्वस्यापि ज्ञातत्वादिति पूर्वमुक्तत्वादिति भावः । **अन्योन्यविशेषणविशेष्यभावस्याप्रमाणिकत्वादिति** । न चापरिच्छिन्नत्वसुखरूपत्वयोः कखशब्दार्थयोः अन्योन्यव्यवच्छेदकत्ववत् नीलोत्पलयोरपि परस्परव्यवच्छेदकत्वे को दोषः, यदेव नीलं तदेवोत्पलं यदुत्पलं तन्नीलमिति संभवादिति वाच्यम् – तथात्वे विशेषणं विशेष्येणेति समासे पूर्वनिपातानियमप्रसङ्गेन उत्पलनीलमित्यपि प्रयोगः स्यादिति भावः। **निगमनवाक्यस्यापीति** । 'प्राणं च हास्मै' इति वाक्यस्यापि चस्वारस्यपरि(चस्वारस्यापरि?)त्यागेनान्योन्यविशेषणतया ब्रह्मस्वरूपपरत्वमेव, नोपास्यपरत्वमित्याहुः ।

## श्रुतोपनिषत्कगत्यभिधानाच्च १-२-१७.

**उपनिषत्सु प्रतीकोपासनानामिति** । ये श्रुतोपनिषदोऽपि प्रतीकमुपासते, तेषामर्चिरादिगतेरनुसंधेयत्वाभावात् तद्व्यावृत्त्यर्थमधिगतपरमपुरुषयाथात्म्यस्येति व्याचष्ट इत्यर्थः । नन्वेवमपि ये पुनः अधिगतपरमपुरुषयाथात्म्या अदृष्टवैगुण्यवशात् न ब्रह्मोपासते, तेषामर्चिरादिगतेरनुसंधेयत्वाभावात् पुनरपि स दोषस्तदवस्थ इति चेन्न – अधिगतपरमपुरुषयाथात्म्यस्येत्यस्य ब्रह्मोपासकस्येत्यर्थात् । **ब्रह्मविद्याङ्गत्वज्ञापकश्रुत्यन्तरज्ञापनार्थमिति** । श्रुताः पठिता उपनिषदः अङ्गभावप्रतिपादकत्वेन यस्याः गतेः सा श्रुतोपनिषत्का ; अङ्गभावप्रतिपादकपठ्यमानोपनिषत्प्रतिपाद्यगत्यभिधानादित्यर्थ इत्येवमावृत्त्या श्रुतोपनिषत्कस्य पुरुषस्य श्रुतोपनिषत्कगत्यभिधाना-

दिति प्रदर्शनार्थं श्रुतोपनिषत्केत्यधिकाक्षरोपादानमिति **श्रुत्यन्तरप्रतिपाद्यमानाचि-रादिकेति** भाष्याभिप्राय इति भावः। ततश्च श्रुतोपनिषत्केत्यनेनायमर्थः कथं लभ्यते, श्रुतब्रह्मणं इत्युक्ते कुतो न लभ्यत इति शङ्का पराकृता। सूत्रस्य सर्वतो-मुखत्वात् आवृत्तिरलङ्कार इति द्रष्टव्यम्। **तत्क्रतुन्यायविरोध इत्यभिप्रायेणेति**। प्राप्यस्य परमपुरुषस्य उपासनविषयत्वावश्यम्भावादिति भावः। ननु, 'अथ यदु चैवा-स्मिन् शव्यं कुर्वन्ति यदु च ने'ति पूर्ववाक्ये अस्मिन्नित्येकवचननिर्देशात् कथम्, 'तेऽर्चि-षमेवाभिसंभवन्ती'ति उक्तिरित्याशंक्य पूर्ववाक्यस्थस्यास्मिन्नित्यंशस्य जात्यभिप्रायत्वान्न दोषः इत्यभिप्रयन्नाह — **अर्चिषमेवेत्येतत्पूर्वमिति**। नन्वस्यामुपकोसलविद्याया — मर्चिरादिगतिप्रतिपादनं व्यर्थम्। 'तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासत' इति पञ्चाग्निविद्यावाक्यसिद्धत्वात्। न च, आचार्यस्तु ते गतिं वक्त'ति गतेराचार्यवक्तव्य-त्वेनाग्निभिरुपदिष्टत्वात् आचार्येण गतिरुक्तेति वाच्यम्, अग्नयो वा किमर्थं तथोचुरिति पर्यनुयोगस्य तत्रापि समत्वात् इत्यत्राह — **पञ्चाग्निविद्येति**। ननु श्रुतोपनिषत्क-गत्यभिधानं कथमक्षिपुरुषस्य परमात्मत्वसाधकम्, अग्निभिः सुखविशिष्टब्रह्मोपासन-मुपदिश्य तच्छेषत्वेन, 'आचार्यस्तु ते गतिं वक्त'ति आचार्यवक्तव्यत्वेनोक्ता गतिः आचार्येणोपदिष्टेत्येतावताऽक्षिपुरुषस्य ब्रह्मत्वे किमायातम, अग्न्युपदिष्टसुखविशिष्ट-विद्याया ब्रह्मविद्यात्वमात्रेणापि अर्चिरादिगत्यभिधानस्य सङ्गतत्वात्। न चाग्न्युपदिष्ट-सुखविशिष्टस्य ब्रह्मत्वे सिद्धे सुखविशिष्टाभिधानादेव चेति सूत्रोक्तन्यायादेवाक्षि-पुरुषस्यापि ब्रह्मत्वं सिद्धमिति वाच्यम् — तथात्वे श्रुतोपनिषत्कसूत्रवैयर्थ्यापत्तेः। न चेदमपि सूत्रमग्न्युपदिष्टसुखविशिष्टस्यैव ब्रह्मपरत्वसाधकमिति वाच्यम्, एतस्य सूत्रस्य साक्षादक्षिपुरुषब्रह्मत्वोपपादकत्वस्यैव ग्रन्थकृदभिमतत्वात् इति चेत्—उच्यते। 'अथ यदु चैवास्मिन् शव्यं कुर्वन्ती'त्यत्र इदंशब्दस्याक्षिपुरुषविद्यानिष्ठविषयत्वस्य परित्यागा-योगेनाक्षिपुरुषस्य साक्षात् ब्रह्मत्वसाधकत्वात्।

### अनवस्थितेरसंभवाच्च नेतरः १-२-१८.

ननु हृदयस्य कथं गोलकादिप्रदेशवर्तीन्द्रियकन्दत्वमित्याशंक्य, शतं चैका-चेत्यादिप्रतिपन्ननाडीद्वारा कन्दत्वमभिप्रयन्नाह — **शतं चैकाचेति**।

**इयं च श्रुति**रिति। ''आसु तदा नाडीषु''इति श्रुतिरित्यर्थः। अत्र वक्तव्यं सर्वं जगद्वाचित्वादित्यत्र स्पष्टम्। **हृदयशब्दो हृद्गतपरमात्मपर** इति। **इदमुपलक्षणम्।** प्रासादगतखट्वास्थे पुंसि प्रासादस्थ इतिवत् हृदयस्थपरमात्मस्थे पुंसि हृदयस्थमिति व्यवहारो मुख्य एव।

**यादवप्रकाशीय** इत्यादि। **परमात्मत्वसाधनमनुपपन्न**मिति। जीवव्युदमनमनुपपन्नमित्यर्थः। **तदनुवादेन परमात्मत्वसाधना**येति। प्रतिबिम्बव्यावृत्तिं सिद्धवत्कृत्य जीवव्यावृत्तिसाधनायेत्यर्थः। यद्वा पूर्वोपन्यस्तहेतूननूद्य तैर्हेतुभिः जीवव्यावृत्तिसाधनायेत्यर्थः। ननु, 'अत एव न देवता भूतं चे'ति सूत्रतुल्ययोगक्षेमं भविष्यतीत्यस्वरसादाह— **प्राणो ब्रह्मेति वाक्यस्ये**ति। **अतो ब्रह्मणः प्रतिपाद्यत्वं न पुनः प्रतिज्ञातव्य**मिति। यद्यप्यत एव स ब्रह्मेत्यत्र प्रतिबिम्बव्यावृत्तिहेतुभिरेव जीवव्यावृत्तिः सिध्यतीत्येवं जीवव्यावृत्तिरेव प्रतिज्ञायते; न ब्रह्मेत्युक्तम्—तथापि वक्ष्यमाणरीत्या परमसाध्योपपादकोपपादकत्वमेव युज्यत इति भावः। **न हि न्यायनि**बन्धनेति। ततश्च सुखविशिष्टाभिधानोपपत्तीनामपि तस्मिन्नेव सूत्रे विवक्षितत्वमभ्युपेयम्; न तु निर्युक्तिकसुखविशिष्टाभिधानस्वरूपमात्रपरत्वमिति भावः। **श्रुत्यन्तरे दक्षिणवामयोरक्ष्णो**रिति। ''इन्धो ह वै नामैष योऽयं दक्षिणेऽक्षिन् पुरुषस्तं वा एतमिन्धं सन्तमिन्द्रमित्याचक्षते, अथ तद्वामेऽक्षिणि पुरुषस्य रूपमेषास्य पत्नी विराट्''इति, प्रदेशान्तरे, ''तौ मिथुनं समेतां, ततः प्राणोऽजायत, स इन्द्रः''इत्यादिः ज्योतिरधिकरणोदाहृता श्रुतिर्द्रष्टव्या। **यत्सर्वेष्वधिकरणे**ष्विति। तथा च, 'अत एव च स ब्रह्म' इत्यस्य परमसाध्योपपादकत्वमयुक्तमिति भावः। **उपपाद्यत्वात् दुर्बल**मिति। अन्तर्यामिब्राह्मणस्यापि उत्तराधिकरणन्यायोपपाद्यत्वादिति भावः। अक्षिपुरुषविद्याया गतिचिन्तनानुवादेन तदङ्गत्वमुच्यत इत्यस्य अक्षिपुरुषविद्या, गतिचिन्तनाङ्गत्वेन विधीयत इत्यर्थो विवक्षितः, उत गतिचिन्तनमक्षिपुरुषविद्याङ्गत्वेन विधीयत इति विकल्प्याद्यं दूषयति— **अक्षिपुरुषस्य परमात्मत्वनिर्णया**दिति। द्वितीयं दूषयति— **गतिचिन्तनस्य सर्वपरविद्याङ्गत्वा**दिति।

इति अन्तराधिकरणम्।

# अन्तर्याम्यधिकरणम् (४)

अन्तर्याम्यधिदैवाधिलोकादिषु तद्धर्मव्यपदेशात् १-२-१९.

**विषयं शोधय**तीति। इत्थं हि विषयशुद्धिः—जनकेन ब्रह्मिष्ठशुल्कत्वेनानीते गोसहस्रे याज्ञवल्क्येन गृहीते तदसहमनेषु यज्ञवल्क्येन वादकथायां प्रवृत्तेषु, केषुचिन् ब्रह्मवादिषु विजितेषु उद्दालकेन सूत्रान्तर्यामिणोः प्रश्नः कृतः, "अथ हैनमारुणिरुद्दालकः पप्रच्छ, याज्ञवल्क्येति होवाच, मद्रेष्ववसाम पतञ्जलस्य काप्यस्य गृहेषु यज्ञमधीयमानाः (मद्रेषु देशेष्वित्यर्थः।) तस्यासीद्भार्या गन्धर्वगृहीता। तमपृच्छाम कोसीति। सोऽब्रवीत् कबन्ध आथर्वण इति, (कबन्धः कबन्धनामा), सोऽब्रवीत् पतञ्जलं काप्यं याज्ञिकांश्च, 'वेत्थ नु त्वं काप्य तत्सूत्रं येनायं च लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानि भवन्ती'ति। (सूत्रे पुष्पाणीव प्रोतानीत्यर्थः)। सोऽब्रवीत् पतञ्जलः काप्यो नाहं तद्भगवन् वेदेति। सोऽब्रवीत्पतञ्जलं काप्यं याज्ञिकांश्च, वेत्थ नु त्वं काप्य! तमन्तर्यामिणं य इमं च लोकं परं च लोकं सर्वाणि च भूतानि योऽन्तरो यमयतीति। सोऽब्रवीत् पतञ्जलः काप्यः, नाहं तद्भगवन्वेदेति। सोऽब्रवीत्पतञ्जलं काप्यं याज्ञिकांश्च, यो वै तत्काप्य! सूत्रं विद्यात्तं चान्तर्यामिणमिति, स ब्रह्मवित् स लोकवित् स देववित् स वेदवित् स भूतवित् स आत्मवित् स सर्वविदिति। तेभ्योऽब्रवीत्। तदहं वेद। स ब्रह्मवित्" इत्यादिना। प्रशस्य काप्याय याज्ञिकेभ्यश्च सूत्रमन्तर्यामिणं च गन्धर्व उपदिदेश, तद्वयमप्यहं जान इत्यर्थः। "तच्चेत् त्वं याज्ञवल्क्य! सूत्रमविद्वांस्तं चान्तर्यामिणं ब्रह्मगवीरुदजसे, मूर्धा ते विपतिष्यतीति"। (ब्रह्मगवीः ब्रह्मिष्ठशुल्कत्वेन जनकेन दत्ता गाः यद्युदजसे=यदि नयसीत्यर्थः) "वेद वा अहं तत् सूत्रं तञ्चान्तर्यामिणमिति। यो वा इदं कश्चित् ब्रूयात् वेद वेदेति। यथा वेत्थ तथा ब्रूहीति" (यः कश्चिदपि अहं जानामीति ब्रूयात्। त्वं यदि जानासि, तर्हि वदेत्यर्थः।) "स होवाच वायुर्वै गौतम तत्सूत्रम्। वायुना वै गौतम सूत्रेणायं च लोकः परश्च लोकस्सर्वाणि भूतानि संदृब्धानि भवन्ति। तस्माद्वै गौतम! पुरुषं प्रेतमाहुः, व्यस्रंसिषतास्याङ्गानि इति" (विस्रस्तानीत्यर्थः।) "वायुना हि गौतम! सूत्रेण संदृब्धानि भवन्तीति"। एवं सूत्रप्रश्नस्योत्तरे दत्ते, "एवमेवैतद्याज्ञवल्क्य! अन्तर्यामिणं ब्रूही" ति उक्तांशमभ्युपगम्य अन्तर्यामिणं पप्रच्छ। "यः

पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरम्, यः पृथिवीमन्तरो यमयति एष त आत्मान्तर्याम्यमृतः" इत्युपक्रम्य, योऽप्सु तिष्ठन्—योऽग्नौ तिष्ठन्नित्येवं क्रमेण अम्ब्वग्न्यन्तरिक्षवायुद्यु—आदित्यदिक्चन्द्रतारकाकाशतमस्तेजःपर्यन्तान् पर्यायानुपदिश्य, 'इत्यधिदैवत'मित्युपसंहृत्य, 'अथाधिभूत'मित्युपक्रम्य, 'यस्सर्वेषु भूतेषु' इति पर्यायमुपन्यस्य, 'इत्यधिभूत' मित्युपसंहृत्य, 'अथाध्यात्म' मित्युपक्रम्य प्राणवाक्चक्षुः श्रोत्रमनस्त्वग्विज्ञानरेतःपर्यायानुपन्यस्य, "एष त आत्मान्तर्याम्यमृतः अदृष्टो द्रष्टा अश्रुतः श्रोता अमतो मन्ता अविज्ञातो विज्ञाता नान्योऽतोऽस्ति द्रष्टा, नान्योऽतोऽस्ति श्रोता नान्योऽतोऽस्ति मन्ता नान्योऽतोऽस्ति विज्ञाता। एष त आत्मा अन्तर्याम्यमृतः। अतोऽन्यदार्तम्" इत्युपसंहृतम्। माध्यन्दिनपाठे तु लोकवेदयज्ञपर्यायास्त्रयोऽधिका इति।

प्रत्यगात्ममात्रे अन्तर्यामित्वपूर्वपक्षासंभवात् उपचितसुकृतजीवविशेषपरः प्रत्यगात्मशब्द इत्याह **प्रत्यगात्मशब्द इति। यदा निषेधोऽनुपपन्न** इति। द्रष्टृत्वस्य रूपादिसाक्षात्कारकर्तृत्वरूपत्व इति शेषः। नियमनस्यार्थसिद्धत्वमुपपादयति—**परप्रेरणारूपस्येति**। ननु जीवः कोऽत्रान्तर्यामी स्यात्। न तावदुपासकजीवः; तस्य, 'यः पृथिव्यां तिष्ठन्' इत्यादिवाक्यप्रतिपाद्यपृथिव्यादिस्थितितन्नियमनयोरसंभवात्। नापि पृथिव्याद्यभिमानी देवताविशेषः; तस्य पृथिव्यादिस्थितिनियमनादिसंभवेऽपि उपदेश्योपासकजीवभिन्नतया, 'स त आत्मे'ति निर्देशासंभवात्। नापि जीवसमुदायः; तस्यापि पृथिव्याद्यतिष्ठत्त्वेन समुदाये, 'स त आत्मे'ति निर्देशानुपपत्तेरित्याशंक्य—उपासकस्य वा पृथिव्याद्यभिमानिनो वा जीवसमुदायस्य वा नैकस्यान्तर्यामित्वं पूर्वपक्षे विवक्षितम्, किं तु जीवजातीयानां वस्तूनामन्तर्यामित्वं विवक्षितम्। न च तथात्वे स त आत्मेति निर्देशानुपपत्तिः उपदेश्यस्य उपासकजीवस्यान्तर्यामिबहुजीवात्मकत्वाभावादिति वाच्यम् — तज्जातीयस्त्वमसीत्यर्थस्य वक्ष्यमाणत्वेनादोषादित्यभिप्रयन्नाह — **प्रतिपर्यायं यच्छब्दावृत्त्येति**। यथा, यस्तिष्ठति स ते पुत्रः, यः पचति स ते पुत्र इत्युक्ते पुत्रभेदः प्रतीयते—तद्वदित्यर्थः। **व्यापकनियामकवस्त्वन्तराभावाभिप्रायेणेति** न हि जीवजातीयावच्छिन्नत्वस्य व्यापकं नियामकं वा किञ्चिदस्तीत्यर्थः। **यस्तु जीवविशेषान् प्रत्यन्तर्यामित्वमिति**। य आदित्ये तिष्ठन्, यश्चन्द्रे तिष्ठन् इत्यादिभिः प्रतिपाद्यमानं जीवविशेषान्तर्यामित्वमिति भावः। **अष्टमूर्त्यादेरिवेति**।

रुद्रस्याग्न्याद्यष्टमूर्तिनियन्तृत्वमिवेत्यर्थः । **तत्तद्गणाध्यक्षाणा**मिति । आदित्यगणाध्यक्षाणामित्यर्थः ।

**एवं प्राप्त** इतीत्यस्यानन्तरं **सूत्र** इति क्वचित् कोशे पठ्यते । न तस्य प्रयोजनं पश्यामः । भाष्ये **अधिदैवाधिलोकादिपदचिह्नितेष्वि**ति ॥ ननु, यः पृथिव्यां तिष्ठन्नित्युपक्रम्य पृथिव्यम्ब्वग्न्यन्तरिक्षवायुद्यु — आदित्यदिक्चन्द्रतमस्तेजांसि निर्दिश्य चरमे तेजःपर्याय एव, इत्यधिदैवतमिति पदं श्रूयते ; न तु पूर्वेषु पर्यायेषु । अतस्तेषां कथमधिदैवपदचिह्नितत्वमिति चेन्न — इत्यधिदैवमितीतिकरणेन पूर्वेषामपि पर्यायाणां परामर्शात् तत्तत्पदचिह्नितत्वोपपत्तेरिति भावः । **अनेन सर्वसूत्रेष्वि**ति । अधिदैवाधिलोकादिष्वित्यत्र दैवलोकभूतादिषु विषयेष्वन्तर्यामी परमात्मेत्यपि व्याख्यायाः सम्भवात् तत्परित्यागेनाधिदैवादिशब्दस्य वाक्यपरत्वमभ्युपगम्य वाक्यप्रतिपाद्योऽन्तर्यामीति व्याख्यानात् सर्वसूत्रेष्वपि तत्तद्वाक्यप्रतिपाद्यपरत्वमेव साध्यं विवक्षितम्, अध्यायस्य वाक्यसमन्वयप्रतिपादनपरत्वादिति भाष्यकाराभिप्राय इति भावः । **पदद्वये**ति । एतेनाधिलोकपदशून्यः परेषां सूत्रपाठस्तावदप्रामाणिक इति दर्शितम् । **बहुपर्यायप्रदर्शनार्थेनाधिदैवशब्देने**ति । पृथिव्यम्ब्वग्न्यन्तरिक्षवायुद्यु—आदित्यदिक्चन्द्रतारकाकाशपर्यायाणाम् अधिदैवानुप्रविष्टानां बहुत्वादित्यर्थः । **अवधारणं फलितमिति भाव** इति । यद्यप्यौपनिषदानि वाक्यानि सर्वप्रशासितृत्वादिकं परमात्मन एव वदन्तीत्युक्तौ दोषाभावात् फलितमित्युक्तिर्न संगच्छते — तथापि परमात्मन एव सर्वप्रशासितृत्वं सर्वात्मत्वमित्येवमाकारेण वदन्तीति भाष्यार्थमालोच्य एवमुक्तमिति द्रष्टव्यम् । **स्वाभाविकञ्चामृतत्व**मिति भाष्यस्यायं भावः — स्वाभाविकौपाधिकयोर्मध्ये औपाधिकस्योपाधिप्रतिपत्त्यधीनप्रतिपत्तिकत्वेन विलम्बितप्रतीतिकतया ततोऽपि स्वाभाविकस्यैव ग्राह्यत्वादिति । **किमार्थ**मिति । व्याप्तिबलात् परमात्मनोऽपि दर्शनश्रवणादयः करणैर्विना नोपपद्यन्त इति अर्थस्वभावायत्तमित्यर्थः । **द्रष्टृत्वादिकं न करणायत्तमि**तीति । यद्यपि, 'न च परस्यात्मनः करणायत्तं द्रष्टृत्वादिक'मिति भाष्यपाठः — तथापि अर्थतः प्रतीकग्रहणमिति द्रष्टव्यम् । ननु, 'न च परस्यात्मनः करणायत्तं द्रष्टृत्वादिक' मिति भाष्यं युक्तम्, दर्शनकर्तृत्वरूपस्य द्रष्टृत्वस्य करणायत्तत्वनियमात् परमात्मनि तादृशद्रष्टृत्वानभ्युपगमाच्चेत्यतो व्याचष्टे —

**रूपादिभिरिति।** ननु स्वभावशब्दो न धर्मपरः, अपि तु स्वरूपशब्दपर्याय इत्याशंक्य समभिव्याहारदर्शनात् पर्यायत्वं नेत्याह—**स्वरूपस्वभावशब्दयोरिति। अदृष्टापेक्षां च व्यावर्तयतीति।** चशब्देन स्वव्यतिरिक्तचेतनान्तरसङ्कल्पमपि समुच्चिनोति। स्वभावशब्दं धर्मभूतज्ञानपरतया व्याख्याय सत्तापरतया व्याचष्टे—**यद्वा न करणायत्तमिति।** साध्याविशेषमाशंक्याह—**सामान्येनेश्वरज्ञानेति। सामान्याकारयोगस्येति।** ईश्वरज्ञानत्वावच्छेदेन करणादृष्टादिनैरपेक्ष्यस्येत्यर्थः। **तथा च श्रुतिरिति** भाष्यस्य, तथा श्रुतिश्चेत्यन्वयः। उदाहरिष्यमाणाया हि, "पश्यत्यचक्षु" रिति श्रुतेः ज्ञानविशेषोपादानवत्त्वं कारणविशेषनिषेधकण्ठोक्तिमत्त्वमिति आकारद्वयमस्ति। "स्वाभाविकी ज्ञानबलक्रिया चे" त्यत्र कारणनिषेधकण्ठोक्तिमत्त्वेऽपि ज्ञानविशेषोपादानं नास्ति। "द्रष्टा श्रोते" त्यादौ विशेषोपादानेऽपि कारणविशेषनिषेधकण्ठोक्तिर्नास्ति। पश्यत्यचक्षुरित्यत्र तु द्वयमप्यस्तीति सिद्धम्। तत्र च **तथाचे**त्यत्र तथाशब्दस्य कारणनिषेधकण्ठोक्तिपरामर्शितया वा ज्ञानविशेषोपादानपरामर्शितया वा तदुभयपरामर्शितया वा व्याख्यानं सम्भवतीत्यभिप्रेत्य त्रेधा व्याचष्टे—**द्रष्टा श्रोतेत्यादिना। रूपशब्दयोः साक्षात्कर्तेत्यर्थ** इति। नचैवं रूपद्रष्टेत्यादौ पौनरुक्त्यप्रसङ्ग इति वाच्यम्—पाकं पचतीतिवत तत्र द्रष्टृशब्दस्य साक्षात्कर्तृत्वमात्रपरत्वात्। घटद्रष्टेत्यादावपि घटविषयकरूपसाक्षात्कारवानित्यर्थ इति अदोषः। ननु द्रष्टा श्रोतेत्यत्र तथार्थसम्भवेऽपि मन्तेत्यादौ का गतिरित्याशंक्य तादृशस्थले लक्षणया मानसमननविषयसाक्षात्कारवत्त्वमित्यर्थ इत्याह—**ये मानसेति।** ननु परमात्मनो नित्यमननादिकमस्त्वित्यत आह—**चक्षुरादिबाह्यकरणेति। साधारणाकारग्रहणेति।** चक्षुरादिबाह्यकरणैः साधारणाकारं गृहीत्वा मनोरूपान्तःकरणेन विचार्य बुद्धिरूपेणान्तःकरणेन हि जीवोऽध्यवस्यतीति भावः। **तदाश्रयो जीव इति चेति।** ततश्च परमात्मनि मन्तृबोद्धादिशब्दस्य लक्षणा दुर्निरसेति भावः। **अतःशब्दस्वारस्यवशादिति।** सर्वनाम्नः पूर्वप्रस्तुतविशेषणविशिष्टपरामर्शित्वनियमादित्यर्थः। अत एव "तस्योपनिषदहरित्यधिदैवतं तस्योपनिषदहमित्यध्यात्मम्" इत्यत्र तच्छब्दस्य न प्राक्प्रस्तुतब्रह्मपरामर्शित्वमात्रम्; अपितु स्थानादिविशेषविशिष्टपरामर्शित्वमिति, "सम्बन्धादेवमन्यत्रापी" त्यत्र वक्ष्यत इति भावः। अतश्शब्दस्वारस्यात् इत्येतच्चोपलक्षणम्; अन्यशब्दस्वारस्यादित्यपि द्रष्टव्यम्। अन्यशब्दस्य

पूर्वनिर्दिष्टसदृशपरत्वात् । अत एव इषुनामके क्रतौ, "इषुर्विष्टुतिस्सप्ताहं भवती"ति वैशेषिकाङ्गविधानानन्तरमाम्नाते – "समानमितरच्छ्येनेने" ति वाक्ये पूर्वनिर्दिष्ट-वैशेषिकाङ्गसदृशानां वैशेषिकाङ्गानामेवेतरशब्देन ग्रहणं पूर्वनिर्दिष्टसादृश्यात्; न तु प्राकृतानामपीति पूर्वतन्त्रे सप्तमे (७-१-२) निर्णीततया तन्न्यायेनान्यशब्देनापि सर्वनाम्ना पूर्वनिर्दिष्टसदृशस्य नियन्तुरेव ग्रहणमिति भावः । ननु, एष त आत्मा, स त आत्मेति व्यतिरेकनिर्देशस्य तद्धर्मव्यपदेशादिति सूत्रखण्डाविवक्षितस्य भाष्ये युक्तितया उपन्यासो न युक्त इत्याशंक्य तस्य सूत्रकृदभिमतत्वं दर्शयति—**एतत्पादाद्याधिकरण** इति । ननु शब्दविशेषादिति सूत्रे "सर्वंखल्विदं ब्रह्मे" ति श्रुतिवाक्यार्थनिर्धारणार्थतया, "एष आत्मे"ति व्यतिरेकनिर्देशस्यानभिमतत्वात्तस्य युक्तितया उपन्यासो न युक्त इत्यत आह – **तस्य प्रदर्शनार्थत्वादि**ति ॥

उभयेऽपि हि भेदेनैनमधीयते १ २-२.

ननु पुमान्नदेवो न नर इत्यत्रैव देवादिशब्दानां शरीरमात्रपरत्वे बाधकाभाव इत्याशंक्याह – **तच्चापवादाभावे** इति । **तदस्वारस्यापवादश्चे**ति । न केवलं व्यतिरेकनिर्देशस्वारस्यबाधकाभावः, स्वारस्यसाधकश्चास्तीत्यर्थः ।

**असम्भवनिरस्त** इति । परमात्मादित्रिकबहिर्भूतस्यान्तर्यामित्वसम्भावनापदस्य कस्यचिदभावादित्यर्थः । योगसिद्ध इत्यस्य अणिमाद्यैश्वर्ययोगशाली सिद्ध इति वा अष्टाङ्गयोगशाली सिद्ध इति वा सम्भावितोऽर्थः स्यात्, अर्थद्वयमपि प्रकृष्टपुण्येषु विग्रहादियुक्तदेवेष्वेव सम्भवतीति तत्रैवाऽन्तर्भावात् शिरोभेदकल्पनं विफलमित्यर्थः । **कार्यकरणवत्त्वं जीवत्वेहेतुतयोक्तमि**ति । देहेन्द्रियवत एव नियन्तृत्वसम्भवात् अन्तर्यामित्वे देहेन्द्रियवत्त्वमपेक्षितम् । तादृशञ्च देहेन्द्रियवत्त्वं जीवस्यैव सम्भवतीति नेश्वरस्यान्तर्यामित्वं सम्भवतीत्युक्तमिति भावः, पुत्रवादिशङ्करभाष्यानुसारात् । **पृथिव्यादिष्वेकैकस्य शरीरत्वावगमादि**ति । अयं भावः – देहातिरिक्तनियमने हि शरीरेन्द्रियाद्यपेक्षा, न तु स्वदेहनियमनेऽपि । न हि तक्ष्णो वास्यादिनियमने शरीरापेक्षावत् स्वशरीरनियमनेऽपि शरीरान्तरापेक्षा दृष्टचरी । तथा च पृथिव्यादीनां परमात्मशरीरत्वादेव परस्य तैरेव सशरीरत्वेन न तन्नियमने शरीरान्तरापेक्षेति । ननु पृथिव्यादिषु हि (दिभिः?) सशरीरत्वे परस्य जीवत्वप्रसङ्ग इत्याशंक्याह – **तत्कृतजीवत्वशङ्काया**

इति । **उपकरणोपकरणित्वलक्षणसम्बन्धो हि जीवत्वसाधक** इति । शरीरभोक्तृत्व लक्षणसम्बन्धो हि जावत्वसाधकः । न तादृशसम्बन्धो नियमने अपेक्षित इति भावः । **एवमन्तमेकं सूत्रमि**ति । न तु, "शारीरश्च उभयेऽपि हि भेदेनैनमधीयत" इत्येकं सूत्रमिति भावः । **नियन्तृनियाम्ययोरभेदेन तत्परिहार इत्यपी**ति । ननु तस्याप्यन्यो नियन्तेत्यनवस्थादोषश्च न सम्भवति; भेदाभावात् । भेदे हि सत्य-नवस्थादोषापत्तिरिति शाङ्करभाष्यं व्याकुर्वताऽऽनन्दगिरिणा, भेदाभावादित्यस्य पर-मात्मनो हि निरङ्कुशं सर्वनियन्तृत्वं श्रौतम्, तादृशि च सर्वनियन्तरि नियन्त्रन्तरस्य कल्पयितुमशक्यतया नियन्तृभेदाभावात् सिद्धान्तेऽप्यन्तर्यामिणोऽप्यन्यो नियन्तेत्यन-वस्था न प्रसज्यत इत्यर्थो वर्णितः; न तु नियन्तृनियाम्ययोः परजीवयोर्भेदाभाव-मादायेति **चेन्न**—तद्भाष्याभिप्रायमाविष्कुर्वता मृषावादिगोष्ठीगरिष्ठेन वाचस्पतिमिश्रे-णैव, 'न चानवस्था । न हि नियन्त्रन्तरं तेन नियम्यते; किन्तु यो जीवो नियन्ता स परमात्मैव उपाध्यवच्छेदकल्पितभेदस्तथा व्यपदिश्यत इति असकृदावेदितम् । तत्कुतो नियन्त्रन्तरम् कुतश्चानवस्था ? तथा च "नान्योऽतोस्ति द्रष्टे" त्याद्या अपि श्रुतयः उपपन्नार्थाः; परमात्मनोऽन्तर्यामिणोऽन्यस्यात्मनो द्रष्टुरभावात् । अविद्याकल्पितजीव-परमात्मभेदाश्रयास्तु ज्ञातृज्ञेयभेदश्रुतयः, प्रत्यक्षादीनि प्रमाणानि, संसारानुभवः, विधि-निषेधशास्त्राणि च' इति नियन्तृनियाम्यभेदस्यैवाविष्करणादित्यास्तां तावत् । **प्रतीय-मानोऽपि भेदो मिथ्ये**ति । सर्वोपीऽत्यर्थः । **अत एव नानवस्थे**ति । जीवपरभेद-मिथ्यात्वादेवेत्यर्थः । **पृथिव्यादिकं प्रति जीवस्ये**ति । यथा पृथिव्यादिकं प्रति नियन्तुः नियाम्यभेदरहितस्य जीवस्य नियन्त्रन्तराकांक्षा, एवं नियाम्यभेदरहितस्यापी-श्वरस्य तदाकांक्षा अवश्यम्भाविनीत्यर्थः । **अदृश्यत्वेन परमात्मत्वपरमि**ति । पृथिव्यादिनियाम्यैरनुपलभ्यमान एव नियमयतीति भाष्ये उक्तत्वात् अदृश्यत्वमपि परमात्मत्वसाधकतयोपन्यस्तमिति ग्रन्थकृदाशयः । **वस्तुतस्तु** भाष्ये नायमाशय उपलभ्यते, प्रत्युत, 'अस्याक्षरस्य' "अदृष्टो द्रष्टा" इत्यादाविव न द्रष्टृत्वादिश्चेतन-धर्मविशेष इह श्रूयत इत्यादिभाष्यपर्यालोचनायामद्रष्टृत्वादेरचेतनत्वसाधकत्वम्, द्रष्टृत्वा-देस्तु तदपवादकत्वमेव प्रतीयते; न त्वद्रष्टृत्वादेरचेतनत्वबाधकत्वमिति द्रष्टव्यम् ॥

इति अन्तर्याम्यधिकरणम् ॥

---

# अदृश्यत्वादिगुणकाधिकरणम् (५)

अदृश्यत्वादिगुणको धर्मोक्तेः १-२-२२.

**न तूभययोरुभयात्मकत्वमिति** । अदृश्यत्वादिगुणकस्यापि प्रकृतिपुरुषोभयात्मकत्वं अक्षरात्परतः परस्यापि प्रकृतिपुरुषोभयात्मकत्वमिति न भ्रमितव्यमित्यर्थः । **उभयत्रेति** व्याख्येयं पदम् । **अचिदाश्रयोपस्थापकतोपबृंहकतयेति** । निषिध्यमानदृश्यत्वादिगता या अचिदाश्रयोपस्थापकता तदुपबृंहणनयेत्यर्थः । इत्थमत्र विषयशुद्धिः—अव्याख्यातांशे कचिदर्थोपि लिख्यते। आथर्वणे—

"ब्रह्मा देवानां प्रथमः सम्बभूव विश्वस्य कर्ता भुवनस्य गोप्ता ।
स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह ॥

अथर्वणे यां प्रवदेत ब्रह्मा अथर्वा तां पुरोवाचाङ्गिरसे तत्वतो ब्रह्मविद्याम् ।
स भारद्वाजाय सत्यवाहाय प्राह, भारद्वाजोऽङ्गिरसे परावराम् ॥

शौनको ह वै महाशालोऽङ्गिरसं विधिवदुपसन्नः पप्रच्छ, कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति । तस्मै स होवाच । —

द्वे विद्ये वेदितव्ये इति ह स्म यत् ब्रह्मविदो वदन्ति परा चैवापरा च, तत्रापरा ऋग्वेदो यजुर्वेदस्सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमितिहासपुराणं न्यायो मीमांसा धर्मशास्त्राणीति ।

अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः ।

यस्मात्परं नापरमस्ति किञ्चित् यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् ।
वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् ॥

यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति ।
यथा सतः पुरुषात् केशलोमानि तथाक्षरात् सम्भवतीह विश्वम् ॥

तपसा चीयते ब्रह्म ततोऽन्नमभिजायते ।
अन्नात्प्राणो मनस्सत्यं लोकाः कर्मसु चामृतम् ॥

यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तपः ।
तस्मादेतत् ब्रह्म नाम रूपमन्नञ्च जायते ॥

इति प्रथमः खण्डः ।

---

तदेतत्सत्यं मन्त्रेषु कर्माणि कवयो यान्यपश्यन् तानि त्रेतायां बहुधा सन्ततानि । तान्याचरत नियतं सत्यकामाः एष वः पन्थाः सुकृतो ब्रह्मलोकः ॥

यथा लेलायते ह्यर्चिः समिद्धे हव्यवाहने ।
तदाज्यभागावन्तरेणाहुतीः प्रतिपादयेत् ॥

यस्याग्निहोत्रमदर्शपूर्णमासमचातुर्मास्यमनाग्रयणमतिथिवर्जनञ्च ।
अहुतमवैश्वदेवमश्रद्धयाऽविधिना हुतमासप्तमात्तस्य लोकान् हिनस्ति ॥

सप्त ते अग्ने समिधः सप्त जिह्वाः सप्त ऋषयः सप्त धाम प्रियाणि ।
सप्त होत्रास्सप्तधा त्वा यजन्ति सप्त योनीरापृणस्वा घृतेन ॥

(अग्नेस्सप्तापि जिह्वाभेदान्नामत आह—)

काली कराली च मनोजवा च सुलोहिता या च सुधूम्रवर्णा ।
स्फुलिङ्गिनी विश्वरूपी च देवी लोलायमाना इति सप्त जिह्वाः ॥

एतासु यश्चरते भ्राजमानासु यथाकालञ्चाहुतयो ह्याददायन् ।
तन्नयन्त्येताः सूर्यस्य रश्मयः यत्र देवानां पतिरेकोऽधिवासः ॥

(एतासु भ्राजमानासु सप्तसु जिह्वासु यथाकालं यः कर्माचरति, तमाददानाः आहुतयः सूर्यरश्मयो भूत्वा इन्द्रादिलोकं नयन्तीत्यर्थः ।)

एह्येहीति तमाहुतयः सुवर्चसः सूर्यस्य रश्मिभिर्यजमानं वहन्ति ।
प्रियां वाचमभिवदन्त्योऽर्चयन्त्य एष वः पुण्यः सुकृतो ब्रह्मलोकः ॥

प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म ।
एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापियन्ति ॥

अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितं मन्यमानाः ।
जंघन्यमानाः परियन्ति मूढा अन्धेनैव नीयमाना यथान्धाः ॥

अविद्यायां बहुधा वर्तमाना वयं कृतार्था इत्यभिमन्यन्ति बालाः ।
यत्कर्मिणो न प्रवेदयन्ति रागात्तेनातुराः क्षीणलोकाश्च्यवन्ते ॥

( यस्मात्कारणात् कर्मिणो रागोपहतास्तत्त्वं न जानन्ति तस्माच्च्यवन्त इत्यर्थः )

इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः ।
नाकस्य पृष्ठे सुकृते तेऽनुभूत्वा इमं लोकं हीनतरं वा विशन्ति ॥

( अनुभूत्वा अनुभूय इत्यर्थः । हीनतरं वा — अतिहीनं नरकं वा इत्यर्थः । )

तपःश्रद्धे ये ह्युपवसन्त्यरण्ये शान्ता विद्वांसो ब्रह्मचर्यं चरन्तः (न्ति) ।
सूर्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतः स पुरुषो ह्यव्ययात्मा ॥

परिक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन ।
तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् ॥

तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय ।
येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम् ॥

इति द्वितीयः खण्डः ॥

---

तदेतत् सत्यम् ।

यथा सुदीप्तात् पावकात् विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः ।
तथाक्षराद्विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापियन्ति ॥

दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यन्तरो ह्यजः ।
अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः ॥

एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।
खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ॥

अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः ।
वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा ॥

तस्मादग्निः समिधो यस्य सूर्यः सोमः पर्जन्य ओषधयः पृथिव्याः ।
पुमान् रेतः सिञ्चति योषितायां बह्वीः प्रजा बहुधा सम्प्रसूताः ॥

तस्मादृचः साम यजूँषि दीक्षा यज्ञाश्च सर्वे क्रतवो दक्षिणाश्च ।
संवत्सरश्च यजमानश्च लोकः सोमो यत्र पवते यत्र सूर्यः ॥

तस्माच्च देवा बहुधा सम्प्रसूताः साध्या मनुष्याः पशवो वयांसि ।
प्राणापानौ व्रीहियवौ तपश्च श्रद्धा सत्यं ब्रह्मचर्यं विधिश्च ॥

सप्त प्राणाः प्रभवन्ति तस्मात् सप्तार्चिषः समिधः सप्त होमाः ।
सप्तेमे लोका येषु चरन्ति प्राणा गुहाशया निहिताः सप्त सप्त ॥

अतः समुद्रा गिरयश्च सर्वे अस्मात् स्यन्दन्ते सिन्धवः सप्तरूपाः ।
अतश्च विश्वा ओषधयो रसाश्च येनैष भूतैस्तिष्ठते ह्यन्तरात्मा ॥

पुरुष एवेदँ सर्वं ततो ब्रह्म परामृतम् ।
एतद्यो वेद निहितं गुहायां सोऽविद्याग्रन्थिं विकिरतीह सोम्य ! ॥

[इति तृतीयः खण्डः ॥

---

आविः सन्निहितं गुहाचरन्नाम महत्पदम् ।
तत्रेदं सर्वमर्पितम् एजत् प्राणन्निमिषच्च यत् ॥

एतज्जानथ सदसद्वरेण्यं परं विज्ञानात् यद्वरिष्ठं प्रजानाम् ।
(जानथेति, हे शिष्या इति शेषः ।)
यदर्चिमद्यदणुभ्योऽणु [यच्च] यस्मिन् लोका निहिता लोकिनश्च ॥

तदेतदक्षरं ब्रह्म तत्प्राणस्तदवाङ्मनः ।

(अवाङ्मनः – वाङ्मनसागोचरम् इत्यर्थः)

तदेतत सत्यं तदमृतं वेद्धव्यं सोम्य विद्धि ॥

ऋक् धनुर्यजुर्बाणः साम ज्या घोषणादिना ।
आथर्वणमयं शुभ्रं प्रतिगृह्णीत सुव्रताः ॥

धनुर्गृहीत्वोपनिषदं महास्त्रं शरं ह्युपासनानिशितं संदधीत ।
आयम्य तद्भागव(वग)तेन चेतसा लक्ष्यं तदेकाक्षरं सोम्य विद्धि ॥

प्रणवो धनुश्शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते ।

अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत् ।

लक्षं सर्वगतश्चैव शरो मे सर्वतोमुखम् ।

वेद्धा सर्वगतश्चैव विद्धं लक्षं न संशयः ।

आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिम् ।

ध्याननिर्मथनाभ्यासात् देवं पश्येन्निगूढवत् ।

यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः ।

तमेवैकं जानथात्मानम् अन्या वाचो विमुञ्चथ ।

अमृतस्यैष सेतुः ।

अरा इव रथनाभौ संहता यत्र नाड्यः ।
स एषोऽन्तश्चरते बहुधा जायमानः ॥

ओमित्येवं ध्यायथात्मानं स्वीयः (स्वस्ति वः) पाराय तमसः परस्तात् ।

(पाराय तीरभूतायेत्यर्थः ।)

यः सर्वज्ञः सर्ववित् यस्यैष महिमा भुवि ।
दिव्ये ब्रह्मपुरे ह्येष व्योम्नि आ(मन्या)त्मा प्रतिष्ठितः ॥

मनोमयः प्राणशरीरनेता प्रतिष्ठितोऽन्तर्हृदये सन्निधाय ।
तद्विज्ञानेन परिपश्यन्ति धीराः आनन्दरूपममृतं यद्विभाति ॥

भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥

हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम् ।
तच्छुभ्रं ज्योतिषां ज्योतिः तद्यदात्मविदो विदुः ॥

न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः ।
तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ॥

न तत्र चन्द्रार्कवपुः प्रकाशते न वान्ति वाताः कुतोऽन्या देवताः ।
स एष देवः कृतभूतभावनः स्वयं विशुद्धो विरजः प्रकाशते ॥

ब्रह्मैवेदममृतं यत् पुरस्तात् ब्रह्म पश्चात् दक्षिणतश्चोत्तरतश्च ।
अधश्चोर्ध्वं च प्रसृतं ब्रह्म ब्रह्मैवेदं सर्वमिदं वरिष्ठम् (ब्रह्म) ॥

पद्मकोशप्रतीकाशं सुषिरश्चाप्यधोमुखम् ।
हृदयं तद्विजानीयात् विश्वस्यायतनं महत् ॥

इति चतुर्थः खण्डः ॥

---

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति ॥

समाने वृक्षे पुरुषो निमग्नः अनीशया शोचति मुह्यमानः ।
जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः ॥

यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् ।
तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ॥

प्राणो ह्येष सर्वभूतैर्विभाति विजानन् विद्वान् भवति नातिवादी ।
(अतिवादी न भवति । बहुगर्ह्यवाङ् न भवतीत्यर्थः ।)
आत्मक्रीड आत्मरतिः क्रियावान् एष हि ब्रह्मविदां वरिष्ठः ॥

सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यक् ज्ञानेन ब्रह्मचर्येण नित्यम् ।
अन्तश्शरीरे ज्योतिर्मयो हि शुभ्रो यं पश्यन्ति यतयः क्षीणदोषाः ॥

सत्यमेव जयति नानृतम् सत्यस्य पन्था विततो देवयानः ।

येनाप्नुवन्ति ऋषयो ज्ञानतृप्ताः यत्र तत् सत्यस्य परमं निधानम् ।

(बृह ब्रह्मच्च च ) तद्दिव्यमचिन्त्यरूपं सूक्ष्माच्च तत् सूक्ष्मतरं विभाति ।
दूरात्सुदूरे तदिहान्तिके च पश्यत्स्वेतन्निहितं गुहायाम् ॥

न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैः तपसा कर्मणा वा ।
ज्ञानप्रसादेन विशुद्धसत्वः ततस्तु तं पश्यति निष्कलं ध्यायमानः ॥

एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन् प्राणः पञ्चधा संविवेश ।

प्राणैश्चित्तं सर्वमोतं प्रजानां यस्मिन् विशुद्धे विभवत्येष आत्मा ।
(विभवति = वैभवयुक्तो भवति-परमात्मनि प्रसन्ने असङ्कुचितज्ञानो भवतीत्यर्थः)

यं यं लोकं मनसा संविभाति विशुद्धसत्त्वः कामयते यांश्च कामान् ।

तं तं लोकं जयति तांश्च कामान् तस्मादात्मस्थं ह्यर्चयेद्भूतिकामः ।

इति पञ्चमः खण्डः ।

---

स यो ह वै तत्परं ब्रह्म धाम यस्मिन् विश्वं निहितं भाति शुभ्रम् ।
उपासते पुरुषं ये ह्यकामास्ते शुक्रमेतदतिवर्तन्ति धीराः ॥

( शुक्रं पुरुषमित्यन्वयः । शुक्रं-शरीरोपादानभूतं यत् शुक्रमित्यर्थः ) ।

कामान् यः कामयते मन्यमानः स कामभृज्जायते यत्र तत्र ।

पर्याप्तकामस्य कृतात्मनश्च इहैव सर्वे प्रविलीयन्ति कामाः ।

नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूँ स्वाम् ।
नायमात्मा बलहीनेन लभ्यो न च प्रमादात्तपसो वाप्यलिङ्गात् ।

(तपश्शब्दो ज्ञानपरः। चक्राङ्कनादिलिङ्गशून्यज्ञानेन च न लभ्य इत्यर्थः)

एतैरुपायैर्यतते यस्तु विद्वान् तस्यैष आत्मा विशते ब्रह्मधाम ।

(एतैरुपायैः—बलाप्रमादसलिङ्गज्ञानैरित्यर्थः)

संप्राप्यैनमृषयो ज्ञानतृप्ताः कृतात्मानो वीतरागाः प्रशान्ताः ।
ते सर्वगं सर्वतः प्राप्य धीरा युक्तात्मानः सर्वमेवाविशन्ति ॥

वेदान्तविज्ञानसुनिश्चितार्थाः सन्यासयोगात् यतयः शुद्धसत्त्वाः ।
ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे ॥

गताः कलाः पञ्चदश प्रतिष्ठाः देवाश्च सर्वे प्रतिदेवतासु ।
कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकं भवन्ति ॥

यथा नद्यः स्यन्दमानाः समुद्रे अस्तं गच्छन्ति नामरूपे विहाय ।
तथा विद्वान् नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम् ॥

स यो हवै तत्परमं ब्रह्म वेद ब्रह्मैव भवति । नास्याब्रह्मवित् कुले भवति । तरति शोकं तरति पाप्मानम्। गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति । तदेष श्लोकः—

क्रियावन्तः श्रोत्रिया ब्रह्मनिष्ठाः स्वयं जुह्वत एकर्षिं श्रद्धयन्तः ।
तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवत् यैस्तु चीर्णम् ।

तदेतत्सत्यमृषिरङ्गिराः प्रोवाच । नैतदचीर्णव्रतोऽधीते, नाकृतपावनो नासन्यासी च । नमः परमर्षिभ्यो नमः परमर्षिभ्यः ॥

इति षष्ठः खण्डः ।

---

**अर्हार्थीयतृजन्तपदे**ति। ननु किमत्र प्रमाणम्, लतृचाविति तृच एव सम्भवात्; नित्यसाक्षात्काराश्रये तस्मिन्, 'अर्हे कृत्यतृचश्चे'त्यर्हार्थत्वस्यान्याय्यत्वाच्च। सत्यपि तस्यार्हार्थत्वे अदृष्ट इत्यस्य भूतार्थत्वे विरोधाभावेन, 'धातुसम्बन्धे प्रत्ययाः' इति सूत्राप्रवृत्तेः। अग्निष्टोमयाजी अस्य पुत्रो भवितेत्यादौ भूते करणे यज इति विहितस्य णिनिप्रत्ययस्य भूतार्थतया अग्निष्टोमयाजीत्यस्य अग्निष्टोमेनेष्टवानित्यर्थकतया तस्मिन् भवितेति ल्युडर्थीभूतानद्यतनभविष्यत्त्वस्यासम्भवेन तत्र धातुसम्बन्धे प्रत्ययाः इति सूत्रवशेनाग्निष्टोमयाजीत्यस्य भविष्यदर्थाश्रयणेऽपि अविरोधेन इह तथात्वे प्रमाणाभावादिति चेत्—उच्यते— "वेदाहं समतीतानि—मां तु वेद न कश्चने" त्यादिस्मृत्यनुसारेण स्वयमितरैरदृश्य एव सन् इतरान् पश्यतीत्यस्य तदर्थतया अदृष्ट इत्यस्यादृश्यत्वार्थकत्वात् अदृश्यत्वस्य च ब्रह्मणि पूर्वाधिकरणे प्रतिपन्नत्वात् कथमद्रेश्यपदावलम्बनेन पूर्वपक्ष इति भावः। **नाचित्त्वावर्तकमित्यर्थ** इति। प्रत्युताचित्त्वसाधकमेवेत्यर्थः। **दृष्टान्तश्च चेतने**ति। ऊर्णनाभेश्चेतनत्वादिति भावः। '**नञुपश्लिष्टे**ति। 'नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः' इति न्यायात् नञिवशब्दयोरेकार्थवृत्तित्वादिति भावः। इदञ्चोपादानोपादेयभेदाभ्युपगमपक्ष इति ध्येयम्; सादृश्यस्य भेदगर्भत्वात्। पादानोपादेयाभेदमङ्गीकृत्याह **अबालकृशे**ति। ननु चेतनदृष्टान्तानुगुण्य-कार्यसारूप्य-निषेधस्वारस्यहेतुभिः यत्तदद्रेश्यमित्यादौ परमात्मपरत्वव्युदासेन प्रधानपरत्वाश्रयणेऽपि, अक्षरात्परतः परः इति वाक्ये न परमात्मपरत्वपरित्यागे प्रमाणं पश्यामः; प्रत्युत यः सर्वज्ञः सर्वविदित्यादिश्रुत्यनुरोधेन ब्रह्मविद्यासमाख्यानुरोधेन च परेषां प्रथमपूर्वपक्ष इव परमात्मपरत्वमेवास्त्वित्याशंक्य — यथा निषेधस्वारस्यवशेन तस्यैव द्रव्यस्यावस्थान्तरयुक्तस्य ग्रहणमित्युच्यते, तथा "दिव्यो ह्यमूर्तः पुरुषः" इति मन्त्रे जीवे प्रसिद्धस्य मूर्तिमत्त्वस्य मनःप्राणवत्त्वस्य च निषेधदर्शनात् तस्यैवावस्थान्तरयुक्तस्य ग्रहणमुचितम्। अतः सर्वज्ञत्वादिकमपि जीव एव मुक्त्यवस्थापेक्षया नेतुं शक्यमित्यभिप्रयन्नाह — **प्रधानत्वसमर्थनमुपजीव्ये**ति। ननु निषेधस्वारस्यमवलम्ब्य यत्तदद्रेश्यमिति वाक्ये प्रधानपरत्वपूर्वपक्षो न युक्तः। अगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादमिति जीवे प्रसिद्धगोत्रादिनिषेधबाहुल्यात् तत्रापि वाक्ये पराभिमतद्वितीयपक्ष इव जीवपरत्वमेव किं नस्यात्? अन्यथा,—"अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं

यद्भूतयोनिं परिपश्यन्ति धीराः" इत्यन्तं प्रधानपरम्; "यस्मात्परं नापरमस्ति किञ्चित् यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्। वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्" इति तदुत्तरवाक्यं जीवपरम्; "यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति। यथा सतः पुरुषात् केशलोमानि तथाक्षरात्सम्भवतीह विश्वम्॥" इति तदुत्तरवाक्यं प्रधानपरम्; "तपसा चीयते ब्रह्म ततोऽन्नमभिजायते। अन्नात्प्राणो मनस्सत्यं लोकाः कर्मसु चामृतम्" इत्यारभ्य, "परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन। तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्॥ तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय। येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्॥" इत्युपरितनसन्दर्भो जीवपरः; "तदेतत्सत्यम्। यथा सुदीप्तात् पावकात् विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः। तथाक्षराद्विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापियन्ति॥" इति प्रधानपरम्; "दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यन्तरो ह्यजः। अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः॥" इति जीवपरमिति कथमिवैतत् पण्डितानां हृदयं प्रथममधिरोहेदिति चेन्न—"यस्य येनार्थसम्बन्धो दूरस्थेनापि तेन सः" इति, "आनन्तर्यमचोदना" इत्यधिकरणन्यायेनानन्तर्यमात्रस्याप्रयोजकतया दूरस्थेनापि योग्यतावशात् सम्बन्धोपपत्तेः प्रधानजीवयोर्व्यतिकरेण प्रतिपाद्यत्वस्यागत्या स्वीकार्यत्वादिति भावः।

**चेतनदृष्टान्तः कथमित्यत्राह**ेति। प्रधानस्य प्रतिपाद्यत्व इति शेषः। भाष्ये **प्रसूत इति तत्र दृष्टान्ता** इति। अत्र इतिर्हेतौ। यतः पुरुषाधिष्ठितप्रधानं प्रसूते, अतश्चेतनाचेतनदृष्टान्ता उपन्यस्यन्त इत्यर्थः। ननु, 'प्रधानजीवावत्र प्रतिपाद्येते' इति पूर्वपक्षः सांख्यमतावलम्बी। सांख्यमते च पुरुषस्य सन्निधानमात्रेणैव उपकर्तृत्वम्; नाधिष्ठातृत्वेन इत्याशंक्य तदनुरूपदृष्टान्तस्यापि सत्त्वात् पुरुषाधिष्ठितं प्रधानं परिणमत इति वा, पुरुषसन्निधानमात्रेण परिणमत इति वा किञ्चित्तन्मतमवलम्ब्य पूर्वपक्षः प्रवर्तितुमर्हति इत्यभिप्रयन्नाह — **अनधिष्ठितत्वेऽपी**ति। पूर्वपक्षमुपसंहरति — **अत इती**त्यस्यानन्तरं **राद्धान्ते अदृश्यत्वेती**ति कोशेषु पाठो दृश्यते। तस्य मन्दप्रयोजनस्यापि शिष्यावधानार्थत्वमिति ध्येयम्।

ननु प्रकृष्टपुण्यस्य जीवस्य बद्धदशायां कथं सार्वज्ञ्यमित्यत आह — **तदुपलक्षित** इति । पुण्योपलक्षित इत्यर्थः । नित्यमुक्तस्य गोत्रवर्णनिषेधस्वारस्याभावात् पुण्योपलक्षितमुक्त इति उक्तमिति द्रष्टव्यम् । **प्रकृताक्षरपर इति भाव** इति । पूर्वपक्षिणोऽपि विवादाभावादिति भावः । **कारणत्वप्रत्यभिज्ञानाच्चेति** । 'तथाऽक्षरात्सम्भवतीह विश्व'मिति पूर्वप्रस्तुतपञ्चम्यन्तप्रत्यभिज्ञानं चशब्देन समुच्चीयते । **कारणत्वमनूद्येति** । तस्यापि विधाने गौरवादिति भावः ।

**ननु भूतयोनित्वलिङ्गप्रत्यभिज्ञानादपीति** । "अथ परा यया तदक्षरमधिगम्यत इति वाक्यप्रतिपाद्यस्य, यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तपः तस्मात्" इति निर्दिष्टस्य च कारणत्वप्रत्यभिज्ञानात् ऐक्यमभ्युपगम्य, अक्षरात् परतः पर इति अवधिपञ्चम्यन्ताक्षरपदनिर्दिष्टस्य भूतयोन्यक्षरभेदकल्पनापेक्षया, अथ परा यया तदक्षरमिति वाक्यप्रतिपन्नाक्षरस्य, अक्षरात्परतः पर इति पञ्चम्यन्ताक्षरपदनिर्दिष्टप्रधानैक्यमेव ज्यायः; उभयत्राप्यक्षरश्रुतिप्रत्यभिज्ञानात् । ततश्च तस्मिन् प्रधाने सार्वज्ञ्यादिविधानमनुपपन्नमित्यर्थः । **भूतयोनित्वलिङ्गानुगृहीतस्येति** । यद्यपि, येनाक्षरं पुरुषमिति वाक्ये भूतयोनित्वं न श्रुतम्—तथापि, 'यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तपः । तस्मादेतत् ब्रह्म नाम रूपमन्नञ्च जायत' इति वाक्यस्य, 'येनाक्षरं पुरुष'मिति वाक्यस्य च ऐकार्थ्यस्य चोभयसम्प्रतिपन्नतया भूतयोनित्वलिङ्गानुगृहीताक्षरशब्दतया प्रत्यभिज्ञा बलवतीति तात्पर्यम् । **प्रथमभाविनः प्रबलतयेति** । एतेन, तथाक्षरात्सम्भवतीह विश्वम्, तथाक्षराद्विविधाः सोम्य भावाः, अक्षरात्परतः परः इत्येतेषां पञ्चम्यन्तसारूप्यादेकविषयत्वमित्येतदपि निरस्तं वेदितव्यम् । **पुरुषत्वादिति** । चेतनत्वात् सार्वज्ञ्ययोग्यत्वं सम्भवतीति भावः । **व्यपदिश्यत इत्यर्थ** इत्यस्यानन्तरम्, 'तत्र हेतुमाह—प्रकृतमदृश्यत्वादिगुणकमिती'ति ग्रन्थ उपेक्षितः । अतश्च व्युत्क्रमेण प्रतीकग्रहणशंकाया नावकाशः । **अदृश्यत्वादिगुणकत्वेन प्रकृतत्वादित्यर्थ** इति । अमूर्तपुरुषप्रत्यभिज्ञापकापाणिपादत्वादिगुणकत्वादित्यर्थः । उत्तरग्रन्थानुसारात् तस्यैव हेतूकर्तुमुचितत्वादिति द्रष्टव्यम् । **पुरुषशब्दवाच्यत्वेन चेति** । न च पूर्वपक्षिणः, तेनेदं पूर्णं पुरुषेण सर्वमित्यादीनां भूतयोन्यक्षरपरत्वमसंमतम् । पुरुषशब्दितजीवपरमित्येव तदभिप्रायादिति वाच्यम् — यस्मात्परं नापरमस्तीत्यत्र यच्छब्दादिबलेन

प्रकृतभूतयोऽन्यक्षरप्रतिपादकत्वस्य पुरुषशब्दे वक्तव्यत्वात्, येनाक्षरं पुरुषं वेद सत्यमित्यत्रापि प्रक्रमश्रुताक्षरशब्दानुरोधेन पुरुषपदस्य वर्णनीयतया एकविषयत्वस्य वक्तव्यत्वाच्चेति द्रष्टव्यम् । प्रकृतमदृश्यत्वादिगुणकमिति भाष्ये प्रकृतमित्यस्य प्रधानप्रतिपाद्यत्वेन प्रकृतत्वमर्थ इत्यभिप्रयन् व्याचष्टे — **अदृश्यत्वादिगुणकमक्षरमेवेति** । **परतः परत्वेनोच्यत इत्यभ्युपेत्यमिति** । अप्रधानप्रतिपाद्यस्य प्रधानप्रतिपाद्यात् परत्वेनोक्त्यसम्भवादिति भावः। **ब्रह्मशब्दयोर्भिन्नविषयत्वदर्शनादिति**। तच्चोत्तरत्र भाष्य एव स्पष्टम् । समानविभक्तिनिर्देशस्वारस्यादिति । अक्षरात्परत इति पदद्वयस्यापीत्यर्थः । **पञ्चम्यन्तपदसापेक्षत्वादिति** । अत एव देवदत्तपुत्र इत्यादौ न सामानाधिकरण्यं पुत्रपदस्य षष्ठ्यन्तपदसापेक्षत्वादिति द्रष्टव्यम् ॥

विशेषणभेदव्यपदेशाभ्यां च नेतरौ १-२-२३.

**परब्रह्मविषया विद्या परविद्येति**। न तु अथ परेति श्रुताविव अपरोक्षत्वमर्थ इति भावः । भाष्ये **गुरुपरम्परया अङ्गिरसा प्राप्तामिति** । 'ब्रह्मा देवानां प्रथमः सम्बभूवे'त्यादिश्रुतिरत्रानुसन्धेया । व्याख्यानप्रकारमाह — **तत्र कैश्चिदिति** । मृषावादिमतमाह — **कैश्चित्कर्मज्ञानमिति** । "अपरा च धर्मसाधनफलविषये"ति मुण्डकभाष्ये शङ्करेण व्याख्यातत्वादिति भावः । **अपरमात्मज्ञानमपरविद्येति** । जीवज्ञानमित्यर्थः । **अत्रत्यवाक्येनेति** । 'न मेधया न बहुना श्रुतेने'ति वाक्येन मेधाशब्दितस्य उपासनस्यापि नैष्फल्यावगमादित्यर्थः । **विवेकादिसाधनसप्तकानुगृहीतमित्यत्र** साधनसप्तकस्यागमजन्यज्ञानाङ्गत्वाभावात् **अनुगृहीतमित्यस्य** सहकृतमित्यर्थ इत्यभिप्रयन्नाह — **साधनसप्तकं शास्त्रजन्यज्ञानश्चेति** । **उत्थितमित्यर्थ इति** । 'आगमोत्थं विवेकाच्चे'ति श्लोके उत्थितमिति शेष इत्यर्थः । **तत्रेत्यादिवाक्येनेति** । भाष्यगतं तत्रेतिपदं न भाष्यकारीयम्; अपितु श्रुतिगतमित्यर्थः । "परा चैवापरा च । तत्रापरा—ऋग्वेदो यजुर्वेद" इति हि श्रुतिः । **स्पष्टीकृतमिति**। भाष्येऽपि, "वेदस्य ज्ञानोत्पत्तिहेतुत्वा"दित्यत्र वेदशब्देन सूचितम् । तेन, "न चात्रागमोत्थत्वं शाब्दं प्रतीयत"इति शङ्का भाष्य एव परिहृतेति द्रष्टव्यम् । **कर्मस्वायत्तममृतमिति** । लोकाश्चेति शेषः । **अमृतत्वसाधनभूतं कर्मेत्यर्थ** इत्यत्रापि स्वर्गामृतत्वसाधनेत्यर्थः; स्वर्गापवर्गेति भाष्यानुरोधात् । ततश्च लोका अमृतञ्च कर्म-

स्वायत्तमिति श्रुत्यन्वय इति भावः । [1]यद्वा भोग्यपदेनान्नशब्दो व्याख्यात इत्यर्थः । **कमनीयत्वाय** कामनाविषयत्वायेत्यर्थः । **अनाग्रयणमिति** । आग्रयणं शरदि कर्तव्येष्टिविशेषः । **अहुतमिति** स्वकाले अहुतमित्यर्थः । **त्रिवर्गसाधनकर्मविषयमिति** । दर्शपूर्णमासाग्रयणवैश्वदेवातिथिपूजानां नित्यतया यथाशक्ति तदवश्यकर्तव्यत्वस्यापवर्गकर्मस्वपि सत्त्वात् तत्परत्वेऽपि न दोष इत्यपि द्रष्टव्यम् । **कर्मफलाभिसन्धिमदिति** । कर्मणः अवरत्वं फलाभिसन्धिमत्त्वमेवेत्यर्थः । इदञ्चोपलक्षणम्—ज्ञानापूर्वकत्वमपि द्रष्टव्यम् । **येऽभिनन्दन्तीति** । ये चाभिनन्दन्तीत्यर्थः । ततश्च फलाभिसन्धिमत्कर्मकारिणां तदभिनन्दितॄणाञ्च जरामृत्युवश्यत्वमित्यर्थः । **अतश्च सर्वा ओषधय इत्यन्तेष्विति** । एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च, पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा, तस्मादग्निः समिधश्च सूर्यः, तस्मादृचः साम यजूंषि दीक्षा, तस्माच्च देवा बहुधा सम्प्रसूताः, सप्त प्राणाः प्रभवन्ति तस्मात् , अतः समुद्रा गिरयश्च सर्वे, अतश्च सर्वा ओषधयो रसाश्चेति तत्प्रकरणगततदेतच्छब्दैरित्यर्थः । **तदेतच्छब्दैः परामृश्येत्यस्यानन्तरम्**, 'भूतयोनित्वं सप्रपञ्चमुपपाद्य'त्यध्याहारोऽपेक्षितः । ननु भाष्ये षष्ठखण्डप्रतिपाद्योपासनपरभक्तिरूपत्वस्य पञ्चमखण्डप्रतिपाद्यब्रह्मसाम्यलक्षणब्रह्मानुभवफलात् प्रागेव प्रतिपादनमसङ्गतमित्याशंक्याह — **पाठक्रमादिति** ।

**तस्य क्रमभावित्वमुक्तमिति** । " वेदान्तविज्ञानसुनिश्चितार्थाः " इति, वेदान्तार्थनिश्चयवन्तः कर्मसन्यासयोगात् यतनवन्तः शुद्धान्तःकरणाः ते परान्तकाले देहावसानकाले परामृताः—परममृतं ब्रह्म आत्मतया येषां ते परामृताः जीवन्मुक्ता एव सन्त इत्यर्थः, ब्रह्मलोकेषु—ब्रह्मणि मुच्यन्ति—भिन्नघटाकाशवत् निर्वृति (वृत्ति ?)मुपयान्तीत्यर्थ इत्येवं जीवन्मुक्तिपरममुक्तिक्रमभावित्वमुक्तं शाङ्करमुण्डकभाष्य इति भावः । **सर्वगस्य ब्रह्मण इति** । न तु सर्वशून्यस्येत्यर्थः । **ब्रह्म**-

---

1. यद्वेति । अत्र वाक्यभ्रंशो भाव्यः । अद्यते अत्तीति उभयविधनिर्वचनानुसारात् भोक्तृचेतनभोग्यचेतनोभयपरतया अन्नशब्दः टीकाभिमत इति पूर्वं व्याख्याय, **अद्यत इत्यन्नमिति** पूर्वभाष्यानुसारात् भाष्यस्थभोग्यपदमात्रेणान्नशब्दव्याख्या टीकाभिमतेत्युच्यते यद्वेति ।

**प्राप्तिप्रतिपादकमिति वक्ष्यत** इति । "कार्यं बादरिरस्य गत्युपपत्तेः" इत्यधिकरण इति शेषः । **इतरचेतनाचेतनवदिति ।** न च—इदं न वक्तव्यम्, चेतनान्तरवत्सिद्धेरिति वाच्यम्—मुक्तिदशायामेव न लयः; अपितु आप्रलयं तदिन्द्रियाणामप्यवस्थानमिति प्रदर्शनार्थमि(र्थत्वादि?)ति द्रष्टव्यम् । **परमात्मनैक्यापत्त्यभावादिति ।** ननु, 'गताः कलाः पञ्चदश प्रतिष्ठा' इति मन्त्रस्य मोक्षकाले दशेन्द्रियपञ्चभूतरूपाः या देहारम्भिकाः कलाः, ताः स्वस्वप्रतिष्ठां गताः=स्वंस्वं कारणं प्राप्ता भवन्तीत्यर्थः । ये च देहाश्रयाश्चक्षुरादिकरणनिष्ठा देवाः, ते आदित्यादिषु गता भवन्तीत्यर्थः । कर्माणि विज्ञानमयश्च आत्मा—। कर्माणि=अभुक्तफलानि कर्माणि विज्ञानोपाधिको जीवश्च परस्मिन् ब्रह्मण्यविशेषतां गच्छन्तीत्यर्थ' इति मुण्डकभाष्ये शङ्करेणार्थो वर्णितः । न तु मुक्तपरित्यक्तदेहादीनां परमात्मनैक्यमिति चेत्—सत्यम्, "तानि परे तथा ह्याहे"ति सूत्रे "एवमेवास्य परिद्रष्टुरिमाः षोडश कलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ती" ति वाक्यमुदाहृत्य परब्रह्मविदः कृत्स्नं कलाजातं ब्रह्मैव सम्पद्यत इत्युपसंहारादेवमाशंक्य परिहृतमिति द्रष्टव्यम् । **पूर्वोक्तसाम्यापत्तिनिगमनपरमिति ।** "वैष्णवं वामनमालभेत स्पर्धमानो विष्णुरेव भूत्वेमान् लोकानभिजयति" त्यत्रेव एवकारः सादृश्यवाची; साम्ये च, "इववद्वैवमेव" (साम्यैवमेववद्वेव) इति निघण्टुपाठादिति भावः । **ब्रह्मपर्यन्तेति ।** न च ब्रह्मशब्दस्य ब्रह्मात्मकपरत्वे लक्षणा स्यात्, शरीरवाचिशब्दानां शरीरिपर्यन्तत्वेऽपि शरीरिवाचिशब्दानां शरीरवाचित्वाभावादिति वाच्यम्—तुल्यन्यायतया शरीरिशब्दानामप्यपृथक्सिद्धशरीरवाचित्वसम्भवात् । गत्यभावे लक्षणाया अप्यदोषत्वात् । '**प्रोक्षणीष्वर्थसंयोगात्**" इति **न्यायमिति ।** प्रोक्ष्यते सिच्यते आभिरिति योगादेव प्रोक्षणीशब्दस्य अप्सु वृत्तिसम्भवात् न तत्र रूढिः कल्पनीयेत्युक्तम् (पू.मी.१-४-९); तन्न्यायादिति भावः ।

अत्र केचित्—ननु कथमदृश्यत्वादिगुणकस्याक्षरशब्दाभिहितत्वम् अव्याकृतेऽक्षरशब्दस्य रूढत्वात्; रूढेर्योगापहारित्वादित्याशंक्य प्रोक्षणीन्यायेन रूढेरभावाद्योगस्य च ब्रह्मसाधारणत्वान्न दोष इत्याह—**अश्नुत इति वा न क्षरतीति वेति** इत्येव भाष्यस्यावतारिकामाहुः ।

**इदमपि असदर्थद्वयमिति** । वक्ष्यमाणमिति शेषः । **देवताविशेषे रूढ** इति । "कृशानुरेताः सर्वज्ञो धूर्जटिर्नीललोहितः" इति निघण्टुपाठादिति भावः । **अक्षरशब्दयोरिति** । अत्र द्वित्वमविवक्षितम् । अक्षरात्सम्भवतीह विश्वम्, तथाक्षराद्विविधाः सोम्य भावाः, अक्षरात्परतः पर इति त्रयाणामैकार्थ्यं सिध्यतीति द्रष्टव्यम् । **तथात्वं श्रूयत** इति । अन्नादिप्रपञ्चहेतुत्वं श्रूयत इत्यर्थः । उत्तरत्र तथात्वमित्यस्याप्ययमेवार्थः । **ब्रह्म वनमिति** । वनमित्यधिकरणमुच्यते ; ब्रह्म स वृक्ष इत्युपादानत्वम् ; ब्रह्माध्यतिष्ठत् भुवनानि धारयन्निति निमित्तत्वञ्चेति भावः । ननु शैवमते पञ्चम्यन्ताक्षरशब्दयोरेकार्थत्वात्, "तपसा चीयते ब्रह्म" "तस्मादेतत् ब्रह्म" इति वाक्यद्वयस्थब्रह्मशब्दयोरप्येकार्थत्वाच्च अक्षरब्रह्मशब्दयोः कारणकार्यविषयत्वं नास्त्येव । किञ्च तन्मते अक्षरशब्दितस्य पुरुषस्य सर्वोपादानत्वाभ्युपगमेन कार्यत्वानभ्युपगमात् कारणपरामर्शि वा कार्यपरामर्शि वेति विचारो न युक्तः । 'तस्मादेतद्ब्रह्म नाम रूपमन्नञ्च जायत' इत्यत्रापि न ब्रह्मशब्दितस्योत्पत्तिः श्रूयते, किन्तु भूतयोन्यक्षरमेतत् ब्रह्म अन्नादिरूपेण परिणमत इति ह्युच्यते । न हि कुलालान्मृत्पिण्डो घटो भवति इत्युक्ते मृत्पिण्डस्योत्पत्तिः कुलालकार्यत्वं वा प्रतीयत इत्यस्वरसादाह – **किञ्च येनाक्षरमिति** । **भूतयोन्यक्षरधर्माणामिति** । अपाणिपादत्वादीनाममूर्तत्वादिना प्रत्यभिज्ञानादिति भावः । **तच्छब्दसामानाधिकरण्याच्चेति** । न च, 'स बाह्याभ्यन्तर' इत्येतत् बाह्याभ्यन्तरसाहित्यवाचकमेकं पदं किं न स्यादिति वाच्यम् – तथात्वे बाह्याभ्यन्तर इत्यनेनैव तदर्थस्य लाभात् स इत्यस्य वैयर्थ्यप्रसङ्गात् । **तयोरनन्यत्वसिद्धिरिति** । पुरुषद्वित्वे प्रमाणाभावादिति भावः । **न पुरुषशब्दो नेय** इति । "दिव्यो ह्यमूर्तः पुरुषः" इति पुरुषशब्द इत्यर्थः । **पुरुषनारायणोत्तरनारायणेति** । पुरुषदेवताकत्वात् नारायणर्षिकत्वाच्च पुरुषसूक्तस्य पुरुषनारायणत्वम् । एवमुत्तरनारायणेत्यत्रापि द्रष्टव्यम् । **अक्षहृदयाभिज्ञस्येति** । अक्षहृदयाख्यविद्याभिज्ञस्येत्यर्थः ॥

## रूपोपन्यासाच्च १-२-२४.

ननु भाष्ये, 'सर्वभूतान्तरात्मनः परमात्मन एव सम्भवती'त्युक्तम्–सर्वभूतान्तरात्मत्वस्यापि एतद्वाक्यप्रतिपाद्यत्वेन एतद्वाक्यप्रतिपाद्यद्युमूर्धत्वादिसर्वभूतान्तरा-

त्मत्वान्तर्धर्मवत्त्वं परमात्मन एव सम्भवतीत्येव वक्तुं युक्तत्वादित्याशङ्क्य, "पृथिवी ह्येष सर्वभूतान्तरात्मे" त्यत्र हिशब्देन पूर्वोक्तद्युमूर्धत्वादेः सर्वभूतान्तरात्मत्वहेतूकरणात् द्युमूर्धत्वाद्युपपाद्यं सर्वभूतान्तरात्मत्वं परमात्मन एव सम्भवतीत्यर्थ इत्यभिप्रयन्नाह — **सर्वभूतान्तरात्मसम्बन्धितयोच्यमानमिति ।**

**शारीराद्विशिनष्टीति ।** शारीरादित्यनन्तरं 'विलक्षणत्वेने' त्यध्याहार्यम् । "विशिनष्टि हि प्रकृतं भूतयोनिं शरीराद्विलक्षणत्वेने"ति परैरुक्तत्वात् शारीरस्य विलक्षणत्वावधित्वेनैव निर्दिष्टतया विशेषणक्रियावधित्वेनानिर्दिष्टत्वात् । विशिनष्टीत्युक्ते केन विशेषणेनेत्याकांक्षाया इव कस्माद्विशिनष्टीत्याकांक्षाया अदर्शनाच्च । न च कथं तर्हि भाष्यकृता, "विशिनष्टि हि प्रकरणं प्रधानात्पुरुषाच्चे" ति निर्दिष्टमिति वाच्यम् – प्रधानात्पुरुषाच्चेत्यस्य व्यावर्तयतीत्यर्थ इति तत्रत्योत्तरवाक्यान्वितत्वात् । न च कथं तर्हि **किं कस्मा**दिति टीकोक्तिरिति वाच्यम्, तस्या अपि किं कस्माद्व्यावर्तयतीत्यर्थकत्वादिति ध्येयम् । **अक्षरात् परो हि जीव इति ।** परतोऽक्षरादिति सामानाधिकरण्यापेक्षया वैयधिकरण्यस्य ज्यायस्त्वस्य प्रागुपपादितत्वादिति भावः । **न तु धर्मशब्देनेति ।** अदृश्यत्वादिगुणको धर्मोक्तेरिति धर्मशब्देनेत्यर्थः । एतस्माज्जायते प्राण इति मन्त्रात् क्रियानुषङ्गेण, अग्निर्मूर्धेति मन्त्रस्य, त्रैलोक्यशरीरो हिरण्यगर्भो भूतयोन्यक्षरात् जायते इत्यर्थपरत्वमङ्गीकृत्य, रूपोपन्यासादिति सूत्रस्य च, "पुरुष एवेदं सर्वमि" ति सार्वज्ञ्यरूपब्रह्मलिङ्गोपन्यासात् भूतयोनिः परमात्मेत्यपि योजनान्तरं परैर्दर्शितम् । तदनूद्य दूषयति—**रूपोपन्यासाच्चेति । प्रकरणवशादिति ।** सन्निधिवशादित्यर्थः । **अवान्तरप्रकरणस्येति ।** सन्निधेः प्रकरणविरोधे दुर्बलत्वादित्यर्थः । ततश्च, "प्रकरणं खल्वेतत् विश्वयोनेः । सन्निधिश्च जायमानानाम् । सन्निधेश्च प्रकरणं बलीय इति जायमानपरित्यागेन (अजायतेत्यध्याहारमन्तरेण) विश्वयोनेरेव प्रकरणिनो रूपाभिधानमिति चेन्न – प्रकरणिनः शरीरेन्द्रियरहितस्य विग्रहवत्त्वविरोधात्" इति वाचस्पत्यानुगुण्यञ्च सिध्यति; मीमांसकप्रवादविरोधश्च परिहृतो भवति । अत्रेदमवधेयम् — अस्मन्मते भट्टमत इवावान्तरप्रकरणभेदेन प्रकरणद्वैविध्यमेव नास्ति । अवान्तरप्रकरणशब्दाभिलप्य-

स्तु सन्निधिरेव । न चैवमभिक्रमणस्य प्रयाजाङ्गत्वं न सिध्येदिति वाच्यम्, गुरुमत-रीत्या समर्थनसम्भवादिति ।

इति अदृश्यत्वादिगुणकाधिकरणम् ।

---

## वैश्वानराधिकरणम् (६)

वैश्वानरः साधारणशब्दविशेषात् । १-२-२५

**समानप्रकरणे वाजसनेय** इति । अग्निरहस्ये, 'वैश्वानरं हवै भगवान् सम्प्रति वेद तन्नो ब्रूही'ति श्रवणादित्यर्थः । अग्निशब्दोपक्रमः कोशेषु द्रष्टव्यः । त्रिष्वपि क्रमेण प्रयोगं दर्शयति — **अक्षरात्परतः पर** इत्यादिना । **हरः** जीव इत्यर्थः । **विधिशब्दस्य मन्त्रत्वे भावः स्यादिति न्यायेनेति** । दर्शपूर्ण-मासयोः श्रूयते, "आग्नेयोऽष्टाकपाल" इति । बहूनि चाग्नेरभिधानानि अग्निः शुचिः पावक इत्यादीनि । तत्र, अग्निवाचिषु स्वाहाकारोज्जित्यादिनिगमेषु येनकेन-चिच्छब्देनाभिधानं कर्तव्यम्, उत विधिगतेनैवाग्निशब्देनेति विशये; अग्न्यर्थो देवता कर्तव्य इत्येतावांश्चोदनार्थः । तस्य तच्छब्दोद्दिश्यमानस्य देवतात्वमिति प्रयोगा-वस्थायां शब्दोच्चारणमापतति । तन्नियमे च नास्ति प्रमाणम् । पावकशब्देनाप्यु-द्दिश्यमानस्य चोदनाविहितमग्नेर्देवतात्वं सम्पादितमेव भवति । तस्माच्छब्दप्रयोगा-नियम इति पूर्वपक्षं कृत्वा — अवश्यं ह्यत्र शब्दोच्चारण एव पुरुषो नियोक्तव्यः । शब्दोच्चारणस्यैव पुरुषव्यापारत्वात् । ततश्च शब्दस्वरूपमेव उच्चारणान्वयित्वेन विधीयते । तद्विधाने चार्थस्य देवतात्वं प्राप्तमेवानूद्यते । येन हि शब्देन हवि-स्त्यज्यते, तस्यार्थस्तस्य देवता भवति । तस्माच्छब्दोच्चारणस्यैव विधानान्न पर्याय-प्रसक्तिरिति पर्यायशब्दानां बाध इति बाधलक्षणे, "विधिशब्दस्य मन्त्रत्वे भावः स्यात्तेन चोदने" त्यधिकरणे (मी. १०-४ १३) सिद्धान्तितम् । यथा शब्दानियमपूर्व-पक्षेऽपि प्रथमाध्यायप्रतिष्ठापितप्रामाण्यस्य न हानिः, तद्वदत्र वैश्वानरशब्दस्यार्थानियम पूर्वपक्षेऽपि न प्रतिष्ठापितप्रामाण्यहानिरिति भावः । इदमुपलक्षणम्, "छागो वा मन्त्रवर्णात्" इत्यादिपूर्वपक्षोत्थानस्यापीति द्रष्टव्यम् । अत्र केचित् — तदधिकरणपूर्व-

पक्षे न पदार्थानध्यवसायः; न वाक्यार्थानध्यवसायः। इह तु वैश्वानरपदार्थानध्यवसाये तद्घटितवाक्यस्य संशायकत्वेनाप्रमापकत्वात् प्रतिष्ठापितप्रामाण्यस्य हानिर्भवत्येव। अत एव पिकयववराहवेतसशब्दार्थानध्यवसाये तद्घटितचोदनाया अप्रामाण्यमित्युक्तम्। अतएव भावार्थनये किं नामपदेन विषयतया कर्माण्यर्थ्यते, उताख्यातपदेनेत्यनध्यवसाय इति संशये अनध्यवसायात्मक एव पूर्वपक्षः प्रवर्तितः। तत्रचाप्रामाण्ये प्रमाणाध्याय एवेयं चिन्ता स्यादित्याशंक्य, उपोद्घातत्वेनात्रैव युक्ता; साक्षात् संगतेरुपोद्घातसंगतिबलीयस्त्वात् इत्युक्तं विवरणे। ततश्च स्वर्गकामाद्यधिकरणेषु प्रसिद्धप्रामाण्याक्षेपवदिहापि पूर्वपक्षिणः प्रामाण्याक्षेपो न दोषमावहतीति वदन्ति।

**अग्निशब्दसामानाधिकरण्येति**। "स एषोऽग्निर्वैश्वानरो यत्पुरुषः। स यो हैतमग्निं वैश्वानरं पुरुषविध"मित्यादिवाक्यप्रतिपन्न सामानाधिकरण्येत्यर्थः। वैश्वानरशब्दस्य जाठर-तृतीयभूत-तदधिष्ठातृदेवतारूपार्थत्रितयसाधारणत्वात् आत्मशब्दस्य जीवपरमात्मरूपार्थद्वयसाधारणत्वाच्च पञ्चधा संशयो वर्णितः। तद् दूषयति **जीवपरसाधारणात्मशब्दसद्भावेपीत्यादिना**। **अग्निमित्यस्य** विवरणं **महाभूततृतीयमिति**। यद्यपि नाग्निशब्दस्य भूततृतीयं सर्वमर्थः, तथापि ज्वलनसामान्यमर्थः। न देवता, न जाठराग्निविशेष इति भावः। **केतुमादित्यमिति**। आदित्योदये दिनव्यवहारात् तस्य केतुशब्दितं चिह्नत्वमिति भावः। **तद्विषयभूताः स्यामेति**। अस्मासु शोभना मतिस्तस्य भूयादित्यर्थः। मतिसम्बन्धस्य भूततृतीये अचेतने जाठरे वा असम्भवात् देवतापरत्वमाश्रयणीयमिति भावः। **हिकमित्यव्यय**मिति। प्रसिद्धौ वर्तत इति शेषः।

**विशेष्यत इति विशेष इति** भाष्यस्य कर्मत्वरूपप्रत्ययार्थव्याख्यानरूपत्वे स्वरसतः प्रतीयमानेऽपि साधारणशब्दविशेषादिति सूत्रस्थविशेषपदस्य कर्मणि घञन्तत्वे, साधारणशब्द एव विशेष इति कर्मधारयस्याश्रयणीयत्वात् कर्मधारये च विशेषशब्दस्य पूर्वनिपातप्राप्त्या पश्चान्निर्देशानौचित्यात् सूत्रस्वारस्यानुरोधार्थं विशेषशब्दस्य भावार्थत्वमभिप्रेत्य **साधारणशब्दस्येति** षष्ठ्यर्थीभूतकर्मत्वव्याख्यानपरं **विशेष्यत इति** भाष्यमिति व्याचष्टे—**नेदं विशेषशब्दस्येत्यादिना**। ननु विशेष्यत इत्यस्य विशेषशब्दव्याख्यानरूपत्वाभावे, विशेष इति पृथक्पदमनन्वितं स्यादित्याशंक्य, 'विशेष इति

कृदन्तं पदं कर्मार्थषष्ठीनिमित्त' मित्यध्याहृत्य व्याख्येयमित्याह — **विशेष इति कृदन्तं पदमिति**। अध्याहारक्लेशं विशेषणविशेष्यभावस्य कामचारित्वञ्चाभिप्रयन् भाष्यस्वारस्यानुरोधेनान्यथा व्याचष्टे — **यद्वा विशेष्यतइत्यादिना**। फलविशेषनिर्देशादीनां परमात्मधर्मत्वाभावादाह — **लिङ्गपर** इति। अतन्निष्ठस्यापि लिङ्गत्वमुपपद्यत इति भावः॥ ननु विशेषपदस्य कर्मसाधनत्वपक्षे भावप्रधानत्वानाश्रयणेन कथं विशेष्यमाणत्वादित्यर्थलाभ इत्यत आह—**फलितार्थ** इति। भाष्ये **औपमन्यवादय** इति। "प्राचीनशाल औपमन्यवः, सत्ययज्ञः पौलुषिः, इन्द्रद्युम्नो भाल्लवेयः, जनः शार्कराक्ष्यः, बुडिल आश्वतराश्विः"। प्राचीनशालादिशब्दा आद्याः पञ्चापि नामानि। "ते हैते महाशाला महाश्रोत्रियाः समेत्य मीमांसांचक्रुः, को न आत्मा किं ब्रह्मेति"। महाशालाः—विस्तीर्णशालाः, सम्पन्ना इत्यर्थः। "ते ह सम्पादयाञ्चक्रुः"। निश्चितवन्त इत्यर्थः। "उद्दालको ह वै भगवन्तोऽयमारुणिः सम्प्रतीममात्मानं वैश्वानरमध्येति, तं हन्ताभ्यागच्छामेति। तं हाभ्याजग्मुः। स ह सम्पादयाञ्चकार प्रक्ष्यन्ति मामिमे महाशाला महाश्रोत्रियाः, तेभ्यो न सर्वमिव प्रतिपत्स्ये"। सर्वं वक्तुं नोत्सह इत्यर्थः। "हन्ताहमन्यमभ्यनुशासानीति। तान् होवाच, अश्वपतिर्वै भगवन्तोऽयं केकयः सम्प्रतीममात्मानं वैश्वानरमध्येति तं हन्ताभ्यागच्छामेति। तं हाभ्याजग्मुः। तेभ्यो ह प्राप्तेभ्यः पृथगर्हाणि कारयाञ्चकार, स ह प्रातस्सञ्जिहान उवाच—

'न मे स्तेनो जनपदे न कदर्यो न मद्यपः।
नानाहिताग्निर्नाविद्वान् न स्वैरी स्वैरिणी कुतः॥

यक्ष्यमाणो ह वै भगवन्तोऽहमस्मि। यावदेकैकस्मा ऋत्विजे धनं दास्यामि, तावद्भगवद्भ्यो दास्यामि। वसन्तु भगवन्त' इति। ते होचुः, येन हैवार्थेन पुरुषश्चरेत् तं हैव वदेत्" यत् प्रयोजनमुद्दिश्य पुरुषः प्रवर्तते, तदेव वदेदित्यर्थः। "आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि तमेव नो ब्रूहीति। तान् होवाच, प्रातर्वः प्रतिवक्तास्मीति। ते ह समित्पाणयः पूर्वाह्णे प्रतिचक्रमिरे; तान् हानुपनीयैवैतदुवाच"। यथैवं महाशाला महाश्रोत्रियाः ब्राह्मणाः सन्तो महाशालत्वाद्यभिमानं हित्वा समिद्भारहस्ता जातितो हीनं राजानं विद्यार्थितया विनयेनोपाजग्मुः, तथान्यैरपि विद्योपादित्सुभिः भवितव्यम्। योग्येभ्य एव विद्या दातव्येत्ययमर्थ आख्यायिकया सूच्यते।

**फलविशेषनिर्देशश्चेति** । सर्वलोकाद्याश्रयान्नानुभव — सर्वपापप्रदाहरूपफलद्वयनिर्देश इत्यर्थः । परैः द्युमूर्धत्वादिकल्पना सर्वविकारानुगते ब्रह्मण्येव सम्भवतीत्युक्तम् ; तद् दूषयति — **द्युमूर्धत्वादीति** ।

स्मर्यमाणमनुमानं स्यादिति ।। १-२-२६

**श्रुतिलिङ्गवाक्येत्यादिसूत्रपठितेति** । न तु 'आकाशस्तल्लिङ्गात्' इत्यत्रेव तदसाधारणधर्मरूपलिङ्गपरः; स्मर्यमाणस्य रूपस्य परमपुरुषासाधारणधर्मत्वाभावेन परमपुरुषत्वे लिङ्गत्वोक्त्ययोगात् । अतो **लिङ्गशब्दो** ज्ञापकपर इति भावः । यद्यपि श्रुतिलिङ्गादि सूत्रे, 'सामर्थ्यं लिङ्गम् ; तच्च शब्दगतम्, अर्थगत'मित्येव व्यवहृतम्— तथपि तदपि ज्ञापकान्नातिरिच्यत इति भावः । यद्वा श्रुतिलिङ्गवाक्येत्येतत्स्वरूपकथनार्थमिति द्रष्टव्यम् । **इत्थम्भूत**मित्यादिभाष्यस्य **द्युप्रभृ**तीत्यादिना सूत्रार्थप्रतिपादकेन भाष्येण पौनरुक्त्यमाशंक्य इतिशब्दान्वयानन्वयाभ्यां परिहरति — **इतिशब्दार्थेनान्वितमिति** ।

**भाष्ये तथा**हीति । "औपमन्यव! कं त्वमात्मानमुपास्से इति । दिवमेव भगवो राजन्निति होवाच । एष वै सुतेजाः आत्मा वैश्वानरः, यं त्वमात्मानमुपास्से । तस्मात्तव सुतं प्रसुतमासुतं कुले दृश्यते" । (सुतप्रसुतासुतशब्दैः एकाहाहीनसत्रयागा लक्ष्यन्ते ।) "अत्स्यन्नं पश्यसि प्रियम् । अत्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते। मूर्धा त्वेष आत्मन इति होवाच--मूर्धा ते व्यपतिष्यत्, यन्मां नागमिष्यः इति । अथ होवाचसत्ययज्ञं पौलुषिं प्राचीनयोग्य ! कं त्वमात्मानमुपास्स इति । आदित्यमेव भगवो राजन्निति होवाच एष वै विश्वरूप आत्मा वैश्वानरोऽयं त्वमात्मानमुपास्से । तस्मात्तव बहु विश्वरूपं कुले दृश्यते । प्रवृत्तोऽश्वतरीरथो दासीनिष्कः । अत्स्यन्नं पश्यसि प्रियम्। अत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते । चक्षुस्त्वेतदात्मन इति होवाच अन्धो भविष्यो यन्मां नागमिष्य इति । अथ होवाचेन्द्रद्युम्नं भाल्लवेयम्, वैयाघ्रपद्य! कं त्वमात्मानमुपास्स इति।वायुमेव भगवो राजन्निति होवाच । एष वै पृथग्वर्त्मा वैश्वानरः, यं त्वमात्मानमुपास्से । तस्मात् त्वां पृथक् बलय आयन्ति, पृथग्रथश्रेणयोऽनुयन्ति, अत्स्यन्नं पश्यसि प्रियम् । अत्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते ।

प्राणस्त्वेष आत्मन इति होवाच—प्राणस्त उदक्रमिष्यत्, यन्मां नागमिष्य इति । अथ होवाच जनं शार्कराक्ष्य! कं त्वमात्मानमुपास्स इति। आकाशमेव भगवो राजन्निति होवाच एष वै बहुल आत्मा वैश्वानरोयं त्वमात्मानमुपास्से । तस्मात् त्वं बहुलोऽसि प्रजया च धनेन च, अत्स्यन्नं पश्यसि, प्रियम्। अत्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवं वैश्वानरमुपास्ते । सन्देहस्त्वेष आत्मन इति होवाच—सन्देहस्ते व्यशीर्यत् यन्मां नागमिष्य इति। अथ होवाच बुडिलमाश्वतराश्वि वैयाघ्रपद्य! कं त्वमात्मानमुपास्स इति। अप एव भगवो राजन्निति होवाच । एष वै रयिरात्मा वैश्वानरो यं त्वमात्मानमुपास्से, तस्मात् त्वं रयिमान् पुष्टिमान् अत्स्यन्नं पश्यसि प्रियम् । अत्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते । बस्तिस्त्वेष आत्मन इति होवाच—बस्तिस्ते व्यभेत्स्यत्, यन्मां नागमिष्यः इति। अथ होवाचोद्दालकमारुणिं गौतम! कं त्वमात्मानमुपास्स इति । पृथिवीमेव भगवो राजन्निति होवाच। एष वै प्रतिष्ठात्मा वैश्वानरः यं त्वमात्मानमुपास्से। तस्मात् त्वं प्रतिष्ठितोसि प्रजया च पशुभिश्च, अत्स्यन्नं पश्यसि प्रियम्। अत्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते । पादौ त्वेतावात्मन इति होवाच — पादौ ते व्यम्लास्येतां यन्मां नागमिष्यः इति । तान् होवाच — एते वै खलु यूयं पृथगिवेममात्मानं वैश्वानरं विद्वांसोऽन्नमत्थ । यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते, स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति । तस्य हवा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मा सन्देहो बहुलो बस्तिरेव रयिः पृथिव्येव पादौ । उर एव वेदिर्लोमानि बर्हिः हृदयं गार्हपत्यो मनोऽन्वहार्यपचनमास्यमाहवनीयः । तद्यद्भक्तं प्रथममागच्छेत् तद्धोमीयम् । स यां प्रथमामाहुतिं जुहुयात् तां जुहुयात्, प्राणाय स्वाहेति । प्राणस्तृप्यती " त्यादिना प्राणाद्याहुतिपञ्चकं प्रदर्श्य, " स यदिदमविद्वानग्निहोत्रं जुहोती " ति पठ्यते । इत्थं श्रुतिक्रमः ।

भाष्ये **तानेकैकं पप्रच्छेति** । **एकैकमिति** क्रियाविशेषणम् । एवमुत्तरत्रापि, **एकैकमुपास्यमानतया कथितानामित्यादावपि** द्रष्टव्यम् । **न तु नाभिरितीति** । खं वै नाभिरित्युपबृंहणानुगुण्ये सत्यपीति शेषः । **वेदमूलत्वेन वैश्वानरविद्याया इति** । स्मृतेर्वेदमूलकत्वावश्यम्भावात् तस्याः स्मृतेः, मूर्धैव सुतेजा

इति वाक्यमेव मूलं भविष्यतीति भावः । **अस्ति ह्यग्निर्मूर्धेति** । ननु अग्निर्मूर्धेत्याथर्वणवाक्यं न, द्यां मूर्धानमिति स्मृतिवचनस्य मूलाकांक्षां शमयितुं प्रभवति । तत्राग्निमूर्धत्वश्रवणेऽपि द्युमूर्धत्वस्याश्रवणात् । न च, 'असौ वाव लोक' इति श्रुत्यनुसारादग्निशब्दस्य द्युलोकपरत्वमस्तीति वाच्यम् — उपचरिताग्निशब्दप्रयोगविषयत्वस्य पर्जन्यपृथिव्यादिष्वपि सत्त्वेन तदनुसारेणार्थनिर्णयासम्भवात् । अतो वैश्वानरविद्यावाक्यमेव मूलमिति चेन्न— "शीर्ष्णो द्यौः समवर्तत पद्भ्यां भूमिर्दिशः श्रोत्रात्" इत्यादीनां बहूनां परमात्मपरतया निर्णीतानां वाक्यानां मूलत्वसम्भवेन न स्मृतिवचनस्य विप्रतिपन्नवैश्वानरविद्यैकशरणत्वमिति भावः ।

**शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च नेति चेन्न तथा दृष्ट्युपदेशादसम्भवात् पुरुषमपि चैनमधीयते १-२-२७.**

**दूरस्थत्वादिति** । यद्यप्यस्याधिकरणस्य छान्दोग्यवाक्यवत् वाजसनेयवाक्यमपि विषय एव; अतो न दूरस्थत्वादिवैषम्यम्—तथापि, "पुरुषमपि चैनमधीयत" इति वाजसनेयकस्य तटस्थवदुदाहृतत्वात् एवमुक्तमिति द्रष्टव्यम् । **भाष्ये समानाधिकरणतयाग्निरिति श्रूयत** इति । वाजसनेयके अग्निरहस्ये सप्रपञ्चां वैश्वानरविद्यामुक्त्वा, "स एषोऽग्निर्वैश्वानरो यत्पुरुषः स हैतमेवमग्निं वैश्वानरं पुरुषविधं पुरुषेन्तःप्रतिष्ठितं वेद" इति श्रूयत इत्यर्थः । अन्तःप्रतिष्ठितत्वस्याग्निशब्दनिर्देशसाहित्यविवक्षासिद्धिः कथमिति शङ्कायामेकवाक्योपादानादिति दर्शयति — **स यो हैतमेवमग्निमिति** । परैः, शब्दादिभ्योऽन्तःप्रतिष्ठानादिति सूत्रखण्डो जाठरादित्वशङ्कापरतया व्याख्यातः । भाष्यकारैस्तदनादरेण जाठरमात्रशंकापरतया तत्खण्डस्य व्याख्याने कारणमाह — **शब्दादिभ्य इत्यादिसूत्रखण्डमित्यादिना** । तथादृष्ट्युपदेशादित्यत्र दृष्टिशब्दः परैः जाठरे परमात्मदृष्टिपरतया व्याख्यातः । तदुपेक्षणे किं कारणमिति शङ्कते—**दृष्टिशब्दोऽतस्मिन् तथात्वानुसन्धानेति** । **सूत्रतात्पर्यविरुद्धमिति** । यद्यप्युद्गीथप्रस्तावादौ अध्यस्योपास्यमानाकाशप्राणादेः, आकाशस्तल्लिङ्गात्, अतएव प्राण इति परमात्मपरत्वसमर्थनपरसूत्रतात्पर्यविरोधवत् अविरोधः सम्भवति । न च तत्रापि दृष्टिविधिपरत्वे विमतिः । "संज्ञातश्चेत्तदुक्तमस्ति तु तदपि" इत्यत्र भाष्ये कण्ठत एवाविष्कृतत्वात्—तथापि तत्र गत्यभावात् दृष्टि-

विधित्वेऽपि इह तदाश्रयणस्यायुक्तत्वात् । अत एव परैरपि दृष्टिविधित्वपक्षं परित्यज्य, 'अथ वा जाठरवैश्वानरोपाधिः परमेश्वर एवेह द्रष्टव्यत्वेन उपदिश्यत' इति उक्तमिति द्रष्टव्यम् । **अग्निशब्दादिभिर्ही**ति भाष्ये अग्निशब्देन त्रेताकल्पनादिलिङ्गैश्च जाठरप्रतिपाद्यमानत्वं निषिध्यमानमयुक्तम्, लिङ्गानां प्रतिपादकत्वाभावादित्याशंक्य **प्रतिपाद्यत** इति पदं शब्दलिङ्गसाधारणज्ञापनपरतया व्याचष्टे—**ज्ञाप्य** इत्यर्थ इति । ननु वैश्वानरादिशब्दस्य परमात्मपरत्वे त्रेताकल्पनादिलिङ्गं कथं साक्षात्परमात्मनि अन्वेतीत्यत्याशंक्याह — तदिति । भाष्ये **किश्चे**ति हेतुद्वयसमुच्चयप्रतिपादनस्य सूत्रारूढतां दर्शयति—**अपिचेत्यत्रे**ति । **अधीयत** इत्यस्य शब्दकर्मत्वस्यैवोचितत्वात्, पुरुषमपि चैनमधीयत इति सूत्रखण्डस्य एतस्मिन् पुरुषशब्दमध्येतारं प्रयुञ्जत इति पर्यवसन्नमर्थं हृदि निधायाऽऽह—**किन्तु पुरुषशब्दवाच्यतयापीति** । **क्षरत्वाद्युपाधिने**ति । द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एवचेति क्षरपदसमभिव्याहाररूपोपाधिबलेनेति भावः । 'पुरुषः' 'पुरुषविधं पुरुषेऽन्तः प्रतिष्ठितं वेदे'ति पुरुषान्तःप्रतिष्ठितत्ववत् पुरुषत्वस्यापि श्रवणेन पुरुषान्तःप्रतिष्ठितत्वमात्रस्याश्रवणान्न जाठरत्वमिति परैः व्याख्यातम् । तन्निराचष्टे — **अत एव पुरुष**मिति । **हेत्वन्तराणा**मपीति । तथाच **असम्भवा**दित्यस्य हेत्वन्तरनिरासकत्वम् **पुरुषमपि** चेत्यस्यान्तःप्रतिष्ठाननिरासकत्वमिति व्यवस्था निर्मूलेति भावः ।

**अत एव न देवता भूतञ्च । १-२-२८.**

**समुदितस्ये**ति । **त्रिवृत्कृतस्य** भूततृतीयस्येत्यर्थः ।

**साक्षादप्यविरोधं जैमिनिः १-२-२९.**

**अग्निशब्दसामानाधिकरण्येन विने**ति । यद्यप्यग्निशब्दो वैश्वानरशब्दवत् बह्वर्थसाधारण एव । "विश्वस्मा अग्निं भुवनाय" इति भूततृतीये, "एषोऽग्निर्वैश्वानरो येनेदमन्नं पच्यत" इति जाठरे, "त्वमग्ने यज्ञानां होता" इति देवतायाम्, "हृदय्येऽग्नौ वैश्वानरे प्रास्यत्" इति परमात्मनि इत्येवमादिप्रयोगदर्शनात्—तथापि वैश्वानरशब्दे यौगिकार्थाभिव्यक्तिवत् अग्निशब्दे यौगिकार्थाभिव्यक्तिर्नास्तीति भावः **पुनरुक्तिप्रसङ्गा**दिति । न च वैश्वानरशब्देनैवापर्यवसानवृत्त्या अग्निविशिष्टस्याभि-

हिततया अग्निशब्दस्यैव यौगिकार्थपरत्वं किं न स्यादिति वाच्यम्—'अग्नौ वैश्वानरे प्रास्यत्' इति अग्निशब्दस्य पक्रमस्थत्वेन पुनरुक्तत्वशङ्कानुदयेनाग्निशब्दस्यापर्यवसानवृत्त्या परमात्मपरत्वस्य सिद्धतया पश्चाच्छ्रुतवैश्वानरशब्द एव पौनरुक्त्यशङ्कोदयादिति भावः। **परमात्मविषयत्वे वाक्यान्तरेष्वपीति।** अग्निशब्दरहितेषु, "आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि" इत्यादिवाक्येष्वित्यर्थः। **एकप्रयोजकत्वायेति।** एकस्यैव प्रयोजकत्वसिध्यर्थमित्यर्थः। **वैश्वानरशब्दो दृष्टान्ततयोक्त इति।** ननु पौनरुक्त्यप्रसङ्गपरिहाराय वैश्वानरशब्दस्य यौगिकत्वमाश्रितम्। अग्निशब्दे तादृशबाधकाभावात् कुतो योग इति चेन्न—रूढ्यर्थासम्भवे अपशूद्राधिकरण इव योगस्यैव ज्यायस्त्वमिति जैमिन्यभिप्राय इति भावः। **विशदतरत्वेऽपि प्रयोगादिति।** ज्ञानस्य साक्षात्त्वमित्यादिप्रयोगदर्शनादिति भावः। **बिदाद्यञन्तः ऋष्यणन्तो वेति।** गोत्रापत्ये बिदाद्यञन्तः; अनन्तरापत्ये ऋष्यणित्यर्थः। ततश्च बिदाद्यञन्तात् (?) ऋष्यणो बाधितत्वात् कथमत्र ऋष्यणिति शङ्का निरस्ता। **पुरुषसमष्टिवाचित्वेऽपीति।** 'नरे च संज्ञाया' मिति संज्ञायां डोऽविधानात्। समष्टिपुरुषसंज्ञात्वेऽपीत्यर्थः। **विश्वानर एव वैश्वानर इति।** प्रज्ञादेराकृतिगणत्वादण् प्रत्ययः। **विद्याभेदः स्यादिति।** यद्यपि नोपास्याकारभेदमात्रं विद्याभेदकम्, एकस्यामेव शाण्डिल्यविद्यायां मनोमयत्वप्राणशरीरत्वादीनामविरुद्धानां बहूनामुपास्याकाराणां दर्शनात्। किं बहुना, सर्वास्वपि परविद्यासु, 'आनन्दादयः प्रधानस्य', 'अक्षरधियां त्ववरोधः' इति न्यायेन सत्यत्वज्ञानत्वानन्दत्वादीनां बहूनामाकाराणामनुयायित्वदर्शनाच्च न विद्याभेदप्रसक्तिः — तथाप्यग्निशरीरत्वाग्र-नेतृत्वयोः विरोधमभ्युपगम्य एवमुक्तमिति द्रष्टव्यम्। **विलम्बाविलम्बसाम्यात् तुल्यबलत्वमितीति।** रूढ्यर्थानुपपत्तिप्रतिसन्धानमूलत्वेन दौर्बल्यं यौगिकार्थरूढ्यर्थापर्यवसानवृत्तिलब्धार्थयोः समानम्। तत्रापर्यवसानवृत्तिलब्धार्थस्य प्रथमप्रतिपन्नरूढ्यर्थानुगुणत्वं प्राबल्यहेतुः; तत्पक्षे रूढ्यर्थस्यापरित्यागात्। यौगिकार्थस्य तु मुख्यत्वमेव प्राबल्यहेतुः, रूढ्यर्थवत् यौगिकार्थस्यापि मुख्यत्वादिति तुल्यबलत्वमिति भावः।

ननु रूढ्यर्थापर्यवसानलब्धार्थस्य रूढिपूर्वकलक्षणापेक्षया जघन्येन यौगिकार्थेन तुल्यत्वं वदता अपर्यवसानलब्धार्थे लक्षणैवोक्ता स्यात्। न चेष्टापत्तिः। चरा-

चरव्यपाश्रयाधिकरणे परमात्मनि मुख्यत्वस्यैवाकृत्यधिकरणन्यायेन समर्थितत्वादिति चेत्— उच्यते — मुख्यार्थान्तरानुपपत्तिप्रतिसन्धानमूलकतया यौगिकार्थवद्विलम्बितप्रतीति कस्यापि ब्रह्मणः, "वचसां वाच्यमुत्तमम्", "नतास्मा सर्ववचसां प्रतिष्ठा यत्र शाश्वती" इत्यादिप्रमाणानुसारात् समुदायशक्तिगोचरत्वमस्ति । न हि विलम्बमात्रेण मुख्यार्थत्व हानिः, "आदित्यस्य गावः प्रकाशयन्ति" इत्यादौ किरणादीनां विलम्बितोपस्थिति-कानामपि मुख्यार्थत्वदर्शनादिति द्रष्टव्यम् । **एकेनैव वाक्येन वैकल्पिकार्थेति** । नन्वग्निशरीरकत्वाग्रनेतृत्वरूपार्थयोरेकवाक्यविहितत्वे अरुणैकहायन्योरिव समुच्चयस्यै-वावश्यम्भावेन विकल्पस्याप्रसक्त्या वैकल्पिकार्थद्वयविधानवादिनो वाक्यभेदपुरस्कारेणैव विकल्पस्याभ्युपगन्तव्यतया कथं वाक्यभेदापादनं तदनिष्टं स्यात् । किञ्च वाक्य-भेदभीत्या विकल्पं परित्यज्य विद्याभेदः स्वीकर्तव्य इत्याक्षिपतो मते एकेनाग्निशब्देन वृत्तिद्वयाश्रयणेनार्थद्वयविधाने वृत्तिद्वयविरोधप्रसङ्गेनावृत्तिलक्षणवाक्यभेदस्याभ्युपेतव्य-तया वाक्यभेददोषस्यानुद्धार्यत्वमिति चेत् — उच्यते — अग्निशरीरकत्वाग्रनेतृत्वरूप-गुणद्वयवत्तया विधाने विद्याभेदो वा स्यात्, तस्यामेव विद्यायां वाक्यभेदमाश्रित्य विकल्पाभ्युपगमे अष्टदोषदुष्टो विकल्पः स्यात वाक्यभेददोषश्च स्यादित्यत्र तात्पर्यात् । **यौगिक इति हि सूत्रतात्पर्यमिति** । रूढ्यभावे योग एव ज्यायान्, मुख्यत्वात्; न त्वपर्यवसानवृत्तिः । तस्या यौगिकार्थवन्मुख्यत्वाभावादिति जैमिनेर्मतम् । न तु द्वयोरपि तुल्यबलत्वम् । येन विद्याभेदो विकल्पो वा स्यादिति भावः । **न द्वितीयेनि कृत्वेति** । "तानि द्वैधं गुणप्रधानभूतानि" (पू. मी. २-१-३) इत्यधिकरणे व्रीहीनव-हन्तीत्यत्र किमवघातार्था व्रीहयः उत व्रीह्यर्थो वा अवघात इति विचार्य भावार्थाधि-करणन्यायेन भूतस्य द्रव्यस्य क्रियानिर्वृत्तिः दृष्टं प्रयोजनं लभ्यत इति अवघाताथ व्रीहयः, अवघातस्त्वदृष्टार्थ इति पूर्वपक्षं कृत्वा, अवघातस्य कर्मौपयिकतुषविमोकादि-लक्षणदृष्टप्रयोजनेन सप्रयोजनत्वे सम्भवति यागादिवत् अदृष्टार्थकल्पनाया अन्याय्यत्वात् अवघातस्य व्रीह्यर्थत्वमेव, व्रीहीणाञ्च तण्डुलपिष्टप्रणाडिकया यागार्थत्वमिति न कुत्राप्यदृष्टं कल्पनीयमिति सिद्धान्तितम् । तत्र ननु व्रीहीनवहन्तीति द्वितीयाश्रुत्या अवघातस्य व्रीह्यर्थत्वावगमात् कथं पूर्वपक्षोत्थितिरिति आशंक्य, द्वितीया नास्तीति सिद्धवत्कारेण पूर्वपक्षः प्रवर्तत इति पूर्वमीमांसकैर्वर्णितमित्यर्थः ।

अभिव्यक्तेरित्याश्मरथ्यः १-२-३०.

अनुस्मृतेर्बादरिः १-२-३१.

**बुध्यारोहार्थत्वं किं न स्यादिति।** प्रियशिरस्त्वादिवदिति भावः।

सम्पत्तेरिति जैमिनिस्तथाहि दर्शयति १-२-३२.

ननु सम्पत्तिं दर्शयतीत्येतावति वक्तव्ये, "परमात्मोपासनोचितमेव फलं — दर्शयती"ति भाष्ये निर्देशो निष्प्रमाणक इत्याशंक्य प्रागुपक्षिप्तस्य प्राणाहुतेः परमात्मसमाराधनरूपत्वस्योपपादकं तदित्याह— **अग्निहोत्रसम्पत्तेः परमात्मसमाराधनार्थत्वमिति।** परमात्मसमाराधनं प्राणाहुतिः। तस्या अग्निहोत्रहोमत्वार्था गार्हपत्याग्न्यादिसम्पत्तिरिति भावः। "तस्य सर्वेषु लोकेषु" इत्याद्युक्तः फलविशेष एव प्राणाहुतेः परमात्मसमाराधनत्वं ज्ञापयतीति भावः। **सर्वमाराधितं भवतीति।** यागस्य देवपूजार्थत्वात् पूजायाश्चाराधनरूपत्वात् यागहोमयोश्चानतिभेदात् हुधातोराराधनमर्थ इति भावः। **तदङ्गकपरोपासनफलं दर्शयतीति।** उपासनफलस्य सर्वपापप्रदाहस्य प्राणाग्निहोत्रे प्रदर्शनं प्राणाग्निहोत्रस्य तदङ्गत्वज्ञापनार्थमित्यर्थः। इदञ्च प्राणाहुतिमात्रस्येत्याद्युत्तरवाक्ये स्पष्टयिष्यते। **उपासकस्य मूर्धाद्यवयवानामेवेति।** "यस्त्वेवमेवे"ति पूर्ववाक्ये उपासकस्य प्रकृततया, "तस्य ह वा, एतस्ये" त्यत्र तच्छब्देन तस्यैव परामृष्टव्यत्वात् "उर एव वेदिर्लोमानि बर्हिः" इत्युत्तरवाक्ये उपासकोरःप्रभृतीनामेव परामृष्टव्यत्वेन, "तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाः" इत्यादौ मूर्धादिशब्दैरप्युपासकमूर्धादिपरामर्शस्योचितत्वाच्च। नचैवमात्मनो वैश्वानरस्येति व्यपदेशः कथं घटतामिति वाच्यम् — उपास्योपासकाभेदविवक्षया वैश्वानरादिशब्दप्रयोगोपपत्तेरिति भावः।

आमनन्ति चैनमस्मिन् १-२-३३.

**मुक्तिरेव फलमितीति।** **ज्ञापयितुमुक्ततयेत्यन्वयः।** यद्यपि "सर्वेष्वात्मस्वन्नमत्ती" त्यत्रानिष्टवृत्त्यंशो न कण्ठोक्तः ब्रह्मानुभवमात्रस्योक्तत्वात् — तथापि तदन्तर्गतत्वमस्तीत्यभिप्रयन्नाह — **फलान्तर्गतेति।** **वाक्यप्रतिपन्नस्याङ्गिभावस्येति।**

यद्यपि नानेन वाक्येनाङ्गाङ्गिभावः प्रतिपाद्यते, तथापि उर एव वेदिर्लोमानि बर्हि-रित्यग्निहोत्रसम्पत्तिवाक्ये, तस्य ह वा एतस्येत्यस्यानुकर्षात् तादर्थ्यं सिद्धमिति भावः।

शङ्करादिभिस्तु अभिव्यक्तेरित्यादिसूत्रचतुष्टयं मतभेदेन प्रादेशमात्रश्रुति-निर्वाहभेदप्रदर्शनपरं व्याख्यातम्। अतिमात्रस्यापि परमात्मन उपासकानुग्रहार्थं प्रादेशमात्रतया अभिव्यक्तिसम्भवात्। द्युपृथिव्यादिप्रादेशसम्बन्धिनी प्रादेशी मात्रा परिमाणं यस्य स तथोक्तमिति योगवशात् प्रादेशमात्रत्वोपपत्तिरिति आश्मरथ्यो मन्यत इति अभिव्यक्तेरिति सूत्रार्थमाहुः। प्रादेशमात्रहृदयावच्छिन्नमनोनुस्मरणीय-तया रूढिपूर्वकलक्षणया प्रादेशमात्रत्वमिति बादरिरिति द्वितीयसूत्रार्थमाहुः। वाज-सनेयके प्रादेशमात्रे उपासकमूर्धचुबुकान्तराले त्रैलोक्यात्मनो वैश्वानरस्य द्युप्रभृतीनां मूर्धाद्यवयवानां सम्पादनात् प्रादेशमात्रत्वोपपत्तिः। एवं हि वाजसनेयके श्रूयते— "प्रादेशमात्रमिव हवै देवाः सुविदिता अभिसम्पन्नाः तथा तु व एनान् वक्ष्यामि, यथा प्रादेशमात्रमिवाभिसम्पादयिष्यामीति। स होवाच मूर्धानमुपदिशन् एष वा अतिष्ठा वैश्वानर इति। चक्षुषी उपदिशन्नुवाच, एष वै सुतेजा वैश्वानर इति। नासिके उपदिशन्नुवाच, एष वै पृथग्वर्त्मा वैश्वानर इति, मुख्यमाकाशमुपदिशन्नुवाच, एष वै बहुलो वैश्वानर इति। मुख्या अप उपदिशन्नुवाच, एष वै रयिर्वैश्वानर इति। चुबुकमुपदिशन्नुवाच – एष वै प्रतिष्ठा वैश्वानर इति"। अयमर्थः – प्रादेशमात्रमिव देवाः सूर्यादय अभिसम्पन्नाः प्राप्ताः उपासनया यदा, तदा ते विदिता भवन्ति। अहं केकयराजः युष्मद्भ्यम् औपमन्यवादिभ्य एनान् देवांस्तथा वक्ष्यामि, यथा प्रादेशमात्रमेवाभिसम्पादयिष्यामीति औपमन्यवप्रभृतीन् प्रति वक्तव्यत्वेन प्रतिज्ञाय अश्वपती राजोवाच। किं कुर्वन्नित्युक्ते अस्य मूर्धानमुपदिशन् कराग्रेण दर्शयन्। एष वै भूरादिलोकानतीत्य तिष्ठतीत्यतिष्ठा। द्यौर्वैश्वानरस्यावयव इति प्रसिद्धे मूर्धनि वैश्वानरस्याधिदैवं यो मूर्धा द्युलोकः तद्दृष्टिः कर्तव्येत्यर्थः। स्वकीये चक्षुषी दर्शयन्नाह——एष वै सुतेजाः स हि सूर्योऽधिदैवतं वैश्वानरस्य चक्षुरिति प्रसिद्ध-योश्चक्षुषोर्वैश्वानरस्य अधिदैवं यदादित्याख्यं चक्षुस्तद्दृष्टिरित्यर्थः इत्यादि सर्वत्र ज्ञेयमिति। इत्थं सम्पत्तेरिति सूत्रार्थमाहुः। अस्मिन् प्रादेशमात्रे मूर्धचुबुकान्तराले एनं परमात्मानं जाबाला अध्यधीयते। "एषोऽनन्तो अव्यक्त आत्मा सोऽविमुक्ते

प्रतिष्ठित"इति। सो विमुक्तः अस्मिन् प्रतिष्ठित इति । वरणायां नास्याञ्च मध्ये प्रतिष्ठित इति । का वै वरणा का च नासीति । तत्र चेमामेव नासिकां वरणा नासीति निरुच्य पुनरप्यामनन्ति, कतमच्चास्य स्थानं भवतीति । भ्रुवोः प्राणस्य च यः सन्धिस्स एष द्यौर्लोकस्य परस्य च सन्धिर्भवतीति । ततश्च नासिकाभ्रूमध्यप्रदेशमात्रवर्तिनि परमात्मनि प्रादेशमात्रोपपत्तिरिति चतुर्थसूत्रार्थमाहुः । तेषां मते चतुस्सूत्र्या अपि प्रादेशमात्रत्वनिर्वाहमात्रप्रदर्शनपरत्वेन अस्मन्मत इव प्रत्येकं भिन्नभिन्ननिवृत्त्याशंकाया अभावात् नातीव सप्रयोजनत्वमित्याह—**अभिव्यक्तिः अनुस्मरणीयत्वमित्या**दिना। **द्युप्रभृतिमूर्धत्वादिसम्पादन**मिति पाठः । **मस्तकचिबुकान्तराल** इत्येतत् काकाक्षिन्यायेनोभयत्र सम्बध्यते । मस्तकचिबुकान्तराले द्युमूर्धत्वादिसम्पादनं मस्तकचिबुकान्तराले परस्य स्थितेरिति च उभयत्र सम्बध्यते । **श्रुत्या प्रतिपादन**मित्यस्यानन्तरं प्रादेशमात्रत्वश्रुतिनिर्वाहौपयिकमिति शेषः पूरणीयः ।

इति श्रीमच्चतुष्षष्टिप्रबन्धनिर्माणालङ्कर्मीणदशोपनिषद्भाष्यकार - श्रीमद्रङ्गरामानुजमुनि-

विरचितायां श्रुतप्रकाशिकाव्याख्यायां भावप्रकाशिकायां

प्रथमस्याध्यायस्य

द्वितीयः पादः ।

---

श्रीमते रङ्गरामानुजमहादेशिकाय नमः ।

श्रीमते लक्ष्मीहयवदनपरब्रह्मणे नमः ॥



॥ श्रीः ॥

श्रीमते रङ्गरामानुजमहादेशिकाय नमः ॥

## श्रुतप्रकाशिकाव्याख्या भावप्रकाशिका ॥

## प्रथमस्याध्यायस्य तृतीयपादे द्युभ्वाद्यधिकरणम् (१)



द्युभ्वाद्यायतनं स्वशब्दात् १-३-१.

ननु पूर्वस्मिन्नधिकरणे द्युमूर्धत्वादिकमेव परमात्मलिङ्गत्वेनोपन्यस्तम्; न तु द्युप्रभृतिसम्बन्धित्वमात्रमित्यस्वरसादाह — **यद्वा अदृश्यत्वादिगुणक इतीति** । **असमाप्तिबुध्येति** । अदृढत्वबुध्येत्यर्थः । यद्यपि नैतदधिकरणपूर्वपक्षिणा अदृश्यत्वादिगुणकस्य परमात्मत्वमाक्षिप्यते, अपि तु तदभ्युपेत्यैव तत्प्रकरणविच्छेदेन "यस्मिन् द्यौः" इति मन्त्रस्य लिङ्गवशात् जीवपरत्वमित्येव पूर्वपक्षः प्रवर्त्यते — तथापि, यस्मिन् द्यौरिति मन्त्रस्य जीवपरत्वे अदृश्यत्वादिवाक्येपि परमात्मत्वशंका अङ्कुरेदिति भावः । विषयवाक्यश्रुतिक्रमः सर्वोऽपि अदृश्यत्वाधिकरणे लिखितः तत्रैव द्रष्टव्यः । **श्लोकस्य द्युभ्वाद्यायतनविषयत्वमिति** । द्युभ्वाद्यायतनपरत्वमित्यर्थः । ननु अन्तस्तद्धर्मोपदेशादिति भाष्ये, "अजायमानो बहुधा विजायत" इति श्रुतिवशात् परमकारुणिको भगवान् स्वेच्छयैवोपासकप्रतिपत्त्यनुगुणाकारदेवमनुष्यादिसंस्थानभाक् भवतीत्यभिधानात् कथं बहुधाजायमानत्वं जीवलिङ्गमित्यत आह — **अन्तरादित्यविद्यायामिति** । बहुधाशब्दार्थस्तत्र सूत्रकृता न विचारित इति भावः । **प्रथमनिर्वाह** इति । योगपक्षे यौगिकार्थस्य मुख्यत्वेऽपि प्रथमप्रतिपन्नरूढ्यर्थस्य सर्वात्मना त्यागो दोषः । द्वितीये तु रूढ्यर्थसदृशार्थपरिग्रहेण सर्वथा रूढ्यर्थापरित्यागेऽपि अशक्यार्थस्वीकारो दोष इति भावः । **हेतुविशेष** इत्यादि । इच्छारूपहेतुविशेषः उपासकानुग्रहरूपफलविशेषश्च सूच्यत इत्यर्थः ॥

मुक्तोपसृप्यव्यपदेशाच्च १-३-२.

नानुमानमतच्छब्दात् प्राणभृच्च १-३-३.

पदार्थकथनपूर्वकत्वात् वाक्यार्थकथनस्य व्युत्क्रमेण कथने हेतुमाह — **सूत्रसङ्गतेरिति** । **सङ्गच्छमानं** सङ्गतिमन्तमित्यर्थः । सङ्गतिमति कथिते सङ्गतेर्बुद्धिस्थ-

त्वादिति भावः । **सूत्रस्य द्राघीयस्त्वादिति** । “ अव्ययं विभक्ति ” इत्यादि-सूत्रस्यातिदीर्घत्वादित्यर्थः । **प्रकृतात् परमात्मनोऽन्यदिति** । पूर्वसूत्रे द्युभ्वाद्यायतनं परमात्मेति साध्यतया प्रकृतादित्यर्थः । **अमः = प्रधानादिव्यतिरिक्त** इति । अस्मिन् सूत्रे प्रधानजीवयोः प्रकृतत्वात् तच्छब्दे तयोः परामर्शसम्भवादिति भावः । **परमात्मा चेदिति** । यद्यपि प्रधानजीवव्यतिरिक्तः परमात्मनोऽन्योपि सम्भवति, तथापि प्रधानजीवपरमात्मनामेव प्रस्तुतत्वेन **अतच्छब्दः** तत्रैव पर्यवस्यति । अत एव उत्तरत्र, 'तद्वाचिशब्दव्यतिरिक्तशब्दात्' इत्यस्य परमात्मशब्दादित्यर्थसिद्धिमभिप्रेत्य, 'तत् स्वशब्दादित्यनधिकार्थ'मिति वक्ष्यति । **अतः पारिशेष्यात् अर्थाभाव** इति । अम्भावस्तु — “ नाव्ययीभावादतोऽम्त्वपञ्चम्याः ” इति पर्युदासान्न भवतीति रूपसिद्धिः ॥

भेदव्यपदेशात् १-३-४.

ईशभिन्नत्वस्य जीवसाधारण्यात् कथं प्रकृतिपरत्वमित्याशङ्क्याह **स्त्रीलिङ्ग-सामर्थ्यादिति** । ननु भूतार्थे विहितस्य क्तस्य प्रीयमाणमिति वर्तमानार्थनिर्देशः कथमित्यत्राह **आदिकर्मणि क्त इति भाव** इति । तदाशब्दस्य मन्त्रे अश्रवणादाह — **यत्तदोरिति** । पक्षान्तरमाह — **इतिशब्द** इति । **तदर्थस्तदा शब्द विवक्षित** इति । **तदर्थः** = इति शब्दार्थ इत्यर्थः । भाष्यस्थस्तथाशब्द इतिशब्द-व्याख्यानमित्यर्थः । ननु भेदव्यपदेशमात्रेण कथं द्युभ्वाद्याधारस्य परमात्मत्वं जीवत्वं वा कुतो न स्यादित्यत्राह **द्रष्टृत्वसमानाधिकरणेति** ।

प्रकरणात् १-३-५.

**पूर्वत्रोत्तरत्र वेति** । प्राणभृत्प्रतिक्षेपे परमात्मसाधने चेत्यर्थः ॥

स्थित्यदनाभ्यां च १-३-६.

**प्राकरणिकतयोक्तानीति** । न त्वेतन्मन्त्रप्रतिपाद्यानीत्यर्थः । **सार्वज्ञ्यादि-समानाश्रयत्वादिति** । यस्सर्वज्ञस्सर्वविदिति अत्र प्रकरणे श्रवणात् सार्वज्ञ्यमपि प्रकृतद्युभ्वाद्यायतनविषयमिति भावः । **स्वयं योग्यत्वादिति** । जीवस्य तु सार्वज्ञ्यामृतसेतुत्वादेरदृष्टादिद्वारा अमुख्यतया कथञ्चिन्निर्वाह्यत्वादिति भावः ।

नन्वस्मिन् सूत्रे श्रुत्या परमात्मपरत्वमेव साध्यते । न हि तत्र भेदव्यपदेशादिति सूत्रोक्तहेतोरन्वयोऽस्ति, तस्य प्रत्यगात्मपरत्वप्रतिक्षेपकत्वादित्यत आह **तदपि प्रत्यगात्मेति** । नन्वस्मिन् सूत्रे जीवपरयोः प्रस्तुतत्वोपन्यासः कथं द्युभ्वाद्यायतनस्य परमात्मत्वे जीवत्वप्रतिक्षेपे वा उपयुज्यते? प्रत्युत विरुद्ध एव । यदि च प्राकरणिकहेत्वन्तरैः पूर्वसूत्राभिप्रेतैः परमात्मासाधारणैः परमात्मपरत्वं साध्यते, किमनेनेत्याशङ्क्य सूत्राभिप्रेतमर्थमाह **अभिचाकशीतीति परस्येति** । **तदुपयोगितयेति** । परमात्मनो भोक्तृत्वराहित्यप्रतिपादने प्रयुक्तोऽयं मन्त्रः तत्र भोक्तृत्वराहित्यं द्रढयितुम्, लोकवेदसिद्धं भोक्तृत्वं जीवस्यैव, न तु परमात्मनः शरीरावस्थितस्यापीति प्रतिपादयति । अतो जीवस्य भोक्तृत्वप्रतिपादनं परमात्मनः तदभावप्रतिपादनाय । न च परमात्मनः अभोक्तृत्वप्रतिपादनं जीवस्य भोक्तृत्वप्रतिपत्त्यर्थमिति वैपरीत्यं वक्तुं शक्यम्—प्रसिद्धं ह्यप्रसिद्धप्रतिपत्त्यर्थं भवेत् । न च परामात्मस्वरूपं जीवादपि प्रसिद्धम्, येन तथा स्यात् । नापि परमात्मप्रतिपत्त्यपेक्षयापि जीवप्रतिपत्तिः प्रयोजनवती, येन परमात्मप्रतिपादनं जीवप्रतिपत्त्यर्थं स्यात् । तस्मात् जीवभोक्तृत्वप्रतिपादनमभोक्तृपरमात्मप्रतिपत्त्यर्थम् । तस्मात् तस्मिन् मन्त्रे परमात्मा प्रतिपाद्यत इति सिद्धम् । स च मन्त्रः प्राक् प्रस्तुतद्युपृथिव्याद्याधारविषय एव, अप्रस्तुताभिधाने असङ्गतेः । तस्माद् द्युभ्वाद्यधिकरणं परमात्मेति सिद्धमिति भावः । **पदानामस्वारस्यप्रसङ्गाच्चेति** । अचेतने अन्तःकरणे शोकमोहादीनामसंभवादिति भावः । **पश्य इति** । पश्यः=परमात्मा, पश्यन्तं चेतनम् । अपश्यन्तमचेतनम् । पश्यन्तं परमात्मानम् । पश्यापश्ये = चेतनः अचेतनश्च । पश्यपश्यत्वात् = परमात्मदृश्यतैकस्वरूपत्वात् न पश्यत इत्यर्थः ।

**इह कैश्चिदित्यादि** । **धारकत्वयोगादिति** । **इदमुपलक्षणम्** ; परात्परत्वयोगादित्यपि द्रष्टव्यम् । **सद्विद्यावाक्यविषयत्वं चेति** । परैर्हि स्वशब्दादित्यस्यात्मशब्दादित्यप्यर्थः, प्रकरणान्तरे आयतने सदायतना इति स्वासाधारणसच्छब्दप्रयोगात् द्युभ्वाद्यायतनं परमात्मेत्यर्थोऽपि वर्णित इति भावः । **द्वितीयसूत्रस्य चेति** । यद्यप्यस्मिन्नपि सूत्रे अविद्याविमुक्तप्राप्यत्वव्यपदेशादिति योजनान्तरमप्युक्तम्— तथाऽपि तस्याभिमतत्वाद् वाग्विमुक्तेः ज्ञेयत्वव्यपदेशादिति योजनान्तरमेव स्वानभिमततया दूष्यत इति द्रष्टव्यम् ।

**वाक्कर्तृकपुक्त** (क्ति?) प्रत्यभिज्ञानमिति पाठः समीचीनः, वाग्भिमुक्तैरिति पैरुक्तैरेति द्रष्टव्यम् । तत्र च **प्रत्ययविपरिणामेनेत्यस्य** वाच इति द्वितीयाया विपरिणामेनेत्यर्थः—[1] **वाक्कर्मकेति** पाठे मुक्तेत्यत्र, आदिकर्मणि क्तः कर्तरीति कर्तरि क्तप्रत्ययः । वाग्रूपं कर्म वाक् कर्म । कप्रत्ययः स्वार्थिकः । द्वितीयेति योगविभागात् समासः । **प्रत्ययविपरिणामेनेत्यस्य** आदिकर्मणि क्त इति क्तप्रत्ययविपरिणामेनेत्यर्थः । **जीवव्यावृत्तिं प्रतिज्ञायेति** । स्थित्यदनाभ्यां चेति सूत्रेण प्राणभृद्भिन्नस्यैव साध्यत्वादिति भावः । **बुद्धिव्यावृत्त्युपपादनस्येति** । अनृत्वानत्वाभ्यां जीवव्यावृत्तेरेवोपन्यसनीयत्वादिति भावः । **परमात्मा भवतीति** । ततश्च प्राणभृन्न भवतीत्यस्यान्तःकरणाद्युपाधिसंपिण्डितचैतन्यं न भवतीत्येवार्थः, न तु उपाधिविनिर्मुक्तजीवचैतन्यमपि न भवतीत्यर्थः; येनासङ्गतिः स्यादिति भावः । **हेतुतयोपन्यासायोगादिति** । उपाधिसंयोगदशायां कल्पितस्य भोक्तृत्वस्य निष्कृष्टचैतन्येऽपि सत्त्वात्, इतरथा च कर्तृत्वादिसंबन्धस्य मोक्षस्य च वैयधिकरण्यप्रसङ्गादिति भावः । **द्वासुपर्णाविस्यस्य** विशिष्टनिष्कृष्टचैतन्यविषयत्वे गृहान्तःप्रविष्टे एकस्मिन् पुरुषे द्वौ पुरुषावित्यपि व्यपदेशप्रसङ्गात्, विशिष्टनिष्कृष्टभेदेन द्वित्वसंभवादिति भावः । **व्यतिरेकेण जीवव्यावृत्तिरिति** । अतच्छब्दादिति व्यतिरेकेणेत्यर्थः ॥ इति द्युभ्वाद्यधिकरणम् ॥

---

१. वाक्कर्तृकमुक्तेति पाठे मुक्तेति भावे क्तः । अवाक्कर्मकमुक्तेति अद्यतन टीकापाठ ॥

---

## भूमाधिकरणम् (२)

भूमा संप्रसादादध्युपदेशात् १-३-७.

छान्दोग्ये सप्तमप्रपाठके, "अधीहि भगव इति होपससाद सनत्कुमारं नारदः । तं होवाच, यद्वेत्थ तेन मोपसीद; ततस्त ऊर्ध्वं वक्ष्यामी" ति (एतावज्जान इत्युक्त्वा मदुपासनं कुर्वित्यर्थः) । स होवाच ऋग्वेदं भगवोऽध्येमि यजुर्वेदं—सोऽहं भगवो मन्त्रविदेवास्मि नात्मवित् । श्रुतं ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मविदिति । सोऽहं भगवश्शोचामि, तन्मा भगवान् शोकस्य पारं तारयत्विति । तं—होवाच नामोपास्स्वेति । स यो नाम ब्रह्मेत्युपास्ते— अस्ति भगवो नाम्नो भूय इति । नाम्नो

वाव भूयोऽस्तीति । तन्मे भगवान् ब्रवीत्विति। वाग्वाव नाम्नो भूयसी, वाचमुपास्स्वेति, अस्ति भगवो वाचो भूय इति । वाचो वाव भूयोऽस्तीति । तन्मे भगवान् ब्रवीत्विति, मनो वाव वाचो भूयः। अस्ति भगवो मनसो भूय इति। मनसो वाव भूयोऽस्तीति। तन्मे भगवान् ब्रवीत्विति । सङ्कल्पो वाव मनसो भूयान्। अस्ति भगवस्सङ्कल्पाद्भूय इति सङ्कल्पाद्वाव भूयोऽस्तीति। तन्मे भगवान् ब्रवीत्विति। चित्तं वाव सङ्कल्पाद्भूयः । अस्ति भगवश्चित्ताद् भूय इति । चित्ताद्वाव भूयोऽस्तीति । तन्मे भगवान् ब्रवीत्विति। ध्यानं वाव चित्ताद्भूयः । विज्ञानं वाव ध्यानाद्भूयः। बलं वाव विज्ञानात् भूयः। अन्नं वाव बलात् भूयः । आपो वावान्नाद्भूयः । तेजो वाव अद्भ्यो भूयः । आकाशो वाव तेजसो भूयान् । स्मरो वावाकाशाद्भूयान् । आशा वाव स्मरात् भूयसी" इत्यादिप्रश्नप्रति-वचनानन्तरम्, "प्राणो वावाशाया भूयान् । यथा वा अरा नाभौ समर्पिताः, एवमस्मिन् प्राणे सर्वं समर्पितम् । प्राणः प्राणेन याति । प्राणः प्राणं ददाति । प्राणाय ददाति । प्राणो ह पिता प्राणो माता प्राणो भ्राता प्राणः स्वसा प्राण आचार्यः प्राणो ब्राह्मणः । स यदि पितरं वा मातरं वा भ्रातरं वा स्वसारं वा आचार्यं वा ब्राह्मणं वा किञ्चित भृशमिव प्रत्याह, धिक् त्वास्त्वित्येवैनमाहुः, पितृहा वै त्वमसि मातृहा वै त्वमसि भ्रातृहा वै त्वमसि स्वसृहा वै त्वमसि आचार्यहा वै त्वमसि ब्राह्मणहा वै त्वमसीति । अथ यद्यप्येनानुत्क्रान्तप्राणान् शूलेन समासं व्यतिसन्दहेत्, नैवैनं ब्रूयुः, पितृहासीति, न स्वसृहासीति नाचार्यहासीति न ब्राह्मणहासीति । प्राणो ह्येवैतानि सर्वाणि भवति । स वा एष एवं पश्यन् एवं मन्वान एवं विजानन्नतिवादी भवति । तं चेत् ब्रूयुरतिवाद्यसीति, अतिवाद्यस्मीति ब्रूयात्; नापह्नुवीत । एष तु वा अतिवदति यस्सत्येनातिवदति सोऽहं भगवस्सत्येनातिवदानीति । सत्यं त्वेव विजि-ज्ञासितव्यमिति । सत्यं भगवो विजिज्ञास इति । यदा वै विजानात्यथ सत्यं वदति । नाविजानन् सत्यं वदति। विजानन्नेव सत्यं वदति। विज्ञानं त्वेव विजिज्ञासितव्यमिति। विज्ञानं भगवो विजिज्ञास इति । यदा वै मनुते अथ विजानाति मतिस्त्वेव विजिज्ञासितव्येति । मतिं भगवो विजिज्ञास इति यदा वै श्रद्दधाति अथ मनुते — श्रद्धा त्वेव विजिज्ञासितव्येति । श्रद्धां भगवो विजिज्ञास इति। यदा निस्तिष्ठति अथ श्रद्दधाति — निष्ठात्वेव विजिज्ञासितव्येति। निष्ठां भगवो विजिज्ञास इति। यदा वै करोत्यथ निस्तिष्ठति—यदा वै सुखं लभते अथ करोति—सुखं भगवो विजिज्ञास इति।

यो वै भूमा तत्सुखम् । भूमानं भगवो विजिज्ञास इति । यत्र नान्यत्पश्यति नान्यत् शृणोति नान्यद्विजानाति स भूमा । अथ यत्रान्यत्पश्यति अन्यत् शृणोति अन्यद्विजानाति तदल्पम् । यो वै भूमा तदमृतम् । अथ यदल्पं तन्मर्त्यम् । स भगवः कस्मिन् प्रतिष्ठित इति । स्वे महिम्नि, यदि वा न महिम्नीति । गो अश्वमिह महिमेत्याचक्षते, हस्तिहिरण्यं दासभार्यं क्षेत्राण्यायतनानीति; नाहमेवं ब्रवीमीति होवाच, अन्यो ह्यन्यस्मिन् प्रतिष्ठित इति । स एवाधस्तात् स उपरिष्टात् स पश्चात् स पुरस्तात् स दक्षिणतः स उत्तरतः स एवेदं सर्वमिति । अथातोऽहंकारादेश एव—अहमेवाधस्तात् अहमुपरिष्टात् अहं पश्चादहं पुरस्तात् अहं दक्षिणतः अहमुत्तरतः अहमेवेदं सर्वमिति । अथात आत्मादेश एव—आत्मैवाधस्तादात्मोपरिष्टात् आत्मा पश्चात् आत्मा पुरस्तात् आत्मा दक्षिणतः आत्मोत्तरत आत्मैवेदं सर्वमिति । स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराट् भवति तस्य सर्वेषु लोकेषु कामचारो भवति । अथ येऽन्यथाऽतो विदुः अन्यराजानस्ते क्षय्यलोका भवन्ति, तेषां सर्वेषु लोकेष्वकामचारो भवति । तस्य ह वा एतस्य एवं पश्यत एवं मन्वानस्यैवं विजानत आत्मतः प्राण आत्मत आशा — आत्मतः कर्माणि आत्मत एवेदं सर्वमिति । तदेष श्लोकः — न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम् । सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः ॥" इति ।

**हिंसायोग्यत्वश्रवणात्** जीवत्वमित्यस्यानन्तरम्, सिद्धवत्कृत्य पूर्वोत्तरपक्षौ प्रवर्त्येते इत्यर्थद्वारा सङ्गतिरिति ग्रन्थोपेक्षितः; इतरथा प्राणसम्बन्धिनो जीवत्वस्य पक्षद्वयाभ्युपेतत्वेन प्राणसंबन्धिनो जीवत्वं पूर्वपक्षीक्रियत इति वा सिद्धान्तीक्रियत इति वा वक्तुमशक्यत्वात् । ततश्च पूर्वं प्राणसम्बन्धिनः परमात्मत्वं समर्थितम्; इह प्राणसम्बन्धिनो भूमत्वं पूर्वपक्षीकृत्य निरस्यत इति पर्यवसितोऽर्थः । ननु धर्मिवाचिषष्ठ्यन्तशब्दान्तरनिर्देशाभावेपि धर्मवाचिभूमशब्दप्रतियोगितया निर्देशादेव धर्मपरत्वमस्त्वित्यस्वरसादाह — **यत्र नान्यत्पश्यतीति श्रुतेश्चेति** । **सप्राणनिष्प्राणविषयोपमर्दतदभावयोरिति** पाठः क्वचित् दृश्यते—**सप्राणनिष्प्राणविषयोपमर्दयोरिति** पाठः समीचीनः । सप्राणविषयोपमर्दे सजीवशरीरोपमर्दनिमित्तहिंसायाः, निष्प्राणविषयोपमर्दे निर्जीवशरीरोपमर्दनिमित्तहिंसाभावस्य च श्रवणादिति तस्यार्थः । **अप्राणेष्वितीति** ।

ननु मूलनिषिक्तसलिलदोहलपार्थिवधातूनामभ्यादानादचेतनेष्वपि प्राणोऽस्त्येव । उक्तं च **न्यायसिद्धाञ्जने** स्थावरेष्वपि तत्सत्त्वम् । अत: कथमेतदिति चेत् — सत्यं प्राणोऽस्त्येव, अथाऽपि ' भेदश्रुतेर्वैलक्षण्यात् ' इति सूत्रप्रतिपादितं पञ्चधा विभज्य शरीरधारणरूपं यत् प्राणासाधारणकार्यम् तदभावादप्राणत्वोक्तिः । अत एव, ' न तु दृष्टान्तभावात् ' इति सूत्रभाष्ये, " स्थावरेषु प्राणसद्भावेऽपि तस्य पञ्चधावस्थाय शरीरधारकत्वेनावस्थानं नास्ती"ति वक्ष्यते । **आविस्तरां वेद** सम्यक् वेदेत्यर्थः ।

ननु प्रक्रान्तस्यात्मोपदेशस्य प्राणपर्यन्तत्वात् प्राणः प्रत्यगात्मेति सिद्धान्तिना अनभ्युपेतत्वात् सिद्धान्ते प्राणः प्रत्यगात्मा न स्यादित्यत आह—**प्रक्रान्तस्यात्मोपदेशस्ये**त्यादिना । **धारकत्व**मिति । विवक्षितमिति शेषः । **हेतुवाचिपदेष्वि**ति । 'संप्रसादादध्युपदेशा' दिति त्रिषु पदेषु मध्य इत्यर्थः । **पूर्वनिर्दिष्टादूर्ध्वमभिधानं** **ही**ति । यद्यपि पूर्वत्र, अदो वावास्मात् भूय इति कण्ठतोभिधानमस्ति ; न प्रकृते— तथाऽपि आधिक्यस्य प्रतियोग्यपेक्षायाम्, [1]उपरिवेषामितन(उपवेषा:)धिकरणन्यायेना-व्यवहितप्राणस्यैवावधित्वेन ग्रहणमिति भाष्याभिप्राय इति भावः । **अभि-प्रायो विवृतो भवती**ति । स्वरूपस्वभावविकारशून्यतया परमात्मन एव सत्यशब्दाभिधेयत्वमिति अभिप्रायो विवृतो भवतीत्यर्थः । ननु तुशब्दस्य विशेषार्थकस्य व्यावर्तकत्वमेव लभ्यते ; न त्वधिकतया व्यावर्तकत्वमित्याशङ्क्य — सत्यं तुशब्दस्य विशेषमात्रप्रदर्शकत्वम्, तथाऽपि प्रकरणवशादाधिक्यसिद्धि-रित्याह — **पूर्वनिर्दिष्टादुत्तरस्ये**ति । ननु तुशब्देनोपासकाधिक्योक्तावपि उपास्याधिक्यस्यानुक्तेः कथमुपास्याधिक्यं सिद्ध्येदित्यत आह **तुशब्दो ही**ति। **न हि जुहोत्यादिपदान्तरं श्रूयत** इति । यद्यप्यग्निहोत्रजुहोतिपदयोर्न विशेषः, तथाप्याख्यातश्रवणे विधिसम्भवात्, विहितस्य विधानासम्भवात् कर्मान्तरत्वशङ्का-सम्भव इति भावः ।

भाष्ये **इत्थंभूतलक्षणे तृतीये**ति । ब्रह्मोपासनोपलक्षित इत्यर्थः । **इदमुपलक्षणम्** । ब्रह्मणेतिवदननिमित्तत्वरूपकरणत्वसम्भवेन कारकविभक्तित्वमप्युप-

१. 'मूलतःशाखां परिवास्योपवेषं करोती' त्येतद्विषयकपूर्वमीमांसाधिकरणमत्राभिप्रेतम् ।

द्यत इति द्रष्टव्यम् । **सत्यवदनपक्ष एवेति** । पूर्वपक्ष्यभिमत इति शेषः । "वाक्यस्वरससिद्धमन्यत्वं न बाधितव्य" मित्यस्य विप्रकृष्टतया अत-श्शब्दस्यासन्निहितोपाध्यन्तरपरामर्शित्वं क्लिष्टमित्यस्वरसादाह — **यद्वा ऽतिवादि-शब्दस्येति** । यौगिकत्वायौगिकत्वविवादस्य कण्ठतः प्रस्तुतत्वाभावादाह — **यद्वाऽतिक्रान्तेति** । ननु अतिवादित्वं हि वस्त्वन्तरात् पुरुषार्थतया अतिक्रा-न्तस्वोपास्यवस्तुवादित्वमित्युक्तत्वेऽपि अतिक्रान्तस्वोपास्यवस्तुवादित्वमतिवादिशब्द-प्रवृत्तिनिमित्तमित्येवं प्रागनिर्दिष्टतया कथमतश्शब्देन प्रवृत्तिनिमित्तत्वस्य परामर्श इत्याशङ्क्यातिवादित्वमतिक्रान्तस्वोपास्यवस्तुवादित्वमित्युक्तत्वे अतिवादिशब्दस्य तदेव प्रवृत्तिनिमित्तमित्यस्यार्थस्य फलितत्वया फलितस्यार्थस्यातश्शब्दपरामर्श उपपन्न इत्याह—**अयमर्थः पूर्वोक्तार्थफल** इति । **फल** इति पुल्लिङ्गपाठः साधुः । तस्यायमर्थः—अतिक्रान्तस्वोपास्यवस्तुवादित्वस्यातिवादिशब्दप्रवृत्तिनिमित्तत्वरूपोऽर्थः पूर्वोक्तयौगिकार्थ-फल इति । एवं चातिक्रान्तस्वोपास्यवादित्वोपपादनं यौगिकत्वोपपादकतया पर्यवस्यतीति अत एवेत्यादिवाक्यस्य यौगिकत्वोपपादनपरत्वं युक्तमिति भाव इति वदन्ति । **अतिक्रान्तस्वोपास्यवस्तुवादित्वस्यैव प्रवृत्तिनिमित्तत्वादेव** हीति । सत्य-शब्दार्थस्य ब्रह्मण एव निरतिशयपुरुषार्थतया तद्वेदिन एवातिक्रान्तस्वोपास्यवस्तुवादित्व-मस्तीति, 'सत्यं त्वेव विजिज्ञासितव्यम्' इति सत्यशब्दाभिधेयं ब्रह्मैव, उपास्यतया उक्तम्; न तु वदितव्यतयेत्यर्थः । **विजिज्ञासितव्यपदास्वारस्यं भवेदिति** । ननु विज्ञानमति श्रद्धाकृतिषु, 'विज्ञानं त्वेव विजिज्ञासितव्यम्; विज्ञानं भगवो विजिज्ञास' इत्यादिष्वत्रा-त्रापि संपादनीयमित्येवार्थोऽस्तु । न च—विज्ञानादिषु विजिज्ञासितव्यमित्यस्य संपाद-यितव्यमित्येवार्थोऽवश्यं वाच्यः; अग्रे, 'यदा वै मनुते अथ विजानाति, यदा श्रद्द-धाति अथ मनुते' इति तदुपायकीर्तनदर्शनात् । अत एव सत्यव्यतिरिक्तविषयाणि जिज्ञासितव्यपदानि संपाद्यवाचिनीत्युत्तरत्र वक्ष्यतीति वाच्यम्—तर्हि सत्येऽपि तथै-वार्थोऽस्तु; अग्रे यदा विजानाति, अथ सत्यं वदतीति तदुपायकीर्तनदर्शनादिति चेत्— परमात्मनि प्रसिद्धस्य सत्यशब्दस्य परमार्थप्रतिपादके वचसि लक्षणया प्रयोगस्यायुक्तत्वात्, सत्येनातिवदानीति तृतीयाया अयुक्तत्वात्, अतीत्युपसर्ग-वैयर्थ्यात्, तुशब्दस्वारस्याच्च, 'सत्यं भगवो विजिज्ञास' इत्यत्रापि सत्यवदनं

संपादनीयमित्यर्थाश्रयणस्य क्लिष्टत्वाच्चेत्यादिदूषणे तात्पर्यात् । प्रमाणान्तरमुक्तमिति । प्रमाणशब्देन श्रुतिलिङ्गे विवक्षिते । ब्रह्मसाक्षात्कारोपायभूतमित्यनेनेति । यदा वै विजानातीत्यस्य वाक्यस्य साक्षात्कारित्वनिमित्तातिवादित्वप्रतिपादनपरतया ग्रन्थकृता व्याख्यायमानत्वादिति द्रष्टव्यम् । तदुपायभूतं सत्योपासनं कुर्यादित्यर्थ इति । सत्यं त्वेव विजिज्ञासितव्यमिति वाक्यस्येति शेषः । ननु, 'यदा वै विजानात्यथ सत्यं वदति, नाविजानन् सत्यं वदति' इत्यादिवाक्यम्, 'सत्यं त्वेव विजिज्ञासितव्य' मित्यस्यानन्तरखण्डे पठ्यते । प्रकरणं चोत्तरोत्तरस्य पूर्वपूर्वं प्रति हेतुत्वप्रतिपादनपरम् ; न तूत्तरोत्तरस्य पूर्वपूर्वसाध्यत्वप्रतिपादनपरम् । ततश्च पूर्वखण्डे सत्यं त्वेव विजिज्ञासितव्यमित्युपासनं विधाय तत्साध्यसाक्षात्कारं तदुत्तरखण्डे कथं प्रतिपादयतीति चेत् — उच्यते, पूर्वखण्डे, सत्यं त्वेव विजिज्ञासितव्यमिति अतिवादित्वसिद्धये ब्रह्मोपासनं विहितम् । तत्र चातिवादित्वे सत्योपासनस्य साक्षात्कारद्वारा हेतुत्वमिति प्रतिपाद्यते द्वितीयखण्डे । ततश्च खण्डद्वयेनापि अतिवादित्वनिमित्तेन साक्षात्कारहेतूपासनं विधीयते । तदुत्तरखण्डैरुपासनोपयोगिमननादयो विधीयन्त इति भाष्यकाराभिप्राय इति भावः । याद्दच्छिकमज्जनेति । जानश्रुतेर्हंससंवादादिना ब्रह्मणि निरतिशयपुरुषार्थत्वावगमस्य दृष्टत्वात् , महाभागवतसंवादादिना च ब्रह्मणि निरतिशयपुरुषार्थत्वावगमस्य दर्शनादित्यर्थः । लभतेः प्राप्त्यर्थत्वादिति । ज्ञानस्यापि प्राप्तिरूपत्वादिति भावः । मुख्यप्राप्तिपरत्वेऽनिष्टमाह — न हि श्रवणादेरिति । सत्यव्यतिरिक्तविषयाणीति । विज्ञानं विजिज्ञासितव्यम्, मतिस्त्वेव विजिज्ञासितव्येत्यादावुपासनार्थत्वस्यासंभवादिति भावः । दृश्यमिथ्यात्वशङ्कायामिति । ब्रह्मव्यतिरिक्तदर्शनाभावो हि दृश्यव्यतिरेकाद्वा स्यात् , दृशिव्यतिरेकाद्वा । तस्य दृशिस्वरूपस्य नित्यतया दृश्यव्यतिरेक एव पर्यवस्यतीति दृश्यमिथ्यात्वं सिध्यतीति परेषामाशय इति भावः । भाष्ये अनवधिकातिशयस्वरूप इति । यद्यपि, यत्र नान्यदिति भूमलक्षणवाक्ये, यत्रान्यत्पश्यतीत्यल्पलक्षणवाक्ये इवानिर्धारितवस्तुपरामर्श एवोचितः ; न त्वनवधिकत्वादिविशिष्टपरामर्शः । अत एवान्यदर्शनाभावादेः तल्लक्षणत्वकथनमप्यनुचितम् । न हि, यः सास्नावान् स गौरित्यत्र यच्छब्देन गोत्वविशिष्टपरामर्शात् स सास्नावानिति सङ्गतम् — तथापि जन्मादिसूत्रे यतस्सर्वज्ञ इति सकलभाष्यकृतां व्यवहारवत् समाधानसंभवादिति द्रष्टव्यम् । ततोन्यदिति व्याख्येयं पदम् । दुःखरूपं तद्व्यतिरिक्तश्च न पश्यतीत्यर्थ इति ।

दुःखत्वमित्यर्थः। 'न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम्। सर्वं ह पश्यः पश्यतीति स क्षितयोदाहरिष्यमाणश्लोकानुसारेण नान्यत् पश्यतीत्यत्र, यत्र यत् इति द्वयमपि योज्यम्। ततश्च यस्मिन्ननुभूयमाने तद्विरुद्धं दुःखत्वं यस्मिन्न पश्यति, यतोन्यच्च न पश्यति, स भूमेत्यर्थः। तत्र **तत्र दुःखदर्शनाभावहेतुरिति**। विभूतिगुणविशिष्टे ब्रह्मणि दुःखरूपत्वदर्शनाभावहेतुरित्यर्थः। **दुःखं न पश्यतीत्यर्थ** इति। विभूति-गुणविशिष्टे ब्रह्मणि दुःखरूपतां न पश्यतीत्यर्थः। **स्वरूपान्तर्गतज्ञानादिगुण** इति। ज्ञानानन्दादीनां स्वरूपनिरूपकत्वादिति भावः **अभिप्रेतहेतुसमुच्चयार्थ** इति। दुःख-दर्शनाभावहेतोरनवधिकातिशयसुखरूपत्वस्यानवधिकातिशयसुखरूप इति विशेषणे-नाभिप्रेतस्य समुच्चयार्थ इति भावः। **विभूतिर्हि ब्रह्मणोन्येति शङ्कायामिति**। यत्र यद्विभूतौ चानुभूयमाने यतोन्यन्न पश्यतीत्युक्ते यच्छब्दद्वयेनापि ब्रह्मण एव परामृष्ट-तया विभूतेरपि तदन्यत्वादित्यर्थः। **ऐश्वर्यापरपर्यायविभूतिगुणविशिष्टमिति** भाष्यस्य–विभूतिविषयो गुणो विभूतिगुणः, ऐश्वर्यापरपर्यायश्चासौ विभूतिगुणश्चैश्वर्या-परपर्यायविभूतिगुण इति वा, विभूतिश्चासौ गुणश्च विभूतिगुणः ऐश्वर्या-परपर्यायश्चासौ विभूतिगुणश्च ऐश्वर्यापरपर्यायविभूतिगुण इति वा, ऐश्वर्यापरपर्याय विभूत्या गुणैश्च विशिष्ट इति वाऽर्थत्रयमभिप्रेत्य व्याचष्टे **विभूतिविषयो गुण** इत्यादिना। **यच्छब्द एव विशिष्टब्रह्मपर इति भाव** इति। यदि विशेष्यस्वरूपमात्रस्यैव भूमत्वमाचक्ष्महे, तदा यत्र नान्यत्पश्यतीति लक्षणस्या-व्याप्तिः स्यात्, विभूतिवाचकशब्दश्च मृग्येत; अपि तु विभूतिगुणविशिष्टमेव भूमशब्दार्थः; न विशेष्यमात्रम्। ततश्च यच्छब्दोऽपि लक्ष्यत्वेनाभिमतं विशिष्टमेव परामृशेत्। अतो न काप्यनुपपत्तिरिति भावः। न च विशिष्टस्यैव भूमशब्दार्थत्वे विशिष्टस्याहमर्थशरीरकत्वात्मत्वयोरभावेन, अथातोहङ्कारादेश इत्यादिना भूम्नः अहंग्रहोपासनात्मत्वोपदेशौ न स्यादिति वाच्यम्—विशेष्यांशाभिप्रायेणाहंग्रहा-त्मत्वोपदेशसंभवादिति द्रष्टव्यम्। **न त्वन्यदर्शनमित्यर्थ** इति। न तु विशेष्या-न्यदर्शनमपीत्यर्थ इत्यर्थः। **दुःखदर्शनमनुपपन्नमिति**। दुःखरूपत्वदर्शनमनु-पपन्नमित्यर्थः। **सर्वस्येति** व्याख्येयं पदम्। **दार्ष्टान्तिकेऽपि तादृक्त्वमाहेति**। यद्यपि भाष्ये द्वितीयदृष्टान्तसाधर्म्यमेव कण्ठत उक्तम्, तथाऽपि प्रथमदृष्टान्तसाधर्म्यमपि अभिप्रेतं द्रष्टव्यम्। **एतदिति** व्याख्येयं पदम्। **औपाधिकेत्यादि** व्याख्यानम्।

सुकृतं, 'रसो वै स' इति कार्यावस्थोच्यते, 'आनन्दाद्ध्येव खलु' इति कारणावस्थोच्यते।

धर्मोपपत्तेश्च १-३-८.

भाष्ये—**अथातोहंकारादेश इत्यहङ्ग्रहोपक्रमादिति**। जीवस्वरूपोपदेशपरत्वे अथातोहमुपदेश इति स्यात्, अतोऽहङ्कारशब्द बुद्धिपर इति भावः। **अस्मिन् प्रकरणेऽपि सर्वात्मत्वमुक्तमिति दर्शयिष्यन्निति**। यद्यपि 'स एवाधस्तात्' इत्यादिना भूम्नस्सर्वात्मकत्वं प्रागप्युक्तम्—तथापि सर्वात्मकत्वदृढीकरणाय उत्तरत्रापि दर्शयिष्यन्नित्यर्थः। एतच्चोपलक्षणम्—अथात आत्मादेश इत्यस्याभावे, 'तरति शोकमात्मवित्' इत्युपक्रान्तस्यात्मोपदेशस्यापर्यवसानात् अन्यदुपक्रान्तमन्यदापतितमिति शङ्का स्यात्। अतो भूमैवात्मेति दर्शयितुमात्मोपदेशं इत्यादिसन्दर्भ इति द्रष्टव्यम्। **आत्मत्वं फलितमित्युक्तमिति**। सर्वात्मत्वे कथिते उपासकात्मत्वमपि फलितमित्यभिप्रेत्य अथात आत्मादेश इति वाक्यमुदाहृतमित्यर्थः। **कण्ठोक्तिमद्वाक्यस्येति**। तस्य ह वा एतस्ये' ति वाक्यस्येत्यर्थः। भाष्ये—**उपासकस्यान्तर्यामितयाऽवस्थितादिति**। विजानन आत्मन इति श्रुतेरुपासकस्यान्तर्यामिण इत्यर्थ इति भावः। यदत्र विवरणकारेणोक्तम्—अहङ्कारस्यात्मैकत्वेन प्रत्यक्षसिद्धस्याथातोहङ्कारादेशः अथात आत्मादेश इति पृथगुपदेशोऽभेदार्थः, भूमात्मनोर्भिन्नत्वेन प्रसिद्धयोः पृथगुपदेश ऐक्यार्थः। द्वयोस्सार्वात्म्यायोगादिति—तदसारम्। अहमर्थादन्यस्यात्मनो भूमाख्यब्रह्माभिन्नत्वेन प्रत्यक्षासिद्धत्वात् तयोरुपदेशो भेदार्थः; अहमर्थस्य तु ब्रह्मभिन्नत्वेन प्रत्यक्षसिद्धत्वात् तयोरुपदेश ऐक्यार्थ इति वैपरीत्यस्यापि सुवचत्वात्। न चाहमर्थस्य जडरूपस्यान्तःकरणस्य भूमाभेदबोधनं बाधितं, नात्मनस्तथेति वाच्यं, तस्य तन्मतश्रद्धालुमात्रहृदयङ्गमत्वात्। अतः स एवाधस्तादित्यादिना सर्वात्मत्वेनोपदिष्टे भूम्नि अथातोहङ्कारादेश इति अहङ्ग्रहोपासने विहिते तस्य दृष्टिविधित्वशङ्कावारणाय प्रागुपक्षिप्तसर्वात्मकत्वं दृढीकुर्वन् उपक्रान्तात्मोपदेशस्य तत्रैव पर्यवसानं च दर्शयति अथात आत्मादेश इत्यादिना इत्येव युक्तमिति द्रष्टव्यम्।

इति भूमाधिकरणम् (२)

---

## अक्षराधिकरणम् (३)

अक्षरमम्बरान्तधृतेः १-३-९.

गार्गिब्राह्मणम्—"अथहैनं गार्गी वाचक्नवी पप्रच्छ, याज्ञवल्क्येति होवाच यदिदं सर्वमप्स्वोतं च प्रोतं च कस्मिन्नु खल्वाप ओताश्च प्रोताश्चेति। वायौ गार्गीति। कस्मिन्नु खलु वायुरोतश्च प्रोतश्चेति। अन्तरिक्षलोकेषु गार्गीति। कस्मिन्नु खल्वन्तरिक्षलोका ओताश्च प्रोताश्चेति। गन्धर्वलोकेषु गार्गीति। कस्मिन्नु खलु गन्धर्वलोका ओताश्च प्रोताश्चेति। ब्रह्मलोकेषु गार्गीति। कस्मिन्नु खलु ब्रह्मलोका ओताश्च प्रोताश्चेति। सहोवाच गार्गि! मातिप्राक्षीरिति; मा ते मूर्धा व्यपप्तत्। अनतिप्रश्न्यां वै देवतामतिपृच्छसि, गार्गि मातिप्राक्षीरिति। ततोह गार्गी वाचक्नव्युपरराम, वाचक्नवी=वाचक्नव्या (वचक्नोः?)दुहितेत्यर्थः, अनतिप्रश्न्यां = विजिगीषुकथायां प्रश्नायोग्यामित्यर्थः। तदनन्तरमुद्दालकप्रश्नः। अथ ह वाचक्नव्युवाच – ब्राह्मणा भगवन्तो हन्ताहमिमौ द्वौ प्रश्नौ प्रक्ष्यामि तौ चेत् मे वक्ष्यति न वै जातु युष्माकमिमं कश्चित् ब्रह्मोद्यं जेतेति। पृच्छ गार्गीति। सहोवाच अहं वै याज्ञवल्क्य यथा काश्यो वा वैदेहो वोग्रपुत्र उज्ज्यं धनुरधिज्यं कृत्वा द्वौ बाणवन्तौ सपत्नातिव्याधिनौ हस्ते कृत्वा उपोत्तिष्ठेदेवमेवाहं त्वां द्वाभ्यां प्रश्नाभ्यां उपोदस्थाम्; तौ मे ब्रूहीति। पृच्छ गार्गीति। स होवाच यदूर्ध्वं याज्ञवल्क्य दिवो यदर्वाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतञ्च भवच्च भविष्यच्चेत्याचक्षते—आकाश एव तदोतञ्चप्रोतञ्चेति। कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति— सहोवाचैतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति, अस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसङ्गमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणममुखममात्रमनन्तरमबाह्यं न तदश्नाति किञ्चन न तदश्नाति कश्चन। एतस्य वा अक्षरस्य प्रशासने गार्गि! सूर्याचन्द्रमसौ विधृतौ तिष्ठतः, एतस्य वा अक्षरस्य प्रशासने गार्गि—निमेषा मुहूर्ता अहोरात्रा अर्धमासा मासा ऋतवः संवत्सरा इति विधृतास्तिष्ठन्ति। एतस्य वा अक्षरस्य प्रशासने गार्गि प्राच्यो नद्यः स्यन्दन्ते श्वेतेभ्यः पर्वतेभ्यः; प्रतीच्योऽन्याः यां यां दिशमनु। एतस्य वा अक्षरस्य प्रशासने गार्गि ददतो मनुष्याः प्रशंसन्ति यजमानं देवाः दर्वीं पितरोऽन्वायत्ताः। यो वा एतदक्षरं

गार्ग्यविदित्वा अस्मिन् लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राणि, अन्तवदेवास्य तद्भवति । यो वा एतदक्षरं गार्ग्यविदित्वा अस्माल्लोकात् प्रैति, स कृपणः । अथ य एतदक्षरं गार्गि विदित्वा अस्माल्लोकात्प्रैति, स ब्राह्मणः । तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्टृ अश्रुतं श्रोतृ अमतं मन्तृ अविज्ञातं विज्ञातृ नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ नान्यदतोस्ति मन्तृ नान्यदतोऽस्ति विज्ञातृ। एतस्मिन्नु खल्वक्षरे गार्गि आकाश ओतश्च प्रोतश्चेति । सा होवाच ब्राह्मणा भगवन्तस्तदेव बहुमन्येध्वम्, यदस्मान्नमस्कारेण मुच्येध्वम् । न वै जातु युष्माकमिमं कश्चिद्ब्रह्मोद्यं जेतेति । ततो ह वाचक्नव्युपरराम ।

न वै जात्वित्यादि । युष्माकं मध्ये कश्चिदपीमं याज्ञवल्क्यं ब्रह्मोद्यं ब्रह्मवादं प्रति जेता नेत्यर्थः । काश्यो वैदेहः काशीराजो विदेहराजः उज्ज्यम्=अवरोपितज्यमित्यर्थः । अपरस्मै धारयस्वेति द्वितीयप्रश्नाय सन्नद्धो भवेत्यर्थः । श्वेतेभ्यः पर्वतेभ्यः=हिमवदादिभ्यः बहुमन्येध्वम्, किं तत् ? यदस्माद्याज्ञवल्क्यात् नमस्कारं कृत्वा निर्गमनं जयस्त्वस्य मनसाऽपि नाशङ्कनीय इति भावः ।

**तत्तु परमात्मव्यतिरिक्तस्येति**। इह हि द्वेधा पूर्वपक्षिणो गतिः, यदूर्ध्वं गार्गि दिवोयदर्वागिति वाक्ये आकाशशब्देन भूताकाशएवोच्यते, तदाधारतया अक्षरमव्याकृतमाकाश उच्यत इति, अथ वा आकाशशब्देनाव्याकृताकाश एवोच्यते; तदाधारतया निर्दिश्यमानमपि तदेव, स्वे महिम्नि प्रतिष्ठित इतिवदिति भावः । **नान्तरिक्ष** इति । 'न पृथिव्यामग्निश्चेतव्यो नान्तरिक्षे न दिवि तस्माद्धिरण्यं निधाय चेतव्यम्' इति इति शेषः । **परस्मिन्नप्यक्षरशब्दो दृश्यत** इति वाक्यस्वारस्यपर्यालोचनायां प्रधानपूर्वपक्षोपमर्दमात्रकृतसंरम्भस्य वाक्यमिवाभातीत्यस्वरसादाह **अथवाधिवपार्श्वस्थचोद्यमिति** । **अन्तशब्दोऽत्र चन** इत्यादि । इदमुपलक्षणम्, अन्तो; हि लयः, स च कारणावस्था। (?) प्रतिवचनेनान्तशब्देन कारणं लक्ष्यत इत्यपि द्रष्टव्यम् । **कृत्स्नविकारजातस्याधारो भवितुमर्हतीति** । ननु वायुमदाकाशस्यावकाशप्रदानद्वारा सङ्कुचितसकलविकाराश्रयत्वमाकाशस्य संभवति । असङ्कुचितसकलविकाराश्रयत्वं तु प्रधानस्यापि न संभवति, तस्य जीवगतविकारानाश्रयत्वात्। अतो व्यर्थ आकाशशब्दस्य रूढित्याग इति चेन्न—यदन्तरा द्यावापृथिवी इमे इति द्यावापृथिव्यो-

रन्तरालवर्तिनः कार्यजातस्य निर्देशात्, तत्र च वायुमदाकाशस्य सङ्ग्रहावश्यंभावात् तदाधारत्वं भूताकाशस्य न संभवतीति भावः।

ननु, 'यदूर्ध्वं याज्ञवल्क्य दिवो यदर्वाक् पृथिव्या' इति प्रश्नस्य तत्प्रतिवचनस्य कथं प्रधानविषयत्वम्, पूर्वसन्दर्भविरोधात्, एवं ह्युपाख्यायते बृहदारण्यके— जनकयज्ञे कुरुपाञ्चालदेशागतेषु ब्राह्मणेषु अभिसमेतेषु, 'कःस्विदेतेषां ब्रह्मिष्ठ' इति जिज्ञासुना जनकेन शृङ्गद्वयबद्धपलपरिमितसुवर्णालङ्काराः सहस्रं गाः समानीय, 'ब्राह्मणाः भगवन्तः! यो वो ब्रह्मिष्ठः, स एतागाः [उदजतामिति निवेदितेषु अधृष्टेषु स्थितेषु तासामुदजनाय याज्ञवल्क्येन स्वशिष्ये नियुक्ते तेन च तासूत्कालितासु ततः?] क्रुद्धेषु तमश्वलः पप्रच्छ, त्वं नु खलु याज्ञवल्क्य ब्रह्मिष्ठोऽसीति। "नमो वयं ब्रह्मिष्ठाय कुर्मो गोकामा एव वयं स्मः"इति याज्ञवल्क्यस्योक्तिभङ्ग्या तस्य ब्रह्मिष्ठत्वाभिमानमधिकं सन्तमवधार्य तद्विजिगीषया अश्वलादिषु केषुचित् तत्तत् पृष्टवत्सु तेन च सदुत्तरोक्त्या जितेषु, अथहैनं गार्गी पप्रच्छेत्यादिगार्गिब्राह्मणं प्रवृत्तम्, तत्र गार्ग्या, 'यदिदं सर्वमप्स्वोतञ्च प्रोतञ्चे' त्यादिना तत्तदुत्तरानन्तरं पुनःपुनःपृष्टस्य याज्ञवल्क्यस्य क्रमेण ब्रह्मलोकेषु गार्गीत्युत्तरे सति, कस्मिन्नु खलु ब्रह्मलोका ओताश्च प्रोताश्चेति पुनः पृष्टेन याज्ञवल्क्येन, गार्गि मातिप्राक्षीः मा ते मूर्धा व्यपप्तत् अनतिप्रश्न्यां वै देवतामतिपृच्छसि मातिप्राक्षीरिति सक्रोधमुक्ते भीता गार्गी उपरराम। तत उद्दालके प्रसिद्धे ब्रह्मविदि सूत्रमन्तर्यामिणं च पृष्टवति याज्ञवल्क्येन जिते, पुनर्गार्गी सर्वेषां ब्राह्मणानां पराजयो जायत इति शङ्कया याज्ञवल्क्यस्य क्रोधं ब्राह्मणानामनुज्ञयैवाकिञ्चित्करतामापाद्य प्राक्, माऽतिप्राक्षीरिति निवारितं प्रश्नं पुनःकरिष्यामीत्याशयवती 'ब्राह्मणा भगवन्तोऽहमिमं द्वौ प्रश्नौ प्रक्ष्यामि। तौ चेन्मेवक्ष्यति; न वै जातु युष्माकमिमं कश्चित् ब्रह्मोद्यं जेते' ति तेषामनुज्ञां याचित्वा, पृच्छेति तैरनुज्ञाता प्रश्नद्वयं पप्रच्छ, 'यदूर्ध्वं याज्ञवल्क्ये' त्यादिना। अत्र च पूर्वमनतिप्रश्न्यां वै देवतामतिपृच्छसीति गार्गिब्राह्मणान्ते याज्ञवल्क्येन सक्रोधं यः प्रश्नो निवारितः स एव खलु गार्ग्या सर्वेषां पराजयो भविष्यतीति भीतया तस्य क्रोधमविगणय्य पुनः प्रश्नोऽवतारितः। तस्य च परमात्मनि पर्यवसानं गार्गिब्राह्मण एवानतिप्रश्न्यां वै देवतामतिपृच्छसीति याज्ञवल्क्यवचनेन स्फुटमिति, तदनुसारेण तदुत्तरप्रश्नस्यापि परमात्मनि पर्यवसानं

युक्तम्; न प्रधानपरत्वमिति चेत्—न । अनतिप्रश्न्यां देवतामतिपृच्छसीति परदेवताविषयप्रश्ननिवारणं एकान्तरितप्रश्नः परदेवताविषयो भविष्यतीति दूरदृष्टिमता याज्ञवल्क्येन तत्रैव कृतमित्युपपत्तौ तस्य प्रश्नस्य परमात्मविषयत्वे प्रमाणाभावात् । अत एवाक्षरब्राह्मणारम्भे द्वितीयप्रश्न एव परमात्मविषयो भविष्यतीति जानत्या चिकीर्षितस्य तस्य निवारणपरिजिहीर्षया युगपत् प्रश्नद्वयानुज्ञा पृष्टेत्युपपत्तेः, प्रथमप्रश्नस्य देवताविषयत्वे प्रमाणाभावादाकाशशब्दस्याव्याकृतपरत्वे नानुपपत्तिरिति द्रष्टव्यम् । ननु अक्षरशब्दस्याव्यक्तपरमात्मनोः रूढत्वे वा उभयत्र यौगिकत्वेपि वा, 'व्युत्पत्तिदशायां प्रमाणान्तरसापेक्षत्वेऽपि प्रतिपादनदशायां तदनपेक्षत्वा' दिति परिहारस्यैव समाश्रयणीयत्वात् अक्षरशब्दस्याधुना यौगिकत्वप्रतिपादनं मुधेत्याशङ्क्य—, वस्तुस्थितिमनुसरता भगवता भाष्यकृता अक्षरशब्दस्य उभयत्र यौगिकत्वमुपन्यस्तम्; न तु प्रकृतोपयोगित्वेनेत्याह **रूढिशक्त्या वा अवयवशक्त्या** वेत्यादिना । **विशेषपर्यवसाने** सतीति । यदि व्युत्पत्तिग्राहकप्रमाणमनपेक्ष्यैव शब्दस्य विशेषपर्यवसानं स्यात्, तदैव, "न तत् प्रतिपादनदशायामपेक्षणीयम्" इति भाष्योक्तं वाक्यार्थप्रतिपादनस्य निराकाङ्क्षत्वं युज्यते । अतस्तस्य भाष्यस्य विशेषपर्यवसानेऽपि निराकाङ्क्षत्वमभिप्रेतमिति भावः । ननु किमत्र ब्रह्मणि विशेषपर्यवसाने प्राकरणिकं लिङ्गमित्यत आह **अत्र परमात्मलिङ्गं दर्शित**मिति । **धर्माधर्मे**ति । धर्मशब्देन लौकिकशौक्ल्यलौहित्यादिलक्षणघटादिधर्मापेक्षया अलौकिकस्यादृष्टरूपस्य धर्मस्य प्रतिपत्तेः शैघ्र्यदर्शनात्, एवमधर्मशब्देनापि घटत्वादिधर्मभिन्नघटादिस्वरूपलौकिकार्थापेक्षया अलौकिकस्यादृष्टरूपस्याधर्मस्य प्रतिपत्तेः शैघ्र्यदर्शनात्, ईश्वरशब्देनापि लौकिकपार्थिवापेक्षया अलौकिकेऽर्थे प्रतीतिशैघ्र्यदर्शनादित्यर्थः । **स्वभ्यस्तायां गवी**ति । चिरपरिचितगोव्यक्तेरेव प्रथमप्रतीतिरिति भावः । **प्रामाण्यं संभवतीति वक्ष्यत** इति । 'रचनानुपपत्ते' रित्यधिकरण इति शेषः । **अक्षरशब्दो जीवपर** इति । अत्र न्यायसिद्धाञ्जने श्रीवेदान्ताचार्यैः, "सा च समत्रैगुण्या मूलप्रकृतिः । तस्यामपि मात्रया भेदमालम्ब्य अव्यक्ताक्षरविभक्ताविभक्ततमोरूपावस्थाचतुष्टयमामनन्ति । यत्तु भाष्यादिषु अव्यक्तसहपठितस्याक्षरशब्दस्य चेतनविषयतया बहुश उपादानम्, तत् परव्याख्यानप्रकारमनुरुध्य वा, स्वरूपतो निर्विकारेऽपि जीवे सृज्यत्ववचनात् चिद्रूपविकारवत्त्वेऽपि यथाक्षरशब्दप्रवृत्तिः, तथा परब्रह्मेतरविषयस्याक्षरशब्दस्याचिदवस्थाविशेषेऽपि शक्तिकल्पनोपपद्यत इति प्रति-

पादयितु वा, क्वचित् क्षरे प्रकृतिविशेषे अक्षरशब्दस्य मुख्यत्वायोगात् परब्रह्मरूपाक्षरसंबन्धेन लक्षणायां प्रयोजनाभावात्, जीवसंबन्धेन त्वजहल्लक्षणया लयविशेषादिप्रतिपादनौचित्यात्, 'उभावेतौ लीयते परमात्मनी' ति द्वयोरपि लयाद्यभिधानाच्च अत्राजहल्लक्षणैव युक्तेत्यभिप्रायाद्वेति न कश्चिद्विरोधः" इत्युक्तम्। तदत्रानुसन्धेयम् ॥

सा च प्रशासनात् १-३-१०.

**ननु नात्र अम्बरान्तधृतेः परमात्मप्रशासनाधीनत्वमिति** । परमात्मशब्दोऽक्षरपरः, 'एतस्य वाऽक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत' इत्यादिश्रवणेऽपि अम्बरान्तशब्दस्यात्र श्रवणादिति भावः । **विषयप्रकर्षात्** विषयासङ्कोचादित्यर्थः । **श्रुत्यन्तरेष्विति** । ननु श्रुत्यन्तरे शासनाधीनसर्वधारकत्वस्य परमात्मधर्मत्वेन श्रुतत्वेऽपि अक्षरब्राह्मणे तादृशपरमात्मासाधारणधर्मश्रवणं नेति चेत् - उच्यते, 'एतस्य वा अक्षरस्य प्रशासने गार्गी'त्यत्र वैशब्दस्य प्रमाणान्तरप्रसिद्धिद्योतकतया प्रापकमानान्तरप्रदर्शनस्यापेक्षितत्वात् अनुवादवाक्यस्य प्रापकवाक्यानुसारेणार्थस्य वर्णनीयत्वात् पुरोवादवाक्ये असङ्कोचेन सर्वप्रशासनश्रवणात् अनुवादकमपि वाक्यं तदर्थकमित्यभिप्रायेण तदुदाहृतमिति द्रष्टव्यम् । ननु द्यावापृथिव्यादीनां तन्नियोज्य (याम्य)-त्वाभावप्रसङ्गे इष्टापत्तावापादितायां प्रमाणान्तरस्यैव शरणीकरणीयतया तदेवोपन्यस्यताम्; किं तदपेक्षेणानेनेत्यस्वरसादाह **किञ्च यस्येत्यादिना । अव्याकृतस्य धारणं श्रूयत** इति। ततश्च अव्याकृतस्य धारणं प्रतिपाद्य, कथं तस्याव्याकृतस्य धारणमित्याकाङ्क्षायाम्, शासनाधीनं धारणमिति प्रतिपादनाय, 'एतस्य वा अक्षरस्य प्रशासने' इत्यादि सन्दर्भः प्रवृत्तः । तस्य ह्ययमभिप्रायः — सूर्याचन्द्रमःप्रभृति सर्वपदार्थजातं शासनेन धारयतोऽक्षरस्य परब्रह्मणः प्रशासनेन धारणे को भार इति । ततश्च, 'एतस्य वा अक्षरस्य प्रशासन' इति सन्दर्भस्याम्बरान्तधृतिप्रकारोपपादनार्थत्वात् अम्बरान्तधारणमपि शासनाधीनं सिध्यतीति भावः ॥

अन्यभावव्यावृत्तेश्च १ ३-११.

ननु द्रष्टृत्वं चक्षुर्जन्यज्ञानवत्त्वम्; श्रोतृत्वं श्रोत्रजन्यज्ञानवत्त्वम् । न चैतत् परमात्मनि करणशून्ये संभवतीत्यत आह **द्रष्टादिशब्दा** इति । रूपसाक्षात्कर्ता द्रष्टा, शब्द-

साक्षात्कर्ता श्रोता, मन्तव्यसाक्षात्कर्ता मन्ता, अध्यवसेयसाक्षात्कर्ता विज्ञातेत्यर्थः । द्रष्ट्रादिपदैः रूपादिसाक्षात्कर्तृत्वार्थकथनस्य प्रकृतशासनोपयोगं दर्शयति **शासन-स्येति** । **तेषामयोग्यत्वादिति** । चक्षुःश्रोत्रमनआदिजन्यज्ञानरूपाणां दर्शनश्रवण-मननादीनामयोग्यत्वादित्यर्थः । परमात्मनोऽपि योगिभिर्नित्यैर्मुक्तैः स्वेनापि दृष्टत्वादाह **सर्वैः अयोगिभिरिति** । सर्वशब्दस्य एकैकवर्गकार्त्स्न्यपरत्वे हेतुमाह, **अस्यासङ्कुचितवृत्तितयेति । अदृष्टत्वादिविशेषितं द्रष्टृत्वादिकं प्रत्यगात्मव्या-वर्तकमित्यर्थ** इति । अयोगिभिरदृष्टत्वादिविशेषितमित्यर्थः । **प्रत्यगात्मन** इति । ननु परमात्मापि स्वाहंप्रत्ययवेद्य एव द्रष्टेति न विशेष इति चेन्न — अयोगिभिरदृष्ट इत्यत्र तात्पर्यात् । **स्वस्वरूपव**दिति । प्रत्यगात्मस्वरूपवदित्यर्थः । नन्वदृष्टं द्रष्टृ इत्यादौ अदृष्टत्वद्रष्टृत्वादीनामेव प्रत्येकं धर्मतया श्रवणात् कथमदृष्टत्वविशेषितद्रष्टृत्वेन प्रत्यगात्म-व्यावृत्तिलाभ इत्यशङ्क्य अदृष्टं सत् द्रष्टृ इति श्रुत्यर्थलाभात् विवक्षितसिद्धिरित्यभि-प्रयन्नाह **निष्ठान्तैः पदै**रिति । ननु विशेषितस्यैव धर्मत्वे द्रष्टृत्वं प्रधानव्यावर्तकम्, अदृष्टत्वविशेषितं प्रत्यगात्मव्यावर्तकमिति विभज्योक्तिरयुक्ता, विशेषितस्यैव धर्मत्वात् । किञ्च अयोगिभिरिति सङ्कोचोपि व्यर्थः, इतरादृश्यत्वविशेषितद्रष्टृत्व-स्यैव तथात्वात् इत्यस्वरसादाह **यद्वा रूपशब्दाद्यर्थवेदिभिरिति । अस्यां योज-नायामि**ति । द्वितीययोजनायां तु 'नान्यदत' इत्यादिवाक्यस्यैव विषयत्वमिति भावः । **कण्ठोक्ता स्या**दिति । द्वितीययोजनायामर्थसिद्धत्वमुत्तरत्र स्पष्टम् । **चशब्द उक्तहेतुसमुच्चय** इति । योजनान्तरे त्वनुक्तहेतुसमुच्चयपरत्वमुत्तरत्र स्पष्टम् । **प्रस्तुत-तुल्यपुरुषान्तरे**ति । 'इषुर्विष्टुतिः सप्ताहं भवति । समानमितरच्छ्येनेन" इत्यत्र इतर-शब्दस्य पूर्वनिर्दिष्टसदृशश्येनवैशेषिकाङ्गपरत्वमिति सप्तमे (७-१-२) स्थापितत्वादिति भावः। **एतस्याधारभूत**मिति भाष्ये **एत**च्छब्दस्याक्षरपरामर्शित्वमपि संभवेत् ; जग-त्परामर्शित्वमपि संभवेत्; उभयोरपि प्राक्प्रस्तुतत्वात् । तथा चाक्षरपरामर्शित्वे अक्षरस्य धारकं किमपि नास्तीत्युक्त्या अधिकनिषेधः कृतः स्यात् ; पक्षान्तरे तु समनिषेध इत्यभिप्रेत्य व्याचष्टे **एतस्य = अक्षरस्ये**त्यादिना । "यदेवेह तदमुत्र यदमुत्र तदन्विह । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" इति कठवल्लीबृहदारण्य-कादाविव भेदनिषेधसंभवे ब्रह्मणः समाभ्यधिकनिषेधपरत्वाश्रयणे को हेतुरिति शङ्कते **ननु नान्यदित्यादिना । यदि कश्चिदिति** । "यत्र हि द्वैतमिव भवती"

त्यादाविति भावः । अत्र **यदि संभवतीत्यनेन** तत्रापि सुदूरं गत्वा ऐक्यविधि-शेषत्वमेवेति भावः । **अत इदं वाक्यं प्रकृततुल्यद्रष्ट्रन्तरनिषेधपर**मिति । न चास्मिन्नपि पक्षे पूर्वोक्तदोषतादवस्थ्यम्, द्रष्टुरेव श्रोतृतायाः, 'नान्यदतोऽस्ति द्रष्टृ' इत्यनेनैव सिद्धतया प्रत्येकनिषेधवैयर्थ्यादिति वाच्यम्—द्रष्टृत्वश्रोतृत्वादीनामनतिरिक्तवृत्तित्वेऽपि तुल्यो द्रष्टा नास्तीत्युक्ते द्रष्टृत्वांशे साम्यं नास्तीति प्रतीतावपि श्रोतृत्वांशेऽस्तीति शङ्कायाः संभवात् साफल्यमिति भावः । **प्रशासने ददतः ।** **प्रशासन** इति निमित्तसप्तमी । तदाज्ञया ददतो जनान् मनुष्याः प्रशंसन्ति । तदाज्ञया यागं कुर्वन्तं देवाः प्रशंसन्ति । तदाज्ञया प्रवृत्तं दर्वीहोमं पितरः प्रशंसन्तीत्यर्थः । **अनुवशा इत्यर्थ** इति । **अनुवशाः** उपजीविन इत्यर्थः । देवपित्रादय ईश्वरास्सन्तोऽन्यथापि जीवितुमुत्सहन्तः (?) कृपणां वृत्तिं यत्प्रशासनादास्थिता इत्यर्थः । **तस्मिन् परिजिहीर्षित** इति । यदि ब्रह्मणो मिथ्यात्वं परिजिहीर्षितम्, तदा ब्रह्मणो द्रष्टृभेदस्यैवाभ्युपगन्तव्यतया, अदृष्टं द्रष्टृिति वाक्यप्रतिपाद्यत्वं ब्रह्मणो न स्यादित्यर्थः । **प्रधानस्येश्वरत्वेति** । प्रशासितृत्वस्येश्वरत्वपर्यवसन्नत्वात्, द्रष्टृत्वस्य क्षेत्रज्ञत्वे पर्यवसन्नत्वादिति भावः ॥

इति अक्षराधिकरणम् । (३)

---

## ईक्षतिकर्माधिकरणम् (४)

---

**ईक्षतिकर्मव्यपदेशात्सः १-३-१२.**

प्रश्नोपनिषदि, "अथ हैनं शैब्यः सत्यकामः पप्रच्छ, स यो ह वै तद्भगवन् मनुष्येषु प्रायणान्तमोङ्कारमभिध्यायीत, कतमं वाव स तेन लोकं जयतीति । तस्मै स होवाच, एतद्वै सत्यकाम! परं चापरं च ब्रह्म यदोङ्कारः । तस्माद्विद्वानेतेनैवायनेन एकतरमन्वेति । स यद्येकमात्रमभिध्यायीत, स तेनैव संवेदितस्तूर्णमेव जगत्यामभिसंपद्यते । तमृचो मनुष्यलोकमुपनयन्ते । स तत्र तपसा ब्रह्मचर्येण श्रद्धया संपन्नो महिमानमनुभवति । अथ यदि द्विमात्रेण मनसि संपद्यते, सोऽन्तरिक्षं यजुर्भिरुन्नीयते सोमलोकम् । स सोमलोके विभूतिमनुभूय पुनरावर्तते । यः

पुनरेतं त्रिमात्रेण ओमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत, स तेजसि सूर्ये संपन्नः, यथा पादोदरस्त्वचा विनिर्मुच्यते, एवं हैव स पाप्मना विनिर्मुक्तः स सामभिरून्नीयते ब्रह्मलोकम् । स एतस्मात् जीवघनात् परात्परं पुरीशयं पुरुषमीक्षते । तदेतौ श्लोकौ भवतः—

तिस्रो मात्रा मृत्युमत्यप्रयुक्ता अन्योन्यसक्ता अनविप्रयुक्ताः ।
क्रियासु बाह्यान्तरमध्यमासु सम्यक् प्रयुक्तासु न कम्पते ज्ञः ॥

ऋग्भिरेतं यजुर्भिरन्तरिक्षं ससामभिर्यत्तत् कवयो वेदयन्ते ।
तमोङ्कारेणायनेनान्वेति विद्वान्, यत्तत् शान्तमजरममृतमभयं परं च ॥"

इति । **संवेदितः** अनुगृहीतः । **मनसि संपद्यते** । मनसा ध्यायतीत्यर्थः । **मृत्युमर्त्यप्रयुक्ताः** मृत्युभीतमर्त्यप्रयुक्ताः । अन्योन्यसक्ताश्चेत् अनविप्रयुक्ताः स्युः । सम्यक् प्रयुक्तासु मात्रासु सतीषु न कम्पते ज्ञ इत्यर्थः । **अदृष्टो द्रष्टेति परमात्मनो द्रष्टृत्वमुक्त**मिति पाठो लेखक[स्खलन]दोषायत्तः, अक्षरब्राह्मणे, अदृष्टं द्रष्टृिति नपुंसकपाठस्यैव सत्त्वादिति द्रष्टव्यम् । विषयवाक्यस्थब्रह्मलोकशब्दस्यै-वान्यथा निर्वाहो दुर्वच इति वक्तुं शक्ये अन्तरिक्षशब्दस्य दुर्निर्वहत्वोक्तिरयुक्ते-त्यस्वरसादाह **यद्वा आकाशशब्दस्येति** । **ससामभिरितीदमेकं** पदम्, तच्छन्दश्रवणादित्यभिप्रेत्य व्याचष्टे **सामगानसहितैरित्यर्थ** इति । आतिवाहिकानां मुक्तानाम्, एतत्साम गायन्नित्यस्यासंभवादाह **सान्त्ववादयुक्तै**रिति । न च, 'तमृचो मनुष्यलोकमुपनयन्ते,' 'यजुर्भिरून्नीयते सोमलोक' मिति ऋग्यजुःप्रायपाठात् सामपद(शब्द)स्य वेदपरत्वमेवाश्रयितुं युक्तमिति वाच्यम् — ऋगादिस्थलेऽपि वेदस्य नेतृत्वासंभवात्, तत्रापि लक्षणादिक्लेशस्याश्रयणीयत्वेन प्रायपाठो नास्तीति भावः । **परमात्मत्वं व्यवस्थाप्येति** । यद्यपि, "न च तत्त्वविषयमेव सर्वं दर्शनम्, अतत्त्वविषयस्यापि दर्शना"दिति वाचस्पत्ये ईक्षणमपि अपरमात्म-विषयमिति पूर्वपक्षस्य दर्शनात् ईक्षतिकर्मणः परमात्मत्वनियमः पूर्वपक्षिणा नाभ्युपगतः — तथाऽपि ईक्षतिकर्मणः परमात्मत्वमङ्गीकृत्य ध्यायतेस्ततो भिन्नविषय-त्वमिति पूर्वपक्षस्यापि प्रवर्तनात् तदभिप्रेत्यैतदुक्तमिति द्रष्टव्यम् । **तत् प्राप्नोतीति**। पञ्चम्यन्तपदं प्राप्नोतीत्यर्थः । **देवतिर्यग्भावाद्यपेक्षयेति** । द्रष्टव्यमिति शेषः ।

ननु उपक्रम एव, 'परं चापरं च ब्रह्मे'ति द्वेधा विभज्य, 'परं पुरुषमभिध्यायीत', 'परात्परं पुरिशयं पुरुषमीक्षत' इति परत्वेन विशेषणाच्च परमेव ब्रह्मेत्यस्य सिद्धत्वात् परत्वविशेषितपुरुषशब्दस्यासाधारणत्वात् शान्तत्वाजरत्वादीनां श्रवणाच्च अनेकब्रह्मलिङ्गविरोधे मनुष्यादिलोकप्रायपाठमात्रेण लिङ्गबाधायोगात् कथं पूर्वपक्ष इति चेत्—उच्यते ; प्रायपाठावगतचतुर्मुखलोकगतपुरुषनिरीक्ष्यमाणत्वस्य लिङ्गस्यानन्यथासिद्धत्वादिति पूर्वपक्ष्यभिमानात् ।

**नपुंसकान्तनिर्दिष्टमि**ति । **एत**च्छब्देन नपुंसकपदनिर्दिष्टत्वं परामृश्यत इति भावः । भाष्ये **कर्मनिमित्तं देहित्व**मिति । 'मूर्तौ घन' इति मूर्तौ घनशब्दो निपातितः । मूर्तिः काठिन्यमिति व्याख्यातम् । जीवस्य काठिन्यं देहद्वारकम् । देहित्वादेव कर्मकृतत्वमपि सिद्ध्यतीति भावः । **सशरीरत्वादेव ही**ति आत्मनः चतुर्णां मुखानामसंभवादित्यर्थः । भाष्ये **न क्षयिष्णुश्चतुर्मुखलोक** इति । ननु ब्रह्मलोकशब्देन परब्रह्मलोकपरामर्शे चतुर्मुखस्य प्रागनिर्दिष्टत्वात्, 'एतस्मात् जीवघनात्' इत्येतच्छब्दस्य प्रकृतपरामर्शित्वं न स्यात् । अतः शङ्करादिरीत्या ब्रह्मलोकशब्दस्य चतुर्मुखलोकपरत्वमेवाभ्युपगम्य एतस्मादित्येतच्छब्देन च ब्रह्मलोकशब्दान्तर्गतब्रह्मशब्दनिर्दिष्टचतुर्मुखपरामर्शो वक्तव्य इत्येवाभ्युपेत्यमिति चेन्न — ब्रह्मलोकशब्दस्य चतुर्मुखलोकपरत्वेऽपि चतुर्मुखस्य समासे न्यग्भूतस्य परामर्शासंभवात् । न च प्राधान्येन निर्दिष्टस्य चतुर्मुखलोकस्यैव परामर्शः स्यादिति वाच्यम्-तत्र जीवघनशब्दस्याप्रवृत्तेः । कथञ्चिद्वृत्तावाश्रितायामपि चेतनस्याचेतनात् चतुर्मुखलोकात् उत्कर्षप्रतिपादनस्यायुक्तत्वाच्च । तस्मादेतच्छब्दस्य, 'अथैष ज्योति' रित्यादिवत् प्रस्तोष्यमाणजीवघनपरामर्शित्वं युक्तमिति द्रष्टव्यम् । **आदिशब्देने**त्यादि । यद्यप्यादिशब्दार्थतया प्रदर्शितेषु वाक्येषु सूरिदृश्यत्वं न प्रतीयते, अपि तु सूर्याधारत्वमेव ; 'तद्विप्रासो विपन्यव' इत्यत्रापि विपन्यवः — स्तुतिशीलाः, जागृवांसः — अस्खलितज्ञानाः, तद्विष्णोः परमं पदं सदा स्तुवन्तः समिन्धत इति वेदार्थसङ्ग्रहे व्याख्यातत्वात् — तथाऽपि सूरिस्थानभूतस्य सूरिदृश्यत्वमप्यर्थसिद्धमित्यभिप्रेत्योक्तमिति द्रष्टव्यम् । **कार्यब्रह्मशब्देने**ति । **यदपरं कार्यं ब्रह्मे**ति भाष्ये कार्यब्रह्मशब्देन, 'चतुर्मुखलोकस्यापरब्रह्मपदवाच्यत्वमेव युक्तम् ; न तु परब्रह्म-

लोकत्व' मिति दर्शितमिति योजना। **उपलक्षणतयेति**। अन्तरिक्षशब्दमुख्यार्थ-स्वीकारे पक्षद्वयेऽपि व्यवधानमवशिष्टम्। यदि च व्यवधानपरिहारायान्तरिक्ष-शब्दस्य चतुर्मुखलोकाधस्तनलोकमात्रोपलक्षकत्वमाश्रित्य व्यवधानपरिहारः, तर्हि अन्तरिक्षशब्दस्यामुष्मिकलोकमात्रोपलक्षकत्वमाश्रित्य व्यवधानपरिहारः समान इति भावः। **सङ्ग्राहकलाभ** इति। यद्यपि भूलोकब्रह्मलोकमध्यवर्तित्वरूपं सङ्ग्राहकं सुवचम् - तथाऽपि तस्य सङ्ग्राहकस्य गुरुत्वेन न सुलभप्रतिपत्तिकत्वमिति भावः। **फलवचनविरोधः** फलवाक्यस्थपुरुषशब्दविरोध इत्यर्थः।

इति ईक्षतिकर्माधिकरणम् (४)

---

# दहराधिकरणम् (५)

## दहर उत्तरेभ्यः १-३-१३.

"अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशः तस्मिन् यदन्तस्तदन्वेष्टव्यम्; तद्वाव विजिज्ञासितव्यमिति। तं चेद्ब्रूयु-र्यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशः किं तदत्र विद्यते, यदन्वेष्टव्यम्, यद्वाव विजिज्ञासितव्यमिति। स ब्रूयात्, यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः। उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते। उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ, विद्युन्नक्षत्राणि। यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहितमिति। तं चेद्ब्रूयुः अस्मिंश्चेदिदं ब्रह्मपुरे सर्वं समाहितं सर्वाणि च भूतानि सर्वे च कामाः, यदेनज्जरामाप्नोति प्रध्वंसते वा किं ततोऽतिशिष्यत इति। स ब्रूयान्नास्य जरयैतज्जीर्यति न वधेनास्य हन्यते, एतत्सत्यं ब्रह्मपुरम्! अस्मिन् कामाः समाहिताः। एष आत्मा अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासस्सत्यकामस्सत्यसङ्कल्पः। यथा ह्येवेह प्रजा अन्वाविशन्ति यथानुशासनं यं यमन्तमभिकामा भवन्ति यं जनपदं यं क्षेत्रभागं तंतमेवोपजीवन्ति। तत् यथेह कर्मचितो लोकः क्षीयते, एवमेवामुत्र पुण्यचितो लोकः क्षीयते। तद्य इहात्मानमननुविद्य व्रजन्त्येतांश्च सत्यान् कामान्, तेषां सर्वेषु

लोकेषु अकामचारो भवति । अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्, तेषां सर्वेषु लोकेषु कामचारो भवति ।" इति ।

उदाहृतश्रुतिवाक्येषु तत्रतत्रास्पष्टार्थः परीत्या विविच्यते ; सिद्धान्ताभिमतार्थस्तु उत्तरत्र स्पष्टः । तं चेद्ब्रूयुः – तं चेदेवमुक्तवन्तमाचार्यं यदि ब्रूयुः, अन्तेवासिनश्चोदयेयुः ; कथम् ? यदिदमस्मिन् ब्रह्मपुरे परिच्छिन्ने अन्तः दहरमल्पं पुण्डरीकं वेश्म, ततोऽप्याकाशः तत्र किं विद्यते ; न किञ्चिदपीत्यर्थः । यदि नाम बदरमात्रं किञ्चिद्विद्येत, किं तस्यान्वेषणेन विजिज्ञासनेन वा प्रयोजनमिति । इत्थमुक्त आचार्यो ब्रूयात्, यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश इति । वैपुल्यप्रतिपादनेनाक्षेपबीजभूतमल्पत्वं व्यावर्त्यते । किं तत्र विद्यत इत्याक्षेपस्योत्तरमुच्यते, 'उभे अस्मिन्' इत्यादिना । तदन्तर्वर्तिमध्येऽन्वेष्टव्यमुपदिश्यते, यच्चास्येहास्तीत्यादिना । अस्यायमर्थः – यदस्य देहिन इह लोके विद्यते, यच्चेह लोके इदानीं न विद्यते, नष्टं भविष्यच्च, तत् सर्वमस्मिन् दहराकाशे समाहितमिति । तच्चात्र दहरोपासनया ब्रह्मलोकं प्राप्तस्य अग्रे, 'स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरस्समुत्तिष्ठन्ती' त्यादिना वर्णयिष्यमाणं स्वसङ्कल्पसमुत्थितप्राचीनानन्तजन्मसम्बन्धिदिदृक्षित पितृ मातृ भ्रातृ पुत्र कलत्र गीतवादित्रादि भोग्यवस्तुजातमेव । 'तं चेद्ब्रूयुरस्मिंश्चेदिदं ब्रह्मपुरे सर्वं समाहितं सर्वाणि च भूतानी' त्यादेरयमर्थः – कुसूलादौ जीर्णे भारधारणाक्षमे सति तदन्तर्निहितं व्रीह्यादिकं किमपि यथा नावतिष्ठते, एवमाधारभूते ब्रह्मपुरशब्दिते शरीरे जरादिस्पृष्टे तदन्तर्वर्ति द्यावापृथिव्यादिकं नावशिष्येत इत्याक्षेपाभिप्रायः । शरीरे नष्टे दहराकाशान्तर्वर्तिद्यावापृथिव्यादिकं नश्येदित्यस्य को वाऽभिप्रायः, शरीरे नष्टे तदाधारकदहराकाशस्यापि नाशावश्यम्भावात्, तदाधारकद्यावापृथिव्यादिनाशः स्यादिति वा, आहोस्वित् विद्यमानस्यापि दहराकाशस्य कुसूलाकाशवत् भारधारणाप्रयोजकतया कुसूलस्थानीयस्य शरीरस्यैव धारकत्वेन तस्मिन्नष्टे द्यावापृथिव्यादिनाशस्स्यादिति वेति विकल्पं हृदि निधाय प्रथमं प्रत्याचष्टे, 'नास्य जरये' ति । द्वितीयं दूषयति 'एतत्सत्यं ब्रह्मपुरमस्मिन् कामास्समाहिता' इति । ततश्च कुसूलाकाशविलक्षणस्य ब्रह्मरूपस्य दहराकाशस्यैव सर्वकामसमाधानाधारत्वात् शरीरस्याप्रयोजकत्वेन तन्नाशेऽपि

न द्यावापृथिव्यादिनाशप्रसङ्ग इति हि तस्याभिप्रायः । 'सत्यकामस्सत्यसङ्कल्पः' अवितथकामः अवितथसङ्कल्प इत्यर्थः । कामसङ्कल्पयोश्च हेतुहेतुमद्भावान्न पौनरुक्त्यम् । 'यथा ह्येवेह प्रजा अन्वाविशन्ती' त्यादेरयमर्थः, यथा इह लोके प्रजा अन्यं स्वामिनं मन्यमानास्तस्य स्वामिनो यथायथाऽनुशासनम्, तथातथान्वाविशन्ति — अनुवर्तन्ते ; स्वाभिमतार्थांश्च लभन्ते — एवं पुण्यकृतोऽपि परशासनानुवर्तनेन तत्फल-भाजो भवन्तीत्यभिप्रेतार्थः, राजसेवार्जितफलस्येव पुण्यार्जितफलस्यापि क्षयित्वमाह — तद्यथेहेत्यादिना । शिष्टं स्पष्टम् ।

**पुरिशयस्येति** । यद्यपि छान्दोग्ये, 'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म' इति ब्रह्मपुरे विद्यमानत्वमात्रं श्रूयते ; न शयनम् — तथापि समानप्रकरणे वाजसनेयके 'य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते'इति शयनश्रवणा-दत्रापि पुरिशयत्वं फलितमिति द्रष्टव्यम् । **आकाशशब्दवाच्यस्यापरमात्मत्वं निरस्यत** इति । पुरिशयस्याकाशशब्दवाच्यत्वप्रयुक्तमपरमात्मत्वं निरस्यत इत्यर्थः । **ब्रह्मलोकशब्दब्रह्मपुरशब्दयोरिति** । 'एतं ब्रह्मलोकं न विन्दन्ति,' 'एतत्सत्यं ब्रह्मपुरम्' इति शब्दयोरित्यर्थः । **प्रसिद्धान्तरिक्षेति** । परमात्मस्थानाधस्तन-लोकपरत्वसमर्थनादिति भावः । **तर्ह्यक्षरमिति** । अप्रसिद्धार्थकल्पकत्वरूपप्रत्यासत्ते-स्त्रयाणां तुल्यत्वेऽपि अन्तरिक्षशब्दाप्रसिद्धार्थकल्पकेक्षतिकर्माधिकरणापेक्षया आका-शशब्दाप्रसिद्धार्थप्रकल्पकत्वेनाक्षरदहराधिकरणयोः प्रत्यासत्त्यतिशयादित्यर्थः । **सङ्गत्यतिशयादिति** । ननु आकाशवाचिशब्दस्य प्रसिद्धार्थातिरिक्तार्थकत्वसमर्थन-परत्वं त्रयाणां साधारणधर्मः । अक्षरदहराधिकरणयोराकाशशब्दस्य प्रसिद्धार्थ-समर्थनपरत्वं साधारणो धर्मः । अक्षरेक्षतिकर्माधिकरणयोः आकाशवाचिशब्दस्य प्रसिद्धार्थातिरिक्तार्थकत्वसमर्थनमुखेन विप्रतिपन्नस्य [ उपरितन वाक्यस्थपदार्थस्य ? ] परमात्मत्वसमर्थकत्वं साधारणो धर्मः ; अन्तरिक्षशब्दस्यापि आकाशवाचि-शब्दत्वात् । तथा च किमत्र विनिगमकमिति चेत् — यदि न वैषम्यमित्यभि-मानः, तदाऽक्षराधिकरणे अदृष्टं द्रष्टृत्यदृष्टत्वश्रवणात् ईक्षतिकर्मत्वं न संभवती-त्याक्षेपसङ्गतेरप्यधिकायास्सत्वात् ईक्षतिकर्माधिकरणस्याक्षराधिकरणानन्तर्यं युज्यत इति सन्तोष्टव्यमायुष्मता । **क्वचित्परमात्मपरत्वमिति** । 'आकाशादेव समुत्पद्यन्त'

इत्यादावित्यर्थः । **वाक्यद्वारक**मिति । **उत्तरेभ्य** इत्यस्य उत्तरवाक्यगतेभ्य इत्यर्थ इति भावः । **पञ्चमीस्फुटीकरणा**येति । ततश्च 'हेतुभ्य' इत्येतत्पदम्, 'उत्तरेभ्य' इत्यत्रत्यविभक्त्यर्थस्फोरकमिति भावः । **षष्ठीनियम** इति । 'षष्ठी हेतुप्रयोगे,' 'सर्वनाम्नस्तृतीया चे' ति उत्तरशब्दस्य सर्वनामत्वात् षष्ठी वा तृतीया वा स्यात्, न तु पञ्चमीत्याक्षेपाभिप्रायः, इदं च 'निमित्तकारणहेत्वर्थेषु सर्वासां प्रायदर्शनम्' इति वार्तिकानादरेणोक्तमिति द्रष्टव्यम् । **प्रयोजनतये**ति । ननु वृत्त्यादिग्रन्थेष्वेवमव्याख्यातत्वात्, विद्याया हेतोर्यश इत्यादौ विद्याया यशःप्रयोजकत्वाभावेन षष्ठ्यनुपपत्तिप्रसङ्गाच्च नेदं समञ्जसमिति चेन्न—शाब्दिकग्रन्थेषु अन्नस्य हेतोर्वसतीत्यादेरेवोदाहृतत्वात् विद्याया हेतोर्यश इत्यादिप्रयोगस्यासंप्रतिपन्नत्वात्, 'षष्ठी हेतुप्रयोग' इत्यस्य प्रयोजनतया हेतुत्वविषयत्वाभावे हेताविति सूत्रस्य निर्विषयत्वप्रसङ्गाच्च । न च हेतुशब्दप्रयोगविषयं 'षष्ठी हेतुप्रयोग' इति सूत्रमिति वाच्यम् हेतुशब्दप्रयोगे, हेतौ द्योत्ये वा इति कौमुद्यामुक्तत्वात्, तस्याश्च संप्रतिपन्नत्वात् न काचिदनुपपत्तिरिति केचिद्वदन्ति । ननु जीवव्यावृत्तेः प्रस्तोष्यमाणत्वेन भूताकाशव्यावृत्तेरेव प्रस्तुतत्वात् आत्मत्वमात्रेण च भूताकाशव्यावृत्तिसिद्धेः निरुपाधिकत्वकीर्तनं मुधेत्यस्वरसादाह—**यद्वाकाशस्यापी**ति । **स्वतःशरीरप्रतिसम्बन्धी**ति । **स्वत** इत्यस्य **प्रयोग** इत्यनेनान्वयः, स्वतः प्रयोगो मुख्यप्रयोग इत्यर्थः । भाष्ये — **अथ य इहात्मान**मित्यादि । 'अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामांस्तेषां सर्वेषु लोकेषु कामचारो भवति, स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरस्समुत्तिष्ठन्ति तेन पितृलोकेन संपन्नो महीयते', एवमेव मातृलोकभ्रातृलोकस्वसृलोकसखिलोकगन्धमाल्यलोकान्नपानलोकगीतवादित्रलोकस्त्रीलोकपर्याया द्रष्टव्याः । अनन्तरम्, 'यं यमन्तमभिकामो भवति, य यं कामं कामयते सोऽस्य सङ्कल्पादेव समुत्तिष्ठति, तेन सम्पन्नो महीयते' इति श्रूयते । इत्येवं श्रुतिक्रमो द्रष्टव्यः । **एकस्यैवे**ति । अत एव श्येनेनाभिचरन् यजेतेत्यत्र गुणविधिपक्षे 'यथा वै श्येनो निपत्यादत्त' इति वाक्यशेषे निबध्यमानं श्येनस्य श्येनसादृश्यं नान्वेतीति नामत्वमाश्रितमिति भावः । **हृदयाद्यवच्छेदे**ति । उपमानोपमेययोरभेदेऽपि उपमानतावच्छेदकोपमेयतावच्छेदकभेदसत्त्वे उपमा संभवत्येव । अत एव,

'उपाददे तस्य सहस्ररश्मिस्त्वष्ट्रा नवं निर्मितमातपत्रम् ।

स तद्दुकूलादविदूरमौलिर्बभौ पतद्गङ्ग इवोत्तमाङ्गे ॥' इत्यत्र एकस्यैव हरस्य उत्तमाङ्गपतद्गङ्गाप्रवाहत्वच्छत्रदुकूलसन्निकृष्टमौलित्वरूपोपमानोपमेयतावच्छेदकभेदसत्त्वेन उपमाप्रभेदत्वमालङ्कारिकैः अङ्गीकृतमिति भावः । **उपमानशून्यते**ति । 'रामरावणयोर्युद्ध' मित्यादौ उपमानोपमेयभेदसापेक्षसादृश्यस्य वास्तवौपाधिकभेदद्वयाभाववत्यसंभवात् अनन्वयालङ्कारः । तत्र चानन्वितं स्वस्मिन्निबध्यमानं स्वसादृश्यमनुपमत्वद्योतनफलकमेव । यथा स्वमहिमप्रतिष्ठितत्वमनन्याधारत्वद्योतनफलकम्, तद्वदिति भावः । **यावच्छब्दे**ति । यत्रोपमानतावच्छेदकोपमेयतावच्छेदकयोः उपमानोपमेययोश्चैक्यम्, तत्रैवानन्वयः । प्रकृते च यावत्वान्तर्हृदयावस्थितत्वरूपावच्छेदकद्वयभेदसत्त्वात आन्तरबाह्याकाशांशानां परस्परभिन्नत्वेन उपमानोपमेयभेदसत्वाच्च नानन्वय इति भावः । **मध्यगतवाक्ये**ति । 'तस्मिन् यदन्तस्तदन्वेष्टव्यं एष आत्मे' ति वाक्यद्वयमध्यगतेत्यर्थः । ननु प्रथमानिर्दिष्टत्वेन एष आत्मेत्यनेन विभक्त्यैकरूप्यं तदन्वेष्टव्यमित्यत्रापि अस्तीत्यत्राह — **आसन्नत्वाच्चे**ति । यद्यपि ब्रह्मपुरमित्यत्र ब्रह्मशब्देन तदाधेयब्रह्मणोप्यासन्नत्वमस्तीति दहराकाशातिरिक्तब्रह्मवादिनोप्यासन्नत्वं सुवचम्— तथापि ब्रह्मशब्दस्य षष्ठ्यन्ततया विभक्त्यैकरूप्यस्याभावात्, ब्रह्मपुरशब्दनिर्दिष्टस्याकाशस्य ततोऽपि सन्निहितत्वाच्चाकाशस्यैव एष इति परामर्श उचित इति यद्यपीत्याक्षेपाभिप्रायः । **अन्वेष्टव्यस्यात्मनः परामर्श** इति । ततश्च 'एष आत्मापहतपाप्मे' ति वाक्ये एष आत्मेत्येनावानंशो अनुवाद इति भावः । **अत आत्माधिकरणतये**ति । अपहतपाप्मत्वादिलिङ्गानां तदन्तर्वर्तिगतत्वेनोपक्रमावगतस्य दहराकाशब्रह्मत्वस्य बाधकाभावादिति भावः । ननु प्रक्रम एव दहराकाशान्तर्वर्तिनः आत्मत्वनिश्चये, किं तदत्र विद्यत इति प्रश्नस्य वा तदुत्तरसन्दर्भस्य वा कथमुपपत्तिरिति चेत्—उच्यते, दहराकाशान्तर्वर्तिब्रह्मवादिनो ह्ययमभिप्रायः, तस्मिन् यदन्तस्तदन्वेष्टव्यमित्यत्रैव, 'दहराकाशातिरिक्तं अन्वेष्टव्यम्; तच्च श्रुत्यन्तरपर्यालोचनया आत्मरूप'मित्यवगतम्—तथाऽपि किं तदत्र विद्यत इति तदात्मवस्तु किंप्रकारकमिति प्रश्नः । 'यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश' इत्यस्य चायमर्थः—यावानयमाकाशोऽतिविपुलो वर्तते, एष आकाशस्सर्वोऽप्यन्तर्हृदये । हृदयशब्दः परमात्मपरः;

'स वा एष आत्मा हृदि तस्यैतदेव निरुक्तं हृदयम्' इति तस्मात् हृदयमिति अत्रैव श्रवणात्। ततश्च हृदये ब्रह्मणि अन्तस्सर्वोऽप्याकाशो वर्तते, द्यावापृथिव्यादिकं चेत्यर्थः । एतत्सत्यं ब्रह्मपुरमित्यत्रापि अन्तर्वर्तिब्रह्मैव निषादस्थपतिन्यायेन निर्दिश्यताम् । अतश्च एतत्सत्यं ब्रह्मपुरमिति पूर्ववाक्ये प्राधान्येन प्रथमनिर्दिष्टत्वात् सन्निहितत्वाच्च, एष आत्मेत्यत्र एतच्छब्देन तस्यैव परामर्शसंभवात् यद्यपि **यावान् वा अयमाकाश इति वाक्ये**त्यादिचोद्यस्यापि नावकाश इति द्रष्टव्यम् । भाष्ये **स्या-देतदेवं यदि श्रुतिरेव दहराकाशं तदन्तर्वर्तिनं च न व्यभक्ष्यत्** । **व्यभा-क्षीत् सा** इति पाठः; विभजनस्यैव प्रकृते विवक्षितत्वात् । ननु 'स्यादेतदेव' मित्यत्रापि, 'लिङ्निमित्ते लृङ् क्रियातिपत्तौ' इति, 'अभविष्यदेतदेवम्, यदि श्रुतिरेव दहराकाशं तदन्तर्वर्तिनं च न व्यभक्ष्यत्' इत्येव स्यादिति चेन्न — 'विभा-षायातौ सम्भावनवचने ऽदी' त्यादिलिङ्निमित्तान्तरस्य सम्भवात् नोभयत्रापि लृङ्प्रसङ्ग इति द्रष्टव्यम् । **असाधारणेन व्यपदेशस्ये**ति । क्षितिसलिल-पवनादिसमवधानजन्मनोऽप्यङ्कुरस्य शाल्यङ्कुर इति असाधारणशालिबीजेनैव व्यवहार-दर्शनादित्यर्थः । **तद्विधेयपुराधिपति**रिति । तत्स्वामिकपुरवासी जीव इत्यर्थः । उपक्रम एव, 'अथ यदिदमस्मिन्ब्रह्मपुरे' इति जीवस्वामिकपुरप्रतीतेः, तत्स्वामिके पुरे तदवस्थानस्यैवोचितत्वादिति भावः । **तद्विधेयपुरवासी जीव** इति पाठस्तु सुगम एव । उक्तं च **शाङ्करभाष्ये** 'तत्र पुरस्वामिनः पुरैकदेशे अवस्थानं दृष्टं यथा राज्ञ' इति । **भामत्यां** च 'स्यादेतत् जीवस्य पुरं भवतु शरीरम्; पुण्डरीक-दहरगोचरता तु अन्यस्य भविष्यति, वत्सराजस्य पुर इव उज्जयिन्यां मैत्रेयस्य सद्मेति — मैवं, वेश्म खल्वधिकरणमनिर्दिष्टाधेयमाधेयविशेषापेक्षायां पुरस्वामिनः प्रकृतत्वात्, तेनैवाधेयेन संबद्धं सत् नाधेयान्तरसंबन्धं कल्पयती' त्युक्तम् । **मुख्यार्थ-स्ये**ति । ब्रह्मपुर इत्यत्र षष्ठ्यपेक्षया प्रातिपदिकस्य मुख्यतया षष्ठ्यर्थीभूतस्वस्वामि-भावलक्षणसंबन्धस्वारस्यापेक्षया ब्रह्मशब्दप्रातिपदिकार्थस्वारस्यमेवादर्तव्यम् । ततश्च ब्रह्मशब्देन परमात्मन एव ग्रहणमुचितम् । षष्ठ्यर्थसम्बन्धस्तु साधारणोऽसाधारणो वा यः कश्चित् भविष्यतीति भावः । ननु 'सत्यकामस्सत्यसङ्कल्प' इति गुणद्वय-स्यैवाभिधानात् गुणजातमिति गुणबहुत्वाभिधानमसङ्गतमित्यत आह — **सत्यकामत्व-सत्यसङ्कल्पत्वे**ति । **तेन विना गुणध्यानायोगा**दिति । ननु यदि गुणिध्यान-

मन्तरेण गुणध्यानासम्भवात् गुणिध्यानस्यावश्यकत्वम्, तदाक्षेपादेव तदुपासनस्यापि सिद्धतया नात्रानुपपत्तिरिति चेन्न—"आक्षेपतः प्राप्तादाभिधानिकस्य ग्राह्यत्वम्" इति न्यायेन गुणिनोऽपि ध्येयत्वस्याभिधानिकत्वसंभवे तत्परित्यागायोगात्। 'य इहात्मान-मनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्' इति फलनिर्देशवाक्ये गुणांशे अभिधानतः प्राप्तानुवादः, गुण्यंशे आक्षेपतः प्राप्तानुवाद इति वैरूप्याश्रयणस्याप (प्य) न्याय्यत्वाच्च। **अर्थसिद्धं स्या**दिति। गुणानां गुण्यन्तर्भूतत्वेन गुणिध्याने विहिते गुणध्यानं विहितं स्यादित्यर्थः। नत्वाक्षेपलभ्यं स्यादित्यर्थ इति भ्रमितव्यम्; तथात्वे गुणानां ध्येयत्वे कथितेऽपि गुणिध्यानस्याक्षेपलभ्यत्वसंभवेन 'न तु गुणानां ध्येयत्वे कथित' इत्युत्तर-वाक्यासामञ्जस्यप्रसङ्गात्, गुणध्याने विहिते गुणिध्यानाक्षेपस्य, 'तेन विना गुण-ध्यानायोगा' दिति पूर्वग्रन्थे अङ्गीकृतत्वाच्चेति द्रष्टव्यम्। **अन्वेष्टव्यमिति पदं गुणिपर**मिति। दहराकाशान्तवर्तिगुणिपरमित्यर्थः। ततश्च दहराकाशो भूताकाश एव, न तु परमात्मेति भावः। **अनूद्येत्यन्तेने**ति। ननु दहरं पुण्डरीकं वेश्मेति एतावता पुण्डरीकवेश्मनो ब्रह्मपुराख्यशरीराधारकत्वे प्रतिपादितेऽपि आकाशस्य हृदयपुण्डरीकाधारकत्वस्याप्रतिपादनात् कथं **वेश्मेत्यनूद्येत्यन्तेन** परमतनिरासः, न च — 'दहरोऽस्मिन्नन्तर आकाश' इत्येतावत्पर्यन्तो ग्रन्थसन्दर्भोऽपि तत्र विवक्षितः, ततश्चाकाशे पुण्डरीकाधारकत्वस्यापि प्रतिपादितत्वादनूदितस्य तस्मिन्य-दन्तरित्यनुवादो व्यर्थ इति परमतदूषणसूचकत्वमुपपद्यत इति वाच्यम्—तथा सति 'यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्मेत्यनूद्ये' ति भाष्यस्य दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाश इत्येतावत्पर्यन्तग्रन्थसन्दर्भार्थकथनपरत्वाश्रयणे, 'तस्मिन् दहरपुण्डरीकवेश्मनी' त्युत्तरभाष्यस्य दहरोऽस्मिन्नन्तर आकाश इति वाक्यार्थकथनपरत्वं न स्यात्, पूर्वमेतद्वाक्यार्थस्यापि उपन्यस्तत्वात्। ततश्च तस्मिन्यदन्तरिति वाक्यार्थकथनपरत्वमेव स्यात्। न चेष्टापत्तिः, तस्मिन्यदन्तरिति तच्छब्दस्य परमतवद्व्यवहितपुण्डरीकपरत्वाभावात्, 'दहरोऽस्मिन्निति वाक्यं व्याचष्ट' इति उत्तरत्र ग्रन्थकृतैव वक्ष्यमाणत्वाच्चेति चेत्—सत्यम्; अथापि **अनूद्येत्ये**तदनूदि-तस्यार्थस्य 'पुनरनुवादे प्रयोजनं नास्तीत्यर्थसूचकमित्यत्र तात्पर्यम्। **अनूद्येत्यादि-ने**ति पाठस्तु सुगम एव। **वैयर्थ्यं स्या**दिति। न च तस्मिन्यदन्तरित्यनुवादस्य तदन्तर्वर्तिकामविशिष्टतया अन्वेष्टव्यत्वसिद्धिः प्रयोजनमिति वाच्यम्- पुनरनुवादेन

तादृशप्रयोजनसिद्धौ प्रमाणाभावात्। व्यवहितेति। सर्वनाम्नामव्यवहितपरत्वसंभवे व्यवहितपरत्वकल्पनाया अन्याय्यत्वात। अत एव साकमेधे, 'एतद्ब्राह्मण एककपालः' इत्यत्र एतत्पदमव्यवहितवारुणप्रघासिकैककपालपरामर्शि, न तु व्यवहितवैश्वदेविकैककपालपरामर्शीति सप्तमे (७-१-५.) स्थितम्। "गौश्चाश्वश्चाश्वतरश्च गर्दभश्चाजाश्चावयश्च तिलाश्च माषाश्च तस्य द्वादशशतं दक्षिणा" इत्यत्र (१० ३-११.) तु माषद्वादशशतमात्रस्याऽऽनतिकरत्वासंभवात् बहुवचनान्तानां माषाणां तस्येत्येकवचनेन परामर्शस्यायुक्तत्वाच्चाव्यवहितमाषाणां परामर्शे अनुपपत्तिसत्त्वात् व्यवहितगवपरामर्शित्वम्। न चेह तथा बाधकमस्तीति भावः। **परमात्मन** इति। "परमात्मनोऽन्तर्वर्ति तत्कारणं सूक्ष्मं किमपि न संभवतीति, 'किं तदत्र विद्यते' इति वाक्येनाक्षिप्य द्यावापृथिव्यादिकार्यस्य तदन्तर्वर्तितया समाधानमिति हि परैर्वर्ण्यते" इति पाठो बहुषु कोशेषूपलभ्यते। अस्य ग्रन्थस्य च — सर्वकारणान्तर्वर्ति कारणं न संभवतीत्याक्षेपाभिप्रायः। सकलकारणभूते परमात्मनि कारणान्तरस्यासंभवेऽपि द्यावापृथिव्यादिकार्यसंभवात् न दोष इति समाधानाभिप्राय इति परैर्वर्ण्यत इत्यर्थो झटिति प्रतीयते। परैश्च नैवमाक्षेपसमाधानप्रकारौ वर्णितौ। अपि तु दहरपुण्डरीकमेव तावत् सूक्ष्मतरम्; तदवरुद्धमाकाशं ततोऽपि सूक्ष्मतमम्; तस्मिंश्च सूक्ष्मतमे आकाशे किमपि मातुं न शक्नोतीति किमन्वेष्टव्यं स्यादित्याक्षेपाभिप्रायः। दहराकाशस्य बाह्याकाशवत् विपुलत्वेन सूक्ष्मतमत्वनिबन्धनानुपपत्त्यभावात् तत्र द्यावापृथिव्यादिसर्वविधभोग्यजातसमवधानं तदन्वेष्टव्यत्वं च सम्भवतीति समाधानाभिप्राय इत्येवोक्तम्। न तूक्तप्रकारेण। तस्मात् पुरोवादिवाक्यानुसारेणानुवादिवाक्यार्थस्य वर्णनीयत्वात्, अस्यापि ग्रन्थस्य स एवार्थः। 'परमात्मनोऽन्तर्वर्तिनः कस्याप्यभावा' दित्युपरितनानुवादस्याप्ययमेवार्थः। **पुल्लिङ्गयच्छब्दाध्याहारेणे**ति। तस्मिन् यदन्तरिति वाक्य इति शेषः; न तु दहरोऽस्मिन्निति वाक्ये। तस्मिन्वाक्ये यच्छब्दाध्याहारे दहरोऽस्मिन्नित्यादेरेकवाक्यत्वप्रसङ्गात्। यत्पदघटितवाक्यस्य तत्पदघटितवाक्येनैकवाक्यतावश्यंभावात्। न चेष्टापत्तिः, उत्तरपक्ष एव एकवाक्यत्वाश्रयणस्य वक्ष्यमाणत्वादिति द्रष्टव्यम्। केचित्तु — 'दहरोऽस्मिन्नन्तर आकाश' इत्यत्रैव यच्छब्दाध्याहारः, दहरोऽस्मिन्नित्यादेरेकवाक्यता च पक्षद्वयेप्यविशिष्टैव। पुल्लिङ्गयच्छब्दाध्याहारानध्याहाराभ्यामेव वैषम्यमित्यप्याहुः। अत्र पक्षद्वयेऽपि चशब्दा-

ध्याहारस्समानो द्रष्टव्यः । भाष्ये — **यच्च तदन्तर्वर्तिगुणजात**मित्यत्रान्त-वर्तीत्येतच्छ्रुतिगतान्तश्शब्दव्याख्यानमिति दर्शयति — **श्रुतिवाक्य** इति । नन्वा-काशतदन्तर्वर्तिनोर्द्वयोः कथमेकेन यच्छब्देन परामर्शसंभव इत्यत आह, — **त्यदा-दीनि सर्वैरि**ति । ननु त्यदादीनीत्येकशेषे सति कथमेकवचनम्? न च 'एकवच्चा-स्यान्यतरस्यामि' त्येकवचनमिति वाच्यम् — 'नपुंसकमनपुंसकेने' ति सूत्रखण्ड-कृतैकशेषस्यैवास्येति सौत्रपदेन परामृष्टतया सूत्रान्तरकृतैकशेषस्यातथात्वादिति चेत्, 'व्यत्ययो बहुल' मिति वा, 'सुपां सुलुक्' इति वा यदिति रूपसंभवात् । यद्वा 'कर्मणो रोमन्थतपोभ्याम्' इतिवत्प्रत्येकमेकत्वाभिप्रायेण एकवद्भावस्य, 'द्विगुरेकवचनम्' इतिवत् लिङ्गसामान्यविवक्षया नपुंसकत्वस्याप्युपपत्तेः । अत्रैव "गतिशब्दाभ्यां तथा हि दृष्ट" मिति सूत्रे पुल्लिङ्गद्विवचनान्तगतिशब्दविशेषणस्य नपुंसकलिङ्गैक-वचनान्तस्य दृष्टमित्यस्य उक्तेनैव प्रकारेण निर्वाह्यत्वाच्च । एवमाद्यनेकास्वारस्यं यच्छब्दद्वयविषये त्यदादिनिवर्तकसूत्रस्याप्रवृत्तिं च हृदि निधाय पक्षान्तरमाह, **नपुंसकमनपुंसकेने**ति । अत्र च वाशब्दो अपेक्षितोऽध्याहर्तव्यः । **सर्वान्तरस्य परमात्मन** इति । सूक्ष्मपुण्डरीकवर्तिनि सूक्ष्मे आकाशे किं विद्येतेत्यनुपपत्ति-रित्यर्थः । अत्र **परमात्मन** इत्येतत् वस्तुतस्सिद्धान्तन्यायेन तस्य परमात्मत्व-मस्तीत्यभिप्रायेण उक्तम्; न तु परमात्मत्वमाक्षेपबीजम्, यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाश' इत्येतावन्मात्रं श्रुतवतां शिष्याणां परमात्मत्वविरोधिन्याकाशशब्दे जागरूके दहरत्वान्वेष्टव्यान्तराधारत्वादिविरोधिलिङ्गे च जाग्रति ब्रह्मलिङ्गेषु चानुपन्यस्तेषु परमात्मत्वनिश्चयस्य वा, तदुपजीव्याक्षेपप्रवृत्तेर्वा असंभवादिति द्रष्टव्यम् । **आकाशतदन्तर्वर्तिनो**रिति निर्धारणे षष्ठी; आकाशांशस्य ज्ञातत्वादिति भावः । **प्राधान्यज्ञापनार्थञ्चे**ति । भाष्यकृतेति शेषः । **न तु श्रुत्ये**ति । ततश्च प्राकरणिकानामिदमेतच्छब्दानामाकाशपरामर्शित्वप्रभृतेस्सर्वस्यापि, 'उभे अस्मिन्नाकाशे द्यावापृथिवी अन्तरेव समाहिते' इत्येकाकाशपदप्रक्षेपेणैव सिद्धिसंभवात् 'यावान्वा अयमाकाशस्तावानेषोन्तर्हृदय आकाश' इत्येतावतस्सन्दर्भस्य वैयर्थ्यमिति दूषणं नावकाशं लभत इति द्रष्टव्यम् । **आकाशशब्दव्यवहितत्वा-दि**ति । 'यावान्वा अयमाकाश' इत्याकाशशब्दस्य व्यवहितत्वादित्यर्थः । **अस्तित्व-नास्तित्वयोस्समप्रतियोगिकत्वावगमादि**ति । कस्यास्तित्वं कस्य नास्तित्वमित्य-

पेक्षायामित्यर्थः । किमस्ति किं नास्तीत्यपेक्षायां चोदयितुरनुभाषणवाक्ये **सर्वे च कामा** इत्यनुभाषणात् यच्छब्दो भोग्यजातपर इति निर्णीयत इति भावः । **चोदयितुरि**ति । यद्यपि, तं चेद्ब्रूयुरिति चोदयितॄणां बहुत्वमवगम्यते, तथाऽपि तदविवक्षयैव एकवचनं प्रयुक्तमिति द्रष्टव्यम् । **अनुभाषणवाक्य** इति । 'अस्मिंश्चेदिदं ब्रह्मपुरे सर्वं समाहितं सर्वाणि च भूतानि सर्वे च कामा' इत्यनुभाषणवाक्य इत्यर्थः । **निरतिशयभोग्यतापरत्वं युक्त**मिति । ननु 'ये चास्येह जीवा ये च प्रेताः यच्चान्यदिच्छन् न लभते सर्वं तदत्र गत्वा विन्दते, अत्र ह्यस्यैते सत्याः कामाः स यदि पितृलोककामो भवती' त्याद्युत्तरसन्दर्भप्रतिपाद्यस्वसङ्कल्पमात्रसमुत्थितप्राचीनानन्तजन्मसम्बन्धिदिदृक्षितपितृमातृभ्रातृस्वसृसखिगन्धमाल्यान्नपाननृत्तगीतादिसंपत्तेस्तात्त्विकत्वाभ्युपगमात्, "सङ्कल्पादेव तच्छ्रुतेरि" त्यत्र तस्य तात्त्विकत्वमभ्युपगम्य सङ्कल्पमात्रसमुत्थितत्वप्रतिपादनाच्च यथाश्रुतार्थं विहाय निरतिशयभोग्यतामात्रे तात्पर्यमिति कुतोऽङ्गीकार्यमिति चेत्—सत्यं, भोग्याधारत्वमेव प्रतिपाद्यते, अथापि उपपिपादयिषिते ब्रह्मणोन्वेष्टव्यत्वे तदाश्रितपित्रादीनां भोग्यत्वप्रतिपादनस्यात्यन्तानुपयुक्तत्वात्, यच्चास्येहास्तीत्यादिवाक्यमपि पित्रादिसर्वभोग्याधारत्वप्रतिपादनमुखेन ब्रह्मणो निरतिशयभोग्यत्वप्रतिपादनपरमिति पित्रादिभोग्याधारत्वे तात्पर्यसत्त्वेऽपि ब्रह्मणो निरतिशयभोग्यत्वे परमतात्पर्यमिति भाष्याभिप्राय इत्यत्रैवाचार्याणां संरम्भ इति न काचिदनुपपत्तिः । **निरतिशयभोग्यत्वं न पृथग्वाच्य**मिति । न चानन्दत्वमात्रस्य स्वरूपनिरूपकत्वेऽपि निरतिशयानन्दत्वं न स्वरूपनिरूपकमिति वाच्यम्; निरुपाधिकत्वादेव निरतिशयभोग्यत्वस्यापि सिद्धेरित्यत्र तात्पर्यात् । **अथ तं चेद्ब्रूयुरित्यादी**ति । अत्र, अथेत्येतत् न श्रुतिवाक्यम्; अपि तु ग्रन्थकारवाक्यमिति द्रष्टव्यम् । ननु, किं तदत्र विद्यत इति प्रश्नप्रतिवचनसमाप्तेः प्रागेव कथमस्य चोद्यस्यावकाश इत्यत आह **किं तदत्र विद्यत इति प्रश्नस्य प्रतिवचन**मित्यादिना । **द्यावापृथिव्याद्यवस्थाना**दिति । पूर्वेणान्वयः । ततश्च दहराकाशनाशेऽपि अवतिष्ठमानानां द्यावापृथिव्यादीनां दहराकाशाश्रयत्वं न संभवतीति भावः । **व्यवहितमपि ब्रह्मपुराख्य**मिति । ननु 'अस्मिंश्चेदिदं ब्रह्मपुरे सर्वं समाहितं सर्वाणि च भूतानि सर्वे च कामाः यदेनज्जरामाप्नोति प्रध्वंसते वा किं ततोऽतिशिष्यत' इति हि श्रुतिवाक्यम्, नात्र वाक्ये दहराकाशनिर्देशोऽस्ति, अतः

कथं दहराकाशापेक्षया ब्रह्मपुरशब्दितशरीरस्य व्यवहितत्वमभ्युपगम्याक्षेपसमाधानयोः प्रवृत्तिरिति चेत् – 'अस्मिंश्चेदिदं समाहित' मिति सर्वशब्देन दहराकाशस्यापि क्रोडीकारसंभवात् । न च दहराकाशस्यापि सर्वशब्देन परामर्शे 'सर्वशब्देन भोग्यभोगोपकरणादि प्रतिपाद्यत' इति उत्तरग्रन्थविरोधः, तस्य दहराकाशोपलक्षणत्वेनादोषात् । अत आकाशशब्दस्य ब्रह्मपुरापेक्षया अव्यवहितत्वमस्तीति ग्रन्थकृदाशयः । यद्वा 'अस्मिंश्चेदिदं ब्रह्मपुर' इति सन्निहितब्रह्मपुरशब्दस्य तत्स्थदहराकाशलक्षकत्वमभिप्रेत्य एतदुक्तमिति द्रष्टव्यम् । न चास्मिन् पक्षे अव्यवहितब्रह्मपुरशब्देन शरीरस्याप्रकृततया न प्रकृतं शरीरमित्यभिप्राय इति उत्तरग्रन्थविरोध इति वाच्यम्, लक्ष्योपस्थितिद्वारतया मुख्यार्थस्यापि प्रकृतत्वादिति भावः । **सत्यत्वस्य वक्ष्यमाणत्वादिति** । यद्यपि सत्यत्वस्य वक्ष्यमाणत्वं न प्राक्तनमाक्षेपं प्रतिबध्नाति, तथाऽप्यभ्युच्चयोक्तितयोपन्यस्तमिति द्रष्टव्यम् ।

**ननु सर्वशब्दसङ्कोचेनेति** । 'यथा सर्वेभ्यः कामेभ्यो ज्योतिष्टोमः" "सर्वेभ्यः कामेभ्यो दर्शपूर्णमासौ" इत्यत्र "सर्वत्वमाधिकारिकम्" (१-२-१६) इति अर्थवादाधिकरणसूत्रोक्तन्यायेन 'सर्वेभ्यःकामेभ्य' इत्यस्य वेदप्रतिपाद्यप्रकृतपशुपुत्रवृष्ट्यन्नपानादिपरत्वमेव, न त्वप्रकृताकाशगाम्यमरकन्यालाभादिपरत्वमपि । सर्वनाम्नां प्रकृतपरामर्शित्वस्वारस्यात् । तथात्रापि सर्वकामशब्दस्य, 'स यदि पितृलोककामो भवती' त्यादिना वर्णयिष्यमाणपितृमातृगन्धमाल्यनृत्तगीतवनितादिपरामर्शित्वमेवोचितम्, न तु सर्वविधभोग्यतापरत्वम्, कामशब्दस्य भोग्यतापरत्वे अस्वारस्यादिति शङ्काभिप्रायः । **प्रथमश्रुतेति** । न च प्रथमश्रुतस्य सङ्कोचप्रसङ्गेन चरमश्रुतकामशब्दस्य मुख्यार्थपरिग्रहे 'सर्वे ब्राह्मणास्समागता' इत्यत्र प्रथमश्रुतसर्वशब्दासंङ्कोचाय ब्राह्मणशब्दस्य शूद्रपरत्वमपि स्यादिति वाच्यम् – ब्राह्मणशब्दवत् कामशब्दस्य जीवभोग्यगन्धमाल्यादिमात्रे रूढत्वाभावात् । इयांस्तु विशेषः । यज्जीवभोग्यगन्धमाल्यादिषु कामशब्दस्यात्यन्तप्रसिद्धिः ; भोग्यतायां तु प्रसिद्धिमात्रम् नात्यन्तप्रसिद्धिरिति । अतो न कश्चिद्दोषः । **वक्ष्यमाणत्वा [स्या ?] नुगुणत्वाच्चेति** । 'सर्वेषु लोकेषु कामचारो भवती'ति उपासनफलस्य यन्निरतिशयत्वं वक्ष्यति, तस्यानुगुणत्वाच्चेत्यर्थः । **अर्थसिद्धमाकारमाहेति** । ननु 'एतत्सत्यं ब्रह्मपुरमि' ति वाक्यश्रवणात् प्रागेव,

'नास्य जरयैतज्जीर्यति, न वधेनास्य हन्यत' इत्येतावन्मात्रश्रवणात् परमकारणतयाति-सूक्ष्मत्वं कथमर्थसिद्धं स्यादिति चेत् – अत्र केचित् – भाष्ये, एतत्सत्यं ब्रह्मेत्यन्तस्य श्रुतिवाक्यस्य **निर्विकारत्वमुक्तं** इत्यन्तेन भाष्येण व्याख्यानम्। **तत एवे**त्याद्युत्तर-सन्दर्भेण तु श्रुतिवाक्यस्थपुरशब्दस्यैव व्याख्यानम्। एवं च ब्रह्मशब्देन तल्लक्षणी-भूतजगज्जन्मादिहेतुत्वस्य सूचनसंभवात्, सत्यशब्देन निर्विकारत्वस्य कण्ठोक्तत्वाच्च नानुपपत्तिः। इतरथा 'नास्य जरयैतज्जीर्यति, न वधेनास्य हन्यते' इत्यनेनैव निर्विकारत्वसिद्धौ पुनरपि, एतत्सत्यमिति सत्यशब्देन निर्विकारत्वप्रतिपादनं विफलमेव स्यात्। किञ्च **तत एवे**ति भाष्ये निर्विकारत्वस्यैव सत्यशब्दार्थीभूतात् [ भूत ? ] निर्विकारत्वहेतुत्वेन परामर्शात् साध्याविशेषश्च दुर्वारः। न च सत्यशब्दस्य निर्वि-कारत्वबलप्राप्तसततैकरूपत्वमर्थः, अतो न सत्यशब्दवैफल्यम्, न वा साध्याविशेष इति शङ्क्यम् – "श्रुतिवाक्यस्थसत्यशब्दस्य निर्विकारत्वमर्थ इति भाव" इत्युत्तर-ग्रन्थविरोधात्। तस्मादुक्तैव सरणिरनुसरणीयेति वदन्ति। **सत्यशब्दसामानाधि-करण्यादि**ति। ततश्च अथ यदिदं ब्रह्मपुरमित्याद्यभ्यस्तब्रह्मपुरशब्दार्थवैरूप्यमपि सोढव्यमिति भावः। **अस्मिन्कामा इति तु प्रथमचोद्यप्रतिवचन**मिति। अत्र केचित्, 'यच्चास्येहास्ति यच्चनास्ती' त्यत्र 'किं तदत्र विद्यते' इति प्रश्नस्य प्रतिवचनम्। तदेव, 'अस्मिंश्चेदिदं ब्रह्मपुरे सर्वं समाहितं सर्वाणि च भूतानि सर्वे च कामाः' इत्यनुभाषणवाक्ये कामशब्देनानूद्यते। तदेव च, 'एतत्सत्यं ब्रह्मपुरं अस्मिन् कामाः समाहिताः य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्, त इमे सत्याः कामाः' इति कामशब्देनापि परामृश्यते। कामशब्दानां प्रत्यभि-ज्ञायमानत्वात्। अपहतपाप्मत्वादीनामन्यविशेषणतया प्रतीयमानानाम्, 'एतांश्च सत्यान् कामान्' इति एतच्छब्देन परामर्शस्य क्लिष्टत्वाच्चेति – तदयुक्तम्। कामशब्द-प्रत्यभिज्ञामात्रेण ऐक्याभ्युपगमे ब्रह्मपुरशब्दप्रत्यभिज्ञाबलेन, 'अथ यदिदमस्मिन् ब्रह्मपुरे', 'एतत्सत्यं ब्रह्मपुर' मित्यनयोरप्यैक्यापत्त्या सारूप्यमात्रस्याप्रयोजकत्वात्। अन्यविशेषणतया प्रतीतानामपहतपाप्मत्वादीनाम्, 'एतांश्च सत्यान् कामा' निति एतच्छब्देन परामर्शो न संभवतीत्यप्ययुक्तम्। 'अस्मिन् कामास्समाहिता' इति प्राधान्येन निर्दिष्टानामेव, 'एतांश्च सत्यान् कामा' निति परामर्शसंभवात्। न च, 'अस्मिन्कामास्समाहिता' इत्यत्रापि, 'सर्वे च कामा' इत्यनुभाषणवाक्यप्रत्यभि-

ज्ञानात् द्यावापृथिव्यादय एवोच्यन्ते, न त्वपहतपाप्मत्वादय इति शङ्क्यम्, तथात्वे, 'अपहतपाप्मे' त्यादिसन्दर्भस्य वैयर्थ्यप्रसङ्गात्। तत्र हि, अपहतपाप्मत्वादिमत्त्वात् कामसमाधानाधारत्वं संभवतीत्युक्तिभङ्ग्या अपहतपाप्मत्वादिषु कामशब्दार्थसमर्पणपरत्व एव सार्थक्यम्। इतरथा स्वरूपनिर्देशमात्रस्यानतिप्रयोजनत्वादिति न कश्चिद्दोषः। **अव्यवहितैतत्सत्यमिति**। अत्र, 'एतत्सत्यं ब्रह्मपुर' मित्येतावतोऽप्यनुकरणशब्दतया सुब्लोपाभावः। **अवयवशक्त्येत्यर्थ** इति भाष्ये – **अवयवशक्त्या निर्दिश्येत्येवं** शेषः पूरणीय इति भावः। **सत्यसङ्कल्पशब्देनापि सिद्धत्वादिति**। न च, 'कामस्सङ्कल्पो विचिकित्सा' इत्यादाविव कामसङ्कल्पयोर्भेदनिर्देशस्य सार्थक्यमिति वाच्यम्—तथाऽपि फलत एकत्वेनानतिप्रयोजनत्वात्। **कतिपयगुणान्तराणां पृथगुक्तत्वादिति**। यद्यपि पृथगुक्तेष्वेव गुणेषु निर्विशेषब्रह्मवादनिराकरणाय सत्यत्वं प्रतिपाद्यत इति न वैयर्थ्यम्। अथापि मार्गान्तरस्य मार्गान्तरादूषकत्वादित्यत्र तात्पर्यम्। **नित्यविभूतिविशिष्टत्वं सत्यकामशब्दार्थ** इति। सत्यशब्दस्य नित्यत्वमर्थः। कामशब्दस्य कामनाविषयीभूतभोग्यभोगोपकरणादिकमर्थ इति भावः। ननु प्रजापतिवाक्यगतसत्यकामशब्दस्यापि नित्यविभूतिमत्त्वमर्थः स्यादिति चेत्, इष्टापत्तेः। मुक्तस्याप्यप्राकृतविग्रहादिमत्त्वेन तत्स्वामित्वसंभवात्। **प्रथमस्य यथाशब्दस्येति**। अयमिहान्वयक्रमः—इह प्रजा यं यमन्तं जनपदं क्षेत्रभागमभिकामा भवन्ति तं तं यथाराजशासनं=राजशासनानुसारेण, यथान्वाविशन्ति=लभन्ते, तथा तं तमेवोपजीवन्ति=भुञ्जत इति। यथा राजसेवाफलस्य राजशासनानुवर्तित्वम्, एवं तत्फलभोगस्यापीत्युक्तं भवति। **राजशासनं यथेति**। यद्यपि यथानुशासनमित्यत्र यथाशब्दस्य पदार्थानतिवृत्त्यर्थकतया तस्य च नित्यसमासत्वेन स्वपदविग्रहो न भवति, तथाशब्दप्रतिनिर्देशापेक्षापि नास्ति, न हि यथाविधि करोतीत्यादौ तथाशब्दाकाङ्क्षाऽस्ति – अथापि सादृश्यार्थकयथाशब्दमादाय फलतस्समासार्थकथनम्; अत एव तथाशब्दप्रयोगोपपत्तिश्चेति द्रष्टव्यम्। श्रुतिगतत्वभ्रान्तिं व्युदस्यति – **भाष्य** इति। **न तु सत्यकामपदोक्तकामपर** इति। नित्यविभूतिपरो न भवतीत्यर्थः। **प्रकृतगुणविषयतयेति**। अस्मिन्कामास्समाहिता इति प्रकृतसर्वगुणविषयतयेत्यर्थः। शङ्कते – **सत्यशब्दविशेषितत्वमिति**। **ततः पूर्वमिति**। सत्यशब्दात्पूर्वमित्यर्थः। **सत्यशब्दविशेषितत्वाच्चेति**। न चैव-

माक्षिपतस्तदपि विप्रतिपन्नमिति वाच्यम् — अपहतपाप्मत्वादीनामपि अनृतापिधानत्व-प्रतिपादनस्यावश्यकतया तन्मात्रसङ्कोचे प्रमाणाभावादिति भावः । **एकरूपताया अवश्याभ्युपगन्तव्यत्वा**दिति । ततश्च क्लिष्टनिर्वाह आश्रयणीय इति भावः । 'तस्मिन्यदन्तः' इति वाक्ये क्लिष्टनिर्वाहमनभ्युपगच्छतः कोऽभिप्रायः, किं य इहात्मानमित्युपसंहारवाक्ये गुणगुण्युपासनयोर्द्वयोरप्यनुवादः, उत विशिष्टविधानमाश्रित्य द्वयोरपि विधानम्, उत गुण्यंशे फलसंबन्धविशिष्टोपासनविधिः गुणांशे तु फल-संबन्धमात्रविधिरिति त्रेधा विकल्पं हृदि निधाय क्रमेण दूषयति **न ह्यप्राप्तं गुण्युपासन**मित्यादिना ।

गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च १-३-१४.

भाष्ये — 'सत आगम्ये'ति श्रुत्युपन्यासात् सौत्रगतिशब्देन निर्गमनमपि विवक्षितमिति भाष्यकृतोऽभिसन्धिरिति मत्वा निर्गमनशब्दार्थमाह -- **निर्गमनं पृथक्स्थित्यर्हतापत्ति**रिति । **शब्दस्यान्यत्र प्रसिद्धि**मिति । **गतिशब्दाभ्या**मित्यत्र गतेरन्यत्र प्रसिद्धिमुपपाद्य शब्दस्य प्रसिद्धिमुपपादयतीत्यर्थः । **निधिदृष्टान्तसचिवमिति भाव** इति । ततश्च हृदयपुण्डरीकावच्छिन्नभूताकाशे सुषुप्तौ अहरहर्गमन-संभवात् नाहरहर्गमनं परमात्मत्वसाधकमिति न शङ्कयम्—निध्युपमालब्धपरमपुरुषार्थत्व-विशिष्टगन्तव्यत्वस्य हृदयपुण्डरीकावच्छिन्नभूताकाशे अभावादिति भावः । "स्थपति-र्निषादस्स्यात् शब्दसामर्थ्यात्"(६-१-५१) इति सूत्रपाठः । **संबन्धविशिष्टोऽभिधेय** इति । प्रतिपिपादयिषित इत्यर्थः । **तत्र षष्ठ्या अश्रवणा**दिति । तत्र षष्ठीसमासपक्ष इत्यर्थः । **तदनादृत्यैवं व्याख्यात**मिति । न च चतुर्मुखलोकपरतया प्रसिद्धे ब्रह्मलोकशब्दे नरपतिराजकुमारादिशब्देष्विव निषादस्थपतिन्यायानवतारात् तद्व्या-वृत्तिसिध्यर्थं परीतिरेवाश्रयणीयेति वाच्यम् —'एष ब्रह्मलोकस्सम्राट्' इति ब्रह्म-लोकशब्दस्य ब्रह्मण्यपि प्रसिद्धतया तन्न्यायानवतारशङ्कानुदयात् । **दृष्टान्त एवोपरि-शब्दान्वय** इति । सुषुप्तिविषयगमनं हि पृथक्प्रतिपत्तिव्यवहाराननुगुणतयावस्थितिर्भेद-प्रहाणरूपा, अतः तत्र दार्ष्टान्तिके 'अहरहरुपरि गच्छन्त्य' इति उपरिशब्दानन्वय इति भावः । नन्वन्तर्यामिरूपब्रह्मण्येवावस्थितिः; न दहराकाशरूपब्रह्मणि । ततश्च कथं **दहराकाशस्योपरी**ति भाष्यमित्यत आह — **धर्म्यैक्याभिप्रायेणैवमुक्त**मिति ।

सत्यशब्दनिर्वचनागमिति । 'तस्य ह वा एतस्य ब्रह्मणो नाम सत्यमिति; तानि ह वा एतानि त्रीण्यक्षराणि सत्, ति, यमिति; अथ यत् सत्, तदमृतम्; अथ यत् ति, तन्मर्त्यम्; अथ यत् यम्, तेनोभे यच्छती' ति निर्वचनावगतमित्यर्थः ।

धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः १-३-१५.

भूताकाशान्यत्वे तात्पर्यमिति । जीवपूर्वपक्षस्याद्याप्यनिरस्तत्वादिति भावः ॥

प्रसिद्धेश्च १-३-१६.

पूर्वोक्तहेतूनामिति । बाह्याकाशोपमानोपमेयभावादीनां चतुस्सूत्रीप्रतिपादितानामित्यर्थः । उपक्रमत इत्यनेनेति । दहराकाशस्य प्रत्यगात्मत्वमाशङ्क्य निराकर्तुमुपक्रमत इति दहरविच्छेदप्रतीतेः नाधिकरणान्तरमिति सूचितमिति भावः । न तूपक्रमत इत्येतावतैव तत्सूचनम्; तावन्मात्रेण तथाऽप्रतीतेरिति द्रष्टव्यम् ।

उत्तराच्चेदाविर्भूतस्वरूपस्तु १-३-१७.

यद्यपि विरोचनोऽपीति । इत्थं हि समाम्नायते — "य आत्मा अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासस्सत्यकामस्सत्यसङ्कल्पः, सोऽन्वेष्टव्यस्स विजिज्ञासितव्यः । स सर्वांश्च लोकानाप्नोति, सर्वांश्च कामान्, यस्तमात्मानमनुविद्य विजानातीति ह प्रजापतिरुवाच । तद्धोभये देवासुरा अनुबुबुधिरे, (कर्णाकर्णिकया श्रुतवन्त इत्यर्थः) । ते होचुः हन्त तमात्मानमन्विच्छामो यमात्मानमन्विष्य सर्वांश्च लोकानाप्नोति, सर्वांश्च कामानिति । इन्द्रो ह वै देवानामभिप्रवव्राज, विरोचनोऽसुराणाम् । तौ हासंविदानावेव, (असंविदानौ = परस्परेर्ष्यया स्वाभिप्रायमप्रकाशयन्तावित्यर्थः ।) समित्पाणी प्रजापतिसकाशमाजग्मतुः । तौ ह द्वात्रिंशतं वर्षाणि ब्रह्मचर्यमूषतुः । तौ ह प्रजापतिरुवाच, किमिच्छन्ताववास्तमिति । (अवास्तमुषितवन्तावित्यर्थः ।) तौ होचतुः, य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासस्सत्यकामस्सत्यसङ्कल्पः सोऽन्वेष्टव्यस्स विजिज्ञासितव्यः, स सर्वांश्च

लोकानाप्नोति, सर्वांश्च कामान् यस्तमात्मानमनुविद्य विजानातीति भगवतो वाचो वेदयन्ते; तमिच्छन्ताववास्तमिति । तौ ह प्रजापतिरुवाच, य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मेति होवाच, एतदमृतमभयमेतद् ब्रह्मेति । (एवं प्रत्यगात्मनि प्रजापतिना उपदिष्टे छायापुरुष आत्मेत्युपदिष्ट इति भ्रान्त्या स्वगृहीतच्छायापुरुषात्मत्वदृढी-करणाय जलादर्शादिप्रतिबिम्बोऽपि अक्षिप्रतिबिम्बाभिन्न आत्मैव, उत तद्भिन्नः अनात्मेत्यभिप्रायेण) अथ यो यं भगवोऽप्सु परिख्यायते यश्चायमादर्शे कतम एष इति (पप्रच्छतुः । एवं ताभ्यां पृष्टः तयोर्भ्रान्तिमनिराकुर्वन्नेव) एष उ एव सर्वेष्वन्तेषु परिख्यायत इति होवाच । (यश्चक्षुषि दृश्यत्वेन मयोक्तः स सर्वान्तरो जलादिष्वपि न भिद्यत इत्युत्तरं ददावित्यर्थः । शिष्यभ्रान्तिमनिराकृत्य तद्भ्रान्तिदृढीकरणाय इत्थमुत्तरं ददत आचार्यस्यायमभिप्रायः; सुरासुरेन्द्राविन्द्रविरोचनौ स्वात्मन्यध्यारोपित-पाण्डित्यमहत्त्वातिशयौ तथैव जगति प्रसिद्धौ च । तद्यदि युवां भ्रान्ताविति ब्रूयाम्, तदा चित्तावसादात् पुनःप्रश्नग्रहणधारणेषु भग्नोत्साहौ स्याताम् । अतो यथाश्रुत-प्रश्नमात्रस्योत्तरमिदानीं वक्तव्यम् । अनेन चोत्तरेण पूर्वोत्पन्नः प्रतिबिम्बात्मभ्रमः दृढीभवति चेत्, भवतु । दृढीभूतोऽपि भ्रमः केनचिदुपायेनापनेष्यत इति) ।

(अत एव तद्भ्रमापनयनार्थमाह,) उदशरावे आत्मानमवेक्ष्य यदात्मनो न विजानीथः, तन्मे ब्रूतमिति । तौ होदशरावे आत्मानमवेक्षांचक्राते । तौ ह प्रजापतिरुवाच, किं पश्यथ इति । तौ होचतुः, सर्वमेवेदमावां भगव आत्मानं पश्यावः, आ लोमभ्य आ नखेभ्यः प्रतिरूपमिति । (एवं द्वात्रिंशद्वर्षब्रह्मचर्यदीर्घीभूत-नखलोमादियुक्तच्छायापुरुषदर्शनानन्तरं) तौ ह प्रजापतिरुवाच, साध्वलङ्कृतौ सुवसनौ परिष्कृतौ भूत्वोदशरावे अवेक्षेथामिति । तौ ह साध्वलङ्कृतौ सुवसनौ परिष्कृतौ उदशरावेऽवेक्षांचक्राते । तौ ह प्रजापतिरुवाच, किं पश्यथ इति । तौ होचतुः, यथैवेदमावां भगवः साध्वलङ्कृतौ सुवसनौ परिष्कृतौ स्वः, एवमेवेमौ भगवः साध्व-लङ्कृतौ सुवसनौ परिष्कृताविति । (अत्रैवं नियुञ्जानस्य प्रजापतेरयमभिसन्धिः, आगमापायिकेशनखालङ्कारादिदोषगुणयुक्ताव्यवस्थितदेहानुकारिदोषगुणकत्वात् देहवत् तत्प्रतिबिम्बोऽप्यनात्मेति जानीतामिति । एवं सत्यपि तावनिवृत्तभ्रमौ 'किं पश्यथ' इति, प्रजापतिना पृष्टावपि यथादृष्टं कथयित्वा तूष्णीं बभूवतुः । ततः प्रजापतिर्भ्रान्ति-

निवारणार्थं मया कृतस्य द्विविधप्रतिबिम्बदर्शनस्य अभिप्रायमिमौ अप्रक्षीणकल्मषत्वान्नावगच्छतः। प्रत्यक्षं च युवां भ्रान्ताविति वक्तुमर्हौ न भवतः। तदिदानीमेतदीयहृदयानुरोधेन प्रतिबिम्बमेव निर्दिश्य सर्वान्तरं परमात्मानं मनसि निधाय एष आत्मेत्युपदेशेन एतयोराकाङ्क्षां निवर्तयिष्यामि, कालेन कल्मषे प्रक्षीणे मद्वचनसन्दर्भस्य सर्वस्याप्यभिप्रायं स्वयमेवावगमिष्यतः। विचिकित्समानौ वा मत्समीपमेष्यत इति मत्वा) एष आत्मेति होवाच, एतदमृतमभयमेतद्ब्रह्मेति। तौ ह शान्तहृदयौ, (निवृत्ताकङ्क्षावित्यर्थः), प्रवव्रजतुः। तौ हान्वीक्ष्य प्रजापतिरुवाच, (एवं प्रतिनिवृत्तयोः प्रजापतिः भ्रान्तिगृहीतार्थश्रद्धया इमौ विनष्टौ मा भूताम्; इदमपि मम वचनम्, 'य आत्मे'ति वचनवत् कर्णाकर्णिकया श्रुणुतामित्यभिप्रेयोवाचेत्यर्थः।) अनुपलभ्यात्मानमननुविद्य व्रजतः। यतर एतदुपनिषदो भविष्यन्ति, (यतरे, य इत्यर्थः देवा वा असुरा वा), ते पराभविष्यन्तीति। स ह शान्तहृदय एव विरोचनोऽसुरान् जगाम तेभ्यो हैतामुपनिषदं प्रोवाच। (विरोचनः प्राजापत्यस्य द्विविधदेहच्छायादर्शननियोगस्य देहानुकारित्वात् छायायाः, देह आत्मेति सूचने तात्पर्यम्। अलङ्कृतदेहच्छायां निर्दिश्य 'एष आत्मे'त्युपदेशस्य, नीलानीलयोरादर्शे दृश्यमानयोः वाससोर्यन्नीलं तन्महार्हमिति वचनस्य छायानिमित्ते बिम्बे वाससीव, अलङ्कृते देहे तात्पर्यमिति मन्वानो देह एवात्मा 'अलङ्कारादिभिः परिचरणीय इति निश्चित्य राज्यं प्राप्यासुरेभ्यस्तथैवोपदेष्टुमुपचक्रम इत्यर्थः।) आत्मैव महय्यः। (पूज्य इत्यर्थः।) आत्मा परिचर्यः आत्मानमेवेह महयन्नात्मानं परिचरन्नुभौ लोकाववाप्नोतीमं चामुं च। तस्मादप्यद्येहादानमश्रद्दधानमयजमानमाहुरासुरो बतेति। (यागदानादिकर्मशून्यमद्यापि शिष्टा आसुर इति प्राहुरित्यर्थः।) असुराणां ह्येषोपनिषत् प्रेतस्य शरीरं भिक्षया वसनेनालङ्कारेण संस्कुर्वन्ति। (भिक्षया भिक्षित्वापीत्यर्थः।) एतेन ह्यमुं लोकं जेष्यन्तो मन्यन्ते (एतेन शरीरालङ्कारेणेत्यर्थः)।

अथ हेन्द्रोऽप्राप्यैव देवान् एतद्भयं ददर्श, यथैव खल्वयमस्मिन् शरीरे साध्वलङ्कृते साध्वलङ्कृतो भवति, सुवसने सुवसनः परिष्कृते परिष्कृतः—एवमेवायमस्मिन् अन्धेऽन्धो भवति, स्रामे स्रामः, परिवृक्णे परिवृक्णः, (यस्य चक्षुः, नासिका वा, सदा स्रवति स स्रामः। छिन्नाङ्गः परिवृक्णः)। अस्यैव शरीरस्य नाशमन्वेष नश्यति, नाह-

मत्र भोग्यं पश्यामीति। स समित्पाणिः पुनरेयाय। तं ह प्रजापतिरुवाच, मघवन्! यत् शान्तहृदयः प्राव्राजीस्सार्धं विरोचनेन, किमिच्छन् पुनरागम इति। (आगतवानसीत्यर्थः।) स होवाच — यथैव खल्वयं भगवः अस्मिन् शरीरे साध्वलङ्कृते साध्वलङ्कृतो भवति, सुवसने सुवसनः परिष्कृते परिष्कृतः — एवमेवायमस्मिन् अन्धेऽन्धो भवति, स्रामे स्रामः, परिवृक्णे परिवृक्णः, अस्यैव नाशमन्वेष नश्यति; नाहमत्र भोग्यं पश्यामीति। एवमेवैष मघवन्निति होवाच। एतं त्वेव ते भूयोनुव्याख्यास्यामि, वसापराणि द्वात्रिंशतं वर्षाणीति। स हापराणि द्वात्रिंशतं वर्षाण्युवास। तस्मै होवाच, य एष स्वप्ने महीयमानश्चरति एष आत्मेति होवाच, एतदमृतमभयमेतद्ब्रह्मेति, स ह शान्तहृदयः प्रवव्राज। स हाप्राप्यैव देवान् एतद्भयं ददर्श, तद्यद्यपीदं शरीरमन्धं भवति अनन्धस्स भवति; यदि स्राममस्रामो, नैवैषोऽस्य दोषेण दुष्यति; न वधेनास्य हन्यते; नास्य स्रामेण स्रामः। घ्नन्ति त्वेवैनं, विच्छादयन्तीव। अप्रियवेत्तेव भवति। अपि रोदितीव, नाहमत्र भोग्यं पश्यामीति। स समित्पाणिः पुनरेयाय। तं ह प्रजापतिरुवाच, मघवन् यत् शान्तहृदयः प्राव्राजीः, किमिच्छन् पुनरागम इति। स होवाच तद्यद्यपीदं भगवः शरीरमन्धं भवतीति, अनन्धस्स भवति, — अपि रोदितीव, नाहमत्र भोग्यं पश्यामीति। एवमेवैष मघवन्निति होवाच। एतं त्वेव ते भूयोनुव्याख्यास्यामि, वसापराणि द्वात्रिंशतं वर्षाणीति। स हापराणि द्वात्रिंशतं वर्षाण्युवास। तस्मै होवाच, तद्यत्रैतत्सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानाति, एष आत्मेति होवाच एतदमृतमभयमेतद्ब्रह्मेति। स ह शान्तहृदयः प्रवव्राज। स हाप्राप्यैव देवानेतद्भयं ददर्श। नाह खल्वयमेवं संप्रत्यात्मानं जानात्ययमहमस्मीति, नो एवेमानि भूतानि विनाशमेवापीतो भवति, नाहमत्र भोग्यं पश्यामीति। स समित्पाणिः पुनरेयाय। तं ह प्रजापतिरुवाच, मघवन् यच्छान्तहृदयः प्राव्राजीः किमिच्छन् पुनरागम इति, स होवाच नाह खल्वयं भगवस्संप्रत्यात्मानं जानाति, नाहमत्र भोग्यं पश्यामीति। एवमेवैष मघवन्निति होवाच। एतं त्वेव ते भूयोनुव्याख्यास्यामि। नो एवान्यत्रैतस्मात्। वसापराणि पञ्च वर्षाणीति। स हापराणि पञ्च वर्षाण्युवास। तान्येकशतं संपेदुः। एतत् तत्, यदाहुः एकशतं वै वर्षाणि मघवान् प्रजापतौ ब्रह्मचर्यमुवास। तस्मै होवाच —"। (पुनरपि द्वात्रिंशतं वर्षाण्युषितवते मघवते स्थूलशरीरदोषाननुविधायिनं स्वप्नावस्थं जीवात्मानमुपदिदेश। इन्द्रस्तत्रापि हन्यमा-

त्व - द्राव्यमाणत्व - बन्धुजननमरणाद्यप्रियद्रष्टृत्व - रोदितृत्वादिप्रतिभासेन दोषं पश्यन् उक्तार्थानुपपत्तिमनुसन्दधानः प्रजापतिं पुनरुपससाद । प्रजापतिः पूर्ववदुक्त्वा तथैव द्वात्रिंशतं वर्षाणि उषितवते तस्मै स्वाप्नवधादिप्रतिभासप्रयुक्तभयशोकादिरहितं सुषुप्तावस्थं जीवात्मानमुपदिदेश। इन्द्रस्तस्मिन् विशेषविज्ञानरहिते विनष्टप्रायत्वेना-पुरुषार्थतां मन्यमानः प्रागुक्तानुपपत्त्यनुसन्धानेन पुनरपि प्रजापतिमुपससाद । प्रजापतिः 'एतं त्वेव ते भूयोऽनुव्याख्यास्यामि। नो एवान्यत्रैतस्माद्वसापराणि पञ्च वर्षाणी' त्युक्त्वा तावत्कालमुषितवते एकशतवर्षब्रह्मचर्यवासेन सम्यक् प्रक्षीणकल्मषायेन्द्राय उपदेष्टु-मुपचक्रम इत्यर्थः । )

"मघवन् मर्त्यं वा इदं शरीरमात्तं मृत्युना तदस्यामृतस्याशरीरस्यात्मनोऽधि-ष्ठानम् । आत्तो वै सशरीरः प्रियाप्रियाभ्याम् । न ह वै सशरीरस्य सतः प्रिया-प्रिययोरपहतिरस्ति । अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः । अशरीरो वायुः अभ्रं विद्युत् स्तनयित्नुः अशरीराण्येतानि । तद्यथैतान्यमुष्मादाकाशात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यन्ते, एवमेवैष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते । स उत्तमः पुरुषः । स तत्र पर्येति जक्षत्क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा नोपजनं स्मरन्निदं शरीरम् । स यथा प्रयोग्य आचरणे युक्तः, एवमेवायमस्मिन् शरीरे प्राणो युक्तः । अथ यत्रैतदा-काशमनुविषण्णं चक्षुः, स चाक्षुषः पुरुषः । दर्शनाय चक्षुः । अथ यो वेदेदं जिघ्राणीति, स आत्मा; गन्धाय घ्राणम् । अथ यो वेदेदमभिव्याहराणीति स आत्मा; अभिव्याहाराय वाक् । अथ यो वेदेदं शृणवानीति स आत्मा; श्रवणाय श्रोत्रम् । अथ यो वेदेदं मन्वानीति स आत्मा; मनोऽस्य दिव्यं चक्षुः । स वा एष एतेन दिव्येन चक्षुषा मनसैतान् कामान् पश्यन् रमते, य एते ब्रह्मलोके । तमेतं देवा आत्मानमुपासते, तस्मात्तेषां सर्वे च लोका आत्ताः सर्वे च कामाः । स सर्वांश्च लोका-नाप्नोति सर्वांश्च कामान्, यस्तमात्मानमनुविद्य विजानातीति ह प्रजापतिरुवाच ।"

**छायापुरुष उपदिष्ट इति मत्वा पुनः पप्रच्छतुः योऽयं भगव इत्यादिने**ति पाठः । "योऽयं भगवोऽप्सु परिख्यायते, यश्चायमादर्शे कतम एष"

इत्येतावतः प्रश्नत्वादिति द्रष्टव्यम् । **सर्वेष्वन्तेषु=नेत्रादिस्थानेषु परिख्यायते । एष उ—एष एवेत्यर्थ** इति पाठः । "एष उ एव सर्वेष्वन्तेषु परिख्यायत इति होवाचे" त्यस्य प्रतिवचनरूपत्वात् । **केचित्तु** योऽयं भगवोऽप्सु परिख्यायते, यश्चायमादर्शे कतम एष इति । एष उ एव सर्वेष्वन्तेषु परिख्यायते " इत्येतावान् प्रश्नः । इति होवाचेति एतदुत्तरस्य उदशरावब्राह्मणस्य शेषभूतम् । तत्र च योऽयं भगवोऽप्सु परिख्यायते यश्चायमादर्शे एष उ एव सर्वेष्वन्तेषु नेत्रादिस्थानेषु परिख्यायते, कतम एष इति प्रश्नः । प्रश्नमध्यगत इतिशब्दः प्रश्नान्ते निवेशनीय इत्यादि **वदन्ति । चाक्षुषदेहस्येति** । चक्षुषि दृश्यमानस्य छायापुरुषस्येत्यर्थः । तद्भ्रमस्यैव दृढावस्थितत्वेन तस्यैवापनेयत्वादिति द्रष्टव्यम् । **अनात्मत्वमिति । इदमुपलक्षणम्** — अमृताभयशब्दाद्युक्तभोग्यत्वाद्यभावोऽपि द्रष्टव्यः । अत एव ह्युत्तरत्र "नाहमत्र भोग्यं पश्यामी" त्युक्तिरिति द्रष्टव्यम् । **अन्वयव्यतिरेकाभ्यां चेति** । देहगुणदोषान्वयव्यतिरेकानुविधानादित्यर्थः । **यथा वसनाभरणादिरिति** । वसनाभरणादिर्हि उपादानद्रव्यगुणदोषानुविधायी; नात्मा । तथा देहगुणदोषान्वयव्यतिरेकानुविधायिगुणदोषतया छायापुरुषो नात्मेत्यर्थः । **देहो नात्मेत्यत्र** देहशब्दः छायापुरुषपरः । एवमुत्तरत्र **देहस्यामृतत्वाभयेत्यत्रापि** देहशब्दः छायापुरुषपरो द्रष्टव्यः । **व्यतिरेको दुर्दर्शन** इति । एतच्छरीरगुणदोषान्वयव्यतिरेकानुविधायित्वव्यतिरेको दुर्दर्शन इत्यर्थः । स्वप्नावस्थे तु तद्व्यतिरेकस्सुदर्शनः । अत एव "यद्यपीदं शरीरमन्धं भवति अनन्धस्स भवती"ति स्वप्नावस्थमधिकृत्येन्द्रवाक्यमिति ध्येयम् । **तदभिप्रायानभिज्ञ** इति । परिशुद्धात्मस्वरूपविषयपरमतात्पर्यानभिज्ञ इत्यर्थः । **एवमित्यादिकमुपाददानस्येति** । "एष संप्रसाद" इत्येतावन्मात्रमनुपादाय, एवमेवैष संप्रसाद इति सादृश्यवाच्येवंशब्दोपक्रमं वाक्यमुपाददानस्येत्यर्थः । **दृष्टान्तदार्ष्टान्तिकेति** । 'अशरीरो वायुः, अभ्रं विद्युत् स्तनयित्नुरशरीराण्येतानि । तद्यथैतान्यमुष्मादाकाशात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यन्त' इति दृष्टान्तवाक्यम्; एवमेवैष संप्रसाद इति दार्ष्टान्तिकवाक्यम् । **मुखं व्यादाय स्वपितीति** । यथा व्यादानस्य स्वापानन्तरभावित्वेऽपि मुखं व्यादाय स्वपितीति निर्देशः, तथा परज्योतिर्भावरूपोपसंपत्तेः प्रपञ्चप्रविलापकवृत्तिरूपसाक्षात्काररूपाभिनिष्पत्त्यनन्तरभावित्वेऽपि, उ परं ज्योतिरुपसंपद्य स्वेन

रूपेणाभिनिष्पद्यत' इति निर्देश उपपन्न इति भावः। विवेकः किं शरीरकर्मकः उतात्मकर्मक इति विकल्प्य दूषयति **शरीरविषय** इत्यादिना। सिद्धान्तिनं भ्रान्तस्तटस्थश्चोदयति **शरीरादात्मन उत्थानं विवक्षितं चे**दित्यादिना। न तु परेषां चोद्यमिति भ्रमितव्यम्। 'यदा च विवेकसाक्षात्कारः शरीरात्समुत्थानम्, न तु शरीरापादानकं गमनम्, तदा तत् सशरीरस्यापि संभवती'ति वाचस्पतिना, शरीरापादानकगमनं सशरीरस्य न संभवति, शरीरविवेकरूपं समुत्थानं तु शरीरे वसतोऽपि संभवतीति प्रतिपादनादिति द्रष्टव्यम्। **सशरीरस्य तत्संभवा**दिति। सूक्ष्मशरीरयुक्तस्यैव तत्संभवादित्यर्थः। **मोक्षविषयत्वं न स्या**दिति। शरीरात्समुत्थायेत्यंशोऽपि मुक्तिकालविषय इति भ्रान्तस्येयं शङ्केति द्रष्टव्यम्। **ल्यबन्तपदस्ये**ति। मुखं व्यादाय स्वपितीत्यादौ व्यादानानन्तरभाविस्वापमभिप्रेत्य व्यादाय स्वपितीत्युक्तिरुपपद्यते; प्रकृते तु ब्रह्मभावानन्तरं वृत्तिरूपसाक्षात्कारानवकाशात् क्त्वाप्रत्ययः सर्वथानुपपन्न इति भावः। **परंज्योतिर्भावे**ति। परंकार्यत्वादिति निर्देशवत् साधुत्वं द्रष्टव्यम्। परज्योतिर्भावे तु न दोष इति बोध्यम्। **निर्देशवैयर्थ्यं चे**ति। अभिनिष्पद्यत इत्यनेनैव भेदप्रविलापकसाक्षात्कारो भवतीति सिद्धत्वात् भेदविप्रलापकसाक्षात्कारे सति। भेदप्रविलापस्याप्यनुक्तिसिद्धत्वादिति भावः। इदं च, भेदप्रविलापकत्वमपि अभिनिष्पद्यत इति शब्दार्थान्तर्गतमिति पक्षे दूषणम्। **सद्वितीयत्वव्युदास** इति। अभिनिष्पद्यत इत्येतावन्मात्रे कथिते निवर्तकज्ञानं द्वितीयमस्तीति शङ्का स्यात्। सा मा भूदित्येवमिति निवर्तकज्ञानकृतसद्वितीयत्वमपि, परंज्योतिरुपसंपद्येत्यनेन निरस्यत इत्यर्थः। **सकर्मकत्वप्रतीतिस्वारस्ये**ति। परंज्योतिरुपसंपद्येति उपसंपत्तिशब्दस्याकर्मकभवत्यर्थपरत्वमयुक्तमित्यर्थः। **कर्मकृते**ति। अचेतनानां वाय्वादीनां कर्माभावादिति भावः। **स्वकार्यकरणाये**ति। प्रावृट्काले वर्षायेच्छूनानि भूत्वेत्यर्थः। 'अन्यार्थश्च परामर्शः' इति सूत्रे, 'एष संप्रसाद' इत्यादिकं सुषुप्त्यवस्थात्मविषयतया परैर्व्याख्यातम्; तदपि निराकरोति **अस्य वाक्यस्ये**ति। **जीवस्वरूपवैलक्षण्याभिप्राय** इति। **सूत्रकारेण भेदनिर्देश** इति योजना। संसारिणो जीवात् भेदोक्त्या यावदीश्वरस्यासंसारित्वं नोच्यते, तावद्भेदव्यपदेशेऽपि जीवस्यासंसारित्वं न सिद्ध्येदित्यापतितं भेदं सूत्रकारोऽनुवदतीति। आनन्दगिरिणोक्तमाह **यदा द्वैत**

**व्यपदेशेने**त्यादिना। **अविद्यानिवृत्ता**विति। जीववैलक्षण्यप्रतिपत्तिमूलपुरुषार्थत्व-प्रतिपत्त्या अपुरुषार्थत्वकल्पकाविद्यानिवृत्तावपुरुषार्थत्वमपि निवर्तते। अतो भेद-निर्देशस्य सार्थकत्वमिति भावः। **प्राप्यतया पुरुषोत्तमप्रसङ्ग** इति। जीवप्रकरणे पुरुषोत्तमप्रतिपादनं प्रासङ्गिकमिति भावः। **प्रथमानिर्दिष्टे**ति। प्रथमानिर्दिष्टपरामर्शे विभक्त्यैकरूप्यसद्भावात्। अत एव, 'प्रजापतिर्वरुणायाश्वमनयत् स स्वां देवता-मार्च्छत्' इत्यत्र प्रथमान्ततच्छब्दस्य विभक्त्यैकरूप्येण प्रजापतिपरामर्शित्वमिति भावः। **ब्रह्मात्मकत्वपरं स्यादि**ति। स इत्यस्य तच्छरीरकपरमात्मपरत्वमस्त्वित्यर्थः। **प्रकृताग्रहणा**दिति। प्रथमानिर्दिष्टसंप्रसादाग्रहणादित्यर्थः। **वैयधिकरण्येने**ति। उत्तमपुरुषपर्यन्तत्वमन्तरेण जीवमात्रपरामर्शी इत्यर्थः। **समानाधिकरणमस्त्विति चे**दिति। स तत्र पर्येतीत्यत्रापि प्रथमान्ततच्छब्दस्य उत्तमपुरुषपर्यन्तत्वमेव। एवं च न रीतिभेद इति भावः। **नोपजनं स्मरन्नित्यस्ये**ति। स्त्रीपुंसयोरन्योन्योप-गमेन जायत इति अपुरुषार्थत्वस्यैवोपजनशब्दार्थत्वादिति भावः। ननु स्मरणे को दोष इत्यत आह **अनुभूतस्य ही**ति। आकाशशब्दं प्रकाशकालोकादिपरतया व्याख्याय प्रकाशमानरूपपरतया व्याचष्टे **प्रकाशमानं रूपं वे**ति। पक्षद्वयेऽपि प्रकाशयतीति पदमध्याहरन् योजयति **प्रकाशयती**ति। ततश्च यत्रोपकरणत्वेनानुविषण्णं चक्षुः आकाशम्—आलोकं रूपं वा प्रकाशयति, स चाक्षुषः=चक्षुरुपकरणकः पुरुष आत्मा। चक्षुरुपकरणकमुद्दिश्यात्मत्वं विधेयम्। 'स आत्मा गन्धाय घ्राणम्' इत्युत्त-रवाक्यसारूप्यात्। इयञ्च भङ्गी संप्रतिपन्नसर्वप्रकाशकभावालोकप्रकाशकचक्षुरुप-करणत्वेनात्मातिशयद्योतनार्था। भाष्ये **ज्ञानिनो जानन्तीत्यभिधाये**ति। अत्र तं वा एतं देवा आत्मानमुपासत इति **देव**शब्दार्थमभिप्रेत्य **ज्ञानिन** इत्युक्तम्।

### अन्यार्थश्च परामर्शः १-३-१९.

**अनुपास्यजीवात्मविज्ञाने**ति। परमात्मन एव मोक्षार्थोपासनकर्मतया जीवोपासनस्य कोपयोग इति भावः। एवमुत्तरत्रापि **ज्ञान**पदमुपासनपरं द्रष्टव्यम्। **ननु तर्ही**ति। विशेषणतया जीवोपासनविधानादेव जीवस्योपास्यत्वे वक्तव्ये प्राप्यान्त-र्भावरूपयुक्तिबलात् उपास्यत्वकथनं किमर्थमित्यर्थः। **उच्यत** इति। सूत्रकृता तथा प्रतिपादितत्वात् सैव रीतिर्भाष्यकृताऽनुसृतेति भावः। 'आत्मेति तूपगच्छन्ति

ग्राहयन्ति चे' ति सूत्रस्यायमर्थः — परमात्मानमुपास्यमात्मत्वेनोपगच्छन्ति पूर्वे उपासितारः; शास्त्राणि च तथैव ग्राहयन्तीति। **व्यतिरेकस्तद्भावभावित्वा**दिति। तत्र हि, आत्मेति तूपगच्छन्तीत्यधिकरणसिद्धं जीवोपास्यत्वमङ्गीकृत्य किं कर्तृत्वादिविशिष्टं सांसारिकं स्वरूपमुपास्यम्, उत तद्व्यतिरेक इति विशये, 'कर्तृत्वादिविशिष्टमेव रूपमनुसन्धेयम्, शरीरे वर्तमानस्य उपासितुरात्मनः तथाभावादित्येके मन्यन्त' इति, 'एक आत्मनश्शरीरे भावा' दिति सूत्रेण पूर्वपक्षं कृत्वा—सांसारिकरूपव्यतिरेक एवानुसन्धेयः; तथासत्येव तत्क्रतुन्यायेन तादृशात्मस्वरूपरूपफलप्राप्तेर्भावित्वादिति, 'व्यतिरेकस्तद्भावभावित्वात्' इति सूत्रेण सिद्धान्तितमित्यर्थः। **अङ्गिनः फलमेवे**ति। ननु प्रजापतिविद्यायास्तदङ्गत्वे दहरब्रह्मविद्याधिकृतायैवोपदेष्टव्या स्यात्, उपकोसलविद्याङ्गभूताग्निविद्यावत्। प्रकृते च दहरब्रह्मविद्याविधुराय इन्द्राय उपदिश्यमानेयं विद्या न ब्रह्मविद्याङ्गं भवितुमर्हतीति चेन्न— प्रजापतिवाक्यस्य, 'एष संप्रसाद' इति दहरविद्यावाक्यान्तर्गतसंप्रसादशब्दार्थशोधनार्थं प्रवृत्ततया तदेकवाक्यत्वेन तादर्थ्ये सिद्धे इन्द्रस्यापि दहरविद्या पश्चादुपदिष्टेत्येवावगम्यत इति न कश्चिद्दोषः॥

## अल्पश्रुतेरिति चेत् तदुक्तम् १-३-२०.

'दहर उत्तरेभ्य' इति सूत्रार्थमभिप्रयन्नाह **आकाशोपमाने**त्यादिना **गुणाष्टके**त्यन्तेन। गतिशब्दाभ्यामिति सूत्रार्थमभिप्रयन्नाह **गतिशब्दे**ति। धृतेश्चेति सूत्रार्थमभिप्रयन्नाह **विधरणत्वे**ति। अन्यार्थश्च परामर्श इति सूत्रार्थमभिप्रयन्नाह **फलविशेषे**ति। **आकाशोपमानादिः फलविशेषान्तो** द्वन्द्वः। एतावदर्थपरं यन्महावाक्यम्, तत्स्वारस्यदर्शनादित्यर्थः। ननु मा भूदर्भकौकस्त्वादित्यतो गतार्थत्वम्; अथाप्युपक्रममात्रस्य महावाक्यस्वारस्यबाध्यत्वम्, 'प्राणस्तथानुगमा' दित्यत्रैव सिद्धमिति तेन गतार्थता स्यादेवेत्याशङ्क्याह **उपसंहारे जीवपरामर्शा**दिति। ननु यद्युपसंहारे जीवपरामर्शे सत्यपि प्रक्रमस्थस्य महावाक्यस्वारस्येन बाधः, तर्हि प्राणस्तथानुगमादित्यधिकरणपूर्वपक्षो दण्डापूपन्यायहतः स्यादिति चेन्न — प्रक्रमश्रुतजीवमुख्यप्राणलिङ्गानां दहरत्वादिवदनन्यथासिद्धतया अनेनापि तस्य गतार्थत्वाभावादिति भावः। **अर्भकौ-**

कस्त्वादित्यपेक्षया प्रकारान्तरेणाधिकाशङ्कापरिहारौ सिंहावलोकितकेन दर्शयति **यद्वा इह वाक्यशेषेति** । आधिक्यमेव दर्शयति **न हि शाण्डिल्यविद्याया**मिति ।

अनुकृतेस्तस्य च १-३-२१.

**अतथाभूतस्येति** । नटस्य रामाद्यनुकारित्ववत् न भवतीत्यर्थः । ननु दहराकाशो जीव इति वदन्तं प्रति दहराकाशो न जीवः, जीवस्य दहराकाशानुकर्तृत्वात् इत्युक्तिर्न संभवति; जीवस्य दहरानुकर्तृत्वे प्रमाणाभावात् । न च, 'यदा पश्य' इति वाक्यात् तदनुकारसिद्धिः; तावता जीवस्य परमात्मानुकर्तृत्वेऽपि दहरानुकर्तृत्वासिद्धेः । न हि दहरस्य परमात्मत्वमद्यापि संप्रतिपन्नम्; तथात्वे विवादपर्यवसानादिति चेत्—भ्रान्तोऽसि । न ह्यस्मिन् सूत्रे जीवस्य दहरानुकर्तृत्वं हेतूक्रियते, येन तदसिद्धिराशङ्क्येत । अपि तु 'यदा पश्यः पश्यते रुक्मवर्णम्' इति श्रुतौ जीवस्य परमात्मोपासनायत्ततदनुकारश्रवणात् न नित्याविर्भूतगुणकत्वमिति स एव दहरवाक्ये परामर्शार्ह इति, उत्तराच्चेदाविर्भूतस्वरूपस्त्विति सूत्रार्थ एव स्थिरीक्रियते । अत एव हि श्रुतप्रकाशिकायाम्, 'एवमुपक्रमोपसंहारनिर्वाहः प्रमाणान्तरेण परमात्मात्मनोरपहतपाप्मत्वादीनां स्वाभाविकत्वास्वाभाविकत्वे सिद्धे ह्युपपद्यते । अन्यथा अनुक्तमन्यतो ग्राह्यमिति न्यायात् दहरवाक्येऽपि मुक्तावस्थस्य गुणाष्टकान्वयो विवक्षितः स्यादिति शङ्कामहे' ति इदं सूत्रं अवतारितम् ।

अपि स्मर्यते १-३-२२.

**परैः कृतमधिकरणभेद**मिति । 'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनु भाति सर्वं तस्य भासा सर्वमिदं विभाती' ति मुण्डकवाक्यप्रतिपाद्यो न परमात्मा; सूर्याद्यभिभावकत्वदर्शनात्, सूर्यादितेजसां तदनुभानश्रवणाच्च तेजोविशेष एव । तेज एव हि तेजोऽन्तरमभिभवतीति दृष्टम् । तथा—अनुभानं च सजातीयस्यैवोपपद्यते । अत एव हि वराहं गावोऽनुधावन्तीत्यत्र, 'गवां स्वसदृशसूकरानुधावनं युज्यते, न तु वायसानुधावन' मित्युक्तमिति पूर्वपक्षं कृत्वा—तमेव भान्तमित्यत्र किमलौकिकं तेजः कल्पयित्वा तदनुभानं सूर्यादीनां परिकल्प्यम्, उत, 'भारूपः सत्यसङ्कल्प' इति श्रुतिप्रसिद्धब्रह्मणो भानेन सूर्यादीनामनुभानं कल्प्यमिति विशये श्रुतिप्रसिद्धग्रहणसंभवे

अप्रसिद्धतेजोन्तरकल्पनाया अयुक्तत्वात् ब्रह्मैव प्रतिपाद्यते । अनुकृतिरनुभानम् । श्रुतिप्रतीकोपादानरूपः सौत्र–षष्ठ्यन्ततच्छब्दश्च, 'तस्य भासा सर्वमिदं विभाती' ति श्लोकचतुर्थपादं सूचयति । ततश्च सौत्रतच्छब्दसूचितश्लोकचतुर्थपादप्रतिपाद्यं सर्वप्रपञ्चभासकत्वं चैतन्यप्रभया स्वाध्यस्तसमस्तप्रपञ्चभासके परमात्मन्येवोपपद्यत इति स एव प्रतिपाद्यः। 'न तत्र सूर्यो भाती' त्यस्य च, 'न तद्भासयते सूर्यो न शशाङ्को न पावकः । यद्गत्वा न निवर्तन्ते तद्धाम परमं मम' ति स्मृत्यनुसारात्, न तद्भासयतीत्यर्थ इति परैर्व्याख्यातमिति भावः ।

**अनुशब्दस्य करण**मिति । तमेव भान्तमनुभातीति श्रुतावनुशब्दस्योच्चारणादित्यर्थः । अन्यत् सर्वं परमतवदेव बोध्यम् । "स्वं रूपं शब्दस्याशब्दसंज्ञे" ति सूत्रस्यायमर्थः— इह शास्त्रे शब्दस्य स्वमेव रूपं ग्राह्यम् शब्दसंज्ञां विना । ततश्च "अग्नेर्ढक" इति विधीयमानो ढक् प्रत्ययोऽग्निशब्दादेव भवति, न पावकशब्दात्। शब्दसंज्ञायां तु संज्ञिन —अर्थस्य ग्रहणम्; न स्वरूपस्य। यथा, "सिचिवृद्धिः—"इत्यादौ न वृद्धिशब्दस्य ग्रहणम्; किन्तु संज्ञिन एवेति । **दूषणद्वयं सर्वसाधारण**मिति । अधिकरणभेदवादिकुदृष्टित्रयसाधारणमित्यर्थः । यद्यपि मृषावादिमते चशब्दस्य षष्ठ्यन्ततच्छब्दसूचितहेत्वन्तरसमुच्चयपरत्वं शक्यते वक्तुम्;— तथापि तन्मते सौत्रतच्छब्दस्य अन्वयो दुर्घटः, तथा, 'न तत्र सूर्यो भाती' त्यत्र, न तद्भासयत इत्यर्थपरत्वं च क्लिष्टम् । किञ्च तन्मते देवदत्तं गच्छन्तं यज्ञदत्तोऽनुगच्छतीत्यत्र गमनद्वयवदिह चैतन्यभानव्यतिरेकेण प्रपञ्चस्य भानाभावेन अनुभातीति श्रुत्यर्थोऽप्ययुक्तः । तथा, 'तस्य भासे' ति षष्ठ्यर्थव्यतिरेकोऽपि दुर्घटः ; तद्व्यतिरेकेण भासोऽभावात् ; किञ्च तद्भानसाध्यभानान्तराभावेन, 'तस्य भासा भाती' ति निर्देशश्चानुपपन्न इत्यादिदूषणं स्पष्टम् । **सिद्धान्तित**मिति । यादवप्रकाशीयैरिति शेषः । **शङ्कते परमाकाश एवे**ति । दूषयति **एवं च सती**ति । **किन्तु बुद्धिस्थविषयमिति चे**दिति । "तेन रक्तं रागात्", "तस्यापत्यम्" "तद्भति तत्प्रकारकत्वम्" इत्यादिवदिति भावः ।

इति दहराधिकरणम् (५)

## प्रमिताधिकरणम् (६)

### शब्दादेव प्रमितः १-३-२३.

**भगवत** इत्युक्तमिति। भगवतोऽपि संभवतीत्यर्थः। भगवत्यल्पत्व-संभवमात्रपरत्वात् तस्येति द्रष्टव्यम्। **परमात्मव्यतिरिक्तस्य दृश्यत** इति। जीवस्यैव दृश्यत इत्यर्थः। ततश्चाङ्गुष्ठमात्रस्वरूपपरिमाणविशेषस्य दहरत्ववत् परमात्मन्यसंभवात् अङ्गुष्ठप्रमितो जीवो भवत्विति शङ्कया सङ्गतिरिति भावः। भाष्ये **न ततो विजुगुप्सत** इति भूतभव्येशानत्वादेव ईशितव्यविषये हेयेऽपि जुगुप्सा नास्तीत्यर्थः। स एवाद्य स उ श्वः = सार्वकालिक इत्यर्थः, प्रवृहेदिति पृथक्कुर्यादित्यर्थः; शरीरभूतात् स्वस्माद्विविक्तं जानीयादित्यर्थः। शुक्रं भास्वरूपमित्यर्थः। **न तु स्थानविशेष** इति। स्थानविशेषरूपोपाधिश्रवणे हि महत्यपि परमात्मन्यल्प-परिमाणोक्तिर्युज्यते, स्थानविशेषरूपोपाधिश्रवणाभावेन, 'औपाधिकपरिच्छेदोक्ति'रिति वक्तुमशक्यत्वात् जीव एवेत्युक्तमित्यर्थः। "युक्तं परमात्मनः पूर्वाधिकरणोक्तं हृत्पुण्डरीकस्थानत्वम्, परमात्मस्थानभेदनिर्देशात्, तद्धि तस्योपलब्धिस्थानम्, सालग्राम इव कमलनाभस्य भगवतः। न चेह तथाङ्गुष्ठमात्रश्रुतौ स्थानभेदो निर्दिष्टः; परिमाणमात्रनिर्देशात्। न च 'मध्य आत्मनी' त्यत्रापि स्थानभेदोऽव-गम्यते। आत्मशब्दो ह्ययं स्वभाववचनो वा जीववचनो वा ब्रह्मवचनो वा स्यात्, तत्र स्वभावस्य स्वभवित्रधीननिरूपणतया स्वस्य च भवितुरनिर्देशात् न ज्ञायते कस्य मध्य इति; न च जीवपरयोरस्ति मध्यमञ्जसेति नैष स्थाननिर्देशो विस्पष्टः; स्पष्टस्तु परिमाणनिर्देशः। परिमाणभेदश्च परस्मिन्न संभवतीति जीवात्मैवाङ्गुष्ठमात्र" इति वाचस्पत्युक्तेरिति भावः। **न चोपासन**मिति। ननु परसिद्धान्ते अस्य वाक्यस्य जीवस्य परमात्मत्वोपदेशपरत्वेनोपासनविध्यनभ्युपगमेऽपि, पूर्वपक्षे उपासनविधिर्न प्रत्याख्यातः। अत एव पूर्वपक्षोपसंहारे जीवात्मैवोपास्य इति वाचस्पतिनोक्तम्। ईशानोऽस्मीति ध्यानं फलतीत्यानन्दगिरिणाप्युक्तमिति चेत् — अत्र केचित् — **न चोपासन**मिति ग्रन्थः पूर्वपक्षमित्यस्यानन्तरं केचिदाहुरित्यस्मात् पूर्वं निवेशनीयः। ततश्च जीवत्वं शङ्क्यत इति पूर्वपक्षं सिद्धान्ते उपासनं नास्तीति चाहुरित्यर्थ इति वदन्ति। अन्ये तु, नायं मृषावादिमतानुवाद इति वदन्ति।

**भूतभव्यस्येशान इति वाक्य**मिति । वाक्यार्थीभूतं लिङ्गमित्यर्थः । ततश्चोपसंहारस्थमीशानत्वं उपक्रमस्थप्रमितत्वलिङ्गात् दुर्बलमित्यर्थः; 'त्रिशीर्षाणं त्वाष्ट्रमहनम्; अरुन्मुखान् यतीन् सालावृकेभ्यः प्रायच्छम्', 'यावद्ध्यस्मिन् शरीरे प्राणो वसती'त्यादौ वाक्यप्रतिपाद्यजीवमुख्यप्राणलिङ्गवत् भूतभव्येशितृत्वस्यापि लिङ्गत्वादिति द्रष्टव्यम् । नन्वीशानश्रुतिः न ब्रह्मणो निधानश्रुतिः, भूतभव्यस्येत्यैश्वर्य-प्रतिसंबन्ध्युपादानेन तस्य भूतभव्येशितृत्वरूपकेवलयौगिकार्थपरत्वात् । योगरूढिमतां शब्दानां यौगिकार्थप्रतिसंबन्ध्युपादाने रूढ्यनुन्मेषात् । अत एव, "पद्मानि यस्याग्रसरोरुहाणि प्रबोधयत्यूर्ध्वमुखैर्मयूखैः" इति श्लोके सरःप्रतिसंबन्ध्यग्रो-पादानवति सरोरुहशब्दे स्थितेऽपि पद्मशब्दप्रयोगः; इतरथा पौनरुक्त्यप्रसङ्गात् । यौगिकार्थप्रतिसंबन्ध्युपादानेऽपि रूढ्युन्मेषाङ्गीकारे, अमृतत्वस्येशान इत्यादावपि रूढ्या देवतान्तरप्रसङ्गाच्चेत्यायस्वरसादाह **यद्वा पूर्वपक्षी**ति । ततश्च संभवदन्यथा-सिद्धिकाङ्गुष्ठमात्रलिङ्गादनन्यथासिद्धं चरमश्रुतमसंकुचितसर्वेशानत्वलिङ्गमेव बलीय इत्येव सिद्धान्तो युक्त इत्यर्थः ॥

## हृद्यपेक्षया तु मनुष्याधिकारत्वात् १-३-२४.

ननु वर्तमानत्वादिति पञ्चम्यन्तपदाध्याहारेऽपि तस्यापेक्षयेत्यन्वयसिद्ध्यर्थं षष्ठ्यन्ततच्छब्दोऽप्यध्याहार्यः । न चैतत् युक्तम्; अनध्याहारेणोपपत्तेरित्यस्वरसा-दाह **यद्वे**ति । **को भेदः परमात्मपरिग्रह** इति । अत्र केचित् – शब्दादेवेति परमात्मत्वसाधकयुक्तेः ग्रन्थकृतैवोपन्यस्तत्वात् को भेद इति वक्तुमयुक्तम् । किञ्चाङ्गुष्ठमात्रत्वस्वारस्यस्य परमात्मत्वसाधकतया प्रागनुपन्यस्तत्वात्, वस्तुतस्तस्य परमात्मत्वासाधकतया साधकत्वसंभावनाया अप्यसंभवाच्च, 'अङ्गुष्ठमात्रत्वस्वारस्याभावे को भेद' इति निर्देशोऽप्ययुक्तः । अतः पूर्वपक्षयुक्तेरन्यथासिद्धिमाहेत्येवावतारिका **जीवस्यापी**ति भाष्यस्य देयेति वदन्ति । भाष्ये **हृदयान्तर्वर्तित्वात् तदपेक्ष-मेवे**ति । ननु महतः परमात्मनः अल्पपरिमाणोपाधिसंबन्धेन घटाकाशस्येवाल्प-परिमाणत्वनिर्देशोपपत्तावपि अतिसूक्ष्मस्य जीवस्याधिकपरिमाणहृदयसंबन्धेन कथ-मङ्गुष्ठमात्रत्वव्यवहारः । न हि घटान्तःस्थस्य बदरफलस्य घटपरिमाणत्वव्यवहारोऽस्ति । न वा घटान्तःस्थस्य परमाणोराकाशस्येव घटपरिमाणत्वव्यवहारोऽस्ति । अत एव न

पूर्वपक्षहेतुमपि पश्याम इति चेन्न—अत्र मात्रशब्दे(ब्दो?) न "प्रमाणे द्वयसच्—" इत्यदिना मात्रच्प्रत्ययः; अपि तु क्षीरमात्रं पिबेत्यादाविव उत्तरपदत्वनियतं प्रातिपदिकमितरव्यवच्छेदार्थकम्। ततश्चाङ्गुष्ठपरिमाणाधिकपरिमाणव्यवच्छेद आराग्रमात्रे जीवे संभवति; न परमात्मनीति पूर्वपक्षः। हृदयगुहावच्छिन्ने परमात्मन्यपि संभवतीति सिद्धान्त इति भाष्याभिप्रायः। [1]**स्वरूपमात्रपरत्व** इति। असङ्कुचितसकलभूतभविष्यद्वर्तमानवस्तुनियन्तृत्वप्राप्तसकलनियन्तृत्वस्थानलब्धव्यापकभावब्रह्मस्वरूपमात्रपरत्व इत्यर्थः॥

इति प्रमिताधिकरणं—सावशेषम् (६)

1. टीकायां वस्तुमात्रेविषयेत्यस्य स्थाने स्वरूपमात्रेति पाठो भाव्यः।

## देवताधिकरणम् (७)

**तदुपर्यपि बादरायणस्संभवात् १-३-२६.**

**प्रसङ्गात् सङ्गतिमाहेति।** प्रसङ्गादागतां सङ्गतिमाहेत्यर्थः। **अर्थित्वाभावस्याप्युपलक्षणमिति।** यद्यपि, **अत एव तासामर्थित्वमपि न संभवतीति** भाष्य एवोत्तरत्र स्पष्टत्वान्नेह वक्तव्यम्—तथाऽपि बुद्धिसौकर्यायात्र प्रदर्शितमिति ध्येयम्। **प्रकाशनस्तुत्योरन्य [तर?] परत्वादिति** प्रकाशनस्तुतिपरत्वादित्यर्थः। **देवतैश्वर्यस्यापेक्षितत्वादिति।** विग्रह-हविस्स्वीकरण-भुक्ति-तृप्ति-फलप्रदत्वलक्षणैश्वर्यस्यापेक्षितत्वादित्यर्थः। **तत्रैव कल्प** इति। यस्मिन् कल्पे यानि कर्माण्यनुष्ठितानि, तेषां तत्रैव कल्पे फलभोग इति नियमाभावादित्यर्थः। 'ननु सृष्टिप्रकरणस्य सर्वस्यापि, 'कारणं तु ध्येय' इति वाक्यप्रतिपन्नध्येयोपलक्षणकारणत्वप्रपञ्चनात्मकत्वेनोपासनविधिशेषतया न स्वार्थे तात्पर्य' मित्याशङ्कमानं प्रति उपासनविधिशेषत्वमभ्युपेत्याप्याह **उपासनदशायामिति।** देवादिचतुर्विधभूतग्रामलक्षणजगत्कारणत्वविशिष्टस्योपास्यतया प्राप्यतया च उपास्यविशेषणतया प्राप्यविशेषणतया च देवताविग्रहादिकं सिध्यतीत्यर्थः। ननु विध्यपेक्षिततया सिद्धवस्तुनि तात्पर्यसंभवस्य त्रिष्वधिकरणेषु प्रतिपादनात् पौनरुक्त्यमाशङ्क्य विध्यपेक्षित-

तया सिद्धिप्रकारभेदं दर्शयति **तत्र प्रथमसूत्र** इत्यादिना । **स्तावकत्वप्रकाशकत्वहेतुतयेति** । स्तुत्यनुष्ठेयार्थस्मृतिहेतुतया विग्रहादिसिद्धिप्रकारश्चोत्तरत्र स्पष्टः । भाष्ये **स्तुत्याद्युपयोगित्वा**दित्यनेनान्वयमुक्त्वा व्यतिरेकमाह **तेन विना स्तुत्याद्यनुपपत्तेरिति** । **व्यतिरेकेणोपपादयतीति** । इदं च, 'गुणानामभावे स्तुतित्वमेव हीयेते' ति भाष्यस्य गुणकथनाभावे स्तुतित्वमेव हीयेतेत्यर्थ इति मत्वोक्तमिति द्रष्टव्यम् । **शेषभूतस्येति** अर्थवादस्य विधिशेषभूतस्य विध्यपेक्षितप्ररोचनाजनकत्वाभावे शेषत्वमेव हीयेतेत्यर्थः । **द्रव्यदेवते हि कर्मनिरूपिके** इति । अतश्च, 'यजामह इन्द्रं वज्रदक्षिण' मित्यादिमन्त्रसाध्यदेवताविग्रहप्रकाशनस्य, अनेन मन्त्रेण यागं कुर्यादित्येवंरूपेण यागशेषत्वबोधकविधिना ऽपेक्षितत्वाद्ध्यानविधिना अपेक्षितत्वाच्च तात्पर्यमस्तीति भाष्याभिप्राय इति भावः । शङ्कते **प्रतीतेरिति** **स्वरूपातिरिक्तेति** । शब्दस्वरूपातिरिक्तेत्यर्थः । 'दध्नष्टक्', 'उदश्विनोऽन्यतरस्याम्', 'अग्नेर्ढक्' इत्यादौ शब्दस्वरूपस्यैव ग्रहणेन व्यभिचारः स्यात; तद्वारणायाह **अपारिभाषिकत्वे सतीति** । 'स्वं रूपं शब्दस्याशब्दसंज्ञे' ति स्वरूपग्रहणस्य व्याकरणे परिभाषितत्वादिति भावः । एवमनुमानत्रयेण शब्दस्वरूपातिरिक्तं देवतास्वरूपं साधितम् । अथ देवताविग्रहादेः प्रामाणिकत्वं साधयति **विगीता मन्त्रार्थवादा** इत्यादिना । **आपो वै शान्ता** इति । तेजोगतक्रौर्याभावरूपं शान्तत्वमपां प्रमाणान्तरसिद्धमिति साधकमानगोचरत्वात् न स्वार्थे तात्पर्यमिति भावः । अर्थवादानामविरुद्धस्थलेऽपि लाक्षणिकत्वं परोक्तं दूषयितुमाह **विमतानीत्यादिना** । **वाक्यत्वमसिद्धमिति** । तथा चासिद्धो हेतुरिति भावः । **न च प्रवर्तकवाक्यत्वमिति** । यद्यपि विध्येकवाक्यत्ववादिनः प्रवर्तकवाक्यत्वमपि सिद्धमेवेति शक्यते वक्तुम् — अथापि स्वतन्त्रतया प्रवर्तकत्वस्योपाधित्वेन विवक्षितत्वादिति भावः । **साधिकारेति** । फलसंबन्धबोधकेत्यर्थः । **तस्यापीति** । प्रवर्तकवाक्यत्वस्यापीत्यर्थः । वाशब्दनिबन्धनां प्ररोचनप्रकाशनयोरेककर्तृकत्वप्रतिभां व्युदस्यति **प्ररोचयन्तीत्यादिना** । **गुणान् लक्षयित्वा कुर्वन्तीत्येतद्व्याचष्टे** **प्ररोचनप्रकाशने कुर्वन्तीत्यर्थ** इति । ननु प्ररोचनायाः विध्यपेक्षितत्वात् तस्याश्च गुणसत्तामन्तरेणासंभवत् तत्रापि तात्पर्यं सिद्धमेवेति प्रागेवोक्तम् । अतश्च **ननु विध्यपेक्षितार्थे हीत्यादिशङ्काया** एवानवकाशग्रस्ततया **कर्मविधेश्चेत्यादिभाष्यग्रन्थो**

मुधेत्याशङ्क्य प्रकारान्तरेण प्रयोजनमाह **फलमत उपपत्तेरित्यधिकरणार्थ** इति। **रक्तः पटो भवतीतिवदिति।** यद्यपि देवतैश्वर्यस्यापेक्षितत्वात् उत्थिताकाङ्क्षत्वमेव गामानयेत्यादिवद्वक्तुं शक्यम् — तथाऽपि उत्थिताकाङ्क्षया वा उत्थापिताकाङ्क्षया वा एकवाक्यतयान्वयोऽर्थवादानामिति तात्पर्यम्। **अस्य स्मरणस्य तन्मूलत्वोपपत्ते-रिति।** ननु मन्त्रार्थवादविधुरे कर्मणि मन्त्रार्थवादानां देवताप्रीतिद्वारत्वावगमकत्वाभावात् यागमात्रस्य देवताप्रीतिद्वारत्वावगमिकायां **शाब्दिकस्मृतौ** कथं यागविशेषे देवताप्रीतिद्वारत्वावगमकमन्त्रार्थवादमूलकत्वम्। ननु कचित्कर्मणि मन्त्रार्थवाद-बलाद्देवताप्रीतिद्वारकत्वेऽवगते न्यायतौल्यादन्यत्रापि तथेति शाब्दिकस्मृतेर्मन्त्रार्थ-वादमूलकत्वमिति चेत् — हन्तैवं सति भाष्ये स एव न्याय उपन्यस्यताम्; किमनेन तन्न्यायोपजीविशाब्दिकस्मृत्युपन्यासेनेति **चेत्**—इतिहासपुराणमन्वादिस्मृतिवत् पाणि-निस्मृतेरपि तत्समानार्थश्रुतिमूलत्वसंभवादिति भावः। कल्प्यापूर्वपक्षं वाच्यापूर्वपक्षं च प्रतिक्षिपति **विमतो विधिप्रत्यय** इति। **कृतिसाध्येति।** कृतिसाध्यां चेतनप्रीतिमवगमयत् यद्वाक्यं तत्स्थविधिप्रत्ययत्वादित्यर्थः। यजिधातोश्चेतनप्रीति-साधनवाचित्वान्न हेत्वसिद्धिः। ननु यज देवपूजायामितिवत् होमे तादृशस्मृत्यभावात्, जुहुयादित्यादौ भागासिद्धिरित्याशङ्क्य तस्य पक्षत्वमेव नेत्याह—**विमतशब्देनेति।** यद्यपि साध्यविमतिस्तत्रापि समाना; यागहोमयोरविशेषात् — तथाऽपि यागगत-विमतिविशेषः पक्षतावच्छेदकः, ततश्च न हेत्वसिद्धिरिति भावः। ननु तर्हि होमादिषु अपूर्वनैरपेक्ष्यं केन सिध्येदित्यत्राह **जुहुयादित्यादिष्विति।** विध्यु-**द्देशग्रहणमिति।** विधिवाक्यग्रहणमित्यर्थः। **प्रसङ्गादनुप्रविष्टानामिति।** 'तस्मात् अपि वध्यं प्रपन्नं न प्रतिप्रयच्छन्ति,' 'धन्वन्निव प्रपा असी' त्यादीना-मित्यर्थः। **सङ्कीर्णशब्देनेति** भाष्यस्थसङ्कीर्णशब्दस्य विप्रकीर्णत्वमर्थ इति भावः। **उच्चारणेन विनेति।** घट इत्यत्र टस्य घोच्चारणानन्तरोच्चारणविषयत्व-मेवानुपूर्वीति भावः। **उच्चारणयोग्यताऽस्तीति चेदित्येतद्ग्रन्थात्पूर्वं** 'कदाप्य-नुच्चार्यमाणानां मूलत्वासंभवात्' इति ग्रन्थोऽपेक्षितः। इतरथा किं वर्णमात्रगता, उत आनुपूर्वीविशेषविशिष्टवर्णगतेत्याद्युक्तविकल्पग्रन्थस्यास्य च न सामञ्जस्यं पश्यामः। **उच्चारणयोग्यताऽस्तीति चेदिति।** ततश्च आनुपूर्वीं विनापि उच्चारणयोग्यता-सत्त्वात् मूलत्वं संभवेदिति भावः। **वर्णानामनादित्वादिति।** ततश्च अनाद्यानु-

पूर्वीविशेषोच्चारणयोग्यतावत्त्वमेव वेदत्वमिति भावः । **तच्चैत्यवन्दनेति** । योग्यताया अनादित्वादिति भावः । **कर्तृसामान्याभावादिति** । वैदिकत्वेन प्रसिद्धैरग्निहोत्रादिभिः समानकर्तृकत्वाभावादित्यर्थः । चैत्यवन्दनकर्तव्यतावोधकस्मृतेः प्रसिद्धवैदिकभावाग्निहोत्रादिकर्तव्यतावोधकस्मृतिसमानकर्तृकत्वाभाव इति यावत् । **स्वागमार्थेति** स्वशब्देन स्मृतिरुच्यते । **अर्थविशेषेणावच्छिन्नेति** । अग्निहोत्रादिसमानकर्तृकमन्वादिस्मृत्यवगतार्थप्रतिपादनानुगुणानुपूर्वीविशेषविशिष्टानामेव वेदत्वमिति चेदित्यर्थः । **मन्वादिवाक्यस्यापीति** । स्मृतिः स्मृत्यर्थानुभवजनकवेदमूलेति साधने मन्वादिवाक्यस्य वृद्धमनुवाक्यमूलकत्वेनापि साध्यसिद्धेरर्थान्तरम् ; त्वदुक्तरीत्या वृद्धमनुवाक्यस्यापि वेदत्वसंभवात् ; अन्ततो गत्वा स्मृतिमात्रस्य वेदत्वेन मूलभूतवेदानुमानासंभवाच्चेति भावः । **प्राचीन एव पक्ष इति** । कतिपयदेशेष्वध्येतृविरह इति पक्ष इत्यर्थः । **सङ्कीर्णवेदभागमूलकत्वं युक्तमिति** । विप्रकीर्णवेदमूलकत्वं युक्तमित्यर्थः । **इदमर्थसिद्धमिति** । **तदसौ देवा राधन्तामित्यादिष्वित्यत्र, वाक्यादेव विध्युन्नेयत्वं सर्वत्रेत्यत्र** च सिद्धवन्निर्देशानुपपत्तिकल्पितविग्रहादिप्रतिपादकश्रुतिवाक्यस्य विप्रकीर्णत्वम् , पक्षान्तरे दोषजातं च विवक्षितमिति भावः। यद्वा इदमिति वक्ष्यमाणं **यदपीत्यादिकं** गृह्यत इति द्रष्टव्यम् । **न ह्यत्रैवर्णिकानामिति** । वैदिककर्मजाले, ‘ वसन्ते ब्राह्मणमुपनयीत, ग्रीष्मे राजन्यम् , शरदि वैश्यम् ’ इति त्रैवर्णिकमात्राधिकारिकतया विहितोपनयनाङ्गकाध्ययनगृहीतस्वाध्यायजन्यज्ञानस्यैवाङ्गत्वात् ब्रह्मविद्यायाश्च वैदिकत्वात् तदभावे ब्रह्मविद्या न संभवतीति भावः । **अग्निनिष्पत्त्यनुपपत्तेरिति** । **इदमुपलक्षणम्** – अध्ययनगृहीतस्वाध्यायजन्यज्ञानाभावादित्यपि द्रष्टव्यम् । अग्निनिष्पत्तिमेवोपपादयति **वसन्ते ब्राह्मण** इत्यादिना । **अनधिकारोऽधिकरणसिद्ध** इति ।

पूर्वतन्त्रे षष्ठे, ‘अन्यार्षेयस्य हानं स्या’ दित्यधिकरणे (६-१-११.) दर्शपूर्णमासयोः श्रूयते – ‘ आर्षेयं वृणीते एकं वृणीते द्वौ वृणीते त्रीन् वृणीते न चतुरो वृणीते न पञ्चातिवृणीते ’ इति । तत्रार्षेयो नाम स्वकीयः ऋषिः । ततश्च यजमानस्य यो गोत्रस्थ ऋषिः तद्विशिष्टतया यो निर्देशः अत्रिवत् अर्चनानसवत् श्यावाश्ववत् भरद्वाजवत् बृहस्पतिवत् अङ्गिरोवदयं यजमानो यजते इत्येवंरूपः, स

आर्षेयवरणशब्दार्थः । तत्र एकं ऋषिं वृणीते, द्वावृषी वृणीते, त्रीन् ऋषीन् वृणीत इति वाक्यत्रयेण त्रीणि वरणानि विहितानि। ततश्च वरणत्रयस्यापि अङ्गतया, एकार्षेयद्व्यार्षेययोः त्र्यार्षेयवरणाभावेपि एकद्व्यार्षेयवरणसंभवादधिकार इति पूर्वपक्षं कृत्वा—अस्मिन् वाक्ये विधित्रयाभ्युपगमे वाक्यभेदप्रसङ्गात्. 'त्रीन् वृणीत' इत्येव विधिः। त्रिषु च एकस्य द्वयोरप्यन्तर्भावात्, एकं वृणीते द्वौ वृणीते इत्यनुवादः। ततश्च त्र्यार्षेयवरणमेवाङ्गम्। तद्रहितानामार्षेयवरणवत्सु कर्मसु नाधिकार इति स्थितमित्यर्थः। ननु उपनयनाङ्गकाध्ययनजन्यज्ञानाभावेऽपि देवादीनामधिकारे शूद्रस्याप्यधिकारः स्यादित्याशयमुद्भाव्य निराकरोति **न चोपनयनविरहादिति।**

**सामर्थ्याभावानुगृहीतेति।** अयं भावः—त्रैवर्णिकाधिकारिकोपनयनाङ्गकाध्ययनलब्धविद्यालक्षणसामर्थ्याभावादनधिकार इति पूर्वमीमांसकैरपशूद्राधिकरणे यदुपन्यस्तम्, तदभ्युच्चयमात्रम्। प्रधानयुक्तिस्तु, 'तस्मात् शूद्रो यज्ञेऽनवक्लृप्तः' इत्याहत्य यज्ञादिप्रतिषेध एव। तथा हि—वर्णविशेषादिग्रहणमन्तरेणाविशेषप्रवृत्ताः वैदिककर्मविधयः, कर्मानुष्ठानार्थेऽनुष्ठेयार्थज्ञानसंपन्नान् अधिकारिणोऽपेक्षमाणाः स्वत एवाध्ययनविधिलब्धानुष्ठेयार्थज्ञानान् द्विजातीनासाद्य निर्वृण्वन्ति; न तु फलकामत्वाविशेषेऽपि शूद्रस्याधिकारित्वेन सङ्ग्रहार्थं अनुष्ठेयार्थज्ञानमाक्षिपन्तीति हि शूद्रस्यानधिकारे युक्तिर्वक्तव्या। न सा युज्यते; अध्ययनविधेरर्थज्ञानपर्यन्तत्वे हि विध्यन्तरलब्धार्थज्ञानं त्रैवर्णिकेषु सिद्धमिति युज्यते वक्तुम्। न चैदतस्ति। अध्ययनविधेरक्षरग्रहणमात्रविश्रान्ततया त्रैवर्णिकेष्वर्थज्ञानस्य विध्यन्तरसिद्धत्वाभावेनाक्षेप्यत्वाविशेषात् शूद्रेष्वपि हि तदाक्षेपः संभवत्येव। अस्तु वाऽयमध्ययनविधिः अर्थज्ञानभाव्यः। तथापि शूद्रस्यानिवार्योऽधिकारः। क्रतुविद्याविधिभिः त्रैवर्णिकानां स्वशाखेतरशाखाविहिताङ्गगुणोपसंहाराय तत्तच्छाखाध्यायिभ्यः तत्तदङ्गगुणज्ञानस्येव शूद्रस्यापि विद्याविधिभिस्तज्ज्ञानस्य क्षेप्तुं शक्यत्वात्। अध्ययनविधिना ह्येकस्या एव शाखाया अध्ययनं विधीयते, प्रतिव्यक्ति घटत्वस्येव प्रतिशाखं स्वाध्यायत्वस्यापि परिसमाप्तत्वात्। ननु शूद्रस्य कर्मोपासनानुष्ठानापेक्षितं ज्ञानं कार्त्स्न्येनापेक्षणीयम्। त्रैवर्णिकानां स्वशाखेतरशाखाविहितगुणविषयस्तदेकदेश इति आक्षेपलाघवात्, क्रतुविद्याविधयः त्रैवर्णिकानेव अधिकुर्युः; न

शूद्रमिति चेत् – एवं तर्हि यस्य कर्मणो यस्यां शाखायां भूयसामङ्गानां विधानम्, "भूयस्त्वेनोभयश्रुती" ति न्यायेन प्रधानस्यापि विधानम्; शाखान्तरे तु किञ्चिदङ्गविधानम् – तत्र कर्मणि तच्छाखाध्यायिनामेवाधिकारः स्यात्, ज्ञानाक्षेपलाघवात्। न तु शाखान्तराध्यायिनाम्। किञ्च यस्य कर्मणस्तदङ्गस्य वा कस्यचिदस्यां शाखायां विधानं नास्ति; किन्तु शाखान्तर एव साङ्गस्य तस्य विधानम् – तत्र कर्मणि तच्छाखाध्यायिनामधिकारो न स्यात्, शूद्रवत् तेषां तदनुष्ठानोपयोगिज्ञानस्य कार्त्स्न्येनाक्षेपणीयत्वात्। संभवन्ति हि गुणफलविधिरूपाणि क्षुद्रकर्माणि शाखाविशेषेषु सर्वैर्यैवानिरूपितानि। तस्मात् त्रैवर्णिकानामपि ज्ञानाक्षेपस्य संमतिपन्नत्वात् तद्वत् शूद्रस्याप्यनुष्ठानोपयोगिज्ञानाक्षेपसंभवात् वेदविद्भ्यो विज्ञाय विद्यानुष्ठानमुपपद्यते। अन्यथाऽध्ययनाभावेन शूद्रस्य विद्याप्रत्याख्याने मैत्रेयीप्रभृतीनां स्त्रीणां ब्रह्मविद्यावाप्तौ का गतिः? न हि संवर्गविद्यागतशूद्रशब्दस्य क्षत्रिय इव मैत्रेय्यादिशब्दानां पुरुषेषु वृत्तिः सिद्धान्तिनोऽपि कल्पयितुं शक्या। "अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुः, मैत्रेयी कात्यायनी चे" त्यादिवाक्यान्तरविरोधात्। तस्मात् प्रतिषेधबलादेव शूद्रस्यानधिकार इति।

वस्तुतस्तु देवादीनामपि जन्मान्तरीयोपनयनाङ्गकाध्ययनमूलज्ञानलक्षणं सामर्थ्यमप्यस्त्येवेत्याह **प्राक्तनज्ञानाप्रमोषादिति**। **मनुष्यकर्तृकाधानस्यैवेति**। यद्यपि आधाने आर्षेयवरणं नास्त्येव। न चाधाने साक्षात् आर्षेयवरणाभावेऽपि तदङ्गभूतेषु पवमानहविष्षु आतिदेशिकमार्षेयवरणमस्तीति वाच्यम्, "गुणानां च परार्थत्वा" दित्यत्र पवमानहविषामाधानार्थत्वाभावस्य साधितत्वात् – तथाऽप्यत्राधानशब्दोऽग्निसिद्ध्यर्थकर्मपरः। ततश्च पवमानहविषामपि संग्रहात् तेषु च आर्षेयवरणसत्त्वान्न दोष इति द्रष्टव्यम्।

**देवानां दत्तमिति स्पष्टतरमिति**। नन्वेतादृशान् इतिहासदृष्टान् अर्थवादान् आलम्ब्य पूर्वमन्यथा प्रवृत्तो धर्मः, इदानीमन्यथा प्रवर्तत इति धर्ममर्यादाविप्लवाङ्गीकारो न युक्तः। अन्यथा ह्येवमधर्ममर्यादाऽपि विप्लुताङ्गीक्रियेत। दृश्यते हि भारत एव पूर्वमनावृतानां स्त्रीणां श्वेतकेतुशापप्रभृति एकपत्नीत्वाचरणं प्रवृत्तमित्यादिरधर्मविप्लवार्थवादः। "अनावृता हि वर्णानां सर्वेषामङ्गना भुवि। यथा

गावः स्थितास्तात स्वे स्वे वर्णे तथा प्रजाः । व्युच्चरन्त्याः पतिं नार्या अद्यप्रभृति पातकम् । भ्रूणहत्याकृतं पापं भविष्यत्यसुखावहम्" इति । ननु श्वेतकेतूपाख्याने स्त्रीणां पूर्वमनावृतत्वे निर्धनेनोत्सवार्थं क्रियमाणायामाभरणप्रार्थनायामिवापत्नीकेन ब्राह्मणेन अपत्यार्थं क्रियमाणायामुद्दालकपत्नीप्रार्थनायां तत्पुत्रस्य श्वेतकेतोः कोपो न स्यात् । कोपश्च तत्रैव वर्णितः । "मातरं तां तदा दृष्ट्वा नीयमानां बलादिव । तरसा दीप्तवीर्यो हि श्वेतकेतुर्न चक्षमे । संगृह्य मातरं हस्ते श्वेतकेतुरभाषत । दुर्ब्राह्मण विमुञ्च त्वं मातरं मे पतिव्रताम् ।" इति । ततः स्त्रीणामेकपत्नीत्व-व्रतनियमस्यानादित्वावगमात् नारीणां प्रागनावृतत्ववचनं तदाप्रभृत्येकपत्नीत्व-व्यवस्थापकवचनं च कुन्तीमपत्यार्थं पुरुषान्तरे प्रवर्तयितुकामस्य पाण्डोः स्वकल्पितार्थविषयं प्ररोचनामात्रपरमित्यवसीयत इति चेत्—यज्ञाग्रहारोपाख्यानवचनजातमप्येवमित्यवधार्यताम् । अन्यथा हि तत्र बह्वसमञ्जसमापद्येत । तथा हि—तस्मिन् सत्रे दीक्षणीयायामाग्नावैष्णवः पुरोडाशोऽग्निनाऽननुष्ठितश्चेत्, अग्नेर्भागो न स्यात् । अनुष्ठितश्चेत्, विष्णोरिदानीं भागानुवृत्तिर्न स्यात् । उपसत्तु वैष्णवो यागः केनापि देवेनानुष्ठितश्चेत्, तदीय एवेदानीं स्यात्; न तु वैष्णवः । नानुष्ठितश्चेत् क्रतुर्विकलः स्यात् । उदवसानीयावसानाः सर्वेऽपि पदार्थाः सर्वैरपि देवर्षिभिरनुष्ठिताश्चेत्, सर्वेषु हविष्षु सर्वेऽपि भागिनः स्युः । कैश्चित् केचित् कृताश्चेत्, सर्वेषामपि स क्रतुर्विकल इति कुतो विष्णोः प्रीतिः? ततो देवानां वरलाभश्च न स्यात् । किं च पूर्वं वैष्णवः क्रतुः कालविशेषे नानादैवत्यो जात इत्यभ्युपगमे तस्मिन्नुपदेशातिदेशाभ्यां प्रवृत्तेषु विधिषु श्रुतानां देवतासमर्पकपदानां पूर्वं विष्णुवाचित्वमिदानीं नानादेवतावाचित्वमिति क्वाप्यदृष्टचरं द्विविधार्थवत्त्वं प्रसज्येत ! एतेन—इन्द्रादयो देवाः विष्णुं यजन्तीति न यष्टृयष्टव्यभावविरोधः । मनुजास्तु इन्द्रादीन् यजन्तीति, नेन्द्रादीनां यष्टव्यत्वप्रसिद्धिविरोधश्चेति—अपास्तम् । तदा हि विधिषु देवतावाचकपदानां नित्यमेव वैयर्थ्यं प्रसज्येत । एवं यज्ञाग्रहारोपाख्यानवदेव देवानां क्रत्वनुष्ठानवादा अप्यविवक्षितार्था एव । अन्यथा हि तत्राप्यसाङ्गत्यमापद्येत । तथा हि—"देवा वै यशस्कामाः सत्रमासत अग्निरिन्द्रो वायुर्मख" इति चतुर्णां देवानां सत्रानुष्ठानमुक्तम् । अत्र कथं चत्वार एव ब्राह्मण्यरहिताः सत्रमनुतिष्ठेयुः । सप्तदशावराणां ब्राह्मणानामेव हि सत्रानुष्ठानम् । "ब्रह्म वै देवानां बृहस्पतिः,

क्षत्रमिन्द्र" इत्यादिश्रवणात् देवादिष्वपि ब्राह्मणादिविभागोऽस्तीति चेत् – अस्तु नाम। तथाऽपि बृहस्पतेरेव देवेषु ब्राह्मणत्वेन निर्धारितस्य सत्राधिकारः स्यात्; न त्वग्न्यादीनामिन्द्रादीनां च सर्वथैव सत्राधिकारः। तथा सर्पाणामयने, "चर्कपिशङ्गावुन्नेतारौ" इति चर्कपिशङ्गयोः द्वयोरुन्नेतृकर्म श्रूयते, कथमेककर्तृकमुन्नेतृकर्म द्वौ कुर्याताम्। तस्मादविवक्षितार्थ एव देवादीनां क्रत्वनुष्ठानार्थवाद इति चेत् – उच्यते, वैष्णवे हि सत्रे अङ्गप्रधानयागेषु सर्वत्र विष्णुरेव देवता। तादृशं च सत्रं ये देवाः पुरोडाशपयोदध्याज्यप्रभृतिषु यादृशहविर्भागित्वं कामयमाना आरेभिरे, तेषां तेन वैष्णवसत्रानुष्ठानेन तत् सिद्धम्। इदानीं च तत्सत्रमनुष्ठात्रभावात् खिलीभूतमित्युक्तौ विरोधाभावात्। महाभारतप्रतिपन्नोपाख्यायिकायां कश्चिद्विरोधाभासमालम्ब्य प्रत्यवस्थाने सर्वत्राप्यनाश्वासप्रसङ्गेनेतिहासपुराणादिकं सर्वं निरर्थकमेव स्यादित्यलमतिशोदेन।

विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् १-३-२६.

भाष्ये **संनिधानानुपपत्तेरिति**। ननु विग्रहराहित्यपक्षेऽपि देवतायाः सर्वत्र सन्निधानाभावेनाङ्गत्वविरोधः तदवस्थ एवेति असारोऽयमाक्षेप इति चेत् – सत्यम्; देवताविग्रहद्वेषिपूर्वमीमांसकोक्तानुवादरूपत्वेन सूत्रस्यादोषात्। **योग्यानुपलम्भ**स्त्विति पाठो दृश्यते। तत्र योग्यपदं संपातायातमिव भाति। प्रत्युतोपलम्भायोग्यत्वस्यैव प्रदर्शनीयत्वात्। **अवाड्ढव्यानि** हव्यानि वोढवानसीत्यर्थः। **अक्षन्निति** भक्षितवन्त इत्यर्थः। **प्रामीयन्त** मृता इत्यर्थः। **परिणम्यमानस्येति**। 'णिचिमितां ह्रस्व' इति ह्रस्वः। **इन्द्रेति**। 'इन्द्र आगच्छ, हरिव आगच्छ, मेधातिथे मेषे' त्यन्तमिन्द्रस्य संबोधनम्। हरिव इति। पूर्वपक्षापरपक्षौ इन्द्रस्य हरी। तद्वान् हरिवान्। ततः संबुद्धौ, "मतुवसोरु संबुद्धौ छन्दसि" इति रुत्वे, "भो भगो अघो अपूर्वस्य" इति यत्वे, "लोपश्शाकल्यस्य" इति यलोपे च हरिव आगच्छेति रूपसिद्धिः। 'मेधातिथिं किल काण्वायनिं मेषो भूत्वेन्द्रो जहारे' ति सुब्रह्मण्यार्थवादे श्रूयते। **संमर्शनमात्रतृप्तिश्रवणादिति**। अग्निहोत्रहवण्या हस्तेन संमर्शनमात्रतृप्तिश्रवणादित्यर्थः। **इतरैस्त्विति**। "कति देवा" इति याज्ञवल्क्यं प्रति शाकल्यप्रश्ने, "त्रयश्च त्री च शता त्रयश्च त्री च सहस्रा"

इति निरुन्य, "महिमान एवैषामेते त्रयस्त्रिंशत्त्वेव देवाः" इति तेषां त्रयस्त्रिंशत्येवान्तर्भावं प्रदर्श्य, "कतमे ते" इति सङ्ख्येयप्रश्ने, "अष्टौ वसवः एकादश रुद्राः द्वादशादित्याः, प्रजापतिरिन्द्रश्चेति त्रयस्त्रिंशत्" इत्युक्त्वा, अष्टैवेतेषामन्तर्भावं प्रदर्श्य, पुनश्च त्रयस्त्रिंशदपि देवाः अग्निपृथिवीवाय्वन्तरिक्षादित्यदिवां षण्णां देवानां महिमान इति षट्सु अन्तर्भावं प्रदर्श्य, षडपि ते त्रयाणां लोकानां महिमान इति त्रिष्वन्तर्भावं प्रदर्श्य, तेऽपि द्वयोरन्नप्राणयोर्महिमान इति उक्त्वा, तौ चैकस्य प्राणस्य महिमेति परिशेषितत्वात् एकस्यानेकविग्रहयोगः परैरुपपादित इत्यर्थः । नन्वनेकप्रतिपत्तेरिति सूत्रखण्डस्य शङ्करादिभिः कृता द्वितीया व्याख्या किमिति भाष्यकृतोपेक्षितेत्यत्राह व्याख्यातृन्तरैरित्यादिना । अनेकार्थोपलम्भेति । यद्यपि शाङ्करभाष्यवाचस्पत्यानन्दगिरीयेषु एकस्य वस्तुनः अनेकत्र कर्मणि अङ्गभावप्रतिपत्तेर्दर्शनादित्येव व्याख्यातम्—तथाऽपि वाचस्पत्ये अनेकत्र कर्मण्यङ्गत्वप्रतिपत्तिः= युगपदङ्गभावावगमनम्; तस्य दर्शनात् । यथा एकं ब्राह्मणमुद्दिश्य नमस्कारः क्रियते बहुभिः, तथा स्वस्थानस्थितामेकां देवतामुद्दिश्य बहुभिर्यजमानैर्नानादेशस्थितैः युगपत् हविस्त्यज्यते । तस्याश्चासंनिहिताया अप्यङ्गभावो भवति । अस्ति हि तस्याः विप्रकृष्टानेकार्थोपलम्भसामर्थ्यमित्युक्तत्वात् तत्र विप्रकृष्टानेकार्थोपलम्भसामर्थ्यमित्येतत् अनेकप्रतिपत्तेर्दर्शनादित्यस्य व्याख्यान्तरमपि भवितुमर्हतीत्यभिप्रेत्यैवं वर्णितमिति द्रष्टव्यम् । अथवा व्याख्यात्रन्तरशब्देन यादवादेः ग्रहणमिति न काप्यनुपपत्तिः

शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम् १-३-२७.

विग्रहवदिति । विग्रहयुक्तेत्यर्थः । सरूपसृष्टिनियमानुपपत्तेरिति । अत्र सरूपसृष्टिनियमानुपपत्तेर्वैरूप्यसंभवात् द्वितीये तु या व्यक्तिरिति पाठः समीचीनः । मध्ये ततश्चेत्यादिग्रन्थस्तु द्वितीयपक्षान्वितत्वादधिक इति प्रतिभाति । कोशाश्च निरीक्षणीयाः । या व्यक्तिरिति । यावती व्यक्तिरित्यर्थः । शब्दसङ्केतगोचरस्येति । गोचरत्वेनाभिमतस्य सर्वस्येत्यर्थः । दूषणान्तरमाह देवदत्तादिशब्दानामिवेति । दूषणदानाय परिशिनष्टि यदि प्रधानेति । ननु प्रत्यक्षग्राह्यत्वं घटादिष्वतिप्रसक्तमित्यत आह प्रत्यक्षग्राह्यो वेद इति । ततश्च

प्रत्यक्षग्राह्यवेदत्वमत्र प्रत्यक्षशब्दार्थ इति नातिप्रसङ्ग इति भावः। **तद्गतजात्या संबन्धग्रहणादिकमिति** गत्वाद्यात्मनैव गकारादीनामर्थसंबन्धः, न व्यक्तिरूपेण। यथा घटादीनां न व्यक्तिरूपेण वाच्यत्वम्; अपि तु जात्यात्मना—तद्वदिति भावः। ननु वाचस्पत्ये, 'वाचकशब्दप्रभवत्वं हि देवानामभ्युपेत्यम्। वाचकत्वं च न तावद्वर्णानां संभवति; प्रत्येकं वाचकत्वे वर्णान्तरवैयर्थ्यात्। क्षणिकेषु च क्रमिकेषु समुदायाभावात, न च स्फोटस्य वाचकत्वं संभवती' त्येवं प्रकारान्तरेण स्फोटविचारसङ्गतेः संपादितत्वात् नासङ्गताभिधानम्। भूतभाविसर्वकारणस्य नित्यत्वावश्यम्भावेन तत्समर्थनमपि सङ्गतमित्यस्वरसादाह **किञ्च नित्यानामपीति क्षणभङ्गुरत्वादिति**। ततश्च नित्यत्वं तद्विशिष्टस्य कथमपि साधयितुं न शक्यमित्यर्थः। ननु न विशिष्टस्य नित्यत्वं प्रसाध्यते; किन्तु केवलवर्णानामेवे-त्याशङ्क्याह **अर्थावबोधं प्रयोजनमिति**। आनुपूर्वीविशिष्टरूपेण वाचकत्वात् आनुपूर्व्याश्च नित्यत्वादित्यस्य दृष्टान्तमाह **पृथिव्या घटरूपेणेति**। **विरोधाच्चेति**। ब्रह्मणः सर्वविधकारणत्ववादविरोधादित्यर्थः। **सौत्रं पदमेवं व्याख्यातमिति**। एवमपि व्याख्यातमित्यर्थः। शाङ्करभाष्ये, "प्रत्यक्षं हि श्रुतिः; प्रामाण्यं प्रत्यनपेक्षत्वात्। अनुमानं स्मृतिः, प्रामाण्यं प्रति सापेक्षत्वात्" इत्यपि प्रतिपादितत्वादित्यपि द्रष्टव्यम्। **यदि क्वचिदेवमपीति**। 'अक्षर-धियां त्ववरोधस्सामान्यतद्भावाभ्या' मित्यादाविति भावः। ननु शब्दविरोध-परिहारार्थमिन्द्रादिशब्दानामिन्द्रत्वादिजातिवाचित्वे हेतूकर्तव्ये किमर्थं सूत्रकृता देवानां शब्दप्रभवत्वं वर्णितमिति चेत्—उच्यते। जातिवाचित्वं तावत् पूर्वोक्तेन्द्रादिगत-जातिसिद्धिसापेक्षमिति तासामेव जातीनां सिद्धये देवादीनां वेदोपवर्णिततत्तन्नाम-रूपानुसन्धानपूर्वकं प्रजापतिना सृष्टत्वं सूत्रे वर्णितम्। तेन हि पूर्वोक्तेन्द्रादिषु घटादिष्विव नाम्नामाकृतीनां च समानत्वं सिद्ध्यतीति तेषां नाम्नां साक्षादिन्द्रादिषु प्रवृत्तिनिमित्तभूताः समानकृत्यभिव्यङ्ग्याः इन्द्रादिगताः जातयः सिद्ध्यन्ति। साक्षा-ज्जातिवाचित्वस्य हेतूकरणे तु इन्द्रत्वादिजातीनां पूर्वपक्ष्यसंमतत्वेनासिद्धिशङ्का स्यात्। यद्यपि तासां जातीनां साक्षात्साधकं समाननामरूपत्वं सूत्रयितुं शक्यम्; तस्योदाहरिष्यमाणश्रुतिसिद्धत्वात्— तथाऽपि तद्धेतुदार्ढ्यार्थं तस्याप्युप-पादकं देवानां शब्दप्रभवत्वं सूत्रितम्। सोऽपि हेतुः समाननामरूपत्वादित्यत्र

दर्शयिष्यते । किञ्च, "अत एव च नित्यत्व" मित्युत्तरसूत्रे अतश्शब्देन शब्दप्रभवत्वस्य परामर्शार्थं चैष निर्देशः ।

अत एव च नित्यत्वम् १-३-२८.

भाष्ये अत एव चेन्द्रवसिष्ठादिशब्दानां देवर्षिवाचिनां तत्तदाकारवाचित्वमिति । यद्यपीन्द्रवसिष्ठादिशब्दानामाकृतिवाचित्वमर्थानित्यत्वशङ्काव्युदास एवोपयुज्यते; न तु शब्दानित्यत्वशङ्काव्युदासे इति नास्मिन् सूत्रे इन्द्रवसिष्ठादिशब्दानामाकृतिवाचित्वमुपन्यसनीयम् — तथापीन्द्रादिशब्दानामाकृतिवाचित्वात् यथा अर्थानित्यत्वशङ्काया नावकाशः, तथा मन्त्रकृत्त्वेन त्वदभिमतानामपि वसिष्ठेन्द्रादीनां वेदशब्दप्रभवत्वस्य प्रमाणसंप्रतिपन्नतया मन्त्रकृत्त्वं मन्त्रद्रष्टृत्वमेव; अतो नानित्यत्वशङ्केत्येवमिन्द्रवसिष्ठादीनामाकृतिवाचित्वकथनस्य दृष्टान्तार्थत्वमेवेत्यत्र तात्पर्यम् । **श्रुतिरपि ऋषिज्ञानपूर्वकमेवेति ।** **ऋषिर्द्रष्टा ।** यदि हि कर्ता स्यात, तर्हि कर्तृज्ञानपूर्वकमेवानुष्ठेयं दर्शयेदिति भावः । 'यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाऽध्यापयती' ति पाठः । **दाशतय्य** इति । ऋग्वेदगता ऋच इत्यर्थः । **पुरावृत्तानीति ।** अख्यायिका इत्यर्थः । **शर्वर्यन्त** इति । प्रलयान्त इत्यर्थः । **तान्येवैभ्य** इति । एभ्यो वेदेभ्य एव हेतुभ्य इत्यर्थः । **ईश्वरप्रणीतत्वविरोधादिति ।** यद्यपीश्वरप्रणीतेष्वप्यादौ प्रवक्तृत्वं कठादेः संभवति, तथापि प्रोक्तमित्यस्य उक्तमित्यर्थ इत्यभिप्रेत्यैतदुक्तमिति द्रष्टव्यम् । **दृष्टवेदभागत्वे प्रमाणमिति ।** यद्यपि काठकशब्दस्य कठेन प्रोक्तं छन्द इत्यर्थे, "कलापिवैशम्पायनान्तेवासिभ्यश्च" इति वैशम्पायनान्तेवासित्वात् णिनि प्रत्यये, तदन्तस्य, "छन्दोब्राह्मणानि च तद्विषयाणि" इति सूत्रेणाध्येतृवेदितृविषयत्वनियमेन, "तदधीते तद्वेद" इत्यर्थविहितस्य प्राग्दीव्यतीयप्रत्ययस्य, "प्रोक्ताल्लुक्" इति लुकि, णिनिप्रत्ययस्य च, "कठचरकाल्लुक्" इति लुकि कठाः; ततः, तेषामाम्नाय इत्यर्थे विवक्षिते, "गोत्रचरणाद्वुञ्" इति सूत्रेण, 'तस्येद' मित्यविशेषेण शैषिकेष्वर्थेषु प्राप्तस्य, "चरणाद्धर्माम्नाययोः" इति वार्तिकेनानयोरर्थयोरेव संभवतीति नियमात् तयोरर्थयोर्वुञि कृते काठकमिति भवतीत्येव शाब्दिकैर्व्युत्पत्तिर्दर्शिता — तथाऽपि, "लुब्योगाप्रख्यानात्" इति सूत्रोक्तन्यायेन एतादृशयौगिकार्थप्रतीतेः,

उपपत्तिसहत्वाभावाच्च शाण्डिल्योक्तमनादरणीयमिति भावः । **तत्तदर्थस्मृतिपूर्वक**मिति । अनेन, "शब्द इति चेन्नातः प्रभवात्" इति सूत्रोक्तमर्थनित्यत्वमाक्षिप्यते । **शब्दस्य चाभावा**दित्यनेन, 'अत एव च नित्यत्व'मिति सूत्रोक्तं शब्दनित्यत्वमाक्षिप्यते । ततश्च शब्दार्थानित्यत्वाक्षेपपरिहारपरमिदं सूत्रमिति भावः । **प्रपञ्चप्रवाहानादित्वमाश्रयणीय**मिति । न तु मध्ये प्राकृतप्रलयोऽभ्युपगन्तव्य इति भावः ।

समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च १-३-२९.

ननु समाननामरूपत्वस्य पूर्वसूत्रे कण्ठोक्त्यभावात् कथं पूर्वोक्तादिति भाष्यमित्याशङ्क्याह **पूर्वसूत्रद्वयोक्त**येति । **श्वेताश्वतरवाक्यं स्मारित**मिति । ततश्च 'यो ब्रह्माणं विदधाति पूर्वं' मित्युदाहरिष्यमाणं श्वेताश्वतरं देवतान्तरपरमिति न भ्रमितव्यमिति भावः । **तत्कृतवेदनित्यत्वे**ति । वेदस्यापि कल्पान्तरीयऋग्वेदादिवेदसमाननामरूपत्वात् कल्पान्तरीयानुपूर्वीलक्षणरूपसमानरूपत्वाच्च नियतानुपूर्वीकत्वलक्षणं शब्दनित्यत्वमुपपद्यते । इन्द्राद्यर्थानामपि समाननामरूपतया समाननामरूपाभिव्यङ्ग्यजातिवाचितया नित्यत्वमिति द्वयमप्युपपन्नमित्यर्थः । **युगपत्सर्गप्रलय**मिति । "न कदाचिदनीदृशं जगत्" इति प्राकृतप्रलयानभ्युपगन्तृमीमांसकैरित्यर्थः । **अपूर्वक्रमे**ति । पूर्वानुपूर्वीविसदृशक्रमेत्यर्थः । **इयांस्त्वितीति** । ततश्च **तदस्त्विति** भाष्ये तच्छब्देन तेनैव क्रमेणोच्चार्यमाणत्वस्यैवांशस्य परामर्श इति भावः । **संस्कारानपेक्ष**मित्यत्र स्वोच्चारणजन्यसंस्कारमात्रपरत्वेन सङ्कोचो निष्प्रमाणक इत्यस्वरसादाह **यद्वा संस्कारानपेक्ष**मिति । ननु सर्वपदार्थानामपि सर्वदा परमात्मबुद्धिस्थतया नित्यानित्यपदार्थविवेक एव न स्यादित्यपि वक्तुं शक्यतया केयमाशङ्का । न हि बुद्धिस्थत्वमात्रेण सत्त्वमप्यस्तीत्याशयवानाह **सर्वदा पूर्वपूर्वे**ति । **पौरुषेयापौरुषेयत्ववैषम्य**मिति । अत एव वेदावेदवैषम्यं चेति भावः । **संप्रदायप्रवर्तकसद्भावमात्र** इति । परमात्मनः प्रवर्तकस्य सद्भाव इत्यर्थः । उदाहृतवचनजातस्य समाननामरूपत्वे प्रमाणत्वाभावादाह **उदाहृतवचनजातं प्रदर्शनार्थ**मिति । **हिंस्राहिंस्रे** इति । पूर्वं हिंस्रस्तद्वासनावासितस्सन् हिंस्रतामापाद्यते; एवमहिंस्रादयोऽपीत्यर्थः । **सिपाधयिषितरूपेणे**ति । कल्पान्तरे लिप्सितेन्द्रभावः पुरुषः तत्कल्पवर्तिनमिन्द्रमाराध्य कल्पान्तरे इन्द्रत्वं प्राप्नोतीत्यर्थः । **पूर्वपूर्वाग्नीन्द्रादि-**

**सरूपतये**ति । तत्क्रतुन्यायादिति भावः । **यौगपद्येन प्रवाहतश्चे**ति । एकसमयोपन्नान्यपि बहून्यण्डानि संभवन्ति; केषुचिदण्डेष्विदानीमुत्पद्यमानेषु पूर्वकालोपन्नान्यप्यण्डानि संभवन्ति, ततश्च कल्पादौ एकस्य चतुर्मुखस्य भानसमये तादात्विकाण्डान्तर्गतचतुर्मुखस्यापि भानादेकक्षेत्रज्ञप्रतिपन्नत्वं नास्ति, पूर्वोत्पन्नाण्डगतचतुर्मुखसृष्टमहर्षीणामपि भानाच्च नैकक्षेत्रज्ञमात्रप्रतिपन्नत्वमस्तीति भावः । **सैव श्रुति**रिति । तत्सजातीया, "वाचा विरूपनित्यया" इत्यादि श्रुतिरेवेत्यर्थः । प्रथमविकल्पे द्वितीयं गिरः शङ्कते **एकस्य प्रतिभातवाक्यत्व**मिति । **ईश्वराप्त्यवगमानुगुणे**ति । चतुर्मुखानां सर्वेषां ईश्वराप्तत्वनिश्चयशालितया ईश्वरोपदिष्टवेदनित्यत्वेन शङ्कोन्मिषतीति भावः । इदमुपलक्षणम्; इतरेषामपि वैदिकानां शङ्कोन्मिषतीति द्रष्टव्यम् । **बाह्यहेतूश्चे**ति । पौरुषेयत्वशब्दार्थसंबन्धानित्यत्वादिमूलेत्यर्थः । **आन्तरहेतूश्चे**ति । अर्थवादानां हेतुसमर्पकतयैवान्वयस्य वक्तव्यत्वेन तत्सापेक्षतयाऽप्रामाण्यमित्यादिरूपेत्यर्थः । **सन्देहलक्षणाप्रामाण्य** इति । प्रक्रमस्थविध्युद्देशगतसामान्यवाच्यक्तपदानुरोधात् औपसंहारिकार्थवादगतघृतपदं द्रवद्रव्यमात्रलक्षकं वा स्यात्, उत विध्यविरोध्यर्थवादगतविध्यपेक्षितविशेषोपनायकघृतपदमुख्यत्वानुरोधादक्तपदं (?) घृतमात्रपरं वा स्यादित्यनध्यवसायादप्रामाण्यमिति पूर्वपक्षे उपक्रमगतविध्युद्देशगतस्यापि अक्तादस्यौपसंहारिकार्थवादादेरपि बाधाभावात् वाक्यशेषवशेन घृतेनाक्ता इत्यध्यवसायात् प्रामाण्यमिति गुरुमते निर्णीतमिति भावः । **अभिधानवृत्ति**रिति । शब्दशक्तिरित्यर्थः । **तदस्मत्पक्षे समान**मिति । सिद्धेऽपि वेदप्रामाण्ये नित्यत्वे च सिद्धे प्राकृतप्रलये संप्रदायप्रवर्तकाभावेन शब्दार्थयोरनित्यत्वशङ्कायां प्राप्तायां महाप्रलयेऽपि संप्रदायप्रवर्तकपरमात्मसद्भावो वाक्यान्तरादवसीयत इति समानमिति भावः । **इयमेव प्रतिबन्दी**ति । वक्ष्यमाणेत्यर्थः । **संदेहलक्षणाप्रामाण्यनिवृत्तिरिनी**ति । चक्रकमिति शेषः । **परिहारस्तुल्य** इति । पूर्वोक्तः परिहारस्तुल्य इत्यर्थः ।

इति देवताधिकरणम् (७)

## मध्वधिकरणम् (८)

मध्वादिष्वसंभवादनधिकारं जैमिनिः १-३-३०.

"असौ वा आदित्यो देवमधु । तस्य द्यौरेव तिरश्चीनवंशोन्तरिक्षमपूपः । मरीचयः पुत्राः । तस्य ये प्राञ्चो रश्मयः ता एवास्य प्राच्यो मधुनाड्यः ऋच एव मधुकृतः । ऋग्वेद एव पुष्पम् । ता अमृता आपः । ता वा एता ऋचः एतमृग्वेदमभ्यतपन् । तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यं रसोऽजायत । तद्व्यक्षरत् । तदादित्यमभितोऽश्रयत् । तद्वा एतद्यदेतदादित्यस्य रोहितं रूपम् । अथ येऽस्य दक्षिणा रश्मयः, ता एवास्य दक्षिणा मधुनाड्यः । यजूंष्येव मधुकृतः यजुर्वेद एव पुष्पम् । ता एता अमृता आपः । तानि वा एतानि यजूंषि एतं यजुर्वेदमभ्यतपन् । तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यं रसोऽजायत । तद्व्यक्षरत् । तदादित्यमभितोऽश्रयत् । तद्वा एतद्यदेतदादित्यस्य शुक्लं रूपम् । अथ येऽस्य प्रत्यञ्चो रश्मयः, ता एवास्य प्रतीच्यो मधुनाड्यः । सामान्येव मधुकृतः । सामवेद एव पुष्पम् । ता अमृता आपः । तानि वा एतानि सामानि एतं सामवेदमभ्यतपन् । तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यं रसोऽजायत । तद्व्यक्षरत् । तदादित्यमभितोऽश्रयत् । तद्वा एतद्यदेतदादित्यस्य कृष्णं रूपम् । अथ येऽस्योदञ्चो रश्मयः, ता एवास्योदीच्यो मधुनाड्यः । अथर्वाङ्गिरस एव मधुकृतः इतिहासपुराणं पुष्पम् । ता अमृता आपः । ते वा एतेऽथर्वाङ्गिरस एतदितिहासपुराणमभ्यपतन् । तस्याभितप्तस्य यशस्तेजः — तद्वा एतदादित्यस्य परः-कृष्णं रूपम् । अथ येऽस्योर्ध्वा रश्मयः ता एवास्योर्ध्वा मधुनाड्यः गुह्या एवादेशा मधुकृतो ब्रह्मैव पुष्पम् । ता अमृता आपस्ता एव एते गुह्या आदेशा एतत् ब्रह्माभ्यतपन् । तस्याभितप्तस्य यशस्तेज — तद्वा एतद्यदेतदादित्यस्य मध्ये क्षोभत इव । ते वा एते रसानां रसाः । वेदा हि रसास्तेषामेते रसाः । तानि वा एतान्यमृतानाममृतानि ; वेदा ह्यमृताः ; तेषामेतान्यमृतानि ।

तद्यत् प्रथमममृतं तद्वसव उपजीवन्ति अग्निना मुखेन । न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति । त एतदेव रूपमभिसंविशन्ति ।

एतस्माद्रूपादुद्यन्ति स य एतदेवममृतं वेद, वसूनामेवैको भूत्वा अग्निनैव मुखेन एतदेवामृतं दृष्ट्वा तृप्यति । स य एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति । स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता, वसूनामेव तावदाधिपत्यं स्वाराज्यं पर्येता ।

अथ यत् द्वितीयममृतम् तद्रुद्रा उपजीवन्ति इन्द्रेण मुखेन । न वै देवा — रुद्राणामेवैको भूत्वा इन्द्रेणैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति — एतस्माद्रूपादुदेति । स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता द्विस्तावद्दक्षिणत उदेता उत्तरतोऽस्तमेता । अथ यत् तृतीयममृतम् । तदादित्या उपजीवन्ति वरुणेन मुखेन— द्विस्तावत् पश्चादुदेता पुरस्तादस्तमेता आदित्यानामेव तावदाधिपत्यं स्वाराज्यं पर्येता । अथ यच्चतुर्थममृतम् तन्मरुत उपजीवन्ति सोमेन मुखेन मरुतामेवैको भूत्वा सोमेनैव मुखेन स यावदादित्यः पश्चादुदेता पुरस्तादस्तमेता द्विस्तावदुत्तरत उदेता दक्षिणतोऽस्तमेता मरुतामेव तावदाधिपत्यं स्वाराज्यं पर्येता । अथ यत्पञ्चममम्रुतम्, तत्साध्या उपजीवन्ति ब्रह्मणा मुखेन — साध्यानामेवैको भूत्वा ब्रह्मणा मुखेन एतदेवामृतं दृष्ट्वा स यावदादित्य उत्तरत उदेता दक्षिणतोस्तमेता द्विस्तावदूर्ध्व उदेता अर्वाङस्तमेता साध्यानामेव तावदाधिपत्यं स्वाराज्यं पर्येता । अथ तत ऊर्ध्व उदेत्य नैवोदेता नास्तमेता एकल एव मध्ये स्थाता । तदेष श्लोकः ।

न वै तत्र स निम्लोच नोदियाय कदाचन ।
देवास्तेनाहं सत्येन मा विराधिषि ब्रह्मणा ॥ इति ।

न हवा अस्मा उदेति न निम्लोचति सकृद्दिवा हैवास्मै भवति, य एतामेवं ब्रह्मोपनिषदं वेद । तद्धैतत् ब्रह्मा प्रजापतय उवाच, प्रजापतिर्मनवे, मनुः प्रजाभ्यः । तद्धैतदुद्दालकायारुणये ज्येष्ठाय पुत्राय पिता ब्रह्म प्रोवाच । इदं वाव तज्ज्येष्ठाय पुत्राय पिता ब्रह्म प्रब्रूयात्, प्रणाय्याय वाऽन्तेवासिने । नान्यस्मै कस्मैचन । यद्यप्यस्मा इमामद्भिः परिगृहीतां धनस्य पूर्णां दद्यात्, एतदेव ततो भूय इत्येतदेव ततो भूय इति । अस्यार्थः—देवमधु । देवानां मोदनात् मध्विव मधु । नन्वादित्यस्य कथं मधुत्वमित्यत आह द्यौरेवेति । तस्य मधुनो द्यौरेव = द्युलोक एव तिरश्चीनवंशः । अन्तरिक्षं मध्वपूपः । मध्वाश्रयापूपो हि तिरश्चीनवंशलग्नस्सन् लम्बते । एवमन्तरिक्षमपि द्युलोकलग्नं लम्बत इव भातीत्यतो मध्वपूपत्वम् । मरीचयः

पुत्राः । मरीचिशब्देन मरीचिस्थास्सवित्राकृष्टा भौम्य आप उच्यन्ते । ताः पुत्रा इव पुत्राः भ्रमरबीजभूताः मधुपूपच्छिद्रस्थाः सूक्ष्मकीटा इत्यर्थः । **तस्य ये प्राञ्च** इति । तस्यादित्यस्य ये प्राञ्चो रश्मयः ता एव मधुनाड्य, = मधुच्छिद्राणि । ऋच एव मधुकृतः । ऋङ्मन्त्रा एव भ्रमराः । ऋग्वेद एव पुष्पम् । ऋग्वेद-विहितं कर्म पुष्पस्थानीयम् । ता अमृता आपः । ताः कर्मणि प्रयुक्ताः सोमाज्यपयोरूपाः, अग्नौ प्रक्षिप्ताः, पाकाभिनिर्वृत्ता अमृताः = अत्यन्तरसवत्य आपो भवन्ति । ता वा एता ऋचः पुष्पेभ्यो रसमाददाना भ्रमरा इव एतदृग्वेद-विहितं कर्म पुष्पस्थानीयमभ्यतपन् = अभितापं कृतवत्य इव । एता ऋचः कर्मणि प्रयुक्ता ऋग्भर्मन्त्रैः शास्त्राद्यङ्गभावमुपगतैः क्रियमाणं कर्म मधुनिर्वर्तकं रसं मुञ्चन्ति, पुष्पमिव भ्रमरैराचूष्यमाणम् । ततः यशस्तेज इन्द्रियं वीर्यमित्यादीनि फलान्युत्पन्नानि । तद्व्यक्षरत् = विशेषेणागमत्; गत्वा चादित्यमभितः = सवितुः पूर्वभागमाश्रितवदित्यर्थः । अयमिह निर्गलितार्थः – रोहितं शुक्लं कृष्णं परःकृष्णं= मध्ये क्षोभत इवेत्युक्तानि पञ्च रोहितादीनि अमृतानि प्रागाद्यवान्तरदेशस्थितरश्मि-नाडीतः तत्तद्वेदोक्तकर्मकुसुमेभ्यः तत्तद्वैदिकमन्त्रमधुकरैरादित्यमण्डलमानीतानि सोमाज्यपयःप्रभृतिद्रव्यनिष्पन्नानि यशस्तेजो वीर्यमिन्द्रियमित्येवमात्मकानि आदित्यमधुसंबद्धानि वस्वाद्युपजीव्यानि चिन्तयतां फलं वस्वादिप्राप्तिरित्युच्यते । अथ येऽस्य दक्षिणा रश्मयः इत्यादि स्पष्टम् । परः कृष्णम् = अतिशयेन कृष्णमित्यर्थः । गुह्या एवादेशाः = रहस्यादेशाः । कर्माङ्गविषयोपासनानि च । ब्रह्मैव पुष्पं = प्रणव एव पुष्पम् । मध्ये क्षोभत इव = चलतीव समाहितदृष्टेः दृश्यते । वसव उपजीवन्ति अग्निनैव मुखेन = अग्निप्रधानास्सन्तः उपजीवन्तीत्यर्थः । स्वाराज्यं पर्येता = अनुभवति । द्विस्तावत् = द्विगुणं काले दक्षिणत उदेता । एवमुत्तरत्राऽपि । एकलः = एकस्वभाव इत्यर्थः । न निम्लोचति = न स्तमेतीत्यर्थः ।

ननु प्रतिपाद्यविशेषे निरूपिते इन्द्रस्याधिकारोऽपि सिद्ध इति अधिकार-निरूपणार्थं नेदमधिकरणमारम्भणीयमित्यस्वरसादाह **किञ्च तत्त्वोपक्रममात्र** – इति । उपक्रमोपसंहारयोः सर्वात्मना विरोधं मन्वानश्चोदयति **कथं तर्हीति** । **अर्थि-त्वाद्यसंभवब्रह्मोपासनपरत्वेति** । यद्यप्युपक्रमोपसंहारयोर्निर्गुणनिरूपणे न विरोधः–

तथाप्युपसंहारापर्यालोचनदशोत्पन्नप्रक्रमगतादित्यवस्वादिशब्दजन्यापातप्रतीतिमवलम्ब्य पूर्वपक्षप्रतिभोद्गम इति भावः । भाष्ये **आदित्यस्यांशानां वस्वादिभिर्भुज्यमानानामिति** । नन्वादित्यांशानां वस्वादिपञ्चदेवगणोपजीव्यानां मधुविद्याया-मुपास्यत्वं चेत्, वस्वादीनां तदधिकारे काऽनुपपत्तिः? न हि स्वोपजीव्यत्वे-नान्यस्योपासनं विरुद्धम । तथा सत्युपासनमात्रोच्छेदप्रसङ्गात् । सर्वेष्वप्युपासनेषु स्वापेक्षयोत्कृष्टत्वस्योपजीव्यत्वादीनामवश्यानुसन्धेयत्वाच्च । किञ्च उपजीवकपञ्चदेव-गणान्तःपतिनां वस्वादीनां पञ्चगणोपजीव्यपञ्चामृतोपासनास्वनधिकारे सर्वेश्वरत्व-प्रकारकोपासनायां कस्यापि जन्तोरधिकारो न स्यात्; सर्वमध्ये स्वस्याप्यनुप्रविष्टत्वात् तत्कथमयं पूर्वपक्षः, कथं वा एतत्पूर्वपक्षाभ्युपगमेनैव वस्वादित्याद्यवस्थं ब्रह्म उपास्यमिति सिद्धान्त इति चेत्—उच्यते—'तं देवा ज्योतिषां ज्योतिरायुर्होपासते-ऽमृत'मिति श्रुतिबलात् रोहितादिपञ्चामृतोपासकत्वमपि न संभवतीत्यत्र तात्पर्यमिति ।

**उभयविषयपरविद्यास्विति** । जीवविशिष्टपरविषयविद्यास्वित्यर्थः । ननु प्राणविद्यायामप्यवस्थाभेदेन विरोधसमाधानस्य प्रागनुपपादितत्वात्, तस्या अप्येतदधि-करणविषयत्वं युक्तमित्यभिप्रायन् शक्तत्वाशक्तत्वप्रीणनीयत्वप्रीणयितृत्वफलप्रदत्वार्थि-त्वादिमुखेन कर्मकर्तृविरोधान्तरं च दर्शयन् पक्षान्तरमाह **यद्वा स्वयमेव स्वाभीष्ट-संपादनाशक्तेनेत्यादिना** । ननु कथं प्राणविद्यायामपि वक्ष्यमाणन्यायोपजीवनेन परिहारः। मधुविद्यायां ब्रह्मात्मकत्वेनोपासनं विवक्षितमिति हि वक्ष्यमाणन्यायः प्राणविद्यायामन-पेक्षितः । तत्र हि शरीरभूते जीवे उपासिते परमात्मा प्रीणाति, फलं च प्रयच्छतीति संभवात् न प्रीणनीयत्वप्रीणयितृत्वविरोधः, प्रीणनीयत्वस्य परात्मगत-त्वादिति समाधानस्य तत्र संभवादित्याशङ्क्य — विरोधान्तरसमाधानस्य तथा संभवेऽपि प्रकर्षाप्रकर्षगर्भविरोधस्यावस्थाभेदेनैव परिहरणीयत्वादित्यभिप्रेत्याह **प्राणविद्यां ब्रह्मात्मकत्वेनेति** । **प्रकर्षाप्रकर्षेति** । प्रकृष्टस्योपासनकर्मत्वमप्रकृष्टस्योपासनकर्तृ-त्वमिति विरोध इत्यर्थः । **ब्रह्मात्मकतया परिहारस्त्विति** । अवस्थाभेदेन परिहार इत्यर्थः । प्राणविद्यायां ब्रह्मात्मकत्वस्योपास्यकोटिनिवेशासंभवेन बद्धमुक्तावस्थाभेदेन परिहारः, मध्वादिविद्यायां तु ब्रह्मात्मकत्वावस्थातद्राहित्याभ्यामुपास्योपासकभेद इति भावः ॥

भावं तु बादरायणोऽस्ति हि १-३-३२.

भाष्ये **स्वावस्थब्रह्मोपासनेति** । स्वोपजीव्यरोहितादिपञ्चामृतावच्छिन्न-ब्रह्मोपासनसंभव इत्यर्थः ; न तु 'वसव उपजीवन्ती'त्यत्र वसुशब्दस्यैव वस्ववस्थब्रह्म-परत्वमिति मन्तव्यम् ; तथार्थकल्पने प्रमाणाभावात् । अप्रासार्थ-प्यर्थं किञ्चिदा-श्रयणरूपस्योपजीवनस्य वस्ववस्थब्रह्मण्यसंभवाच्च । 'वसूनामेवैको भूत्वे'त्यत्र एकस्मिन् ब्रह्मणि बहुत्वसापेक्षनिर्धारणस्य वा, उपासितुः ब्रह्मभावापत्तेर्वा असंभवाच्च । अत एव चोत्तरत्र, 'वस्वादिभोग्यभूतादित्यांशस्य विधीयमानमुपासन' मिति भाष्यमिति द्रष्टव्यम् । **अब्रह्मोपासनपरत्वेन वैयर्थ्यख्यानमिति** । "न ह वा अस्मा उदेति, न निम्रोचती" ति ब्रह्मप्राप्तिकथनं वस्वादिभावद्वारा क्रममुक्तिपरम् ; ब्रह्मोपनिषच्छब्दोऽपि वेदोपनिषत्परं इति व्याख्यानं क्लिष्टार्थकत्वादनादरणीयमित्यर्थः । **उपास्यत्वं च वस्वादिभोग्यादित्यांशमात्रस्येति** । न च वसुसमुदायस्योपास्यत्वमिति पूर्वग्रन्थ-विरोध इति वाच्यम् ; भोक्तृत्वेन वस्वादिसमुदायस्योपास्यत्वम् ; भोग्यत्वेनादित्यां-शस्योपास्यत्वमिति विरोधाभावात् । **तथानुसन्धानमेव प्रयोजनमितीति** । ननु यद्विद्याप्रकरणे देवोपास्यत्वदेवफलप्रदत्वादिकं न श्रुतम्, न तत्र तस्यानुसन्धेयत्वम् । यत्र तु श्रुतम्, तत्र देवताविग्रहादिप्रसाधनाभावेऽपि देवतोपास्यत्वं संभवत्येवेति देवोपास्यत्वानुसन्धाने इदमधिकरणद्वयं कथमुपयुज्यत मिति चेत्—सत्यम् । अनारोपित-देवोपास्यत्वानुसन्धानार्थमिदं निरूपणमिति द्रष्टव्यम् । इदमप्युपलक्षणम्—देवता-नामसिद्धौ मधुविद्यादीनां तत्तद्देवतापदप्राप्तिः फलं न भवेत् । वरुणग्रहनिर्मो-कादिवत् बाधितस्य श्रुतत्वेऽपि विधेयक्रियाफलत्वायोगात् । किं त्वन्यदेव फलं कल्प्यं स्यात् । अन्तरादित्यविद्यादिषु आदित्यादिदेवताद्यन्तर्वर्तित्वेन ब्रह्मोपासनं न सिध्येत् । ज्योतिर्मण्डलाद्यन्तर्वर्तित्वेनैव तदुपासनं सिध्येत् । उपकोसलविद्यायां पञ्चाग्निविद्यायां च अर्चिराद्यभिमानिदेवताविशेषाः मार्गवर्तित्वेन न चिन्तनीयाः स्युः । अर्चिरादीन्यचेतनान्येव तथा चिन्तनीयानि स्युः । तथा, "तांस्तत्र देवा यथा सोमं राजानमाप्यायस्वापक्षीयस्वेति भक्षयन्ति, एवमेनांस्तत्र भक्षयन्ति", "यथा ह वै बहवः पशवो मनुष्यं भुञ्ज्युः, एवमेकैकः पुरुषो देवान् भुनक्ति । एकस्मिन्नेव पशावादीयमाने अप्रियं भवति, किमु बहुषु । तस्मादेषां तन्न प्रियम्, यदेत-

न्मनुष्या विदुः" इत्यादिश्रुतिषु कर्मदेवभावं प्राप्तानां तमप्राप्तानां च मनुष्याणां यावज्जीवमाजानदेवभृत्यभावोक्त्या वैराग्यं न सिद्ध्येत्। एतादृशस्याभिमतस्य सिद्धिः प्रयोजनं देवनामद्भुत्वप्रसाधनस्य। "तद्यथेह कर्मचितो लोकः क्षीयते, एवमेवामुत्र पुण्यचितो लोकः क्षीयते", "जायस्व म्रियस्वेत्येतत् तृतीयं स्थानम्, तेनासौ लोको न संपूर्यते — तस्मात् जुगुप्सेत" इत्यादिमन्त्रार्थवादैः वैराग्यसिद्धिश्च फलमित्यपि द्रष्टव्यम्॥

इति मध्वधिकरणम् (८)

---

## अपशूद्राधिकरणम् (९)

शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि १-३-३३.

**सङ्गतिरित्याहेति**। सङ्गतिरित्यनिपयन्नाहेत्यर्थः। **तदुपसंहारेति**। उपसंहारः=अनुष्ठानम्। **नैरपेक्ष्योत्तम्भकतयेति**। ननु शूद्रेत्यामन्त्रणपूर्वकमितिहासपुराणश्रवणादर्शनेन कथं तस्य नैरपेक्ष्योत्तम्भकत्वम्। अतः शूद्रेत्यामन्त्र्य ब्रह्मविद्योपदेशात्, शूद्रेत्यामन्त्रणं शूद्रस्य ब्रह्मविद्याधिकारे साक्षादेव लिङ्गमित्येव सुवचमिति चेत् — सत्यम्। मार्गान्तरस्य मार्गान्तरादूषकत्वात् तथोक्तमिति द्रष्टव्यम्। **वेदादेव ब्रह्मावगतिरिति**। ब्रह्मविद्यानुष्ठानोपयुक्तब्रह्मावगतिरित्यर्थः; एवमुत्तरत्रापि; इतिहासपुराणादिना ब्रह्मावगतिमात्रस्य सिद्धान्तिनाऽपि प्रत्याख्यातुमशक्यत्वादिति द्रष्टव्यम्। विद्याशब्दं व्याचष्टे **विद्या=वेदविद्येति**। **अत्राध्ययनमिति** क्वचित्पाठो दृश्यते। स तु लेखकस्खलनकृतः। अध्ययनजन्यस्य कर्मानुष्ठानौपयिकाङ्गकलापादिज्ञानस्य वा वेदस्य वा विद्याशब्देन ग्रहणार्हतया अध्ययनस्य विद्याशब्देन ग्रहणानर्हत्वादिति द्रष्टव्यम्। यद्वा **विद्याभावादित्यस्य** अध्ययनसंस्कृतविद्याराहित्य[परत्व?]द्योतनाय **अध्ययन**पदमुपात्तम्। अग्निशब्दं व्याचष्टे **अग्निः आहित** इति। आधानसंस्कृताहवनीयादिरित्यर्थः। अत्र क्रमस्याविवक्षितत्वात् अग्निविद्याशब्दयोः व्युत्क्रमेण व्याख्यानं न दोष इति द्रष्टव्यम्। **ननु तस्मात् शूद्र** इति। ननु कथमस्याः शङ्कायाः उत्थानम्; प्रागेव साक्षात् परंपरया वा ब्रह्मोपासने अग्नि-

विद्यासाध्यत्वस्य निरस्तत्वादिति चेत् — अत्र केचित् ,—'तस्मात् शूद्रो यज्ञेऽनवक्लृप्त इति वाक्यस्य शूद्रे अग्निविद्यासाध्ययज्ञमात्रानधिकारप्रदर्शकत्वे तस्यापशूद्राधिकरणन्यायसिद्धत्वेन वाक्यवैफल्यप्रसङ्गात्, 'यज्ञेऽनवक्लृप्त' इति वाक्यं कर्मविद्यासाधारण्येण वैदिककर्ममात्रे शूद्रस्याधिकारनिषेधपरं किं न स्यात् इत्याशङ्क्य प्राप्तार्थप्रतिपादकस्य वाक्यस्य वैफल्यप्रसङ्गेन [तस्य] लक्षणया अप्राप्तार्थप्रतिपादकत्वे अभ्युपगम्यमाने अनुवादमात्रोच्छेदप्रसङ्गात्, "ये पुरोदञ्चो दर्भा" इति वाक्यस्य, 'अग्रवन्त्युदगग्राणी' ति स्मृतिप्राप्तानुवादित्ववत् 'शूद्रो यज्ञेऽनवक्लृप्त' इति वाक्यस्यापि अपशूद्राधिकरणन्यायप्राप्तार्थानुवादित्वमेव वक्तव्यमित्यभिप्रयन्नाह **तस्मात् शूद्रो यज्ञेऽनवक्लृप्त इत्यपी**त्येवं भाष्यग्रन्थावतारिकामाहुः । **यावद्वचनता स्या**दिति । श्रुत्यैकसमधिगम्यो ह्यर्थो यथाश्रुतिप्रतिपत्तव्यः । अयं तु न्यायसिद्धोर्थः । ततश्च मूलभूतन्यायस्य यावद्विषयकत्वम्, तावद्विषयकत्वं मूलिनोपि वाक्यस्य वक्तव्यमिति भावः । **परिसङ्ख्या वे**ति । यज्ञ एवानवक्लृप्त इत्येवं परिसङ्ख्या वा नेत्यर्थः । **उपासनाधिकारोनुमतो भवती**ति । अप्रतिषिद्धमनुमतमिति न्यायादिति भावः । ननु 'श्रावये' दिति ब्राह्मणस्य श्रावणानुज्ञायां सत्यामपि शूद्रस्य श्रवणानुज्ञाया अदर्शनात् कथमेतदित्यत आह **प्रयोज्याभाव** इति । **प्रयोज्योपादानमर्थसिद्ध**मिति । श्रावणविधिना, सर्वेऽपि वर्णाःशृणुयुरिति श्रवणविधिराक्षिप्यत इति भावः । **प्रयोज्यव्यापारविधि**रिति । यथा अन्नाद्यकामं याजयेदित्यत्र याजनं न विधीयते ; रागप्राप्तत्वात् ; किन्तु यजनमेव — एवं श्रावयेदित्यत्राऽपि श्रावणस्य रागप्राप्तत्वात् श्रवण एव विधिः । अतो न श्रवणस्यार्थसिद्धत्वमिति शङ्कार्थः ।

**अधिकारिविशेषणाश्रवणा**दिति । यद्यपि चतुरो वर्णानितिवर्णरूपाधिकारिविशेषणश्रवणमस्ति—तथाऽपि अन्नाद्यकामं याजयेदित्यत्र याजनस्य रागप्राप्ततया विधानासंभवेन यजनविधिपरत्वेन(त्वेऽपि?) श्रावणस्य, 'न चास्योपदिशेद्धर्मं' मित्यादिना प्रतिषिद्धस्य, 'श्रावयेच्चतुरो वर्णा' नित्यस्य प्रतिप्रसवरूपत्वसंभवे तत्परित्यागेन श्रवणविधिमात्रपरत्वस्यान्याय्यत्वादिति भावः । **एतदभिप्रायेणे**ति । श्रावणविध्याक्षिप्तश्रवणविधिविषयत्वाभिप्रायेणेत्यर्थः । नन्वस्तु श्रवणम् ; अथाप्युपासनोपयुक्त-

निश्चयरूपज्ञानस्य विचारमन्तरेणेतिहासपुराणश्रवणमात्रेणासिद्धेः शूद्रस्य विचार-प्रयोजकाभावात् कथं सामर्थ्यमित्याशङ्क्य इतिहासपुराणश्रवणस्य दृष्टार्थत्वेनानुष्ठानौ-पयिकज्ञानार्थतया तस्य तद्विचारमन्तरेणासिद्धेः त्रैवर्णिकानां वेदान्तविचारवत् शूद्रस्येति-हासविचारः सिद्ध्यतीत्यभिप्रयन्नाह **यदा चैवमि**ति । शङ्कते **यदि ब्रूया**दिति । [यदि ब्रूयात्] तदा किमुत्तरमिति चेदित्यध्याहृत्य योजना द्रष्टव्या । **श्रवणफलनिर्देशा**दिति । अविहितस्य श्रवणस्य फलश्रवणासंभवात्, श्रवणे विधिरभ्युपगम्य इति भावः । तर्हि शूद्रस्य कीर्तनमपि स्यादिति शङ्कां वारयति **श्रवणकीर्तने** हीति । ननु फलनिर्देशान्यथा-नुपपत्त्या अस्तु श्रवणस्य विधेयत्वम्; नैतावताऽर्थज्ञानफलकत्वसिद्धिः; नामसहस्रमात्र-श्रवणफलनिर्देशतयाप्युपपत्तेरिति चेन्न — श्रवणस्य फलनिर्देशान्यथानुपपत्त्या विधेयत्व-सिद्धौ श्रवणस्य ज्ञानरूपदृष्टार्थत्वे संभवति पापक्षयरूपादृष्टार्थत्वकल्पनाया अन्याय्य-त्वात् अर्थज्ञानपर्यन्तत्वमिति भावः । **अनधिकारो निर्णीतश्चे**दिति । अध्ययन-गृहीतवेदजन्यज्ञानस्यैव वैदिककर्मानुष्ठानोपयुक्तत्वम्; नेतरस्येति पूर्वतन्त्रापशूद्राधि-करण एव निर्णीतत्वादित्यर्थः । **अपशूद्राधिकरणन्यायाप्रवृत्ता**विति । **युक्तिमाहे**-त्यन्वयः । **तत्रापरिहृता**मिति । पूर्वतन्त्रापशूद्राधिकरणे अपरिहृतामित्यर्थः ।

**निर्वाह एव सौत्र** इत्यस्यानन्तरं तस्मादिति शेषः पूरणीयः । **अलौकिक-सामर्थ्याभावा**दिति । अध्ययनगृहीतस्वाध्यायजन्यज्ञानरूपशास्त्रीयहेत्वभावादित्यर्थः । भाष्ये, **यथैव हि वर्णिकविषयाध्ययनविधिसिद्धस्वाध्यायसंपाद्यज्ञानलाभे-ने**ति । ननु स्वाध्यायाध्ययनविधौ त्रैवर्णिकोऽधिकारी न श्रूयत इति चेत् — सत्य-मध्ययनविधौ त्रैवर्णिकोऽधिकारी न निर्दिष्टः — तथाप्युपनयनविधौ, "वसन्ते ब्राह्मण-मुपनयीत, ग्रीष्मे राजन्यम्, शरदि वैश्यम्" इति त्रैवर्णिकाधिकारित्वश्रवणात् त्रयाणामेव वर्णानामुपनयनमिति सिद्धम् । ततश्च स्वाध्यायविधिरनिर्दिष्टकर्तृकः कर्तारमपेक्षमाणः प्रकृतोपनयनसंस्कृतान्, 'किमर्थं वयमाचार्यसमीपं नीताः' इति प्रयोजनमपेक्षमाणान् ब्राह्मणादीनेव कर्तृत्वेन स्वीकुर्वन् तेषामेवाध्ययनं विधत्ते, न शूद्रस्येति अध्ययन-विधेरपि त्रैवर्णिकविषयत्वं युज्यत इति द्रष्टव्यम् । अत्र विधिसिद्धत्वं स्वाध्यायस्य विशेषणम्; न तु तत्सम्पाद्यज्ञानस्य; सिद्धान्ते अध्ययनविधेरक्षरराशिग्रहणमात्र-विश्रान्तत्वेन अर्थज्ञानफलकत्वाभावात् । नन्वध्ययनविधेरर्थज्ञानपर्यन्तत्वे हि वर्ण-

विशेषादिग्रहणमन्तरेणाविशेषप्रवृत्ता अपि वैदिककर्मविषयः कर्मानुष्ठानार्थमनुष्ठेयार्थ-ज्ञानं नाक्षिपन्ति । यथा क्रतुविधयो याजकान् अपेक्षमाणाः स्ववर्णोचितद्रव्यार्जनोपाय इति याजने स्वत एव प्रवृत्तान् ब्राह्मणान् आसाद्य निर्वृण्वन्ति, न त्वध्ययनवत्त्वेपि क्षत्रियवैश्ययोर्याजकत्वमाक्षिपन्ति ; ततश्च, 'याजनाध्यापनप्रतिग्रहैर्ब्राह्मणो धनमार्जये' दिति द्रव्यार्जनोपायनियमविधिबलात् ब्राह्मणानामेवार्त्विज्यमिति नियमः — तथा अध्ययनविधिबलादध्ययनलब्धानुष्ठेयार्थज्ञानवतामेव वैदिककर्मानुष्ठानमिति नियमलाभ इति शक्यते वक्तुम् । अध्ययनविधेरक्षरराशिग्रहणमात्रविश्रान्तत्वे कस्यापि विधि-लब्धज्ञानस्याभावात् ज्ञानाक्षेपस्यच सर्वत्र संभवात् कथमपशूद्रमधिकारः स्यादिति चेत्—सत्यमस्मन्मते ज्ञानं न विधिसिद्धमिति । अथापि हेतुसाकाङ्क्षं कर्मानुष्ठानौपयिकं ज्ञानं प्रयोजनान्तरासंयुक्तं, प्रयोजनसाकाङ्क्षम्, अध्ययनसंस्कृतं स्वाध्यायमेव हेतु-तया स्वीकरोति ; न तद्व्यतिरिक्तं ज्ञानोपायान्तरम् । ततश्चाध्ययनजन्यज्ञानमेव क्रत्वङ्गमिति पर्यवस्यति । यथा विहाराधिकरणे ( १२ - २ - १ ) असंयुक्तो-त्पन्नानामाधाननिष्पाद्याहवनीयादीनां प्रयोजनसाकाङ्क्षाणां लौकिकेष्वपि पचन-प्रकाशनेषु विनियोगोऽभ्युपगन्तव्य इति पूर्वपक्षः प्रवर्तितः, तेन न्यायेनाध्ययन-संस्कृतस्वाध्यायस्य प्रयोजनसाकाङ्क्षस्य हेतुसाकाङ्क्षे कर्मौपयिकज्ञाने विनियोग इति सिध्यति । ततश्चाधीतवेदानामेव त्रैवर्णिकानां कर्मस्वधिकार इति सिद्धौ न सिद्धान्तेऽनुपपत्तिः ।

**अध्ययनव्रतोपनयनादय उच्यन्त** इति । अध्ययनाङ्गं व्रतं अध्ययन-व्रतम् ; अध्ययनस्य **उपाय**शब्देनोपात्तत्वादिति द्रष्टव्यम् । यद्वा **उपाय**शब्दो वेदपरः, **आदि**शब्देन अध्ययनं गृह्यत इत्यभिप्रेत्यैतदुक्तमिति द्रष्टव्यम् । अत्र चो**पनयन**पदं लेखकप्रमादादागतम् । ब्राह्मणादिवर्णमात्रविषयतयोत्पन्नस्योपनयनस्य शूद्रे आक्षेपाप्रसक्तेः । अपशूद्राधिकरणे हि द्वेधा पूर्वपक्षो वर्णितः—अनारभ्याधीतमध्य ध्ययनं क्रत्वनुष्ठानौपयिकज्ञानोपयोगित्वात् क्रत्वङ्गम्, क्रतवश्चाविशेषेण चातुर्वर्ण्यमधि-कुर्वाणाः चतुर्णामध्ययनं प्रयुञ्जते । तत्र च त्रयाणामुपनयनसंस्कारोऽध्यनाङ्गतया विधीयते । चतुर्थस्तु संस्कारविध्यभावात् अनुपनीत एव स्वयमेवोपगम्या-धीत्य विद्यां लभताम् । अथवा, अनारभ्याधीतमध्ययनं पुरुषार्थमेव ; न

कत्वङ्गम् । अतः तदभावेऽपि क्रतोर्वैगुण्याभावादनधीतवेद एव शूद्रः पुस्तक-निरीक्षणादिना विद्यां लब्ध्वाऽधिक्रियतामिति । ततश्च पक्षद्वयेऽपि शूद्रे ब्राह्मणादि-संयुक्तोपनयनाक्षेपाप्रसक्तेरिति ध्येयम् । **नापेक्षन्त इत्यर्थ** इति । शूद्रे ज्ञानं तदुपायादींश्च नाक्षिपन्तीत्यर्थ इत्यर्थः । **अध्ययनस्यापि प्रयोजकतयेति** । कर्मविधीनामेव शूद्रगताध्ययनप्रयोजकत्वकल्पनायां गौरवमित्यर्थः । **सौधन्वत्वमनु कूललिङ्ग**मिति । 'ऋभवो नेमिं नमन्ती'त्यादिमन्त्रलिङ्गात् नेमिनिर्माणचतुरस्य ऋभु-शब्दवाच्यत्वावगमात् 'सौधन्वना ऋभव' इति मन्त्रे तत्समानाधिकरणतया सौधन्व-शब्दस्य श्रवणात् 'पत्न्यां तु जातो वैश्यानां(यां?) सुधन्वाचार्य एव चे'त्याचार्यऋभु-शब्दापरपर्यायसौधन्वशब्दितजातिविशेषस्य ग्रहणमिति भावः । नन्वस्यार्थस्य, 'शुग-स्ये'ति सूत्राभिप्रेतत्वे तद्व्याख्यानसमय एव वाच्य इत्याशङ्क्याह इह **प्रतिपत्ती**ति । **न हि व्याख्येयानधिकारिण** इति । नन्वितिहासपुराणादिकं वेदवाक्यप्रतीकग्रहण-पूर्वकम्, अस्य पदस्यायमर्थ इत्येवंरूपं व्याख्यानं न भवति, येन वेदसापेक्षता स्यात् । अतोऽनधीतवेदस्यापीतिहासपुराणादिना स्पष्टार्थावगतौ नानुपपत्तिः । अत एवाङ्गतया विहितस्य स्वतन्त्रतयेत्याद्युत्तरयुक्तिरप्यनुपपन्ना ; शूद्रश्रावणविध्यनुरोधेन स्वतन्त्रतयो-पादानस्याप्यङ्गीकर्तव्यत्वात । शूद्रश्रावणस्य दृष्टार्थत्वसंभवे सति अदृष्टार्थत्वकल्पनाया अन्याय्यतया अनुष्ठेयोपासनानुष्ठानाद्यर्थत्वस्यैव युक्तत्वादिति चेत् — सत्यम् ; "नाशुभं प्राप्नुयात्किञ्चित् सोऽमुत्रेह च मानवः" इत्यादिषु पापक्षयफलकत्वस्यैव स्पष्टमाम्नानेन तस्यैव फलत्वात् । अत एवोक्तम्, **पुण्यकथावगतिद्वारेण पापक्षयफलार्थमि**तीति द्रष्टव्यम् ।

**तदविरोधस्ये**ति । वेदार्थविशदीकरणहेतुतयैव तदधिगमविधायकशास्त्रा-विरोधस्येत्यर्थः । **श्रवणविध्यवैयर्थ्याच्चे**ति । शूद्राणामितिहासपुराणश्रवणस्य निष्फलत्वे श्रवणविधेर्वैयर्थ्यप्रसङ्गादित्यर्थः । **शौनकवचनविरोधा**दिति । ननु वचन-विरोधाद्विदुरादीनां तथास्तु नाम, तथा पूर्वजन्मानुष्ठितकर्मभिर्विशुद्धचित्तानामुत्पन्न-ब्रह्मविविदिषाणां प्रारब्धवशात् शूद्रजन्म प्राप्तानामितिहासपुराणावगतब्रह्मस्वरूप-तदुपासनप्रकाराणां कुतो न ब्रह्मविद्यायामनधिकारः ? न चोक्तरीत्या यज्ञादिकर्मण्य-प्यधिकारः स्यादिति शङ्क्यम् — "तस्माच्छूद्रो यज्ञेऽनवक्लृप्त" इति यज्ञादौ विशेष-

निषेधदर्शनात् उपासने तादृशनिषेधादर्शनात्, नारदस्य प्राचीनजन्मनि यतिभिरुपदिष्टाच्युतोपासनायाम्, शूद्रोचितसंस्कारपूर्वकं शैवपाशुपतपाञ्चरात्राद्युपदिष्टासु प्रणवरहिताष्टाक्षरपञ्चाक्षरमन्त्रकरणकविष्णुशिवोपासनासु अधिकारो न निवार्यः। न चैतदधिकरणविरोधः; शूद्रस्येतिहासादिमूलाधिकारसत्त्वेऽपि वेदमूलसंवर्गविद्याद्यधिकारनिवारणार्थत्वादस्याधिकरणस्य। अत एव वेदश्रवणादिप्रतिषेधः सूत्रकृताप्युपन्यस्त इति चेत् — उच्यते — विशिष्य विहितेषु शैवाद्यागमनिर्दिष्टोपासनेषु न शूद्राद्यधिकारं प्रतिक्षिपामः; अपि तु सामान्यतः श्रुतेषु ब्रह्मोपासनेषु यज्ञादिष्विव नाधिकार इत्येव[हि]साधयामः। न च, 'तस्मात् शूद्रो यज्ञेनऽक्लृप्त' इति वचनात् यज्ञानधिकारेऽपि उपासने कुतो नाधिकार इति शङ्क्यम् — तस्य वचनस्यापशूद्राधिकरणन्यायसिद्धार्थानुवादित्वात्; न्यायस्य च कर्मब्रह्मोपासनसाधारण्यात्। किञ्च, "नास्याधिकारो धर्मेऽस्ति नाधर्मात् प्रतिषेधनम्" इति विशिष्य विहितेतरेषु धर्मेषु शूद्रस्यानधिकार इति मनुस्मरणादिति द्रष्टव्यम्। अतः शूद्रस्य न ब्रह्मविद्याधिकारः।

**शोककारणं शोककार्यं च हेतुत्वेनाहेति**। कार्यकारणयोर्द्वयोरपि लिङ्गविधया ज्ञापकत्वसंभवेन हेतुत्वसंभवात् सूत्रे ज्ञापकहेतौ पञ्चमी। ततश्चानादरश्रवणाद्रवणरूपलिङ्गाभ्यां कारणकार्यरूपाभ्यां ज्ञाप्यमानेत्यर्थः। अनादरश्रवणजन्या आद्रवणहेतुभूता शुक् शूद्रेत्यामन्त्रणेन सूच्यत इति सूत्रार्थ इति भावः। भाष्ये **शुचेर्दश्चेतीति**। अस्य सूत्रस्य धातुवृत्तौ शूद्रशब्दव्युत्पादनावसरे उदाहृतत्वात् प्रक्षिप्तत्वं वदन्तो निराकृता इति वेदितव्यम्। **आद्रवणमप्यन्तर्भाव्येति**। शुचा द्रवतीति शूद्रशब्दव्युत्पत्तिः परैरादृतेति भावः। ननु हंसोक्तानादरश्रवणं जानश्रुतेः कथं शोकहेतुः, महात्मनां हि येन केनापि कृता निन्दा शोकाय नावकल्पते; प्रत्युत तोषायैव। स्मरन्ति च मन्वादयः, "अवमानात् तपोवृद्धिः संमानाच्च तपःक्षयः। अमृतस्येव काङ्क्षेत अवमानस्य सर्वतः" इत्यादि। प्रत्युत हंसे हितप्रवर्तकत्वं जानतः तोष एव युक्त इति चेत्—सत्यम्—अथाप्येतावन्तं कालमीदृशीं विद्यां नाध्यगमम्। अत एव पितृस्थानीयेन हंसेन निन्दितोऽस्मीति शोको भवत्येव। अतस्तेनाद्रवणमप्युपपद्यत एव। इतरथा पित्रादिकृतनिन्दायाः शोकाहेतुत्वे तन्निन्दाया अकार्यकरत्वं स्यादित्यपि द्रष्टव्यम्।

**वैशद्यार्थमुपन्यस्यतीति**। एवं हि श्रुतिः, "जानश्रुतिर्ह पौत्रायणः श्रद्धादेयो बहुदायी बहुपाक्य आस। स ह सर्वत आवसथान् मापयाञ्चक्रे, सर्वत एव मेऽन्नमत्स्यन्तीति। अथ ह हंसा निशायामतिपेतुः। तद्धैवं हंसो हंसमभ्युवाद—भोभो अयि भल्लाक्ष! भल्लाक्ष! जानश्रुतेः पौत्रायणस्य समं दिवा ज्योतिराततम्। तन्मा प्रसाङ्क्षीः। तत् त्वा मा प्रधाक्षीदिति। तमु ह परः प्रत्युवाच, कम्वर एनमेतत् सन्तं सयुग्वानमिव रैक्वमात्थेति यो नु कथं सयुग्वा रैक्व इति। यथा कृतायविजितायाधरेऽयाः संयन्ति; एवमेनं सर्वं तदभिसमेति, यत्किञ्च प्रजाः साधु कुर्वन्ति। यस्तद्वेद यत्सवेद स मयैतदुक्त इति। तदु ह जानश्रुतिः पौत्रायण उपशुश्राव। स ह सञ्जिहान एव क्षत्तारमुवाच— अङ्गारे सयुग्वानमिव रैक्कमात्थेति। यो नु कथं संयुग्वा रैक इति— स ह क्षत्तान्विष्य नाविदमिति प्रत्येयाय। तं होवाच यत्रारे ब्राह्मणस्यान्वेषणा तदेनमृच्छे(मच्छे)ति। सोधस्तात् शकटस्य पामानं कषमाणमुपोपविवेश। तं हाभ्युवाद— त्वं नु भगवःसयुग्वा रैक इति। अहं ह्यरा इति ह प्रतिजज्ञे। स ह क्षत्ता अविदमिति प्रत्येयाय। तदु ह जानश्रुतिः पौत्रायणः षट्शतानि गवां निष्कमश्वतरीरथं तदादाय प्रतिचक्रमे। तं हाभ्युवाद— रैके! इमानि षट्शतानि गवामयं निष्कोऽयमश्वतरीरथः। अनु म एतां भगवो देवतां शाधि यां देवतामुपास्स इति। तमु ह परः प्रत्युवाच अह हारेत्वा शूद्र! तवैव सह गोभिरस्त्विति। तदु ह पुनरेव जानश्रुतिः पौत्रायणः सहस्रं गवां निष्कमश्वतरीरथं दुहितरं तदादाय प्रतिचक्रमे। तं हाभ्युवाद— रैकेदं सहस्रं गवामयं निष्कोऽयमश्वतरीरथः, इयं जाया, अयं ग्रामः, यस्मिन्नास्से। अन्वेव मा भगवः शाधीति। तस्या ह मुखमुपोद्गृह्णन्नुवाच आजहारेमाः शूद्रानेनैव मुखेनालापयिष्यथा इति। ते हैते रैक्कपर्णा नाम महावृषेषु, यत्रास्मा उवास। तस्मै होवाच—"

जनश्रुतस्यापत्यं जानश्रुतिः। पुत्रस्य पुत्रः पौत्रः। तस्यापत्यं पौत्रायणः। श्रद्धादेयःश्रद्धापुरस्सरं देयमस्य श्रद्धादेयः। बह्वस्य गेहेऽन्नं पक्तव्यमतो बहुपाक्यः। सर्वतः = सर्वासु दिक्षु अन्नपानादिपूर्णानि अतिथ्यभ्यागतानां वासस्थानानि निर्मितवान्, सर्वत एत्यातिथयः मेऽन्नं भोक्ष्यन्त इत्यभिप्रायेणेत्यर्थः। भल्लाक्ष भल्लाक्षेत्यनेन विपरीतलक्षणया मन्दलोचनेति संभ्रमेण द्विवारं संबोधनम्।

यथा कृतायविजितायेति । कृतनामधेयोऽयः द्यूतशास्त्र(समय)प्रसिद्धः चतुरङ्कः । तत्र विजिताय जितवते अधरे अयाः त्रिद्व्येकाङ्काः, त्रेता–द्वापर–कलिनामानः यथा संयन्ति अन्तर्भवन्ति – चतुरङ्के कृतनामके अये त्रिद्व्येकाङ्कानां तत्र सत्त्वेनान्तर्भावादित्यर्थः–। यस्तद्वेद यत्स वेदेति । सः रैक्वः यद्वेद्य वेद, तदन्योऽपि यो वेद, तमप्यभिसमेतीत्यनुषङ्गेण योजना । स ह सञ्जिहान एव = तल्पं त्यजन्नेवेत्यर्थः । यत्रारे ब्राह्मणस्यान्वेषणेति । अरे ! ब्राह्मणस्य = ब्रह्मविदः यत्रारण्ये नदीपुलिनादौ विविक्ते अन्वेषणा = मार्गणं भवति । तत्रैनं रैक्वमृच्छ = मृगयस्वेत्यर्थः । पामानं कषमाणमिति । पामानं कण्डूयमानमित्यर्थः । निष्कं = हारम् । अश्वतरीरथम् = अश्वतरीभ्यां युक्तं रथम् । तदा = तस्मिन् काले गृहीत्वा रैक्वसमीपं गतवानित्यर्थः । अह हारेत्वा शूद्रेति । अहेति निपातः, हारसहित इत्वा रथः हारेत्वा । गोभिः सह तवैवास्तु, किमनेन मम सन्तोषः? कलत्रहीनस्य मम एतद्धनरक्षणे वा का शक्तिः? किं तव वाऽल्पधनदानेन विद्या प्रतिष्ठिता भवेदिति भावः । तस्या ह मुखमुपोद्गृह्णन् उवाचेति । तस्याः जायार्थमानीतायाः राज्ञो दुहितुः मुखं द्वारतां विद्याया दाने तीर्थं जानन्नुक्तवानित्यर्थः । "ब्रह्मचारी धनदायी मेधावी श्रोत्रियः प्रियः । विद्यार्थे वाऽपि विद्यां यः प्राह तीर्थानि षण्मम" इति विद्याया वचनात् । आजहारेमाश्शूद्रानेनैव मुखेनालापयिष्यथा इति । इमाः दक्षिणाः आजहर्थ । अनेनैव मुखेन विद्याग्रहणोपायेन वाचयिष्यसीत्यर्थः । ते हैते रैक्वपर्णा नाम महावृषे[क्षे]षु यत्रास्मा उवासेति । ते हैते ग्रामाः रैक्वपर्णनामविख्याताः महावृषे[क्षे]षु देशेषु यत्र येषु ग्रामेषु उवास उषितवान् रैक्वः, तान् ग्रामान् तस्मै रैक्वाय ददौ । तदनन्तरं तस्मै विद्यामुपदिदेशेत्यर्थः ।

## क्षत्रियत्वगतेश्च १-३ ३४.

ननु महाभारते सूतात्मजमात्मानं मन्यमानस्य कर्णस्य दानपतित्वराज्याधिपतित्वादीनां श्रवणात्, अवेष्टिनये वार्तिके, 'राज्यमविशेषेण चत्वारो वर्णाः कुर्वाणा दृश्यन्त' इत्युक्तेः दानपतित्वं शूद्रस्यापि संभवति । न च, "शक्तेनापि च शूद्रेण न कार्यो धनसञ्चयः । शूद्रो हि धनमासाद्य ब्राह्मणानेव बाधते" इति निर्धनत्वश्रवणात् कथमस्य दानपतित्वमिति वाच्यम्–व्यासस्मृतौ शूद्रप्रकरणे, 'राज्ञा वा समनुज्ञातः

कामं कुर्वीत धार्मिकः । पापीयान् हि धनं लब्ध्वा वशे कुर्यात् गरीयसः' इति धार्मिकशूद्रस्य धर्मार्थं धनार्जनस्य अनुज्ञातत्वादिति चेन्न, बहुदायित्वादीनां कदाचित् शूद्रे संभवेऽपि क्षत्तृप्रेषणस्य, रैक्वाध्युषितग्रामाणां तस्मै दानस्य च क्षत्रियधर्मराज्याधिपत्यसाध्यस्य तत्रासंभवात् । राज्यपालनं हि क्षत्रियस्य वृत्तिः, आपद्वृत्तित्वेनापि ब्राह्मणस्यैव संभवात् । 'अजीवंस्तु यथोक्तेन ब्राह्मणः स्वेन कर्मणा । जीवेत् क्षत्रियधर्मेण स ह्यस्य प्रत्यनन्तरः । यो मोहादधमो भूत्वा जीवेदुत्कृष्टकर्मणा । तं राजा निर्धनं कृत्वा क्षिप्रमेव प्रवासयेत्" इत्यादिस्मरणात् राज्याधिपत्यस्याशास्त्रीयत्वात् । इतिहासपुराणादिषु दर्शितस्याक्षत्रियाणामपि राज्यपरिपालनस्याशास्त्रीयतयाप्युपपत्तेः प्रकृते शास्त्रानिषिद्धराज्याधिपत्यग्रहणसंभवे निषिद्धग्रहणस्यान्याय्यत्वात् । जानश्रुत्यधिष्ठितराज्ये रैक्वस्य वासप्रतिपादनाच्च तस्यक्षत्रियत्वमभ्युपगन्तव्यम् । "न शूद्रराज्ये निवसेत् न पाषण्डजनैर्वृते" इति शूद्रराज्यस्य निषिद्धत्वादित्यपि द्रष्टव्यम् ।

## उत्तरत्र चैत्ररथेन लिङ्गात् १-३-३५.

**त्रैवर्णिकत्वलिङ्गमित्यर्थसिद्धमिति** । "सार्ववर्णिकभैक्षचरणमभिशस्तपतितवर्जम्" इति गौतमस्मरणस्य त्रैवर्णिकालाभविषयतया व्याख्यातत्वात् नानुपपत्तिरिति द्रष्टव्यम् । **जातिद्वयसंबन्धितयावगतायामिति** । विद्यायामिति शेषः **कापेयसहपाठादित्यर्थ** इति । सहपाठावगतपरस्परसाहचर्यादित्यर्थः । **तत्पुरोहितकस्य चैत्ररथत्वं सिद्धमिति** । ननु, 'एतेन वै चित्ररथं कापेया अयाजयन्, तमेकाकिनमन्नाद्यस्याध्यक्षमकुर्वन् । तस्मात् चैत्ररथिर्नामैकः क्षत्रपतिर्जायते" इति द्विरात्रप्रकरणगतार्थवादे कापेययाज्यस्य चित्ररथत्वावगमात् अभिप्रतारिणोऽपि चित्ररथत्वमेव स्यात्, न चैत्ररथत्वमिति चेन्न—अभिप्रतारिलक्षणसंज्ञान्तरावरुद्धस्य चित्ररथलक्षणसंज्ञान्तरावरोधासंभवात् समानान्वयानां समानान्वययाज्यत्वस्योचिततया कापेययाज्यस्य चित्ररथवंश्यत्वे नानुपपत्तिः । नन्वभिप्रतारिणः कापेययाज्यत्वे सिद्धे तस्य चित्ररथवंश्यत्वसिद्धिः; चित्ररथवंश्यत्वे च क्षत्रियत्वनिर्धारणम्; क्षत्रियत्वे च निर्धारिते साहचर्यात् जानश्रुतेरपि क्षत्रियत्वनिश्चय इति प्रणाडी न संभवति, अभिप्रतारिणः कापेयसाहचर्यमात्रेण कापेययाज्यत्वस्यैवासिद्धेः । न हि

कापेयाभिप्रतारिणोरेकत्र भोजनं याज्ययाजकभावाधीनम्; नानादेशागतानां परस्परसंबन्धशून्यानामेकत्र भोजनदर्शनात्। यौनमौखसंबन्धान्तरसद्भावाच्च। अस्तु वा अभिप्रतारिणः कापेययाज्यत्वम्। नैतावता तस्य चैत्ररथत्वसिद्धिः, कापेयानां चैत्ररथयाजकत्ववत् पुरुषान्तरयाजकत्वस्यापि संभवात्। अस्तु वाऽभिप्रतारिणः क्षत्रियत्वम्; तथापि तत्समभिव्याहारमात्रेण शूद्रेत्यामन्त्र्यमाणस्य जानश्रुतेः क्षत्रियत्वे प्रमाणाभावादिति चेत् — अविदितपूर्वस्य हस्तिनो निकटे पुरुषे दृश्यमाने, तस्मिंश्च राज्ञो हस्तिपकोऽयमिति प्रत्यभिज्ञायमाने सति अयमस्य हस्तिपकस्य शिक्षणीयो हस्ती, राजकीयश्चेति बुद्धिरौत्सर्गिकी जायते। एवमिहापि अभिप्रतारिसन्निधौ कापेये श्रूयमाणे, तस्मिंश्च श्रुत्यन्तरबलात् चित्ररथयाजकत्वेन प्रत्यभिज्ञायमाने, कापेययाज्योऽयमभिप्रतारी चित्ररथवंश्यश्चेति बुद्धिर्जायमाना न निवारयितुं शक्यते। सा च बाधकाभावात् प्रमाणमवतिष्ठते इत्यौत्सर्गिकन्यायमवलम्ब्योच्यते। एवं च ब्राह्मणद्वितीयस्याभिप्रतारिणः चैत्ररथत्वेन क्षत्रियत्वनिश्चये तत्समभिव्याहारात् ब्राह्मणस्य रैक्वस्य द्वितीयो जानश्रुतिरपि क्षत्रिय इति निर्धारणं युक्तमेव; अनन्यथासिद्धक्षत्तृप्रेरणादिलिङ्गसाहचर्यादिति द्रष्टव्यम्॥

**संस्कारपरामर्शात्तदभावाभिलापाच्च १-३-३६.**

भाष्ये **न च संस्कारमर्हतीति**। ननु तत्रैव मानवे धर्मशास्त्रे,

"धर्मेप्सवस्तु धर्मज्ञाः सतां वृत्तिमनुव्रताः।
मन्त्रवर्जं न दुष्यन्ति प्रशंसां प्राप्नुवन्ति च"॥ इति

तदनन्तरश्लोके धार्मिकशूद्राणां मन्त्रवर्जसंस्काराणामभ्यनुज्ञानं कृतम्। न चामन्त्रकसंस्कारो न विद्योपयोगीति वाच्यम्—स्त्रीणामपि मैत्रेयीप्रभृतीनां तदभावप्रसङ्गादिति चेन्न — संस्कारान्तरसत्त्वेऽपि, "शूद्रश्चतुर्थो वर्ण एकजातिः" इत्युपनयनसंस्कारस्य निषेधात् उपनयनसत्त्वे जन्मद्वयप्रसङ्गेन द्विजत्वप्रसङ्गात्। नन्वध्ययनाङ्गमुपनयनं प्रस्तुत्यैव, 'तद्द्वितीयं जन्म' इत्युच्यते; न तु ब्रह्मविद्याङ्गं प्रस्तुत्येति चेन्न — 'त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसी' ति वैदिकलिङ्गेन ब्रह्मविद्याङ्गोपनयनस्यापि जन्मान्तरत्वात्। नन्वेवं द्विजातीनां ब्रह्मविद्याङ्गोपनयनेन जन्मान्तरोपपत्तौ त्रिजन्मत्वप्रसङ्ग इति चेन्न—इष्टापत्तेः।

'मातर्यग्रेऽथ जननं द्वितीयं मौञ्जिबन्धने ।
तृतीयं यज्ञदीक्षायां द्विजस्य विधिचोदितम्' ॥ — इति

मनुना यज्ञदीक्षाया अपि जन्मान्तरत्वाभिधानात् । 'अनृतात् सत्यमुपैमि', 'मानुषाद्दैवमुपैमि', 'दक्षिणं पूर्वमाङ्क्ते । सव्यं हि पूर्वं मनुष्या आञ्जत' इति मन्त्रार्थवादलिङ्गैराधानपूर्वकयज्ञदीक्षायां मनुष्यतोत्तीर्णदेवजन्मत्वसूचनाच्च । ननु केकयराजाजातशत्रुप्रभृतेरुपनयनाभावेपि विद्योपदेष्टृत्वं दृश्यते । यथा 'ते ह समित्पाणयः पूर्वाह्णे प्रतिचक्रमिरे तान् हानुपनीयैवैतदुवाच । बालाकिस्समित्पाणिः प्रतिचक्राम, 'उप त्वा यानी' ति; तं होवाचाजातशत्रुः, प्रतिलोमरूपमेव स्यात्, यत् क्षत्रियो ब्राह्मणमुपनयेत् । व्येवत्वा ज्ञापयिष्यामीति । ततश्च उपनयनाभावेऽप्युपदेशदर्शनात् शूद्रेऽपि तथात्वमस्त्विति चेन्न — तत्राब्राह्मणानां ब्राह्मणोपनयनस्यायुक्ततया बाधकबलात् तथाभावेऽपि अन्यत्रउपनयनस्याऽऽवश्यकत्वादिति भावः ।

**तदभावनिर्धारणे च प्रवृत्तेः १-३-३७.**

भाष्ये **शूद्रत्वाभावनिर्धारण** इति । ननु, 'नैतदब्राह्मणो विवक्तुमर्हति समिधं सोम्याहर । उप त्वा नेष्य' इति अब्राह्मणत्वाभावनिर्धारणस्यैव दर्शनेन शूद्रत्वाभावानिर्धारणात् अयुक्तमिदम् । किञ्च एतल्लिङ्गवशात् अब्राह्मणानां क्षत्रियादीनामप्यधिकारो न स्यात् । किञ्चेदमुपनयनं न ब्रह्मविद्याङ्गम्; अपि त्वध्ययनाङ्गम् । सत्यकामस्य पूर्वमकृताध्ययनत्वात् । एवमुपाख्यायते — सत्यकामो ह जाबालो जबालां मातरमामन्त्रयाञ्चक्रे, 'ब्रह्मचर्यं भवति ! विवत्स्यामि किंगोत्रो न्वहमस्मीति । सा हैनमुवाच, नाहमेतद्वेद तात ! यद्गोत्रस्त्वमसीति । बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे । साऽहमेतन्न वेद, यद्गोत्रस्त्वमसि । जबाला तु नामाहमस्मि । सत्यकामो नाम त्वमसि । सत्यकाम एव जाबालो ब्रवीथाः' इति । स ह हारिद्रुमतं गौतममेत्योवाच ब्रह्मचर्यं भवति विवत्स्यामि, उपेयां भवन्तमिति । तं होवाच किंगोत्रो नु सोम्यासीति । स होवाच नाहमेतत् वेद भो यद्गोत्रोहमस्मीति । अपृच्छं मातरम् । सा मा प्रत्यब्रवीत्, 'बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे, साहमेतन्न वेद यद्गोत्रस्त्वमसि; जबाला तु नामाहमस्मि । सत्यकामो नाम त्वमसीति । सोऽहं सत्यकामो जाबालोऽस्मि भो इति । तं होवाच

नैतदब्राह्मणो विवक्तुमर्हति समिधं सोम्याहर । उप त्वा नेष्ये । न सत्यादगाः इति । तमुपनीये ' त्यादि । ततश्चास्यामारव्यायिकायामुक्तं गोत्रापरिज्ञानमकृताध्ययनाङ्गोपनयनस्य बालस्य संभवति ; न तु उपनीतस्याधीतसाङ्गस्वाध्यायस्य ब्रह्मविद्याधिजिगिमिषया गुरुमुपसीदतः । ततश्च कथमेतदुच्यत इति चेत् - उच्यते । नैतदब्राह्मणो विवक्तुमर्हतीत्यत्राब्राह्मणपदस्य शूद्रपरत्वमेव वक्तव्यम् । सत्यवचनं हि शूद्रे असंभावितम् । ' अनृतञ्चातिवादश्च पैशुन्यमतिलोभता । विकृतिश्चाभिमानश्च जन्मतः शूद्रमाविशत् ' इति स्मृतिवशात् शूद्रे ईदृशसत्यवचनमसंभावितमिति हि गौतमस्याभिसन्धिर्युज्यते । नान्यथा । किञ्च त्रैवर्णिकानामुपनयनस्य श्रुतिसिद्धतया क्षत्रियत्वाद्यभावनिर्धारणस्योपनयनाप्रयोजकत्वात् साधारणोऽप्यब्राह्मणशब्दः शूद्रमात्रपर एव प्रकृते उचितः । यच्चोक्तमध्ययनाङ्गमेवेदमुपनयनमिति — तन्न । उत्तरत्र षोडशकलब्रह्मविद्योपदेशस्यापि दर्शनादुभयार्थमेवेदमुपनयनम् । तादृशे चोपनयने प्रवर्तमानो गौतमः शूद्रत्वाभावं निश्चित्यैव प्रववृत इति दर्शनात् उभयविधेऽप्युपनयने शूद्रत्वाभावोपेक्षित इत्येवावसीयते । यदि ब्रह्मविद्याङ्गोपनयने शूद्रत्वाभावो नापेक्षितः ; अपित्वध्ययनाङ्गोपनयन एवेत्युच्येत—तर्हि ब्रह्मविद्याङ्गमुपनयनं सत्यकामस्य जातिमपरीक्ष्यैव कुर्यात्, अतोऽवसीयते, द्विविधेऽप्युपनयने शूद्रत्वाभावोऽपेक्षित इति ।

## स्मृतेश्च १-३-३९.

**स्मृतिशब्दविवक्षितमिति** । श्रवणाध्ययनार्थप्रतिषेधस्मृतित्वेन विवक्षितमित्यर्थः । ततश्च श्रवणाध्ययनप्रायश्चित्तस्मृतिवचनस्य कथं निषेधस्मृतिवचनत्वमिति न शङ्कनीयमिति भावः । भाष्ये **विपरीतवासनायां निवृत्तायां ज्ञानमुत्पत्स्यत** इति । ननु मनुष्याणां बहूनि ब्रह्मविद्योत्पत्तिप्रतिबन्धकानि दुरितानि । तत्र यानि विविदिषोत्पत्तिप्रतिबन्धकानि, तानि च वेदानुवचनयज्ञदानाद्यपूर्वनिवर्तनीयानि ; यानि चोत्पन्नविविदिषस्यापि श्रवणादिसाधनसंपत्तिविघटकानि, तानि च संन्यासापूर्वनिवर्तनीयानि ; यानि च संपन्नश्रवणस्यापि असंभावनाविपरीतभावनाबाहुल्यापादनमुखेन अविद्यानिवर्तकब्रह्मसाक्षात्कारोत्पत्तिप्रतिबन्धकानि, तानि च वेदान्तश्रवणादिनियमसंपाद्यादृष्टनिवर्त्यानि । ततश्च कथं शूद्रादीनां श्रवणनियमसंपाद्यादृष्टविधुराणामधिकार इति चेन्न — नियमादृष्टवैगुण्यमात्रेण दृष्टफलानिष्पत्तेः क्वाप्य-

दर्शनात् । उपनयनाङ्गकाध्ययननियमादृष्टवैगुण्येऽपि दृष्टफलस्याक्षरराशिग्रहणस्य अर्थज्ञानस्य वा अनुत्पत्तेरदर्शनात् । इयांस्तु विशेषः—नियमस्य क्रत्वर्थत्वे नियमादृष्टवैगुण्ये क्रतोर्वैगुण्यं भवति । यथा अवघातनियमादृष्टवैगुण्ये क्रतोर्वैगुण्यम् । पुरुषार्थत्वे तु नियमोल्लङ्घने पुरुषः प्रत्यवैति । यथा द्रव्यार्जनोपायनियमवैगुण्ये । ततश्च श्रवणनियमस्य च क्रत्वर्थत्वाप्रसक्तेः तद्वैगुण्ये पुरुषः प्रत्यवैतीत्येतावद्वक्तव्यम् । ततश्च यस्तूत्पन्नब्रह्मविविदिषः शूद्रो वाऽन्यो वा प्रत्यवायमप्युभ्युपेत्य उत्पन्नमपि प्रत्यवायं ब्रह्मज्ञानेन निर्धक्ष्यामीति बुद्ध्या लौकिकभाषाप्रबन्धादिषु प्रवृत्तः तस्य नियमादृष्टमन्तरेणापि ज्ञानोत्पत्तेः दुर्निवारत्वात्, उत्पन्ने च ज्ञाने अविद्यानिवृत्तेः दुर्निवारत्वाच्च परेषां मतमसमञ्जसमिति पश्यामः । भाष्ये **प्रत्यक्षानुमानवृत्तेति** । वृत्तं बोधनमित्यर्थः । **साङ्ख्यहैरण्यगर्भेति** । साङ्ख्यादिभिर्नैसर्गिकव्यवहारविरुद्धकर्तृत्वादिविरुद्धात्मस्वरूपप्रत्यायने सति साधकबाधकप्रमाणस्वरूपशोधनेच्छया प्रत्यक्षानुमानप्रकारवुभुत्सा भवत्येवेति न प्रसञ्जनार्थं वेदान्तापेक्षेति भावः । **परमकारणत्वोपयोगीति** । "समाननामरूपत्वाच्चावृत्तावप्यविरोधः" इतिसूत्रे चतुर्मुखाद्युत्पादकत्वेन परमात्मनः परमकारणत्वस्याऽऽविष्करणादिति भावः । **मधुविद्यायामुक्तमिति** । 'अथ तत ऊर्ध्वं उदेत्य, नैवोदेता नास्तमेते' त्यादिभागस्य कारणावस्थजीवान्तर्यामिपरत्वस्य तत्र प्रतिपादनादिति भावः । **परमात्मविषयत्वं ज्ञापितमिति** । यद्यपि 'वायुर्वाव संवर्गः । यदा वा अग्निरुद्वायति वायुमेवाप्येती' त्यादिना अग्न्याद्यप्ययाधारत्वस्य परमात्मलिङ्गत्वात् संवर्गविद्यायाः परमात्मपरत्वं सिद्धवत्कृत्यैव पूर्वोत्तरपक्षयोः प्रवृत्तिर्दृष्टा; न तु तदधिकरणे तद्विद्यायाः परमात्मपरत्वसमर्थनं दृष्टम्—तथाऽपि यथाकथंचित् तस्मिन्नप्यधिकरणे कारणत्वानुबन्धिविचाररूपत्वमस्तीति सङ्गत्यतिशयोऽस्तीति भावः । **अत्रापीति** । समन्वयाध्यायेऽपीत्यर्थः ॥

इति अपशूद्राधिकरणम् (९)

---

# अथ प्रमिताधिकरणशेषः (३)

कम्पनात् १-३-४०.

**परमात्मपरत्वेनोपपादितेति** । ननु, 'यदिदं किञ्चे'ति वाक्ये परमात्मपरत्वस्य निश्चितपरमात्मप्रतिपादकभावाङ्गुष्ठवाक्यद्वयमध्यगतत्वोपपाद्यत्वे, सिद्धान्ते कम्पनस्याङ्गुष्ठवाक्यपरमात्मपरत्वोत्तम्भकत्वं न स्यात् ; तन्निर्वाह्यस्य तन्निर्वाहकत्वा-योगादिति चेन्न — पृथगधिकरणवादिपररीत्या दूषणदाने दोषायोगात् (भावात्) । यद्वा एतदस्वरसादाह **अस्मिन्नेव मन्त्र** इति । **पूर्वपक्षानुदय इति भाव** इति । इदमप्यत्रानुसन्धेयम् — कम्पनादित्यस्य, शब्दादेव प्रमित इत्यधिकरणशेषतया तदुत्तम्भकहेतूपन्यासरूपत्वे, 'नित्यो नित्यानां चेतनश्चेतनानाम्,' 'तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते' इत्यादिसंप्रतिपन्नपरमात्मपरभाववाक्यार्थस्यैवोत्तम्भकतया सूत्रणसंभवे किमनेन विप्रतिपत्तिशङ्कास्पदप्राणवज्रश्रुतिघटितवाक्यार्थभूतकम्पनोपन्यासेनेति न वाच्यम् — सर्वथा पूर्वपक्षानुत्थित्या पृथगधिकरणत्वशङ्काया असंभवेन, शब्दादेव प्रमित इत्यधिकरणशेषत्वस्यैव वक्तव्यतया कम्पनशब्दस्य विनिगमनाविरहेण (नाभावेन) ज्योतिर्दर्शनव्यतिरिक्तप्राकरणिकधर्मोपलक्षकत्वसंभवेन कम्पनादिति सूत्रे अनुपपत्त्य-भावादिति । **'प्राणः कम्पनादित्यश्रवणादि**ति । एतेन कम्पनादित्यस्य व्यवहित-प्रमिताधिकरणशेषत्वे, 'आकाशोऽर्थान्तरत्वादिव्यपदेशा'दित्यस्यापि उक्तरीत्या दहराधिकरणशेषत्वं किं न स्यादिति वाचाटवचसोऽपि नावकाश इति द्रष्टव्यम् । **वायुनिमित्तमेवे**ति । वायोरेवाशनिरूपेण परिणामेन तस्यैव महाभयहेतूद्यतवज्र-रूपत्वसंभवादित्यर्थः । **वज्रशब्देन न पञ्चवृत्तिप्राणशङ्का भवती**ति । यद्यपि प्राण-श्रुतिबलादाध्यात्मिकः पञ्चवृत्तिर्वायुरभिधीयते ; वज्रश्रुतिबलाच्चाशन्याकारेण परिणतो बाह्यवायुरभिधीयते । प्राणमात्रस्य वज्रोद्यमनहेतुत्वासंभवात् । अत उभयोश्चिन्तनं संवर्गविद्यावत् क्रियत इत्येव तेषां पूर्वपक्षः । तथैव स्पष्टं कल्पतरावभिधानात् । वाचस्पतिनाऽपि प्राणवज्रश्रुतिबलात् वाक्यं प्रकरणं च भङ्क्त्वा आध्यात्मिकप्राणो बाह्यवायुश्चात्र प्रतिपाद्यते इत्यभिधानाच्च — तथाऽपि तद्भाष्ये पूर्वपक्षे वायुरेव प्रति-पत्तव्य इत्युपसंहारदर्शनात् एकविषयत्वप्रतीतेः तथाभिप्रायसंभवमभिप्रेत्य तथोक्तमिति

द्रष्टव्यम् । **लक्षणाप्रसङ्गादिति भाव** इति । न च बिभेत्यस्मादितिव्युत्पत्तिसंभवात् न लक्षणेति वाच्यम् — भयशब्देन भयहेतुप्रतीतेः असति बाधकेऽनुदयेन तत्प्रतीतेर्लक्षणैकशरणत्वादिति भावः । **अध्याहारादपीति** । इवशब्दाध्याहारादपीत्यर्थः । अत एव पूर्वतन्त्रे प्रयुक्तिलक्षणे (४-२-२.) प्राचीमाहरतीत्यत्र प्राचीशब्दस्य दिग्वचनत्वे मुख्यत्वसत्त्वेऽपि आहर्तव्यत्वासंभवेन प्रतिशब्दाध्याहारबलात् प्राचीशब्दः प्रागग्रशाखालक्षक इत्याश्रितमिति भावः । **कथं हेतुत्वावगम** इति । भयमितिश्रूयमाणे भयादित्यर्थः कथं लभ्यत इत्यर्थः । पूर्वमवतारितस्य भाष्यस्य भयादस्येत्यादिभाष्यद्वयस्याभिप्रेतामाशङ्कान्तरनिवृत्तिमप्याह **एवंतर्ही**ति । अथवाऽत्र यद्वेत्यध्याहारः । **प्रथमान्तपदसामानाधिकरण्यस्वारस्यभङ्ग** इति । प्रथमान्तपदत्वभङ्गः भयशब्दस्य वज्रपदसामानाधिकरण्यस्वारस्यभङ्गश्चेत्यर्थः । **इवशब्दाध्याहारश्च स्यादि**ति । लक्षणा च स्यादित्यर्थः । अध्याहारस्य पूर्वमेव निरस्तत्वात् । यद्यपि वज्रशब्दस्य लक्षणा सर्वपक्षसाधारणी, तथापि पूर्वदूषणे तात्पर्यम् । **प्रथमाया विहितत्वादि**ति । यद्यपि सुपांसुलुगिति सूत्रे स्वादेश एव विहितः, तथापि प्रथमैकदेशवचनस्य प्रत्यभिज्ञायमानतया तस्यैव विधानमभिप्रेत्य प्रथमाया विहितत्वोक्तिः । यद्वा सुपां सुपो भवन्तीति तत्सूत्रवार्तिकेन सर्वासामपि विभक्तीनां स्थाने सर्वासामपि विभक्तीनां विधानात् प्रथमाया अपि सर्वविभक्तिस्थाने विहितत्वमभिप्रेत्यैतदुक्तमिति द्रष्टव्यम् । सुपां सुपो भवन्तीत्यादीनाम्, 'व्यत्ययो बहुल'मिति सूत्रप्रपञ्चतया तेनैव सूत्रेण तत्सिद्धिमभिप्रेत्याह **वचनव्यत्ययो** वेति । 'व्यत्ययो बहुल'मिति सूत्रविहितविभक्तिव्यत्ययो वेत्यर्थः । सक्तून् जुहोतीत्यादौ विभक्तिव्यत्ययदर्शनात् दर्शनं न दोष इति भावः ।

## ज्योतिर्दर्शनात् १-३-४१.

**एतत्प्रकरणहेतुत्वमेवे**ति । अङ्गुष्ठप्रमितवाक्यद्वयमध्यगतस्यास्य मन्त्रस्य तत्प्रकरणभङ्गेन प्राकृततेजोधातुपरत्वशङ्का न युक्तेति दर्शयतीत्यर्थः । **ज्योतिष्मद्भ्राजमानं महस्वदि**ति । न चात्रापि ज्योतिश्शब्दस्य तेजःपरत्वसम्भवात् दीप्तिपरत्वं [न?] संप्रतिपन्नमिति वाच्यम् — महस्वदित्यनेन पुनरुक्तिप्रसङ्गादिति भावः । **आप्यायनं च दृष्टमि**ति । अनुग्रहश्च दृष्ट इत्यर्थः । ननु प्राकृततेजसोऽनुग्राह

कत्वातिरेकेण निमित्तत्वस्याभावात् निमित्तत्वानुग्राहकत्वे तृतीयतुरीयपादप्रतिपाद्ये इत्युक्तिः कथमित्याशङ्क्य — सत्यमनुग्राहकत्वपर्यवसितं निमित्तत्वम्, तथापि तेज-उत्पत्तौ तत्कारणानुग्राहकत्वलक्षणनिमित्तत्वं तृतीयपादार्थः, उत्पन्नस्य तेजसः स्वकार्यारम्भसामर्थ्यापादकत्वलक्षणमनुग्राहकत्वं तुरीयपादार्थ इत्यभिप्रयन्नाह **निमित्तकारणत्वञ्चेत्यादि** । **तस्मिन् भासमान** इति । अनन्तगुणविशिष्टपरमपुरुषे भासमान एव प्रपञ्चाध्यास इत्यस्याभावेन तत्स्फुरणानुरोधि अध्यस्तप्रपञ्चस्फुरणमित्यस्यानुपपत्तेरित्यर्थः । न हि तन्मतेपि विशिष्टभानानुविधानभानं प्रपञ्चस्याभ्युपगतम्; अपितु शुद्धस्यैवाधिष्ठानतया तद्भानानुविधानमेवाभ्युपेतमिति भावः । **भान्तमेवेति ह्यन्वय** इति । विशेषणसङ्गतैवकारस्यायोगव्यवच्छेदकतया नित्यत्वस्वाभाविकत्वे सिध्यतः। अप्रतिहतत्वं तु पूर्वार्धेन इतरतेजसां तद्धेतुकत्वतदनुभानश्रुत्येति भावः । **व्यवच्छेद्यतेजोन्तरासंभवादिति** । अन्यं भान्तं नानुभातीत्येवं व्यवच्छेद्यानुभानयोग्यतेजोन्तराप्रसक्तेरित्यर्थः । **प्रकरणस्य रुक्मवर्णश्रुतीति** । मुण्डके, "न तत्र सूर्यो भाती" ति प्रकरणगतया, "यदा पश्यः पश्यते रुक्मवर्णम्" इति रुक्मवर्णश्रुत्या, कठवल्याम्, "न तत्र सूर्यो भाती" ति प्रकरणगतेन, अङ्गुष्ठमात्रः पुरुष इत्यादिपुरुषशब्देन प्रत्यभिज्ञाप्यमानया, 'वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्' इत्यादित्यवर्णश्रुत्या च सिद्धा या दिव्यविग्रहद्वारकनिरतिशयदीप्तिः, तद्विशिष्ट इत्यर्थः । **उत्थानश्रुतिरिति** । ब्रह्मणः सर्वगतत्वेन तत्प्राप्तौ शरीरादुत्क्रमणस्यानपेक्षितत्वात् ब्रह्मसाक्षात्कारानन्तरभाविन्यां ब्रह्मप्राप्तौ उपसंपद्येति क्त्वाप्रत्ययेन तत्पूर्वभावित्वनिर्देशस्यानुपपन्नत्वाच्च, 'शतञ्चैका च हृदयस्य — नाड्यस्तासां मूर्धानमभिनिस्सृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ती' त्युपासकानां मूर्धन्यनाड्या शरीरात् समुत्थानस्य, 'यावत् क्षिपेन्मनः, तावदादित्यं गच्छे' दिति तदनन्तरमेव आदित्यप्राप्तेश्च वर्णितत्वात् इहापि 'शरीरात् समुत्थाय,' 'परं ज्योतिरुपसंपद्ये' ति शब्दाभ्यां तदर्थप्रत्यभिज्ञानात्, आदित्यज्योतिषश्च मार्गे प्रथमपर्वभूतार्चिर्ज्योतिरपेक्षया परत्वेन कथञ्चित् परत्वोपपत्तेः, आदित्यं प्राप्तस्य च ब्रह्मलोकप्राप्त्यनन्तरभाविक्रममुक्त्यभिप्रायेण, 'स्वेन रूपेणाभिनिष्पद्यत' इत्यस्याप्युपपत्तेश्च अर्चिरादिमार्गपर्वभूतादित्यप्राप्तिरेव, 'परंज्योतिरुपसंपद्ये' ति वाक्यार्थ इति पूर्वपक्षहेतुरुपन्यस्त इति चेदित्यर्थः । **वक्ष्यमाणत्वादिति** । चतुर्थाध्याय इति शेषः ।

**हेतुप्रयोगानन्तरमेवे**ति । 'उत्तराच्चेदाविर्भूतस्वरूपस्तु' इति सूत्रे आविर्भूतस्वरूप आत्मा प्रजापतिवाक्ये अपहतपाप्मत्वादिगुणकतया प्रतिपाद्यते; न तु कर्तृत्वाद्यनर्थाश्रयो जीव इत्युक्ते — न प्रजापतिवाक्ये आविर्भूतस्वरूपस्य प्रतिपाद्यता; किन्तु परंज्योतिरुपसंपद्येत्यादित्यं प्राप्तस्य बद्धस्यैवेति हेत्वसिद्धौ शङ्कितायां तत्परिहारपरस्य ज्योतिर्दर्शनादिति सूत्रस्य तत्रैव निवेशो युक्त इत्यर्थः । **अपरे त्वाहु**रिति । तु-शब्दोऽप्यर्थः । अपरेऽप्येवमेवाहुरित्यर्थः । ततश्च पूर्वोक्तपक्षादस्य पक्षस्य किं वैषम्यमिति शङ्का निरस्ता ।

इति प्रमिताधिकरणशेषः ।

---

## अर्थान्तरत्वादिव्यपदेशाधिकरणम् (१०)

### आकाशोऽर्थान्तरत्वादिव्यपदेशात् १-३-४२.

**आकाशो ह वै नामेत्यादी**ति । आकाशो ह वै नामरूपयोरित्यपि केचित् पठन्ति; आकाशो वै नामरूपयोरित्यपि पाठो दृश्यते । अतः पाठद्वयमपि प्रामाणिकमेवेति द्रष्टव्यम् । **स्ववाक्ये परमात्मलिङ्गे**ति । ननु शाङ्करभाष्ये, द्रष्टृत्वादेः ब्रह्मलिङ्गस्याश्रवणादित्येवोच्यते; न स्ववाक्य इति, ततः कथमिदमुच्यते **स्ववाक्य** इतीति चेन्न — 'ते यदन्तरा तद्ब्रह्म; तदमृतम्; स आत्मे' ति वाक्ये परमेव ब्रह्म प्रतिपाद्यते । आकाशो ह वै नामरूपयोर्निर्वहितेत्यंशे तु आकाशशब्दप्रसिद्ध्या अवकाशद्वारेण नामरूपयोः निर्वोढा भूताकाशो ब्रह्मप्रतिपत्त्युपायतया प्रतिपाद्यत इति वाचस्पत्यभिमतपूर्वपक्षं हृदि निधाय, तत्र च, आकाशो वै नामरूपयोः निर्वहितेत्येतावदेव स्ववाक्यम्, तत्र च परमात्मलिङ्गं नास्तीति वक्तुं स्ववाक्य इत्युक्तमिति द्रष्टव्यम् । **अन्योन्यनिर्वाह्यनामरूपस्ये**ति । ननु मुक्तस्याप्यन्यनिर्वाह्यनामरूपत्वं समानम् । तदपि न साम्प्रतिकीमवस्थामादायोपपादयितुं शक्यते; अपि तु भूतपूर्वगत्या । ब्रह्मात्मशब्दयोश्च न स्वारस्यम् । ततश्चाकाशश्रुतिमूलस्य पराभिमतपूर्वपक्षस्य नामरूपनिर्वोढृत्वरूपलिङ्गबलात् अनुत्थितौ कथं प्रकरणमात्रशरणस्य मुक्तपूर्वपक्षस्यो-

स्थितिरिति चेत् — उच्यते । न प्रकृतत्वमात्रमवलम्ब्य मुक्तपूर्वपक्षमुत्थापयामः । 'अस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत' इति वाक्यप्रतिपाद्ययोः कालभेदेन नामरूपभाक्त्वतद्राहित्ययोः, "निर्वहिता ते यदन्तरे" त्यत्र प्रत्यभिज्ञानात्, 'नामरूपयोः निर्वहिता ते यदन्तरे' त्यत्र पूर्वं निरूढनामरूपस्य पश्चात्तद्विमुक्तस्यैव मुक्तस्य प्रतीतेः, 'य एषोक्षिणि पुरुषो दृश्यते एष आत्मेति होवाच एतदमृतमभयमेतद्ब्रह्मे' ति अव्यवहितप्रजापतिवाक्ये आत्मत्वब्रह्मत्वामृतत्वादीनामपि मुक्ते श्रवणेन तेषामेव शब्दानामिह प्रत्यभिज्ञायमानत्वात्, आकाशाधिकरणदहराधिकरणयोः आकाशशब्दस्य यौगिकत्वसमर्थनेनाकाशत्वस्याप्युपपत्तेः मुक्तपूर्वपक्षोत्थाने न दोष इति द्रष्टव्यम् ।

**मुक्तात्मपरत्वं वदद्भिरेवेति** । 'ते यदन्तरा तद्ब्रह्मे' त्ययमंशो मुक्तात्मपरः । 'आकाशो ह वै नामरूपयोर्निर्वहिते' त्यंशस्तु भूताकाशपर इति पूर्वपक्षितमित्यर्थः । अनेन वाचस्पतिपक्षापेक्षया वैषम्यमुक्तं भवति । **श्रुत्यनुवाद** इति । इतरथा निर्वोढेति रूपप्रसङ्गादितिभावः । एवमुत्तरत्र सर्वत्रापि द्रष्टव्यम् । बुद्धिसौकर्यार्थमाह । **राद्धान्त** इति । **प्रदर्श्यत** इति । प्रतिज्ञामन्तरेणापि प्रदर्शनसंभवात् वक्ष्यमाणरीत्या एकवाक्यतायाश्च संभवन्त्यां तत्परित्यागस्यानुचितत्वाच्च पक्षान्तरमाह **यद्वा नामरूपयोः निर्वहितेति** । **व्यपदेश इत्यन्वय** इति । यद्यप्यस्मिन् पक्षेपि अस्तिभवतिविद्यतीनामन्यतमाध्याहारोऽपेक्षितः — तथापि स न दोषायेति भावः । ननु नामरूपयोः निर्वोढृत्वव्यपदेशस्य कथमर्थान्तरत्वशब्दित व्यपदेशत्वमित्यत आह **तदुपपादकधर्मं लक्षयतीति** । अर्थान्तरत्वव्यपदेशादित्यस्य भेदकव्यपदेशादित्यर्थ इति भावः । **कथं मुक्तस्यानन्तरमभिधानमिति** । मुक्तस्यैवाभिधानमिति पूर्वपक्षिणोऽभिमानात् तथोक्तिरिति द्रष्टव्यम् । भाष्ये — **सत्यसङ्कल्पत्वाच्च निर्वहितेत्यर्थ** इति । ननु, ते यदन्तरेति नामरूपास्पृष्टत्वकथनेन तद्धेतुभूतपाप्मराहित्यस्याक्षेपसंभवेन अपहतपाप्मत्वस्योक्तिसंभवेऽपि सत्यसङ्कल्पत्वस्य प्रदर्शनाभावेन कथम्, ते यदन्तरेत्यनेन तदुपपादनमिति चेन्न—अपहतपाप्मत्वे सत्यसङ्कल्पत्वस्याप्यवश्यम्भावेन तत्प्रदर्शनस्यापि संभवे, 'ते यदन्तरे' त्यस्य नामरूपयोर्निर्वहितेत्येतदर्थोपपादकत्वमिति द्रष्टव्यम् । **ज्ञानतो बृहत्त्वमिति** । जीवबृहत्त्वे ज्ञानपरमात्म-

प्रसादावुपाधी इति भावः । ननु ब्रह्मणोऽभिसंभाव्यतया निर्देशः कथमप्रधानप्रकृतत्वसूचक इत्याशङ्क्य यद्यपीत्याक्षेपभङ्ग्यखण्डस्याभिप्रायमाह **प्रथमनिर्दिष्टस्याभिसंभवितु-**रित्यादिना **स्वारस्येपी**त्यन्तेन । **अवान्तरप्रकरणे**त्यादि । धूत्वा शरीरमिति वाक्ये जीवपरौ प्रतिपाद्येते इति निर्विवादम् । तत्र प्रजापतिवाक्यरूपावान्तरप्रकरण-बलात् तस्य जीवपरत्वे, अन्यार्थश्च परामर्श इतिन्यायेन तत्र ब्रह्मपरामर्शः, प्रजापति-वाक्यान्तर्गते, 'एष संप्रसादोऽस्माच्छरीरा' दिति वाक्ये इव जीवप्राप्यप्रतिपादन-तया जीवार्थः स्यात् । महाप्रकरणबलात् परब्रह्ममहिमप्रतिपादकत्वे दहरविद्यान्तर्गते, 'एषसंप्रसाद' इति वाक्ये जीवपरामर्शस्य ब्रह्ममाहात्म्यप्रतिपादनशेषत्ववत्, 'धूत्वाशरीर'-मिति वाक्येऽपि जीवपरामर्शः परब्रह्ममहिमप्रतिपादनार्थः स्यादिति भावः । भाष्ये **प्राप्यतयोपसंह्रियत** इति । ननु, 'इति ह प्रजापतिरुवाचे' ति पूर्वमेव द्विरुक्त्या प्रकरणसमाप्तेर्दर्शनात् कथं 'ब्रह्मलोकमभिसंभवामी' त्युपसंहार इति चेत्— जीवावान्तरप्रकरणस्य समापितत्वेऽपि दहराकाशमहाप्रकरणस्यासमापितत्वेनास्य मन्त्रस्य तच्छेषत्वादिति भावः । **सूत्रकारैरितःपूर्वमकृतत्वा**दिति । 'अनुकृतेस्तस्य च', 'अपि स्मर्यते' इति सूत्रयोरपि मुक्तब्रह्मभेदसाधकसद्भावमात्रप्रदर्शनपरत्वेन ऐक्योप-देशादिपरिहारस्य तत्राकृतत्वादिति भावः । यद्यपीहापि साधकप्रमाणमेवोपन्यस्यते— तथाप्यस्य सूत्रद्वयस्य साधकप्रमाणदार्ढ्यापादनमुखेन ऐक्योपदेश - भेदनिषेधश्रुत्य-न्यथाकरणपर्यन्तत्वमस्तीति भावः । वस्तुतस्तु पूर्वतन्त्रे प्रथमपादे सिद्धस्यैव चोदना-प्रामाण्यस्य, "श्रुतिलक्षणमानुपूर्व्यम्" इति पुनः कथनवत् पूर्वसिद्धमुक्तभेददार्ढ्याय पुनः प्रतिपादनोपपत्तिः । **मुक्तप्राप्तयोक्तस्ये**ति । 'अश्व इव रोमाणी' ति पूर्वभाष्य इति शेषः । परस्परसापेक्षयोरिव ऐक्योपदेशभेदनिषेधयोः साध्यसाधकत्वं मन्वान आह **इतरेतरयोगे वेति** । **स्वग्रन्थे निर्दिष्ट**मिति । ततश्च यत्र यत्र निर्वहितेति श्रूयते, तस्य सर्वस्यापि श्रुत्यानुवादरूपत्वेन स्वग्रन्थत्वाभावात् नासाधुत्वमिति भावः ।

पत्यादिशब्देभ्यः १-३-४४

ननु, "सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः स न साधुना कर्मणा भूयान्नो एवासाधुना कर्मणा कनीयान्, एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसंभेदाये" ति हि श्रुतिक्रमः । ततश्च कुतः तत्परित्यागेन

भाष्ये व्युत्क्रमेण श्रुत्युपन्यास इत्या (यत्ता?)ह सूत्र पत्यादिशब्देभ्य इतीति। **वाक्यस्य पूर्वमितीति**। "तस्य परमाम्रेडितम्" इति निर्देशेन अवयववाचि-पूर्वादिशब्दस्य योगे षष्ठी भवतीति ज्ञापितत्वात् षष्ठ्याः साधुत्वं द्रष्टव्यम्। न च, 'स न साधुना भूयान्' इत्यादिवाक्यस्य सर्वस्येत्यादिश्रुतिरिति वाक्यं नावयवः; येन पूर्वशब्दस्यावयववाचित्वं स्यादिति शङ्क्यम् — स न साधुना कर्मणा भूयानित्यादिवाक्यस्येति टीकागतस्य शब्दस्य प्रकरणगतवाक्यमात्रपरत्वादिति द्रष्टव्यम्। **पश्चात् एष भूताधिपतिरिति वाक्यमिति**। श्रुतौ पठितमिति शेषः। **तन्त्रेण क्रोडीकारार्थमिति**। बहुव्रीहितत्पुरुषाभ्यां पतिशब्दद्वयमध्यवर्तिनाम्, 'स न साधुने'त्यादिवाक्यानामत्यादरेण क्रोडीकरणार्थमित्यर्थः। ननु वश्यादिशब्देभ्य इत्युक्तावपि पूर्वोत्तरवाक्यानां क्रोडीकारमात्रं सिध्यतीत्यस्वरसादाह **अभ्यासरूपेति**। प्रथमश्रुतवश्यादिशब्दं परित्यज्य मध्यश्रुतपतिशब्दमुपादाय, 'पत्यादिशब्देभ्य' इति सूत्रणात् पतिशब्दगतोऽभ्यासः सूच्यत इति भावः। **पत्यादिशब्दैः स्पृहेति**। वशी ईशानः भूतपाल इत्यादीनां प्रथमान्तानामेव पत्यादात्यादिशब्देन ग्रहणमुचितमित्यभिप्रेत्येदमुक्तमिति द्रष्टव्यम्। **एत** चेत्यादिभाष्यस्वारस्यानुरोधेन, 'सुषुप्त्युत्क्रान्त्योर्भेदेने'ति सूत्रे बद्धजीवान्तरस्वारस्यानुरोधेन च सूत्रद्वयस्य क्रमे॥ बद्धमुक्तातिरिक्तप्रतिपादनपरत्वं भाष्यकारस्याभिमतमित्यभिप्रायेणाह **किं जीवभावादर्थान्तरत्वे विप्रतिपत्तिरित्या-**दिना। पूर्वसूत्रोक्तपरिष्वङ्गारोहयोरपि मुक्तव्यावर्तनक्षमत्वात् सूत्रद्वयेनापि मुक्तव्यावृत्तिः प्रतिपाद्यत इत्यभिप्रायेणाह **यद्वा सूत्रद्वयोक्तैरिति**। **वर्णनीयाविति शङ्काबीजमिति**। वर्णनीयाविति समर्थनेन ऐक्यभेदनिषेधश्रुतिलक्षणशङ्काबीजं परिहृतं भवतीत्यर्थः। **एतावदेवेति**। अतो नारम्भणाद्यधिकरणैः पुनरुक्ततेति भावः। **जगत्कारणत्वानिर्वाहादिति**। विशेष्यमात्रस्य ब्रह्मणः प्रपञ्चोपादानत्वाभावेन सूक्ष्मचिदचिद्विशिष्टस्य स्थूलचिदचिद्विशिष्टं प्रति हेतुत्वस्य वक्तव्यत्वादिति भावः। मुख्यत्वनिर्वाहस्य वक्ष्यमाणत्वं दर्शयति **तदारम्भणाधिकरण** इत्यादिना। **बुद्धान्तादीति**। जाग्रदादीत्यर्थः। **धर्मिवाचिपदाश्रवणं न दोष इति**। 'जगद्वाचित्वात्', 'वाक्यान्वया'दित्यादिष्विति भावः। **तस्येति**। चतुर्थपादस्येत्यर्थः। ननु जगद्वाचित्वादित्यादौ व्युदसनप्रतिज्ञाऽपि न श्रूयत इत्याशङ्क्याह — **नेति पदस्येति। अनुषङ्गेपि न दोष इति**। अध्याहारापेक्षया अनुषङ्गस्य ज्याय-

स्त्वात्; तत्र त्रिहानुषङ्गस्याप्यसंभवादिति भावः। किंच शेषभूतप्रतिज्ञायामनुषङ्गो न दोषायेति युक्त्यन्तरमाह **प्रधानादिपरत्वव्युदासस्येति**। ननु 'कारणत्वेनाकाशादिषु' इत्यत्र नेतिपरानुषङ्गो न युज्यते। 'परब्रह्मणो जगदुत्पत्त्यन इति निर्णेतुं शक्य'मिति नत्र प्रतिज्ञा भाष्योक्तेत्याशङ्क्याह **कचिदध्याहारदर्शनेपीति**। **परमात्मपरत्वेऽपि न सन्देह** इति। यद्यपि, सर्वस्य वशीत्यादयः शब्दा अपि जीव एव यथाकथञ्चिद्योजनीयाः। नास्मिन् सन्दर्भे कस्यचिदपि वाक्यस्य परमात्मप्रतिपादकत्वमस्तीत्येव पूर्वपक्षो वाचस्पतिना दर्शितः—तथापि सर्वस्य वशी सर्वस्येशान इत्यादीनां जीवप्रतिपादकत्ववादस्यातिसाहसत्वादसंशय इति द्रष्टव्यम्। **विश्वेश्वरस्येति**। ईश्वराध्यस्तजीवभ्रमनिवृत्त्यर्थं खलु जीवस्याधिष्ठानभूतेश्वरतादात्म्यमुपदिश्यते। तत्रेश्वरे जीवभ्रमः किमीश्वरस्य, उत जीवस्य? न प्रथमः, सर्वज्ञस्य भ्रमासंभवात्। न द्वितीयः, अधिष्ठानभूतेश्वरज्ञानशून्यस्य तत्र जीवस्य भ्रमानुदयादित्यर्थः। **तात्पर्यलिङ्गदर्शनाच्चेति**। अभ्यासापूर्वत्वरूपतात्पर्यलिङ्गदर्शनाच्चेत्यर्थः। **शाखान्तरे चेति**। कौषीतकीश्वेताश्वतरादावित्यर्थः। 'सता सोम्य तदा सम्पन्नो भवती'ति सद्विद्यायां श्रवणाच्चेत्यर्थः। **शाब्दस्य हेतोर्विरुद्धत्वादिति**। सुषुप्त्युत्क्रान्त्योर्भेदस्य जीवत्वपूर्वपक्षासाधकत्वादिति भावः। यस्तु पूर्वपक्षहेतुः पूर्वमुक्तः; स न शाब्द इत्याह **भोक्तुः प्रकृतत्वेति**। ननु उत्सूत्र एव पूर्वपक्षः; आद्यसूत्रमपि सिद्धान्तसाधकमेवास्त्वित्याशङ्क्याह **तच्छङ्काव्युदसनेति**। **निरुपाधिकैश्वर्यवत्त्वं चेति**। ततश्च चिदचिद्वैलक्षण्यसाधने संवादनिरपेक्षप्राज्ञत्वादेरेव हेतूकरणसंभवेन तत्र शाखान्तरसंवादस्य हेतूकरणासंभवादिति भावः।

इति अर्थान्तरत्वव्यपदेशाधिकरणम्।

इति चतुष्षष्टिप्रबन्धनिर्माणालङ्कर्मीण दशोपनिषद्भाष्यकार
श्रीमद्रङ्गरामानुजमुनिविरचितायां
श्रुतप्रकाशिकाव्याख्यायां भावप्रकाशिकायां
प्रथमस्याध्यायस्य तृतीयः पादः॥



॥ श्रीः ॥

श्रीमते रङ्गरामानुजमहादेशिकाय नमः ।

# श्रुतप्रकाशिकाव्याख्यायां भावप्रकाशिकायां

## अथ चतुर्थः पादः

आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीते-
र्दर्शयति च १-४-१.

द्वितीयपादारम्भे कथितायाः पादसंगतेः, त्रिपाद्या अन्ययोगव्यवच्छेदपरत्वस्य वा अत्र पुनः कीर्तनं किमर्थमिति शङ्कायामाह **प्रथमपाद** इति । **धर्मस्वरूपपरमिति** । सर्वज्ञत्वादिगुणानां कल्याणत्वपरमित्यर्थः । सर्वभूतान्तरात्मत्वस्यान्तर्यामिवैश्वानराधिकरणसिद्धत्वं कथम्, अन्तर्यामिब्राह्मणे वैश्वानरविद्यायां च सर्वभूतान्तरात्मेत्येवमाकारवाक्याश्रवणादित्याशङ्क्याह **एष सर्व भूतान्तरात्मेत्यादि** । **मुण्डकोपनिषद्वाक्यस्य सपक्षत्वेनोपन्यासादिति** । द्युभ्वाद्यधिकरणविषयवाक्यैकप्रकरणस्य, 'पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मे' ति मुण्डकोपनिषद्वाक्यस्य, 'स्मर्यमाणमनुमानं स्यादिति' इति वैश्वानराधिकरणगुणसूत्रे सपक्षत्वेनोपन्यासादित्यर्थः । **इदानीमितीति** ग्रन्थस्यानन्तरम्, "**प्रधानपुरुषादिप्रतिपादनमुखेने**ति । न केवलं लिङ्गप्रतिपादकानि किन्तु लिङ्गिनामेव प्रधानादीनां प्रतिपादनमुखेन प्रधानादिकारणत्वप्रतिपादनच्छायानुसारीणि" इति पाठस्तु समीचीनः । कोशस्तु निरीक्ष्यः । **प्रत्यगात्मनः परस्य निषेधादिति** । पुरुषान्न परं किञ्चित्" इति प्रत्यगात्मव्यतिरिक्तस्य सांख्यमत इव निषेधादिति भावः । बद्धमुक्तोभयावस्थाद्विलक्षणमिति ह्युक्तमिति । यद्यपीदं प्रथमपदार्थसूचकमिति व्याख्यातम् — अथाप्यव्यवहिताधिकरणार्थस्मारकत्वमपि संभवतीत्यभिप्रेत्यैवमुक्तमिति द्रष्टव्यम् । **रूप्यते अनेने**ति । रूपवत्तया क्रियते अनेनेत्यर्थः । रूपवच्छब्दात् तत्करोतीति णिचि णौ इष्ठवद्भावात्, "विन्मतोर्लुक्" इति मतुपो लुकि

टिलोपे च ण्यन्तात् रूपीत्येतस्मात् कर्मणि, रूप्यत इति प्रयोगः । ण्यन्तात् रूपीत्येतस्मात् कर्तरि ण्वुलि णिलोपे च, रूपवत्करोतीति रूपकमिति हि रूपकशब्द-निष्पत्तिः । एवमेव ह्यालङ्कारिकाणामुक्तिः । ततश्चात्मशरीरादीन् उपमेयान् स्वेन रूपेण रूपवतः कुर्वन्तो रथिरथादयो रूपकाः । ततश्च रूपकरथात्मना विन्यस्तशरीरस्य गृहीतिरित्यर्थः । **प्राधान्येन विवक्षितमिति** । विशेषणविशेष्यभावे कामचारादिति भावः । **पूर्वनिपात इति भाव** इति । नन्वेवं निर्देशे किं प्रयोजनमिति चेत्—उच्यते । शरीरे अधिकरणे रूपकात्मना विन्यस्ताः शरीररूपकविन्यस्ता इन्द्रियादयः । तेषां स्वस्ववाचकशब्देन गृहीतत्वात् पारिशेष्यात् अव्यक्तशब्देन गृह्यत इत्यत्र नियामक-तया पारिशेष्यस्योपन्यसनीयतया न प्रदर्शकसमासान्तराश्रयणस्यापि [लाभात्?] सार्थ-क्यात् । भाष्ये **तद्विष्णोः परमं पद**मित्यन्तेनेति । "इन्द्रियाणि हयानाहुर्विषयां-स्तेषु गोचरान् । आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः ॥ यस्त्वविज्ञानवान् भवति अयुक्तेन मनसा सह । तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः ॥ यस्तु विज्ञानवान् भवति युक्तेन मनसा सह । तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः ॥ यस्त्वविज्ञानवान् भवत्यमनस्कः सदाऽशुचिः । न स तत्पदमाप्नोति संसारञ्चाधिगच्छति ॥ यस्तु विज्ञानवान् भवति समनस्कः सदा शुचिः । स तु तत् पदमाप्नोति यस्माद्भूयो न जायते ॥ विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः । सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् । इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः । मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः । महतः परमव्यक्तं अव्यक्तात् पुरुषः परः । पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः । एष सर्वेषु भूतेषु गूढात्मा न प्रकाशते । दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥ यच्छेद्वाङ्मनसी प्राज्ञः तद्यच्छेद् ज्ञान आत्मनि । ज्ञानमात्मनि महति नियच्छेत् तद्यच्छेच्छान्त आत्मनि । उत्तिष्ठत जाग्रत प्राप्य वरान्निबोधत । क्षुरस्य धारा निशिता दुरत्यया दुर्गं पथस्तत् कवयो वदन्ति । अशब्दमस्पर्शमरूपमव्ययम्—" इति हि श्रुतिक्रमः । **माध्यस्त्वलक्षणप्रकर्ष** इति । शेषित्वलक्षणप्रकर्ष इत्यर्थः । "अध्यवसायाभिमानचिन्तावृत्तिभेदात् मन एव बुद्ध्यहङ्कारचित्तशब्दैः व्यपदिश्यते" इति, "पञ्चवृत्तिर्मनोवद्व्यपदिश्यते" इतिसूत्रभाष्यं हृदि निधाय बुद्धिशब्दस्यान्तः-

करणपरत्वेऽपि नानुपपत्तिरित्यभिप्रयन्नाह **यद्वा बुद्धिशब्दोऽन्तःकरणपर** इति । **कैश्चिदुक्तमिति** । सूत्रवादिभिर्हि—महच्छब्देन, "मनो महान् मतिर्ब्रह्मा भूर्बुद्धिः ख्यातिरीश्वरः । प्रज्ञा संविन् चितिश्चैव स्मृतिश्च परिगृह्यते" इति स्मृतिवशात् प्रथमोत्पन्नहिरण्यगर्भबुद्धिरुच्यते । तस्याश्चाव्यक्तप्रभवत्वात्, महतः परमव्यक्तमित्युक्तिरुपपद्यते । यद्वा जीव एव महच्छब्देनाभिधीयते, आत्मशब्देन विशेषणात् । तत्रापि पक्षे जीवभावस्याव्यक्ताधीनत्वेन महतः परत्वमुपपद्यते । पक्षद्वयेऽपि अव्यक्तशब्दिताविद्यानिष्ठत्वं महत्परत्वं तत्कार्ये शरीरे उपचर्यत इत्युक्तमिति भावः । ननु कथं **जीवपर्यन्तस्येत्युच्यते**, महतः परमव्यक्तमिति पूर्ववाक्ये अव्यक्तशब्दितशरीरस्यैव जीवादपि परत्वोपन्यासेनाव्यक्तपर्यन्तस्येति हि निर्देशो युक्त इत्याशङ्क्याह **नास्मिन् वाक्य** इति । 'यथोक्तस्यात्मपर्यन्तस्ये'ति भाष्यवाक्य इत्यर्थः । **पदस्यात्राकथनादिति** । 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पद'मिति पारत्वेन रूपितस्य विष्णोः परमपदस्य, 'इन्द्रियेभ्यः परा ह्यर्था' इत्यत्राकथनादित्यर्थः । **क्वचिदस्तीति** । अजामेकामित्यादौ तादृशविचारस्य दर्शयिष्यमाणत्वादिति भावः । **अहङ्कारद्वारा बुद्धेरिति** । बुद्धिर्महत्तत्त्वम् । **तन्त्रप्रक्रियाविरोधप्रतीतेरिति** । तन्त्रे अहङ्कारस्य महत्तत्त्वजन्यत्वेन मनोजन्यत्वाभावादिति भावः । **सूत्रखण्डोपादानमिति** । **दर्शयति चेत्यादिग्रन्थः** सूत्रखण्डव्याख्यानरूप इत्यर्थः । ततश्च **दर्शयति चे**त्यस्य सूत्रखण्डोपादानत्वे **तद्वेति** भाष्यखण्डस्य कुत्राप्यनन्वयप्रसङ्गादिति दूषणमलग्नकं वेदितव्यम् । ननु, 'सुपां सुलुक्' इति सूत्रे सोः प्रथमनिर्दिष्टतया तदतिक्रमे कारणभावेन द्वितीयायाः स्वादेशे हल्ङ्यादिलोपे च द्वितीयान्तरं कुतो न सिध्येदित्याशङ्क्य प्रक्रियागौरवान्नायं पन्था इत्याह **ननु वाक्छब्दादित्यादिना** । ननु भाष्ये **मनसी इतीति** कथं निर्देशः; सवर्णदीर्घेण हि भाव्यमित्यत्राह । **ईदूतौ च सप्तम्यर्थे** इति । **प्रकृतिभावस्मरणनिबन्धनो मनसी इतीति निर्देश** इति । 'ईदूतौ च सप्तम्यर्थे' इति सूत्रविहितप्रगृह्यसंज्ञानिमित्तकप्रकृतिभावनिबन्धन इत्यर्थः । **प्रकृतिवद्भावस्मरणेति** क्वचित् पाठो दृश्यते । स तु लेखकस्खलनकृतः । **उपसङ्ख्यानेन निर्वाहासंभवादिति ब्रूम इति** । 'इयाडियाजीकाराणामुपसङ्ख्यान'मित्यस्यापि च्छन्दोविषयतया छान्दसत्वानाश्रयणेन निर्वाहस्यासंभवादित्यर्थः ।

'वाङ्मनसी' इत्यस्य द्वितीयाद्विवचनान्तत्वशङ्कां प्रतिक्षिपति **न हि वाङ्मनसी इत्यत्रे**ति । प्रकरणानुगुण्यमेकवचनोपपत्तिञ्च स्पष्टयति **यच्छेदित्युक्तस्ये**ति ।

**केचिद्व्याचक्षत** इति । यादवप्रकाशीया इत्यर्थः । स्वग्रन्थमेव प्रदर्शयति **अथ बुद्धिशब्देनाहङ्कारं ब्रूयुरि**ति । **अन्तिमसूत्रव्याख्याने तैरेवोक्त**मिति । महद्वच्चेति सूत्रव्याख्याने यादवप्रकाशीयैरेवोक्तमित्यर्थः । युक्त्यन्तरमप्याह । **तन्निमित्तमिदं विषयसंनिधिपरिवर्जनमि**त्यादिना । **योगव्युत्थानकाल** इति । योगरहितदशायामित्यर्थः । **अत्यन्तनिषेधस्त्व**ति । ततश्च योगव्युत्थानकालकर्तव्यविषयसंनिधिपरिवर्जनादेरस्मिन् मन्त्रे अनुक्तिर्न दोषायेति भावः । प्रकृतमुपसंहरति **अतो योगकाल एवे**ति ।

## सूक्ष्मं तु तदर्हत्वात् १-४-२.

**कार्येणापि शरीरशब्दोपचारः किं न स्यादि**ति । यद्यपीयं शङ्का उपक्रमाधिकरणन्यायादित्यादिना पूर्वं परिहृता,—तथापि अर्हत्वादिति सूत्रखण्डाभिप्रेतयुक्त्यन्तरोपन्यासायायं पुनरुत्क्षेप इति द्रष्टव्यम् । ननु तदर्हत्वादित्यत्र **तच्छब्देन** विकारापन्नाव्याकृताचिद्वस्तुनः कथं परामर्शः, सूक्ष्ममिति सौत्रपदेन सूक्ष्ममात्रस्य प्रकृततया विकारापन्नाव्याकृतस्याप्रस्तुतत्वादित्याशङ्क्य, **शरीररूपके**ति पूर्वसूत्रे शरीरस्य श्रुतत्वात् अस्मिंश्च सूत्रे **सूक्ष्म**मिति निर्दिष्टत्वाच्च शरीरभावापन्नं सूक्ष्मं बुद्धिस्थम्; विशिष्टस्य प्रकृतस्तुतया तस्य तच्छब्देन परामर्शः सम्भवतीत्याह **सूक्ष्मत्वं स्वशब्देनोपस्थापित**मिति । **सूक्ष्म**मिति सौत्रपदेन उपस्थापितमित्यर्थः । **बुद्धिस्थ**मिति । पूर्वसूत्रे शरीररूपकेति बुद्धिस्थमित्यर्थः । **अवस्थाद्वयानुगतबुद्धिलक्षणानिमित्तमाकारमाहे**ति । अवस्थान्तरविशिष्टवस्तुलक्षणाबीजभूतमुख्यार्थानुपपत्तिमाहेत्यर्थः । **चिद्वस्तुनोऽप्यस्ती**ति । ज्ञानसङ्कोचविकासरूपविकारवतो रथवत् पुरुषार्थप्रवृत्त्यर्हत्वाभावात् अचिद्वस्तुन एव विकारापन्नस्य प्रवृत्त्यर्हत्वादिति वक्तव्यमिति भावः । **पुरुषार्थसाधनप्रवृत्तिविशेषप्रतिपादनेने**ति । पुरुषार्थसाधनं यागादिः, प्रवृत्तिविशेषः नियमनम् । ततश्च पुरुषार्थसाधनानामेव रूपकवाक्ये परत्वावधिवाक्येऽपि ग्राह्यत्वात् सूक्ष्मस्य चातथात्वात् शरीरस्यैव ग्रहणं युक्तमिति भावः ।

तदधीनत्वादर्थवत् (१-४-३.)

**कालान्तरावच्छिन्नाकारविरह** इति । कालान्तरव्यावृत्ताकारविरहः कालान्तरव्यावृत्तिविरह इत्यर्थः । कालान्तरानुवृत्तिरिति यावत् । **तदुपयुक्तार्थ-तादधीन्यस्यापीति** । तदव्यक्तं उपयुक्तं यस्येति तदुपयुक्तार्थः, तत्साध्यार्थो महदादिरुच्यते । यदर्थोपयुक्तस्वरूपप्रवृत्तयो यदधीनाः, तत्साध्यार्थस्यापि तदधीनत्व-दर्शनादिति भावः । ननु महिमवादेषु शरीरत्वप्रतिपादनेन तदात्मकत्वसिद्धावपि प्रळयवादेषु कथं तत्सिद्धिः? पृथिव्यादीनामव्वादिषु लयमात्रप्रतिपादनादित्याशङ्कयाह— **प्रळये परत्वश्रुतेरपीति** । भाष्ये — उत्पत्तिवाक्यानुपदाने हेतुमाह — **अप्यय-पूर्वकत्वादिति** । **इतरैरिति** । यादवादिभिरित्यर्थः । **निरुह्यत** इति पाठः, वहेर्यकि संप्रसारणे अङ्गावयवहलुत्तरत्वाभावेन तस्य दीर्घाप्रसक्तेः, 'ऊह वितर्के' इति धात्वाश्रयणेऽपि, "उपसर्गात् ह्रस्व ऊहतेः" इति ह्रस्वविधानाच्चेति द्रष्टव्यम् । **केन युक्तिबलेनेति** । अव्यक्तपरत्वस्येति शेषः । शङ्कते — **प्रकरण-परिशेषाभ्यामिति** । 'रूपविन्यस्तगृहीते' रित्याद्यसूत्रविवक्षिताभ्या[माभ्या?]मव्यक्त-शब्दस्य शरीरविषयत्वनिश्चयात् शरीरस्य चात्मापेक्षया मुख्यस्य परस्यासंभवेनास्मिन् प्रकरणे सर्वत्र परत्वस्य यथाकथञ्चिन्निर्वाह्यत्वं श्रुत्यभिप्रेतमवगम्यते । ततश्चार्था-दीनामपि परत्वं कथञ्चिदुपपद्यत इति सिद्ध्यतीति चेदित्यर्थः । **तेनैवेति** । युक्ति-बलेनेति शेषः ॥

त्रयाणामेव चैवमुपन्यासः प्रश्नश्च (१-४-४.)

**हेतुसमुच्चय** इति । पूर्वसूत्रोक्तहेतुना एतत्सूत्रोक्तहेतुं समुच्चिनोतीत्यर्थः । **लोकादिमग्निं तमुवाच तस्मा इति उपक्रम्येति** । अत्रापेक्षितः श्रुतिक्रमः "अत्ता चराचरग्रहणात्" ( १ - २ - ) इत्यत्र विलिखितः व्याख्यातश्च, तत एवावगन्तव्यः । **जहातीत्युपदिदेशेतीति** । पूर्वेणान्वय इति शेषः । **पुनःपप्रच्छेति पाठ** इति । पुनःपुनः पप्रच्छेति पाठस्तु न युक्त इति भावः । भाष्ये — "**मत्वा धीरो हर्षशोकौ जहाति" इति निर्दिष्टस्य ब्रह्मोपासनस्य** इति पाठः । "धीरो न शोचतीति" पाठो लेखकदोषात् । तस्याप्रकृतत्वादिति द्रष्टव्यम् । ननु कृताकृताद् भूताद् भव्याच्चेति त्रितयस्यापि

धर्मादधर्मादस्मादिति निर्दिष्टोपायोपेयोपेतृविशेषणत्वे अन्यत्र भूताद्भव्याच्चेत्यन्यत्र-पदं व्यर्थं स्यादित्यस्वरसादाह **यद्वा धर्मादधर्माच्चान्यत्रेति** । परैस्तु धर्माधर्मशब्दाभ्यां तत्साध्यफलानि विवक्षितानि ; कृताकृतादिति कार्यकारणप्रपञ्चो विवक्षितः ; भूतादिति भूतकालमात्रपरिच्छिन्नं परामृश्यते ; भव्यादिति भविष्यत्कालमात्रपरिच्छिन्नम् ; ततश्च तत्सर्वव्यावृत्तमित्यर्थ इति व्याख्यातम् । तदेतदाशङ्कते **ननु धर्माधर्मसाध्येति** । **प्रणवेन ब्रह्मप्रतिपादनं ह्युच्यत** इति । ततश्च, 'तत्ते पदं सङ्ग्रहेण ब्रवीमी' त्ययमंशः पदशब्दितब्रह्मप्रतिपादकतया प्रणवप्रशंसापर इति भावः । भाष्ये — **सामान्येन ख्यापयन्निति** । ओमित्यनेनैव सामान्येन ख्यापयन्नित्यर्थः । **प्रणवैकदेशवाच्यो हीति** । तदेकदेशवाच्यस्य तद्वाच्यैकदेशत्वनियमादिति भावः । तच्छब्दस्य प्रणववाच्यपरत्वं क्लिष्टमित्यस्वरसादाह **यद्वा प्राप्येति** ।

**एतद्ध्येवाक्षरमित्यादि** । "एतद्ध्येवाक्षरं ब्रह्म, एतद्ध्येवाक्षरं परम् । एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् । एतदालम्बनं श्रेष्ठ एतदालम्बनं परम् । एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते" इति वाक्यमभिप्रयन्नित्यर्थः । **इदं मन्त्रद्वयमिति** । "न जायते म्रियते वा विपश्चित् नायं कुतश्चिन्न बभूव कश्चित् । अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे । हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम् । उभौ तौ न विजानीतो नायं हन्ति न हन्यते" इति मन्त्रद्वयमित्यर्थः । **अर्थान्तरपरत्वस्येति** । प्रधानपरत्वस्येत्यर्थः । **हन्त त इदं प्रवक्ष्यामीति** । यद्यपि, 'न जायते म्रियते वा विपश्चित्' इति परमात्मविषयप्रतिवचनसंदर्भानन्तरमेवेदं वाक्यम्, तथापि योग्यतावशात् जीवविषयप्रश्नस्येदं प्रतिवचनमिति न प्रश्नक्रमानुरोधी श्रुतौ प्रतिवचनक्रम इति द्रष्टव्यम् । ननु, 'अन्यत्र धर्मात्' इति प्रश्नः किं 'येयं प्रेत' इति प्रश्नसमानविषयकः, उत तदधिकविषयकः, नाद्यः, तथा सति अग्निजीवपरमात्मनां त्रयाणामुपन्यासः प्रश्नश्चेति सूत्रविरोधात् । न द्वितीयः, वरत्रयानन्तर्भूतस्य प्रश्नानर्हत्वात् । इतरथा प्राधान्यस्याप्युपन्याससंभवेनाधिकरणविरोधापत्तेरित्याशङ्क्य वस्तुगत्या परमात्मनो जीवाभिन्नतया वरत्रयान्तर्भावस्याप्युपपत्तेः जीवपरयोरौपाधिकभेदमादायाग्निजीवपरमात्मनां त्रयाणामिति

सूत्रनिर्देशस्याप्युपपत्तेरित्यभिप्रयन्नाह **न च जीवविषयप्रश्नस्येति । परमात्मविषयतावैवश्यमिति** । परमात्मविषयप्रतिवचनवैवश्यमिति पाठे तु, 'येयं प्रेत' इति जीवप्रश्नस्य, 'तं दुर्दर्श' मिति परमात्मविषयप्रतिवचनवैवश्यमित्यर्थः । **अतिविरोधेऽपीति** । अग्निजीवपराणां त्रित्वोपन्यासेन जीवपरयोर्भेदस्यैव सौत्रत्वप्रतिपादनेनास्मदनुकूलत्वादिति भावः । **प्रधानप्रतिपाद्यत्वाभावस्येति** । प्रधानस्य = त्रिगुणद्रव्यस्येत्यर्थः । प्रश्नोपन्याससमुच्चयस्य प्रतिपाद्यत्वे हेतुत्वाभावमुपपादयति **उपायो हीति । हृदयायतने उपायतयावस्थितस्येति ।** ननु पूर्वत्र हृदयादित्यवर्तिनोरप्रकृतत्वात् कथमिदमुच्यत इति चेत् – उच्यते । "अरण्योर्निहितो जातवेदा गर्भ इवेत्सुभृतो गर्भिणीभिः । दिवेदिव ईड्यो जागृवद्भिर्हविष्मद्भिर्मनुष्येभिरग्निः । एतद्वै तत्" इति मन्त्रेण हृदयायतनस्थस्य च, "यतश्चोदेति सूर्योऽस्तं यत्र च गच्छति । तं देवाः सर्वे अर्पिताः तदु नात्येति कश्चन, एतद्वै तत्" इति तदनन्तरमन्त्रेणादित्यमण्डलस्थस्यापि पूर्वप्रकृतत्वात् । तथा हि – अरण्योर्निहितः अग्निरिव, गर्भिणीभिः सुभृतः=अन्नपानादिभिः पोषितो गर्भ इव च, दिवे दिवे = अहन्यहनि जागृवद्भिः = जाग्रद्भिरप्रमत्तैः हविष्मद्भिः = आराधनोपकरणवद्भिर्मनुष्यैः ईड्यः = स्तुत्यः ध्येयः अग्निः अग्रनयनादियोगात् । एतद्वै तत्= एवंभूतो हृदयायतनस्थः तदेव= अन्यत्राधर्मादित्यादिना त्वया पृष्टमेवेत्यर्थः । अतोऽस्मिन् मन्त्रे हृदयायतने उपास्यः प्रस्तुतः । यतश्चोदेति सूर्यः =, सूर्योत्पत्तिलयाधारभूतः । तं देवास्सर्वे अर्पिताः = सर्वे देवास्तदुपासिन इत्यर्थः । अतश्च सूर्यमण्डलस्य उपादानतया तदात्मकं तदन्तर्वर्तिदेवोपास्यं प्रस्तुत्य तस्यापि, 'एतद्वै तत्' इति ब्रह्माभेदे बोधिते, तदनन्तरं हृदयायतने मनुष्यैरुपास्यस्यादित्यमण्डलान्तर्वर्तिदेवोपास्यस्य चायतनभेदेन भिन्नत्वात् कथम्, 'एतद्वै तत्' इति एकेन ब्रह्मणा अभेदो बोध्यत इति शङ्का व्यावर्त्यते **यदेवेहेत्यादिना** ("यदेवेह, तदमुत्र यदमुत्र तदन्विह । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यती" त्यादिना) । अतो नाप्रसक्तनिषेधत्वशङ्कावकाश इति ध्येयम् ।

**एतदपेक्षया दुर्बलमिति** । 'ऋतं पिबन्ता' विति भेदश्रुत्यपेक्षया दुर्बलमित्यर्थः । **तच्च दर्शितमिति** । 'अध्यात्मयोगाधिगमेन देवम्', 'न

जायते म्रियते वा विपश्चित्' इत्यादिकमित्यर्थः। **प्रतिवचनाव्यवहिता** इति। प्रतिवचनैरव्यवहिताः = अनन्तरिता इत्यर्थः। एवं **प्रश्नाव्यवहितानि**त्यत्रापि। नन्वस्मिन् प्रकरणे उपायोपेयोपेतृव्यतिरिक्ताग्नेरपि पृष्टतया त्रयाणामेवेत्यवधारणं भवन्मतेऽप्ययुक्तम्। न चाग्निरप्युपायकोटिनिविष्ट इति वाच्यम्--ज्ञानैकसाध्यत्वान्मुक्तेरित्याशङ्क्याह **अर्थत्रयस्य चे**ति।

इति आनुमानिकाधिकरणम् ॥

---

## चमसाधिकरणम् (२)

---

### चमसवदविशेषात् १-४-८.

**कारण प्रधानमेवे**ति। स्वतन्त्रप्रधानमेवोच्यत इत्यर्थः। तेजोबन्नपरत्वेन **व्याख्यात**मिति। ननु वाचस्पतिना, "किं स्वतन्त्रं प्रधानमनेन मन्त्रवर्णेन प्रतिपाद्यताम्। उत पारमेश्वरी मायाशक्तिस्तेजोबन्नव्याकियाकारणमुच्यताम्" इत्येवं सिद्धान्ते मूलप्रकृतिपरत्वमेव प्रदर्शितम्; न तु तेजोबन्नात्मकावान्तरप्रकृतिपरत्वमिति चेत्--सत्यमुक्तं वाचस्पतिना। तथापि वचनस्य ज्योतिरुपक्रमादिति सूत्रतद्भाष्याभ्याम्, तेजोबन्नानां जननश्रवणात् कथमजात्वमिति कल्पनोपदेशादिति सूत्रावतारिकाभाष्येण च विरुद्धत्वात् तत्र अनादृतम्। यदि हि मूलप्रकृतिर्मन्त्रवर्णप्रतिपाद्यत्वेनाभिमता स्यात्, तदा तस्याः जन्मरहिततया, कथमजात्वमित्याक्षेपस्य वा, कल्पनोपदेशादिति छागत्वपरिकल्पनेन परिहारस्य वाऽसंभवादिति ध्येयम्। **गौण्या वृत्त्या सत्त्वरजस्तमोमयी**ति। रक्तं कुसुम्भादि। रञ्जयतीति रक्तशब्देन रज उच्यते। एवं प्रसन्नं सलिलं शुक्लम्; सत्त्वमपि प्रसन्नमिति प्रसन्नत्वसाधर्म्यात् सितशब्देन सत्त्वमुच्यते। एवमावारकमन्धकारं नीलम्; तमोगुणश्चाऽऽवारक इति आवारकत्वसाधर्म्यात् तमोऽपि नीलादिशब्देनोच्यत इति भावः। **परिणम्यमान**मिति पाठः; णिचि, 'मितां ह्रस्व' इति ह्रस्वविधानात्। यद्वा, 'मितां ह्रस्व' इत्यत्र वेत्यनुवृत्तेः परिणाम्यमानामित्यस्य साधुत्वं द्रष्टव्यम्। **प्रकृत्यादीना**मिति व्याख्येयं पदम्। नन्वत्र प्रकृत्यादीनां स्वरूपमभिहितमिति कथमुच्यते; 'षड्विंशकमित्याहु'

रित्यादाविवात्रापि, 'एकस्तु पिबते देवः स्वच्छन्दोऽत्र वशानुगाम्' इतीश्वरस्यापि प्रतिपादनादित्याशङ्क्याह **एषु वाक्येष्वीश्वरप्रतिपादनमिति**। ततश्च **प्रकृत्यादीनां स्वरूपमभिहित**मिति भाष्यस्य ब्रह्मात्मकस्वरूपमभिहितमित्यर्थ इति भावः। **तदन्तर्यामिभगवत्प्रतिपादकं वाक्य**मिति। "स्तूयते मन्त्रसंस्कृत्यैरध्वर्वविहितै-र्विभुः" इति उत्तरखण्डे विभुशब्देन व्यापकं नियन्तारं 'संस्तुत्य षड्विंशक' मित्यादि-प्रतिपादनात् षड्विंशकस्यात्मत्वं सिद्धमिति भावः।

भाष्ये, 'प्रकृतिं पुरुषञ्चैव' इत्यादि गीतायां त्रयोदशाध्याये ; 'सत्त्वं रजस्तम' इति चतुर्दशाध्याये ; सर्वभूतानि कौन्तेये' त्यादि नवमे। भाष्ये सिद्धान्ते, 'चमसवदविशेषात' इति सूत्रोपादानानन्तरम्, 'नात्र तन्त्र-सिद्धा प्रकृतिरभिधीयते' इति केषुचित् कोशेषु दृश्यते। तत् अदृष्टश्रुतप्रकाशिकैः पण्डितम्मन्यैः प्रक्षिप्तम्। 'उपक्रमस्थं प्रतिज्ञावाक्यमनुषज्यत इति मत्वे' ति टीकोक्तेरिति द्रष्टव्यम्। वस्तुतस्तु, 'नात्र तन्त्रसिद्धा प्रकृतिरभिधीयत' इत्येव प्रतिज्ञोचिता। न तु, 'प्रकृतिर्निरस्यत' इति। सूत्रावतारिकायां निरस्यत इत्युक्ति-संभवेऽपि सूत्रार्थकथनदशायां निरस्यत इति प्रतिज्ञाया अयुक्तत्वात् नानुषङ्गो-ऽपेक्षितः। अतो यथाभाष्यमेव प्रतीमः। भाष्ये, **यथार्वाग्बिलश्चमस ऊर्ध्वबुध्न** इति। बृहदारण्यके चतुर्थप्रपाठके शिशुब्राह्मणे, "तदेष श्लोको भवति — अर्वा-ग्बिलश्चमस ऊर्ध्वबुध्नः तस्मिन् यशो निहितं विश्वरूपम्। तस्यासत ऋषयः सप्त तीरे वागष्टमी ब्रह्मणा संविदानेति। अर्वाग्बिलश्चमस ऊर्ध्वबुध्न इतीदं तत् शिर। एष ह्यर्वाग्बिलश्चमसः ऊर्ध्वबुध्नः। तस्मिन् यशो निहितं विश्वरूपमिति; प्राणा वै यशो विश्वरूपम् ; प्राणानेतदाह। तस्यासत ऋषयः सप्त तीर इति। प्राणा वा ऋषयः। प्राणानेतदाह। वागष्टमी ब्रह्मणा संविदानेति वाग्घ्यष्टमी ब्रह्मणा संवित्ता" इति श्रूयते। तत्र चमसमन्त्रपर्यालोचनायां न विशेषप्रतिपत्तिः। वाक्यशेषे तु कण्ठा-दुपरिभागे चमसत्वकल्पना, तद्गतमुखविवरे बिलत्वकल्पना, तदूर्ध्वभागे मूर्धावयवे स्थूलमूलभागरूपबुध्नत्वकल्पना, तस्मिन् विसृमरतया स्थितेषु प्राणादिवायुषु यशस्त्व-कल्पना, (तस्मिन् परितःस्थितेषु प्राणादिवायुषु यशस्त्वकल्पना) तस्मिन् परितः स्थितेषु श्रोत्रादिषु इन्द्रियेषु ऋषित्वकल्पनेत्यर्थावगतिरिति भावः। भाष्ये

**साधनत्वमात्रं चमसशब्देन प्रतीयत** इति । इदमुपलक्षणम् — अर्वाग्बिलोर्ध्वबुध्न-शब्दाभ्यामर्वाग्बिलोर्ध्वबुध्नत्वे अपि प्रतीयेते इति द्रष्टव्यम् । न चार्वाग्बिलोर्ध्वबुध्न-स्वरूपविशेषणमहिम्ना विशेषप्रतीतिः; तयोर्गुणादिसाधारण्यात् ।

**साधर्म्यदृष्टान्ततया व्याख्यात** इति । **तत्र यथेदं तच्छिर** इत्यारभ्य वैधर्म्य-दृष्टान्त इति भाष्याभिमतमिति भावः । भाष्ये **यौगिकशब्दानामि**ति । "चमसेषु समाख्यानात्—" इत्यधिकरणे (३-३-३.) यौगिकत्वस्योक्तेरिति भावः । इदमुप-लक्षणम् — प्रकृते, चमसशब्दस्य प्रयोगनैयत्येन पात्रविशेषे रूढत्वेऽपि प्रसिद्धस्य चमसस्योर्ध्वबिलत्वेन तिर्यग्बुध्नत्वेन च तद्विलक्षणत्वे अर्वाग्बिलत्वोर्ध्वबुध्नत्वे (त्व-पे?) कथिते, कोऽसावीदृशश्चमस इति विशेषजिज्ञासायाः सत्त्वेन विशेषनिश्चयाभावात् । अत एव, 'तस्मिन् यशो निहितं विश्वरूपम्', 'तस्यासत ऋषयः सप्त तीरे' इत्यादौ यशआदिशब्दानां रूढत्वेऽपि तादृग्भूतयशःपदार्थादिजिज्ञासाया दर्शनादिति द्रष्टव्यम् । **बलभिदादी**ति । बलभेदकर्तृत्वस्येन्द्रासाधारणत्वादिति भावः । **यथेति न श्रुतिपद**मिति पाठः । स च श्रुतिभ्रान्तिनिवारणार्थः । ततश्च **तथा-ऽत्रापीति तथाशब्दप्रतिद्वन्द्वी यथाशब्दः** । न चास्य यथाशब्दस्य तथात्रापीति भाष्येणान्वय इति पूर्वमेवान्वयो दर्शित इति वाच्यम् — यथाशब्दद्वयपरामृष्टस्य एकेन तथाशब्देन परामर्शसंभवेनादोषात् । श्रुतौ यथाशब्दादर्शनाच्चेति द्रष्टव्यम् । **स्वातन्त्र्य-मेव प्रत्ययवाच्य**मिति । कर्त्रर्थशानच्प्रत्ययेन, स्वतन्त्रः कर्तेति स्वातन्त्र्यलक्षण-कर्तृत्वमेव वाच्यमित्यर्थः । मात्रशब्दाभिप्रेतं निश्चायकत्वा (का?) भावमेवाह **यदि ब्रह्मात्मकत्व**मिति । **तद्गततये**ति । प्रकृतिशरीरकब्रह्मगततयेत्यर्थः ।

ज्योतिरुपक्रमा तु तथा ह्यधीयत एके १-४-९.

**सृष्टिप्रकरणस्थत्वा**दिति । यद्यपि प्रयाजादीनामङ्गत्वे इतिकर्तव्यताकाङ्क्षा-लक्षणं प्रकरणं प्रमाणम्, इह सृज्यमानप्रायपाठात्मकसंनिधिलक्षणं प्रकरणं प्रमाणम् — तथाप्युभयोरपि प्रकरणशब्दव्यवहार्यत्वमस्तीति तथोक्तमिति द्रष्टव्यम् । **पूर्वमेव विच्छेदा**दिति । 'ब्रह्मा देवानां पदवीः कवीनाम्' इत्यत्र विच्छेदादिति भावः । **न सृष्टिप्रकरणविच्छेद** इति । यद्यपि सृजमानामिति प्रकृतिकर्तृकसृष्टेः प्रतिपादनेऽपि ईश्वरकर्तृकसृष्टिप्रकरणाविच्छेदे नैतत् प्रमाणम् — तथापि यथाकथञ्चित् सृष्टिप्रकरण-

भावानुवृत्तिप्रदर्शनार्थमिदमुक्तमिति द्रष्टव्यम् । प्रक्रियमाणमिति ह्युक्तमिति । शानचा प्रकरणस्य वर्तमानत्वप्रतीतेरिति भावः । एतद्विशेषणत्वेनेति । प्रकृतिविशेषणत्वेनेत्यर्थः । तस्मिन् प्रकरणे अनन्यविशेषणत्वेन प्रतिपाद्यस्य प्रायपाठादुत्पत्तिरभ्युपगन्तव्येति भावः ।

शाखान्तरे दर्शितमिति । ननु तैत्तिरीयकेऽपि सृज्यमानप्रकरणपाठमात्रेण कथं परमात्मकारणत्वम् ; मुक्तस्यापि तथात्वप्रसंगात् । न च मुक्तोऽन्यार्थतया निर्दिष्ट इति वाच्यम् — प्रथमनिर्दिष्टस्यान्यार्थतया निर्देशे प्रमाणाभावात् । वैपरीत्यस्यापि सुवचत्वाच्च । किञ्च प्रायपाठभङ्गके जननप्रतिषेधके अजाशब्दे जाग्रति कथं तस्याः कार्यत्वसिद्धिरिति चेत् - अत्र केचित् — उपक्रमशब्दो मुख्यवाची सन् लक्षणया नियन्तृत्वपरः । ततश्च ज्योतिरुपक्रमा= ब्रह्मात्मिकेत्यर्थः । अत्र च हेतुः श्वेताश्वतरप्रकरणमेव । तत्र हि, 'ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम्', 'मायिनं तु महेश्वरम्', 'अस्मान्मायी सृजते विश्वमेतत्' इति आत्मशक्तितया तद्विशेषणतया च प्रतिपाद्यमानत्वात् । अयञ्च हेतुरुत्सूत्र एव । श्वेताश्वतरे, देवात्मशक्तिमिति श्रवणात् ब्रह्मात्मकप्रकृतिप्रतिपादनेऽपि तैत्तिरीयके तथा प्रतिपादनादर्शनात् कथं तत्र ब्रह्मात्मकप्रकृतिप्रतिपादनमित्याशङ्क्याह तथा ह्यधीयत एक इति । तत्रापि ब्रह्मात्मिकैव प्रकृतिः प्रतिपाद्यत इत्यर्थः । तथाहि — 'सप्त प्राणाः प्रभवन्ति' इत्यादिना कृत्स्नस्य जगतो ब्रह्मकार्यत्वेऽभिहिते कथं निर्विकारस्य ब्रह्मणो विकारोत्पादकत्वमिति शङ्काव्युदासाय प्रवृत्तोऽयमजामन्त्रवर्णः । यद्ययं ब्रह्मात्मिकामजां न प्रतिपादयेत्—तदा प्रागुपक्षिप्तब्रह्मोपादानत्वनिर्वाहको न स्यात् । अन्यदुपक्रान्तम् — अन्यदापतितमिति न्यायप्रसंगात् । अतः सोऽपि मन्त्रः ब्रह्मात्मकप्रकृतिपर एवेति । ननु ज्योतिरुपक्रमाशब्दस्य परमात्मात्मकत्वमात्रप्रतिपादकत्वे अजात्वज्योतिरुपक्रमात्वयोर्विरोधाभावात् तत्परिहारपरोत्तरसूत्रासंगतिः स्यादिति चेत् — न; प्रकृतेर्ब्रह्मात्मकत्वस्य तत्कार्यत्वेनैव निर्वोढव्यतया नित्यायाः प्रकृतेस्तत्कार्यत्वाभावात् कथं ब्रह्मात्मकत्वमित्याक्षेपे, 'अस्मान्मायी सृजते विश्वमेतत्' इति निर्विकारस्य परमात्मनः कारणत्वनिर्वाहकतया सृष्ट्युपयुक्ततया च प्रतिपाद्यमानायाः प्रकृतेः सर्वदा अपृथक्सिद्धविशेषणत्वस्यावश्यम्भावेन तदात्मकत्वस्य नानुपपत्तिः । ततश्चाविभक्तनामरूपा च विभक्त-

नामरूपा च प्रकृतिः सर्वदा परमात्मशरीरभूतैव ; यथा विभक्तनामरूपोऽविभक्तनामरूपश्चादित्यः परमात्मशरीरभूत इति, कल्पनोपदेशादिति सूत्राभिप्राय इति वदन्ति ।

भाष्ये **देवात्मशक्ति स्वगुणैर्निरूढामितीत्यस्यानन्तरं पठिताया** इति शेषः । ततश्च **आरभ्येति** क्त्वाप्रत्ययस्योपपत्तिरिति द्रष्टव्यम् । **जगद्योनिभूतां प्रकृतिमित्यर्थ** इति । ननु योनिशब्दस्य प्रकृतिपरत्वे प्रकृतेरेकत्वात् कथं वीप्सेति वाच्यम् – (?) अन्यत्र योनिशब्दस्य प्रकृतिमहदादिसाधारण्यात् कल्पभेदोपाधिकभेदाश्रयणाद्वा वीप्सोपपत्तिरिति भावः ।

कल्पनोपदेशाच्च मध्वादिवदविरोधः १-४-१०.

**वैदिकशब्दनिर्देशानुसारिणाविति** । ततश्च, 'स्वायत्ते शब्दप्रयोगे किमित्यबोधकं पदं प्रयोक्तव्य'मिति न्यायेन, 'ब्रह्मोपक्रमा तु तथा ह्यधीयत एके', 'सृष्ट्युपदेशाच्च मध्वादिवदविरोधः' इति कुतो न सूत्रितमिति शङ्का पराकृता । सेतिपदस्य प्रकृत्युपस्थापकस्य ब्रह्मपर्यन्तत्वे भाष्यं प्रमाणयति **कारणावस्थं ब्रह्मैवेति** । **एकस्येति** व्याख्येयं पदम् । भाष्ये **वस्वादिभोग्यत्वाय मधुकल्पनमिति** । वस्वादिदेवताभोगार्थकर्मनिष्पाद्यरसाश्रयतया मधुत्वपदेशो भाक्त इत्यर्थः । यथाऽऽदित्यस्य कार्यावस्थायामृग्वेदादिप्रतिपाद्यकर्मनिष्पाद्यरसाश्रयत्वमुदयास्तमयवत्त्वञ्च, तथेति भाष्यस्य पर्यवसितोऽर्थः । **अजात्वैकत्वसिद्ध्यर्थमिति** । एकाजात्वसिद्ध्यर्थमित्यर्थः । उत्तरत्र **एकच्छागत्वसिद्ध्यर्थमिति** वक्ष्यमाणत्वात् । **तेजोबन्नवाचिशब्दैरिति** । लोहितशुक्लकृष्णशब्दैः तद्रूपवन्ति तेजोबन्नानि लक्षयित्वा तद्द्वारा तत्कारणभूता मूलप्रकृतिर्लक्ष्यते किमित्यर्थः । **समुदायत्रयमेवेत्यर्थ** इति । त्रिवृत्कृता पृथिवी, त्रिवृत्कृता आपः, त्रिवृत्कृतं तेजश्चेति त्रयः समुदाया इति भावः । **अद्वारकत्वे लोहितशुक्लकृष्णान्वयविरोध** इति । इदमुपलक्षणम् – निर्विकारत्वश्रुतिविरोध इत्यपि द्रष्टव्यम् । **विकल्पपरिहारयोरिति** । विकल्पदूषणयोरित्यर्थः ।

भाष्ये **तृतीयकल्पेपीत्यादे**रयमर्थः—तेजोबन्नकारणभूता लोहितशुक्लकृष्णाशब्दलक्षिता अजाशब्देन रूप्यत इति तृतीयपक्षेऽपि लोहितादिशब्दैस्तेजोबन्नानि लक्षयित्वा तद्द्वारा लक्षिता कारणावस्था अजाशब्देन गौण्या वृत्त्योपस्थापनीया ।

न जायत इत्यजेति योगरूपमुख्यवृत्त्यैव लोहितशुक्लकृष्णाशब्दलक्षिततेजोबन्न-कारणस्याभिधानसंभवे छागत्वकल्पनेन गौणवृत्त्या तत्प्रतिपादनाभ्युपगमस्यायुक्तत्वादिति। **तेजोबन्नानामवाचकस्येति** टीकाया अप्ययमेवार्थः – तेजोबन्नकारणावाचकस्या-जाशब्दस्य गौण्या वृत्त्या तादृशकारणप्रतिपादकत्वं परिकल्प्य तथाऽभ्युपगमात् वरं योगवृत्त्या अजाशब्दस्य मूलकारणपरत्वमिति। न त्वजाशब्दस्य तेजोबन्नलक्षणा-द्वारा तत्कारणलक्षकत्वमस्मिन् वाक्ये प्रतिक्षिप्यत इति मन्तव्यम्; परैस्तथाऽनुक्तेः। लोहितादिशब्दे लक्षणा, अजाशब्दे गौणीवृत्तिरित्येवोक्तमिति मन्तव्यम्। **रूढितोऽव-यवशक्त्या वेति**। नन्वेवम, "प्रैतु होतुश्चमसः प्रोद्गातॄणाम्" इतिमन्त्रे उद्गातृपदरू-ढ्यर्थबहुत्वानुपपत्तौ सत्यामवयवार्थमादाय न ससुब्रह्मण्यानां चतुर्णां ग्रहणम; अपि तु रूढिपूर्वकलक्षणया अन्तरङ्गप्रत्यासत्त्या सदःप्रवेशवतामुद्गातृप्रस्तोतृप्रतिहर्तॄणां त्रयाणा-मेव ग्रहणमिति सिद्धान्त (३-५-७) कोपप्रसंग इति चेन्न – उद्गातृपदे यौगिकार्थ-ग्रहणेऽपि, 'प्रैतु होतुश्चमस' इति यत्र सदसि भक्षयितारः स्थिताः तत्र चमसस्य नयनं भक्षार्थं प्रेष्यते। न च सुब्रह्मण्यस्तत्र स्थितः। अतः त्रयाणामेव भक्षणं योगपक्षेऽपि सिद्ध्यतीति योगापलापेन रूढिपूर्वकलक्षणासमर्थने न प्रयोजनं पश्यामः। रूढि-पूर्वकलक्षणापक्षे अपसुब्रह्मण्यानां ग्रहणम्, योगपक्षे चतुर्णामपीत्यस्यार्थस्यासंप्रतिपन्न-त्वात्। तस्मात् तदधिकरणम्, रूढ्यर्थबहुत्वासंभवे यौगिकोऽर्थः स्वीकर्तव्यः; न तु पाशवत् अन्यन्तागतिकत्वम्; पाशपदे योगार्थाप्रतीतेरित्येवम्परम। ततश्च प्रकृते अजाशब्दे यौगिकार्थस्य स्फुटप्रतीतेर्न रूढिपूर्वकलक्षणाप्रसंगोऽवतरति। अत एव कुमुदं पङ्कजमित्युक्ते पङ्कजनिकर्तृत्वार्थ एव प्रतीयते; न तु तत्सादृश्यमिति भावः।

भाष्ये **स्वस्मिन् अनादिकालसंबद्धाना**मिति स्वरूपापेक्षया नपुंसकलिङ्ग-निर्देशः। 'दृढभक्तिः', 'शक्यश्चानेन क्षुत् प्रतिहन्तुम्', 'द्विगुरेकवचनम्' इतिवत् स्त्रीलिङ्गाविवक्षया वा। **एवमनेन** वाऽन्येन वा **संयोगयोग्ये**त्युत्तरभाष्येपि लिङ्गनिर्देशो द्रष्टव्यः। भाष्ये **स्वपरित्यागाहेतुभूतेति, अपवर्गसाधनभूताया** इत्यस्य प्रतिद्वन्द्वि। **गौणवृत्त्यनङ्गीकारेऽपि न वैयर्थ्य**मिति।

नन्वजामन्त्रे स्वरसत एतावान् अर्थः प्रतीयते -- काञ्चित् छागीं त्रिवर्णां सरूपबहुबर्करामेकश्छागः प्रीयमाणोऽनुवर्तते, अन्यस्तामुपभुक्तां त्यजतीति। अत

लोके संभवन्नप्ययमर्थो वेदे, तत्राप्यध्यात्मप्रकरणे न निबन्धमर्हतीति आध्यात्मिक एव पदार्थे योजनं कार्यमिति निश्चिते, योग्यतावशात् तेजोबन्नमूलभूतप्रकृतावेवायं गौण्या वृत्त्या वर्तत इति प्रतीतिर्भवत्येव। यथा, "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते" इतिमन्त्रे वृक्षत्वेन शरीरस्य, जीवपरयोः पक्षित्वेन, कर्मफलस्य वृक्षफलत्वेन परिकल्पनम्, तद्वत्। इतरथा तत्राप्यगतेः। तथा, "गौरनाद्यन्तवती" इत्यत्रापि गोशब्दस्य गौणत्वे इयमेव वृत्तिराश्रयणीया। इतरथा अयं मन्त्रः काश्चित वस्तुतो गोव्यक्तिमनादिं प्रतिपादयत्वित्युक्तौ अगतेरिति चेत्— सत्यम्। अध्यात्मप्रकरणयोग्यस्य यौगिकार्थस्य ग्रहणसंभवे गौणार्थस्वीकारस्यायुक्तत्वादिति भावः।

**रूप्यवाचिपदाश्रवणादिति**। 'आत्मानं रथिनं विद्धी' त्यादाविव रूप्यवाचिपदाश्रवणेऽपीत्यर्थः। **रूढिसिद्धाजाव्यावर्तक**मिति। रूढ्यर्थनिर्णायकमित्यर्थः। **अतः प्रयुक्तपदवैयर्थ्ये**ति। 'आत्मानं रथिनं विद्धी' त्यत्र प्रयुक्तरूप्यवाचिपदवैयर्थ्यपरिहारोऽस्ति। 'गौरनाद्यन्तवती' त्यत्र गौणार्थग्रहण एव 'अनाद्यन्तवती' त्यादिपदस्वारस्यमस्ति। 'सर्वकामदुघे' त्युचितविशेषणश्रवणादर्थौचित्यमवगम्यते। अजामन्त्रे तु न तथा। रूप्यवाचिपदाश्रवणात् गौणार्थपरिग्रहेपि पुल्लिङ्गाजाशब्दयोरप्यस्वरसप्रसंगात्। अगौणार्थपरिग्रहेपि अजाशब्दस्य योगेनार्थप्रतिपादकत्वसंभवात्। बहुप्रजाजनकत्वादिविशेषणानाञ्च मुख्याजाव्यावर्तकत्वाभावेन गौणपक्ष एवार्थौचित्यमित्यस्याप्यभावाच्चेत्यर्थः। **रूढार्थसदृशपरत्वाभावाच्चे**ति। यद्यपि — चमसशब्दः पात्रविशेषे रूढः। शिरसि तु तत्सादृश्यात् तत्कल्पनया गौण इत्येव परेषां मतम् — तथापि प्रोक्षणी — (१-४-९) न्यायेन योगेन वृत्त्युपपत्तौ चमसशब्दस्य रूढिकल्पनायां प्रमाणाभावात। न च यथा प्रस्तोत्रादिष्वप्रयोगादुद्गातृशब्दस्य रूढिरङ्गीक्रियते, यथा वा धीयत इति धाय्या इति धाय्याशब्दस्य यौगिकत्वे इतरत्रापि प्रयोगप्रसंगात्, "पृथुपाजवत्यौ धाय्ये भवतः" इति तयोरेव प्रयोगात धाय्याशब्दस्य, "पाय्यसांनाय्यनिकाय्यधाय्याः मानहविर्निवाससामिधेनीषु" इति सामधेनीमात्रवचनत्वेन स्मृतत्वेऽपि रूढत्वम् (५-३-३) इत्येवमादिषु रूढिरङ्गीक्रियते—तथा चमसशब्देऽप्यस्तु;, "चमसः सोमपात्रं स्यात्" इति निखण्टु-

पाठादिति वाच्यम् — चमसशब्दस्य पात्रविशेषादन्यत्र प्रयोगे प्रमाणाभावात । यदि च रूढत्वम् , तदाऽपि पूर्वोक्तदोषात् परोक्तयोजना न युक्तेति तात्पर्यम् ॥

इति चमसाधिकरणम् (२)

---

## संख्योपसंग्रहाधिकरणम् ( ३ )

---

**न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च १-४-११.**

"तं देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्", "यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः । तमेवमन्य आत्मानं विद्वान् ब्रह्मामृतोऽमृतम् ॥ प्राणस्य प्राणमुत चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो ये मनो विदुः । ते निचिक्युर्ब्रह्मपुराणमग्र्यम्" इति श्रुतिः । **तान्यपि विषय** इति । "स वा एष पुरुषः पञ्चधा पञ्चात्मा" इत्यादिवाक्यमपि विषय इत्यर्थः । **पञ्चस्वन्यतमत्वाभावेने**ति । यद्यपि, "रथकारपञ्चमाश्चत्वारो वर्णाः पञ्चजनाः" इति कैयटोक्तेः मनुष्यनाम्नः पञ्चजनशब्दस्यापि सप्तर्षितुल्ययोगक्षेमत्वमेवेति वक्तुं शक्यम्—तथापि मनुष्यादिनाम्नः पञ्चजनशब्दस्य पञ्चभिर्भूतैर्जननमस्येति व्युत्पत्त्यभिप्रायेण तथोक्तमिति द्रष्टव्यम् । न च तथाव्युत्पत्त्याश्रयणेऽपि संख्यापूर्वकत्वं सिद्धमिति कथं संख्यापूर्वक समासत्वाक्षेप इति वाच्यम् — समानाधिकरण संख्यापूर्वकसमासासंभवादिति भावः । **संख्यापूर्वकसमासत्वं युक्तमित्यभिप्रेत्ये**ति । "तद्धितार्थोत्तरपदसमाहारे च" इति सूत्रविहितसंख्यापूर्वकसमासत्वं युक्तमित्यभिप्रेत्येत्यर्थः । न तु, "दिक्संख्ये संज्ञायाम्" इति विहितसंख्यापूर्वकसमासत्वमिति मन्तव्यम् । तथा सति, सप्त सप्तर्षय इत्यत्र एकोनपञ्चाशत्त्वसंख्याप्रतीत्यभाववत् पञ्चपञ्चजना इत्युक्ते पञ्चविंशतितत्त्व प्रतीत्यभावप्रसंगादिति द्रष्टव्यम् । **तदा ही**ति । पञ्चशब्दस्यासमस्तत्वे इत्यर्थः । **दशत्वमापद्येते**ति । "पञ्च सप्त च वर्षाणि न ववर्ष शतक्रतुः" इत्यादौ द्वादशवर्षवृष्ट्यभावप्रतीतिवदिति भावः । **विशेष्यपर्यन्तशब्दोपस्थापितस्ये**ति । ततश्च स्वतन्त्रोपस्थित्यभावेन नैराकाङ्क्ष्यादिति भावः । **न च द्वे शते** इति । द्वे शते ब्राह्मणाः, त्रीणि शतानि ब्राह्मणाः इत्यत्र ब्राह्मणपदसामानाधिकरण्यसिद्ध्यर्थं

शतशब्दस्य शतत्वसंख्यावद्विशेष्यपर्यन्ततया विशेष्यपर्यन्तशब्दोपस्थापितस्यापि शतसंख्यारूपविशेषणस्य संख्यान्तरान्वयदर्शनवत् इहापि पञ्चत्वसंख्यायाः पञ्चत्वसंख्यान्वयोऽस्तीत्यर्थः । **अवान्तरसंख्ये**ति । त्रयस्त्रिंशत् देवा इति महासंख्यायाम्, "अष्टौ वसवः, एकादश रुद्राः, द्वादशादित्याः, प्रजापतिरिन्द्रश्च" इति वाक्यप्रतिपन्नाष्टत्वैकादशत्वाद्यवान्तरसंख्यानिवेशनिमित्तवसुत्वाद्युपाधिवदिह पञ्चत्वसंख्यारूपावान्तरसंख्यानिवेशनिमित्तभूतस्यैकस्योपाधेरदर्शनादित्यर्थः । **एकग्रामस्थित्याद्युपाधिना** हीति । यद्यपि एकग्रामवासिषु सहस्रेषु पुरुषेषु सहस्रसंख्यावान्तरसंख्यारूपशतसंख्यानिवेशनिमित्तभूता परस्परव्यावृत्ता उपाधयो न दृश्यन्ते । "पञ्च सप्त च वर्षाणि," "पञ्चपञ्चाशतस्त्रिवृतः संवत्सराः" इत्यादिषु विनाप्येकमवच्छेदकं विवक्षितमहासंख्यालाभोपायतामात्रेण यत्किञ्चिदवान्तरसंख्यानिवेशदर्शनात्। न हि द्वादशवार्षिकयामनावृष्टौ पञ्चसु सप्तसु च वर्षेषु, विश्वसृजामयने पञ्चाशदुत्तरद्विशतसंख्यानां त्रिवृतां संवत्सराणां मध्ये पञ्चाशति पञ्चशति संवत्सरेषु चैकैकधर्मोऽस्ति—तथापि सम्भवस्थलाभिप्रायेणेदं द्रष्टव्यम् । **शतसंख्यपुरुषसमूहैक्य**मिति । शतसंख्यालक्षणधर्मैक्येन समूहैक्यमित्यर्थः । संख्यानिवेशनिमित्तोपाधौ सति संख्यानिवेशः; संख्यानिवेशे सति समूहैक्यमिति द्रष्टव्यम् । **न तन्त्रोक्तार्थत्वनिश्चय** इति । "देवाः पितरो गन्धर्वा दैत्या दानवा राक्षसा भूताः प्रेताः पिशाचाः चत्वारो वर्णाः षडनुलोमाः षट् प्रतिलोमाश्च" इत्येवमादिरूपेण पञ्चविंशतिजनसंभवादिति भावः । **ऐकपद्यदर्शनादि**ति । इदमुपलक्षणम् — पञ्चजनशब्दस्य भाषिकाख्यशतपथब्राह्मणस्वरविधायकग्रन्थविहितेनान्तोदात्तस्वरेणापि समासो विधीयत इति द्रष्टव्यम् ।

**पञ्चशब्दसमभिव्याहारबलेने**ति । [यद्यपि] पञ्च सप्तर्षयः, सप्त सप्तर्षयः इत्यादौ संख्यावाचिपदसमभिव्याहारेपि न संख्यापरत्वम् । समाहारस्वीकारो वा — तथापि प्रत्यस्तमितावयवार्थसंज्ञासमासत्वाश्रयणापेक्षया समाहारसमासत्वाश्रयणमेव ज्यायः । किञ्च संज्ञासमासत्वाभ्युपगमेऽपि न पञ्चजनशब्देन मनुष्याणां ग्रहणं संभवति; अध्यात्मप्रकरणे पञ्चमनुष्यत्वकीर्तनस्यायुक्तत्वात् इतरेषाञ्च पञ्चजनशब्दितानामप्रसिद्धेः समाहारसमासत्वाश्रयणमेव युक्तमिति भावः । (?) **पञ्चजन-**

**पञ्चशब्दस्येति** । पञ्चजनशब्दान्तर्गतपञ्चशब्दस्येत्यर्थः । **स्त्रीलिङ्गस्मृतेरिति** । "आकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यते" इति स्त्रीत्वस्य, "पात्रादिषु प्रतिषेधो वक्तव्यः" इति त्रिभुवनादिष्वपवादवत् इह तदभावात् छान्दसत्वमिति भावः । एतच्चोपलक्षणम् – "ऊकालोऽज्झ्रस्वदीर्घप्लुतः" इत्यत्र छान्दसत्वेन, "स नपुंसकम्" इति नपुंसकलिङ्गाभाववत् इहापि छान्दसत्वेन, 'स नपुंसकम्' इति नपुंसकलिङ्गाभावोऽपि द्रष्टव्यः । ननु, 'यस्मिन् पञ्च पञ्चजनाः' इति मन्त्रे आत्माकाशव्यतिरेकेणापि पञ्चविंशतिपदार्थप्रतीतेः ताभ्याञ्च सह सप्तविंशतिसंख्यासंपत्तेः नैतत् सांख्यदर्शनानुगुणमित्याशङ्क्य प्रकृतिद्रव्यस्य द्रव्यत्रयात्मकत्वेन सप्तविंशतिसंख्याया अपि न तन्मते विरोध इति परिहरति **यस्मिन्निति निर्दिष्टेनात्मना चेत्यादिना** । **आत्मनः स्वस्मिन् अवस्थितत्वादिति** । 'स्वे महिम्नि प्रतिष्ठितः' इतिवदिति भावः । भाष्ये **मूलप्रकृतिरविकृतिरिति** । मूलप्रकृतिर्न कस्यापि विकृतिः । महदहङ्कारतन्मात्राणि सप्तापि किञ्चिदपेक्षया विकृतयः, किञ्चिदपेक्षया प्रकृतयश्च । पञ्च भूतानि पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि मनश्चेति षोडशापि तत्त्वानि विकृतिभूतान्येव ; न प्रकृतिभूतानि । पुरुषस्तु न प्रकृतिः, नापि विकृतिश्चेति श्लोकार्थः ।

भाष्ये **तमिति परामर्शेनेति** । तमात्मानं ब्रह्मामृतं एवमन्यो विद्वान् अमृतो भवतीति तच्छब्दनिर्दिष्टस्य मन्त्रवर्णे ब्रह्मत्वाविष्करणादिति भावः । ननु विश्वसृजामयने, 'पञ्च पञ्चाशतः त्रिवृतः संवत्सराः पञ्चपञ्चाशतः पञ्चदशाः' इत्यादौ पञ्चाशति पञ्चाशति अहस्सु अनुगतोपाध्यभावेपि तथातथा निर्देशवत् इहापि पञ्चसु पञ्चसु अनुगतोपाध्यभावेऽपि लक्षणया पञ्चविंशतिसंख्याप्रतीतिः संभवतीत्यस्वारस्यं हृदि निधायाह – **भूतसमूहासिद्धेरित्युपलक्षणमित्यादिना** । **तेष्वर्थवत्त्वमाहेति** । समस्तपञ्चजनशब्देनैव पञ्चत्वसंख्यायाः प्रतीतत्वात् पुनः पञ्चशब्देन विशेषणं व्यर्थमिति शङ्कां व्युदसितुमर्थवत्त्वमाहेत्यर्थः । **समाससामर्थ्याभावादिति** । समासस्य सामर्थ्यं नाम समर्थपदाश्रितत्वम् । पदानां सामर्थ्यं नाम परस्परसंसृष्टार्थत्वम् । ततश्च पञ्चशब्दस्य निरर्थकत्वे परस्परसंसृष्टार्थपदाश्रितत्वलक्षणसामर्थ्यं न स्यादिति भावः । **अत्रायमभिसंधिरित्यादेरयमर्थः** – साधुत्वान्वाख्यानप्रवृत्ताः वैयाकरणाः सन्तमसन्तं वा कञ्चिदर्थं परिकल्प्य व्युत्पादयन्ति । न च तावता तत्पदात् तदर्थप्रतीतिरस्ति । न हि गौरित्युक्ते गच्छतीति प्रतीतिरस्ति ।

ततश्च पञ्चजनशब्दस्य प्रत्यस्तमितावयवार्थकत्वात् पञ्चत्वसंख्यया विशेषणमनुपपन्नम्। किञ्च वासस्वी देवदत्तपदवाच्यः, यः पञ्जरस्थः स सिंह इत्यादौ व्युत्पत्तिकाले वासःप्रभृतीनामुपलक्षणत्वेऽपि नाभिधानकाले प्रतीतिरिति वासस्वी देवदत्त इत्यादौ न पौनरुक्त्यादिकम्, तथेहापि पञ्चशब्दविशेषणोपपत्तिः। किञ्चाभिधानदशाया-मवयवार्थप्रतिपत्तौ सत्यामपि यदाकदाचित् तदर्थसत्तामात्रं प्रतीयते; न तु प्रयोगकाले तत्सत्ताप्रतीतिरिति गौर्गच्छतीति प्रयोगसाफल्यम् — तद्वदिहापि तादात्विकपञ्चत्व-संख्यान्वयप्रतीतिसिद्ध्यर्थं पञ्चेतिविशेषणं सफलमेव। अत एव, 'पञ्चजनादुप-संख्यानम' इति वार्तिके कथमत्रैकवचनमित्याक्षिप्य, पूर्वेषुकामशम्यादिवत् समुदाय-वृत्तस्यावयवेऽपि वृत्त्या एकवचनम्, यथा सप्तर्षिरिति। ततश्च, द्वौ पञ्चजनौ, त्रयः पञ्चजनाः, पञ्च पञ्चजनाः इत्यादिसंख्यासामानाधिकरण्यमविरुद्धम्; यथा द्वौ सप्तर्षी, त्रयः सप्तर्षयः इति कैयटपदमञ्जर्योरभिधानात् न व्याख्यानपौन-रुक्त्यादिकमिति द्रष्टव्यम्। **यद्विग्रहवाक्येऽर्थाभिधानशक्तिरिति।** ततश्च विग्रहवाक्याभिधाने स्वरूपयोग्यत्वमस्ति, ततः समाससामर्थ्यमप्यस्तीति भावः। **पञ्चविंशतितत्त्वाप्रतिपत्तिमभिप्रेत्येति।** पञ्चविंशतितत्त्वाप्रतिपत्तिहेतौ समूह-प्रक्रमासंभवे विपरिवर्तमान एवेत्यर्थः॥

## प्राणादयो वाक्यशेषात् १-४-१२

**संदिग्धे तु वाक्यशेषादिति।** ननु पञ्चजनशब्दरूढ्या मनुष्याणामेव निश्चयसंभवान्न संदेहोदय इति चेत् — न; अध्यात्मप्रकरणे पञ्च मनुष्याः प्रतिष्ठिता इत्यर्थपरिग्रहे वाक्यस्य निस्तात्पर्यत्वप्रसंगात् पञ्चशब्दस्य वृत्तिसंख्यापरत्वं विहाय ब्राह्मणत्वाद्यवान्तरोपाधीन् आदाय पञ्चविधा मनुष्या इति वाक्यार्थः समा-श्रयणीयः, उत वाक्यशेषगताः प्राणादयो वेति संदेहे सति, "प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो ये मनो विदुः। ते निचिक्युर्ब्रह्म-पुराणमग्र्यम्' इति प्राणादीनां ब्रह्माधीनप्राणनादिव्यापारसामर्थ्यप्रतिपादकवाक्यशेष-वशेन निर्णयसंभवादिति भावः। **पञ्चसंख्यानिवेशनिमित्तैकोपाध्यभावादिति।** यद्यपि प्राणादीनामिन्द्रियत्वरूपैकोपाध्यभावेऽपि ब्रह्माधीनस्वव्यापारतया, 'प्राणस्य प्राणम्' इति वाक्यशेषप्रतिपाद्यत्वमेकोपाधिरिति शक्यते वक्तुम् — तथापि सति

गत्यन्तरे प्रसिद्धोपाधेरेव स्वीकरणार्हत्वादिति भावः। **अन्तरादित्याधिकरण** इति। शरीरस्य त्रिगुणात्मकत्वप्रकृतिपरिणामत्वशङ्कापरिहारदर्शनात् यथा पूर्वपक्षेऽपि तच्छङ्काया अभिप्रेतत्वावगम इति भावः।

ज्योतिषैकेषामसत्यन्ने १-४-१३.

ननु परमतवत् द्वितीयान्तज्योतिश्शब्दपरामर्शित्वं किं न स्यादित्याशङ्क्याह **श्रुतिवाक्यस्वारस्येति**। **अस्वारस्यं सोढव्यमिति**। तच्चानुपदमेव स्फुटीभविष्यति। **परैरिति**। ननु परैः षष्ठ्यन्तज्योतिश्शब्दनिर्दिष्टेनादित्यादिज्योतिषैव संख्यापूरणमित्येवोक्तम्। "असत्यपि काण्वानामन्ने ज्योतिषा तेषां पञ्चसंख्या पूर्येत। तेऽपि हि, 'यस्मिन् पञ्च पञ्चजनाः' इत्यतः पूर्वस्मिन् मन्त्रे ब्रह्मस्वरूपनिरूपणायैव ज्योतिरधीयते, 'तं देवा ज्योतिषां ज्योतिः' इती" ति भाष्यं व्याकुर्वता आनन्दगिरिणा अस्मिन् मन्त्रे षष्ठ्यन्तज्योतिषा पञ्चपूरणम्; न त्वात्मज्योतिषा; तस्यैकस्याधाराधेयत्वादिति व्याख्यातत्वादिति चेत् – न – यदि षष्ठ्यन्तज्योतिश्शब्दार्थग्रहणम्, तदा ज्योतिर्भिरिति सूत्रं प्रणेतव्यं स्यात्। यदि च द्वितीयान्तज्योतिश्शब्दार्थः(र्थस्य ?), तदा आधारत्वाधेयत्वाद्यनुपपत्तिरिति विकल्पमभिप्रेत्य दूषणमुक्तमिति द्रष्टव्यम्। **परस्परसाकाङ्क्षेणेति**। पञ्चजनशब्दस्येन्द्रियरूपार्थपरत्वं न केवलेन, 'यस्मिन् पञ्च पञ्चजनाः' इति मन्त्रेण लभ्यते। नापि, 'तं देवा' इति पूर्वमन्त्रेण। अतस्तदर्थनिर्णये परस्परसाकाङ्क्षेणेत्यर्थः। **स्वशब्देनैव व्याख्यातानीति**। 'चक्षुषेति चक्षुरिन्द्रिय' मित्येवं चक्षुरादिशब्दैरेव व्याख्यातानीत्यर्थः। **अन्नशब्दं व्याचष्टे अन्नस्येतीति** द्विः पठ्यते। न तस्य प्रयोजनं पश्यामः। **लक्षणया बोधकत्वं दर्शयितुमिति**। यौगिकार्थस्वीकारे अन्नशब्दस्य वृत्तिद्वयविरोधप्रसंगादिति भावः। **एकव्यापारेणेति**। अन्नसंबन्धित्वरूपैकव्यापारेणेत्यर्थः। **प्रदर्शितानीत्यर्थ इति**। निर्दिष्टशब्दस्य प्रदर्शितत्वमर्थः। ततश्च पञ्चपञ्चजना इत्येतत् सर्वेन्द्रियोपलक्षकमिति भावः। **प्रयोजनं वदन्निति**। सर्वथा सांख्यमतप्रत्याशाभावरूपप्रयोजनं वदन्नित्यर्थः। **पञ्चधाभूतपञ्चतत्त्वसंघातानामिति**। ज्ञानेन्द्रियाणि पञ्च, कर्मेन्द्रियाणि पञ्च, तन्मात्राणि पञ्च, भूतानि पञ्च, अवशिष्टानि पञ्च; तेषामात्मेत्यर्थः स्यादिति भावः। **अद्वारकश्चेति**।

आनन्दमयांशे अद्वारकम्, अन्यत्र सद्वारकमित्यर्थः। **संख्यासंभवे तथा वर्णनीयमि**ति। ब्रह्मात्मकत्वेन तथा वर्णनीयमित्यर्थः। **असंभवे चे**ति। अवान्तरसंख्यानिवेशनिमित्तोपाध्याद्यसंभवे चेत्यर्थः ॥

इति संख्योपसंग्रहाधिकरणम् (३)

---

## कारणत्वाधिकरणम् (४)

**कारणत्वेन चाकाशादिषु यथा व्यपदिष्टोक्तेः १-४-१४.**

**अवर्जनीयाचिद्बोधे**ति। तत्राचित्प्रतिपत्तेरवर्जनीयत्वादेव व्याकुलत्वम्। **तादृशकारणवाक्यानि(?) विषयः**। सर्वाण्यपि कारणवाक्यानि विषय इत्यर्थः। **एकस्मादित्यस्य एकरूपात् कारणादि**ति व्याख्यानं दृश्यते। न तस्य सामीचीन्यं पश्यामः। **सत्पूर्विका सृष्टिराम्नायत** इति। छान्दोग्य इति शेषः। **असत्पूर्विका चे**ति। तैत्तिरीयक इति शेषः। **अन्यत्रे**ति। बृहदारण्यक इत्यर्थः। **ब्रह्मकारणवाद** इति निमित्तसप्तमी। ब्रह्मकारणवादौपयिकी सृष्टिकारणव्यवस्थितिः वेदान्तेषु नास्तीत्यर्थः। **सृष्टिकारणस्याव्यवस्थितेरित्यर्थ** इति। ततश्च सष्टृशब्दस्य कारणमात्रसाधारणतयोपादानस्यापि संग्रहो भवतीति भावः। **पूर्वापरपर्यालोचनाप्रयत्नादि**ति। तपोऽतप्यतेति पूर्वापरपर्यालोचना। तप आलोचन इति हि धातुः। असृजतेति प्रयत्नश्चेति भावः। **चक्षुराद्युत्पादनौन्मुख्याभिप्रायमि**ति। चक्षुरादिशब्दप्रवृत्तिनिमित्तभूतदर्शनौन्मुख्याभिप्रायमित्यर्थः। ततश्च पश्यत्यचक्षुरित्यस्य वाक्यस्य दर्शनोत्पादनाभिमुखत्वात् कर्मनामभाक् भवतीत्यर्थः। तेन — 'स प्राणन्नेव प्राणो नाम भवति; वदन् वाक् पश्यन् चक्षुः शृण्वन् श्रोत्रं मन्वानो मनः। तान्यस्यैतानि कर्मनामान्येवे'ति श्रुतौ प्राणवाक्चक्षुःश्रोत्रमनःशब्दाः लावकपावकादिशब्दवत् प्राणनवदनदर्शनश्रवणमननक्रियायोगात् आत्मन एव क्रियानिमित्तकनामानीत्येव प्रतीयते। न तु, चक्षुः पश्यन्निति चक्षुःकर्मकदर्शनं चक्षुरुपादानौन्मुख्यलक्षणं प्रतीयते। परैरपि तथा व्याख्यातश्चेति शंका पराकृता। नन्वव्याकृतशब्देन प्रथमत एवाचेतनप्रति-

पत्तिरित्ययुक्तम्; अव्याकृतत्वस्याचेतनैकान्तत्वाभावात्। अत एव तदुपजीवी तदुत्तरसन्दर्भः सर्वोऽपि न युक्त इत्यस्वरसादाह—**यद्वा कारणगता इतीति**। नन्वीक्षणस्य सर्वथा मुख्यत्वभङ्गापेक्षया अंशे मुख्यत्वभङ्ग एव स्वीकार्य इति वैपरीत्यमेव युक्तमित्याशंक्य चिदंशकारणत्वस्य अनन्यथासिद्धप्रमाणप्रतिपन्नतया सर्वत्र ईक्षणादिगौणत्वमेव युक्तमित्याह — **तदतिरिक्ते ( ततश्चाचिदतिरिक्त? ) वस्तुनीति**।

**नेतिपदानुषङ्गफलित** इति। 'न संख्योपसंग्रहादपी'ति सूत्रस्थनञनुषङ्गफलित इत्यर्थः। ननु कारणत्वेनेत्यादेसूत्रे यथाव्यपदिष्टस्य सर्वज्ञत्वादिगुणकस्य, असद्वा इदमग्र आसीदित्यत्रापि जगत्कारणत्वेन उक्तेरिति हि वक्तव्यम्। तस्यैव पूर्वपक्षप्रत्यनीकत्वात्। न तु आत्मन आकाशः सम्भूत इत्यादिवाक्ये सर्वज्ञस्यैवाकाशादिकारणत्वेनोक्तेरिति प्रतिपादनं युक्तम्। किञ्च तत्तेजोऽसृजतेति सद्विद्यावाक्योपादानमप्ययुक्तम्; तत्राकाशादिकारणत्वाश्रवणादित्याशंक्याह — **स्वतश्चेतनैकान्तेति**। **भूयसां बलीयस्त्वमेवेति**। आकाशादिपदविहितब्रह्मकारणत्वप्रतिपादकबहुवाक्यानुसारेण ब्रह्मकारणवादविरोधी कश्चित्कोऽसदव्याकृतादिशब्दो यथाकथञ्चिन्नेतव्य इति अस्य सूत्रस्यार्थः। पूर्वापरवाक्यपर्यालोचनयाऽपि असदादिशब्दस्य तथैव निर्वाह इत्युत्तरसूत्रार्थ इति भावः। **विपश्चित्त्वप्रतिपादनादिति**। इदमुपलक्षणम्। सत्यं ज्ञानमिति ज्ञानत्वप्रतिपादनादित्यपि द्रष्टव्यम्॥ ननु सच्छब्दस्य चेतनपरत्वे जडवाचीदंशब्दसामानाधिकरण्यं कथमित्यत्राह — **सच्छब्दस्येति**। **समर्थित इत्यभिप्राय** इति। तात्पर्यत इतीति शेषः। **एको हवै नारायण आसीदित्यारभ्येति**। अत्रारम्भसमानकर्तृकक्रियावाच्युचितपदाध्याहारेणान्वयो द्रष्टव्यः। **उपक्रमस्थबहुश्रुतिविरोधादिति**। यद्यप्यव्याकृतब्राह्मणोपक्रमवाक्यमिदमेव — तथापि पूर्वब्राह्मणेषु, आत्मैवेदमग्र आसीदित्यादिश्रवणादेवमुक्तमिति द्रष्टव्यम्॥

## समाकर्षात् १-४-१५.

**स इति (?) पुल्लिङ्गशब्देनेति**। उत्तरोत्तरवाक्यगतस्य तच्छब्दस्य स्वस्वपूर्ववाक्यप्रतिपन्नगुणविशिष्टसमाकर्षकत्वात्, सोऽकामयतेति वाक्यप्रतिपन्नगुणविशिष्टसमाकर्ष इति भावः। **ज्ञानविपश्चिदादिबहुश्रुतिप्रामाण्यसिद्धेरिति**। ननु ज्ञानविपश्चिदादिशब्दैर्ब्रह्मणः प्रकृतत्वेऽपि, असद्वा इदमग्र आसीदित्यत्र असच्छब्दश्रुति-

बलात् प्रकृतब्रह्मणोऽन्यदेव प्रतिपाद्यते। प्रकरणाच्छ्रुतेर्बलवत्त्वात्। ततश्च परस्परविरोधात् निर्णयासमर्थानां वेदान्तानां कापिलस्मृत्यनुसारेण निर्णयो वक्तव्य इति वदन्तं पूर्वपक्षिणं प्रति ज्ञानविपश्चिदादिबहुश्रुतिप्राबल्यकीर्तनस्य व्यर्थत्वात्। पूर्वपक्षिणाऽपि ज्ञानविपश्चिदादिश्रुतिप्राबल्यमभ्युपेत्यैव तदबाधेनैव प्रकरणमात्रबाधस्यैव उपन्यस्तत्वादिति चेत्—सत्यम्। श्रुत्या बलीयस्या प्रकरणमात्रबाधश्चेत्, सोऽभ्युपगन्तुं युक्तः। इह तु न तथा। असदादिशब्दश्रुतेर्बलवत्त्वे ज्ञानविपश्चिदादिशब्दार्थस्य जगत्कारणत्वप्रतिपादकश्रुतीनाम्, सोऽकामयत, तदप्येष श्लोको भवतीति प्रकृताभिधायिसर्वनामश्रुतीनामपि बाधप्रसङ्ग इति भावः। नन्वसदेवेदमिति बृहदारण्यकश्रुतावपि तत्सदासीदिति सद्रूपताविधायकोत्तरवाक्ये तत्पदेनासच्छब्दोक्तस्यैव समाकर्षात् अत्यन्तासतश्च सद्रूपतापत्त्ययोगादित्येवं परमतवत्, 'असदेवेदमग्र आसी'दित्यत्रापि समाकर्षं प्रदर्शयितुं शक्ये, भाष्ये तदनादरः किमर्थ इत्याशङ्क्याह—**तत्रासच्छब्दोक्तस्येति**। **तुच्छव्यावर्तक** इति। परमतवत् अस्मन्मतपूर्वपक्षे तुच्छकारणत्वशङ्काया अप्यनुद्धाटनात् तुच्छव्यावर्तकसच्छब्दसमाकर्षो युक्त इति भावः। ननु तुच्छकारणत्वशङ्काप्यस्मिन् पूर्वपक्षे उद्घाट्यतामित्यत्राह **कारणावस्थायामिति**। परमात्मस्वरूपे नामरूपव्याकृतत्वतदभावयोरभावात् सद्वारके व्याकृतत्वाव्याकृतत्वे इत्यभिप्रेत्य व्याचष्टे—भाष्ये **अव्याकृतमव्याकृतशरीरमिति**। **तदात्मानं स्वयमकुरुतेत्यनेनैकार्थ्यादिति भाव** इति। व्याक्रियत इति कर्मकर्तरि लकार इति भावः। ननु, तद्धेदं तर्ह्यव्याकृतमासीत् इत्यत्र कर्मणि निष्ठान्ततया व्याक्रियतेत्यत्रापि तदैकरूप्याय कर्मण्येव लकारो वक्तव्यः। न कर्मकर्तरि। न चाव्याकृतमित्यत्रापि कर्तर्येव कर्मवद्भावात् क्तप्रत्ययोऽस्त्विति वाच्यम्—"लिङ्याशिष्यङ्" इत्यत्र द्विलकारकनिर्देशेन लान्तकार्यं प्रत्येव कर्मवद्भावविधानात्, कर्मवद्भावेन कृत्यक्तादीनामसम्भवात्। ततश्च क्तप्रत्ययसारूप्याय लकारोऽपि कर्मण्येव युज्यते; न कर्मकर्तरीति कथं नामरूपव्याकरणस्य स्वयंकर्तृकता सिद्ध्येदिति चेन्न—अव्याकृतमित्यत्र कर्मणः कर्तृत्वविवक्षया धातोरकर्मकत्वात् गत्यर्थाकर्मकेति कर्तरि क्तप्रत्ययसंभवात् नानुपपत्तिरिति भावः॥

इति कारणत्वाधिकरणम् (४)

# जगद्वाचित्वाधिकरणम् (५)

## जगद्वाचित्वात् १-४-१६.

अत्रेयं विषयशुद्धिः—कौषीतकिब्राह्मणे अजातशत्रुर्नाम काशीराजः—स्वसमीपमागत्य, 'ब्रह्म ते ब्रवाणी'त्युक्तवन्तं बालाकिम्, "सहस्रं दद्मः एतस्यां वाचि। जनको जनक इति ह वै जना धावन्ती" ति प्रशस्य बालाकिना, 'य एवैष आदित्ये पुरुषस्तमेवाहमुपासे' इत्यादिभिर्वाक्यैर्ब्रह्मत्वेन उपदिष्टान् आदित्यचन्द्रविद्युत्स्तनयित्नु — आकाशवाय्वग्न्यादिगतान् पुरुषान् अब्रह्मत्वेन तत्तत्पुरुषोक्त्यनन्तरमेव प्रत्याख्याय, तत्र तूष्णीम्भूते बालाकौ, किमेतावदेव तव परिज्ञानमिति पृष्ट्वा, तेन एतावदेवेत्यभिहिते, 'मृषा वै किल मा संवादयिष्ठाः, ब्रह्म ते ब्रवाणीती'त्युक्त्वोवाच, "यो वै बालाक" इत्यादि। एवं श्रुतिक्रमः — स होवाच यो वै बालाके एतेषां पुरुषाणां कर्ता, यस्य वैतत् कर्म, स वै वेदितव्य इति। तत उ ह बालाकिस्समित्पाणिः प्रतिचक्रम उपायानीति। तं होवाचाजातशत्रुः, प्रतिलोमरूपमेतत् स्यात्, यत् क्षत्रियो ब्राह्मणमुपनयेत्। एहि; व्येव त्वा ज्ञापयिष्यामीति। तं ह पाणावभिपद्य प्रवव्राज। तौ ह सुप्तं पुरुषमीयतुः। तं हाजातशत्रुरामन्त्रयाञ्चक्रे, बृहन् पाण्डरवासस्सोम राजन्निति। स उ ह तूष्णीमेव शिश्ये। तत उ हैनं यष्ट्या चिक्षेप। स तत एव समुत्तस्थौ। तं होवाचाजातशत्रुः, क्वैष एतत बालाके पुरुषो अशयिष्ट, क्व वा एतदभूत् कुत एतदागादिति। तदु ह बालाकिर्न विजज्ञौ। तं होवाचजातशत्रुः, यत्रैष एतत् बालाके पुरुषोऽशयिष्ट यत्रैतदभूत् यत एतदागात्, हिता नाम हृदयस्य नाड्यो हृदयात्पुरीततमभिप्रतिष्ठन्ति (प्रतन्वन्ति) यथा सहस्रधा केशस्यापि पातः; तावदण्व्यः पिङ्गलस्याणिम्ना तिष्ठन्ते शुक्लस्य कृष्णस्य पीतस्य लोहितस्येति — तासु तदा भवति। यदा सुप्तः स्वप्नं न कथञ्चन पश्यति, अथास्मिन् प्राण एवैकधा भवति। तदैवैनं वाक् सर्वैर्नामभिस्सहाप्येति। चक्षुः सर्वै रूपैः सहाप्येति। श्रोत्रं सर्वैश्शब्दैः सहाप्येति। मनः सर्वैर्ध्यानैः सहाप्येति। स यदा प्र(ति)बुध्यते, यथाग्नेर्विस्फुलिङ्गा विप्रतिष्ठेरन्, एवमेवैतस्मादात्मनः प्राणाः यथायतनं विप्रतिष्ठन्ते; प्राणेभ्यो देवाः; देवेभ्यो

लोकाः । तद्यथा क्षुरः क्षुरधानेऽवहितः स्यात्, विश्वम्भरो वा विश्वम्भरकुलाये—एवमेवैष प्राज्ञ आत्मेदं शरीरमात्मानमनुप्रविष्ट आ लोमभ्य आ नखेभ्यः। तमेतमात्मानमेत आत्मानोऽन्ववस्यन्ति, यथा श्रेष्ठिनं स्वाः। तद्यथा श्रेष्ठी स्वैर्भुङ्क्ते, यथा वा श्रेष्ठिनं स्वा भुञ्जते, एवमेवैष प्राज्ञ आत्मा एतैरात्मभिर्भुङ्क्ते, यथा श्रेष्ठी स्वैः। एवं वा एतमात्मानोऽन्ववस्यन्ति (एत आत्मानः एतमात्मानं भुञ्जन्ति) स यावद्ध वा इन्द्र एतमात्मानं न विजज्ञौ, तावदेनमसुरा अभिबभूवुः। स यदा विजज्ञौ, अथ हत्वाऽसुरान् विजित्य सर्वेषां देवानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं परीयाय। [यो ह वा एवं विद्वान्] सर्वान् पाप्मनोऽपहत्य सर्वेषां भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्येति य एवं वेद, य एवं वेद।

**स वै वेदितव्य इत्यन्तं विषयवाक्यमिति।** स वै वेदितव्य इत्यधीयत इति पूर्वेणान्वय इति भावः। **जीवस्य कर्मसम्बन्धपरत्वशङ्का निरस्तेति।** 'यो वै बालाके' इति वाक्ये जीवस्य कर्मसम्बन्धे बोधितेऽपि तदतिरिक्तस्य ब्रह्मणः प्रत्याख्यानाभावात् नानेन सिद्धान्तिनः किञ्चिदनिष्टमापतितमिति शङ्का निरस्ता। ब्रह्मण एव कर्मसम्बन्धप्रतिपादनेन जीवातिरिक्तब्रह्मप्रत्याख्यानादिति भावः। **इह निर्दिष्टानामिति।** अस्मिन् प्रकरणे निर्दिष्टानामादित्यादिपुरुषाणामित्यर्थः। **सुषुप्तिस्थानं नाड्य इति।** पूर्वपक्षिणोऽयमभिप्रायः— क्वैष एतत् बालाके पुरुषोऽशयिष्टेति प्रश्नः उत्थापितस्य जीवस्य सुषुप्तिस्थानविषयः। क्व वा एतदभूदिति प्रश्नः तदुत्थापनात्पूर्वमुपरतव्यापारस्य तदनन्तरं व्याप्रियमाणतयाऽनुभूयमानस्य एतच्छब्दनिर्दिष्टस्य करणग्रामस्य सुषुप्तिकालिकाधिकरणविषयः। कुत एतदागादिति प्रश्नस्तस्यैव करणग्रामस्य उद्गमनापादानविषयः। एवञ्च, 'तासु तदा भवति यदा सुप्तः स्वप्नं न कथञ्चन पश्यती'ति प्रथमप्रश्नस्य प्रतिवचनम्। 'अथास्मिन् प्राण एवैकधा भवती'ति द्वितीयप्रश्नस्य प्रतिवचनम्। 'तदैनं वाक्' इत्यादि तु तस्यैव विवरणम्। 'स यदा प्रतिबुध्यते' इत्यारभ्य, 'देवेभ्यो लोकाः' इत्येतदन्तं तृतीयप्रश्नस्य प्रतिवचनमिति। सिद्धान्तिनस्तु—प्रथमप्रश्नो जीवस्य स्वप्नस्थानविषयः। द्वितीयस्तु जीवस्य सुषुप्तिस्थलविषयः। तृतीयस्तु जीवस्य प्रबोधकालोद्गमनापादानविषयः। 'तासु तदा भवती'ति प्रथमप्रश्नप्रतिवचनम्। यदा सुप्त इत्यारभ्य द्वितीयप्रश्नप्रतिवचनम्।

स यदा प्रतिबुध्यत इत्यारभ्य तृतीयप्रश्नस्य प्रतिवचनमित्यभिप्रायः॥ **तदानीं तदाशब्द** इति । नाडीनां सुषुप्तिस्थानत्वाभ्युपगमपक्ष इत्यर्थः । **उक्तवानित्यन्वय** इति । करणग्रामैकधाभावस्यैव सुषुप्तिरूपतया, प्राण एवैकधा भवतीत्यनेन सुषुप्त्याधारतया उक्तवानित्यन्वय इत्यर्थः । भाष्ये **स्वप्नसुषुप्तिजागरितावस्थास्विति । यद्यपि** पूर्वपक्षे प्रश्नप्रतिवचनयोः स्वप्नसम्बन्धाभावात् स्वप्नावस्थायामनुवर्तमानत्वं न प्रतीयते— तथापि स्वप्नजागरणसुषुप्तीनां सामानाधिकरण्यमर्थसिद्धमिति भावः । यद्वा, यदा सुप्तः स्वप्नं न कथञ्चन पश्यतीति वाक्यादिति द्रष्टव्यम् । **प्राधान्यं विवक्षितमिति चेदिति** । यद्यपि, " संख्याया विधार्थे धा " इति संख्यायां विधीयमानो धाप्रत्ययः प्राधान्यवाचिन एकशब्दान्न संभवति—तथापि छान्दसत्वात् तथा शङ्कितमिति द्रष्टव्यम् ।

भाष्ये **अस्मिन्नात्मनि वर्तमाने प्राणे एकधा भवति वागादिकरण-ग्राम इतीति** । ननु मुख्यप्राणस्यैकीभूतकरणग्रामाश्रयत्वे सुषुप्त्याश्रयत्वप्रसङ्गेन, 'मुख्यप्राणस्येश्वरस्य च सुषुप्तिप्रबोधयोरसंभवा'दिति पूर्वभाष्यविरोध इति चेन्न— एकीभूतकरणग्रामाश्रयप्राणाश्रयत्वस्यैव सुषुप्तित्वविवक्षया एतद्रक्षोत्थितिसंभवादिति द्रष्टव्यम् । **प्राणनामभिरामन्त्रणाश्रवणादिनेति** । इदमुत्तरत्र स्पष्टम् । **पूर्वपक्षे कर्त्रादिशब्दानामिति** । पूर्वपक्षिणः सांख्यस्य मते कर्तृत्वादेरध्यस्तत्वेनास्वारस्या-वश्यम्भावादिति भावः । **स्ववाक्यस्थपदान्तरान्वययोग्यत्वं विवक्षितमिति** । यद्यपि, 'चमसवदविशेषा' दिति सूत्रे, 'अर्थप्रकरणादिभिर्विने'ति भाष्यव्या-ख्यानावसरे, 'अर्थो वस्तुसामर्थ्यम्'इत्युक्तम् । आलङ्कारिकैश्च, " अर्थः प्रयोजनम्— यथा, 'स्थाणुं भज भवभञ्जनाये'ति भवभञ्जनरूपप्रयोजनवशात् हरदारुसाधारणस्थाणु-शब्दस्य हरे पर्यवसानम् । प्रकरणं प्रस्तावः—यथा चक्रवर्तिसन्निधौ, 'सर्वं जानाति देव' इति प्रयुक्तस्य देव इति पदस्य इन्द्राद्यनेकार्थसाधारणस्य युष्मदर्थे पर्यवसानं प्रकरणात् । लिङ्गं वस्तुसामर्थ्यम् — यथा, 'कुपितो मकरध्वज' इत्यत्र समुद्रमन्मथसाधारणस्य मकरध्वजशब्दस्य कोपरूपलिङ्गवशात् मन्मथे पर्यवसानम् " इत्यादि उक्तम् — तथाप्यनतिविरोधादेवमुक्तमिति द्रष्टव्यम् । नन्वेतच्छब्देन कर्मशब्दसमभिव्याहृतेन, एतेषां पुरुषाणां कर्तेति पूर्वनिर्दिष्टपुरुषपरामर्शित्वं किं न स्यादित्यत आह— **लिङ्गवचनविरोधादिति** । ननु 'एतेषां पुरुषाणां कर्ते'त्यनेनोपस्थापितस्य पुरुषकर्म-

निर्माणस्य एतच्छब्देन परामर्शोऽस्त्वित्यत आह **पुरुषनिर्माणव्यापारेति।** **प्रकरणतो वा प्रकृतार्थान्तरसम्बन्धित्वेन वेति।** साक्षात् परम्परया वा शब्दोपस्थापितत्वेनेत्यर्थः। **प्रसिद्धितो वेति।** प्रत्यक्षादिमानान्तरतो वेत्यर्थः। **प्रकरणादिना सङ्कोचानुपपत्तेरिति।** नपुंसकैकवचनान्तनिर्देशार्हस्य प्रकृतस्याभावेन एतच्छब्दस्य सङ्कुचितवृत्तित्वकल्पकाभावादित्यर्थः। प्रकृतार्थान्तरसम्बन्धित्वेनापि केषाञ्चित् बुद्धिस्थत्वं दर्शयति **चिदचिन्मिश्रेति।**

**हेत्वन्तरमाहेति।** ननु पूर्वं बलीयस्त्वहेतोः कस्यचिदनुपन्यासात् कथं हेत्वन्तरत्वोक्तिरिति चेन्न—अत्रान्तरशब्दो विशेषवचनः, "अन्यदेवेदं परिभाषान्तर" मिति भाष्यं व्याचक्षाणेन कैयटेन, 'अन्तरशब्दो विशेषवचन" इति व्याख्यातत्वात्। केचित्तु कर्मशब्दस्यादृष्टवत् चलनेऽपि रूढतया रूढयोः परस्परकलहायमानत्वेन रूढ्युन्मेषाभावरूपहेतोः, **न च पुण्यापुण्यलक्षणं कर्मेति** पूर्वभाष्ये अभिप्रेतत्वात् **ब्रह्म ते ब्रवाणीत्युपक्रम्येत्यादेः** हेत्वन्तरत्वमुपपद्यत इति वदन्ति। युक्त्यन्तरमाह **आदित्याद्यधिकरणानां पुरुषाणां कर्तेति वाक्यस्येति।** 'यो वै बालाक एतेषां पुरुषाणां कर्ते' ति वाक्यस्येत्यर्थः। **आत्मशब्दोऽपि प्रयुक्त इति।** यदि हि, 'आत्मा वा अरे द्रष्टव्य' इतिवत्, 'य आत्मा स वेदितव्य' इति निर्देशः स्यात्, तदा साधारणस्यात्मशब्दस्य विवक्षितविशेषे पर्यवसानं स्यात्। न चात्र तथा निर्देशोऽस्तीति भावः। **एतच्छब्दस्येति।** केचित्तु **कर्मसम्बन्धित्वमात्रस्यैवेति** भाष्यम्, **यस्य वैतत्कर्मेति** इत्युत्तरभाष्यैकवाक्यं मत्वानाः, **एतच्छब्दस्य उक्तार्थपरत्वाभावे अनिष्टमाह कर्मसम्बन्धित्वमात्रस्यैवेतीति** पाठमाद्रियन्ते। ननु, यस्य वैतत् कर्मेत्यनेनैव हिरण्यगर्भादिदेवताविशेषसमन्वितकृत्स्नजगत्कारणत्वं सिद्ध्यतीति; 'एतेषां कर्ते' त्यस्य वैयर्थ्यमित्याशङ्क्याह **जगत्कर्तृत्वस्येति।** ततश्च परस्परसाहित्यादसङ्कोचसिद्धिरिति भावः। **विनियोगादृष्टवत इति।** भोजना (का) दृष्टवत इत्यर्थः। **कर्मवाचिपदलक्षणेति।** कर्मसम्बन्धिवाचिपदलक्षणेत्यर्थः।

जीवमुख्यप्राणलिङ्गान्नेति चेत् तद्व्याख्यातम् १-४-१७.

ननु, 'न हि देवदत्तः यज्ञदत्तपुत्र' इत्युक्ते देवदत्तं प्रति पुत्रत्वेन यज्ञदत्तं प्रति जामातृत्वेन सम्बन्धः प्रतीयत इत्यस्वरसादाह—**यद्वा लिङ्गं ज्ञापकमिति।**

**सूत्रेमुख्यप्राणलिङ्गमुपात्तमिति** । ननु प्राणलिङ्गस्यापि जीवलिङ्गतया विवक्षितत्वे जीवलिङ्गादित्येव सूत्रणीयम्; न तु जीवमुख्यप्राणलिङ्गादिति इति चेन्न — गोबलीवर्दन्यायेन जीवलिङ्गत्वाविशेषेऽपि प्राणसङ्कीर्तनस्य जीवलिङ्गान्तरापेक्षया प्राधान्यं दर्शयितुं पृथगुक्त्युपपत्तेः । अयं वह्निमान् वह्निधूमज्ञापकादित्युक्ते धूमज्ञापकस्यापि धूमद्वारा वह्निज्ञापकत्वेऽपि प्राधान्यविवक्षया पृथङ्निर्देशदर्शनादिति भावः । ननु न प्राणसङ्कीर्तनमात्रं जीवलिङ्गम्; अपितु प्राणोपकरणित्वेन सम्बन्धः । न चात्र प्रकरणे स श्रुतः । अथास्मिन् प्राण एवैकधा भवतीति प्राणस्य करणग्रामैकधाभावाश्रयत्वस्यैव प्रतीत्या प्राणस्य जीवोपकरणत्वस्याप्रतीतेरिति चेन्न—'अथास्मिन् प्राण' इति व्यधिकरणे सप्तम्याविति पक्षे अस्मिन्निति सप्तम्या इदंशब्दनिर्दिष्टस्य प्राणाश्रयत्वप्रतिपादनात् प्राणभृत्त्वेन जीवस्यैव प्रसिद्धत्वात् प्राणाधारत्वकीर्तनं लिङ्गं भवतीति नानुपपत्तिः । अत एव द्युभ्वाद्यधिकरणे प्राणाधारत्वं जीवलिङ्गतयोपवर्णितम् । ननु, 'यथा श्रेष्ठी स्वैर्भुङ्क्ते'' इति प्रतिपादितभोक्तृत्वादिरूपजीवलिङ्गापेक्षया, 'अथास्मिन् प्राण' इति प्रतिपाद्यस्य प्राणाधारत्वकीर्तनस्य किं प्राधान्यम्? प्रत्युत द्युभ्वाद्यधिकरणोक्तरीत्या अन्यथासिद्धञ्चेति चेत् — सत्यम्; स्थितस्य गतेर्वक्तव्यतया केनचिदाकारेण विशेषस्य समर्थनीयत्वात्, जीवप्राणयोः सम्बन्धस्यातिप्रसिद्धत्वाच्च ॥ — **न तूपासनार्थत्वमप्यतिदेष्टव्यमिति भाव** इति । तल्लिङ्गानन्यथासिद्धावेव तद्विशिष्टोपसनार्थत्वसंभवादिति भावः । ननु, "प्राणशरीरब्रह्मोपासनार्थं प्राणसङ्कीर्तनं लिङ्गं युज्यते" इति भाष्यमयुक्तम् । अनन्यथासिद्धप्राणलिङ्गोपन्यासे हि एतादृशमुत्तरं वक्तुं युक्तम; प्राणलिङ्गासद्भावस्य प्रदर्शितत्वादित्याशङ्क्याह **प्राणलिङ्गस्य ब्रह्मपरत्वमुक्तमित्यर्थ** इति । अनन्यथासिद्धब्रह्मलिङ्गानुरोधात् प्राणशब्दो ब्रह्मपरतया व्याख्यातव्य इति भाष्यार्थः । इतरत्तु अविवक्षितमिति भावः । **जीवलिङ्गनिर्वहणाकांक्षामिति** । प्राणशब्दरूपलिङ्गस्य पूर्वसूत्रे निर्व्यूढत्वात् तदतिरिक्तजीवलिङ्गनिर्वहणाकांक्षामित्यर्थः । "जीवलिङ्गानां पुनः कथं ब्रह्मपरत्वम्" इतिभाष्यस्याप्येवमेवार्थः । ननु तदुक्तमिति सूत्रखण्डेनैव प्राणसङ्कीर्तनरूपलिङ्गस्येव लिङ्गान्तरस्यापि निर्वाहसम्भवात् लिङ्गान्तरनिर्वाहाय सूत्रान्तरं किमर्थम्? न च प्रकारान्तरेण निर्वाहार्थम्, "अन्यार्थ"मिति सूत्रम् । अत एव, "प्रकारान्तरेण निर्वाहप्रतिपादकम्" इति टीकाग्रन्थो युक्त इति वाच्यम् — "जीवप्राणलिङ्गयोर्द्वयोरपि निर्वाहमुक्त्वा"

इत्याद्युत्तरग्रन्थविरोधादिति चेत्—मैवम । उत्तरत्रानेन निर्वाहवैषम्यप्रदर्शनेनेत्यादि-ग्रन्थेनान्यार्थमिति सूत्रस्यातिदेशसूत्रानिरर्थाधिकाशङ्कापरिहारार्थत्वस्य वक्ष्यमाणत्वेनादोषात् ॥

**अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपिचैवमेके १-४-१८.**

प्राणस्य स्वापप्रबोधयोरसंभवादाह **अनुपरतव्यापारप्राणवत इत्यर्थ** इति। प्राणनामभिरामन्त्रणाश्रवणं न प्राणस्य भोक्तृत्वाभावकृतम्, अपि तु प्राणव्यापारोपरतिकृतमिति शंकां व्युदसितुं प्राणव्यापारानुपरमकीर्तनमिति द्रष्टव्यम्। किञ्च **सुषुप्तिदशायां शरीरेन्द्रियेभ्योऽन्यत्वं सुज्ञान**मिति तदानीमपि अनुपरतव्यापारात् प्राणादन्यत्वं दुर्ज्ञानमिति। तस्य ज्ञापनीयतां दर्शयितुं प्राणस्य व्यापारानुपरमोक्तिः। **इति हि श्रुतिरिति**। ततश्च, 'तौ ह सुप्तं पुरुषमाजग्मतु' रिति क्वचिद्भाष्यकोशे पाठो दृश्यते। स तु लेखकानवधानकृत इति भावः। **प्राणा जीवा** इति। न च, "स यदा प्र[ति]बुध्यत" इत्येकवचनान्तनिर्दिष्टस्य जीवस्य तस्मिन्नेव वाक्ये, "एतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते" इति बहुवचनान्तप्राणशब्देन कथं निर्देश इति वाच्यम्— "अथ, यदु चैवास्मिन् शव्यं कुर्वन्ति, यदु च न, अर्चिषमेवाभिसंभवन्तीत्यत्रास्मिन्नित्येकवचनान्तेन निर्दिष्टस्य, अर्चिषमभिसंभवन्तीति बहुवचनान्तेन निर्देशवत् ते धूममभिसम्भवन्तीति बहुवचनान्तनिर्दिष्टस्य, 'एष सोमो राजे' त्येकवचनान्तेन निर्देशवच्च ईदृशवचनवैरूप्यस्य सोढव्यत्वादिति भावः। **श्रुत्यन्तरेण तदुपपादयतीति**। यद्यपि निष्क्रमणापादानत्वे श्रुत्यन्तरं नोदाहृतम्—तथापि तदप्यभिप्रेतमिति भावः॥ **उपक्रमोपसंहारमध्यमेष्वपि**। यद्यपि. ब्रह्म ते ब्रवाणीत्युपक्रमस्य ब्रह्मपरत्वं सिद्धम्। यस्य वैतत्कर्मेत्यस्य च ब्रह्मपरत्वं जगद्वाचित्वादिति सूत्र एव साधितम्। सर्वान् पाप्मनो अपहत्येति उपसंहारस्यापि ब्रह्मपरत्वं सिद्धमेव। अतश्चोपक्रमोपसंहारैकरूप्यं ब्रह्मपरत्व एव; न जीवपरत्वे—तथापि "एहि व्येव त्वा ज्ञपयिष्यामि। तं पाणावभिपद्य प्रवव्राजा। तौ ह सुप्तं पुरुषमीयतु" रित्युपक्रमस्य यष्टिघातोत्थापनप्रतिपादकमध्यमस्य, "इदं शरीरमात्मानमनुप्रविष्ट आ लोमभ्य आ नखेभ्यः। तद्यथा श्रेष्ठी स्वैर्भुङ्क्त" इत्युपसंहारस्य च जीवविषयत्वावगमात्, प्रतर्दनविद्यायामिव उपसंहारे भूयसां लिङ्गानामश्रवणात्,

'सर्वान् पाप्मनोऽपहत्येत्युपसंहारस्य च, "स यदा विजज्ञौ अथ हत्वाऽसुरान् विजित्य सर्वेषां देवानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं परीयाय" इति पूर्ववाक्यश्रुतासुरजयस्वाराज्यादिवत् आपेक्षिकसर्वपापापहतिस्वाराज्यपरतयाप्युपपत्तेः स्वतन्त्रेण (स्वातन्त्र्येण ?) जीवः प्रतिपाद्यत इत्यभ्युपगमविरोधोत्थानसम्भवादिति भावः। वस्तुतस्तु वैयधिकरण्यनिर्देशात् तन्न्यायो नावतरतीति शङ्काभिप्रायः। **अस्त्यवकाश इति।** यद्यपि जीवप्रतिबोधनस्यान्यार्थत्वे प्रतर्दनविद्यान्यायोऽनपेक्षित एव। जीवलिङ्गस्य त्वाष्ट्रहननादिवत् जीवशरीरकपरमात्मनिष्ठतया योजनीयत्वात्—तथापि यथाकथञ्चित् जीवलिङ्गान्यथासिद्धिरेव प्रतर्दनविद्यान्याय इत्यभिप्रेत्य तथोक्तमिति द्रष्टव्यम्।

**अवस्थान्तरत्वावगमादिति।** अथ यदा सुप्तः स्वप्नं न कथञ्चन पश्यतीत्यन्वयः। ततश्चाथशब्दोपक्रमं वाक्यम्। अथशब्दश्च पूर्वप्रकृतादर्थान्तरवाची सन् अर्थान्तरद्योतकः; तदाशब्दश्चाध्याहार्य इति भावः। **स्वप्नाभावावच्छिन्नकालादिति।** सुषुप्त्यवच्छिन्नकालादित्यर्थः। **अपृष्टः करणग्रामाप्ययः कथमुच्यत इति।** 'तदैनं वाक् सर्वैर्नामभिः सहाप्येती'त्यादिनेति शेषः। **क सुप्त इत्यर्थ इति।** यत्र यदा जीव एष सुप्तः, तदा क सुप्त इति श्रुत्यर्थ इति भावः। **उपरतव्यापारं मन इत्यर्थ इति।** मनस आदानं नाम मनोव्यापारोपरमसम्पादनम्; अर्थान्तरस्यासंभवादिति भावः। **अनेनेति।** आदानस्य व्यापारोपरमसम्पादनरूपतया इन्द्रियजन्यज्ञानानामपि आदानं तद्व्यापारोपरतिरूपमित्यर्थः। **तेषां मनस्सापेक्षत्वादिति।** मनस आदाने मनोव्यापारोपरतिरूपे पर्यवसिते सति तत्साहित्येन निर्दिश्यमानानां वागिन्द्रियादिजन्यज्ञानानामप्यादानस्य तादृग्रूपस्यैव वक्तव्यत्वात्। इतरथा एकक्रियायां साहित्यभङ्गप्रसङ्गात्। ततश्च मनोविषये यादृश आदानशब्दार्थः, तादृश एव प्राणविज्ञानेऽपीति भावः। यद्वा 'प्राणानां विज्ञानेने'ति श्रुतेरयमर्थः—प्राणादीनां वागादिना यद्विज्ञानं स्वस्वविषयग्रहणसामर्थ्यापादनं मनोव्यापाररूपं सामर्थ्यम्, तेन सह मन आदाय = निर्व्यापारं मनः कृत्वेत्यर्थः। एतत्परतया **प्राणशब्दवाच्येत्यादिग्रन्थोऽपि** योजनीयः। ज्ञानेन सह मन आदायेति वक्तव्ये मनसा सह इत्युक्तिः फलितार्थकथनपरा। अतश्च श्रुत्या कण्ठोक्तेन्द्रियव्यापारोपरमे फलितत्वोक्तेर्न विरोध इति द्रष्टव्यम्॥

समानप्रकरणस्थप्राणात्मशब्देति । 'अथास्मिन् प्राण एवैकधा भवति', 'एतस्मादात्मन' इति कौषीतकीवाक्यस्थप्राणात्मशब्देत्यर्थः । वैयधिकरण्यनिर्देशाच्चेति । 'तं मामायुरमृतमुपास्स्व' इतिवत् सामानाधिकरण्यनिर्देशाभावादित्यर्थः । ननु "तदभावो नाडीषु तच्छ्रुतेः" इत्यत्र, "तद्यत्रैतत् समस्तः संप्रसन्नः स्वप्नं न विजानाति, आसु तदा नाडीषु सृप्तो भवती" ति वाक्यवशात् नाडीनां सुषुप्तिस्थानत्ववर्णनात्, "अथ या एता हृदयस्य नाड्यस्ताः पिङ्गलस्याणिम्नस्तिष्ठन्ति शुक्लस्य नीलस्य पीतस्य लोहितस्य" इत्यस्य इहापि प्रत्यभिज्ञानात् नाडीनामपि सुषुप्त्याधारत्वमेव । ततश्च, 'क्वैष एतत् बालाके पुरुषोऽशयिष्ट' इति सुषुप्तिस्थानप्रश्नः ; 'य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते' इति वाजसनेयके सुषुप्तौ शयनशब्दप्रयोगात् । 'क्व वा एतदभूत्' इति एकधाभावप्रश्नः । तत्र प्रथमप्रश्नस्य, ["हिता नाम" इत्यादि उत्तरम्; ?] 'आसु तदा भवति, यदा सुप्तः स्वप्नं न कथञ्चन पश्यती' ति यदातदाशब्दयोः अन्वयस्य युक्तत्वात । द्वितीयप्रश्नस्य, 'प्राण एवैकधा भवती' ति उत्तरमिति किं न स्यादिति चेत्—सत्यम् । नाडीनां सुषुप्तिस्थानत्वं समर्थितम । अथापि अत्र, 'हिता नाम नाड्य' इति श्रूयमाणा नाड्यस्ता इत्यत्र प्रमाणाभावात्, प्रत्युतास्मिन प्रकरणे, "अथ यदा सुषुप्तो भवति यदा न कस्य चन वेद, — हिता नाम नाड्यो द्वासप्ततिसहस्राणि हृदयात्पुरीततमभिप्रतिष्ठन्ते — आभिः प्रत्यवसृप्य पुरीतति शेत" इति सुषुप्तिकाले पुरीतति शयनं तत्पूर्वकाले हितनामकनाडीसञ्चरणमिति स्पष्टं प्रतिपादनात् हितानामकनाडीप्राप्तेः सुषुप्तिसमये असम्भवात् स्वप्नप्रश्नोत्तरत्वमेव, नाडीष्वित्यस्येति सिद्धम् ।

नन्वस्मिन्नधिकरणे पुरुषस्य वेदितव्यतया उपन्यासेन प्रधानपूर्वपक्षस्यैवानुत्थानात् कथमुपसंहारे, **न तन्त्रसिद्धस्य पुरुषस्य तदधिष्ठितस्य वा प्रधानस्येति** भाष्यमित्याशङ्क्याह — **प्रधानोपादानमिति** ॥

इति जगद्वाचित्वाधिकरणम् (५)

---

## वाक्यान्वयाधिकरणम् (६)

वाक्यान्वयात् १-४-१९

बृहदारण्यके षष्ठे, "अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुः, मैत्रेयी कात्यायनी चेति। तयोर्ह मैत्रेयी ब्रह्मवादिनी बभूव; स्त्रीप्रज्ञैव तर्हि कात्यायनी। अथ ह याज्ञवल्क्योऽन्यद्वृत्तमुपाकरिष्यन्; 'मैत्रेयी' ति होवाच याज्ञवल्क्यः, 'प्रव्रजिष्यन् वा अरे अहमस्मात्स्थानादस्मि। हन्त ते अनया कात्यायन्या अन्तं करवाणी' ति। सा होवाच मैत्रेयी, 'यन्नु म इयं भगोः सर्वा पृथिवी वित्तेन पूर्णा स्यात्, स्यां न्वहं तेनामृता, आहो नेति। नेति होवाच याज्ञवल्क्यः, 'यथैवोपकरणवतां जीवितम्, तथैव ते जीवितं स्यात्। अमृतत्वस्य तु नाऽऽशाऽस्ति वित्तेनेति। सा होवाच मैत्रेयी, येनाहं नामृता स्याम, किमहं तेन कुर्याम्। यदेव भगवान् वेत्थ, तदेव मे ब्रूहीति। स होवाच याज्ञवल्क्यः, 'प्रिया खलु नो भवती सती प्रियमवृधत्, हन्त तर्हि भवति ते एतद् व्याख्यास्यामि ते। व्याचक्षाणस्य तु मे निदिध्यासस्वेति। स होवाच, 'न वा अरे पत्युः कामाय पतिः प्रियो भवति। आत्मनस्तु कामाय पतिः प्रियो भवति। न वा अरे जायायाः कामाय जाया प्रिया भवति। आत्मनस्तु कामाय जाया प्रिया भवति। न वा अरे पुत्राणां कामाय पुत्राः प्रिया भवन्ति — न वा अरे वित्तस्य — न वा अरे पशूनां — न वा अरे भूतानां — न वा अरे सर्वस्य — आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः। मैत्रेय्यात्मन्यात्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितम्। ब्रह्म तं परादात् योऽन्यत्रात्मनो ब्रह्म वेद। क्षत्रं तं परादात् योऽन्यत्रात्मनो क्षत्रं वेद। लोकास्तं परादुः, योन्यत्रात्मनो लोकान् वेद। देवास्तं — वेदास्तं — भूतानि तं — सर्वं तं परादात् योन्यत्रात्मनः सर्वं वेद। इदं ब्रह्म, इदं क्षत्रम्, इमे लोकाः, इमे वेदाः, इमानि भूतानि, इदं सर्वम्, यदयमात्मा।

स यथा दुन्दुभेर्हन्यमानस्य न बाह्यान् शब्दान् शक्नुयात् ग्रहणाय। दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीतः — स यथा शङ्खस्य

ध्मायमानस्य न बाह्यान् शब्दान् शक्नुयाद् ग्रहणाय; शङ्खस्य तु ग्रहणेन शङ्खध्मानस्य वा शब्दो गृहीतः — स यथा वीणायै वाद्यमानायै न बाह्यान् शब्दान् शक्नुयात् ग्रहणाय; वीणायास्तु ग्रहणेन वीणावादस्य वा शब्दो गृहीतः —

स यथाऽऽर्द्रैधाग्नेरभ्याहितस्य पृथक् धूमा विनिश्चरन्ति, एवं वा अरे अस्य महतो भूतस्य निःश्वसितमेतत् यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राणि — भूतानि। अस्यैव एतानि सर्वाणि निःश्वसितानि।

स यथा सर्वासामपां समुद्रमेकायनमेवं सर्वेषां स्पर्शानां जिह्वैकायनम्। एवं सर्वेषां गन्धानां घ्राणमेकायनम्। एवं सर्वेषां कर्मणां हस्तावेकायनम्। एवं सर्वेषामानन्दानामुपस्थ एकायनम्। एवं सर्वेषामध्वनां पादावेकायनम्। एवं सर्वेषां वेदानां वागेकायतनम्।

स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एव, एवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति; न प्रेत्य संज्ञास्तीति अरे ब्रवीमीति होवाच याज्ञवल्क्यः। सा होवाच मैत्रेयी, 'अत्रैव मा भगवान् मोहान्तमापीपत्; न वा अहं विजानामी'ति। स होवाच, 'न वा अरे मोहं ब्रवीमि; अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा। यत्र हि द्वैतमिव भवति, तदितर इतरं पश्यति, तदितर इतरं जिघ्रति तदितर इतरं रसयते, तदितर इतरमभिवदति तदितर इतरं शृणोति, तदितर इतरं मनुते, तदिर इतरं स्पृशति, तदितर इतरं विजानाति। यत्र त्वस्य सर्वमात्मैवाभूत्, तत् केन कं पश्येत्? तत्केन कं विजानीयात्? येनेदं सर्वं विजानाति, तं केन विजानीयात्? स एष नेति नेत्यात्मा। अगृह्यः; न हि गृह्यते। अशीर्यः; न हि शीर्यते। असङ्गः; न हि सज्यते। असितः (अव्यथितः); न व्यथते, न रिष्यति। विज्ञातारमरे केन विजानीयात् इति उक्तानुशासनाऽसि मैत्रेयि। एतावदेव खल्वरे अमृतत्वम्' इति होक्त्वा याज्ञवल्क्यो विजहार'' इति श्रूयते। एवं चतुर्थप्रपाठके किञ्चिद्भेदेनायं संदर्भः पठितः।

स्त्रीप्रज्ञा = इतरासां स्त्रीणां यादृशी तादृशी अस्याः प्रज्ञा; ब्रह्मवादिनी न भवतीत्यर्थः। अन्तं करवाणि—युवयोः द्रव्यविभागं करवाणीत्यर्थः। शिष्टमाकरे स्पष्टम्।

**कर्मफलभूतभोक्तृत्वश्रवणादिति**। पतिजायापुत्रादिसंबन्धेन भोक्तृत्वस्य प्रतीयमानत्वादिति भावः। भाष्ये **मध्येऽपि विज्ञानघन एवेति**। न च एतदुत्पत्तिविनाशवाक्यं प्रकृतद्रष्टव्यार्थविषयं न भवति; किन्तु तत्सृज्यात्मविषयमिति वाच्यम् — षष्ठे मैत्रेयीब्राह्मणे, "यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एव, एवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव। एतेभ्यो भूतेभ्यः समुत्थाय" इत्यादिना प्रकृतस्य द्रष्टव्यात्मन एव अयमात्मेति परामृष्टस्य उत्पत्तिविनाशवर्णनात्। "एवं वा अरे इदं महद्भूतमनन्तमपारं विज्ञानघन एवैभ्यो भूतेभ्यः" इति चतुर्थे मैत्रेयीब्राह्मणेऽपि प्रकृतपरामर्शीदंशब्दस्य सत्त्वेन उत्पत्तिविनाशप्रतिपादनं द्रष्टव्यात्मविषयमेवेति भावः। ननु कथमुपसंहारगतस्य, 'विज्ञातारमरे' इत्यस्य जीवप्रत्यायकत्वं तस्य जीवपरसाधारणत्वादित्यत आह **जीवहेत्वनुगृहीत** इति। केचित्तु, 'विज्ञानं यज्ञं तनुते', 'विज्ञानमय' इत्यादौ जीवस्यैव मनोवृत्तिविशेषवत्त्वरूपविज्ञानमयत्वप्रसिद्ध्या विज्ञानघनशब्दस्य जीवलिङ्गवाचितया जीववाचित्ववत् विज्ञातृशब्दस्यापि तथात्वोपपत्तौ दोषाभावादिति वदन्ति! **तस्य तदन्यत्वमुक्तमिति**। उत्तरग्रन्थार्थोपयुक्ततयेति भावः। **अन्यत्वदर्शनं नामेति**। **अन्यत्वनिषेध** इति भाष्यस्य, 'योऽन्यत्रात्मनः सर्वं वेदे' ति श्रुत्यनुसारादन्यत्वदर्शननिषेध इत्यर्थं सिद्धवत्कृत्य एतदुक्तमिति द्रष्टव्यम्। **निष्कृष्टस्वरूपेति**। अन्यत्वदर्शनं नाम आत्मस्वरूपे स्वान्यभूतदेवादित्वदर्शनम [ततः] निषिध्यत इत्यर्थः। ततश्च श्रुतेः पूर्वपक्षे अयमर्थः — अन्यत्र — द्वितीयार्थे त्रल् प्रत्ययः — आत्मनोऽन्यत् ब्रह्मक्षत्रादि सर्वं य आत्मत्वेन वेद, तं सर्वमपि ब्रह्मक्षत्रादिलक्षणं पराकुर्यादिति। **प्रबुद्धस्य**। उत्पन्नतत्त्वज्ञानस्येत्यर्थः। **परैरुच्यत** इति। सांख्यैः पूर्वपक्षिभिरुच्यत इत्यर्थः। **अल्पशक्तित्वं मात्रचाभिप्रेतमिति**। मात्रपदस्य इतरव्यवच्छेदार्थस्य महाशक्तिव्यवच्छेदकत्वमिति भावः। **निर्व्यापारस्येत्येतत्** मुक्तस्येत्येतद्विशेषणतया व्याख्याय, इदानीं **पुरुषमात्रस्येत्येतत्**परतया व्याचष्टे **यद्वा**

**कर्मपरवशस्ये**त्यादिना । **स्ववाक्यत्वज्ञापनाये**ति । स्ववाक्यत्वात् प्रयुक्त इत्यर्थः । स्वतन्त्रस्यापर्यनुयोज्यत्वादिति भावः । ततश्च स्ववाक्यत्वज्ञापनस्य किंप्रयोजनमिति न चोदनीयम् । **न तु देवादिदृष्टिनिषेध** इति । आत्मस्वरूप इति शेषः । **प्रागुक्तहेतुनिबन्धनत्वा**दिति । ब्रह्मात्मकत्वस्य प्रागुक्तत्वात् भेदनिषेधः अब्रह्मात्मकभेदनिषेध इत्यर्थः । यत्र हि देहात्मविवेकं प्रकृत्य ज्ञानैकाकारत्वेनात्मनामैक्यं प्रतिपाद्यते, तत्र श्रूयमाणस्य भेदनिषेधस्यैव देवादिभेदनिषेधत्वमिति भावः । **मैत्रेयीब्राह्मणानामनेकत्वा**दिति । चतुर्थे षष्ठे च मैत्रेयीब्राह्मणस्य दर्शनादिति भावः । **मैत्रेयीब्राह्मणाना**मिति बहुत्वमविवक्षितम् । काण्वमाध्यन्दिनपाठभेदेन वा द्रष्टव्यम् ।

भाष्ये **प्रतिनियतदेशकालस्वरूपपरिमाण**मिति । लोके हि किञ्चिद्वस्तु कस्मिंश्चिद्देशे कस्मिंश्चित् काले कञ्चित् पुरुषविशेषं प्रति तारतम्येन प्रियतमतामनुभवतीत्यर्थः । **परतन्त्रो भोक्ता भुंक्ते** इति । स्वेष्टनिर्वृत्त्यर्थं प्रीतिं कुर्वन् स्वातन्त्र्यं लभते । परेष्टनिर्वृत्त्यर्थे प्रीतिमतः पारतन्त्र्यमवश्यम्भावीति भावः । **भोक्ता भुंक्त** इति । प्रियशब्दस्य भोग्यत्वार्थकत्वात् भोक्तृत्वमपि सिद्धमेव । 'पत्युः कामाय पतिर्भोग्य'इत्युक्ते 'पत्युः कामाय पतिर्भुंक्त' इत्यस्य लाभादिति भावः । **आत्मशब्दवैपरीत्याभावा**दिति । आत्मशब्दवैरूप्याभावादित्यर्थः । **तस्मात् जीववाचिशब्दस्यापी**ति । 'प्रतिज्ञासिद्धेः' इत्यादिसूत्रत्रयानुरोधेन जीववाचिशब्दमपि परमात्मपर्यन्तं प्रापयितुं समर्थं परमात्मानुगुणबहुवाक्यस्वारस्यं भंक्त्वा अन्यतरात्मशब्दस्य वा आत्मशब्दद्वयस्य वा जीववाचित्वाश्रयणापेक्षया आत्मशब्दद्वयस्यापि परमात्मपरत्वसमर्थनस्वरसस्य तत्परत्वाश्रयणमेव युक्तमिति भावः ।

**अर्थैकरूप्यवर्णनं युक्त**मिति । ननु परमात्मसङ्कल्पनिर्वृत्तये पत्यादयः प्रिया भवन्तीति पतिजायादिषु प्रियत्वापादकत्वेन आनन्दरूपत्वसमर्थनपरत्वम्, आत्मनः कामायेति वाक्यस्य न युज्यते । पतिजायादिषु कदाचित् प्रियत्वापादनेनानन्दरूपत्ववत् कदाचिदप्रियत्वापादनेनानानन्दरूपत्वस्यापि प्रसङ्गात् । किञ्च, 'न वा अरे पत्युः कामाये'ति वाक्यानां परमात्मविषयत्वे प्रसिद्धिद्योतको वैशब्दोपि न सङ्गच्छते । न हि परमात्मेच्छाधीनं पतिजायादीनां प्रियत्वमिति लोकसिद्धम् ।

न च श्रुतिप्रसिद्धं तदिति वाच्यम् — अनधीतिनीमविज्ञातश्रुत्यर्थां मैत्रेयीं प्रति लोकप्रसिद्धेरेव द्योतनीयत्वात् । ततश्चात्मनः कामायेत्यात्मशब्दस्य जीवपरत्वमेवोचितम् । तथा हि—सर्वेषामपि स्वात्मा प्रियः, पतिजायादयोऽपि प्रिया इत्यनुभवसाक्षिकमेतत् । तत्र पतिजायादीनां स्वात्मव्यतिरिक्तानां सर्वेषां प्रियत्वं पतित्वादिप्रयुक्तं न भवति । अपितु स्वात्मप्रयुक्तमेव । तेषां स्वेष्टसम्पादकत्वदशायामिव स्वानिष्टसम्पादकत्वदशायां प्रियत्वादर्शनात् । स्वात्मनस्तु पतिजायादीन् प्रति इष्टसम्पादकत्वदशायामनिष्टसंपादकत्वदशायाञ्चाविशेषेण स्वप्रियत्वदर्शनात् पतिजायाद्यपेक्षया आत्मनोऽतिशयितपुरुषार्थत्वात् जीवात्मैव द्रष्टव्य इत्ययमेवार्थो युज्यत इति —

अत्र केचित् — अस्त्वेवमात्मनस्तु कामायेति वाक्ये आत्मशब्दस्य जीवपरत्वम् । अमृतत्वप्राप्त्युपायत्वादिभिः प्रकरणस्य परमात्मपरत्वदार्ढ्यावगमात् द्रष्टव्यत्वं परमात्मन एवेत्येतावदिह नः सिषाधयिषितम् । आत्मनः कामायेति सन्दर्भस्य जीवपरत्वे का नः क्षतिः? न च पूर्ववाक्यस्य जीवपरत्वेऽनन्वयः शङ्कनीयः । यस्मात् स्वयमेव स्वस्य परमप्रेमास्पदम्, तस्मात् स्वस्य महापुरुषार्थसिद्धयै परमात्मा द्रष्टव्य इत्यर्थसंभवाददोषात् । न चात्मशब्दवैरूप्यं दोषः; 'स्याच्चैकस्य ब्रह्मशब्दवत्' इति न्यायेन वैरूप्यस्य सोढव्यत्वात् ।

**सूत्रस्यैकप्रकरणविषयत्वात् प्रकरणस्य महावाक्यरूपत्वादिति** । सूत्रस्य प्रकृतमहावाक्यविषयत्वादिति निष्कृष्टार्थः । **सूत्रेणाविवक्षितः स्यादिति** । नन्वेवम्, 'विज्ञानघन एव' इत्यादिमध्यवाक्यान्वयोऽपि तुल्यन्यायतया कथमविवक्षितः स्यादिति चेत् — सत्यम् । उपक्रमस्य प्रधानत्वात् तद्विवक्षणमावश्यकम् । अत एवोक्तम् — **उपक्रमश्च महावाक्यावयवेषु प्रधानभूत इति** ।

**जीवशब्देन परमात्माभिधाननिर्वहणपरमिति** । ननु जन्मविनाशवत्त्वरूपजीवलिङ्गस्य परमात्मपरत्वनिर्वहणपरत्वमित्येव वक्तव्यम् । जीववाचिशब्दस्य तत्राभावात् । विज्ञानघनशब्दस्य जीववाचित्वे प्रमाणाभावादिति चेत् — विज्ञानघनशब्दस्य जीववाचित्वाभावेऽपि मनोवृत्तिविशेषरूपविज्ञानघनत्वस्य जीवलिङ्गया जीवलिङ्गवाचिनां विज्ञानघनोत्थानविनाशादिशब्दानां जीववाचिशब्देन ग्रहणोपपत्तिरिति

भावः । **यादवप्रकाशोक्तयोजनाव्यावृत्तिरिति** । प्रतिज्ञासिद्धेरित्यादिसूत्रत्रयार्थोऽपि सूत्रकाराभिमत इति यादवप्रकाशयोजनाव्यावृत्तिरित्यर्थः ।

प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः १-४-२०.

जीववाचिशब्देन परमात्माभिधानस्य जीवपरमात्मैक्यसूचकतया तल्लिङ्गत्वेऽपि एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपादकत्वाभावादाह – **एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपादकेति** । ननु जीवात्मशब्देन परमात्माभिधानस्य प्रागप्रस्तुततया तल्लाभः कथमित्याशंक्याह – **हेतुवशादिति** । योग्यतावशादित्यर्थः । ततश्च एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपादककार्यकारणभावकृतैक्यदृढीकरणाय जीववाचिशब्देन परमात्माभिधानमिति सूत्रार्थः । **अयं यादवप्रकाशपक्ष इति** । आश्मरथ्यमतस्य सूत्रकारानभिमतत्वात् एतत्पक्षस्याप्यनभिमतत्वमिति भावः । **कार्यात्मनेति** । कार्यात्मना कारणात्मना च वर्तमानयोर्जीवब्रह्मणोः कार्यत्वकारणत्वात्मना भेदः, सत्त्वादिना अभेद इत्यर्थः ॥

उत्क्रमिष्यत एवंभावादित्यौडुलोमिः १-४-२१.

"आमुक्तेर्भेद एव स्यात् जीवस्य च परस्य च । मुक्तस्य तु न भेदोऽस्ति भेदहेतोरभावतः । इति पाञ्चरात्रिकमनर्मास्मिन् सूत्रे उपन्यस्यत" इति यत् वाचस्पतिनोक्तम्, न तत्र मूलं पश्यामः ।

अवस्थितेरिति काशकृत्स्नः १-४-२२.

ननु यादवाभिमतस्य स्वाभाविक[भेद?]पक्षस्य पूर्वमेव दूषिततया शङ्करभास्करमतयोरेव दुदूषयिषितत्वात् तन्मते स्वाभाविकभेदानङ्गीकारात् स्वाभाविकौपाधिकविकल्पोऽस्मिन् सूत्रेऽनुचित इत्याशंक्याह **संभावितयोः पक्षयोः पराभिमतमिति** । **अतः [उपाधेः] पारमार्थ्यापारमार्थ्यपक्षद्वयेऽपीति** । भास्करशंकरपक्षद्वयेपीत्यर्थः । **ब्रह्मण्यच्छेद्य इति** । ब्रह्मस्वरूपे छित्वा सम्बन्धाभावात् स्वरूपमात्रसम्बन्धित्वादुपाधेः, हेयोपाध्याश्रयैक्यप्रतिसन्धानस्य जीवपरयोर्विशिष्टत्वात्, जीवेश्वरविभागाभावप्रसङ्गादित्यर्थः । **तर्हि कथमभिनिष्पत्तिश्रुतिरिति** । अभिनिष्पत्तिशब्दस्यापूर्वरूपप्रादुर्भावे प्रसिद्धत्वादिति भावः । **न कश्चिद्दोष इति** । उत्कट-

तया नास्तीत्यर्थः। **अचिदन्तःप्रवेशस्य स्पष्टत्वादिति**। "हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मना अनुप्रविश्य" इति अचिदनुप्रवेशस्य स्पष्टं प्रतीतेः स्पष्टतया तज्ज्ञापनार्थमित्यर्थः। **स्फुटतरार्थश्रुत्यन्तरेति**। य आत्मनि तिष्ठन्नित्यादिः स्फुटतरार्थश्रुतिः। **अभेदश्रुत्यभिप्रायेणेति**। जगत्सृष्टिप्रलयाभिधायिश्रुतीनामप्युपादानोपादेयभावप्रतिपादनमुखेनाभेदप्रतिपादनपरत्वादिति भावः। **एतन्निर्वाहस्वीकारहेतुरिति**। काशकृत्स्नीयनिर्वाहस्वीकारहेतुरित्यर्थः। **जनकयाज्ञवल्क्यसंवाद इति**। ततश्च मैत्रेयीब्राह्मणस्यापि याज्ञवल्क्यकर्तृकत्वात्, "अन्यश्च राजन् स परः" इत्यादियाज्ञवल्क्यकर्तृकश्लोकसमानार्थत्वं वक्तव्यमिति भावः। **अन्यश्च राजन् स पर इति**। ननु पूर्वत्र, 'अन्यच्च शश्वदव्यक्तं तथान्यः पञ्चविंशकः। तत्स्थं समनुपश्यन्ति तमेक इति माधव:' इति श्लोके अव्यक्तशब्दितदेहस्थमात्मानं लोकानुभवप्रवणबुद्धयो देहाभेदेन पश्यन्तीत्युक्तत्वात् अस्मिन्नपि श्लोके तदैकार्थ्यप्रत्यभिज्ञानात्, "अन्यश्च राजन् स पर" इति श्लोकोऽपि देहात्मविवेकपर एव किं न स्यात्? न च परशब्दः परमात्मन्येव प्रयोगार्हः, न देह इति वाच्यम् — 'महतः परमव्यक्त' मित्यादौ शरीरेऽपि परशब्दप्रयोगादिति चेन्न — एकप्रकरणगतयोः श्लोकयोरेकार्थत्वे अन्यतरवैयर्थ्यप्रसङ्गात् 'अन्यच्च शश्वदव्यक्त' मिति श्लोको देहात्मविवेकपरः, 'अन्यश्च राजन् स पर' इति श्लोकस्तु, "जुष्टं यदा पश्यत्यन्यमीशम्", "पृथगात्मानं प्रेरितारञ्च मत्वा" इत्यादिश्रुत्यनुसारात् जीवविलक्षणासंसारिपरमात्मप्रतिपादनपर इत्येव युक्तमिति भावः॥

ननु अवस्थितिमात्रेण तदात्मकत्वे आकाशस्यापि तदात्मकत्वप्रसङ्ग इत्यत आह — **अवस्थानञ्च शरीरप्रतिसम्बन्धितयेति**। ननु शरीरितयाऽवस्थानं हि आत्मतया अवस्थानम्। ततश्चात्मतयाऽवस्थितिहेतुकं सर्वात्मकत्वं किं सर्वशरीरत्वमुत सर्वस्वरूपत्वम्? नाद्यः; हेतुहेतुमतोरभेदात्। न द्वितीयः; सर्वस्यापि तत्स्वरूपत्वाभावादिति चेन्न — सर्वात्मकत्वं नाम सर्वसामानाधिकरण्यनिर्देशार्हत्वम्। तच्च सर्वात्मभावनिबन्धनमित्यदोषः। **सर्वेन्द्रियेति**। "सर्वेन्द्रियान्तःकरणं पुरुषाख्यं हि यज्जगत्। स एव" इति सामानाधिकरण्यं कृत्वा तत्र हेतुमाह, **"सर्वभूतात्मा विश्वरूपो यतोऽव्ययः"** इति। **चारुरूपा सालभञ्जिकेतीति**।

तत्र रूपशब्दस्य स्वरूपपरत्वदर्शनादिति भावः । 'ततश्च त्वम्' इत्यस्य ततस्त्वमुत्पन्न इति भ्रान्ति व्युदस्यति – **ततश्च त्वमितीति** । ननु सर्वगत्वादित्यनेन व्याप्तिमात्रं सिद्ध्येत्; कथं शरीरत्वमित्यत आह – **शरीरं हीति । नृपनभोभृत्येति** । नृपप्रतिद्वन्द्वी भृत्यः । नभःप्रतिद्वन्द्वी कुम्भ इति द्रष्टव्यम् । तच्छब्दवाच्यत्वस्य शरीरशरीरिभावनिबन्धनत्वे, 'तदनुप्रविश्य सच्च त्यच्चाभवत्', 'सर्वं खल्विदं ब्रह्म' इति श्रुत्योः प्रमाणतामाह **अत एव तदनुप्रविश्येति** । ननु नास्मिन वाक्ये तच्छब्दवाच्यत्वं शरीरशरीरिभावनिबन्धनमिति प्रतीयते; अपि तु अनुप्रवेश-निबन्धनमिति प्रतीयत इत्याशंक्याह **अन्तःप्रवेशनेनेति** । ननु, 'सर्वं खल्विदं ब्रह्मे'ति वाक्ये ब्रह्माधीनोत्पत्तिस्थितिलयत्वात् ब्रह्म सर्वशब्दवाच्यमित्येव प्रतीयते, न तु शरीरशरीरिभावनिबन्धनमितीत्याशंक्याह **अननशब्दवाच्या स्थितिरिति । सदायतनशब्देन स्थितिहेतुत्वाभिधानादिति** । सन्मूलाः सत्प्रतिष्ठा इत्याभ्यां वाक्याभ्यामुत्पत्तिलययोः सदधीनत्वमुक्त्वा स्थितेः सदधीनत्वं वक्तुं प्रवृत्तं सदायतना इति वाक्यं धारकत्वं दर्शयति । अतोऽवसीयते, सदायतनशब्दनिर्दिष्टं धारणं स्थित्यर्थमितीति भावः । **हेतुत्वेनोपन्यासादिति** । सर्वं खल्विदमिति वाक्य इति शेषः । **शरीरशरीरिभाव एवेति** । हेतुत्वाक्षिप्तशरीरशरीरिभाव एवेत्यर्थः । **न केवलं सकलश्रुत्यविरोधमुख्यत्वोपपत्तेरिति** । हेतुत्वं सिद्धमित्युत्तरत्रान्वयः ।

**'आत्मनो वा अरे दर्शनेने'**ति । "आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितम्" इति षष्ठपाठो भाष्ये उदाहृतः । "आत्मनो वा अरे दर्शनेने"ति चतुर्थाध्यायपाठः टीकायामुदाहृत इति द्रष्टव्यम् । **लक्षणाभिधान-मिति** । जगत्कारणत्वलक्षणाभिधानमित्यर्थः । 'अन्यत्रात्मन' इत्यस्यात्मानं विना इत्यस्यार्थस्य क्लिष्टत्वादाह – **यद्वान्यत्रेति । परैरेवमर्थ उक्त इति** । "दुन्दुभे-र्हन्यमानस्य" इत्यनेन हन्यमानदुन्दुभिप्रभवशब्दसामान्यं लक्ष्यते । दुन्दुभेस्त्वि-त्यनेनापि तदेव लक्ष्यते । दुन्दुभ्याघातः संग्रामभूयिष्ठवीररसाद्यनुकूलो दुन्दुभिध्वनि-विशेषः । ततश्चायमर्थः – यथा दुन्दुभिशब्दसामान्यस्य विशेषभूतान् शब्दान् दुन्दुभिशब्दसामान्यात् बाह्यत्वेन ततो निष्कृष्य न कश्चिदपि ग्रहीतुं शक्नुयात्; किन्तु दुन्दुभिशब्दसामान्यग्रहणेनैव तद्विशेषशब्दो गृहीतो भवति । दुन्दुभ्या-

घातसंज्ञकस्य दुन्दुभिशब्दविशेषस्य ग्रहणेन वा तदवान्तरविशेषशब्दो गृहीतो भवति । दुन्दुभिशब्द इत्येव हि दुन्दुभिशब्दविशेषा गृह्यन्ते । दुन्दुभ्याघातशब्द इत्येव हि दुन्दुभ्याघातशब्दविशेषा गृह्यन्ते । ततश्च दुन्दुभिशब्दसामान्यात् दुन्दुभ्याघातशब्दसामान्याच्च यथा तद्विशेषा न भिद्यन्ते — एवं चिद्रूपात्मस्फुरणं विना स्फुरणशून्यं जगत् चिदात्मनो न व्यतिरिच्यत इति आशयः । शङ्खवीणादिदृष्टान्ता अप्येवमेव योजनीया इत्युक्तमित्यर्थः । **दुन्दुभिशब्दे अध्यस्ता** इति पाठो दृश्यते । तस्यायमर्थः — दुन्दुभिशब्दादव्यतिरिक्ता इति ; विशेषस्य सामान्येऽध्यासाभावादिति द्रष्टव्यम् । **उपरितनयो**रिति । ननु दुन्दुभ्याघातशब्दस्य दुन्दुभ्याघातप्रभवशब्दे लक्षणा ; न तु दुन्दुभिशब्दमात्रस्य । ततश्च **उपरितनयोः दुन्दुभिशब्दयो**रित्ययुक्तम् ; दुन्दुभिशब्ददुन्दुभ्याघातशब्दयोरित्येव वक्तव्यमिति चेन्न — अस्यापि वाक्यस्य तत्रैव तात्पर्यात् । **पूर्ववाक्यवैयर्थ्यं**श्चेति । यद्यपि दुन्दुभेर्हन्यमानस्येति वाक्यस्य दुन्दुभिशब्दसामान्यात् निष्कृष्य विशेषशब्दान् ग्रहीतुं शक्नोतीत्यर्थप्रतिपादकतया साफल्यमस्ति — तथापि नात्यन्तप्रयोजनम् ; 'दुन्दुभेस्तु ग्रहणेने' त्यादिना दुन्दुभिशब्दसामान्यग्रहणेनैव विशेषशब्दो गृह्यत इत्यर्थस्यापि सिद्धत्वादित्यत्र तात्पर्यात् । विवक्षितार्थलाभे पदान्तरेण सिद्धे तदधिकपदान्तरवैयर्थ्ये दृष्टान्तमाह — **न हि गङ्गायामिति** । **आघातशब्दस्ये**ति । दुन्दुभ्याघातशब्दस्येत्यर्थः । न च दुन्दुभिशब्दावान्तरविशेषो दुन्दुभ्याघातसंज्ञकः शब्दविशेषोऽस्तीत्युक्तमिति वाच्यम् — तत्र प्रमाणाभावात् । सत्यपि तस्मिन्, 'दुन्दुभेस्तु ग्रहणेन विशेषा गृहीता भवन्ती'त्यनेनैव चारितार्थ्यादिति भावः । **परेणोपादीयमाने**त्यादि । दुन्दुभितदाहन्तृपुरुषान्यतरापसरणेनेत्यर्थः । [1]**वाक्यत्रयं**(?) द्रष्टव्यमिति । समानार्थकमिति शेषः । **तृतीयान्तयोः इत्यादिशब्दयो**रिति । **स यथार्द्रैधाग्नेरित्यादिना जगदेककारणत्वम्, एकायनमित्यादिना करणग्रामनियमनश्चे**त्यन्वय इति भावः । **वृत्तिविशेषा बहवो दर्शिता भवन्ती**ति । **स्पर्शाना**मिति बहुवचनेनैव शीतोष्णवैविध्ये सिद्धे **सर्व**ग्रहणं शीतोष्णाद्यवान्तर-

1. टीकायां वाक्यत्रये 'द्रष्टव्ये' इत्यक्षरोपासन—इत्येव दृश्यते । तदनुसारेण 'वाक्यत्रये द्रष्टव्य इती' ति प्रतीकधारणे समानार्थकमिति शेषपूरणस्यावश्यकता नास्ति ।

वैविध्यप्रदर्शनार्थमित्येव वक्तव्ये, 'वृत्तिविशेषा बहवो दर्शिता भवन्ती' ति कथमुच्यते ? न हि स्पर्शादिशब्दा वृत्तिविशेषपराः । तथा हि सति **अनुवृत्त-मयनत्वन्नाम तदुपादानत्वमिति** क्लेशो नाश्रयणीयः स्यादिति चेत् — सत्यम् । वृत्तिविशेषा बहवो दर्शिता भवन्तीत्येतस्य फलितार्थकथनरूपतया अदोषात् ।

**सैन्धवखिल्य इति वाक्यस्यापीति** । चतुर्थगतस्यापीत्यर्थः । **तस्येति** । तादृशप्रेमास्पदस्येत्यर्थः । **उद्बुद्धस्येति** । असङ्कुचितज्ञानस्येत्यर्थः । **श्रुत्यन्तरार्थ-प्रत्यभिज्ञानादिति** । "न संज्ञास्ति," "न स्मरन्" इत्यनयोरैकार्थ्यादिति भावः । **स्वाभाविकत्वं फलितमिति** । उपाध्यनुक्तेरिति भावः । **समित्येकीकार** इति । 'संज्ञास्तो' त्यत्रेत्यर्थः । **ज्ञाननित्यत्ववचनाच्चेति** । न विद्यते उच्छित्तिर्विनाशो यस्य तदनुच्छित्ति ; ज्ञानम् । अनुच्छित्ति धर्मो यस्य सोऽयमनुच्छित्तिधर्मा इति बहुव्रीहिगर्भबहुव्रीहिणेत्यर्थः । **स्वनिष्ठत्वभ्रमानुवाद** इति । आत्मानं स्वनिष्ठं मन्वानः स्वनिष्ठत्वेनाभिमन्यमानेन करणेन स्वनिष्ठत्वाभिमानविषयं विषयं पश्यतीत्यर्थः । कर्तृकरणकर्मसु स्वनिष्ठत्वभ्रमोऽनुवर्तत इत्यर्थः । **स्वनिष्ठार्थान्तरदर्शनं न स्यादिति** । ब्रह्मस्वरूपानवभासे ब्रह्मात्मकत्वदर्शनासंभवात् अब्रह्मात्मकार्थान्तरदर्शनं स्यादित्यर्थः ।

अत्र, 'येनेदं विजानाती' ति वाक्यस्य, "ग्राहकादि जगत् सर्वं येन कूटस्थसाक्षिणा । लोकः सर्वो विजानाति जानीयात् केन तं वद" इति सुरेश्वरवार्तिकोक्तप्रकारेण, येन साक्षिरूपेण लोकः सर्वो विजानाति, तं केन विजानीयात्; स केनापि दृश्यो न भवतीत्यर्थ इति परैर्व्याख्यातम् । तत्रानुपपत्ति-माह — **अन्यथा आत्मा वा अरे द्रष्टव्य** इत्यादिना । **अन्यथा** केवलदुरव-बोधत्वे कथित इत्यर्थः । **प्रकारो व्युदस्यत** इति । ब्रह्मणीति शेषः । **ग्रहणानर्ह** इति । ततश्च, 'न गृह्यत' इत्यनेन न पौनरुक्त्यमिति भावः । नन्वचित्सङ्गे विद्यमाने कथमचित्सङ्गनिषेध इत्यत आह **न ह्यचित्सङ्गोऽस्येति** । **पूर्ववाक्येन पुनरुक्तीति** । 'येनेदं विजानाति तं केन विजानीयात्', 'विज्ञातारमरे केन विजानीयात्' इत्यनयोः पौनरुक्त्यमिति भावः । **उपायान्तरनिषेधपरमिदमिति** । अत्र विजानीयादित्यनेन मुक्तिकालीनब्रह्मानुभवं उच्यते । ततश्च उपासनमन्तरा

केनोपायेन विजानीयात्=मुक्तिमनुभवेदित्यर्थः । **एतावदित्यस्य** अर्थमाह **विजानीयादित्यनेनेति** । विजानीयादित्यनेन ब्रह्मानुभवलक्षणप्राप्तेरुक्तत्वात् एतावदित्यनेन तत्परामर्शो युक्त इति भावः । **अनुपयोगाद्विरुद्धत्वाच्चेति** । जीवोत्पत्तिप्रलयचिन्तनं प्रकृतस्यानुपयुक्तम् । न ह्येक एव भ्रान्तः पुरुषः स्वाभिमतविरुद्धमर्थं कदाचिदङ्गीकरोति इति चोत्तरत्र स्पष्टम् ।

**द्वेधा व्याख्यातमिति** । पतिजायापुत्रवित्तादिप्रियसंसूचितेन भोक्त्रात्मनोपक्रमरूपपूर्वपक्षबीजस्य परिहारपरतया त्रिसूत्र्या एका योजना, 'विज्ञानघन एवैभ्यो भूतेभ्यस्समुत्थाय तान्येवानुविनश्यती' ति द्रष्टव्यत्वेन प्रकृतस्य विज्ञानात्मभावेन समुत्थानविनाशरूपमध्यमवाक्यगतजीवलिङ्गस्यान्यथासिद्धिपरा द्वितीययोजनेति व्याख्यातमित्यर्थः । "**इदं सर्वं यदयमात्मेति अभेदव्यपदेशस्येति** । 'आत्मनः कामाय सर्वं प्रियं भवति । आत्मा वा अरे द्रष्टव्य ' इत्युपक्रमे अभेदव्यपदेशस्य = अभेदव्यपदेशपर्यवसितस्य भोक्त्रात्मनोपक्रमस्येत्यर्थः । आत्मनि विज्ञाते सर्वमिदं विज्ञातं भवति, इदं सर्वं यदयमात्मा इति प्रतिज्ञा(प्रज्ञा)नाभेदोपपादककार्यकारणभावायत्तैक्यसूचकत्वं प्रथमसूत्रार्थ इति वर्णितमित्यर्थः । एवमेव पाठश्चेत् समीचीनः । इतरथा यथाऽयमर्थः सिद्ध्यति, तथाऽध्याहृत्य योजनीयम् । **उत्क्रमिष्यतः ब्रह्मभावापत्तीति** । अत्रापि भोक्त्रात्मनोपक्रमस्येति शेषः पूरणीयः । एवं **ब्रह्मण एवाविकृतस्येत्यत्रापि** द्रष्टव्यम् । **एवं वदतोऽभिप्रायश्शोधनीय** इति । यद्यपि शाङ्करभाष्ये, "काशकृत्स्नस्य चाचार्यस्याविकृतः पर एवेश्वरो जीव इति मतम् । आश्मरथ्यस्य तु यद्यपि जीवस्य परस्मात् अनन्यत्वमभिप्रेतम्, तथापि कार्यकारणलक्षणभेदः कियानप्यभिप्रेत इति गम्यते । औडुलोमिपक्षे पुनः स्पष्टमेवावस्थान्तरापेक्षौ भेदाभेदौ गम्येते । तत्र काशकृत्स्नीयं मतं श्रुत्यनुसारीति गम्यते । प्रतिपिपादयिषितार्थानुसारात् तत्त्वमस्यादिश्रुतिभ्यः" इति ग्रन्थे तदाशयः स्पष्ट एव प्रतीयते । तथा भामत्यामपि, वह्निस्फुलिङ्गयोरिव जीवपरयोरप्युपादानोपादेयभावकृतौ भेदाभेदावित्याश्मरथ्यमतम् । भविष्यन्तमभेदमादाय भेदकालेऽप्यभेदेन व्यपदेश इत्यौडुलोमिमतमिति प्रतिपादितम्—तथापि संभावनामात्रादेवमुक्तमिति द्रष्टव्यम् । **पुनश्चैवं योजितमिति** । इत्थं हि शाङ्करभाष्यम् —

"यदप्युक्तं प्रकृतस्यैव महतो भूतस्य द्रष्टव्यस्य भूतेभ्यः समुत्थानं विज्ञानात्मभावेन दर्शयन् विज्ञानात्मन एवेदं द्रष्टव्यं दर्शयतीति । तत्रापीयमेव त्रिसूत्री योजयितव्या — **प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ।** इदमत्र प्रतिज्ञातम् — 'आत्मनि विदिते सर्वं विदितं भवति,' 'इदं सर्वं यदयमात्मे'ति च । उपपादितञ्च; सर्वस्य नामरूपकर्मप्रपञ्चस्य एकप्रसवत्वादेकप्रलयत्वाच्च दुन्दुभ्यादिदृष्टान्तैश्च कार्यकारणयोरव्यतिरेकप्रतिपादनात् । तस्या एव प्रतिज्ञायाः सिद्धिं सूचयत्येतल्लिङ्गम्, यन्महतो भूतस्य भूतेभ्यस्समुत्थानं विज्ञानात्मभावेन कथितमिति आश्मरथ्य आचार्यो मन्यते । अभेदे हि सति एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञातमवक्लृप्तत इति ॥ **उत्क्रमिष्यत एवम्भावादित्यौडुलोमिः ।** उत्क्रमिष्यतो विज्ञानात्मनो ज्ञानध्यानादिसामर्थ्यात् संप्रसन्नस्य परेणात्मना ऐक्यसम्भवादिदमभेदाभिधानमित्यौडुलोमिराचार्यो मन्यते ॥ **अवस्थितेरिति काशकृत्स्नः ।** अस्यैव परमात्मनः अनेनापि विज्ञानात्मभावेनावस्थानादुपपन्नमिदमभेदाभिधानमिति काशकृत्स्न आचार्यो मन्यते । नन्वात्मोच्छेदाभिधानमेतत्, 'एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्ती'ति । कथमेतत् परस्पराभेदाभिधानम्? नैष दोषः । विशेषविज्ञान विनाशाभिप्रायमेतद्विनाशाभिधानम्; नात्मोच्छेदाभिप्रायम्" इति ।

ततश्च पुरोवादिशाङ्करभाष्यार्थोऽस्माद्वाक्यात् यथा सिद्ध्यति, तथा अध्याहारव्युत्क्रमादिकमाश्रित्य योजनीयम् ।

**प्रकरणस्य परमात्मपरत्वं न निवारयतीति ।** ननु, 'एवं वा अरे अयमात्मा अनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाये'त्यादिना प्रकृतस्य द्रष्टव्यात्मन एव अयमिति परामृष्टस्य विज्ञानात्मभावेनोत्पत्तिविनाशवर्णनात् कथमुत्पत्तिविनाशश्रवणं प्रकरणस्य परमात्मपरतां न निवारयेत् । "द्रष्टव्यस्यात्मनो जीववाचिशब्दानिर्देशकृताया अपरमात्मत्वशंकाया निराकरणीयत्वाच्च" इति स्वयमेव वक्ष्यमाणत्वाच्चेति चेत् — सत्यम् । अविकृतस्य ब्रह्मणो जीवभावेनावस्थानं न संभवतीत्यादिदूषणान्तरे तात्पर्यात् । **अभेदव्यपदेशनिर्वाहस्त्वत्यन्तापेक्षित** इति । एतेन "इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः" इत्यधिकरणे, "एवं विलक्षणत्वे सिद्धे सामानाधिकरण्यनिर्वाहार्थम्, 'अवस्थितेरिति काशकृत्स्नः' इति

सूत्रमत्रैव सङ्गनम् । एवं सूत्रत्रयमेतदधिकरणशेष इत्यर्थः " इति वक्ष्यमाणत्वात् कथमत्र सङ्गतिरिति शङ्का परास्ता ॥

**यादवप्रकाशैस्त्विति** । प्रतिज्ञासिद्धेरिति सूत्रत्रयमपि सूत्रकाराभिमतनिर्वाहपरमेव व्याचक्षते ; न तु पूर्वसूत्रद्वयार्थस्य दूष्यत्वम्, तृतीयसूत्रार्थस्य सूत्रकाराभिमतत्वमिति । [1] **विकल्पायोग्यत्वादिति** । विकल्पेन दूषयितुमयुक्तत्वादित्यर्थः । **इहाप्युपन्यस्तं स्यादिति** । औडुलोमिमतप्रत्यभिज्ञानादिति भावः । **पूर्णन्ववदिति** । अंशान्तरसापेक्षत्ववदित्यर्थः । **तत्तच्छब्दवाच्यत्वाभावादिति** । तृणादिशब्दवाच्यत्वाभावादिति भावः ।

इति वाक्यान्वयाधिकरणम् ॥

---

## प्रकृत्यधिकरणम् ( ७ )

प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् १-४-२३.

**पेटिकासङ्गतिमिति** । पेटिकाभ्यामस्याधिकरणस्य सङ्गतिमित्यर्थः । **विकल्पेनेति** । 'आनुमानिकमपी' त्याद्यधिकरणत्रये ब्रह्मकारणत्वाप्रतिक्षेपेणैव ब्रह्मणः कारणत्वमभ्युपगम्य क्वचित् प्रधानमपि कारणं भवत्वित्युत्थितो विकल्पोऽन्ययोगव्यवच्छेदेन निरस्तः । 'कारणत्वेन च' इत्याद्यधिकरणत्रयेतु प्रधानमेव जगत्कारणमित्युत्थितं नियमेन कारणत्वमयोगव्यवच्छेदाय निरस्तमिति भावः । ननु द्वितीयाधिकरणस्य कथं प्रासङ्गिकत्वम्; छायानुसारिवाक्यस्य विषयतया त्रिपाद्यां साक्षात्सङ्गतत्वादित्याशङ्क्य, उभयथाऽपि साक्षात्सङ्गतिरस्तीत्याह—**तत्र छायानुसारीति** । ननु सिद्धान्तेऽपि प्रधानेश्वरयोरुभयोरपि कारणत्वस्येष्टत्वात् समुच्चयनिरासो न युक्त इत्याशङ्क्य समप्रधानतया समुच्चयस्य निरसनीयत्वं विवक्षितमित्याह **स्वनिष्ठवस्तुद्वयस्येति** । परस्परशरीरशरीरिभावानापन्नवस्तुद्वयस्येत्यर्थः । **सर्वशक्तित्वादिति** । सर्वं शक्तिर्यस्य तत् सर्वशक्ति, तत्त्वादित्यर्थः ।

---

1. विकल्पयोग्यत्वादित्येव टीकायां दृश्यते ।

"यत्किञ्चित्सृज्यते येन सत्त्वजातेन वै द्विज ।
तस्य सृज्यस्य सम्भूतौ तत् सर्वं वै हरेस्तनुः ॥" इति

सर्वस्याऽपि शक्तिस्थानीयत्वात् प्रकृतेर्विशेषणत्वमिति भावः । **वेदान्तैरेवे**ति व्यस्त्येयं पदम् । **तद्विशेषणतये**ति "तेनैवाधिष्ठिता जगत्" इति वाक्ये अर्थतः प्रधानस्यापीश्वरस्य तृतीयया प्रथमान्तविशेषणत्वप्रतिपादनमविरुद्धमिति द्रष्टव्यम् । **मायां प्रति प्रेरकत्वमि**ति । ईशनं हि नियमनम् । तच्च प्रेरणम् । तत्र प्रेर्याकाङ्क्षायां संनिधानात् मायाया एव प्रेर्यत्वं लभ्यत इति भावः । इदमुपलक्षणम् — "मायां तु प्रकृतिं विद्यात्" इत्यत्र प्रकृतिशब्द उपादानपरः । "जनिकर्तुः प्रकृतिः", "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" इत्यादिवत् । ततश्च मायाया उपादानत्वस्य, मायाविन ईश्वरत्वस्य च प्रतिपादनात् निमित्तोपादानभेदः श्रुतिप्रतिपाद्य इति पूर्वपक्षिणो हृदयमित्यपि द्रष्टव्यम् । **उपादानत्वं समर्थयती**ति क्वचित् कोशे पाठो दृश्यते । तत्र परिबृढमाचष्टे परिबृढयतीतिवत् समर्थशब्दात्, 'तत्करोती' ति णिचि परस्मैपदं निर्वोढव्यम् । **समर्थयत** इति पाठस्तु सुगम एव । [1]**एवमेव ही**त्यादिभाष्यं श्रुत्यनभ्युपगमपक्षप्रतिपादकवाक्यव्यवहितमपि **हि**—शब्दस्वारस्यानुरोधेन व्यवहितश्रुत्यनुग्राहकपरतया व्याचष्टे — **कारणत्वश्रुते**रिति । (**पूर्वोक्तेती**ति ? ।)[2]........................................................
**अर्थद्वयसाधनपरतया योजनम्** ................ **मात्रसाधनपरतया योजनमयुक्त**मिति भावः । ........................

ननु **परिणामा**दिति सूत्रप्रयोजनस्य, "**न तु दृष्टान्ताभावात्**", "**भोक्त्रापत्तेरविभागश्चेत् — स्याल्लोकवत्**", "**लोकवत्तु लीलाकैवल्यम्**" इत्यादिभिः कृतकरत्वाद्वैयर्थ्यमित्याशङ्क्याह — **द्वितीयाध्यायेषु बहुष्वि**ति ।

---

1. इदं तालकोशे कुण्डलितम् । क्वचिन्नास्त्यपि । वस्तुत इयं भावप्रकाशिकापङ्क्तिरेव स्यात् । परंतु कारणत्वश्रुतेरिति प्रतीकधारणमयुक्तम्; अनन्वयात् । अतः प्रतीकेन परं पूर्वोक्तेतीत्येवंरूपेण भाव्यम् ।

2. एतदधिकरणसिद्धान्तोपक्रमप्रभृति—आत्मकृतेरिति सूत्रव्याख्यापर्यन्तभावप्रकाशिकाभागस्त्रुटित इति तालकोशचिह्नात् ज्ञायते ।

परिणामात् १-४-२७

इह **प्रतिपन्नाच्छब्दादिव**दिति । "शब्दादेव प्रमितः" इत्यादाविति शेषः । **प्रधानकारणत्ववादिनीना**मिति – यद्यपि प्रधानकारणत्ववादिनीनां 'गौरनाद्यन्तवती' इत्यादीनां परमात्मपर्यन्तत्वं नात्र भाष्ये कथ्यते – तथाऽपि तमः-प्रभृतेः शरीरत्वप्रतिपादनात् (ईश्वरत्व [ईश्वरशरीरत्व ?] कथनात्) शरीरवाचि-शब्दानां शरीरिपर्यन्तत्वात् परमात्मपर्यन्तत्वं तेषामपि शब्दानामभिहितमेवेति भावः । **तत्र साहित्यमात्रं विवक्षित**मिति – आकाशमिन्द्रियैः संयुज्यत इत्यर्थः । आकाशलयदशायां स्पर्शरूपरसगन्धतन्मात्राणां नष्टत्वादाह **बहुवचने न तात्पर्य**मिति । **लयशब्देन जीवब्रह्मणोः स्वरूपैक्ये**त्यादि । अत्र 'अविभागापत्ति-दशायामपि चिद्वस्तु अतिसूक्ष्मं सकर्मसंस्कारं तिष्ठति' इति पाठमाश्रित्य प्रथमतृतीय-व्याख्याने; 'चिदचिद्वस्तु अतिसूक्ष्मम्' इति पाठमाश्रित्य द्वितीयव्याख्यानमिति द्रष्टव्यम् । **श्रुत्यन्तरैकार्थ्या**दिति । "न जायते म्रियते वा विपश्चित्" इत्यादि श्रुत्यन्तरैकार्थ्यादित्यर्थः । "परमात्मनैकीभूतात्यन्तसूक्ष्मचिदचिद्वस्तुशरीरादेक-स्मादेवाद्वितीयात्" इति भाष्ये **अत्यन्तसूक्ष्मचिदचिद्वस्तुशरीरा**दित्यस्य **एक-स्मादेवाद्वितीया**दित्येतद्व्याख्यानरूपत्वमित्यभिधाय सूक्ष्मचिदचिच्छरीरकत्वाभ्युपगमे **एकस्मादेवाद्वितीयादित्येतत्** दृष्टान्ततया व्याचष्टे – **यद्वाऽऽनन्दवल्ल्या**मिति । **उदाहृतवाक्ये**ष्विति । 'स तपोऽतप्यते' त्यादिष्वित्यर्थः । **तप आलोचन इत्यस्माद्धातो**रिति । यद्यपि तप आलोचन इति धातुगणे न पठितः । तत्र तप सन्ताप इति शब्विकरणे पठ्यते; तप ऐश्वर्ये वेति दिवादौ; तप दाह इति चुरादौ – तथापि धातूनामनेकार्थत्वात् आलोचनमप्यर्थ इति भावः । **घटकस्य वाक्यविशेषस्ये**ति । भेदाभेदश्रुतिघटकस्य, 'तदेवानुप्राविशत्' इत्यादेरित्यर्थः ।

ननु, सृष्ट्वानुप्राविशदिति सृष्ट्यनन्तरमेवानुप्रवेशश्रवणात् **विक्रियमाण-द्रव्यस्यापी**ति विक्रियमाणत्वावस्थायामेवात्मतया अवस्थानं कथमुच्यत इत्याशङ्कयाह **तत् सृष्ट्वा तदेवानुप्राविशदि**त्यादि । क्त्वाप्रत्ययास्वारस्यप्रसङ्गमभिप्रयन्नाह – **यद्वा सृष्टिपूर्वके**ति । अस्मिन् पक्षे **विक्रियमाणद्रव्यस्यापी**त्यस्य निर्वाहमाह **तदानीमिहोक्त**मिति । ततश्च 'तत् सृष्ट्वे' ति वाक्ये स्थित्यर्थानुप्रवेशः कथ्यते ।

'तदनुप्रविश्ये'त्यनुप्रवेशस्य सामानाधिकरण्यहेतुत्वप्रतिपादकवाक्ये सृष्टिसमनुप्रवेशावेवोच्यते; न तु पूर्ववाक्योक्तानुप्रवेशव्यक्तिरिति भावः। **निमित्तत्वमात्रे परोक्ताया** इति। निमित्तकारणत्वमात्रे प्रमाणत्वेन परोक्ताया इत्यर्थः। भाष्ये **तदात्मानं स्वयमकुरुतेत्येवमादिभिरैकार्थ्यादिति**। सकलश्रुतिभिरैकार्थ्यादित्यर्थः। **अन्यैरिति**। शङ्करयादवादिभिरित्यर्थः।

## योनिश्च हि गीयते १ ४-२८.

"योनिष्ट इन्द्र सदने अकारि" इति मन्त्रस्यायमर्थः। हे इन्द्र ते सदने तव उपवेशाय योनिः स्थानमकारीत्यर्थः। योनिशब्दस्य उपादानवाचित्वाभावे दृष्टान्तः। अत्र चोदयन्ति—यदुक्तमेकविज्ञानेन सर्वविज्ञानप्रतिज्ञाया दृष्टान्तस्य चानुपरोधार्थं ब्रह्मण उपादानत्वं वक्तव्यमिति—तन्न; प्राधान्येन सादृश्येन वा तदुपपत्तेः। लोके हि, अस्य ग्रामस्य प्रधानभूते चैत्रे दृष्टे सर्वे दृष्टा इति व्यपदेशो दृश्यते; प्रधानदर्शनस्य तदितरदर्शनकार्यपूर्वहत्वात्। एवमिहापि ब्रह्मदर्शनस्य तदितरदर्शनकार्यनिष्पादनसमर्थतया तथाव्यपदेशोपपत्तेः। तथा सादृश्यनिमित्तोऽपि व्यपदेशो दृश्यते—"एतेन गवादयोऽपि क्रतवो व्याख्याताः" इति। यथा, ज्योतिर्व्याख्यानेन इतरेषां गवादीनां तत्सादृश्येन व्याख्यातत्वम्—एवमिहापि ब्रह्मणि ज्ञाते सत्त्वादिना सादृश्यात् तदितरेषां ज्ञातत्वसंभवात्। अत एव दृष्टान्तानुपरोधोऽप्यसङ्गतः। न ह्येकस्मिन् मृत्पिण्डे ज्ञाते सर्वं मृण्मयं विज्ञातं भवति। सर्वस्य मृत्कार्यस्य एकमृत्पिण्डारब्धत्वाभावात्। एकस्य नखनिकृन्तनस्य लोहमणेर्वा सर्वलोहमयकार्ष्णायसोपादानत्वाभावात्। न च सर्वं मृण्मयमित्यत्र सर्वशब्द एकमृत्पिण्डारब्धकार्यपर इति वाच्यम्—तथा कल्पनायां प्रमाणाभावात्। अत एव, 'अभिध्योपदेशाच्च' इति सूत्रोक्तो बहुभवनसङ्कल्पोऽपि न प्रमाणम्; अन्तर्यामिरूपेणैव बहुभावस्य सङ्कल्पविषयत्वसंभवे तेजोबन्नादिरूपेण बहुभवनस्य सङ्कल्पविषयत्वे प्रमाणाभावात्। उक्तञ्चाभियुक्तैः—

"बहु स्यामिति सङ्कल्प्य तेजःप्रभृतिसर्जनम्।
गुरुः स्यामिति सङ्कल्प्य शिष्यसम्पादनं यथा॥"

इति । अत एव, 'तदात्मानं स्वयमकुरुते' त्यपि व्याख्यातम् । अन्तर्याम्यादिरूपेण स्वकार्यत्वस्योपपत्तेः । एतेन "साक्षाच्चोभयाम्नानात्", "योनिश्च हि गीयते" इति युक्त्यन्तरमपि व्याख्यातमिति —

अत्रोच्यते । यद्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञायां सादृश्यप्राधान्याभ्यां गौणमेव सर्वविज्ञानमभिहितं स्यात्, तर्हि, 'कथं नु भगवः स आदेशो भवती' ति प्रश्नस्य, 'यथा सोम्यैकेने' ति प्रतिवचनस्य चासङ्गतत्वापत्तेः । ब्रह्मविज्ञानेन प्रपञ्चज्ञातत्वस्य मुख्यतायां कृत्स्नश्रुतिसन्दर्भस्य सामञ्जस्यात् । एवं ह्युपाख्यायते — उद्दालको ह्यारुणिः स्वपुत्रं श्वेतकेतुं स्वनियोगात् द्वादश वर्षाणि गुरुकुले स्थित्वा सर्वान् वेदान् अधीत्य प्रतिनिवृत्तम्, 'उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवति अमतं मतमविज्ञातं विज्ञातम्' इति पृष्ट्वा, 'कथं नु भगवः स आदेशः' इति एकविज्ञानेन सर्वविज्ञानं कथं नूपपद्यत इत्याशयवता पुनः पृष्टः, मृत्पिण्डादिदृष्टान्तैः तदुपपादयामासेति । यद्यत्र सर्वविज्ञानं प्राधान्याद्यभिप्रायं गौणं स्यात्, तदा प्रधानज्ञानेन सर्वमन्यदप्रधानमविदितमपि फलतो विदितप्रायं भवतीत्यस्यार्थस्य (भिप्रायस्य) लोकसिद्धत्वेन एकविज्ञानेन सर्वविज्ञानस्यानुपपत्तिं पश्यतः, 'कथं नु भगवः स आदेश' इति प्रश्नो न स्यात्; तदभिप्रायानभिज्ञेन कृतेऽपि प्रश्ने, प्राधान्यात् सादृश्याद्वा सर्वं स्यादित्येव प्रत्यवक्ष्यत । नैतदुभयं युज्यते । 'वाचारम्भणं विकारो नामधेय' मिति दृष्टान्तेऽपि तदुपपादनमत्यन्तमनवलम्बनमेव स्यात् । तथा, "बहु स्यां प्रजायेये" त्यभिध्योपदेशोऽपि उपादानत्वोपपादक एव । "तत्तेजोऽसृजत" इत्यादिना अनन्तरवक्ष्यमाणतेजःप्रभृत्यात्मना बहुभवनस्यैव सङ्कल्पविषयतायाः वक्तव्यत्वात् । 'एकमेवाद्वितीयम्' इत्यादिना सृष्टेः प्रागेकत्वेनाद्वितीयत्वेनावधारितस्योपादानत्वनिमित्तत्वयोरवश्यम्भावाच्च । तस्मादुपादानत्वप्रत्याख्यानं वेदान्तद्वेषनिमित्तमिति युक्तमित्युत्पश्यामः ।

**उपासनफलपरमिति** । "यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैती" ति फलपरवाक्यस्थत्वादिति भावः । **लक्षणायोगादिति** । उपादानलक्षणायोगादित्यर्थः । **पीतशङ्खस्य शङ्खान्तरेणेति** । **पीतशब्दः** पीतशङ्खपरः । **शङ्खशब्दः** शङ्खान्तर-

परः । ततश्च (तथाच) शुक्लशङ्खे पीतशङ्खोऽध्यस्यत इति भावः । **देहेऽधिष्ठाने-ऽध्यस्तत्वादिति** । ततश्चाध्यस्तं यत्सामानाधिकरण्येन प्रतीयते, तदुपादानमिति लक्षणयोगादिति भावः । **आत्मनि देहाध्यास इति चेदिति** । ततश्च देहं प्रति आत्मन एवोपादानत्वम्; न त्वात्मानं प्रति देहस्येति भावः । **अध्यासो मिथ्येति भवितुं युक्तमिति – अन्योन्यस्मिन्नन्योन्यात्मकतां अन्योन्यधर्मांश्चाध्यस्येति विषये युष्मदर्थ** इति पाठो दृश्यते । तत्र **भवितुं युक्तमि**तीत्यस्यानन्तरम्, **आक्षिप्य तथाऽपीति** शेषः पूरणीयः । "अध्यासो मिथ्येति भवितुं युक्त" मित्यन्त-ग्रन्थस्याध्यासो नास्तीति ह्यर्थः । तदन्तस्य शाङ्करभाष्यस्याध्यासाक्षेपरूपत्वात्; तथा-ऽप्यन्योन्यस्मिन्नन्योन्यात्मकताम्' इत्यादिग्रन्थस्यैवाध्याससमर्थनपरत्वाच्चेति द्रष्टव्यम् ।

भास्करमतमाह – **यश्चापीति** । यादवप्रकाशीयेति । **अव्यवहितसाध्ये-नेति** । ब्रह्मण उपादानत्वमव्यवहितसाध्यम् । तन्निर्वाहकं प्रकृत्यैक्यं तु व्यवहितं साध्यमित्यर्थः । **वक्तव्यमिति** । प्रकृतिश्चेति पदेन साध्यतया वक्तव्यमित्यर्थः । **उपादानत्वं हि प्रधानसाध्यमिति** । अव्यवहितं चेति शेषः । **विक्रियामिति** । दर्शयतीति पूर्वेणान्वयः । **न हि प्रलयात् पूर्वमेकत्वापत्तिरिति** । 'एकमेवा-द्वितीयम् । तदैक्षत बहु स्यां प्रजायेये' ति श्रुतिवशादेकत्वावस्थाया बहुभवन-सङ्कल्पात्पूर्वभावावश्यम्भावादिति भावः । **अलुप्तविभक्तिकत्वेनेति** । यद्यपि समा-साभावेऽपि, "स्वमोर्नपुंसकात्" इति अमो लुगस्त्येव, तथाऽपि दधि पश्येत्यादिवत् स्मृतायाः विभक्तेरेवार्थप्रत्यायकत्वोपपत्तौ समासे लक्षणाश्रयणस्यायुक्तत्वादिति भावः । **मिथः प्रकारप्रकारिभावानभ्युपगमाच्चेति** । अभ्युपगमे अस्मादिष्टसिद्धिरिति भावः । **प्रकृतेरेव महदाद्युपादानत्वं स्यादिति** । ततश्चाभिन्ननिमित्तोपादान-ब्रह्मवादो न स्यात्; नियन्त्रंशस्य निमित्तत्वादिति भावः । इदमुपलक्षणम् – ब्रह्म-बहुत्वं च स्यादित्यपि द्रष्टव्यम् । **तत् किं वृक्षसमुदाय इति** । यद्यपि, 'भोक्तृ-भोग्यनियन्तारः किं प्रत्येकं ब्रह्म' ति पूर्वविकल्पादस्य विकल्पस्य न विशेषः, ततश्च **त्रयाणां मिथो भिन्नत्वेऽपी**त्येतत्पर्यन्तो ग्रन्थो नातीव सप्रयोजन इति भाति – तथाऽपि दूषणान्तरं वक्तुं पुनर्विकल्प इति द्रष्टव्यम् । शङ्कते **त्रयाणां मिथो भिन्नत्वेऽपीति** । **ब्रह्मात्मना एकत्वं वर्णनीयमिति** । ननु पर-

स्कन्धादीनां भेदाप्रहाणेन एकवृक्षानन्यत्ववत्, इष्टकानामिष्टकात्वरूपभेदाप्रहाणेन एकमित्यनन्यत्ववत्, चिदचिदीश्वरांशानां भेदकाकाराप्रहाणेन एकब्रह्मानन्यत्वं सिद्धान्तिनोऽप्यभिमतमिव प्रतीयते । न चैतत् सिद्धान्तिनोऽभिमतं भवति, त्रयाणां एकब्रह्मात्मकत्वाभावादिति चेन्न – चिदचिद्विशिष्ट ईश्वरो हि ब्रह्म, न तु विशेष्यमात्रम । ततश्च विशिष्टान्तर्गतत्वं त्रयाणामपि साधारणमित्येतदभिप्रायेण ब्रह्मात्मना एकत्वं वर्णनीयमित्युक्तमिति द्रष्टव्यम् । **छिन्नायामङ्गुला**विति । छेदेन स्वदेहात् पृथक्कृतत्वादित्यर्थः । **कस्यचित् स्वरूप**मिति । विशिष्टस्येत्यर्थः । **यावद्विशेष्यभाविना**मिति । इदमुपलक्षणम् । दण्डविशिष्टस्वरूपे दण्डस्यान्तर्भावेऽपि न दोष इत्यपि द्रष्टव्यम् ।

**वह्नेरुष्णत्वं स्फोटजनन** इति । ननु उष्णस्पर्शस्य कथमग्निस्वरूपत्वम्; गुणगुणिनोर्भेदात् । स्वं हि रूपं स्वरूपमित्युच्यते; न तु स्वापृथग्सिद्धं सर्वं स्वरूपम् । यदि कारणतावच्छेदककोट्यनुप्रविष्टं सर्वं स्वरूपमित्युच्येत–तर्हि आलोकगतोद्भूतरूपत्वस्य चाक्षुषप्रत्यक्षे उद्भूतरूपगतकारणतायामवच्छेदकत्वादालोकस्याप्युद्भूतरूपस्वरूपत्वप्रसङ्गः; तथा आर्द्रेन्धनप्रभववह्नित्वस्य धूमजनकतावच्छेदकत्वात् आर्द्रेन्धनादेरपि वह्निस्वरूपानुप्रवेशप्रसङ्गात् (ङ्गः?)। अतस्तेषु स्वरूपत्ववादः स्वीयरूपत्वाभिप्रायः; न तु स्वाभिन्नरूपत्वाभिप्रायः । एवं (एवञ्च) प्रकृत्यादीनामपि परमात्मापृथक्सिद्धविशेषणतया तन्वंशशक्तिरूपशब्दाद्यभिधेयत्वमस्तु नाम । नैतावता तद्गतावस्थाया एतन्निष्ठत्वमस्ति । तथा हि सति तद्गतशक्तित्वशरीरत्वांशत्वजडत्वादीनामपि परमात्मगतत्वप्रसङ्गात् । ततश्च प्रकृतेर्महदादिरूपेण परिणममानत्वेन प्रकृतेरेवोपादानत्वं स्यात्; न तु ब्रह्मणः इत्याशङ्कामुपसंहारव्याजेन निराकरोति – **अतो महदाद्यवस्थाः चिदचिद्विशिष्टब्रह्मस्वरूपगता** इति । **न हेत्वसिद्धि**रिति । अयं भावः – चिदचिद्विशिष्टमेव ब्रह्म; न विशेष्यमात्रम् । चिदचिद्विशिष्टे च महदाद्यवस्थायोगित्वमस्त्येवेति । **न हि नाभिमात्रं रथचक्र**मिति । यथा परस्परमाधाराधेयभावमापन्नाः नाभिरथनेमयः रथचक्रशब्दवाच्यस्वरूपान्तर्गताः, यथा वा बाह्यदलविशिष्टेषीकास्वरूपं मुञ्जादिशब्दवाच्यम्, यथा वा त्वक्पत्रादियुक्तकाण्डस्वरूपमेव कदलीशब्दवाच्यम्, एवमाधाराधेयभावापन्नभोक्तृभोग्यनियन्तृस्वरूपं ब्रह्मशब्दवाच्यमित्यर्थः ।

ननु काष्ठगतज्वालायाः काष्ठगतकरणत्वोपपादकत्वे प्रकृतिगतावस्थायाः प्रकृतिगतोपादानत्वनिर्वाहकत्वमेव स्यात; न तु ब्रह्मोपादानत्वनिर्वाहकत्वमित्यत आह **करणकारकस्य तु स्वनिष्ठत्वादिति**। प्रकृतेस्तु स्वनिष्ठत्वाभावात् नोपादानत्वमिति भावः। ननु मृत्पिण्डाश्रयस्य चक्रस्य मृत्पिण्डगतघटत्वाद्याश्रयत्वं किं न स्यादित्याशङ्क्याह **आश्रयिनिष्ठा**मिति। स्वतन्त्रं मृत्पिण्डादि वस्तु स्वाधारे चक्रे स्वगतावस्थायोगितां न निर्वहती (निर्वाहयती) त्यर्थः। **व्यवहितपत्रवेध** इति। पत्रदेधान्तरेण व्यवहितपत्रवेध इत्यर्थः। **कुलालस्ये**ति। हेतुत्वेन सजातीयव्यापारव्यवहितत्वादिति भावः। **शरव्यवहितस्ये**ति — धनुश्शरयोः द्वयोरपि हेत्ववान्तररूपप्रहरणत्वाक्रान्तत्वादिति भावः। **निष्पादककार्यनिष्पादनरूपकिञ्चित्कारसद्भावादिति**। तन्निष्पादकव्यापारनिष्पादनरूपकिञ्चित्कारसद्भावादित्यर्थः। **अतिप्रसङ्गः परिहृत** इति। **अन्वयव्यतिरेकाभ्यामतिप्रसङ्गस्य निवार्यत्वादि**त्यनेनेत्यर्थः। **अग्न्यादेरि**ति। अव्यवहितस्यापीति शेषः। **संयोगमात्रे व्यवधायकत्व**मिति। आस्तरणादिकं शयानस्य पर्यङ्कसंयोगं परं निरुणद्धि; न त्वाश्रयाश्रयिभावमपीति भावः।

**स्वधारणसमर्थवस्तुनिष्ठव्यवधायकत्वादिति**। नन्वेवं दर्भाणां स्वाश्रितदर्भत्वाद्यवस्थासु भूतलाश्रितत्वव्यवधायकत्वं न स्यात्। तथा यूकादीनां यूकत्वाद्यवस्थासु मनुष्याश्रितत्वव्यवधायत्वं न स्यात्। स्वधारणसमर्थवस्तुनिष्ठव्यवधायकत्वादिति चेन्न — **स्वधारणसमर्थे**त्यस्य स्वाश्रितधारणसमर्थेत्यर्थः। भूतलमनुष्यादीनां दर्भत्वयूकत्वादिधारणसामर्थ्यं नास्ति। तेषां तदाश्रितत्वे प्रमाणाभावात्। नन्वेवं यत्र यदाश्रितत्वग्राहकप्रमाणमस्ति, तत्रान्तरालिकपदार्थानां तदव्यवधायकत्वम्। अत एव प्रासादे शेते, पर्यङ्के शेते, वेद्यां हवींष्यासादयति, बर्हिषि हवींष्यासादयतीत्यादौ आन्तरालिकानां पर्यङ्कबर्हिरादीनामव्यवधायकत्वमिति पर्यवसन्नमिति चेत् — इष्टापत्तेः। व्यवहितस्याप्याश्रयतांग्राहकप्रमाणसत्त्वे आश्रयत्वम्। प्रकृते च महदादिव्यवहितब्रह्मणोऽपि तत्तदवस्थं प्रत्याधारत्वग्राहकं प्रमाणमस्ति, "सच्च त्यच्चाभवत्" इत्यादि। अतोऽवस्थाश्रयत्वात् मुख्यमुपादानत्वमुपपन्नमिति भावः। ननु महदाद्यवस्थाश्रयत्वस्य परमात्मनि मुख्यत्वे तुल्यन्यायतया देवत्वाद्यवस्थाश्रयत्वस्याप्यात्मन्येव

मुख्यत्वात् तत्र कथम्, "न देवो न नरः" इति निषेधः। न चाद्वारकाश्रयत्वाभावात् निषेध उपपन्न इति वाच्यम्—संयोगेन भूतलाधारे घटे (घटाधारे भूतले?) सम्बन्धान्तरेण घटाधारत्वं नेत्येतावता भूतलं न घटाधार इति वचनं समञ्जसं स्यात्। किञ्च तथा निषेधप्रतिपादकशास्त्रस्य भ्रमजनकतया अनुपादेयमेव स्यादिति चेन्न—पूर्वापरवाक्यानुरोधेन वाक्यतात्पर्यस्य वर्णनीयतया देवत्वादिनिषेधकशास्त्राणाम्; "चत्वारः पञ्चदशरात्राः। —— देवत्वं गच्छन्ती" त्यादिशास्त्राविरोधेनाद्वारकनिषेधपरत्वस्यावश्याश्रयणीयत्वात् नानुपपत्तिरिति भावः॥

इति प्रकृत्यधिकरणम्॥

---

## सर्वव्याख्यानाधिकरणम् (८)

एतेन सर्वे व्याख्याताः व्याख्याताः॥ १-४-२९.

**त्रय एव यज्वान** इति एवकारः कोशेषु दृश्यते। तस्य नातीव प्रयोजनं पश्यामः। **सद्ब्रह्माक्षरशब्दैरि**ति। अन्विता इत्यादिशेषः पूरणीयः। **द्वात्रिंशदधिकरणन्यायनिर्णीतत्वा**दिति—अतीतेषु चतुस्त्रिंशत्यधिकरणेषु सामान्यतो ब्रह्मविचारकर्तव्यतापरस्याद्याधिकरणस्यापशूद्राधिकरणस्य च देवताविशेषनिर्णयानुपयोगमभिप्रेत्य द्वात्रिंशत्त्वोक्तिः। अत एव, "जन्माद्यस्य यतः इत्यादीनामधिकरणानाम्"इति प्रथमाधिकरणं पृथक्कृत्य वक्ष्यति; अपशूद्राधिकरणं च नोदाहरिष्यति। न चैवम्, 'भगवच्छब्दतुल्यत्वं प्रथमसूत्रे उपपादित'मिति वक्ष्यमाणग्रन्थविरोध इति वाच्यम्—तत्रापि भगवत्परत्वसम्भवाभिप्रायेण तथोक्तमिति द्रष्टव्यम्। यद्वा **तृतीयं तु सामान्येनोपयुक्त**मिति वक्ष्यमाणत्वात् तृतीयाधिकरणबहिर्भावेन द्वात्रिंशत्त्वं द्रष्टव्यम्। **नारायणातिरिक्ते**ति। पाशुपतमते "उपादानं तु भगवान् निमित्तं तु महेश्वरः" इति नारायणातिरिक्तनिमित्तप्रतिपादनात् तन्मतनिरास इति भावः। **हिरण्मयत्वविशेषणेन चे**ति। आदित्यवर्णमित्यस्य प्रत्यभिज्ञानादिति

भावः । **परमपुरुषविषयतासमर्थनपरत्वमिति** । आकाशाधिकरणे आकाशस्य, 'भूतेभ्यो ज्यायान्' इति ज्यायस्त्वकीर्तनेन, 'ततो ज्यायान्' इत्युक्तपुरुषसूक्तोक्तार्थस्य, प्राणाधिकरणे तस्योक्तार्थन्यायातिदेशरूपतया आकाशशब्दोक्तार्थपरत्वस्य, ज्योतिरधिकरणे ज्योतिश्शब्दस्य 'पादोऽस्य विश्वा भूतानी' त्यनेन पुरुषसूक्तार्थपरत्वस्य, इन्द्रप्राणाधिकरणे इन्द्रप्राणयोः, मामेव विजानीहि, मामुपास्वेति हिततमोपासनकर्मत्वप्रतीतेः "तमेवं विद्वानमृत इह भवति नान्यः पन्था" इति पुरुषसूक्तार्थपरत्वस्य च स्वरसतः प्रतीयमानत्वात् तत्परत्वसमर्थनं स्फुटमिति भावः । अत्रेन्द्रशब्दो मामिति शब्दपरो द्रष्टव्यः । इदं च पूर्वमेव प्रदर्शितम् । **"हृदा मनीषा मनसाऽभिक्लृप्तः"** इति । अस्य वाक्यस्य तैत्तिरीयकगतस्य पुरुषविषयत्वादिति भावः । अमृतत्वस्य परमपुरुषत्वसाधकतामुपपादयति—**तस्मिन्नयमिति वाक्यप्रत्यभिज्ञानादिति** । **मुण्डकोपनिषदः कार्त्स्न्येनेति** । "येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम् ।", "दिव्यो ह्यमूर्तः पुरुषः", "कर्तारमीशं पुरुषम" इति पुरुषशब्दाभ्यासदर्शनादिति भावः । **तत्र श्रुतरूपविशेषान्वयादेवेति** । मुण्डकोपनिषच्छ्रुतेत्यर्थः । इदञ्च, "स्मर्यमाणमनुमानं स्यादिति" इत्यत्र स्पष्टम् । **अन्तर्यामिविद्यानन्तरवाक्यप्रतिपाद्यत्वाच्चेति** । यद्यप्यन्तर्यामिब्राह्मणमुद्दालककर्तृकान्तर्यामिप्रश्नस्योत्तरम्; गार्गिब्राह्मणं तु गार्गिकर्तृकाकाशाधारप्रश्नस्योत्तरमिति नानयोरेकविषयत्वनियमः — अथापि कियदपि नियामकं संभवत् न परित्याज्यमिति अभ्युच्चययुक्तितयोपन्यस्तमिति द्रष्टव्यम् । **"आकाशो ह वै नाम" इति वाक्यमिति** । "सर्वाणि रूपाणि विचित्य धीरः नामानि कृत्वा" इति पुरुषसूक्ते श्रवणात् तत्प्रत्यभिज्ञापकमिति भावः । **यस्मात् परमिति वाक्यस्याधीतत्वादिति** । तत्र, "तेनेदं पूर्णं पुरुषेण सर्वम्" इति पुरुषशब्दश्रवणादिति भावः ।

**बृहदारण्यक इति** । "ब्रह्म वा इदमग्र आसीत् तदेकं सन्न व्यभवत् । तत् श्रेयोरूपमत्यसृज्यत क्षत्रम् । यान्येतानि देवत्रक्षत्राणि इन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशान इति । तस्मात् क्षत्रात्परं नास्ति । तस्माद्ब्राह्मणः क्षत्रियमधस्तादुपास्ते राजसूये; क्षत्र एव तद्यशो दधाति । सैषा क्षत्रस्य योनिः यद्ब्रह्म । तस्माद्यद्यपि राजा परमतां गच्छति, ब्रह्मैवान्तत उपनिश्रयति स्वां योनिम् । य एवं

हिनस्ति, स्वां योनिमृच्छति । स पापीयान् भवति यथा श्रेयांसं हिंसित्वा । स नैव व्यभवत् । स विश्वमसृजत, यान्येतानि देवजातानि गणश आख्यायन्ते, वसवो रुद्रा आदित्या विश्वेदेवा मरुत इति । स नैव व्यभवत् । स शौद्रं वर्णमसृजत पूषणम् । इयं वै पूषा । इयं हीदं सर्वं पुष्यति, यदिदं किञ्च । स नैव व्यभवत् तत् श्रेयोरूपमत्यसृजत धर्मम् । तदेतत् क्षत्रस्य क्षत्रं यद्धर्मः । तस्मात् धर्मात् परं नास्ति । अथो अबलीयान् बलीयांसमाशंसते धर्मेण । यथा राज्ञा, एवम् । यो वै स धर्मः, सत्यं वै तत् । तस्मात् सत्यं वदन्तमाहुः, धर्मं वदतीति ; धर्मं वा वदन्तं सत्यं वदतीति । एतद्ध्येवैतदुभयं भवति । तदेतत् ब्रह्म क्षत्रं विट् शूद्रः । तदग्निनैव देवेषु ब्रह्माभवत् ; ब्राह्मणो मनुष्येषु ; क्षत्रियेण क्षत्रियो वैश्येन वैश्यः शूद्रेण शूद्रः । तस्मादग्नावेव देवेषु लोकमिच्छन्ते, ब्राह्मणे मनुष्येषु । एताभ्यां हि रूपाभ्यां ब्रह्माभवत्" ।

न व्यभवत् = न विभूतवत् । कर्मणे नालमासीदित्यर्थः । श्रेयोरूपम् = प्रशस्तरूपम् । अत्यसृजत = अतिशयेनासृजत् । देवत्रा क्षत्राणि = देवेषु क्षत्राणि । राजसूयेऽभिषिक्तमासन्द्यां स्थितं राजानमधस्तात् स्थितः ऋत्विक्, "हे राजन् त्वं (?)राजन् ब्रह्मासीति ब्रूयादिति उपासनं विहितम् । तद्यशः=आत्मीयं यशः । दधाति परमतां = राजसूयाभिषेकेण उत्कृष्टतां गच्छति ; अन्ततः कर्मसमाप्तौ पुरोहितमेवा-श्रयतीत्यर्थः । यस्तु क्षत्रियः स्वकारणभूतां ब्रह्मयोनिं हिनस्ति, स स्वां योनिं नाशयति । इयं पृथिवी क्षत्रस्य क्षत्रम् = क्षत्रस्याऽपि नियन्त्रीत्यर्थः । अबलीयान् = दुर्बलः, बलीयांसम् = आत्मनो बलवत्तरमपि धर्मेण बलेन जेतुमाशंसते, यथा राज्ञा लोके बलवत्तरेण अपि कश्चित् दरिद्रो विजिगीषते । तस्मात् सिद्धं धर्मस्य बलवत्त्वम् ।

**तदधिष्ठितब्राह्मणजातिपर** इति । अग्निदेवताधिष्ठितब्राह्मणजातिपर इत्यर्थः । प्रथमपक्षे ब्राह्मणजातिपरत्वसत्त्वेऽपि अग्निदेवताधिष्ठितब्राह्मणजातिपरत्वा-भावात् तत्पक्षादस्य पक्षस्य विशेष इति द्रष्टव्यम् । **क्षत्रियसृष्टिश्रवणादि**ति । यदि परं ब्रह्मैव प्रक्रान्तं स्यात् , तदा सर्ववर्णसृष्टिरपि कथ्येत । न क्षत्रप्रमुख

सृष्टिरिति भावः। **ब्रह्मशब्दो ब्राह्मणपर** इत्यन्तेन ब्राह्मणपरत्वं प्रसाध्य, इतरपक्षद्वय-मुपक्षिपति — **तदभिमान्यग्निपर** इत्यादिना। **उपक्रमस्थब्रह्मशब्दस्ये**ति चातुर्वर्ण्यनिगमनस्थब्रह्मशब्दस्य ब्राह्मणवर्णपरत्वस्य संप्रतिपन्नत्वादिति भावः। **अग्नि-सृष्टत्वायोगश्चे**ति। इदमुपलक्षणम्। ब्राह्मणजातिसृष्टत्वायोगश्चेत्यपि द्रष्टव्यम्। इन्द्रादिस्रष्टृत्वं कल्पभेदेन अग्नेः स्यादित्यत्राह **अस्याश्श्रुते**रिति। **अग्निब्राह्मणान्यत्वं च प्रतीयत** इति। ननु तच्छब्दपरामृष्टब्रह्मणः अग्निनेति व्यधिकरणनिर्दिष्टाग्ने-रन्यत्वं प्रतीयतां नाम; ब्राह्मणान्यत्वं कथं प्रतीयतामिति चेन्न — मृत्पिण्डो घटो भवतीतिवत् तत् ब्राह्मणो भवतीत्युक्ते तच्छब्दितस्य ब्राह्मण्यात् पूर्वभावित्वप्रतीते-रनुभवसिद्धत्वादिति भावः। **देवमनुष्यविभागेने**ति। देवरूपो मनुष्यरूपश्च ब्राह्मणोऽस्तीत्यर्थः। **परमात्मसृष्टतया प्रागुक्त** इति। "नैवेह किञ्चनाग्र आसीत्" इत्यस्मिन् ब्राह्मण इत्यर्थः। **क्षत्रादिविभागवत्तदभिमानी**ति। क्षत्रादि-भेदभिन्नतत्तज्जात्यभिमानीन्द्रादिसृष्टिरित्यर्थः। **ब्राह्मणाभिमान्यग्निसृष्टे**रिति। "तस्य श्रान्तस्य तप्तस्य तेजोरसो निरवर्तत" इति पूर्वब्राह्मण इति भावः। **ब्राह्मणत्वादि-विभाग उक्तः स्या**दिति। ततश्च ब्राह्मणवाचिनो ब्रह्मशब्दस्य लक्षणा न समा-श्रयणीयेति भावः। **तत् परं ब्रह्म मनुष्येष्वि**ति। 'तदग्निनैव देवेषु' इत्यतः परब्रह्मपरः तच्छब्दोऽनुकृष्यते। 'अग्निनैव देवेषु ब्रह्माभवत्' इत्यतः ब्रह्मा-भवदित्यप्यनुकृष्यत इति भावः।

ननु "अग्निनैव देवेषु ब्रह्माभवत् ब्राह्मणो मनुष्येषु" इत्यत्र देवेषु = देवानां मध्ये ब्रह्म अग्निनैवाभवत् = विकारान्तरमप्राप्यैव अग्निस्वरूपयुक्तमेवाभवत्, मनुष्याणां मध्ये च विकारमप्राप्यैव ब्राह्मणस्वरूपमेव ब्रह्म स्थितम्। अग्नौ च ब्राह्मणजातौ च ब्रह्माविकृतमित्यर्थः। क्षत्रियादिषु तु क्षत्रियादिविकारनिमित्तकं क्षत्रियत्वं ब्रह्मणः। तस्मात् = यतः अग्निब्राह्मणौ अविकृतब्रह्मस्वरूपौ, तस्मात् लोकमिच्छन्तो अग्नौ ब्राह्मणे च कुर्वन्तीत्येवं परोक्तरीतिः कुतो नाश्रीयत इत्याशङ्क्याह **श्रुतपदानुषङ्गेणे**ति। **तत्प्रशंसाया विवक्षितत्वा**दिति। ननु प्रकरणस्य चातुर्वर्ण्यतदभिमानिसृष्टिसाधारण्ये अग्निब्राह्मणयोः प्रशंसायां किं बीजम्? न ह्यस्मिन्प्रकरणे अग्निब्राह्मणयोः इन्द्रक्षत्रादिव्यावृत्ततया असाधारण्येनोद्देश्यविधेय-

कोऽग्न्योरनुप्रवेशोऽस्ति, येन विशिष्य तयोः प्रशंसा विवक्षिता स्यात्। [न; ?] अग्नि-ब्राह्मणप्रशंसामुखेन चातुर्वर्ण्यतदभिमानिप्रशंसाया विवक्षितत्वमित्यत्र तात्पर्यात्। **मुख्यार्थासंभव** इति – "अग्निनैव देवेषु ब्रह्माभवत्" इत्यत्र मुख्यार्थासंभवात् ब्राह्मणजतिरूपामुख्यार्थस्वीकारेऽपि, "ब्रह्म वा इदमग्र आसीत्" इत्यत्र मुख्यार्थ-संभवस्थलेऽपि ब्राह्मणजातिरूपामुख्यार्थस्वीकारस्यायुक्तत्वादिति भावः।

**आत्मैवेति**। "आत्मैवासीत् पुरुषविधः। सोऽन्वीक्ष्य नान्यदात्मनोऽपश्यत्। सोऽहमस्मीत्यग्रे व्याहरत्। ततोऽहन्नामाऽभवत्। तस्मादप्येतर्ह्यामन्त्रितोऽहमय-मित्येवाग्र उक्त्वा अथान्यन्नाम प्रब्रूते, यदस्य भवति। स यत् पूर्वोऽस्मात् सर्वस्मात् सर्वान् पाप्मन औषत् तस्मात् पुरुषः। ओषति ह वै स तं योऽस्मात्पूर्वो बुभूषति। य एवं वेद। सोऽबिभेत्। तस्मादेकाकी बिभेति। स हायमीक्षाञ्चक्रे, यन्मद-न्यन्नास्ति, कस्मान्नु बिभेमीति। तत एवास्य भयं वीयाय। कस्माद्ध्यभेष्यत्, द्वितीयाद्वै भयं भवति। स वै नैव रेमे। तस्मादेकाकी न रमते। स द्वितीय-मैच्छत्" इत्यादि। एतर्ह्यामन्त्रित इति अस्मिन्नपि काले आहूत इत्यर्थः। स यत्पूर्व इति। यस्मात् कारणात् अस्मात् सर्वस्मात् पूर्वस्सन् सर्वान् पाप्मनोऽदहत्, तस्मात् पुरुष इत्यर्थः। ओषति ह वै स तमित्यादि – य एवं वेद, सः स्वस्मात्पूर्वं प्रजापतित्वप्रेप्सुं दहतीत्यर्थः। लोके हि उत्कृष्टसाधनशाली तादृशसाधनशून्यं दहन्निव दृश्यते। **नैवेह किञ्चनेत्यादि**। – "आसीत्। मृत्युनेवेदमावृतमासीत् अशनायया। अशनाया हि मृत्युः। तन्मनोऽकुरुत, आत्मन्वी स्यामिति। सोऽर्चन्नचरत्। तस्यार्चत आपोऽजायन्त। अर्चते वै मे कमभूदिति। तदेवार्क-स्यार्कत्वम्। कं ह वा अस्मै भवति, य एवमेतदर्कस्यार्कत्वं वेद। आपो वा अर्कः, तत् यदपां शर (रस) आसीत् तत्समहन्यत। सा पृथिव्यभवत्। तस्याम-श्राम्यत्। तस्य श्रान्तस्य तप्तस्य तेजोरसो निरवर्तताग्निः" इति हि श्रुतिः। आत्मन्वी स्यामिति = मनस्वी स्यामिति सङ्कल्प्य मनोऽकरोदित्यर्थः। अर्चते वै मे [कमभूदिति = वैशब्दोऽवधारणे। अर्चने प्रवृत्ताय मे मह्यं कं जलमभूदिति स परमात्मा अमन्यतेत्यर्थः]। **अशनायाविशिष्टत्वाच्चेति**–यद्यपि मृत्युना अशनाय-येति सामानाधिकरण्यमेव प्रतीयते; न त्वशनायाविशिष्टत्वम् – तथाऽपि मृत्यो-

रिहाशनायात्वासम्भवात् अशनायाशब्देन अशनायावान् लक्ष्यत इति भावः। **अर्चनादिकर्मकर्तृत्वमि**ति। अर्चनादिक्रियाकर्तृत्वमित्यर्थः।

**सुबालोपनिषदी**ति — सुबालोपनिषदुपक्रमे, "तदाहुः किं तदासीत्। तस्मै स होवाच, नसन्नासन्नसदसदिति। तस्मात् तमः सञ्जायते। तमसो भूतादिः। भूतादेराकाशम्। आकाशाद्वायुः। वायोरग्निः। अग्नेरापः। अद्भ्यः पृथिवी। तदण्डं समभवत्। तत् संवत्सरमात्रमुषित्वा द्विधाऽकरोत्, अधस्ताद्भूमिमुपरिष्टात् आकाशम्। मध्ये पुरुषो दिव्यः, सहस्रशीर्षा पुरुषः सहस्राक्षस्सहस्रपात् सहस्रबाहुरिति। सोऽग्रे भूतानां मृत्युमसृजत्, त्र्यक्षं त्रिशिरस्कं त्रिपादं खण्डपरशुम्। तस्य ब्रह्मा बिभीते" इत्यादिश्रुतेः। **मृत्योः परे देव एकीभावः श्रूयत** इति। मृत्योरिति पञ्चमी। परे देवे मुक्तस्य एकीभावः श्रूयत इत्यर्थः। 'कोशं भिनत्ती' त्यादिप्रकरणस्य मुच्यमानविषयत्वात् अत्र मृत्योः परत्वं नाम मृत्युं प्रति कारणत्वम्; तस्य च देवशब्दितत्वं श्रूयत इति भावः। युक्त्यन्तरमाह — **विभागापादानस्यैवे**ति। अस्यामेवोपनिषदि, अक्षरं तमसि लीयते तम एकीभवति परस्मिन्निति परस्य तमोऽविभागस्थानत्वप्रतिपादनात् अविभागस्थानस्यैव तमः संजायत इति विभागापादानत्वं युक्तमिति भावः। **मुक्तप्राप्यत्वा**दिति। अक्षरं भिनत्तीत्यादेः मुक्तगतिप्रकरणत्वात्, मुक्तप्राप्यत्वस्य च, "सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्" इत्यादिषु नारायणस्यैवेति स्थितत्वादिति भावः। **केवलाच्चेतना**दित्यादि। नसन्नासच्छब्दाभ्यां केवलचेतनाचेतनवैलक्षण्यं विवक्षितम्; नसदसदितिशब्देन मिश्रवैलक्षण्यं विवक्षितम्। **व्यष्टिभ्य** इत्येतत् **मिश्रा**दित्येतस्य व्याख्यानमिति द्रष्टव्यम्। **तदुक्तमृषिणे**ति। **ऋषिणा** वेदेनेत्यर्थः। **जगतस्तस्थुषश्चे**ति। जङ्गमस्य स्थावरस्य चेत्यर्थः। **परमकारणव्याप्तत्वा**दिति। **इदमुपलक्षणम्** — स्थावरजङ्गमान्तर्यामित्वस्याऽपि कारणत्वव्याप्तत्वादिति द्रष्टव्यम्।

**आदित्यमभिजयन्त** इति। अनेनादित्यलोकप्राप्तिप्रतिपादनेन अर्चिरादिगतिः प्रत्यभिज्ञायत इति भावः। **प्रत्यगात्मा विशोध्यत** इति। मोक्षसाधनीभूतपरमात्मोपासनाङ्गभूतप्रत्यगर्थानुसन्धानार्थमितरव्यावृत्त प्रत्यगात्मस्वरूपं प्रतिपाद्यत इत्यर्थः।

नन्वस्यामेव ऋचि, "स दाधार पृथिवीं द्यामुतेमाम्" इति पृथिव्यादिधारकत्वं व्यावर्तकमस्त्वित्याशङ्क्याह **पृथिव्यादिधारकत्वं** त्विति । श्रुतौ **दाधारे**ति, दधारेत्यर्थः । "तुजादीनां दीर्घोऽभ्यासस्य" इति अभ्यासस्य छान्दसो दीर्घः । नन्वस्मिन्नेवाष्टर्चे, "यस्य छायाऽमृतं मृत्युः" इति अमृतमृत्युशब्दितयोर्बन्धमोक्षयोः नियाम्यत्वश्रवणात् परमात्मपरत्वमित्याशङ्क्याह **अमृतमृत्युशब्दौ चे**ति ॥ **यमन्तस्समुद्र** इति । अन्तस्समुद्रे कवयो वयन्ति = अवगच्छन्तीत्यर्थः । **तपश्शब्देने**ति । "ऋतं च सत्यञ्चाभीद्धात्तपसोऽध्यजायत" इति तपश्शब्देनेत्यर्थः । तपश्शब्दश्च, "ये चेमेऽरण्ये श्रद्धा तप इत्युपासते" इत्यादाविव परमात्मपर इति भावः ।

**उपक्रमस्थधातृशब्दैकरूप्यस्ये**ति । "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्" इति पूर्ववाक्यश्रुतधातृशब्दैकरूप्यस्यैव, 'धातुः प्रसादात्" इति धातृशब्देऽप्याश्रयणीयत्वादित्यर्थः । **उत्तरे चानुवाक** इति । "स ब्रह्मा स शिवः" इति नारायणानुवाके प्रतिपादनादिति भावः । **ब्रह्मकार्यवर्गप्रतिपादनप्रकरण** इति — "सप्त प्राणाः प्रभवन्ति तस्मात् सप्तार्चिषः समिधस्सप्त जिह्वाः । सप्त इमे लोका येषु चरन्ति प्राणाः गुहाशयान्निहिताः सप्त सप्त । "अतस्समुद्रा गिरयश्च सर्वे अस्मात् स्यन्दन्ते सिन्धवः सर्वरूपाः । अतश्च विश्वा ओषधयो रसाश्च येनैष भूतस्तिष्ठत्यन्तरात्मा । ब्रह्मा देवानां पदवीः कवीनाम् ऋषिर्विप्राणां महिषो मृगाणाम् । श्येनो गृध्राणां स्वधितिर्वनानां सोमः पवित्रमत्येति रेभन्" इति हि प्रकरणम् ।

**तस्मात्तुल्यबलते**ति । ननु रुद्रमहेश्वरश्रुत्योरुपक्रमस्थेन धातृपदेन न तुल्यबलत्वम् । पूर्वतन्त्रे हि, "विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात् सधर्मत्वम्" इत्यधिकरणे (१२-२-७) कस्मिंश्चित् काम्येष्टिविशेषे, "[1] ऐन्द्र एकादशकपालः", "प्राजापत्यं दधि मधु घृतमापः" इति पञ्चानां हविषामाद्ययो-

1. सप्तानां हविषां मध्ये आग्नेयाष्टाकपालस्य धानानाञ्च पौर्णमास्यमावस्यासाधारण्यात् त्यागे पञ्च शिष्यन्ते । तत्राद्य एकादशकपालो दधि चेति ध्येयम् । अत्र ऐन्द्राग्न एकादशकपाल-इत्यपपाठः । ऐन्द्र इति पाठ्यम् । अयमप्यर्थानुवादः ।

रैन्द्राग्नसान्नाय्यविकारत्वेन अमावास्याविध्यन्तप्राप्तौ उपांशुयाजविकाराणां मधूदकघृतानां चरमश्रुतत्वेऽपि भूयस्त्वात् तदनुग्रहाय पौर्णमासविध्यन्त इति निर्णीतम्। ततश्च उपसंहारस्थानेकप्रमाणापेक्षया उपक्रमस्थमेकं दुर्बलम्। "अन्तर उपपत्तेः" इत्यधिकरणे तथा निर्णीतं चेति चेन्न — "विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात् सधर्मत्वम्" इति पूर्वपक्षं कृत्वा "मुख्यं वा पूर्वचोदनात् लोकवत्" इति सिद्धान्त्यते। अतश्च द्वयोरपि सूत्रयोरैकाधिकरण्यमिति एकदेशिमतानुसारेणेदमिति द्रष्टव्यम्। किञ्चात्रापि, "धाता यथा पूर्वमकल्पयत्", "धातुः प्रसादात्" इति धातृशब्दाभ्याससत्त्वाच्च भूयोल्पत्वरूपवैषम्यं नास्तीति द्रष्टव्यम्।

**अनुवादस्यान्यसापेक्षत्वा**दिति। ननु, "यो देवानम्" इत्येतस्य कथमनुवादत्वशङ्का! न हि विश्वाधिकस्य महर्षेः रुद्रस्य हिरण्यगर्भजनकत्वरूपः प्रतीयमानोऽर्थो मानान्तरप्राप्तः, येनेदं वाक्यमनुवादि स्यात्। असत्यां च मानान्तरप्राप्तौ यदुपबन्धसहस्रेणापि अनुवादकत्वस्य कल्पयितुमशक्यत्वात्। न च यदुपबन्धबलात् रुद्रपदस्य नारायणे लक्षणामाश्रित्य, 'नारायणात् ब्रह्मा जायत' इति वाक्यस्य पुरोवादित्वमङ्गीकृत्यास्य वाक्यस्यानुवादित्वं परिकल्प्यत इति वाच्यम् — तथा सति "यदाग्नेय" इत्यादिवाक्येष्वपि यदुपबन्धबलेन सौर्यचरुपरत्वाश्रयणेनानुवादित्वप्रसङ्गादिति चेन्न — द्वयोर्हिरण्यगर्भकारणत्वासंभवात् श्रुतिविशेषश्रुतयोः रुद्रनारायणपदयोरन्यतरलक्षणावश्यम्भावात् यदुपबन्धानुग्रहाय रुद्रपदस्यैव लक्षणा आश्रीयते, सम्भवन्नियामकस्य त्यागायोगादिति भावः। ननु "अकारेणोच्यते विष्णुः" इत्यकारवाच्यस्य विष्णुत्वप्रतिपादकवाक्यमेकम्; "यः परः स महेश्वरः" इत्यकारवाच्यस्य रुद्रत्वप्रतिपादकमपरम्। कोऽनयोर्विशेषः? चैत्रो मित्रायाः पतिरित्येकं वाक्यम्; यो मित्रायाः पतिः स मैत्र इत्यपरम्। न ह्यनयोरुपजीव्योपजीवकभावोऽनुवाद्यानुवादकभावो वा बलाबलप्रयोजकः कश्चिन्मृग्यमाणोऽपि वीक्ष्यत इत्यस्वरसादाह — **नारयणस्याकारवाच्यतासिद्धेश्चे**ति। नारायणस्याकारवाच्यत्वस्य "अकारेणाखिलाधारः परमात्माऽभिधीयते। समस्तशब्दमूलत्वादकारस्य स्वभावतः॥ समस्तवाच्यमूलत्वात् ब्रह्मणोऽपि स्वभावतः। वाच्यवाचकसम्बन्धः तयोरर्थात् प्रतीयते॥", "अ निषेधे पुमान् विष्णौ", "अकारो विष्णुवाचकः।",

" अकारेणोच्यते विष्णुः ", " अ इति ब्रह्म ", " अ इति भगवतो नारायणस्य प्रथमाभिधानमभिदधता " इत्यादिबहुप्रमाणसंप्रतिपन्नतया तदनुरोधेनैव एतद्वाक्यार्थस्य वर्णनीयतया, " यः परः " इत्यनेन नारायणमेवानूद्य महेश्वरशब्दे रूढिं परित्यज्य योगार्थभूतं महत्त्वविशिष्टमीशितृत्वं विधीयत इति भावः । **अनुवादरूपतये**ति । " यो देवानां प्रभवश्चोद्भवश्च विश्वाधिको रुद्रो महर्षिः । हिरण्यगर्भं जनयामास पूर्वं स नो देवः शुभया संयुनक्तु ' इति यच्छब्दयुक्ततया श्रवणादनुवादरूपत्वमिति भावः ।

**अविरोधश्च वस्त्वैक्येने**ति । पिण्डरूपमृज्जन्यस्य घटस्य कपालत्वावस्थापन्न-मृज्जनकत्वदर्शनात् वस्त्वैक्यमविरोधसंपादकमिति भावः । **अवस्थाद्वयपौर्वापर्ये**ति — मृज्जन्यघटस्य तज्जनकत्वदर्शनेऽपि यदवस्थापन्नमृज्जन्यत्वं घटस्य तदवस्थापन्नमृज्जनकत्वं न दृष्टमिति भावः । **आकाशप्राणादिष्वपी**ति । " सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते ", " सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति " इत्यादिवाक्यानामपि कल्पविशेषप्रवृत्तवृत्तान्तविषयतया अविरोधसंभवात् तद्वाक्यानां परमात्मपरत्वं न कल्प्येत इति भावः । ननु —

त्रयस्ते कारणात्मानो जाताः साक्षान्महेश्वरात् ।
ब्रह्मा सर्गे हरिस्त्राणे रुद्रः संहरणे पुनः ॥
तथाप्यन्योन्यमात्सर्यात् अन्योन्यातिशयार्थिनः ।
तपसा तोषयित्वा तं पितरं परमेश्वरम् ॥
ब्रह्मनारायणौ पूर्वं रुद्रः कल्पान्तरेऽसृजत् ।
कल्पान्तरे पुनर्ब्रह्मा रुद्रविष्णू जगन्मयः ॥
विष्णुश्च भगवांस्तद्वत् ब्रह्माणमसृजत् पुनः ।
नारायणं पुनर्ब्रह्मा ब्रह्माणं च पुनर्भवः ॥
एवं कल्पेषु कल्पेषु ब्रह्मविष्णुमहेश्वराः ।
परस्परस्माज्जायन्ते परस्परजयैषिणः ॥
तत्तत्कल्पान्तवृत्तान्तमधिकृत्य महर्षिभिः ।
प्रभावः कथ्यते तेषां परस्परसमुद्भवात् ॥

क्वचिद्ब्रह्मा क्वचिद्रुद्रः क्वचिद्विष्णुः प्रशस्यते ।
नानेन तेषामाधिक्यं न्यूनत्वं वा कथञ्चन ॥
तत्तत्कल्पान्तवृत्तान्तमधिकृत्य महर्षिभिः ।
तानि तानि प्रणीतानि विद्वांस्तत्र न मुह्यति ॥
अयं परस्त्वयं नेति संरम्भाभिनिवेशिनः ।
यातुधाना भवन्त्येव पिशाचाश्च न संशयः ॥
यो ब्रह्मविष्णुरुद्राणां भेदमुत्तमभावतः ।
साधयेदुदरव्याधियुक्तो भवति मानवः ॥
निर्दिष्टः परमेशानो महेशो नीललोहितः ।
पुत्रो भूत्वाऽनुगृह्णाति ब्रह्माणं ब्रह्मणोऽनुजः ॥
अहं च भवतो वक्त्रात् कल्पान्ते घोररूपधृत् ।
शूलपाणिर्भविष्यामि क्रोधजस्तव पुत्रक ॥
अंशभूतो महादेवः सर्वदेवनमस्कृतः ।
अर्धनारीश्वरो भूत्वा प्रादुरासीत् कृपानिधिः ॥
तस्य हृत्कमलस्थस्य नियोगादंशजो विभोः ।
ललाटं तस्य निर्भिद्य प्रादुरासीत् प्रभोर्मुखात् ॥

इति कौर्मसूतसंहितालैङ्गस्मृतिवचनैः कल्पभेदस्यावताररूपत्वस्य च प्रतिपादनात्, "न चास्य कश्चिज्जनिता न चाधिपः" इति श्वेताश्वतरे रुद्रस्य जनयितृभावप्रतिपादनाच्च तथाऽभ्युपगन्तव्यमिति अस्वरसादाह — **वस्त्वैक्यकल्पभेदावतारेति** । न चैवमुदाहृतवचनानुसारात् त्रिमूर्तिसाम्यैक्यपक्षोन्मज्जनप्रसङ्ग इति वाच्यम् — तामसपुराणेषु अप्रचरदवस्थतया प्रक्षेपशङ्कास्पदेषु एवं श्रवणेऽप्यतादृशेषु तथा श्रवणाभावात् । श्वेताश्वतरस्य शिवपरत्वस्यासंप्रतिपन्नत्वाच्चेति द्रष्टव्यम् ।

**रुद्रशब्दस्यैव प्रसिद्ध्यनादर इति** । [ न च ? ] रुद्रहिरण्यगर्भशब्दयोर्मध्ये रुद्रशब्दस्य मुख्यत्वात् असञ्जातविरोधित्वाच्च तत्र मुख्यार्थत्यागो युक्तः; किन्तु जघन्यहिरण्यगर्भशब्दस्यैव स्कन्दपरत्वमिति वाच्यम् — रुद्रशब्दस्य "रुद्रो

बहुशिरा बभ्रुः " इत्यादिषु भगवत्परतया प्रयोगवत् हिरण्यगर्भशब्दस्य स्कन्दे क्वापि प्रयोगादर्शनात्, ततोऽपि मुख्यानां विश्वाधिकादिशब्दानां बहूनां सत्त्वाच्च तदनुग्रहाय रुद्रशब्दस्यैव भगवत्परत्वं युक्तमिति भावः । **उदगादिति ब्राह्मणानुरोधेने**ति ....... ........... ।

**शैलालिब्राह्मण** इति । शैलालिब्राह्मणं समन्वयसूत्रे उदाहृतम् । **अस्य देवस्य मीढुष** इति । अस्य विष्णोर्देवस्य दीप्तस्य, **एषस्य** एषणीयस्य सर्वैः स्वमित्वेनापेक्षणीयस्य **मीढुषः** सेक्तुः । **वयः** शाखा । 'वयः शाखे' ति निरुक्तं भाष्यम् (भाव्यम्?) । शाखा यथा, तथा विष्णोस्तरुस्थानीयस्य शाखास्थानीयो रुद्रः । **प्रभृथे** यज्ञे रुद्रकर्तृके । हविर्भिः रुद्रियं महित्वं **विदधे** [1][हि **विदे**?] लब्धवानित्यर्थः । **महापुरुषं वाऽर्चयेदिति** । "यद्यपि" वेदाहमेतं पुरुषं महान्तम् इत्यत्र महापुरुषशब्दो न प्रयुक्तः – तथाऽपि महच्छब्दसमानाधिकरणपुरुषशब्दोऽसाधारण इति भावः । ननु यथा "नारायणात् ब्रह्माऽजायत " इति श्रुत्या ब्रह्मजनकत्वस्य नारायणचिह्नत्वनिश्चयः, तद्वदिहापि, "रुद्रो महर्षिर्हिरण्यगर्भं जनयामास " इति श्रुत्या हिरण्यगर्भजनकत्वस्य रुद्रचिह्नत्वनिश्चयोऽस्त्वित्याशङ्क्य प्रतिबन्धकसदसद्भावाभ्यां वैषम्यमाह–**न चानयैव श्रुत्येत्यादि** । ननु, "नारायणाद्ब्रह्माऽजायत " इत्यत्राऽपि ईदृशोऽन्योन्याश्रयः सुवचः । न च प्रतिबन्धकसदसद्भावाभ्यां विशेष इत्युक्तमिति वाच्यम् – तर्हि स एव दोषः । न त्वन्योन्याश्रयः । न ह्यस्य वाक्यस्य रुद्रपरत्वनिश्चयो हिरण्यगर्भजनकत्वस्य रुद्रलिङ्गत्वनिश्चयाधीनः ; रुद्राभिधानश्रुत्यैव तत्परत्वस्य निश्चेतुं शक्यत्वात् । इतरथा, "नारायणात् ब्रह्माऽजायत " इत्यत्र(इत्यादाव)प्यगतेरित्यस्वरसादाह **अनुवादरूपत्वाच्चेति** । **देवात्म-**

---

1. श्रीगीतार्थसंग्रहरक्षानुरोधेन (२७ श्लो) शोधनीयम् ।

**प्रेरित्रीशब्रह्मशब्दै**रिति । उत्तरत्र प्रेरितृशब्दप्रत्यभिज्ञाप्यश्रुतिर्न दृश्यते । तथापि, 'अन्तरो यमयति' इत्यादि सौबालादिवाक्यं द्रष्टव्यम् । **तृतीये** चेति । खण्ड इति शेषः । **ईशानपदं** त्विति । "सर्वस्य प्रभुमीशानं सर्वस्य शरणं सुहृत्" इत्यत्र श्रुतमीशानपदमित्यर्थः । **मायाप्रेरकत्वपर** इति । यौगिकार्थपर इत्यर्थः । मायाप्रेरके प्रयुज्यमानो महेश्वरशब्दो यौगिक एव । नारायणस्यैव सुबालोपनिषत्प्रतिपाद्य तमोधिष्ठातृत्वेन श्रवणादिति भावः । **ईशानशब्देनोच्यत** इति । "येनेदं सं च वि चैति सर्वं तमीशानं वरदं देवमीड्यम्" इति हि श्रुतिः । तमीशानमित्यत्र ईशानप्रतिसम्बन्ध्याकाङ्क्षायां यस्मिन्निदमिति पूर्ववाक्यनिर्दिष्टस्यैव सर्वस्य प्रतिसम्बन्धितया ग्रहणमिति भावः । **अत्रेशानो भूतभव्यस्येति** । यद्यपि श्वेताश्वतरे, "अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये संनिविष्टः । हृदा मनीषा मनसाऽभिक्लृप्तः य एतद्विदुरमृतास्ते भवन्ती"त्येव पाठः । न तत्रेशानशब्दोऽस्ति – तथापि कठवल्ल्यामेतद्वाक्यप्रत्यभिज्ञाप्याङ्गुष्ठमात्रवाक्ये प्रतिसम्बन्ध्युपादानेन ईशानपदस्य योगार्थपरत्वमिति भावः । **इह सर्वशब्देनेति** । "येनेदं सं च वि चैति सर्वम्" इति वाक्य इति भावः । **कालस्याऽपि परिच्छेदक** इति । ततश्च, "यः कालकाल" इति अन्तकरिपुर्नोच्यत इति भावः ।

**योनियोनाविति** । प्रतियोनीत्यर्थः । **विभक्तिविपरिणामेनानुषङ्ग** इति । कारणानां कारणं धाता = स्रष्टा ध्याता = आदिसर्गसंकल्पकर्ता न प्रसूयत इति योजनेति भावः । **न ब्रह्मादिवत् उत्पत्तिरित्यर्थ** इति । ननु 'ब्रह्मविष्णुरुद्रास्ते सर्वे संप्रसूयन्ते । कारणं कारणानां धाता ध्याते'ति वाक्ये ब्रह्मविष्णुरुद्रेन्द्राणां उत्पत्तिमत्त्वात् ध्येयत्वं प्रतिक्षिप्य कारणानां कारणस्य ईशानशम्भुशब्दितस्य प्रसूतिराहित्यात् ध्येयत्वं प्रतिपाद्यत इति हि वाक्यतात्पर्यं वक्तव्यम् । नैतत्

सिद्धान्तिन उपपद्यते । ब्रह्मरुद्रमध्यपठितस्य विष्णोः ध्येयत्वप्रतिक्षेपस्य सिद्धान्त्यनभिमतत्वादिति चेन्न – त्रिमूर्तिमध्यस्थितस्य विष्ण्ववतारस्य मुमुक्षुध्येयत्वं प्रतिक्षिप्य परवासुदेवमूर्तेः,

" समस्ताःशक्तयश्चैता नृप यत्र प्रतिष्ठिताः ।
तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत् ॥

समस्तशक्ति रूपाणि तत् करोति जनेश्वर ।
देवतिर्यङ्मनुष्याख्या चेष्टावन्ति स्वलीलया " ॥

इत्यादिप्रमाणप्रतिपन्नाया एव ध्येयताविधिपरत्वादस्याः श्रुतेरिति द्रष्टव्यम् ।

**न तु परमपुरुषासाधारणधर्मासंभवादिति** । प्रतर्दनविद्यायां हि चिदचिद्व्यावर्तकधर्मानन्वयेन तच्छरीरकपरमात्मपरत्वमुक्तम् । इह तु सार्वात्म्यस्य परमपुरुषासाधारणधर्मत्वप्रतिपादनमुखेन तद्धर्मानन्वयेन सिद्धान्तः क्रियते । न ह्ययं न्यायस्तत्रोपन्यस्तः, येन गतार्थता स्यादिति भावः । **न तु रुद्रवाक्यमिति** । ततश्च " सोऽन्तरादन्तरं प्राविशत् " इति श्रुतिवाक्ये तच्छब्देन रुद्र एव परामृश्यते । ततश्च तस्यैवान्तर्यामित्वमुच्यत इति भावः । **अहमेकमासमिति कारणत्वमुक्तमिति** । ननु को भवानित्यभिमुखस्य रुद्रस्य स्वरूपे देवैः पृष्टे, अहमेकः प्रथममासमित्यादिना मदन्तर्यामी परमात्मेति प्रतिवचनम्, आम्रान् पृष्टः कोविदारानिति न्यायः (यं ?) कथं नानुसरेत् । न च मदन्तर्यामी सर्वात्मेत्युक्तेः सर्वात्मभूतभगवच्छरीरभूतोऽहमित्यर्थे पर्यवसन्नतया को भवानिति प्रश्नं प्रति उत्तरत्वसंभवादिति वाच्यम् – तथ । सति किं त्वं सकलकारणसर्वान्तर्यामिशेषभूतः उत स्वतन्त्र इति प्रश्नाभिप्रायः पर्यवसन्नः स्यात् । ततश्च तादृशप्रश्नस्यानुगुणे, 'अहं न स्वतन्त्रः; अपि तु सर्वकारणसर्वान्तर्यामिशेषभूत ' इत्युत्तरे वक्तव्ये विरुद्धमतिकृतः ईदृशप्रतिवचनस्या-

संभवादिति चेन्न — श्रुतीनां परोक्षप्रियत्वेन गूढाभिप्रायतया समीचीनमीमांसावसेयतात्पर्यकत्वस्यादोषत्वादिति द्रष्टव्यम् । **बुद्ध्या प्राविशदिति** । मनसि कृतवानित्यर्थः । **तेनतेन हि तं नरमनुप्रविश्येति** । तत्तद्भावयुक्ततया तं ज्ञात्वेत्यर्थः । **रुद्रवाक्यानुवादेनेति** । अहमेकः प्रथममासमित्यादिरुद्रवाक्यार्थीभूतनारायणसर्वान्तर्यामित्वानुवादेन स्तुतिपरत्वादित्यर्थः । **तद्धितद्वयकल्पकाभावादिति** । पशुपतिना प्रोक्तं पाशुपतं शास्त्रम्; तत्प्रतिपाद्यं पाशुपतमिति तद्धितद्वयकल्पकाभावादिति भावः । इदमुपलक्षणम्— पाशुपतशब्दस्य वृद्धत्वात् छप्रत्ययप्रसङ्गेन पाशुपतमिति रूपासिद्धिप्रसङ्गादित्यपि द्रष्टव्यम् ।

**समन्त्रकभसितस्पर्शनं त्विति** — "अग्निरित्यादिना भस्म गृहीत्वा विमृज्याङ्गानि संस्पृशेत् । व्रतमेतत् पाशुपतं पशुपाशविमोक्षाय" इति श्रुतमित्यर्थः । ननु भस्मोद्धूलनस्य,

"मद्यं पीत्वा गुरुदारांश्च गत्वा स्तेयं कृत्वा ब्रह्महत्यां च कृत्वा ।
भस्मच्छन्नो भस्मशय्याशयानो रुद्रध्यायी मुच्यते सर्वपाशैः ॥ "इति शातातपस्मृतौ सर्वपापक्षयहेतुत्वस्मरणात् पापक्षयस्य सर्वब्रह्मविद्यापेक्षितत्वात् अपेक्षालक्षणवस्तुसामर्थ्यलिङ्गेन पाशुपतप्रकरणं बाधित्वा सर्वविद्यार्थत्वमेवाभ्युपगन्तव्यम् । अत एव, "तमेतं वेदानुवचनेन "इत्यत्र दहरविद्यायाः प्रकृतत्वेऽपि, "धर्मेण पापमपनुदती" ति श्रुतिप्रतिपन्नस्य कर्मजन्यस्य पापक्षयरूपस्य सर्वविद्यापेक्षितत्वात् यज्ञादिकर्मणां सर्वविद्यासाधारण्यम् । तथा, "तस्मादेवं विच्छान्तो दान्तः "इत्यादिश्रुतौ प्रकृतविद्यापरामर्शकैवंविच्छब्दे सत्यपि शमदमादिसाध्यचित्तैकाग्र्यादेः सर्वविद्यापेक्षितत्वादेव सर्वविद्यासाधारण्यमभ्युपेयत इति चेन्न — यदि प्रकरणपठितानामप्यपेक्षामात्रेण सर्वसाधारण्यम्, तर्हि दर्शपूर्णमासप्रकरणपठितानां व्रीहिप्रोक्षणावघातादीनां संनिपात्यङ्गानाम्, "वर्म वा एतद्यज्ञस्य क्रियते" इत्याद्यर्थवादप्रतिपन्न-

यागापेक्षितोपकारजनकानां प्रयाजाद्यङ्गानामपि उपदेशत एव सर्वयागसाधारण्यप्रसङ्गः । "यज्ञेन दानेन" इत्यादिस्थले तु, "कषाये कर्मभि. पक्वे ततो ज्ञानं प्रवर्तते" इत्यादिसर्वविद्यासाधारण्यप्रतिपादकशास्त्रान्तरवशेन सर्वविद्यासाधारण्यसिद्धावपि अन्यत्र तथात्वे प्रमाणाभावात् । शमदमादिस्थलेऽपि शमाद्येकसाध्यचित्तैकाग्र्यैक-साध्यत्वात् ब्रह्मोपासनस्य शमादेः सर्वविद्यासाधारण्यम् । ब्रह्मविद्यापेक्षितपापक्षयस्य भस्मोद्धूलनैकसाध्यत्वे प्रमाणाभावात् भस्मोद्धूलनस्य न सर्वब्रह्मविद्याङ्गत्वमित्यलमतिचर्चया ।

**ज्ञातव्यार्थस्य समाप्तिसूचक** इति । "तस्मादेवंविदमेव ब्रह्माणं कुर्वीत, नानेवंविदं नानेवंविदम्" । "य एवमेतं विद्वान् आदित्यं ब्रह्मेत्युपास्ते अभ्याशो ह यदेनं साधवो घोषा आगच्छेयुः उप च निम्रेडेरन् निम्रेडेरन्" इत्यादौ अब्रह्म-प्रतिपादकोपनिषद्भागेऽपि अभ्यासदर्शनात्, गौतमधर्मशास्त्रे प्रतिखण्डिकमभ्यास-दर्शनाच्च प्रायिकमेतदिति मन्तव्यम् । **पादषट्कात्मकत्वेनेति** । शरभादावष्ट-चरणत्ववत् भ्रमरादौ षट्चरणत्वस्यापि दर्शनात् शरभाध्यायवत् भ्रमराध्यायतयाऽपि निबन्धनप्रसङ्गादिति भावः । ननु इतिहासपुराणाद्यनुग्राहकाः न्यायाः अभ्यासेन सङ्ग्राह्यास्सूच्या इत्याशङ्क्याह - **इतिहासपुराणादीनामिति** । **अर्थसमाप्तिर्हीति** । 'सर्वे व्याख्याता' इत्येतावतैवार्थसमाप्ताववगतायामध्यायसमाप्तिरप्यवगंस्यत इति किं समाप्तिद्योतकेनाभ्यासेनेति भावः । **शास्त्रावसाने** त्विति । इदमुपलक्षणम् - अध्या-यान्तरेष्वपीति द्रष्टव्यम् । ननु "महतः परमव्यक्तम्" इति महत्तत्त्वस्याव्यक्त-भेदप्रतिपादनात् प्रकृते ब्रह्मत्वसमर्थनमात्रादेव महदादीनां ब्रह्मत्वासिद्धेः सफल-मिदमधिकरणमित्याशङ्क्याह **महतः परमव्यक्तमित्यादिवाक्यानां चेति** । **चतुर्थाद्यविरुद्धमिति** । महच्छब्दस्यात्मविशेषणत्वेन महत्तत्त्वपरत्वाभावस्य समर्थि-तत्वादित्यर्थः । **पूर्वमकृतत्वाच्चेति** । प्रधानकारणवादनिरासस्य पूर्वमकृतत्वेन तस्य

एतच्छब्देन परामर्शायोगादिति भावः । **अनुदाहृतवाक्यानामतत्परत्वमिति** । अनुदाहृतवाक्यानां परमाण्वादिपरत्वाभाव इत्यर्थः । **इन्द्रियाणामपि तच्छरीरत्वमुक्तमिति** । स्थानादिव्यपदेशाच्चेति सूत्र इति भावः ।

इति सर्वव्याख्यानाधिकरणम् ॥

---

इति श्रीमत्तातार्यचरणारविन्दचञ्चरीकैः वात्स्यानन्तार्यसेवासमधिगतशारीरकमीमांसाभाष्यहृदयैः परकालमुनिकृपालब्धपारमहंस्यैः श्रीमदृशोपनिषद्भाष्यकारैः श्रीमद्रङ्गरामानुजमुनिभिः अनुगृहीतायां श्रुतप्रकाशिकाव्याख्यायां भावप्रकाशिकायां

([1] इति श्रीमत्तातार्यचरणारविन्द चञ्चरीकस्य श्रीमद्वरदविष्णुसूरेः कृतौ श्रुतप्रकाशिकाव्याख्यायां भावप्रकाशिकायां)

प्रथमस्याध्यायस्य चतुर्थः पादः ॥

॥ अध्यायश्च समाप्तः ॥

---

श्रीमते रङ्गरामानुजमहादेशिकाय नमः ।

श्रीमते श्रीभूमिदेवीसमेतश्रीनिवासपरब्रह्मणे नमः ।



---

1. अयं तालकोशेषु दृष्टः पाठः । तेन एषां श्रीरङ्गरामानुजस्वामिनां वरदविष्ण्वाचार्य इति पूर्वाश्रमश्रीनामेति ज्ञायते ।

॥ श्रीः ॥

श्रीमते रङ्गरामानुजमहादेशिकाय नमः ।

# अथ द्वितीयस्याध्यायस्य प्रथमः पादः

## (१) स्मृत्यधिकरणम्

स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्न, अन्यस्मृत्यनवकाशदोषप्रसङ्गात् ॥ २-१-१.

**प्रत्यक्षादिप्रमाणगोचर**ादिति । न च सांख्याभिमतस्य कथं प्रत्यक्षगोचरत्वमिति शङ्क्यम्, — कार्यावस्थायां प्रत्यक्षसंभवात् । अत एव वक्ष्यति - "प्रत्यगर्थवत्" इति । **[निरस्त ?]** पदविवक्षितमाह - **मुक्तव्यावृत्त्यर्थ**मिति । एकशब्दविवक्षितमर्थमाह - **निमित्तोपादानरूपे**ति । शरीरगतदोषाणां शरीरिण्यस्पर्शः **सर्वान्तरभूत**मित्यनेन भाष्येण विवक्षित इत्यभिप्रयन्नवतारिकामाह - **जगत्कारणत्व** इति । **वक्ष्यत** इति । "परैरुद्भाविता दोषाः परिहृताः; इदानीं स्वपक्षरक्षणाय परपक्षाः प्रतिक्षिप्यन्त" इति द्वितीयपादाद्यभाष्येणेत्यर्थः । **चलयितुं शक्यत** इति । "कम्पने चलिः" इति घटादिपाठात् मित्त्वम् । **तदेतदभिप्रेत्याह - विरोधे त्वनपेक्षं स्या**दिति पाठश्चेत् समीचीनः । **उक्तं ही**ति भाष्यस्य पूर्वमेवावतारितत्वादिति द्रष्टव्यम् । **अतो व्याकुलत्वात् वेदान्तवाक्याना**मिति अयमाशयः - श्रुतिस्मृत्योर्न श्रुतित्वस्मृतित्वकृतं नियतं प्राबल्यदौर्बल्यम् । अपितु श्रुतिस्मृत्योर्विरोधे श्रुतिर्बलीयसीत्युत्सर्गमात्रम् । तत्तु क्वचित् बलाबलवैपरीत्यहेतुन अपोद्यते । अत एव, "वेदं कृत्वा वेदिम्" इति पदार्थधर्मभूतक्रमविषयश्रुतेः, "क्षुत आचामेत्" इति स्मृतेः धर्मिभूतपदार्थविषयत्वं प्राबल्यकारणमस्तीति बलाबलवैपरीत्यमाश्रितम् । यथोक्तं वार्तिककारैः—

"दुर्बलस्य प्रमाणस्य बलवानाश्रयो यदा ।
तदा हि विपरीतत्वं शिष्टाकोपे यथोदितम् ॥

अत्यन्तबलवन्तोऽपि पौरजानपदा जनाः ।
दुर्बलैरपि बाध्यन्ते पुरुषैः पार्थिवाश्रितैः ॥ ”

इति । तद्वदिहाप्यव्यवस्थितार्थत्वव्यवस्थितार्थत्वरूपमन्यत् बलाबलवैपरीत्यकारणमस्ति । अत एव, “यदृचाऽस्तुवत तदसुरा अन्ववायन्; यत् साम्नाऽस्तुवत तदसुरा नान्ववायन्; य एवं विद्वान् यत्साम्ना स्तुवत ”इत्यत्र स्तुतिविधिरूपयोरुपक्रमोपसंहारयोरश्वप्रतिग्रहेष्टिगतयोरिव प्राप्तस्य प्राबल्यदौर्बल्योत्सर्गस्य, ‘यदृचास्तुवते’ त्यादिना किमसुरागमनहेतुतया ऋक् निन्द्यते, उत वशीकर्तुमशक्यानामपि [1] वशीकरणहेतुतयेति संदेहावकाशसद्भावेन उपसंहारस्य सामविधिपरत्वेन व्यवस्थितार्थत्वमपवादकमन्तीत्युपसंहारानुसारेणोपक्रमस्य निन्दापरत्वमाश्रितम् । न तूपक्रमस्य प्राबल्यं स्वीकृतम ; अव्यवस्थितार्थत्वात् । कापिलस्मृतेस्तु प्रधानकारणत्वैकविषयतया व्यवस्थितार्थकत्वात् कापिलस्मृतेरेव प्राबल्यमिति । **वचनविरोध** इति । कापिलस्मृतिवचनविरोध इत्यर्थः । ततश्च, ‘वचनस्यैव न्यायाभासमूलत्वात् वचनविरोधे न्यायस्य दुर्बलत्वादिति कथमुच्यत’ इति शङ्का परास्ता । **इममर्थमभिप्रेत्याहे**ति । इदं वैषम्यमभिप्रेत्य वाक्यद्वयमुपन्यस्तमित्यर्थः । **तस्याप्तत्वे प्रमाणमुक्त**मिति । “ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति जायमानं च पश्येत् ” इति हिरण्यगर्भस्येव कपिलस्यापि जायमानावस्थाप्रसृतभगवत्कटाक्षलब्धाप्रतिघज्ञानातिशयशालित्वप्रतिपादनादिति भावः । **अनन्यपरत्वमुक्त**मिति । अत एतद्ग्रन्थानुसारात् , ‘एतदुक्तं भवती’ति ग्रन्थावतारिकायामपि सांख्यस्मृतीनामन्यपरत्वं किं न स्यादित्याक्षेपोऽपि निवेशनीयः । **साकल्येनानवकाशत्व**मिति । यथा - “यत्किंचित्प्राचीनमग्नीषोमीयात्, तेनोपांशु चरन्ति” इति सावकाशात् उपांशुत्वविधेः, “मन्द्रं प्रायणीयायाम , मन्द्रतरमातिथ्यायाम्” इति प्रायणीयादिगतमन्द्रादिस्वरविधेरनवकाशत्वेन प्राबल्यम्, तद्वदिहापि निरवकाशकपिलस्मृतेः प्राबल्यमिति भावः ।

**तत्र परमकारणीभूतस्यैवे**ति । अग्नीन्द्राद्याराधनात्मनां कर्मणां भगवदाराधनरूपत्वस्योपपिपादयिषितस्य भगवतः सर्वदेवतातादात्म्यमन्तरेणोपपादयितुम-

---

1. शिवार्कमणिदीपिकादृष्टरीतिमनुसृत्यात्र अत्रपूरणं कृतम् ।

शक्यत्वात् तादात्म्यस्य कारणत्वनिर्वाह्यत्वात् तादात्म्यनिर्वाहकं कारणत्वमुपपादयितुम्, तन्मुखेन भगवत एव, "यतो वा इमानि" इत्यादिलक्षणलक्षितब्रह्मत्वं च प्रतिपादयितुं वेदान्तेषु सृष्टेः प्रलयपूर्वकत्वस्य प्रतिपादितत्वात् प्रथमं प्रलयदशामाहेत्यर्थः। **सर्वदेवतातादात्म्योपपत्त्यर्थमि**ति। **परमकारणत्वं वक्तु**मित्यनेनान्वयः। **सर्वथा साम्यव्यावृत्त्यर्थमि**ति। कतिपयवस्तुविषयत्वेन साम्यव्यावृत्त्यर्थमित्यर्थः। उक्तं हि प्रकृत्यधिकरणे, "सुषुप्तावेकदेशलयः। अत्र तु सर्वलय इत्यर्थः" इति। **संप्राप्ते सर्गकाल** इति। "क्षोभयामास संप्राप्ते सर्गकाले व्ययाव्ययौ" इति श्रीविष्णुपुराणश्लोकः। **लक्षणहेत्वो**रिति। आर्जयन् वसतीतिवत् हेतौ शतृप्रत्यय इत्यर्थः। "आसीदिदं तमोभूतम्" इत्यस्यार्थमाह **पूर्वमविभक्ततमःशरीरक** इति। व्यञ्जयन्नित्यस्यार्थमाह - **व्यष्टिसृष्टी**ति। "महाभूतादिवृत्तौजाः" इत्यस्यार्थमाह - **स्वसंकल्पादि**ति। तमोनुदशब्दार्थमाह - **विभक्ततमःशरीरक** इति। अत्र, मूलेऽध्याहार्यम्। अत्र तमोनुद इत्यत्र "अकारादनुपपदात् कर्मोपपदो भवति विप्रतिषेधेन" इति, "इगुपध –" इति कस्य अणा बाधान्न रूपासिद्धिः शङ्कनीया; मूलविभुजादित्वात् तत्सिद्धेः। ननु तमोनुद इति किबन्तं पञ्चम्यन्तं पदम्। ततश्च "आसीदिदं तमोभूतम्" इति पूर्वश्लोके प्रतिपादनात्, "यदा तमस्तत्" इति मन्त्रप्रतिपाद्यशिवात् तमोधिष्ठातुः अव्यक्तः प्रादुरासीदित्यर्थः किं न स्यादिति चेन्न – तदापि, "यस्य तमः शरीरम्" इत्यादिसुबालोपनिषद्वाक्यपर्यालोचनया भगवत एव तमःशरीरकत्वेन देवतान्तरस्याप्रतीतेः परस्येष्टासिद्धेः। अव्यक्त- इत्यस्यार्थमाह - **अव्यक्तावस्थे**ति। ननु अव्यक्तशब्दस्य नपुंसकलिङ्गस्य त्रिगुणे रूढत्वेऽपि पुंलिङ्गाव्यक्तशब्दस्य तदुपस्थापकत्वे किं प्रमाणम्? न हि पङ्कजो वर्तत इत्युक्ते अर्शआद्यजन्ततया पद्मवतः प्रतीतिरस्ति। व्यञ्जयन्निति व्यक्तिवाचिपद- समभिव्याहारात् अव्यक्तपदेऽपि व्यक्त्यभावरूपार्थस्यैवोन्मेषात्। किंच प्रादुरासी- दित्यस्य तमोनुद इति संनिहितेनान्वयसंभवे व्यवहितेन अव्यक्त इत्यनेनान्वयस्य क्लिष्टत्वाच्च। ततश्च प्रलयकाले रूपादिहीनतया अव्यक्तः परमात्मा विभक्ततमःशरीरकः प्रादुरासीदित्यर्थ किं न स्यादिति चेन्न – तस्याप्यर्थस्येष्टत्वेनादोषात्। अतीन्द्रियग्राह्यत्ववातिशब्दस्येन्द्रियेणेन्द्रियग्राह्येण वा समाससंभवादुभयथा व्याचष्टे -

**इन्द्रियमतीत्येत्**यादिना। **इन्द्रियमतीत्य वर्तमानेने**ति। शास्त्रस्येन्द्रियातीतत्वं नाम इन्द्रियाग्राह्यग्रहणशक्तिमत्त्वमिति भावः। **शाब्दप्राधान्यं चे**ति। "तस्मिन् जज्ञे स्वयं ब्रह्मा" इत्यत्र ब्रह्मशब्दस्य चतुर्मुखशरीरकपरमात्मपरत्वस्य तैरनभ्युपगमा- दिति भावः। **अज एको नित्य इती**ति। "अज एको नित्यः", "यस्य पृथिवी शरीरम्" इत्यादिवाक्य इत्यर्थः। अज इति निर्विकारत्वम्, "यस्याक्षरं शरीरं यस्य मृत्युः शरीरम्" इति कारणत्वमन्तर्यामित्वं चोक्तमिति भावः। विशब्दार्थभूत- विशेषं दर्शयति — **जीवबुद्ध्यव्यवधानेने**ति। अण्डान्तर्वर्तिपदार्थसृष्टौ तु हिरण्य- गर्भादिजीवानां सिसृक्षारूपां बुद्धिमुत्पाद्य तद्द्वारा सृजतीति भावः। **भूतशब्दः सिद्धपर** इति। **भूमिशब्दो** भावप्रधानः। ततश्चातिक्रान्ता सकलेतरप्रमाण- संभावनाभूमिः येन सोऽतिक्रान्तप्रत्यक्षादिसकलेतरप्रमाणसंभावनाभूमिः। प्रत्यक्षादि- प्रमाणानामविषय इति यावत्। स चासौ भूतार्थश्चेति समास इति भावः।

इति स्मृत्यधिकरणम् (१)

---

## (२) योगप्रत्युक्त्यधिकरणम्

**एतेन योगः प्रत्युक्तः २-१-३.**

ननु ईश्वरतत्त्वाभ्युपगमः सांख्यानामप्यविशिष्ट एव; सेश्वरसांख्यानामपि वाक्यात् (स्वीकृतत्वात् ?) तन्निराकरणस्यापि पूर्वाधिकरणे कर्तव्यत्वादित्यस्वरसादाह भाष्ये — **योगस्य चाभिधाना**दिति। योगशास्त्रे प्रधानप्रतिपाद्यस्य श्वेताश्वतरादि- प्रत्यक्षश्रुतिषु मोक्षोपायतया विधानात् न सांख्यस्मृतितुल्यतेति भावः। ननु सृज्यत्वश्रुतिः ब्रह्मणः क्षेत्रज्ञत्वे कथं प्रमाणमित्याशङ्क्याह — **कर्मकृतनाम- रूपाभ्या**मिति। **भगवद्वचनेने**ति। [ब्रह्मणो भगवदंशत्वं ?] भगवतोक्तमिति शौनकेन प्रदर्श्यत इत्यर्थः। **स्तम्बस्याप्यकर्मवश्यत्वप्रसङ्गा**दिति। ननु, "आब्रह्मस्तम्बपर्यन्ता जगदन्तर्व्यवस्थिताः। प्राणिनः कर्मजनितसंसारवशवर्तिनः॥" इति श्लोके आब्रह्मस्तम्बपर्यन्ता इति नैकं पदम्। आङो ब्रह्मस्तम्बाभ्यामन्वये [हि ?] वैरूप्यपरिहारार्थमुभयत्राप्येकार्थत्वमाश्रयणीयं स्यात्। किंतु स्तम्बपर्यन्ता इति

पृथक्पदम् । इतरथा पर्यन्तशब्दवैयर्थ्यप्रसङ्गात् । ततश्च पर्यन्तपदस्वारस्यात् स्तम्बस्य प्राण्यन्तर्भावेऽपि न ब्रह्मणोऽन्तर्भावो युक्तः । तत्राङो मर्यादार्थत्वसंभवादिति चेन्न— अभिविधिसाहचर्यात् अभिविधित्वोपपत्तेर्वैरूप्याश्रयणस्यान्याय्यत्वादिति भावः । **प्रविश्य च तथापूर्वामिति** । अपूर्वामिति छेदः । **युक्तावस्थायामिति** । योगदशायामित्यर्थः । **कार्यस्मृत्यनुपपत्त्येति** । महदहंकारादिकार्यविषयस्मृतेर्यथा मूलश्रुत्यनुपलम्भात् अप्रामाण्यम्, एवं कारणप्रधानविषयस्मृतेरपीति सूत्रतात्पर्यार्थः । परैस्तु औपनिषदयोगसापेक्षत्वात श्रुतिसंवादबाहुल्याच्च योगस्मृतिः प्रमाणमित्यधिकाशङ्का युक्तिद्वयेन वर्णिता । तत्र प्रथमयुक्तेः, "मोक्षसाधनतया वेदान्तविहितयोगस्य चाभिधानात्" इति भाष्येणोक्तत्वात द्वितीयां संवादबाहुल्ययुक्तिमनूद्य दूषयति— **अधिकाशङ्कापरिहारौ परैरेवमुक्तावित्यादिना** । **तत्कारणं सांख्ययोगाधिगम्यमिति** । न च सांख्ययोगशब्दयोः ज्ञानपरत्वं शांकरभाष्ये वर्णितमिति वाच्यम्; प्रसिद्धार्थपरित्यागे हेत्वभावादिति भावः ॥

इति योगप्रत्युक्त्यधिकरणम् (२)

---

## (३) नविलक्षणत्वाधिकरणम्

**न विलक्षणत्वादस्य तथात्वं च शब्दात् २-१ ४.**

शास्त्रस्य व्युत्पत्तिग्रहादिकार्यान्तरसापेक्षत्वादन्यापेक्षत्वं न संभवतीत्याशङ्क्य व्याचष्टे— **प्रमाणान्तरानपेक्षस्येति** । **प्रमित्यन्तरनैरपेक्ष्यमिति** । समानविषयप्रमित्यन्तरनैरपेक्ष्यमित्यर्थः । **प्रमाणव्यवस्थापनमिति** । नीलं नभः इति चाक्षुष[त्वं[1] न स्यात्] । ज्ञानस्य नीरूपाकाशविषयत्वं नास्ति; अपितु मेघादिविषयत्वमिति व्यवस्थापनमित्यर्थः । **श्रेयस्करत्वप्रमितिजनकेति** । विशेषरूपत्वेन शीघ्रप्रवृत्तेष्टसाधनताप्रमितिसामग्र्यवरुद्धवैधहिंसायां बलवदनिष्टसाधनताज्ञानसामग्री नांशं लभत इत्येवं सामग्रीविवेचनमित्यर्थः । अर्थस्वभावसामग्रीस्वभावनिरूपणयोः व्यवस्थितविषयत्वमुक्त्वा एकैकस्मिन् विषये द्वयोरपि पर्यायेण प्रवृत्तिः संभवतीत्याह—

---

१. चाक्षुषत्वं न स्यादिति वाक्यभ्रंशो भाति; तदपेक्षया 'त्वं न स्यात्' इति प्रक्षेप इत्युपेक्षणं युक्तम् ।

**यद्वाऽर्थस्वभावविषयनिरूपणं नामे**ति । स्वप्नमूर्च्छादिष्वनुपलभ्यमानचैतन्यसत्ताया वैशेषिकादिभिरनभ्युपेतत्वात् कथं प्रतिबन्दीकरणमित्याशङ्कयाह — **वेदान्तिभिर्नित्यस्ये**ति । **वेदान्तप्रामाण्यमभ्युपगच्छते**ति । सांख्येन वेदान्तप्रामाण्यस्याभ्युपेतत्वात् जगतो वेदान्तप्रतीनब्रह्मोपादानकत्वसिद्ध्यर्थं चैतन्ययोगोऽङ्गीकार्य इत्याशङ्क्याहेत्यर्थः । **द्रव्यत्वावान्तरजातिविशेषः सालक्षण्यमितीति** । द्रव्यत्वसाक्षाद्व्याप्यजात्योपादानोपादेययोः सालक्षण्यं विवक्षितमित्यर्थः । ततश्च पिण्डत्वकपालत्वरुचकत्वस्वस्तिकत्वादिना सालक्षण्याभावेऽपि न दोष इति ध्येयम् । **तच्चात्र चेतनत्वमि**ति । आत्मत्वस्य द्रव्यत्वसाक्षाद्व्याप्यजातित्वादिति भावः ।

**दृश्यते तु २-१ ६.**

**चेतनत्वानुवृत्तिरप्यस्ती**ति । अत्र केचित्—कारणकोटौ विशेष्यभूतस्य ब्रह्मणः कार्यकोटौ विशेषणभूतेष्वचेतनेष्वपि उपादानत्वमुपपादनीयम् । अन्यथा तस्य सर्वोपादानत्वासिद्धेः । अत एव श्रुतिप्रक्रियायाम् , "यद्वा जगत इति निष्कर्षकः शब्दः । ब्रह्मशब्दो विशेष्यमात्रपरः" इत्यादिना कार्यकोटौ विशेषणभूतस्य जगतः कारणकोटौ विशेष्यभूतं ब्रह्म प्रत्युपादेयत्वशरीरत्वे स्त इत्याचार्यैरेव प्रतिपादितम् । ततश्च तत्र सालक्षण्याभावात् उपादानत्वं न संभवतीति आक्षेपस्य चेतनांशे चेतनत्वानुवृत्तिरप्यस्तीति परिहारस्यासंभवात् एतत्सूत्रोक्तन्यायेन विलक्षणयोरप्युपादानोपादेयभावोऽस्तीत्येव परिहर्तव्यमिति वदन्ति ।

**माक्षिकस्ये**ति । मधुन इत्यर्थः । **तत्तु क्रिम्यादौ नास्तीत्यर्थः** इति । ननु द्रव्यत्वसाक्षाद्व्याप्यजात्या सालक्षण्यस्य पूर्वं विवक्षितत्वात् [कथं?] तत्र व्यभिचारः प्रदर्शित इति चेन्न — माक्षिकस्य पृथिवीत्वात् क्रिम्यादेश्चेतनत्वेनात्मत्वात् तदानीमपि व्यभिचार एवेति भावः । किंच पार्थिवेभ्योऽरण्यादिभ्यो वह्नेः, सामुद्रजलात् पार्थिवस्य मुक्ताफलस्योत्पत्तिदर्शनात् व्यभिचारस्य तादवस्थ्यमिति द्रष्टव्यम् ।

**असदिति चेन्न, प्रतिषेधमात्रत्वात् २-१-७.**

भाष्ये **कारणे परस्मिन् ब्रह्मणि कार्यं जगदि**ति । तादात्म्येनेति शेषः । कारणावस्थायां कार्यं जगत् कारणात्मना न विद्यत इत्यसत उत्पत्तिप्रसङ्ग इत्यर्थः ।

**कार्यकारणयोः सजातीयत्वमेवे**ति । प्रतिषिद्धमिति शेषः । तस्य व्याख्यानम् **अस्येदमिति प्रत्यभिज्ञानार्हातान्तरजात्या सालक्षण्यनियमः प्रतिषिद्धः । न त्वेकद्रव्यत्वमित्यर्थ** इति ।

अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् २-१-८

भाष्ये – **अपीतिपूर्वकसृष्ट्यादेः प्रदर्शनार्थ**मिति । अत्र **केचित्** – प्रपञ्चस्थितिकाले तद्दोषैर्दुष्टत्वेऽपि तत्प्रलये निर्दोषं कल्याणगुणविशिष्टं ब्रह्मावतिष्ठत इति तद्विषयत्वं वेदान्तवाक्यानामुपपद्यते, नैव. सुखं जीवतीत्यादिवाक्यानामिव व्याध्यादिरहितकालविषयत्वमिति शङ्कानिराकरणार्थम् **अपीता**विति प्रलयस्य सूत्रे विशिष्य ग्रहणम् । प्रलयेऽपि भाविकल्पभोग्यफलहेतूनां पाप्मनां सूक्ष्मरूपापन्नेषु जीवेषु सत्त्वावश्यम्भावात तैर्दुष्टत्वं स्थितिकाल इव प्रलयकालेऽपि ब्रह्मणः प्रसज्यत इति अपहतपाप्मत्वादिश्रुतीनामसामञ्जस्यमिति भाव इति वदन्ति ।

**मत्वर्थीयप्रत्यय** इति । भावप्रधानश्च निर्देश इति भावः । **परोक्त**मिति । चेष्टाभोगेन्द्रियाश्रयत्वरूपं तार्किकोक्तं लक्षणत्रयमित्यर्थः । अन्तर्गतत्वमेवोपपादयति – **सुखदुःखे**ति । **भोगाश्रयत्वेन्द्रियाश्रयत्वोक्ति**रिति । यद्यपि सुखदुःख-साधनेन्द्रियाश्रयत्वमेकं लक्षणम्, सुखदुःखोपभोगसाधनत्वस्येन्द्रियविशेषणत्वात् – तथाप्यर्थात् तदपि सूचितमित्यभिप्रायः । मुक्तेश्वरशरीरस्येति । **मुक्तेश्वरयोः** शरीरासंभवद्योतनार्थमित्यर्थः । **चेष्टाश्रयत्वोक्ति**रिति । प्राणशरीरसंयोगासमवायि कारणकक्रियाया एव चेष्टात्वादिति भावः । **भोगायतनत्वं पृथक् दूषयती**ति । पूर्वोक्तानि लक्षणानि पूर्वं न दूषितानि । अपितु तेषां लक्षणानां सामीचीन्यं सिद्धवत्कृत्यैव चिदचितोस्तादृशलक्षणाभावात् भगवच्छरीरत्वं न संभवतीति शरीर-त्वमेव दूषितम् । भोगायतनलक्षणे तु अतिव्याप्त्या लक्षणमपि दूष्यत इति वैरूप्यं द्रष्टव्यमिति भावः । **असंभवमाहे**ति । चेतनेषु शरीरतयाऽभिमतेषु लक्षणस्याभावमाहे-त्यर्थः ; न त्वव्याप्त्यतिव्याप्तिसमभिव्याहृतमसंभवरूपं लक्षणदूषणमिति मन्तव्यम् । **इन्द्रियाधिष्ठानावयवनिषेधमुखेने**ति । पाण्यादिमत एव शरीरत्वादिति भावः ।

न तु दृष्टान्तभावात् २-१-९.

असामञ्जस्यं प्रतिषेधता नेत्यनेनैव हेयसंबन्धगन्धासंभवस्य सिद्धतया तुशब्दस्य शरीरशरीरिभावसंभवज्ञापकत्वमेव तुशब्दोऽत्रेति भाष्येऽपि विवक्षितमित्यभिप्रेत्याह नेतिपदेनैवेत्यादि । केचित्तु — "तद्वत्प्रसङ्गादसमञ्जसम्" इति सूत्रेणापुरुषार्थसंबन्धप्रसङ्गादसामञ्जस्यमिति शङ्किते, नेत्यनेनासामञ्जस्यं निषिध्यते । तुशब्देन तद्वत्प्रसङ्गादित्युक्तहेयसंबन्धगन्धाभावः प्रदर्श्यत इति यथाश्रुतभाष्यमेव समर्थयन्ते । तच्च तल्लक्षणमिति । प्रवृत्तिनिमित्तभूतलक्षणमित्यर्थः । अयं भाव — गोर्हि त्रीणि लक्षणानि गमिकर्तृत्वरूपं व्युत्पत्तिलक्षण(निमित्त?)मेकं लक्षणम्, गोशब्दप्रवृत्तिनिमित्तगोत्वव्यञ्जकं सास्नादिमत्त्वमेकम्, गोशब्दप्रवृत्तिनिमित्तभूतं गोत्वमेकमिति । इह च शरीरशब्दव्युत्पत्तिनिमित्तलक्षणं विशरणम् । कर्मफलभोग इत्यादिकं तु सास्नादिवत् उपलक्षणरूपं लक्षणं न भवितुमर्हति । सास्नादिव्यङ्ग्य गोत्वरूपजातिवत् भोगेन्द्रियाश्रयत्वादिव्यङ्ग्यायाः शरीरत्वजातेरभावादितीदमेव प्रवृत्तिनिमित्तभूतं लक्षणमिति पर्यवस्यतीत्यभिप्रेत्य, कर्मफलभोगहेतुरित्यादिकं प्रवृत्तिनिमित्तलक्षणमिति प्रवृत्तिनिमित्तलक्षणत्वेन भाष्येऽनूदितमिति भावः । प्रथमोपात्तमिति । इन्द्रियाश्रयत्वादेर्मुक्तशरीरेषु संभवादिति भावः । नन्वाकल्पमिन्द्रियाणामवस्थानात्, "तदन्तरप्रतिपत्तौ रंहति" इत्यधिकरणे भूतसूक्ष्मेन्द्रियाणामनुवृत्तिकथनाच्च कथमहल्यादिशरीराणामिन्द्रियाश्रयत्वाभाव इत्याशङ्क्याह — इन्द्रियाश्रयत्वं ज्ञानप्रवृत्तिजननेति । चेष्टेन्द्रियार्थाश्रय इति । अर्थशब्दो भोगपरः । न हि ज्ञानं ज्ञानविशिष्टेनेति । अयमर्थः — यदीयधर्मभूतज्ञानेन यत् धार्यम्, यत् नियाम्यं च, तस्य तत् शरीरमिति विवक्षितम् । ततश्च यावद्वस्तुसत्त्वं धार्ये यूकादौ गर्भस्थविनष्टजन्तौ वा, नातिव्याप्तिः । प्रभाव्याप्तिरिति । प्रभायाः प्रभावता नित्यधार्यत्वादिति भावः ।

अन्यथानुमेयमिति चेन्निर्मोक्षप्रसङ्गः २-१-१२.

मृषावादिपक्षं दूषयति — तर्काप्रतिष्ठानादित्यादीति । व्यपदेशाच्च क्रियायामिति । अस्यायमर्थः — "विज्ञानं यज्ञं तनुते । कर्माणि तनुतेऽपि च" इति लौकिकवैदिकक्रियासु कर्तृत्वव्यपदेशाच्च कर्ता जीवः । ननु विज्ञानशब्देन

नात्मनो व्यपदेशः, अपितु अन्तःकरणस्येति चेत् – एवं सति निर्देशविपर्ययः स्यात् ; बुद्धेः करणत्वात् विज्ञानेनेति करणविभक्तिनिर्देशः स्यादिति। **सूत्रत्रयं परैस्त्वेवं व्याख्यात**मिति । इतरेषां सूत्राणामत्यन्तवैरूप्याभावात् न तानि दूषितानि । यद्यपि, "असदिति चेन्न प्रतिषेधमात्रत्वात्" इति सूत्रे–, "यदि विलक्षणात् ब्रह्मणः विलक्षणं जगदुत्पद्यते, तर्हि प्रागुत्पत्तेः कार्यमसत् स्यादिति – असत्कार्यवादप्रसङ्ग इति चेत् – नैष दोषः ; प्रागुत्पत्तेरसदिति वादस्य प्रतिषेधमात्रत्वात् प्रतिषेधस्य [ प्रतिषेध्य ? ] शून्यत्वात् निर्विषयत्वादित्यर्थः । प्रागुत्पत्तेः कार्यमसत् स्यादिति, किं कार्यस्य कारणात्मना सत्त्वं न स्यादित्यापाद्यते, उत कारणात्मतां विहाय स्वातन्त्र्येण ? नाद्यः, कारणात्मना सत्त्वस्य प्रागुत्पत्तेरपि सत्त्वात् । न द्वितीयः ; स्वातन्त्र्येण सत्त्वस्येदानीमप्यभावात् । अतः उत्पत्तेः प्रागसदित्युक्तिः उक्तिमात्रमेव, नार्थवती" इत्यर्थो वर्णितः – तथापि तस्यार्थस्यात्यन्तविरुद्धत्वाभावात् [ तत् सूत्रं ? ] उपेक्षितम् । "यथा स्वप्नदृगेकः स्वप्नदर्शनमायया न संस्पृश्यत इति । प्रबोधसंप्रसादयोरनन्वागतत्वात् , एवमवस्थात्रयसाक्षी एकः, अव्यभिचारी अवस्थात्रयेण व्यभिचारिणा न संस्पृश्यते । मायामात्रं ह्येतत् , यत् परमात्मनोऽवस्थात्रयात्मनाऽवभासनम् , रज्ज्वा इव सर्पादिभावेन" इति परभाष्योक्तं दृष्टान्तमर्थतोऽनुवदति **स्वप्नदर्शीव पुरुषः स्वमायया न स्पृश्यत** इति । **अस्य चायमर्थः**–एकः जागरितसुषुप्त्योरनुवर्तमानः स्वप्नदृक् स्वप्नदर्शनरूपया स्वप्नोपादेयमायया उपादानभूतो यथा न स्पृश्यते, अवस्थान्तरेऽनुवृत्त्यदर्शनात्–एवमुत्पत्तिस्थितिप्रलयरूपावस्थादर्शी परमात्मापि नावस्थात्रयेण संसृज्यते, अवस्थात्रयस्यापि मिथ्यात्वादिति । **इदमस्योपादान**मिति । इदमस्य भोगसाधनं मनइन्द्रियादीत्यर्थः । **जडत्वानृतत्वपरित्यागाभावा**दिति । यद्यपि शांकरभाष्ये, "अत्यल्पञ्चेदमुच्यते कार्यमपीतावात्मीयेन धर्मेण कारणं संसृजेदिति ; स्थितावपि समानोऽयं प्रसङ्गः, कार्यकारणयोरनन्यत्वाभ्युपगमात् । 'इदं सर्वं यदयमात्मा' इति श्रुतिभिः त्रिष्वपि कालेष्वविशेषेण कार्यकारणानन्यत्वं श्राव्यते । तत्र यः परिहारः कार्यस्य कार्यधर्माणां चाविद्याध्यारोपितत्वात् न तैः कारणं संसृज्यत इति, अपीतावपि स समानः" इति अप्ययस्थित्यवस्थयोः साम्यप्रतिपादनात् कार्यकारणानन्यत्वप्रयुक्तदोषस्योद्भावनीयत्वे स्थूलह्रस्वत्वादिदोषाणामपि

जडत्वानृतत्ववदापादयितुं शक्यत्वात् स्थूलत्वाद्याकारे परित्यक्तेऽपि जडत्वानृतत्वपरित्यागाभावादिति वैषम्यं किंनिबन्धनम। न हि [न ?] स्थूलत्वादिदशायामैक्यम् अप्ययदशायां जडेनैक्यमस्तीति तैरभ्युपगतम्, येनायं संरम्भः सफलः स्यात् — तथापि अपीताविति सूत्रे अप्ययस्य विशिष्योक्त्या तत्र किंचिद्वैषम्यं वक्तव्यमित्यभिप्रेत्यैवमुक्तमिति द्रष्टव्यम। **हस्तिशस्त्रादेरविप्रकर्षादिति**। हस्तिशस्त्रादेरपि कार्यस्याज्ञानोपादानकस्योपादानादनधिकदेशत्वादिति भावः।

**वर्तमानाविद्याया आदिमत्त्वं च भवेदिति**। पूर्वाविद्यायाः पूर्वं मुक्तिकाले नष्टत्वादिति भावः। **बन्धमोक्षव्यवस्थोक्ति**रिति। जीवोपाधिभूतानामविद्यानां नानात्वात् यस्य जीवस्य तत्त्वज्ञानेनाज्ञानं नष्टम्, तस्य मुक्तिः, नान्यस्येति व्यवस्थोक्तिरित्यर्थः। **पूर्वोक्तदोष** इति। निवृत्ताविद्यानां पुनरुत्पत्तिः स्यादित्यर्थः। **उपाधिविरह एव भेद इति चे**दिति। यद्यपि निवृत्तोपाधित्वमेव भेद इति चेदिति पूर्वमेव शङ्कितम, तथापि दूषणान्तरदानाय पुनरुपन्यास इति द्रष्टव्यम। **अंशभेदस्याबाध्यत्व** इति। उपाधिविरहरूपांशभेदस्याबाध्यत्व इत्यर्थः।

**क्षणमात्रमपसरणम**पीति। मृषावादिमतमपरमार्थकञ्चुकाश्रयणादेकां कक्ष्यां सहते। भास्करमतं तु तावदपि न सहत इत्यर्थः।

**कार्यावस्थायामेवे**ति। मूलकारणदशाव्यतिरिक्तदशायामित्यर्थः। **आनीदवात**मिति। अन प्राणने। आनीदिति सत्त्वलक्षणाननसंबन्धकथनादिति भावः। **विनाशहेतुवैयर्थ्यप्रसङ्गा**दिति। प्रलयहेतुभूतसंजिहीर्षादिवैयर्थ्यप्रसङ्गादित्यर्थः। **तद्वत्प्रसङ्गादसमञ्जस**मिति। तद्वत्प्रसङ्गात्—शून्यत्वप्रसङ्गादित्यर्थः। **असच्छब्दवाच्यमपी**ति। कार्यावस्थमित्यनुषज्यते।

**अधिकरणद्वयेन निर्णीत** इति। "असदिति चेत्", "अपीतौ" इत्यधिकरणद्वयेनेत्यर्थः। **तदभावस्ये**ति। सत्त्वाभावस्येत्यर्थः।

इति न विलक्षणत्वाधिकरणम्॥

## (४) शिष्टापरिग्रहाधिकरणम्

एतेन शिष्टापरिग्रहा अपि व्याख्याताः २-१-१३

**तथा सति हीति** । शिष्टाश्च ते अपरिग्रहाश्चेति व्याख्याने पूर्वोक्तप्रधानकारणवादस्यापि शिष्टापरिग्रहः सिद्ध्यति । शिष्टैरपरिगृहीता इति व्याख्याने तु वक्ष्यमाणानां वैशेषिकादिमतानामेव शिष्टापरिगृहीतत्वम् , पूर्वोक्तस्य प्रधानकारणवादस्य तु शिष्टपरिगृहीतत्वमित्येव प्रतीतेरिति भावः । प्रतिबन्द्या समाधत्ते - **कथं धर्मशास्त्रपरिगृहीतस्येति** । ननु, "मीमांसा न्यायविस्तरः" इति न्यायमतस्य परिगृहीतत्वेऽपि वैशेषिकमतस्य परिगृहीतत्वं नेत्याशङ्क्याह – **नैयायिका वैशेषिकाश्चेति** । शङ्कते—**कारणत्वस्येति** । [पर ?] भाष्ये **परमाणुकारणत्वाद्** इत्यादिना परमाणुत्वकीर्तनेनान्यदपि शङ्काकारणं सूचितम् । अल्पाधिकपरिमाणयोर्हि तन्तुपटादिषु उपादानोपादेयभावो दृष्टः ; न तु वैपरीत्यं दृष्टम् । अतस्त्रसरेणुप्रभृतिषु पृथिवीलोकादिपर्यन्तेषु कार्येषु परमाणूनामेव कारणत्वं युक्तम् ; न तु कार्येभ्योऽधिकपरिमाणस्य प्रधानादेरित्यानन्दगिरिणोक्तमनुवदति **तर्ककुशलताप्रसिद्धेरिति** ।

इति शिष्टापरिग्रहाधिकरणम् (४)

## (५) भोक्त्रापत्त्याधिकरणम्

भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत् । २-१-१४

**चरमो विचार** इति । 'न ह वै सशरीरस्ये' [त्युक्त इ] त्यर्थः । **न त्वसाधारणतयेति** । भोक्तृत्वं किं सशरीरत्वप्रयुक्तम् ? उत, कर्मपारतन्त्र्यप्रयुक्तमिति चिन्ताया एव [ए ?] तदधिकरणकृत्यत्वादिति भावः । **सूत्रभेदस्त्विति** । संभोगप्राप्तिरित्यस्य भोक्त्रापत्तेरिति सूत्रस्य चेत्यर्थः । **मुक्तिपाद** इति । "भावं जैमिनिः—" इति सूत्र इति भावः । भाष्ये **प्रचुरदन्दशूक** इति । दन्दशूकशब्दो दन्दश्यत इत्यवयवव्युत्पत्त्या दंशमशकादिपरः ; न तु रूढ्या सर्पपर इति द्रष्टव्यम् ।

**भोग्यस्य भोक्तृतापत्तिमिति ।** एकब्रह्मोपादेयत्वेन भोक्तृभोग्ययोरुपादानभूतब्रह्मानन्यतया भोक्तृभोग्ययोः परस्पराभेदप्रसङ्ग इत्याशङ्क्य, एकसमुद्रोपादानकतया समुद्रादनन्ययोरपि फेनतरङ्गयोः परस्परभेदवत् भोक्तृभोग्यव्यवस्थेति परिहृतमित्यर्थः । **त्रयाणामपि वाचक इति ।** कारणान्तर्गतशक्त्यविद्योपाध्युपहितस्येति कुदृष्टित्रयाभिहितानां त्रयाणामपि परामर्शादिति भावः ।

इति भोक्त्रापत्त्यधिकरणम् ।

---

## (६) तदनन्यत्वाधिकरणम्

---

**तदनन्यत्वमारम्भणशब्दादिभ्यः २-१-१५**

**तदसत्त्वमिति सूत्रं शिक्षणीयं स्यादिति ।** 'न विलक्षणत्वात्' इत्यादिषु प्रपञ्चस्यापि प्रकृतत्वाविशेषेण तच्छब्देन प्रपञ्चस्यापि परामर्शः संभवतीति भावः । **सन्मात्रस्य कारणादनन्यत्वं स्यादिति ।** कार्यस्य कारणानन्यत्वं नाम कार्यशब्दोपलक्षितस्य सन्मात्रस्य कारणशब्दोपलक्षितात् सन्मात्रादनन्यत्वमिति पर्यवसितार्थ इति भावः । **पत्रपुष्पाद्युपादानत्वमिति ।** शाखागतपत्रपुष्पाद्युपादानत्वमित्यर्थः । ननु शाखागतपत्रपुष्पाणां चन्द्रगतत्वे प्रमाणाभावात् चन्द्रोपादानकत्वाभावेऽपि, प्रपञ्चस्याविद्यागतत्वमेव न ब्रह्मगतत्वमित्यत्र प्रमाणाभावात्; प्रत्युत ब्रह्मण एवोपादानत्वग्राहकश्रुतिसत्त्वात् तदुपलक्षितस्य ब्रह्मण उपादानत्वं वक्तुं सुशकमिति चेन्न—ब्रह्मणो निर्विकारत्वश्रुतिबलेन तदसंभवात् । न च विकारस्यापारमार्थिकत्वात् तदविरोध इति वाच्यम्, अद्याप्यपारमार्थिकत्वासिद्धेस्तथानिर्वाहायोगादिति भावः । **यद्व्यतिरेकेणेति ।** "भावे चोपलब्धेः" इति सूत्रे भाव इत्येतदुपलब्धेरप्युपलक्षणम् । उपलब्धेरित्येतत् भावस्याप्युपलक्षणम् । तथाच भावे उपलब्धौ च भावादुपलब्धेश्चेत्यर्थः । ततश्च कारणभावे कार्यस्य भावात् कारणोपलब्धौ कार्योपलब्धेश्च कार्यस्य कारणादनन्यत्वमिति व्याख्यातमित्यर्थः । **धूमाग्न्योरिति ।** अग्निभाव एव धूमस्य भावः, आलोकोपलम्भे सत्येव रूपोपलम्भ इत्येकैकसत्त्वेऽपि

धूमस्याग्न्युपलम्भानुविधाय्युपलम्भविषयत्वाभावात् रूपस्य चालोकसद्भावानुविधायिसद्भावाभावाच्च न व्यभिचार इति भाव । **जातिव्यक्त्योरनेकान्तत्वाच्चे**ति । यद्यपि जात्युपलम्भ एव व्युक्त्युपलम्भ इति न नियमोऽस्ति; दूरत्वादिदोषवशेन गोत्वब्राह्मणत्वाद्यग्रहेऽपि व्यक्तिग्रहणसंभवात् – तथाप्यसति बाधके तदुपलम्भानुविधाय्युपलम्भवत्त्वमस्तीति भावः । **निरधिष्ठानभ्रमासंभवनिराकरणेने**ति ।

" स्वरूपानादित्वस्वपरघटने दुर्घटनता
प्रवाहानादित्वं पुनरिति चतस्रो हि गतयः ।
असत्याविद्याया वदितुमनवस्थापरिहृतौ
मनास्त्वेतास्तुल्याः स्फुटमसदधिष्ठानसरणौ ॥ "

इति दत्तोत्तरमित्यर्थः । **सामान्यरूप**मिति । जातिरूपमित्यर्थः । **उपाधिरूप**मिति । अर्थक्रियाकारित्व – प्रमाविषयत्व – तद्योग्यत्वादिरूपमित्यर्थः ।

**तदवस्थतन्त्वादिभाव एव प्रावरणादिकार्यदर्शना**दिति । पटावस्थतन्त्वादित एव प्रावरणादिलक्षणस्य पटकार्यस्य दर्शनात् तन्त्वादिरेव प्रावरणादेः कारणम्; न तन्त्वादिव्यतिरेकेण पटादिः कश्चिदस्तीत्यर्थः । निर्विषयत्वप्रसङ्गमेवोपपादयति – **सद्द्रव्यं** हीति ।

**तत्र दूषणमुक्त**मिति । "सत्यपि" इत्यादिना, "सर्वदा कारकव्यापारेण नोपरन्तव्यम्" इत्यन्तेन भाष्येणेत्यर्थः ।

भाष्ये, **न हि घटार्थमारोपित** इति । ननु वर्णनित्यत्वपक्षे उच्चारणविशेषाणां वर्णविशेषव्यञ्जकत्वनियमवत् कारकव्यापारेष्वपि अभिव्यङ्ग्यनियमोपपत्तेः, ([1]वर्णनित्यत्वपक्षेऽपि ?) रविकिरणैर्युगपदभिव्यङ्ग्ययोर्नैल्योत्पलत्वयोः प्रदीपप्रभया उत्पलत्वस्यैवाभिव्यक्तिः, न नैल्यस्य, वियति विक्षिप्तकूपजलगतशौक्ल्यजलत्वयोः रविकिरणैः सहोपलब्धावपि कूपान्तरावस्थितिसमये रविकिरणैर्जलत्वस्यैवाभिव्यक्तिरित्यादिव्यवस्थादर्शनात् अवस्थानां प्रतिनियतव्यञ्जकव्यङ्ग्यत्वमुपपद्यत इति चेत् – उच्यते । केयमभिव्यक्तिः ? ज्ञानं चेत्, तदा दण्डचक्रादिमेलनस्य घटज्ञान-

1. इदं द्रव्यनित्यत्वपक्षेपीत्येवम्भूतं सत् कारकव्यापारेष्वितः प्राक् स्यात् ।

कारणत्वापत्त्या तदपनयनानन्तरं घटज्ञानादयो न स्युः। आवरणापनयश्चेत्, घटसामग्र्या किमावरणमपनीयते? ननु मृदि पूर्वस्थिता पिण्डावस्था तस्यां नित्यमेव स्थिताया अपि घटावस्थाया आवरणम्। तदावृतत्वात् सा तदा न प्रतीयते। घटसामग्र्या पिण्डावस्थोपमर्दे सति तिलपीडनेन तैलमिव, अवघातेन तण्डुल इव, दोहनेन पय इव, खननेन कूपजलमिव, क्षालनेन पटशौक्ल्यमिव प्रतीयते। न च तथा सति मुद्गरपातानन्तरमपि घटावस्थायाः प्रतीतिप्रसङ्गः। तदावरणभूतायाः पिण्डावस्थाया अपि तिरोहितत्वादिति वाच्यम् - मुद्गरपाताभिव्यक्तायाः कपालत्वावस्थायाः तदावरणत्वात्। कारणेऽभिव्यक्तायाः कस्याश्चित् कार्यावस्थायाः तद्गतसकलकार्यावस्थान्तरावरणत्वाभ्युपगमात्। न च तथासति कपालेषु कदाचित् घटकारणमेलने सति घटावस्थाभिव्यक्तिप्रसङ्गः; इष्टापत्तेः। कपालानि चूर्णीकृत्य जलमृदन्तरसंयोजनमर्दनव्यापारैः मार्दवं प्रापय्य दण्डचक्रादिमेलने घटावस्थाभिव्यक्तिदर्शनात्। न च दग्धपटानां पुनः पटभावो न दृश्यत इति वाच्यम् - तद्भस्मना क्षितितलपतितानां क्षितिप्ररूढकार्पासतरुफलपरिणतौ क्रमेण तेषां पटभावोपपत्तेः। न च तन्त्ववस्थायाः पटावस्थावरणत्वस्य वक्तव्यत्वात् विरलतन्त्वारब्धपटे नतिरोधानशङ्कानास्पदे पटावस्थाभिव्यक्तिर्न स्यादिति वाच्यम्; फलबलेन कुविन्दकृतसंयोगविशेषरहिततन्त्ववस्थायास्तदावारकत्वकल्पनात्। तस्मादविशेषिता [विशेषिता?] वा पूर्वकार्यावस्थैव घटपटाद्यवस्थानामावरणमिति। —

नैतद्युक्तम्। तथातथा परिणाहशालिनी पटावस्था कुविन्दव्यापारात् प्रागपि यथादृष्टेन स्थूलेनैव रूपेण सती तन्तुत्वेनाव्रियते, उत कूर्माङ्गवत् संकुचितेन रूपेण सती। नाद्यः, यथादृष्टरूपायाः पटावस्थायास्तन्तुषु कुविन्दव्यापारात् प्राक् व्यस्तेषु समस्तेषु वा, विप्रकीर्णेषु संहतेषु वा पर्याप्यवृत्त्यसंभवात्। न द्वितीयः, यथादृष्टपटावस्थायाः आगन्तुकत्वापरिहारात्। न च वाच्यम्, अनादिरेव सा पटावस्था अद्यतनेषु तन्तुषु न वर्तते; किंतु मूलकारण इति — तथा सति यत्रेदानीं भविष्यत्पटप्रादुर्भावप्रदेशे तन्तवो न सन्ति, तत्रावरणाभावेन तदभिव्यक्तिप्रसङ्गात्। न च — तत्र या काचन कार्यावस्थास्ति; सैवावरणं स्यादिति वाच्यम्; तस्याः कुविन्दव्यापारानन्तरमपि सर्वत्रावर्जनीयत्वेन सर्वदा पुनरभिव्यक्तिप्रसङ्गात्। तस्मात् कार्याणि सर्वाण्यपि सादीन्येवेति भावः।

**मिथ्यात्वे हेत्वन्तर**मिति । मिथ्यात्वं तु सदसद्विलक्षणत्वात् अन्यत ज्ञाननिवर्त्यत्वादिकमिति भावः । **व्यतिरेकिणं हेतु**माहेति । उपलब्धिविनाश-योगित्वलक्षणं व्यतिरेकिहेतुमाहेत्यर्थः । **पक्षेऽपि साधितत्वेने**ति । प्रतिपन्नोपाधौ बाधितत्वरूपोपाधेः पक्षवृत्तित्वेन साधनव्यापकत्वादिति भावः । उपसंहारादितात्पर्य-लिङ्गस्य प्रागनुक्ततया **यथोक्त**शब्देन परामर्शो न संभवतीत्यस्वरसादाह - यद्वा **किं शब्दत** इति । यद्यपि, "न चागमावगतार्थस्य प्रत्यक्षविरोधः शङ्कनीयः" इति ग्रन्थस्योपरि, "किं शब्दतः प्रतीत्यभावात्" इति पक्षस्य नोत्थितिः संभवति — तथापि संभावनामात्रेणैवमुक्तमिति द्रष्टव्यम् ।

**जीवाज्ञान** [वादि] **पक्ष**मिति । "तदधीनत्वादर्थवत्" इति सूत्रे, "अवि-द्यात्मिका सा बीजशक्तिरव्यक्तशब्दनिर्देश्या परमेश्वराश्रया मायामयी सुषुप्तिः" इति शांकरभाष्यं व्याचक्षाणेन वाचस्पतिना, "जीवाधिकरणाऽप्यविद्या निमित्ततया विषयतया चेश्वरमाश्रयत' इति ईश्वराश्रयेत्युच्यते; न त्वाधारतया; विद्यास्वरूपे ब्रह्मणि तदनुपपत्तेः" इति प्रतिपादनात्,—तत्रैव, "न वयं प्रधानवत् अविद्यां सर्वजीवेषु एकामाचक्ष्महे; येनैवमुपालभ्येमहि। किंतु इयं प्रतिजीवं भिद्यते। तेन यस्यैव जीवस्य विद्योत्पद्यते, तस्यैव सा अविद्याऽपनीयते, न जीवान्तरस्य। भिन्नाधि-करणयोर्विद्याविद्ययोरविरोधात् । तत् कुतः समस्तसंसारोच्छेदप्रसङ्गः? न चाविद्यो-पाधिभेदाधीनो जीवभेदः, जीवभेदाधीनोऽविद्याभेद इति परस्पराश्रयात् उभया सिद्धिरिति सांप्रतम् - अनादित्वात् बीजाङ्कुरादिवदुभयसिद्धेः । अविद्यात्वमात्रेणै-कत्वव्यवहारः" इति प्रतिपादनात्, — तथा, "ज्योतिरुपक्रमातु" इति सूत्रे, "योनिं योनि' मिति वीप्सावशात् योनिशब्दिताविद्या प्रतिजीवं भिद्यते" इति वाचस्पति-नोक्तेश्च वाचस्पत्यभिमतं जीवाज्ञानपक्षमुपन्यस्यतीत्यर्थः । [**अविद्याश्रयत्वेने**-त्यादि ?] **अविद्याश्रयत्वोपपत्ति**रित्यन्तभाष्यस्यैवैतावानर्थ इति भावः; **काल्पनि-कत्वोपपत्ति**रित्यस्य जन्मजरामरणादिकाल्पनिकत्वपरतयोत्तरत्र व्याख्यास्यमानत्वादिति द्रष्टव्यम् । **अशुद्धिविषयभ्रमेणे**ति। शुद्धस्याविद्याश्रयत्वासंभवात् अशुद्ध्यधीनापि अविद्या, अविद्याधीना चाशुद्धिरित्यर्थः ।

भेदवादेऽप्यकौशलं विवक्षितमिति । सबहुमानावलोकनकर्तॄणामित्यर्थः । **उभयतोऽपि भ्रष्टैरिति** । मतान्तरस्थस्य मतान्तरस्थबहुमानलिप्सयोभयतो भ्रष्टत्वावश्यम्भावादित्यर्थः । भाष्ये **आगतोऽसि मदीयं मार्ग**मिति । ब्रह्माज्ञानवादमित्यर्थः । **या जीवभेदकल्पिका** इति । बद्धमुक्तव्यवस्थाहेतुतया जीवाश्रयतया च या अविद्याः संप्रतिपन्नाः तासामेव जीवभेदकल्पकत्वमस्तीति पक्षमनूद्य तत्कल्पकस्य तदाश्रयत्वासंभवादिति पूर्वोक्तदूषणेनैव दूषयतीत्यर्थः । ततश्च पूर्वदूषणे जाग्रति कथं पक्षान्तरोपन्यास इति न चोदनीयम् ; यद्यप्यत्र **कल्पिकाविद्या** इति बहुश आवृत्त्या पठ्यते, तस्य च निर्वाहः संभवति, तथापि कल्पकाविद्येत्येवमित्वरहितः पाठ एव समीचीनः ; लेखकदोषादन्यथा पाठ इति द्रष्टव्यम् । **पूर्वपूर्वजीवभावाश्रयाविद्ये**ति । पूर्वपूर्वजीवभाव आश्रयो निमित्तं यस्या इति बहुव्रीहिः । **भ्रमाश्रय इत्यर्थ** इति । रजतकल्पकत्वं रजतभ्रान्त्याश्रयत्वमिति जीवकल्पकत्वमपि जीवविषयभ्रमाश्रयत्वमिति भावः । **स्वेनैव सापेक्षत्वादि**ति । स्वस्यैव स्वापेक्षत्वे आत्माश्रयत्वमित्यर्थः । **एतद्विभागहेतुरिति** । सर्वज्ञस्यापि तस्य, 'मायिनं तु' इति मायित्वावेदनात् मायाविद्ययोर्भेदोऽस्तीति प्रतिपादनादिति भावः । **तस्याश्चापरमार्थत्वा**दिति । मायाया इच्छाधीनदर्शनानुपपत्तेरपरमार्थत्वाच्चाविद्याकृतमेव तद्दर्शनमित्यर्थः । **वक्ष्यमाणानुमानगर्भ**मिति । "बन्धमोक्षव्यवस्था स्वपरव्यवस्थाश्च स्वाविद्याकल्पिताः" इति वक्ष्यमाणानुमानैः काल्पनिकत्वस्य सिद्धिं मनसि निधायाहेत्यर्थः । **तं च भेदवादिनं चे**ति । जीवाज्ञानवादिमते शरीराणां भिन्नभिन्नजीवैरात्मवत्तया मयैवात्मवन्तीत्यनभ्युपगमादिति भावः । न च प्रथमतृतीययोरप्यनुमानयोर्भेदवादिनिरासकत्वं किं न स्यादिति वाच्यम् - तन्मते, **अपारमार्थिकत्वात् कल्पितत्वा**दिति हेतोरसंप्रतिपन्नत्वादिति द्रष्टव्यम् । **सोपाधिकत्वकालात्ययापदिष्टत्वे**ति । प्रतिपन्नोपाधौ निषेधेन मिथ्यात्वसाधकव्यावर्तमानत्वहेतोः सोपाधिकत्वम्, मिथ्यात्वस्य प्रत्यक्षादिभिर्बाधः, ब्रह्मव्यतिरिक्तस्य सर्वस्य मिथ्यात्वे साध्ये मिथ्यात्वस्य मिथ्यात्वसाधनात् व्याहतिः, ब्रह्मणो व्यावर्तमानत्वात् व्यावर्तमानताया अनैकान्त्यमित्यादिदूषणानि द्रष्टव्यानि । **यदि बाधमात्रमेव हेतु**रिति । यदि बाधमात्रमेवोपाधिरित्यर्थः । **यथा दुर्दिने सायंकालभ्रमान्वित** इति । ननु दुर्दिने सायंकालभ्रमस्थले दुर्दिनरूपकालस्यैवोपाधिशब्दवाच्याधिष्ठानत्वात् देशकालयोरुपा-

धित्वव्यभिचारस्य नेदमुदाहरणमिति चेत् - सत्यम्; अध्यस्यमानकालव्यतिरिक्तस्यैवोपाधित्वमिति तात्पर्यात्। **देशभ्रमे काल उपाधि**रिति। सायंकाले काञ्चीदेशं प्राप्त इति काल उपाधिः। काञ्च्यां सायंकालः संवृत्त इति देश उपाधिरिति द्रष्टव्यम्। **प्रमाणमुक्त**मिति। **अबाधितं दृश्यमान**मिति। भाष्येण प्रत्यक्षं प्रमाणमुक्तमित्यर्थः। **सा प्रतीतिर्मिथ्या चे**दिति। सा प्रतीतिर्भ्रान्तिश्चेदित्यर्थः। भ्रान्तिजनकत्वपक्षेऽपि कार्यकारणभावः सिद्ध एवेति दूषणे सत्येव दूषणान्तरमाह – **बाध ए**वेति।

भाष्ये **स्वस्तिकाश्रितहेम्नोऽप्यनुवृत्तेरविरुद्धे**ति। ननु कथमाश्रयभूतस्य हेम्न आश्रितस्य स्वस्तिकस्य च [अभेदः। तत्?] कथं स्वस्तिकहेमैक्यप्रतीतिर्घटतामिति चेत्, न, गोत्वस्य (हेम्नः?) स्वस्तिकावयवरूपत्वेऽपि द्रव्यत्वादिवत् [अपृथक्सिद्धतया?] सत्त्वेन स्वस्तिकं द्रव्यमितिवत् हेमेति प्रतीतौ विरोधाभावादित्यत्र तात्पर्यात्। **न हि परशरीरगत आत्मे**ति। अपरोक्षत्वे च चेष्टादिभिरनुमीयमानत्वं न स्यादिति भावः। ननु चेतनादन्यस्य जडत्वदर्शनात् सर्वचेतनानामनन्यत्वमित्यस्य प्रागनुक्तत्वात् **यच्च चेतना**दिति भाष्यं न संभवतीत्याशङ्क्याह - **सर्वं चेतनजातमहमेवे**त्यादिना। **अनिष्टप्रसङ्गमाहे**ति। मोक्षार्थश्रवणार्थप्रयत्ने अविद्याकार्यत्वस्योभयवादिसंप्रतिपन्नत्वेन हेतुविधया अनुमानरूपत्वाभावात् तर्करूपत्वं वाच्यमिति भावः। **अभाविन्येव सा पश्चा**दिति। यदीतः पूर्वं कस्यापि मुक्तिर्नास्ति, केषांचिन्मुक्तत्वप्रतिपादिकापि श्रुतिः स्वप्नवाक्यतुल्येत्यर्थः।

**यद्वा निर्विशेषज्ञानस्ये**ति। पूर्व [स्मिन्?] पक्षे निर्विशेषज्ञानस्य ज्ञातृत्वज्ञातृगतत्वयोरभावात् न प्रतिभासव्यवहारौ प्रति हेतुत्वमित्युक्तम्। द्वितीये तु प्रतीयमानतया प्रकारान्तरेण वा न हेतुत्वमित्युच्यत इति भिदा। **पारमार्थिकापारमार्थिकशब्दा**विति। प्रतिभासव्यवहारादेः पारमार्थिकत्वापारमार्थिकत्वयोर्विषयाधीनत्वादिति भावः। **तथात्वेन तेषामानन्त्य**मिति। न्यूनाधिकभावेनानन्त्यमित्यर्थः। अत्र केचित् - "दश घटाः, सहस्रं माषा इति संख्यावत्त्वं दृश्यत" इत्यानन्त्याक्षेपभाष्यस्य, आनन्त्यं दर्शयितुमिति तात्पर्यवर्णनमयुक्तमिति वदन्ति। **दश घटाः सहस्रं माषा इत्युक्त**मिति। न त्वैकरूप्येण दश घटाः दश माषा इति वा, सहस्रं घटाः सहस्रं माषा इति वोक्तमित्यर्थः।

सिद्धान्ते — **प्रतिजानतोऽभिप्रायमिति** । ध्यानस्य विवक्षितत्वात्, "संप्रतिभ्यामनाध्याने" इति नात्मनेपदम् । ननु भाष्ये, वाचेत्यस्य वाक्पूर्वकेण व्यवहारेणेत्यर्थः कथं वर्णित इत्याशङ्कयाह — **अजहल्लक्षणये**ति । **उभयोरपि हेतुत्वाये**ति । वाक्शब्दिताभिलपनस्य नामधेयप्रयोजनत्वेऽपि विकारप्रयोजनत्वाभावात् अजहल्लक्षणया व्यवहारपरामर्शीति भावः । **जात्युक्तिरि**ति ।

"धर्मस्य तदतद्रूपविकल्पानुपपत्तितः ।
धर्मिणस्तद्विशिष्टत्वभङ्गो नित्यसमा भवेत् ॥

इति तल्लक्षणम् । **अवस्थैवोत्पत्तिरित्यभ्युपगमादि**ति । ननु घटत्वावस्थाया एवोत्पत्तिरूपत्वे यावद्घटावस्थत्वम्, उत्पद्यत इति व्यवहारः स्यात्; न तु उत्पन्न इति; उत्पत्तेरनतीतत्वात् । मृत्पिण्डो नश्यतीति च स्यात्; न तु, नष्ट इति; नाशस्यानतीतत्वादिति चेत् — न, घटावस्थागताद्यक्षणसंबन्धः घटत्वावस्थस्योत्पत्तिः, पूर्वावस्थस्य नाश इत्यभ्युपगमेनादोषात् । ननु यस्यागन्तुकत्वमाद्यक्षणसंबन्धश्च, न तस्योत्पत्तिः; यस्य च द्रव्यस्य नागन्तुकत्वम्, नाद्यक्षणसंबन्धश्च, तस्योत्पत्ति[रिति ?] लोकविरुद्धा काचन परिभाषा कृता स्यादिति चेत् — न; श्रुतियुक्त्यनुसारिण्या ईदृश्याः परिभाषाया एव शोभनत्वात् ।

**पृथगुत्पत्तिनिरपेक्षा** इति । ननु, "छन्दांसि यज्ञाः क्रतवो व्रतानि भूतं भव्यं यच्च वेदा वदन्ति", "छन्दांसि जज्ञिरे तस्मात्" इत्यादीनां गुणक्रियोत्पत्तिप्रतिपादकानाम्, नामरूपव्याकरणप्रतिपादकश्रुतीनाम्, गुणक्रियाद्युत्पत्तिग्राहिसर्वलोकप्रत्यक्षादिप्रमाणानाञ्च विरोधप्रसङ्गात् । अन्ततो गत्वा सर्वस्यापि ब्रह्मापृथक्सिद्धतया पृथक्स्थितिप्रतिपत्तिकार्यानर्हत्वेन ब्रह्मव्यतिरिक्तस्यापि उत्पत्त्यभावप्रसङ्गेन सर्वप्रमाणसंक्षोभापत्तेः । न च ब्रह्मापृथक्सिद्धस्य द्रव्यस्योत्पत्तिसंभवेऽपि द्रव्यभिन्नस्योत्पत्तिर्नास्तीति वाच्यम् — विनिगमकाभावात् सर्वप्रकरणविरोधस्याविशिष्टत्वादिति चेत् — सत्यम्; न द्रव्यव्यतिरिक्तानामागन्तुकधर्माणामुत्पत्तिरपलपितुं शक्यते । अभूत्वाभवनरूपोत्पत्तेर्लोकवेदसिद्धतयाऽपलपितुमशक्यत्वात् । अपितु द्रव्ये तादृशोत्पत्तिर्नाभ्युपगन्तुं शक्यते । यदि वैशेषिकादिरीत्या मृदादिव्यतिरिक्तं तदुत्पाद्यद्रव्यान्तरमभ्युपेयते, तदा कारणगुणप्रक्रमेण तस्य गुरुत्वान्तराधिकरणतया गुरुत्वद्वै-

गुण्यमुपलभ्येत । अपिच महति कनकसूत्रे कालायसशृङ्खले वा लोहकारैः संग्रथ्यमाने तत्रान्तरा खण्डसूत्राणि खण्डशृङ्खलानि च जायन्त इत्यभ्युपगन्तव्यम् । अन्यथा-किंचिद्ग्रथनानन्तरमुपरिसूत्रशृङ्खलग्रथने परित्यक्ते ग्रथितभागे सूत्रशृङ्खलव्यवहारो न स्यात्; महासूत्रशृङ्खलग्रथनानन्तरं खण्डिते तस्मिन् सूत्रशृङ्खलव्यवहारश्च न स्यात । एवं च यत्रोपर्युपरिखण्डसूत्रशृङ्खलग्रथनक्रमेण महासूत्रशृङ्खलग्रथनं समापितम्, तत्र खण्डसूत्रशृङ्खलबृन्दारब्धं महासूत्रशृङ्खलमभ्युपगम्येत । तत्र सूत्रशृङ्खलनिर्माणार्थं यावत् सुवर्णं कालायसं वा लोहकारहस्ते दत्तम्, तावत उपादानस्य गुरुत्वम्, तदारब्धखण्डसूत्रशृङ्खलानां गुरुत्वानि, तदारब्धसूत्रशृङ्खलानां प्रत्येकं गुरुत्वानि, तदारब्धमहासूत्रशृङ्खलगुरुत्वं चेत्यतिमहत्तरं गुरुत्वमुलभ्येत । तस्मात् मृत्पिण्डखण्डसूत्रशृङ्खलव्यतिरिक्तं घटशरावमहासूत्रशृङ्खलं तत्त्वतो नास्ती-त्येवाभ्युपगन्तव्यम् । किञ्चोभयसंप्रतिपन्नावस्थयैवोपपत्तौ अवस्थान्तरवतो द्रव्यान्तर-स्याप्युत्पत्तिकल्पने गौरवात्, पूर्वाह्णे मृत्पिण्डात्मया स्थितैव मृत् अपराह्णे घटाद्या-त्मतां भजत इत्यबाधितप्रत्यभिज्ञासिद्धत्वाच्च सतो द्रव्यस्योत्पत्तिर्नास्ति । तत्रोत्पत्ति-वादास्तु अवस्थामात्रनिबन्धना इत्यत्रैव नः संरम्भ इति न कश्चित् दोषः ।

**सद्वारकत्वादविरोध** इति । एकस्मिन् ब्रह्मणि अनेकत्वावस्थायाः सद्वारक-त्वादिति भावः । तन्त्वादिसाधारणं पारमार्थिकं च परिहारमाह — **कालभेदाच्चा-विरोध** इति । ननु विरलतन्त्वारब्धपटे एकस्मिन्नेव काले कथमेकत्वानेकत्वयो-र्युगपदुपलम्भः? एकस्मिन् धर्मिणि विरुद्धधर्मद्वयासंभवादिति चेत्—न; एकस्मिन्नेव वृक्षे मूलाद्यवच्छेदकभेदेन संयोगतदभावसत्त्ववत् कुविन्दकारितसंयोगविशेषावच्छेदेन तन्तुषु पटत्वमेकत्वञ्च, तन्तुत्वावच्छेदेनानेकत्वञ्चेत्युपपत्तेः । ननु कुविन्दकारित-संयोगाः तन्तुत्वसंकीर्णा एवेति कथं विरुद्धधर्मावच्छेदकत्वमिति चेत् — न; एक-स्मिन्नेव वह्नौ आर्द्रेन्धनप्रभववह्नित्वावच्छेदेन व्याप्तेः, तदसंकीर्णवह्नित्वावच्छेदेन व्याप्त्यभावस्य च, आर्द्रेन्धनप्रभववह्नित्वत्वावच्छेदेन व्याप्यत्वावच्छेदकत्ववति वह्नित्वे अविशेषितवह्नित्वत्वावच्छेदेन व्याप्यतावच्छेदकत्वाभावस्य च वृत्त्यभ्युपगमात् । एवं कार्यकारणानन्यत्ववादेऽपि एकस्मिन्नेव द्रव्ये तन्तुत्वावस्थाप्रापकसंयोगविशेषावच्छेदेन तन्तुत्वम्, तन्तुत्वावच्छेदेनानेकत्वञ्च, पटत्वप्रापकतन्तुसंयोगविशेषावच्छेदेन पटत्वम्

तदवच्छेदेनैकत्वञ्चेति पटत्वतन्तुत्वयोरेकत्वानेकत्वयोश्च समावेशोपपत्तेर्न कश्चित् दोषः। एवमुपादानोपादेययोः तृणच्छदिषोरिष्टकाप्राकारयोश्चानन्यत्वेऽपि तृणत्वछदिष्ट्वादिसमावेशे अविरोधो द्रष्टव्यः। इयांस्तु विशेषः — छदिषि तृणानां दीर्घतनुत्वाद्याकारस्य, प्राकारे इष्टकानां चतुरश्रत्वाद्याकारस्य चानुपलम्भ एव। पटे त्वविरलतन्त्वारब्धे तन्तुत्वतदाकृतिविशेषतदनेकत्वानामनुपलम्भः, विरलतन्त्वारब्धे तूपलम्भ इति।

भाष्ये **सदेवेदमिदानी**मिति। अत्र वक्तव्यं प्रथमसूत्र एवोक्तम्। सदेव, **एकमेव,** अद्वितीयमिति वाक्यस्य (वाक्यस्थैवकारैः?) सजातीयविजातीयस्वगतभेदनिषेधः क्रियत इति मतेऽनुपपत्तिमाह — **न हि सजातीये**ति। **कार्यकारणयोरनन्यत्वञ्च लब्धमित्याह — आत्मनो बहुभवनं संकल्प्येती**ति पाठश्चेत्, समीचीनः। **शङ्काविशेषव्युदासकत्वा**दिति। ननु, "सेयं देवता" इत्युत्तरश्रुतिसंदर्भस्य व्यष्टिप्रतिपादनमुखेन निखिलजगदुपादानत्वप्रतिपादनद्वारा एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानिर्वहणार्थप्रवृत्ततया कथं पूर्वसंदर्भप्रतिपादितार्थशङ्काविशेषव्युदासकत्वमिति चेत् — सत्यम्। तस्यापि संभवतस्त्यागायोगात् इति भावः। **चेतनांशैक्यानुपपत्तिमभिप्रयन्नाह — नामरूपविभागाभावेनैकत्वमि**ति। **सच्छब्दस्य जगत्परत्वे तदैक्षतेत्यादिभिर्विरोध इत्यभिप्रयन्नाह — बहुभवनसंकल्परूपेक्षण**मिति पाठश्चेत्, समीचीनः। **स तु कारणावस्थायामेकत्वा**दिति। शरीरशरीरिभावस्य भेदगर्भत्वादिति भावः।

**शक्तौ हस्तिकवाटयोरि**ति। हस्तिकवाटयोरुपपदयोः शक्तौ गम्यमानायां हन्तेष्टक्। हस्तिघ्नो भटः। हस्तिनं हन्तुं शक्त इत्यर्थः। एवं कवाटघ्नश्चोर इत्यपि द्रष्टव्यम्। **शकि लिङ् चे**ति। शक्त्यर्थोपाधिकार्थवृत्तेर्धातोः लिङ् च। चकारात् कृत्याश्च। भवान् खलु भारं वहेत्। भवता खलु भारो वोढव्यः। वोढुं शक्य इत्यर्थः। **कृत्प्रत्ययान्तराणा**मिति। अन्तरशब्दो विशेषवाची। कृत्प्रत्ययविशेषाणाम्, कृत्यप्रत्ययानामित्यर्थः। 'कृत्याश्च' इत्यनुवृत्तेः। भाष्ये **पाचकादिष्वगत्ये**ति। कदापि पाकमकुर्वति शक्तिमात्रेण यत्र पाचकशब्दः प्रयुज्यते, तत्र पाचकशब्दस्य लक्षणेत्यर्थः; न तु तादात्विकपाकाभावमात्रेण पाचकशब्दस्य लक्षणेति

मन्तव्यम् । "तृजादिषु वर्तमानकालोपादानमध्यापक वेदाध्ययनार्थम्" इति वार्तिकेन पूर्वपक्षं कृत्वा, "न वा कालमात्रे दर्शनादन्येषाम्" इति वार्तिकेन धात्वर्थस्य वर्तमानत्वाभावेऽपि ण्वुलादिप्रत्ययसाधुत्वस्य समर्थितत्वादिति द्रष्टव्यम् । न चैवं सुप्ते शास्त्रज्ञादिशब्दमुख्यत्ववत् सुप्तिस्थानीयप्रलयदशापन्ने सन्मात्रब्रह्मणि सर्वज्ञादिशब्दस्य सार्वदिकज्ञानाभावेऽपि साधुत्वसंभवात् ज्ञानस्य नित्यत्वं न सिध्येत् । न हि यः शास्त्रज्ञः, तमानयेत्युक्ते शास्त्रज्ञानस्य नित्यत्वमस्ति । न वा तद्दशायां ज्ञानमस्तीति वाच्यम् – "स्वाभाविकी ज्ञानबलक्रिया च" इत्यत्र भावार्थल्युडन्तज्ञानादिशब्दस्य शक्त्यर्थत्वाभावेन लक्षणत्वावश्यम्भावादिति भावः । यद्वा अध्येष्यमाणशास्त्रे अधीतविस्मृतशास्त्रे वा शास्त्रज्ञ इति प्रयोगाभावेन शास्त्रज्ञादिशब्दस्य वस्तुतो वर्तमानविषयत्वमेव । सुषुप्तादौ तत्प्रयोगश्च वर्तमानत्वोपचारात् लक्षणया । अत एवोत्सृष्टस्रजि पुरुषे स्रग्विशब्दस्य व्यवहाराभावात्, अकुर्वति मृत्पिण्डे कार्यजनननिमित्तस्य कारणशब्दस्य न मुख्यत्वम्; तदा तत्प्रयोगस्तु लाक्षणिक इति मीमांसकोक्तेः अकुर्वद्दशायां पाचकशब्दो लाक्षणिक एव । न चेह तथाऽऽश्रयणं युक्तम्; मुख्यार्थत्वे संभवत्युपचारस्यान्याय्यत्वादिति भावः । **काशस्य कुशत्वेन कुशस्थानेऽवलम्बनमिति** । यद्यपि काशस्य कुशस्यावलम्बनं काशकुशावलम्बनम् – तथापि प्रकृते अस्यार्थस्योचितत्वादेवमुक्तमिति द्रष्टव्यम् । **प्रत्यभिज्ञाप्रत्यक्षसिद्धानन्यत्वमिति** । प्रत्यभिज्ञारूपप्रत्यक्षसिद्धानन्यत्वमित्यर्थः ।

## भावे चोपलब्धेः २ १-१६.

सामानाधिकरण्येन प्रत्यभिज्ञानस्याभिमतत्वे युक्तिमाह—**समवायिकारणानुवृत्तिमिति । स्वपक्षासाधकत्वादिति** । सिद्धान्तासाधकत्वादित्यर्थः । **न हि घटस्थे जल इति** । यद्यपि हिरण्यत्वस्य पृथिवीत्वादिवत् कुण्डलावयवे कुण्डले च सत्त्वाभ्युपगमेन कुण्डलं हिरण्यमिति नोपादानोपादेयाभेदसाधिका—तथापि पिण्डावस्थं तदेव हिरण्यं कुण्डलमभवदिति प्रत्यभिज्ञाया अस्मिन् सूत्रेऽभेदसाधकत्वेन विवक्षितत्वादिति भावः ।

## सत्त्वाच्चापरस्य २-१-१७.

**सोऽयमिति ज्ञानं प्रत्यभिज्ञेति** । प्रत्यभिज्ञा हि द्विविधा – तदर्थविशेष्यिका इदमर्थविशेषणिका, इदमर्थविशेष्यिका तदर्थविशेषणिका चेति ।

यदा संस्कारस्य प्राधान्यमिन्द्रियस्योपसर्जनत्वम्, तदा तदर्थविशेष्यकत्वम्। इन्द्रियस्य तु प्राधान्ये इदमर्थविशेष्यकत्व तदर्थविशेषणकत्वञ्च। ततश्च पूर्वसूत्रे, 'तदेव हिरण्यं कुण्डलमभवत्' इति प्रत्यभिज्ञायाः प्रमाणतयोपादानात् तदर्थविशेष्यकत्वम्। अस्मिंस्तु सूत्रे, 'सदेव सोम्येद' मिति श्रुत्यर्थस्य विवक्षितत्वात् इदमर्थस्य विशेष्यत्वम्, सद्रूपतापत्तेर्विशेषणत्वमिति मतमाश्रित्यैवमुक्तमिति द्रष्टव्यम्। **सोऽयमिति या प्रत्यभिज्ञा सा पूर्वोक्ता। अयं स इति या प्रत्यभिज्ञा सा अत्रोच्यते** इति पाठश्चेत् समीचीनः। **अयं स इति ज्ञानमभिज्ञा। सा अत्रोच्यत** इति पाठे तु न सामीचीन्यम्। अत एव, "अयं स इति विपरीतप्रत्यभिज्ञा" इति **सर्वार्थसिद्धौ** व्यवहृतम्। **श्रुतिसिद्धमिति** वाचारम्भणमिति श्रुतिसिद्धमित्यर्थः। यद्यपि ज्ञानव्यपदेशभेदेन पूर्वोत्तरसूत्रयोर्भिदा पूर्वमेव वर्णिता। तथापीह ज्ञानव्यपदेशयोः श्रुतिसिद्धत्वलोकसिद्धत्वरूपविशेषान्तरमप्यस्तीति प्रदर्श्यत इति द्रष्टव्यम्।

असदिति चेन्न, प्रतिषेधमात्रत्वात् २-१-१८.

**प्रदेशेषु निर्वाहमाह तदैकार्थ्या**दिति ग्रन्थस्यानन्तरं **युक्तेश्चेती**ति प्रतीकोपादानं दृश्यते। न तस्य प्रयोजनं पश्यामः। **कालविशेषविशिष्टदेशविशेषत्व**मिति। यस्मिन् देशे यस्मिन् काले परैः घटाभावोऽभ्युपगम्यते, तत्कालविशिष्टदेशविशेषत्वमेव घटात्यन्ताभाव इत्यर्थः। **अन्यत्वविशेषितदेशान्तरसंसर्गे**ति परिच्छिन्नस्य घटस्य युगपत् देशद्वयेऽप्यवस्थातुमशक्तस्य देशान्तरसंसर्गोऽस्य देशस्य घटात्यन्ताभाव इत्यर्थः। **साधिते सतीत्यर्थ** इति। साधितप्राये सतीत्यर्थः। ततश्च साधितत्वे दृष्टान्तोपन्यासेन साधनीयांशाभावात् दृष्टान्तवैफल्यं स्यादिति शङ्का परास्ता।

पटवच्च २-१-१९.

**यथा विशिष्टे वस्तुनी**ति। यथा चिदचिद्विशिष्टे अंशिभूते ब्रह्मणि एकत्वम्, विशिष्टस्य कृत्स्नस्य व्यक्तित्वात, विशेषणत्वेनांशभूतानां चिदचितां प्रत्येकं भेदः, एवं विशिष्टत्वस्थानीयं पटत्वम्, विशेषणस्थानीयं तन्तुत्वमित्यभिप्रायः। **कृत्स्नतन्तुवृत्तिना पटत्वेने**ति। तन्तुष्वेव तन्तुत्वावच्छेदेनानेकत्वं पटत्वावच्छेदेनैकत्वमित्यर्थः। ननु अतिरिक्तपटानभ्युपगमे तन्तुषु पटांशत्वव्यवहारः कथम्?

तन्त्वन्तरं प्रति तन्त्वन्तरस्यांशत्वाभावादित्याशङ्क्याह — **पृथगवस्थानदशायामिति** । **अंशिन एकत्वं चेति** । संघातो विशेष्यमशी च । तन्तवो विशेषणभूताः, अंशाश्चेति भावः । **पटस्य (पटं प्रति) प्रादेशिकविशेषणानि भवन्तीति** । तन्तुपटयोरभेदेऽपि तन्तून् प्रति प्रादेशिकविशेषणत्वाभावेऽपि पटं प्रति प्रादेशिकविशेषणानि भवन्ति ; आकारभेदसत्त्वादिति भावः । **प्रादेशिकविशेषाः कादाचित्का इति** । कादाचित्का एवेत्यर्थः । **स्वाभाविकांश [ भेद ? ] वादोऽपि निरस्त** इति । स्वाभाविकांशसद्भावे केचन प्रादेशिकविशेषाः नित्या अपि स्युरिति भावः । **गगनादिव्यापकपदार्थानामिति** । गगनादिरूपव्यापकपदार्थानामित्यर्थः । गगनादीनां क्षणिकत्वमेवोपपादयति — **परिणामविशेषा** इत्यादिना ।

इति आरम्भणाधिकरणम् ।

---

## (७) इतरव्यपदेशाधिकरणम् ।

अधिकं तु भेदनिर्देशात् २-१-२२.

**अर्हशब्दो मुक्तव्यावृत्तिपर** इति । सुखदुःखयुक्तात् प्रत्यगात्मनोऽधिकमित्युक्ते मुक्तादाधिक्यं न प्रतिपादितं स्यादित्यर्थः ।

**अश्मादिवच्च तदनुपपत्तिः २-१-२३**

ननु 'उभयेऽपी' ति सूत्रस्य कथमादिपदग्राह्यत्वम् ? तस्य भेदप्रतिपादनमात्रप्रवृत्तत्वेन प्रकारप्रकारिभावाप्रतिपादकत्वादित्याशङ्क्याह — **उभयेऽपीत्यादिसूत्रमिति** । **घटकवाक्यविषयमिति** । 'यो विज्ञाने तिष्ठन्' इत्यादिना शरीरशरीरिभावप्रतिपादनादिति भावः ।

भाष्ये — **अविद्यावियुक्तावस्थामभिप्रेत्येति** । नित्यशुद्धबुद्धमुक्तस्वभावस्य ब्रह्मणो जीवात् भेदं वर्णयन्तीत्यर्थः । एवं ह्यत्र परेषां भाष्यम्, "यत् सर्वज्ञं सर्वशक्ति ब्रह्म नित्यमुक्तशुद्धमुक्तस्वभावं शारीरात् अधिकम् = अन्यत्, तत् वयं जगतः स्रष्टृ ब्रूमः" इति । ततश्च अविद्यावियुक्तावस्थामभिप्रेत्येति वदन्तं प्रति,

किमविद्यावियुक्तस्य वा तत्संसृष्टस्य वेति विकल्पमुखप्रवृत्तोत्तरभाष्यस्य कथं प्रवृत्तिः, कथं वा ब्रह्मणो जीवात् भेदे वक्तव्ये जीवस्य ब्रह्मणो भेद इति शङ्काद्वयं निरवकाशम्; तस्य वाक्यस्य नित्यशुद्धस्वभावस्य ब्रह्मणो जीवप्रतियोगिकभेदस्य प्रतिपादनपरत्वेनादोषादिति द्रष्टव्यम्। तत्र परभाष्ये नित्यशुद्धमुक्तबुद्धस्वभावमिति विशेषणादविद्यावियुक्तस्येति पक्षस्योत्थानम्, सर्वज्ञं सर्वशक्तीति विशेषणादविद्यापरिकल्पितस्येति पक्षस्योत्थानमिति पक्षद्वयसंभवं हृदि निधाय विकल्प्य दूषयतीत्याह - **जीवाद् विद्यायुक्तस्येत्यादि**। **अकल्पितजीवस्वरूपज्ञानस्ये**ति। परमार्थप्रत्यगभिन्नब्रह्मस्वरूपज्ञानाय विचारस्य कर्तव्यताया जिज्ञासासूत्रे प्रतिपादनादित्यर्थः। "अबाधिते तु भेदव्यवहारे, "सोऽन्वेष्टव्यः, स विजिज्ञासितव्यः" इत्येवञ्जातीयकेन भेदनिर्देशेनावगम्यमानं ब्रह्मणोऽधिकत्वं हिताकरणादिदोषं निरुणद्धि" इति परभाष्योक्तमर्थादनुवदति - **किंच तत्त्वमस्यादिवाक्यार्थप्रतिबोधात् प्राक् भेदेन प्रतिपाद्यमानस्य हिताकरणाद्यप्रसक्तिरिति**। **भेदेन प्रतिपाद्यमानस्य**। भिन्नतया निर्दिश्यमानस्येत्यर्थः। ननु भेदसत्त्वेऽपि तान् जीवान् आत्माभिन्नान् अनुभवतो हिताकरणादिदोषः किं न स्यादित्याशङ्क्य, "सत्यमयं परमात्मा सर्वज्ञत्वात् यथा जीवान् वस्तुत आत्मनोऽभिन्नान् पश्यति, एवं तत्त्वत एषां न सुखदुःखादिवेदनासंयोगोऽस्ति, अविद्यावशात् तेषां तद्वदभिमान इति पश्यति। तथाच तेषां सुखदुःखादिवेदनायामपि अहमुदासीन इति न तेषां बन्धनागारनिवेशोऽप्यस्ति काचित् क्षतिर्ममेति [पश्यतीत्यतो ?] न हिताकरणादिदोषापत्तिः" इति वाचस्पतिनोक्तमनुवदति - **मिथ्याभूतैर्जीवगतदोषैरि**ति। अस्यायं भावः - यथा ईश्वरः सर्वज्ञत्वात् स्वाभिन्नतया जीवान् पश्यति, तथा सर्वज्ञत्वादेव तद्गतांश्च दोषान् मिथ्यात्वेन पश्यत्येवेति तस्य संसारप्रवर्तनेऽपि स्वाभिन्नस्य दुःखाप्रसक्तेर्न हिताकरणादिदोषप्रसङ्ग इति। "यदा तत्त्वमसीत्यवंजातीयकेनाभेदनिर्देशेनाभेदः प्रतिबोधितो भवति, अपगतं भवति तदा जीवस्य संसारित्वं ब्रह्मणश्च स्रष्टृत्वम्; समस्तस्य मिथ्याज्ञानविजृम्भितस्य भेदव्यवहारस्य सम्यग्ज्ञानोदयेन बाधात्। तत्र कुत एव सृष्टिः ? कुतो वा हिताकरणादयो दोषाः" इति [पर ?] भाष्य

1. भामत्यां किञ्चिदन्यथाभूतमपि वाक्यं तत्राप्यनन्वितमेव लक्ष्यते।

नुवदति · **ऐक्यज्ञानोदयात्** पश्चादिति । **वक्तृणा**मित्यादि । अयं भावः - त्वमस्यादिवाक्यजन्यज्ञानात् प्राक् भेदव्यवहारः । ततः पश्चात् न भेदव्यवहार इति कु युक्तम् । "तद्योयो देवानां प्रत्यबुध्यत, स एव तदभवत्" इति श्रुते , "शुकस्तु ारुताच्छीघ्रां गतिं कृत्वाऽन्तरिक्षगः । दर्शयित्वा प्रभावं स्वं सर्वभूतगतोऽभवत् ॥" यादिशुकमुक्तत्वप्रतिपादकप्रमाणाच्च शुकादीनां तत्त्वज्ञानावश्यम्भावात् । शुकादीनां ातेऽपि तत्त्वज्ञाने इतरेषां यथापूर्वं भेदव्यवहारस्य स्थिरत्वात्, यस्य तत्त्वज्ञानम्, स्य न भेदप्रतिभास इत्येव वक्तव्यम् । ततश्चेश्वरस्य तत्त्वज्ञाने विद्यमानेऽपि भेद-तिभाससंसारतन्त्रप्रवर्तकत्वादिकं न स्यादिति । **भेदप्रतिपत्ते**रिति । ल्यब्लोपे पञ्चमी । दप्रतिपत्तिमपेक्ष्येत्यर्थः । ईश्वरस्य तत्त्वमस्यादिवाक्यार्थानवबोधाधीनभेदप्रतिपत्त्य-ानस्रष्टृत्वनिबन्धनदोषपरिहारोऽनुपपन्न इत्यर्थः । स्रष्टृत्वे सति हिताकरणादिदोषः रेहार्यः । तत्त्वमस्यादिवाक्यार्थानवबोधाधीनभेदप्रतिपत्त्यधीनस्रष्टृत्वस्यैवाभावेन सृष्टि ाबन्धनहिताकरणादिदोषाप्रसक्त्या तत्परिहारो न प्रतिपाद्यः स्यादिति भावः ।

**दोषपरिहारश्चानुपपन्न** इति । ननु परभाष्ये, "अश्मादिवच्च तदनुप-त्तिः" इति सूत्रे,—पाषाणत्वाद्यविशेषेऽपि वज्रवैडूर्यसूर्यकान्तादिवैचित्र्यवत वृक्षे त्रपुष्पादिवैचित्र्यवत् स्वप्नदृश्यभाववैचित्र्यवत् जीवप्राज्ञपृथक्त्वमुपपन्नमित्युक्तम् । च सूत्रं [न?] हिताकरणादिदोषप्रसक्तिनिरासकतया परैर्व्याख्यातम् । "यदि ह्मविवर्तो जगत् स्यात्, हन्त, सर्वस्यैव जीववच्चैतन्यप्रसङ्ग इत्यत आह · अश्मादि-च तदनुपपत्तिः" इति वाचस्पतिना, "अश्मादिवच्च तदनुपपत्तिः" इति सूत्रस्या-ारितत्वेन तस्य सूत्रस्य चिदचिद्वैचित्रीमात्रप्रतिपादनपरत्वेन हिताकरणादिदोषपरिहार-त्वाभावे न वक्ष्यमाणदोषाणां प्रसक्तिरिति चेत, सत्यम्, वाचस्पतिना तथा ाख्यातम् । न तु तत् उपपत्तिमत् । हिताकरणादिदोषप्रसङ्गे तद्वैचित्र्यशङ्काया नुत्थितेस्तत्परिहारस्यावक्तव्यत्वात् । "न विलक्षणत्वात्" इत्यादौ कृतकरत्वाच्च । तो वाचस्पत्युक्तस्यानुपपन्नतामभिप्रेत्य यथाश्रुतभाष्यदूषणमुपन्यस्तम् । **कर्मारब्धे**-ति । शरीरेणेति शेषः । **कर्मवश्येने**ति । जीवेनेति शेषः । **तत्रासत्कार्य**-**ादनिराकरणं दृश्यत** इति । तत्रासत्कार्यवादनिराकरणस्यापि दर्शनादित्यर्थः ॥

इति इतरव्यपदेशाधिकरणम्

## (८) उपसंहारदर्शनाधिकरणम् ।

उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि २-१-२४

**संकुचितवृत्तित्वशङ्कोत्थानादिति** । उपकरणान्तरसद्भावदशायां संकल्पस्य सत्यत्वेऽपि तद्राहित्यदशायां संकल्पस्य सत्यता नास्तीति संकोच इत्यर्थः । किं बाह्यकारणसापेक्षत्वमुच्यते, उतान्तरकारणसापेक्षत्वम्? आद्ये क्षीरादौ व्यभिचारः । द्वितीये कालादृष्टाद्यनन्तकारणसद्भावान्न ब्रह्मणः स्रष्टृत्वविरोध इत्यभिप्रयन्नाह - भाष्ये **यथा क्षीरजलादेरिति** । **वैदिकं दृष्टान्तमाहेति** । क्षीराद्यचेतनस्य कार्यजनने बाह्यकारणनिरपेक्षत्वेऽपि चेतनस्य बाह्यकारणान्तरसापेक्षत्वमस्तीत्याशङ्क्य वैदिक-दृष्टान्तमाहेत्यर्थः ।

देवादिवदपि लोके २-२-२५

भाष्ये **सुखग्रहणायेति प्रतिपत्तव्यमिति** । परिमितशक्तीनां देवादीनामपि श्रुतिवशात् तादृशसामर्थ्येऽभ्युपगम्यमाने किमु वक्तव्यं सर्वशक्तेः परस्य ब्रह्मण इति ग्रहणायेत्यर्थः ।

---

## (९) कृत्स्नप्रसक्त्यधिकरणम् ।

सर्वोपेता च तद्दर्शनात् २-२-३०

श्रुतेस्तु शब्दमूलत्वादिति सूत्रेण पौनरुक्त्यमाशङ्क्याह - **श्रुत्या निरवयवत्वेति** । ननु अपहतपाप्मेत्यादीनामपि धर्मिवैलक्षण्यद्वारा सर्वशक्तियोगलक्षण-धर्मवैलक्षण्यापादकत्वस्यापि संभवात्, 'सत्यकामः सत्यसंकल्पः' इत्यस्य विशिष्य सर्वशक्तियोगप्रतिपादकत्वकथनं भाष्ये कथमित्याशङ्क्याह - **एवं धर्मिवैलक्षण्यादिति** । **आसन्नेति** । धर्मिवैलक्षण्यात् धर्मवैलक्षण्यमात्रं सिद्ध्येत्; न तु सर्वशक्तियोगरूपधर्मविशेषः । पारिशेष्यादिना तत्सिद्धिस्तु विलम्बिता । सत्यसंकल्पत्व-लक्षणकार्यलिङ्गकसर्वशक्तिप्रतीतिस्तु शीघ्रं भवतीति भावः ।

विकरणत्वान्नेति चेत् तदुक्तम् २-१-३१

**चन्द्रद्वित्वाभावेऽपि चन्द्रो बहुधा विभज्यत** इति पाठो दृश्यते। वस्तुतः ([1]वस्तुतस्तु) चन्द्रानेकत्वाभावेऽपि चन्द्राऽनेकधा प्रतीयत इत्यर्थः। वस्तुतोऽनेकत्वशून्यस्यापि चन्द्रस्य तिमिरदोषकल्पितानेकत्ववदिति तदर्थपर्यवसितोऽर्थः। "**नात्मा श्रुतेः**" इत्यादि। एषु सूत्रेषु श्रुतिशब्दादिपदस्य मिथ्याविषयत्वाभावस्य सिद्धत्वादित्यर्थः। **नित्यसंपन्नत्वादिति**। ततश्च सुषुप्तिकाल इत्यनुपपन्नमिति भावः। **तस्यैन्द्रियिकत्वादिति**। ततश्च द्रष्टव्य इति विधिवैयर्थ्यमिति भावः। द्वितीयपक्षे परिहारमाशङ्कते - **यदेव ब्रह्मेति**। ननु सर्वत्रापरमार्थभूतेऽविद्यासंसर्गे विद्यमानेऽपि परमार्थभूताविद्यासंसर्गाभावात् न कृत्स्नप्रसक्तिरित्याशङ्कते - **परमार्थभूत** इति। **न तावता अविद्यावि ( निर्मु ) युक्त ब्रह्मसिद्धिरिति**। परिणामोपयोगिन्या अविद्यया वियुक्तब्रह्मसिद्धिरित्यर्थः। सर्वमपि ब्रह्म जगदाकारेण परिणमेतेत्यर्थः। **यादृशोऽभिमत इति**। जगदाकारेण परिणामोपयोगी यादृशोऽभिमत इत्यर्थः। कार्यप्रयोजकाकारे विद्यमाने तदप्रयोजकाकारनिवृत्तेरप्रयोजकत्वे दृष्टान्तमाह - **यथा स्वप्नदृष्टेति**।

**किंच किमविद्याकल्पितेति**। ननु शंकरभाष्ये, "अविद्याकल्पितेन च नामरूपलक्षणेन रूपभेदेन व्याकृताव्याकृतात्मकेन तत्त्वान्यत्वाभ्यामनिर्वचनीयेन ब्रह्म परिणामादिसर्वव्यवहारास्पदत्वं प्रतिपद्यते, पारमार्थिकेन च रूपेण सर्वव्यवहारातीतमपरिणतमवतिष्ठत" इति शृङ्गग्राहिकया अनिर्वचनीयस्य नामरूपलक्षणभेदस्यैवाविद्याकल्पितरूपत्वेन प्रदर्शितत्वात्, तथा वाचस्पत्येऽपि, "नामरूपलक्षणेन रूपभेदेन व्याकृताव्याकृतात्मना तत्त्वान्यत्वाभ्यामनिर्वचनीयेन परिणामव्यवहारास्पदं ब्रह्म प्रतिपाद्यते। न च कल्पितं रूपं वस्तु स्पृशति। न हि चन्द्रमसि तैमिरिकजनस्य द्वित्वकल्पनं चन्द्रमसो द्वित्वमावहति। द्वित्वानुपपत्त्या वा चन्द्रमसोऽनुपपत्तिः। तस्मादवास्तवी परिणामकल्पना अनुपपद्यमानापि न परमार्थसतो ब्रह्मणोऽनुपपत्तिमाव-

---

1. वस्तुतस्तु इति क्वचित् पाठः। तद्दर्शनादेवमुन्नीयते, यत् - टीकायां "न हि चन्द्रद्वित्वाभावेऽपि" इति नहीत्येतद्घटितपाठो दृश्यत इति प्रदर्श्य तदनुपपन्नत्वसूचनपूर्वकवास्तवपाठप्रदर्शनार्थप्रवृत्ता स्यादिह भावप्रकाशिकेति।

इति" इति स्पष्टं प्रतिपादितत्वाच्च कथमस्य विकल्पस्यावकाशः। अस्तु वा कथंचिदवकाशः, तथाप्यविद्याविशिष्टस्य वा तदुपलक्षितस्य वा प्रधानस्य वा अविद्याकल्पितरूपभेदशब्दार्थत्वे तेषामवयवत्वमेव सिद्ध्येत्; न तु सावयवत्वम्। यथा देवदत्तो यज्ञदत्तेन पितृमानिति उक्ते यज्ञदत्तस्य पितृत्वमेवायाति, न तु पितृमत्त्वम्—एवमविद्याकल्पितरूपभेदेन सावयवमित्युक्ते अविद्याकल्पितरूपभेदस्यावयवत्वमेव सिद्ध्येत्; न तु सावयवत्वमिति चेत्—न, **अविद्याकल्पितरूपभेदेन सावयवत्व**मित्यस्याविद्याकल्पितरूपभेदयुक्तं यत् सावयवत्वमित्यस्याप्यर्थस्य संभवात्। तत्र च सावयवत्वेन प्रतिपिपादयिषितमविद्याकल्पितनामरूपयुक्तं ब्रह्म किमविद्याविशिष्टम् उत उपलक्षितम्, उत प्रधानमिति विकल्पसंभवान्नानुपपत्तिः। **किमविद्याकल्पितरूपमित्यविद्याविशिष्ट**मिति ग्रन्थे अविद्याकल्पितं रूपं यस्येति बहुव्रीहिः। ततश्चाविद्याकल्पितनामरूपयुक्तमित्यर्थः। अतो नानुपपत्तिरिति द्रष्टव्यम्।

**तदुभयविरोधपरिहार** इति। कृत्स्नप्रसक्तिनिरवयत्वपरिहार इत्यर्थः। **पाश्चात्त्यसूत्रद्वयार्थस्ये**ति। "सर्वोपेता च", "विकरणत्वान्नेति चेत्—" इति सूत्रद्वयार्थस्येत्यर्थः। **उपपाद्यकोटिघटक**मिति। सर्वकारणत्वोपपाद्यत्वान्नामरूपोपेतत्वस्येत्यर्थः। ननु निरवयवस्य सर्वकारणत्वे श्रुतिवाक्यस्यैव साक्षादुपपादकत्वात् तदेवास्मिन् विवक्ष्यताम्। किं सर्वशक्तियोगोपन्यासेनेति [1] (..................)

इति कृत्स्नप्रसक्त्यधिकरणम्।

---

## (१०) प्रयोजनवत्त्वाधिकरणम्।

लोकवत्तु लीलाकैवल्यम् २-१-३३.

**कन्तुकाद्यारम्भस्य लीलात्वं युक्त**मित्यादे। ननु, "केवलं लीलैकप्रयोजनाः कन्तुकाद्यारम्भा दृश्यन्ते", "जन्मस्थितिध्वंसादेः लीलैव प्रयोजनम्" इति

---

1. अयं शङ्का ग्रन्थः। समाधानग्रन्थो भ्रष्ट इति ध्येयम्।

कन्तुकारम्भजन्मस्थितिध्वंसादेः लीलाप्रयोजनकत्वप्रतिपादकभाष्ये विद्यमाने तदनादरेण, "कन्तुकाद्यारम्भस्य लीलात्वं युक्तम् यत्नगौरवाभावात् । जगद्व्यापारस्य लीलात्वमनुपपन्नम्" इति कथं व्यापारस्यैव लीलात्वकथनमिति चेत् — अत्र केचित् — "क्रीडार्थं सृष्टिरित्यन्ये भोगार्थमिति चापरे। देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहा ॥" इति माण्डूक्यश्रुतौ(?) सृष्टेः लीलार्थत्वस्य परपक्षत्वोपन्यासात् लीलाशब्दोऽत्रानायासकर्मपरः, 'लीलामात्रमेतदस्य भारत्रयधान्यवहनम्' इति तत्रापि प्रयोगदर्शनात् । यथाङ्गुलिचालनादयोऽनायाससाध्याः क्रियाः न प्रयोजनापेक्षाः । अत एव न तत्र प्रयोजनप्रश्नः । तत्प्रश्नेऽपि तूष्णीमेवोत्तरम् — एवं परमात्मनोऽप्यनायाससाध्याः सृष्ट्यादिक्रियाः न प्रयोजनापेक्षाः । अत्र च, "अखिलभुवनजन्मस्थेमभङ्गादिलीले" इत्याद्यपद्यस्यैव विवक्षितत्वात् । "केवललीलैकप्रयोजनाः कन्तुकाद्यारम्भाः", "ध्वंसादेर्लीलैव प्रयोजनम्" इति भाष्यस्यापि स्वस्य स्वयं दास इतिवत् स्वस्य स्वयमेव प्रयोजनमित्यर्थे तात्पर्यम् इत्येवाचार्याभिप्रायं वर्णयन्ति ।

## सर्वधर्मोपपत्तेश्च २-१-३६

**स्वान्यत्वज्ञानाच्चेति** । **न लीलासंभव** इत्युत्तरत्रान्वयः । **विषमसृष्ट्या संबन्धमर्हतीति** । न तु परीत्या ईश्वरेण सृष्ट्येत्यर्थः । **न हीश्वरश्चेत् कर्मसापेक्ष** इति । नियमो न हीत्यर्थः । एवं **सृष्टिश्चे**दित्युत्तरवाक्येऽपि द्रष्टव्यम् । **समष्टितरसृष्टा**विति । ननु कार्यमात्रे जीवादृष्टस्य कारणत्वात् तत्रापि कर्मसापेक्षत्वं शक्यते वक्तुमिति चेत् — न; मुक्तापेक्षितमातापित्रादिभोग्यसृष्टौ व्यभिचारेण सर्वत्र कार्ये तत्सापेक्षत्वाभावादिति भावः ।

**सूत्राभिप्रायो भवतीत्यभिप्रायेणाहे**ति । सूत्राभिप्रेतो भवतीत्यभिप्रायेणोक्तवानित्यर्थः । **सूत्रमप्यधिकरणान्तरमाहुरि**ति । यद्यपि मृषावादिमतेऽपीदं सूत्रमधिकरणान्तरमिति कल्पतरौ व्यक्तमुक्तम्,—तथापि भाष्यभामत्योरप्रतीतत्वादेवमुक्तमिति द्रष्टव्यम् । **प्रलयात्ययज्ञानजन्यत्वादि**ति । प्रलयोऽतीत इति ज्ञानजन्यत्वादित्यर्थः । **योग्यतायां योग्यतान्तरानुपपत्तेरि**ति । प्रबोधशक्तेरपि

योग्यतारूपत्वादिति भावः । **प्रलयकालात्ययज्ञानादिति** । प्रलयकालात्ययं जानातीत्यर्थः ॥

इति प्रयोजनवत्त्वाधिकरणम् ॥

इति दशोपनिषद्भाष्यकारैः श्रीमद्रङ्गरामानुजमुनिभिः विरचितायां

श्रुतप्रकाशिकाव्याख्यायां भावप्रकाशिकायां

द्वितीयाध्यायस्य प्रथमपादः ॥

श्रीमते रङ्गरामानुजमहादेशिकाय नमः ॥



श्रीमते भगवद्रामानुजाय नमः ॥

श्रीमते रङ्गरामानुजमहादेशिकाय नमः ॥

श्रुतप्रकाशिकाव्याख्या भावप्रकाशिका ॥

## द्वितीयाध्याये द्वितीयपादः ।

## (१) रचनानुपपत्त्यधिकरणम् ।

—:※:—

**रचनानुपपत्तेश्च नानुमानं प्रवृत्तेश्च २-२-१.**

भाष्ये **मूलप्रकृतिर्नाम सुखदुःखमोहात्मकानीत्यादि।** यथाहुः साङ्ख्याः—

"प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः ।
अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः ।
सत्त्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलं च रजः ।
गुरु वरणकमेव तमः प्रदीपवच्चार्थतो वृत्तिः ॥"

इति । अयमर्थः—गुणाः सत्त्वरजस्तमांसि, प्रीत्यप्रीतिविषादात्मकाः । क्रमात् सुखदुःखमोहात्मानः—तस्मादेव प्रकाशप्रवृत्तिनियमप्रयोजनाः । स्वच्छं सत्त्वं प्रकाशयति । प्रकाशकार्ये सत्त्वं प्रवर्तयति रजोगुणः । लघोः सत्त्वगुणस्य रजसा सर्वत्र प्रवर्तने प्रसक्ते यथाकार्यं गुरुः तमोगुणो नियच्छति । ततश्च तमोनियतं रजः क्वचिदेव प्रवर्तयति । तेन क्वचिदेव प्रवर्तितं सत्त्वं किंचिदेव प्रकाशयति । अतो न सर्वं सर्वदा सर्वस्य प्रकाशत इति व्यवस्था । एवं गुणानां प्रयोजनं स्वरूपञ्चोक्तम् । तेषां व्यापार उच्यते—अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च । वृत्तिः = व्यापारः, प्रत्येकमभिभवादिभिः संबध्यते, अन्योन्याभिभववृत्तयो गुणाः, तेषामन्यतमेन प्रयोजनवशात् उद्भूतेनान्यतमोऽभिभूयते, तथा हि—सत्त्वं रजस्तमसी कदाचिदभिभूय शान्तां स्ववृत्तिं लभते; एवं रजः सत्त्वतमसी अभिभूय घोरां स्ववृत्तिम्; तथा तमः सत्त्वरजसी अभिभूय मूढां स्ववृत्तिमिति। अन्योन्याश्रयवृत्तयश्च गुणाः । यदपेक्षया यस्य व्यापारो भवति, स तस्याश्रयो विवक्षितः । अन्योन्यजननवृत्तयश्च गुणाः।

अन्यतमेनान्यतमो जन्यते । जननमत्र परिणामविशेषः । अन्योन्यमिथुनवृत्तयश्च । अन्योन्यसहचराः, अविनाभूता इत्यर्थः ॥

" अन्योन्यमिथुनाः सर्वे सर्वे सर्वत्रगामिनः ।
नैषामादिः संप्रयोगो वियोगो वोपलभ्यते ॥ "

इति हि तदागमः । सत्त्वं लघु प्रकाशकमिष्ट साङ्ख्याचार्याणाम् । तत्रानलपवनादीना-मूर्ध्वज्वलनतिर्यग्गमनादिहेतुः धर्मो लाघवम् । सत्त्वतमसी रजसा स्वकार्योन्मुखेन.... ........कार्येते इत्येतत् रजस उपष्टम्भकत्वम् । तदुपपादकं विशेषणं चलमिति । रजः सक्रियमक्रिययोः सत्त्वतमसोः कार्योन्मुखावस्थापादकमिति चलविशेषणेन दर्शितम् । तमस्तु गुरु । अत एव स्वयं चञ्चलतया लघु सत्त्वमपि चालयद्रजो गुरुणा तमसा तत्तत्र प्रवृत्तिप्रतिबन्धकेन क्वचिदेव'प्रवृत्तिमत् क्रियत इति वरणकं=नियामकं तमः । परस्परविरोधिनामप्येषामेककार्यकरणत्वमुच्यते –प्रदीपवच्चार्थतो वृत्तिः । यथा वर्तितैले पावकविरुद्धे अपि मिलिते सह पावकेन रूपप्रकाशनं कार्यं कुरुतः, एवं सत्त्वरजस्त-मांसि परस्परविरुद्धान्यपि अर्थवशात् सह कार्यं कुर्वन्तीति । उपष्टम्भकं = धारण-मिति । सत्त्वतमसोः कार्योन्मुख्यापादकत्वमेव रजसो धारकत्वमिति भावः —

भाष्ये **सर्वज्ञज्ञानमूल** इति । पौरुषेय इति यावत । भाष्ये –**एकमूलत्व-मवश्याभ्युपगमनीय**मिति । प्रपञ्चस्य प्रधानमूलकत्वकल्पनायां तदैक्याल्लाघवम्; परमाणुकारणकत्वकल्पनायाम् एकस्य परमाणोः सर्वकारणत्वायोगेन कारणबहुत्व-कल्पनावश्यम्भावात् गौरवमित्येकमूलकमिति अत्राभिप्रेतम् । भाष्ये **षड्भिः पार्श्वै-**रिति । यथा दशदिक्संबन्धिदशप्रदेशवन्तोऽङ्गुल्यादयः परस्परं संश्लिष्यमाणाः एकया महादिशा विदिक्द्वयेनावच्छिन्नैः प्रत्येकं त्रिभिस्त्रिभिः प्रदेशैः संबध्यन्ते, एवं तन्तवोऽपि संश्लिष्यमाणाः प्रत्येकमसंयुक्तस्वपार्श्वयुक्ताः स्वाधिकपरिमाणं पटादि-कार्यमारभन्ते । तथा निरवयवेषु परमाणुषु संयुज्यमानेषु असंयुक्तप्रदेशासंभवात् तेषां स्वाधिकपरिमाणकार्यारम्भकत्वं न स्यादित्यर्थः ।

भाष्ये **भेदानां परिणामा**दिति, अयं हि–श्लोको वाचस्पतिना एवं व्याख्यातः,—

"स्यादेतत — व्यक्ताद् व्यक्तमुत्पद्यत इति कणभक्षाक्षचरणादयः । परमाणवो हि व्यक्ताः । तैर्द्व्यणुकादिक्रमेण पृथिव्यादिलक्षणं व्यक्तमारभ्यते । पृथिव्यादिषु च कारणगुणपूर्वगुणक्रमेण रूपाद्युत्पत्तिः । तस्माद्व्यक्तात् व्यक्तस्य तत्कार्यस्य गुणस्य चोत्पत्तिरिति कृतमव्यक्तेनादृष्टचरेणेति — अत आह भेदानामिति । भेदानां विशेषाणां महदादीनां भूतान्तानां मूलकारणमस्त्यव्यक्तम् । कुतः? कारणकार्यविभागात् अविभागाद्वैश्वरूप्यस्य । कारणे सत् कार्यमिति हि स्थितम् । यथा कूर्मशरीरे सन्त्येवाङ्गानि निःसरन्ति विभज्यन्ते, इदं कूर्मशरीरम्, एतान्यस्याङ्गानीति ; एवं निविशमानानि तस्मिन् अव्यक्तानि भवन्ति—एवं कारणात् मृत्पिण्डात् सुवर्णपिण्डाद्वा कार्याणि घटमकुटादीनि सन्त्येव विभज्यन्ते; सन्त्येव पृथिव्यादीनि कारणात् तन्मात्राद्विभज्यन्ते ; सन्त्येव तन्मात्राण्यहंकारात् कारणात् ; सन्नेव चाहंकारः कारणान्महतः ; सन्नेव च महान् परमाव्यक्तादिति । सोयं कारणात् परमाव्यक्तात् साक्षात् पारम्पर्येण विश्वस्य कार्यस्य विभागः । प्रतिसर्गे तु मृत्पिण्डं सुवर्णपिण्डं वा घटमकुटादयो विशन्तोऽव्यक्तीभवन्ति, तत्कारणस्वरूपमेवानभिव्यक्तं कार्यमपेक्ष्याव्यक्तं भवतीति — एवं पृथिव्यादयः तन्मात्राणि विशन्तः स्वापेक्षया तन्मात्रमव्यक्तयन्ति ; एवं तन्मात्राण्यहंकारं विशन्ति अहंकारमव्यक्तयन्ति ; एवमहंकारो महान्तमाविशन् महान्तमव्यक्तयति; महान् प्रकृतिं स्वकारणमाविशति । प्रकृतेस्तु न क्वचिन्निवेश इति सा सर्वकार्याणामव्यक्तमेव । सोयमविभागः प्रकृतौ वैश्वरूप्यस्य = कार्यस्य । तस्मात् कारणे कार्यस्य सत एव विभागाविभागाभ्यामव्यक्तं कारणमस्ति ।

इतश्चाव्यक्तं कारणमस्तीत्याह शक्तितः प्रवृत्तेश्चेति । कारणशक्तितः कार्यं प्रवर्तत इति सिद्धम्; अशक्तात् कारणात् कार्यस्यानुपपत्तेः । शक्तिश्च कारणगता न कार्यस्यानभिव्यक्तत्वादन्या । न हि सत्कार्यपक्षे कार्यानभिव्यक्तताया अन्यस्यां शक्तावस्ति प्रमाणम् । अयमेव हि सिकताभ्यः तिलानां भेदः, यदेतेष्वेव तिलेषु तैलमस्ति अनागतावस्थम्; न सिकतास्विति । स्यादेतत्, शक्तितः प्रवृत्तिः कारणकार्यविभागाविभागौ च महत एव परमाव्यक्तत्वं साधयिष्यतः । कृतं ततः परेणाव्यक्तेनेत्यत आह — परिमाणात् । परिमितत्वात्; अव्याप्त(पि)त्वादिति यावत् । विवदाध्यासिता भेदाः अव्यक्तकारणवन्तः परिमितत्वात् घटवदिति । घटादयोपि

हि परिमिता मृदाद्यव्यक्तकारणकाः दृष्टाः । उक्तमेतत्, यथा कार्यस्याव्यक्तावस्था कारणमेवेति । अतो महानपि परिमितत्वादव्यक्तकारणकः । यत्तु महतः कारणम्, तत्परम् अव्यक्तम्; परतराव्यक्तकल्पनायां प्रमाणाभावात्। इतश्च । विवादाध्यासिताः भेदाः अव्यक्तकारणवन्तः समन्वयात् । भिन्नानां सरूपता समन्वयः । सुखदुःख-मोहसमन्विता बुद्ध्यादयः अध्यवसायादिलक्षणाः प्रतीयन्ते, यानि च यद्रूपसमन्वितानि, तानि तत्स्वभावाव्यक्तकारणकानि, यथा मृद्धेमरूपसमन्विता घटमकुटादयो मृद्धेम-पिण्डाव्यक्तकारणका इति कारणमस्त्यव्यक्तं भेदानामिति सिद्धम्" — इति ।

तस्य चाविरुद्धत्वात् सोऽपि ग्राह्य एवेति द्रष्टव्यम् ।

**प्रत्यनुमानोपयोगिनीं व्याप्तिं शिक्षयतीति** । अत्र **प्रत्यनुमानं दर्शयति न भवदुक्तमितीति** पाठः समीचीन इति केचित् वदन्ति । **सुखदुः-खादिहेतुत्वमिति मन्तव्यमिति** । न तु तेषामेव सुखादिरूपत्वम्; तथा सति गुणत्रयाश्रये पटादौ सुखी दुःखीत्यादिप्रयोगप्रसङ्गात् । पटादीनामेव सत्त्वरजस्तमो-रूपत्वमिति साङ्ख्यमते पटः सुखं दुःखमित्यादिप्रतीतिप्रयोगप्रसङ्गाच्च । न च विषयस्य सुखादिरूपत्वाभावे तज्ज्ञानादान्तरसुखोदयो न स्यादिति वाच्यम् — विषयस्येच्छादिरूपत्वाभावेपि तज्ज्ञानादिच्छाप्रयत्नोदयात्तदुदयस्याप्युपपत्तेः । सुख-दुःखादिज्ञानवशात् सुखदुःखमोहात्मकत्वे लाघवादिकार्यवशात् अन्यात्मकत्वस्यापि कल्पनाप्रसङ्गेन त्रैगुण्यावस्थाभङ्गप्रसङ्गाच्च । न च सुखलाघवप्रकाशानां दुःखोपष्टम्भ-प्रवर्तनानां मोहगौरवावरणानाञ्चैकैकगुणसम्बन्धित्वकल्पनायां प्रमाणमस्ति, येन त्रैगु-ण्यव्यवस्थाभङ्गो न स्यात्। तथा सति सुखदुःखमोहानामपि — एकगुणसम्बन्धित्व-कल्पनोपपत्तेः विरोधस्य.... ? ....प्रतियोगिभेदेन च सुपरिहरत्वात् । परेणापि सुखादिरूपोद्भवे तद्भेदस्यैव शरणीकरणीयत्वाच्चेति भावः ।

व्यतिरेकानवस्थितेश्चानपेक्षत्वात् २-२ ३.

अवस्थाया अवस्थानतदभाववादस्य अवस्थाया उत्पत्तितदभाववादतुल्यतया व्याचष्टे — **प्रतिसर्गावस्थोपलक्षितेति** । **अवधारणगर्भमिदमिति** । यद्यपि नात्राव-धारणगर्भत्वमाश्रयणीयम्; **समस्तपदेनैवावधारणप्रयोजनस्य** लब्धत्वात् — तथाप्यु-पायस्योपायान्तरादूषकत्वादिति द्रष्टव्यम् । **तया स्वातन्त्र्यहानिरिति** । तथा

परिणामविशेषापत्त्या स्वातन्त्र्यहानिरित्यर्थः—**अतो निर्दयत्वहेतुरनैकान्तिक** इति। दया चेत् गुणः, ततश्च निर्दयत्वे निर्गुणत्वं स्यादिति हेतुरनैकान्तिक इत्यर्थः। **जीवानां फलान्वयराहित्यश्चे**ति। जीवस्य परतन्त्रत्वे कर्मफलान्वयो जीवस्य न स्यादिति दूषणं चेत्यर्थः। **उपजीव्यापदी**ति। उपजीवकानामुपजीव्यदुःखासहिष्णुत्वं स्वप्रयोजनभङ्गभीत्यैव। तत्रापि स्वार्थनिरपेक्षत्वे दयात्वमिष्टमेवेति भावः। **सततयुक्तानामित्यत्रे**ति। अत्र वक्तव्यं सर्वं प्रथमसूत्र एवोक्तम्।

### अन्यत्राभावाच्च न तृणादिवत् २-२-४.

**केवलदार्वादिव्यावृत्त्यर्थ**मिति। प्रहीणस्य काष्ठसन्निहितस्य तृणस्य क्षीरभावादर्शनात् चित्सन्निधिमात्रमेवोपगन्तव्यमित्यर्थः। **न च तदपि पक्षीकार्य**मिति। अचेतनं चेतनाधिष्ठितमेव प्रवर्तत इत्यनुमानेन तृणादिरपि पक्षीक्रियतामिति न वाच्यमित्यर्थः। **तावते**ति। चित्सन्निधिमात्रेणेत्यर्थः॥

**प्रहीणं वे**तीति। अस्य **तद्दूषित**मिति पूर्वेणान्वयः। एवमुत्तरत्रापि द्रष्टव्यम्। भाष्ये **व्यभिचारप्रदर्शनाये**ति। पयोदृष्टान्ते व्यभिचारपरिहारप्रदर्शनायेत्यर्थः। 'मशकेभ्यो धूमः' इतिवत्॥

### पुरुषाश्मवदिति चेत् तथापि २-२-५.

भाष्ये **प्रधानोपभोगार्थ**मिति। श्लोके प्रधानस्य दर्शनापेक्षया कर्मत्वात् कर्मणि षष्ठीति भावः॥

### अभ्युपगमेऽप्यर्थाभावात् २-२-८.

**अनुमितिरेवार्थतो बुद्धिस्थेती**ति। **अनुमानेन प्रधानसिद्ध्यभ्युपगमेऽपी**ति भाष्यस्य अनुमित्यभ्युपगमेऽपीत्यर्थ इति भावः॥

### विप्रतिषेधाच्चासमञ्जसम् २-२-९.

भाष्ये **सङ्घातपरार्थत्वादि**त्यादि। अव्यक्तमहदहंकारप्रभृतयः सुखदुःखमोहात्मकतया सङ्घाता इति सिद्धम्। ततश्च यथा शयनासनादीनां सङ्घातत्वात् परार्थत्वम्, एवं तेषामपि पारार्थ्यं वक्तव्यमित्यर्थः। ननु पारार्थ्यमस्तु; तथापि

सङ्घातान्तरं प्रत्येव पारार्थ्यमस्तु; न त्वसंहतमात्मानं प्रतीत्यत्राह — **त्रिगुणादिविपर्ययादिति** — अयमभिप्रायः संहतस्य संहतान्तरार्थत्वे तस्यापि संहतत्वेन पारार्थ्यस्य वक्तव्यतयाऽनवस्था स्यात् । अतः सुदूरं गत्वापि असंहत आत्मा शेषितयाऽभ्युपगन्तव्यः । ततश्च तादृशे आत्मनि संहतत्वं व्यावर्तमानं स्वव्याप्यं त्रिगुणादिक(त्वः)मपि व्यावर्तयति । तत्रादिपदेन, "त्रिगुणमविवेकि विषयः सामान्यमचेतनं प्रसवधर्मि। व्यक्तं तथा प्रधानं तद्विपरीतस्तथा च पुमान्"इति श्लोकार्थो विवक्षितः । तस्यायमर्थः- त्रयो गुणाः सुखदुःखमोहा अस्येति त्रिगुणम् । तदनेन सुखादीनामात्मगुणत्वं पराकृतम् । अविवेकि । यथा प्रधानं स्वतो न विविच्यते । एवं महदादयोऽपि प्रधानान्न विविच्यन्ते, तदात्मकत्वात् । अथवा संभूयकारिता अविवेकः । न किंचिदेकं कार्ये पर्याप्तम्; अपितु संभूय । ये त्वाहुः — विज्ञानमेव विषयाकारमिति, तान् प्रत्याह विषय इति । विषयः ग्राह्यः । विज्ञानभिन्न इति यावत् । अत एव सामान्यम्= साधारणम् । विज्ञानरूपत्वे तु विज्ञानानामसाधरणत्वाद्विषया अप्यसाधारणा भवेयुः । तथाच नर्तकीभ्रूलताभङ्गे एकस्मिन् बहूनां प्रतिसंधानं न स्यात् । अचेतनम् । स्पष्टोऽर्थः । प्रसवधर्मि । परिणामशालीत्यर्थः । एवंभूतं व्यक्तं महदादि । तद्धर्मान् प्रधानेऽप्यतिदिशति तथा प्रधानमिति । शिष्टं स्पष्टम् । — एतादृशाकारविपर्ययादित्यर्थइति । इतश्च पुरुषोस्ति, अधिष्ठानात् । त्रिगुणात्मकस्य रथादिवदधिष्ठेयत्वस्य वक्तव्यत्वादन्योऽधिष्ठाता अपेक्षित इत्यर्थः । भोक्तृभावात् । सुखदुःखभोक्तृभावादित्यर्थः । सुखदुःखे ह्यनुकूलप्रतिकूलवेदनीये । ततश्च सुखदुःखयोरनुकूलनीयेन च प्रतिकूलनीयेन च केनचिद्भवितव्यम् । स चात्मा । कैवल्यार्थप्रवृत्तेश्च । कैवल्यं हि आत्यन्तिकदुःखप्रशमनम् । न च तत् त्रिगुणात्मकस्य वस्तुनः संभवति । स्वभाववियोगप्रसङ्गादित्यर्थः ।

**तस्माच्च विपर्ययासादिति** । त्रिगुणादिविपर्ययादिति पूर्वश्लोकोक्तादित्यर्थः । ततश्चायमर्थः - पुरुषस्यात्रिगुणत्वाद्विवेकित्वाद्विषयित्वात् (अविषयत्वात्) असाधरणत्वाच्चेतनत्वादप्रसवधर्मित्वाच्चेति । अत्र - चेतनत्वविषयित्वा (त्वाविषयत्वा) भ्यां साक्षित्वद्रष्टृत्वे सिध्यतः । चेतनो हि द्रष्टा भवति ।; नाचेतनः । दुःखसाक्षी च दर्शितविषयो भवति; न तु विषयस्य साक्षित्वम् । अत्रिगुणत्वादेव आत्यन्तिक-

दुःखत्रयाभावरूपकैवल्यम् । अत्रैगुण्यादेव च माध्यस्थ्यसिद्धिः । त्रैगुण्ये सुखदुःखयोः सत्त्वात् रागद्वेषसत्त्वेनौदासीन्यरूपमाध्यस्थ्यं न सिद्ध्येत् । विवेकित्वाच्चाकर्तृत्वं सिद्ध्यति ।

**पुरुषविमोक्षनिमित्त**मिति । "वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य । पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य" इति श्लोकः । ननु चेतनस्याकर्तृत्वेन, अहं जानामि, अहं करोमीति कर्तृत्वचैतन्ययोः सामानाधिकरण्यानुभवः कथमित्याशङ्क्य चैतन्यकर्तृत्वयोः भिन्नाधिकरणत्वस्य युक्तिसिद्धत्वात् सामानाधिकरण्यप्रतीतिर्भ्रान्तिरित्याह **तस्मात्तत्संयोगा**दिति । तस्मात् = कर्तृत्वचैतन्ययोः भिन्नाधिकरणत्वस्य युक्तिसिद्धत्वादित्यर्थः । तत्संयोगात् = चेतनसंयोगात् । अचेतनं लिङ्गम् = अन्तःकरणादिकं चेतनावदिव भवति । तथैवोदासीनोऽप्यात्मा कर्तृभूतत्रिगुणद्रव्यसन्निधानात् कर्तेव भवतीत्यर्थः । पुरुषस्य दर्शनार्थमित्ययं श्लोकः पूर्वमेव व्याख्यातः —

भाष्ये **जननमरणप्रतिनियमादिव्यवस्थासिद्ध्यर्थ**मिति । "जन्ममरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च । जीवबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चापि ॥" इति साङ्ख्यश्लोकः । अयमर्थः — देहेन्द्रियादिसम्बन्धो जन्म । तत्त्यागो मरणम् । करणानि इन्द्रियाणि । यद्येक एव पुरुष सर्वगतः स्यात् - तर्हि एकस्मिन् जायमाने सर्वेपि जायेरन् । एकस्मिन् म्रियमाणे सर्वेपि म्रियेरन् । एकस्मिंश्चान्धे बधिरे वा सर्वे तादृशा भवेयुः । अयुगपत्प्रवृत्तेश्च । एकत्र शरीरे प्रयतमाने पुरुषे स एव सर्वशरीरेषु एक इति सर्वत्र प्रयतेत । ततश्च सर्वाण्यपि शरीराणि युगपत् चलयेत । त्रैगुण्यविपर्ययाच्चापि । त्रय एव गुणाः त्रैगुण्यम् । स्वार्थे ष्यञ् । तस्य विपर्ययः अन्यथाभावः । केचित् खलु सत्त्वबहुलाः — यथोर्ध्वरेतसः । केचित् रजोबहुलाः, यथा मनुष्याः । केचित् - तमोबहुलाः, यथा तिर्यग्योनयः । नेयं व्यवस्था पुरुषैक्ये संभवतीत्यर्थः ।

ननु कारणावस्थप्रधानस्य कार्यजगद्रूपेण परिणतौ चेतनाधिष्ठाननिरपेक्षत्वशङ्कानिराकरणार्थं न, "पयोम्बुवत्" इति सूत्रम् । अपितु तच्छङ्कानिराकरणम्,

" अन्यत्राभावाच्च न तृणादिवत्" इति सूत्र एव करिष्यते । इदं च सूत्रम्, 'प्रवृत्तेश्चे' ति पूर्वसूत्रोक्तायाः पुरुषानधिष्ठिताचेतनस्य पुरुषार्थानुगुणप्रवृत्त्यनुपपत्तेराक्षिप्य समर्थनपरं किं न स्यादित्याशङ्क्याह **पुरुषार्थसिद्ध्यनुगुणत्वदूषणस्ये**ति ।

**एकं करणं त्रीणि तानी**ति । कचित् त्रीण्यन्तःकरणानि बुद्धिरहंकारो मन इति वर्णयन्ति । क्वचित् बुद्धिरूपान्तःकरण'मिति वर्णितमित्यर्थः । **तद्वाचित्वस्वारस्याच्चे**ति । " विप्रतिषेधे परं कार्यम् " इतिसूत्रे परस्परविरोधप्रसिद्धेः दर्शितत्वादिति भावः । **हेतुमदनित्य**मित्यादि । **आश्रितम्** कारणाश्रितमित्यर्थः । लयं गच्छतीति **लिङ्गम्** । **तन्मूलं स्यादि**ति । प्रकृतेर्मूलं स्यादित्यर्थः ।

इति रचनानुपपत्त्यधिकरणम् ।

---

## ( २ ) महद्दीर्घाधिकरणम् ।

---

**महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् २-२-१०.**

**दृष्यसमुच्चयोऽभिप्रेत** इति । गगननित्यत्वादिदृष्यसमुच्चयोऽभिप्रेत इत्यर्थः । **महद्दीर्घशब्दौ भावप्रधानावि**ति । ननु भावप्राधान्यानाश्रयणेपि पदार्थतावच्छेदकभेदादेव द्वंद्वोऽस्त्विति **चेन्न** । पदार्थभेदं विना पदार्थतावच्छेदकभेदमात्रेण द्वंद्वस्य भाष्यकृता निराकृतत्वात् । " चार्थे द्वंद्वः " इति सूत्रे हि भाष्यकृता याज्ञीयकश्चायं वैयाकरणश्चेत्यादिषु पदार्थतावच्छेदकभेदात् द्वन्द्वमाशङ्क्य, " शेषो बहुव्रीहिः " इति सूत्रात् शेष इत्यस्यानुवृत्तेः, तस्य समानाधिकरणसमासविषयत्वेन शेषत्वाभावात् तदप्राप्तिरुपपादितत्वात् । सत्यपि पदार्थतावच्छेदकभेदेन द्वन्द्वसमासे महद्दीर्घशब्दयोः समानाधिकरणत्वेनाप्रसक्तेरनिवार्यत्वाच्च । अतो भावप्रधान एवायं निर्देश इति भावः । ननु महद्दीर्घशब्दाभ्यां महत्त्वदीर्घत्वयोः विवक्षितत्वे ह्रस्वपरिमण्डलशब्दावपि भावप्रधानौ स्याताम् । ततश्च ह्रस्वत्वपारिमण्डल्याभ्यां महत्त्वाणुत्वोत्पत्तिवदित्यर्थः स्यात् । न चेत्थं वैशेषिकैरभ्युपगम्यते । " कारणबहुत्वात् कारणमहत्त्वात् प्रचयविशेषाच्च महत्" इति काणादसूत्रे महत्त्वकारणानां परिगणितत्वादित्याशङ्क्याह — **एवं भावप्रधानाभ्या**मिति ।

**अत्र कारणद्वयोपादान**मिति । ननु निरवयवात् परमाणोः द्व्यणुकोपपत्तिवादेऽनुपपत्तिसत्त्वेन परमाणोर्द्व्यणुकोत्पत्तिवत्—अन्यत तदभ्युपगतं सर्वं असमञ्जसमित्येतावति वक्तव्ये – ह्रस्वात् द्व्यणुकात महद्दीर्घत्र्यणुकोत्पत्तिः किमिति दृष्टान्तीक्रियते । तत्रानुपपत्त्यभावादिति चेन्न – द्व्यणुकात ( नां? ) परस्परसंयोगे तदवयवानामपि संयोगावश्यंभावेन षण्णामपि परमाणूनामेकपरमाणुमात्रपरिमाणत्वापत्तेरिति दूषणस्य द्व्यणुकात् ह्रस्वात् महद्दीर्घत्र्यणुकोत्पत्ति (तावपि?) सत्त्वेन तस्यापि दृष्टान्तीकरणीयत्वादिति द्रष्टव्यम ।

**उभयथापि न कर्मातस्तदभावः २-२-११.**

**सिद्धेपीश्वर** इति। अयं भावः—तत्पक्षे हि प्रलये सृष्ट्यभावः कस्य कारणस्य वैकल्येनोपपादनीयः । न तावददृष्टस्य, प्रलयेपि तस्य सत्त्वात् । नाप्यदृष्टविपाकस्य, तत्पक्षे फलकालागमस्य वा प्रतिबन्धककर्माभावसाहित्यस्य वा विपाकशब्दार्थत्वात तस्य सर्गकाल इव प्रलयकालेऽपि - अनन्तप्राणिगतानन्तकर्ममध्ये केषु चन कर्मसु अवर्जनीयत्वात् । नापीश्वरसिसृक्षायाः; नित्यसर्वविषयायाः तदिच्छायाः कदापि सिसृक्षारूपत्वानपायात् । सृष्ट्युपयोग्यदृष्टविपाकोपधानरूपपारिभाषिकसिसृक्षात्वस्यापि - प्रलयसाधारणत्वात् । न च प्रलयकाल एव प्रतिबन्धक इति - वाच्यम् – प्रलय एव न संभवतीति वदन्तं प्रति प्रलयाधारकालस्य सृष्टिप्रतिबन्धकत्वोक्तेरसङ्गतत्वात् । न च कल्पावसानप्रभृतिद्विपरार्धकालः पूर्वसर्गकालसमानपरिमाण· प्रतिबन्धक इति वाच्यम्—सिद्धान्त इव क्षणलवनिमेषादिलक्षणस्वाभाविककालपरिणतिविशेषानभ्युपगमात् सूर्यगतिलक्षणकालोपाध्यभावेन च, एतावान् कालो द्विपरार्धकाल इति वक्तुमशक्यत्वात् । सिद्धान्ते तु यथाशास्त्रं स्वाभाविकानां कालपरिणतिविशेषाणां क्षणलवादिभेदानाम् , ' द्विपरार्धकालं जगत् सृजानी ' ति, 'ततो द्विपरार्धकालं निरन्तरगतागतखिन्नं जगद्विश्रमयानी ' त्येवंलक्षणसिसृक्षासंजिहीर्षालक्षणेश्वरेच्छापरिणामविशेषस्य चाभ्युपगमान्नानुपपत्तिरिति ॥

**समवायाभ्युपगमाच्च साम्यादनवस्थितेः २-२-१२.**

ननु समवायापलापे संयोगस्यापलापः किं न स्यादित्याशङ्क्याह — **संयोगस्त्विति**— । **धर्मिकल्पनातो वरमिति** - अत्राक्लृप्तं समवायं परिकल्प्य तस्य च

सम्बन्धत्वकल्पनापेक्षया क्लृप्तानामेवायुतसिद्धस्वरूपाणां सम्बन्धमात्रत्वकल्पनमेव लध्वित्यर्थः। ननु समवायपक्षे समवायस्वरूपं तद्गतं संबन्धत्वं चेति द्वयमेव कल्पनीयम्। स्वरूपसंबन्धपक्षे तु अवयवावयविगुणाद्यनुगतस्य एकस्य संबन्धत्वस्याभावात् अनन्तानि संबन्धत्वानि कल्पनीयानीत्यस्ति समवायकल्पने लाघवम्। न चावयवादिस्वरूपेषु तत्तदभावादिकं प्रति सबन्धत्वमपि क्लृप्तमेवेति वाच्यम् — अभावादिनिरूपितसंबन्धत्वस्यावयवादिषु क्लृप्तत्वेपि अवयव्यादिनिरूपितसम्बन्धत्वस्याक्लृप्तत्वादिति चेत् — तर्हि समवायेपि तत्तन्निरूपकभेदेन सम्बन्धत्वस्यापि भिन्नतयाऽनन्तस्य तस्यापि कल्पनाप्रसङ्गात्। ननु तन्तुनाशे तन्तुनिष्ठमवयविगुणक्रियादिकं नश्यति; न तु तन्तुनिष्ठमपि तृणादि। अत्र विनिगमकापेक्षायां - तन्तुसमवेतनाशत्वमेव प्रयोज्यमिति समवायः स्वीकार्य इति चेन्न, तन्तुनाशे तन्त्वयुतसिद्धाधेयनाश इत्युपपत्तेः। नचैवं तन्त्वयुतसिद्धस्य पटध्वंसस्यापि नाशप्रसङ्ग इति वाच्यम् — तर्हि त्वत्पक्षेपि तन्तुसमवेतजात्यादिनाशप्रसङ्गात्। यदि तु — समवेतानित्यनाशत्वं प्रयोज्यम्, तर्हि ममापि तुल्यम्, ध्वंसस्य नित्यत्वादित्यलमतिचर्चया ॥

**नित्यमेव च भावात् २-२-१३.**

**स्वरूपाभावादनित्यत्वमिति**। समवायनित्यत्ववादिमते घटगतरूपस्य नाशे घटगतसमवायस्य नित्यतया नाशाभावेपि रूपनिरूपितसंबन्धत्वं नास्तीति वक्तव्यम्। यदि च रूपनिरूपितसम्बन्धत्वमपि समवायस्य स्वरूपमेव स्यात्। तर्हि रूपनिरूपितसमवायत्वापायो नाम समवायापाय इत्येव पर्यवसन्नमिति तस्यानित्यत्वं स्यादित्यर्थः।

**अपरिग्रहाच्चात्यन्तमनपेक्षा २-२-१६.**

**गन्धरसरूपस्पर्शगुणेति**। गन्धरसरूपस्पर्शाः गुणाः — यस्यास्सा गन्धरसरूपस्पर्शगुणा।

इति महद्दीर्घाधिकरणम् ॥



## ( ३ ) समुदायाधिकरणम्

**कार्यविशेषे शरीर** इति । तार्किका हि – जाठराग्निना पच्यमानानां भुक्तपीताहारौषधरसद्रव्यरूपाणामवयवानां प्रतिक्षणमुपचयापचयवैषम्यादवयवि शरीरमपि प्रतिक्षणमुपचयापचयवदन्यदन्यद्भवति । यद्यपि प्रतिक्षणं शरीरस्योपचयापचयदर्शनं नास्ति – तथापि वर्षधारानिपातैस्तटाकजलस्येव, घटीयन्त्रोत्क्षेपणैः कूपजलस्येवान्ते तद्दर्शनादलौकिकं प्रतिक्षणं किंचित् किंचित् उपचयापचयज्ञानमस्त्येव। चन्द्रतारकादीनां मुहूर्तादिकालव्यवधानेन बहुदेशान्तरप्राप्तिदर्शनात्प्रतिक्षणं स्वल्पदेशान्तरप्राप्तिज्ञानवदित्यभ्युपगच्छन्ति । एवं प्रतिक्षणमवश्यंभाविभिः खननपूरणादिभिः भूगोलकस्य, नदीजलसंसर्गशीकरोत्पतनैः समुद्रजलस्य चोपचयापचयवतः क्षणिकत्वमभ्युपगच्छन्तीति भावः ।

भाष्ये **चतुर्विधा** इति । माध्यमिकयोगाचारसौत्रान्तिकवैभाषिकसंज्ञाश्चतुर्विधा बौद्धाः। ते सर्वेप्यादिबुद्धस्य शिष्याः । ते क्रमेण सर्वशून्यत्वबाह्यार्थशून्यत्वबाह्यार्थानुमेयत्वबाह्यार्थप्रत्यक्षत्ववादिनः । तत्र, "बुद्ध्या विविच्यमानानां स्वभावो नावधार्यते । अतो निरभिलप्यास्ते निस्वभावाश्च दर्शिताः ॥ यथायथा विचार्यन्ते विशीर्यन्ते तथा तथा ।" इत्यादिन्यायैः गुरुणा सर्वशून्यत्वं बोधितेषु शिष्येषु ये गुरूक्तं तथैवाङ्गीकृत्य पर्यनुयोगं नाकुर्वन्, ते गुरूक्तस्य श्रद्धयाङ्गीकरणादुत्तमाः, तत उपर्यनुयोगाकरणात् अधमाश्चेत्युत्तमाधमत्वयोगात् मध्यमां स्थितिमास्थिता इति माध्यमिकाः। ये तु बाह्यार्थानां शून्यत्वमङ्गीकृत्य, कथं विज्ञानस्यापि शून्यत्वम् जगदान्ध्यप्रसङ्गादिति पर्यनुयोगमकुर्वन, ते गुरूक्ताङ्गीकरणस्य आचारसंज्ञया बौद्धमते परिभाषितस्य ततउपर्यनुयोगस्य योगसंज्ञाया तन्मते परिभाषितस्य सद्भावाद्योगाचाराः । गुरुणा तान् प्रति आन्तरं विज्ञानमात्रमस्ति; तदेव नीलाद्याकारम् । न तु तद्व्यतिरेकेण बाह्यं नीलादिकमस्ति सहोपलम्भनियमेन नीलादीनां तत्तद्विज्ञानादीनां चाभेदसिद्धेः । भेदे गवाश्ववत् तन्नियमाभावप्रसङ्गात् । तदेव विज्ञानात्मकं नीलादिकमनादिवासनावशाद्बहिर्वदवभासत इति बोधिते–'कथं सर्वथैव बाह्यार्थस्य शून्यत्वम्; बाह्यस्य नीलादेरव-

भासात्। अहमुल्लेखेन विज्ञानस्यान्तरतया इदमुल्लेखेन नीलादेर्बाह्यतया च भेदेऽवभासमाने सहोपलम्भनियममात्रस्याप्रयोजकस्याभेदसाधनाक्षमत्वात् सहत्वोक्त्यैव भेदानुमतेश्चे'ति यैः पर्यनुयुक्तम्, तान् प्रति—'सत्यमस्ति बाह्यं नीलादिकम्; न तु तत् प्रत्यक्षम; अनुत्पन्नस्याविद्यमानस्य प्रत्यक्षायोगात्। उत्पन्नस्य क्षणिकस्य स्थित्यभावात्। किन्तु उत्पद्यमानं नीलादिकं विज्ञाने स्वाकारमर्पयित्वा नश्यति, ततो विज्ञानगतेनाकारेणातीतं नीलादिकमनुमीयत इति बोधिते सति तैः—इत्थं शिष्यप्रश्नानुरोधेन कियत्पर्यन्तमुपदेशसूत्रं प्रवर्तिष्यत इति सूत्रस्यान्ते पृष्टे गुरुणाभिहितम्, भवन्त सूत्रस्यान्तं पृष्टवन्तः सौत्रान्तिका भवन्त्विति। अतस्ते सौत्रान्तिकाः। ततः, 'विज्ञानानुमेयं बाह्यमितीयं विरुद्धा भाषा, तस्यैव विज्ञानस्य तद्विषयप्रत्यक्षत्वात्; प्रत्यक्षस्य कस्यचिदप्यर्थस्याभावे व्याप्तिसंवेदनस्यानाभावेनानुमानाप्रवृत्तेश्च' इति यैः पर्यनुयुक्तम्—ते वैभाषिकाः। तान् प्रति बाह्यप्रत्यक्षत्वमप्युपदिष्टमित्येवं चतुर्विधा इति भावः॥

**चैत्तं रागादिक**मिति। विज्ञानस्कन्धव्यतिरिक्तं स्कन्धचतुष्टयं चैत्तमित्यर्थः—चित्तचैत्तशब्दनिर्दिष्टं पञ्चस्कन्धीरूपमित्याह **रूपविज्ञानवेदने**ति। **ज्ञप्तिरेव विज्ञानस्कन्ध** इति।

"तत स्यादालयविज्ञानं यद्भवेदहमास्पदम्।
तत् स्याद्धि चित्तविज्ञानं यन्नीलादिकमुल्लिखेत्॥"

इति बौद्धोक्तमहमित्याकारकमालयविज्ञानमिन्द्रियादिजन्यं रूपादिविषयं च ज्ञानम् एतत् द्वयं प्रवाहापन्नदण्डायमानं विज्ञानस्कन्ध" इति वाचस्पतिनोक्तत्वात् रूपादिज्ञानमपि विज्ञानस्कन्ध इति वदन्ति। **संज्ञास्कन्धः सविकल्पकप्रत्यय** इति। कुण्डली ब्राह्मण इत्येवंरूप इत्यर्थः। **शाङ्करभाष्यं** चेति। यद्यपि रूप्यमाणाः पृथिव्यादयो बाह्याः—तथापि कायस्थत्वाद्वा इन्द्रियसम्बन्धाद्वा भवन्त्याध्यात्मिकाः" इति वाचस्पतिनोक्तत्वात् शाङ्करभाष्येऽप्युक्तप्रायमित्यर्थः। **तदिदमाहे**ति। अन्यतरः पक्षो ग्राह्य इति भावः। **वस्त्वन्तरानभ्युपगमादित्यर्थ** इति। अभ्युपगमे तु नामान्तरेणात्मैवाभ्युपगत। इति भावः **स्कन्धानामुपपन्नत्व** इति। यद्यप्यणूनामुपपन्नत्वेपि अणुसंयोगभूतभूतादेरनुपपत्तिवत् स्कन्धानां उपपन्नत्वेपि तत्समुदायात्मा पञ्चस्कन्धी नोप-

पद्यत इति शक्यते वक्तुम्—तथापि रूपस्कन्धरूपस्य भूतेन्द्रियविषयलक्षणस्याणुहेतुकसङ्घातस्यास्मिन् सूत्रे निराचिकीर्षिततया तत्समुदायापत्तेरत्रापि दूष्यत्वादिति भावः ॥

इतरेतरप्रत्ययत्वादुपपन्नमिति चेन्न सङ्घातभावानिमित्तत्वात् २-२-१८.

**वृत्तिसिद्धः पाठ** इति । ततश्च इतरेतरप्रत्ययत्वादुपपन्नमिति चेन्नोत्पत्तिमात्रनिमित्तत्वादिति पाठस्तु असांप्रदायिक इति भावः । **प्रत्ययशब्दो हेतुवाचीति**। तन्मते प्रत्ययशब्दस्य पारिभाषिकत्वादिति भावः । ननु क्षणिकस्य चित्तसन्तानस्य कथं देशान्तरगमनकुक्षिप्रवेशादय इत्याशङ्क्याह **दीपसन्तानस्येवे**ति । अत्र तृष्णावाक्कायचेष्टेति क्वचित्पाठो दृश्यते । तत्र मध्ये लेखकदोषात् ग्रन्थलेशः पतितः । एवं हि वाचस्पतिग्रन्थः, "वेदनायां सत्यां कर्तव्यमेतत्सुखं पुनर्मयेत्यध्यवसानं तृष्णा भवति। तत उपादानं वाक्कायचेष्टा भवति । ततो भवः । भवत्यस्माज्जन्मेति भवो धर्माधर्मौ । तद्धेतुकः स्कन्धप्रादुर्भावो जातिः जन्मः । जन्महेतुका उत्तरे जरामरणादयः । जातानां स्कन्धानां परिपाको जरा । स्कन्धानां नाशो मरणम् । म्रियमाणस्य साभिषङ्गस्य पुत्रकलत्रादिषु अन्तर्दाहः शोकः । तदुत्थः प्रलापः परिदेवनम् । पंचविज्ञानकार्यसंयुक्तमसाध्वनुभवनं दुःखम् । मानसं च दुःखम् दौर्मनस्यम् " इति। ननु वाचस्पत्ये, "जन्मादिहेतुका अविद्यादयः अविद्याहेतुकाश्च जन्मादयः घटीयन्त्रवत् अनिशमावर्तमानाः सन्ती"त्युक्तम् । भाष्ये तु वेदनाद्यविद्याद्योरेव इतरेतराश्रयणं प्रदर्श्यते । किमत्र विनिगमकमित्याशङ्क्य उभयथापि नार्थभेद इत्याह—**अविद्यादिभिर्वेदनादय** इति ।

उत्तरोत्पादे च पूर्वनिरोधात् २-२-१९.

**क्षणिकपदार्थवाचीति** । बौद्धमते वस्तुतः कालाभवेन स्वतोभङ्गुरघटादेरेव क्षणपरिकल्पनानिमित्ततया क्षणिक इति व्यवह्रियमाणो घट एव क्षणयत इति व्युत्पत्त्या च क्षण इत्यपि व्यवह्रियते इति भावः । भाष्ये **न कस्यचिदर्थस्य ज्ञानविषयत्वमिति** । वर्तमानत्वग्राहिप्रत्यक्षविषयत्वं न स्यादित्यर्थः ॥

असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा २-२-२०.

भाष्ये **इन्द्रियसंप्रयोगज्ञानयोर्यौगपद्यं प्रसज्येतेति**। वर्तमानत्वग्राहिप्रत्यक्षविषयस्योत्तरघटक्षणस्य इन्द्रियसंप्रयुक्तपूर्वघटक्षणस्य चैकक्षणवृत्तित्वे इन्द्रियसंप्रयोगज्ञानयौगपद्यप्रसङ्गेन कार्यकारणयौगपद्यप्रसङ्ग इत्यर्थः ।

प्रतिसङ्ख्याऽप्रतिसङ्ख्यानिरोधाप्राप्तिरविच्छेदात् २-२-२१.

भाष्ये **प्रतिसङ्ख्यानिरोधाप्रतिसङ्ख्यानिरोधशब्दाभ्यामभिधीयेते** इति। सङ्ख्या = बुद्धिः। नाशप्रतीपा सङ्ख्या प्रतिसङ्ख्या। तया निरोधः प्रतिसङ्ख्यानिरोधः। सन्तमिममसन्तं करोमीत्येवंरूपतैव बुद्धेः प्रतीपत्वम्। तद्भिन्नो [ निरोधोऽप्रतिसंख्या ? ] निरोधः। यद्वा सङ्ख्या विषयः; तस्य प्रतिकूला तदसत्त्वग्राहिणी लौकिकानां बुद्धिः प्रतिसङ्ख्या। तया विषयीक्रियमाणो निरोधः प्रतिसङ्ख्यानिरोधः। तद्विपरीतो निरोधोऽप्रतिसङ्ख्यानिरोध इति भावः॥

उभयथा च दोषात् २-२-२२.

भाष्ये **न च जगत् तुच्छात्मकं भवद्भिरभ्युपेयत** इति। उत्पत्तिदशायामपीत्यर्थः। उत्तरक्षणे तु निरन्वयविनाशेन तुच्छतापत्तेरभ्युपगतत्वादिति द्रष्टव्यम्। ननु जगतः तुच्छात् उत्पत्तिर्नाङ्गीक्रियते, येन तुच्छात्मकत्वं स्यादित्यत आह — **सतो निरन्वयविनाश** इति॥

आकाशे चाविशेषात् २-२-२३.

भाष्ये **ताभ्यां सह तुच्छत्वेने**ति। "आकाशं द्वौ निरोधौ च नित्यं नियमसंस्कृतम्।" इति सहपरिगणितस्येत्यर्थः। भाष्ये **श्येनादिपतनदेशत्वेने**ति। न च अत्रेति श्येनपतनाधारतया प्रतीयमान आलोकाभाव एवास्त्विति वाच्यम्—अत्रालोकः, अत्रान्धकार इति आलोकान्धकाराधारतया प्रतीयमानस्यालोकाभावरूपत्वासंभवादिति भावः। भाष्ये **न च पृथिव्याद्यभावमात्र**मिति। निबिडद्रव्याभावरूपावकाश एवाकाशशब्दार्थ इति न वक्तुं शक्यमित्यर्थः। **अत्यन्ताभावस्तु पृथिव्यादीनां न संभवती**ति। केषांचिदुत्पत्स्यमानानां प्रागभावस्य केषांचिदुत्पन्नानां ध्वंसस्य च सत्त्वेन सर्वेषामत्यन्ताभावासंभवादिति भावः। इदमुपलक्षणम् — प्राग्देशे निबिडद्रव्यं नास्ति, प्रत्यग्देशे तत्रास्तीति निबिडद्रव्यतदभावाधारतया प्रतीयमानस्य प्राग्देशादेर्निबिडद्रव्याभावरूपावकाशत्वासंभवेन प्राग्देशादिबुद्धिबोध्यस्याकाशस्यावश्याभ्युपगन्तव्यत्वात् इत्यपि द्रष्टव्यम्। ननु नीरूपस्याकाशस्य कथम्, इह श्येन इत्यादिचाक्षुषप्रत्यक्षविषयत्वमित्याशङ्क्याह — भाष्ये **त्रिवृत्करणोपदेशेने**ति॥

## अनुस्मृतेश्च २-२-२४.

भाष्ये **अन्त्यघटक्षणसत्त्वात् पूर्वघटक्षणसत्त्वानी**ति । अन्त्यघटक्षणात् पूर्वघटक्षणाः विनाशिनः घटक्षणत्वात् अन्त्यघटक्षणवदिति पर्यवसितोऽर्थः । घटक्षणतत्सत्त्वयोरभेदात् सत्त्वमिति व्यवहृतमिति द्रष्टव्यम् । अत एव वक्ष्यति—**अन्त्यघटक्षणस्य हेतुनो विनाशदर्शना**दित्यादि । **प्रकरणसमत्वमुक्तमि**ति । पूर्वं साध्यविपरीतस्यापि साधकमित्युक्तम्; इदानीं साध्यविपरीतस्यैव साधकमित्युच्यत इति भेद इति भावः । **व्यापारासंभवादि**ति व्याख्येयं पदम् । व्यापाराश्रयत्वव्यापारहेतुत्वयोरन्यतराभावे व्यापारित्वमेव न संभवतीति भावः । **समीहितविपर्ययसाधन** इति । विपर्ययमात्रसाधन इत्यर्थः । ततश्च **किंचे**त्यादिना विरुद्धत्वमुच्यते, तत्पूर्वभाष्येण प्रकरणसमत्वमुच्यत इति भेद इति भावः । भाष्ये **मुद्गरादिहेतूपनिपाता**दिति । प्रागिति शेषः । **आमुद्गरादिहेतुपनिपाता**दिति पाठस्तु सुगम एव । भाष्ये **विनाशस्य कपालोत्पत्तिव्यतिरिक्तत्वाभ्युपगमेपी**ति योजना । ननु प्रत्यभिज्ञायाः किमिन्द्रियं कारणम् । उत संस्कारः? न तावदिन्द्रयम्; तत्तांशे सन्निकर्षाभावात् । नापि संस्कारः; अननुभूते तत्तांशे संस्कारासंभवादित्याशङ्क्याह — **न च प्रत्यभिज्ञाया** इति । **एकज्ञानतयैवावभासमानत्वा**दिति । तदिदं साक्षात्करोमीत्यनुभवबलात् सर्वांशेऽपि साक्षात्कारत्वमेव । न च तत्तांशे सन्निकर्षाभावात् प्रत्यक्षत्वाभावः शङ्कनीयः; संयुक्तविशेषणतायास्संस्कारस्य वा प्रत्यासत्तित्वोपपत्तेः । यदि च तयोः न प्रत्यासत्तित्वम्, तर्हि इदं रजतमिति ज्ञानस्य धर्म्यंशे प्रमात्ववत् तत्तांशे परोक्षत्वेपि बाधकाभावादिति द्रष्टव्यम् ॥

## नासतो दृष्टत्वात् २-२२५.

भाष्ये **ज्ञाने स्वाकारं समर्प्ये**ति । एवं हि तन्मतस्थितिः — अर्थे इन्द्रियसन्निकृष्टे सति तेनार्थेन जायमानं ज्ञानमपरोक्षरूपं न बाह्यार्थविषयकम्; किन्तु तदेव ज्ञानमर्थवत् नीलाद्याकारं भवति । तच्च ज्ञानं स्वप्रकाशतया स्वात्मानं विषयीकुर्वत् स्वगतं नीलाद्याकारमपि विषयीकरोति । अतो न नीलादिज्ञानस्याऽऽपरोक्ष्यविरोधः । नापीन्द्रियव्यापारानुविधानविरोधश्च । तदनन्तरं ज्ञानगतनीलाद्याकारेण बाह्यार्थानुमितौ सत्यां तद्वशात् बाह्यार्थप्रवृत्तिर्भवति ; नापरोक्षज्ञानात् । यथा वायु-

निषेवणार्थिनः शाखाचलनं दृष्ट्वा वृक्षमूले प्रवृत्तिः न चाक्षुषशाखाचलनज्ञानात्; किन्तु तन्मूलकवायुसंचारानुमानात्' इति। ततश्च यस्मिन्नपरोक्षज्ञाने विषयस्य स्वाकारसमर्पकत्वम्, न तस्मिन् ज्ञाने बाह्यार्थस्य विषयत्वम्। यत्र चानुमितौ विषयत्वम्, न तत्र स्वाकारसमर्पकत्वम्। अनुमितिपूर्वक्षणे इन्द्रियसंयुक्तस्य घटक्षणस्य नष्टत्वादिति **चेन्न** — स्वाकारसमर्पणादिपरम्परया हेतुत्वेन विषयत्वमिति भावः। **योगाचारमतमाशङ्क्ये**ति। इदमुत्तरसूत्रे स्पष्टीभविष्यति। भाष्ये **नीलज्ञानसन्तता**विति। अनुवर्तमानायामिति शेषः। **न केवलं धर्ममात्रस्ये**ति। इदमुपलक्षणम् — पुरोवर्तिगतनीलादिसंक्रमणे तद्गतबाह्यत्वजडत्वादीनां संक्रमप्रसङ्गः। न चेष्टापत्तिः; तथासति स्फटिके लौहित्यसंक्रान्तौ तद्विरोधिनः शौक्ल्यस्यानवभासवत् बाह्यार्थत्वजडत्वादिसंक्रान्तौ तद्विरुद्धज्ञानत्वान्तरत्वादेरनुपलम्भप्रसङ्गादित्यपि द्रष्टव्यम्॥

इति समुदायाधिकरणम्॥

---

## (४) उपलब्ध्यधिकरणम्

नाभावउपलब्धेः २-२-२७.

**चरमज्ञानं विजातीयोत्पादनशक्त**मित्यर्थ इति। शक्तेः कार्येण कारणेऽनुमेयत्वादिति भावः। न च कपालाकारज्ञानस्य घटाकारज्ञानप्रवाहो न वासनेति तस्य न वासनाजन्यत्वं समर्थितं स्यादिति वाच्यम् — व्यवहितस्य कालान्तरीयकपालज्ञानप्रवाहस्य वासनात्वासंभवात्; मनुष्यशरीरानन्तरं तिर्यग्योनिं गतस्य मनुष्यजन्मव्यवहिततिर्यग्योनिवासनायाः कार्यकरत्वदर्शनादिति भावः। भाष्ये **बहिर्वदवभासोऽपि भ्रमकृत** इति। यथा उपरिस्थितानां नक्षत्राणां भूमिष्ठत्वभ्रमः, तद्वदितिभावः। भाष्ये **सहोपलम्भनियमाच्चे**ति। नीलादिकं ज्ञानाभिन्नं ज्ञानसहोपलम्भनियतत्वात् ज्ञानवत् द्वितीयचन्द्रवच्चेत्यनुमानमिह विवक्षितम्। **तत् स्ववचनविरुद्धं साहित्यस्यार्थभेदहेतुत्वा**दिति भाष्यं व्याचष्टे — **साहित्यं द्वयोरे**त्यारभ्य **असाधारणानैकान्तिकत्व**मित्यन्तेन। भाष्ये, "तदर्थव्यवहारयोग्यतैकस्वरूपस्य ज्ञानस्य तेन यः सहोपलम्भ-

नियमः तस्माद्वैलक्षण्यसाधनम्" इति तच्छब्दानुरोधेन यच्छब्दमध्याहृत्य एकवाक्यतया अन्वयो वक्तव्यः ॥

इति उपलब्ध्यधिकरणम् ।

---

## (५) सर्वथानुपपत्त्यधिकरणम्

---

**सर्वथानुपपत्तेश्च २-२-३०.**

**अन्यथा** वेति पक्षस्य भाष्ये दूषणाभावमाशङ्क्याह—**उभयात्मकत्वे चे**ति । **पराभ्युपगमप्रकारे**णेति । सिद्धान्त्यभ्युपगमप्रकारेणेत्यर्थः । ननु, "नेष्टं तदपि धीराणां विज्ञानं पारमार्थिकम् । एकानेकस्वभावेन वियोगात् वियदब्जवत् । न सन्नासन्न सदसन्न चाप्यनुभयात्मकम् । चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका विदुः ।" इति चतुष्कोटिविनिर्मुक्तस्यैवोक्तेः कथं सत्त्वासत्त्वयोरेव तावदित्याशङ्क्य चतुष्कोटिविनिर्मुक्तत्वमपि सदात्मनाऽसदात्मना [सदसदात्मना ?] सदसद्विलक्षणात्मना चासत्त्वमिति असत्त्वकोटावेव पर्यवस्यतीत्यभिप्रायेणाह—**न हि शून्यवादिन** इति। **उभयात्मकत्वे चानुभयात्मकत्वे चावस्थान्तरापत्तिरेवोक्ता स्या**दित्यमुमर्थं सिंहावलोकितकेनोपपादयति **घटः स्वापेक्षये**त्यादिना । **अणुहेतुको भूतभौतिकसंहतिरूप** इति । अणुहेतुको भूतभौतिकसङ्घो बाह्यः । चित्तचैत्तात्मा आन्तरः, पञ्चस्कन्धारम्भः(रम्यः?) पञ्चस्कन्धीरूपश्च समुदायो बाह्यः उभयहेतुकस्समुदाय इति परैरपरैश्चोक्तमित्यर्थः । **ज्ञानमिथ्यात्वार्थसत्यत्वयोरन्यतरप्रसंगा**दिति । उभयोरैक्ये ज्ञानस्य सत्यत्वे अर्थस्यापि सत्यत्वं स्यात् । अर्थस्य मिथ्यात्वे ज्ञानस्यापि मिथ्यात्वं स्यादित्यर्थः **यद्वार्थेनाश्रयेणे**ति । यद्यपि शांकरभाष्ये नेयं व्याख्या स्पष्टा प्रतीयते ; अर्थानुपलब्धिपरतयैव व्याख्यातत्वात् । वासनानुपलब्धिपरतया व्याख्यानादर्शनात्-तथाप्यभिप्रेतत्वसंभवाद्वा भाष्यान्तरे तथाप्रतिपादनसंभवाद्वा एवमुक्तमिति द्रष्टव्यम् । **अन्येत्वि-त्यादि । शून्यवादिनिरासपरतया व्याख्यात**मिति । नाभाव उपलब्धेः, वैधर्म्याच्च न स्वप्नादिवदिति सूत्रद्वयं सिद्धान्त इव तन्मतेपि योगाचारमतनिराकरणपरत्वात्

नोद्भावितमिति द्रष्टव्यम् । **अर्थसद्भावप्रतिषेधरूपेण वैषम्यस्ये**ति । ज्ञानास्तित्वं वैभाषिकसौत्रान्तिकयोगाचाराणां त्रयाणामपि समानम् । तत्र चाद्ययोः अर्थसद्भावसाम्यातिरेकात्तन्निरासकरणानन्तरमेवार्थसद्भावप्रतिषेधवादिनिराकरणमिष्टमिति भावः । **नापि स्वगमसदि**ति । असतः पदार्थात् उत्पत्तिर्नास्ति, असतः पदार्थस्य उत्पत्तिर्नास्तीति प्रतिज्ञाद्वयं सूत्रे विवक्षितमिति भावः ॥

इति सर्वथानुपपत्त्यधिकरणम् ॥

---

## (६) एकस्मिन्नसंभवाधिकरणम्

**नैकस्मिन्नसंभवात् २-२-३१**

भाष्ये **पञ्चास्तिकाया इति चे**ति । अस्तीति कायन्ते शब्द्यन्त इति अस्तिकायव्युत्पत्तेरिति भावः । भाष्ये **आकाशास्तिकाय** इति । आकाशास्तिकायमपि द्वेधा वर्णयन्ति, लोकाकाश आलोकाकाश इति । उपर्युपरिस्थितानां लोकानामन्तर्वर्ती लोकाकाशः, तेषामुपरिमोक्षस्थानमालोकाकाशः । तत्र न लोकास्सन्ति । उक्तं च— "गत्वागत्वा निवर्तन्ते चन्द्रसूर्यादयो ग्रहाः । अद्यापि न निवर्तन्ते त्वालोकाकाशमार्गगाः ॥ " इति । भाष्ये — **मोक्षोपायश्च गृहीत** इति । यद्यपि सम्वरशब्देनैव मोक्षसाधनमप्युक्तमेव, "आस्रवो भवहेतुः स्यात् सम्वरो मोक्षकारणम्" इति—तथापि सम्वरशब्दविवक्षितमोक्षकारणविशेषातिरिक्तस्योपायस्यापि सङ्ग्रहार्थमिदमुक्तमिति द्रष्टव्यम् । भाष्ये — **भोगोपकरणमिन्द्रियादिक**मिति । "आस्रवः कर्मणा बन्धः निर्जरस्तद्विमोचनम् " इति जिनदत्तवचनं मतान्तराभिप्रायेणेति द्रष्टव्यम् । भाष्ये — **घातिकर्मचतुष्टयमघातिकर्मचतुष्टयञ्चे**ति । ज्ञानावरणीयं दर्शनावरणीयं मोहनीयम् आन्तरायिकं च चत्वारि घातिकर्माणि; वेदनीयं नामिकं गोत्रिकम् आयुष्कञ्चेति चत्वार्यघातिकर्माणि । तत्र, 'सम्यग्ज्ञानं न मोक्षसाधनम् । न हि ज्ञानाद्वस्तुसिद्धिः, अतिप्रसङ्गादिति विपर्ययो ज्ञानावरणीयं कर्मोच्यते । आर्हतदर्शनाभ्यासान्न मोक्ष इति ज्ञानं दर्शनावरणीयम् । बहुषु विप्रतिषिद्धेषु तीर्थकैरुपदर्शितेषु

मोक्षमार्गेषु विशेषानवधारणम् मोहनीयं कर्म। मोक्षमार्गप्रवृत्तानां तद्विघ्नकरं विज्ञानमान्तरायिकं कर्म। तानीमानि श्रेयोहन्तृत्वात् घातिकर्माण्युच्यन्ते। शुक्लशोणितव्यतिकरे जाते मिलितं तदुभयस्वरूपम्, आयुः कायति कथयत्युत्पादनद्वारेणेत्यायुष्कम्; तस्य देहाकारेण परिणामशक्तिर्गोत्रिकम्; शक्तौ सिद्धायां तस्मिन् बीजे कललबुद्बुदात्मतारम्भकक्रियाविशेषो नामिकम्; धर्वीयबीजस्य तेजःपाकव[शा?]दीषद्घनीभावशरीराकारपरिणामहेतुर्वेदनीयमिति चत्वार्य्यपि श्रेयोहन्तृत्वाभावात् अघातीनीति तेषां प्रक्रिया। भाष्ये—**तप** इति। तप्तशिलारोहणादिकमित्यर्थः। भाष्ये — **सम्वरो नामे**ति। संवृणोति इन्द्रियप्रवृत्तिमिति व्युत्पत्त्या गुप्तिसमित्यादिकं मोक्षसाधनं सम्वर इत्युच्यते। कायवाङ्मनोनिग्रहो गुप्तिरिति जैनानां परिभाषा। भूमिगतजन्तुहिंसापरिहाराय प्रहते मार्गे सम्यगादित्यरश्मिप्रकाशिते निरीक्ष्य सञ्चरणम्, मितभाषणम्, नियताहारनिवेवणमित्यादिकं समितिरिति परिभाष्यते। भाष्ये — **आत्मस्वरूपाविर्भाव** इति। निवृत्तसमस्तक्लेशस्य लोकाकाशावस्थानं मोक्ष इत्येके, पञ्जरमुक्तशुकस्येव जलनिमज्जनप्रक्षीणपङ्कलेपशुष्कालाबुफलस्येव धर्माधर्मास्तिकायबन्धविनिर्मुक्तस्य सततोर्ध्वगमनं मोक्ष इति केचिदाचक्षते। भाष्ये—**स्यादस्ती**ति। स्याच्छब्दो तिङन्तप्रतिरूपकोऽनैकान्त्यद्योतकः। सत्त्वासत्त्वसदसत्त्वसदसद्विलक्षणत्वरूपाश्चत्वारः पक्षाः। तत्र च सदसद्विलक्षणत्वे सत्त्वासत्त्वसदसत्त्वमेलनैः त्रयः पक्षाः इत्येवं सप्त पक्षाः वादिभिः उत्प्रेक्षितुं शक्याः। ते सर्वेऽपि पक्षाः जैनैः स्वाङ्गीकृतसर्वपदार्थेषु ईषदीषदङ्गीक्रियन्ते, **पर्यायोऽवस्थे**ति। तन्मते पर्यायशब्दस्य अवस्थासु परिभाषितत्वादिति भावः। **द्रव्यस्य सत्त्वादिकमुपपन्नमित्यर्थ** इति। भास्करादिमत इव जात्यात्मना एकत्वम्, व्यक्त्यात्मनाऽनेकत्वमित्याद्यविरोधनिर्वाहकाकारान्तरमनपेक्षितमिति भावः। ननु सत्त्वासत्त्वादिसमावेशस्य आकारभेदेनैव परेणोपन्यस्ततया सर्वस्यैव सत्त्वासत्त्वसमावेशस्यानुक्तेः कथं तत्प्रतिषेध इत्याशङ्क्याह **सत्वासत्वविरोधो नाकारभेदेने**ति। भाष्ये — **तदानीमेव नैतद्विपरीते**ति।

ननु एकस्मिन्नपि देशकालाद्युपाधिभेदेन यथा सत्त्वासत्त्वादिविरुद्धधर्मसमावेशः, तथा उपाधिभेदं विनाऽप्यस्तु। तत्र लोकसिद्धानि प्रमाणानि सन्तीति चेत्—इहापि

सन्त्येव प्रपञ्चसत्त्वासत्त्वादिकं व्यवस्थापयितुं तैस्तैर्वादिभिरुपपादितानि तानि तानि प्रमाणानि । अत एवोक्तम्—स्याद्वादमञ्जर्याम्, " अन्योन्यपक्षप्रतिपक्षभावात् यथा परे मत्सरिणः प्रवादाः । नयान् अशेषान् अविशेषमिच्छन् न पक्षपाती समयस्तथा नः" इति । वस्तुतो देशकालाद्युपाधिभेदोऽपि सर्वत्र न सम्भवति; स देश इह नास्ति, स काल इदानीं नास्तीत्यादिप्रतीतौ देशकालाद्युपाध्यन्तराभावात् । तत्राप्युपाध्यन्तरा-न्वेषणेऽनवस्थानात् । इतरानङ्गीकारयितुं परं गुडजिह्विकान्यायेन देशकालाद्युपाधि-भेदमन्तर्भाव्य सत्त्वासत्त्वप्रतीतिरुपन्यस्यते । वस्तुतो विमृश्यमाना सा निरुपाधिकैव सत्त्वासत्त्वादिसङ्करे प्रमाणम् । अत एव स्याद्वादिनः 'घटोऽस्ति घटो नास्ति पटस्सन् पटोऽसन्' इत्यादिप्रत्यक्षप्रतीतिमेव सत्त्वासत्त्वाद्यनैकान्तिके प्रमाण-मुपगच्छन्ति । सर्वमनैकान्तिकं वस्तुत्वात् चित्रपटवदित्यनुमानमपि प्रमाणयन्ति । न हि चित्रपटे नीलपीताद्यसङ्करार्थं प्रदेशभेद आश्रयितव्यः; प्रदेशभेदासङ्करार्थं उपाध्यन्तरान्वेषणेऽनवस्थानात् । एतेन संयोगतदभावाद्यसङ्करोपि प्रत्याख्यातः । तस्मात्सर्वं वस्त्वनैकान्तिकमेवेति स्याद्वादरहस्यमिति चेत् —

उच्यते । परस्परधर्मसमावेशो सर्वानुभवसिद्धस्तावदुपाधिभेदो नापह्नोतुं शक्यते । लोकमर्यादामनुसरता देशकालादिसत्त्वनिषेधेऽपि देशकालाद्युपाध्यवच्छेदोऽनुभूयत एव । इह आत्माश्रयः परस्पराश्रयोऽनवस्था वा न दोषः, यथा प्रमेयत्वाभिधेयत्वादिवृत्तौ, यथा च बीजाङ्कुरादिकार्यकारणभावे । विरुद्धधर्मसमावेशो सर्वथोपाधिभेदं प्रत्याचक्षाणस्य च, अयमस्याः पुत्रोऽस्याः पतिरस्याः पिता अस्याः श्वशुर इत्यादिव्यवस्थाऽपि न सिद्ध्येदिति कथं तत्र तत्र स्याद्वादी मातृत्वाद्युचितान् व्यवहारान् व्यवस्थया-ऽनुतिष्ठेत् । तस्मात् सर्वबहिष्कार्योऽयमनेकान्तवाद इत्यलं विस्तरेण ।

**नास्तित्वशङ्का निरवकाशेत्यर्थ** इति । ततश्च कालस्यास्तिकायशब्द-वाच्यत्वं कुतो न भवेदिति भावः ।

**एवंशब्दं व्याचष्ट** इति । अध्याहृत्य व्याचष्ट इत्यर्थः । भाष्ये—**हस्त्यादि-शरीरेऽवस्थितस्येति** । हस्त्यादिशरीरात् पिपीलिकादिशरीरं प्रविशतस्तत्र अमान्तमंशं विहाय प्रवेशः स्यादिति जीवस्य पूर्वावस्थातो विकलत्वरूपमकात्स्न्यं प्रसज्येतेत्यर्थः ॥

इदमुपलक्षणम् – मशकदेहात् मातङ्गदेहं प्रविशतः व्यापनसमर्थपरिमाणं नास्तीति तत्र तस्य सर्वाङ्गीणसुखादिकं न स्यात् । किञ्च जीवस्य देहपरिमाणत्वे योगसिद्धस्य कायव्यूहपरिग्रहे कृत्स्नदेहव्यापित्वं न संभवतीति तस्य अनेककायाधिष्ठानत्वं न स्यादित्यपि द्रष्टव्यम् ।

**अवस्थाभेदादविरोधवर्णन** इति । अवस्थाभेदोपगमापगमाभ्यामविरोधवर्णने प्रसक्ते विकारित्वमुपपादयन्तीति योजना । एवं हि परेषां सूत्रावतारिकाभाष्यम्, "अथ पर्यायेण बृहच्छरीरप्राप्तौ केचिज्जीवावयवा उपगच्छन्ति, तनुशरीरप्राप्तौ केचिदपगच्छन्तीत्युच्यते, तत्राप्युच्यते, 'न च पर्यायादप्यविरोधो विकारादिभ्यः'।" इति । **वृक्षादिगतवृद्धिक्षयादिव्यावृत्ति**रिति । न ह्यत्र सूत्रे पर्यायशब्देन वृद्धिक्षयौ विवक्ष्येते, येनावयवोपगमापगमयोरवश्यम्भावः स्यात्; किन्तु सङ्कोचविकासावेव, जैनैरपि सङ्कोचविकासमात्रस्यैवाभ्युपगतत्वादिति भावः । **निरुपाधिकधर्मत्वा**दिति । 'न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' इति नित्यत्वस्य शास्त्रप्रतिपन्नत्वात्; 'श्रुतेस्तु शब्दमूलत्वात्' इति न्यायात् यथाप्रमाणमभ्युपगन्तव्यत्वात्। युक्त्यनुसारेण कल्पयतां तु जैनानामयं दोषो भवत्येवेति भावः ॥

अत्र परैः—आत्मकालगताद्यमध्यमपरिमाणे नित्ये, आत्मपरिमाणत्वात् अन्त्यपरिमाणवत्। ततश्च त्रयाणामपि आद्यमध्यमान्त्यपरिमाणानां नित्यत्वात् सर्वशरीरेषु तुल्यत्वं स्यात्; न तु शरीरभेदेनावयवोपचयलक्षणपरिणामभेदः । अत्र पक्षे सौत्र उभयशब्द आद्यमध्यमपरिमाणपरः, परिमाणत्रयाभ्युपगमादिति एका व्याख्या। द्वितीया तु – मोक्षकालगतात्मपरिमाणस्य नित्यत्वात्, तस्य अभूत्वाभावित्वानुपपत्तेः प्रागपि तदस्तीति तद्विरुद्धपरिमाणायोगात्, आद्यं मध्यमञ्च परिमाणं तदेवेति आद्यमध्यमकालयोरपि एकपरिमाण एव जीवः स्यात् । न च शरीरभेदेन परिमाणभेदःस्यादिति । अत्र च पक्षे सौत्र उभयशब्द आद्यमध्यमावस्थापरः; न तु पूर्वपक्षवत् आद्यमध्यमपरिमाणपरः, परिमाणभेदाभावात् – इति व्याख्याद्वयं कृतम् । तदेतदनुवदति **अन्त्यावस्थितेश्च अन्त्यपरिमाणस्य नित्यत्व** इत्यादिना । अत्र च, 'अन्त्यपरिमाणस्य नित्यत्वे आत्मपरिमाणत्वाविशेषेण आद्यमध्यमपरिमाणयोरपि नित्यत्वादविशेषः एकशरीरपरिमाणता स्यात्—एकशरीरत्वं (एकशरीरत्वमेकरूपत्वम्?) नित्य-

सकलपरिमाणः स्यात्। ततश्च उपचितापचितशरीरप्राप्तिर्न स्यादिति परे, अन्त्यपरिमाणस्य नित्यत्वे तस्याभूत्वाभावित्वानुपपत्तेः प्रागपि तदस्तीति तद्विरुद्धपरिमाणावरोधायोगाद् आद्यं मध्यमञ्च परिमाणं तदेवेति उभयोराद्यमध्यमावस्थयोः अन्त्यपरिमाणस्य नित्यत्वादविशेषः, सर्वदाऽणुत्वमेकरूपं महत्त्वं वा स्यादिति ते चापरे च योजनान्तरमाहुः' इति पाठः समीचीनः; एवं विविच्य कल्पतरुणा व्याख्यातत्वात्, अर्थौचित्याच्चेति वदन्ति। **भेदभेद इति नाममात्रं कृतं स्या**दिति। अत्र क्रमोऽविवक्षितः। अभेदो भेद इति च नाममात्रं कृतं स्यादित्यर्थः। **बहुप्रतियोगिक**मिति। घटत्वं बहुसाधारणमित्युक्ते बहुत्वस्य भेदगर्भत्वात् साधारण्यं भेदसहमिति भावः। साधारणाकारस्य भेदसहत्वमुपपादयति **विरोधिधर्मानाश्रयत्व** इति। **अभेदस्य स्वाभावरूपत्वा**दिति। यदा न भिनत्ति, तर्हि भेदाभावरूपस्याभेदस्य सत्त्वात् भेदात्मा घटादिरेव न स्यादित्यर्थः। **विवसना**दिति। जैनादेरित्यर्थः। **पर्यायानपेक्षमाणस्ये**ति। अविरोधनिर्वाहकान्तरनिरपेक्षमेव स ब्रूते, वयं तु तत्सापेक्षमेव ब्रूम इति चेदित्यर्थः। **भिन्नाभिन्नत्वाभ्युपगमा**दिति। यादवभास्कराभ्यामिति शेषः। ननु अवस्थातद्वतोरवस्थान्तरकल्पकाभावादेव तन्निरपेक्षमेवावस्थातद्वतोर्भिन्नाभिन्नत्वमभ्युपगम्यते इत्याशङ्क्याह **यथैकस्य द्रव्यस्ये**त्यादिना **द्रव्यस्यावस्थान्तरसापेक्षत्वा**दिति)। अवस्थावन्निरूपितयोः अवस्थावद्गतयोर्भेदाभेदयोरवस्थायाः स्वपरनिर्वाहकतया निर्वाहकान्तरनिपेक्षत्वेऽपि अवस्थानिरूपितयोः अवस्थावद्गतयोः भेदाभेदयोः निर्वाहकावस्थान्तरस्यापेक्षितत्वादिति भावः। **ययाऽवस्थये**ति। ययाऽवस्थया साकमित्यर्थः। **नास्ति विवाद** इति। पटत्वावस्थाया एव भिन्नाभिन्नत्वमिति परिभाषा कृता स्यादित्यर्थः। **श्वश्रूभिक्षाप्रतिक्षेपायेते**ति। वेदान्तिनामस्माकं सर्ववस्त्वनैकान्त्यवादो युज्यते, न तु जैनानामिति वदन् सूत्रकारः श्वश्रूभिक्षाप्रतिक्षेपं कुतो नानुसरेदित्यर्थः। स्वपक्षे दोष इत्याह **अविशेषशब्दे**नेति॥

इति एकस्मिन्नसंभवाधिकरणम्॥



## (७) पशुपत्यधिकरणम् ।



सिद्धान्ते व्याघातमाह – **मुद्रिकेतीति । बहुषु तन्त्रेषूक्ता** इति । मुद्रिकाषट्कधारणभगासनस्थात्मध्यानादिकं क्वचित् तन्त्रे निःश्रेयससाधनतयोक्तम्; तन्त्रान्तरे तद्विरुद्धसुराकुम्भस्थापनतत्स्थदेवनार्चनादिकं निःश्रेयसाधनतया वर्णितम् । एवं नानातन्त्रोक्तानि साधनानि क्रमेण **मुद्रिकाषट्कधारणभगासनस्थात्मध्यान** – इत्यादिना भाष्ये परिगणितानीत्यर्थः । भाष्ये **शास्त्रयोनित्वादित्यत्र दोषस्योक्तत्वादि**ति । 'तच्छरीरं नित्यमनित्यं वा । न तावन्नित्यम्; सावयवस्य तस्य नित्यत्वे जगतोऽपि नित्यत्वाविरोधादीश्वरासिद्धेः । नाप्यनित्यम्; तद्व्यतिरिक्तस्य तद्धेतोः तदानीमसंभवात्' इत्यादिनोक्तत्वादित्यर्थः ॥

ननु जगच्छरीरं परमात्मानमभ्युपगच्छता सूत्रकारेण शरीरवत्त्वे भोगादिप्रसङ्ग इति वक्तुं न शक्यत इत्याशङ्क्याह **अशरीरत्वाभ्युपगमेन परिहार** इति । **अशरीरत्वानभ्युपगमेने**ति शरीरत्वेऽपि तस्य उभयलिङ्गत्वप्रतिपादकशास्त्रबलात् न भोगादिप्रसङ्ग इति भावः ॥

**कृतकरत्वप्रसङ्ग** इति । ततश्च नेदमधिकरणं वेदविरुद्धार्थत्वज्ञापनपरम्, अपि तु प्रतितन्त्रस्य वेदाविरोधस्यापातप्रतीतत्वसमर्थनपूर्वकं श्रुतिशैवागमयोरविरोधनयनपरमेवेति भावः । **अविरोधे निर्नीषीतेऽपी**ति । अस्मिन्नधिकरण इति शेषः । **तत्स्वारस्यभञ्जक** इति । श्रुतिस्वारस्यभञ्जक इत्यर्थः । **बाधविकल्पसमुच्चयसङ्कोचैरि**ति । बाधरूपैः विकल्पसमुच्चयसङ्कोचैरित्यर्थः । विकल्पो हि पाक्षिकबाधः, समुच्चयः श्रुतनैरपेक्ष्यबाधः, सङ्कोचस्तु एकदेशबाधः । सर्वात्मना श्रुतिबाधे विवक्षिते अविरोधनयनासम्भवादिति द्रष्टव्यम् । **श्राद्धकल्पस्थमांसविधानेने**ति । श्राद्धकल्पस्थगवालम्भविधानेनेत्यर्थः । मांसविधानमात्रस्य, 'न हिंस्यात्' इति निषेधविरोधाभावात् सङ्कोचकत्वाभावात् । पत्नीसंयाजेषु, 'जाघन्या पत्नीस्संयाजयन्ती'ति पत्नीसंयाजार्थतया विहिताया आलम्भमन्तरेण कथादिना स्वतस्सिद्धजाघन्या एव ग्रहणस्य, "जाघनी चैकदेशत्वात्" (३-३-१०.) इति तार्तीयाधिकरणसिद्धतया तद्वदेव

" मत्स्यहरिणरुरुशशकूर्मवराहमेषमांसैः सम्वत्सराणि, वार्ध्रणसेन कालसाकच्छागलोह-खङ्गमांसैर्मधुमिश्रैश्चानन्त्यम् " इति विहितमांसस्यान्यथाप्युपपत्तेरिति द्रष्टव्यम् । युगान्तरेऽनुष्ठानमस्तीत्यस्वरसादाह **यद्वा बह्वर्थविरोध** इति । आचान्तेन कर्तव्यम्, दक्षिणाचारेण कर्तव्यमित्यादिस्मृतीनाम्, वेदं कृत्वा वेदिमिति क्रमप्रतिपादकश्रुतिसङ्कोचकत्वस्य शिष्टाकोपाधिकरण ( १-३-४ ) सिद्धत्वादिति भावः । **तत्त्वं विरोधश्च दुष्परिहर** इति । ननु श्रीपाञ्चरात्रेऽपि यन्त्रविशेषादिषु लक्ष्मीसुदर्शनादीन् प्रति वासुदेवादेरङ्गत्वप्रतिपादकवचनेऽपि कथञ्चिदविरोधसमर्थनेन यथा तत्प्रामाण्यनिर्वाहः, न तु तत्त्वविपर्यासप्रतिपादनेन अप्रामाण्यमङ्गीक्रियते, एवं पाशुपतागमेऽपि तत्त्वविपर्यासप्रतिपादकवचनानामन्यथानयनस्य सुशकत्वात् कुतोऽप्रामाण्यमिति चेन्न — श्रीपाञ्चरात्रशास्त्रस्य आपादचूडं नारायणप्रतिपादकस्य मध्ये तद्विपर्यासप्रतिपादकत्वेनावभासमानस्य द्वित्र(त्रि)वाक्यशूकस्यान्यथानयनं युक्तम् ; पाशुपतागमस्य तु आपादचूडं विपर्यासप्रतिपादकस्य मोहनार्थत्वेन पुराणसिद्धस्य आन्यपर्यकथनं न पण्डितहृदयपुण्डरीकमधिरोहतीति भावः ।

**शेषा बैडालिका भवन्ति**ति । महापराधानां बाभ्रव्यशाण्डिल्यव्यतिरिक्तानां वैदिकनिश्वाससंहितानुप्रवेशाभावात् बैडालिकत्वं प्राप्तमित्यर्थः । 'यस्य धर्मध्वजो नित्यं सुरध्वज इवोच्छ्रितः । चरितानि च पापानि बैडालं नाम तत् व्रतम् ॥' इति हि स्मर्यते ।

**तृतीयार्थे षष्ठी**ति । 'कृत्यानां कर्तरि च' इति **कर्तरिषष्ठी**त्यर्थः । अर्हद्बुद्धाधिकृतस्य अशास्त्रीयस्य कथं यजनरूपत्वमित्याशङ्क्याह - **यजनरूपतोक्ति**रिति । **तदभिप्रायेणे**ति । बुद्धार्हतभीष्माद्यभिप्रायेणेत्यर्थः । ननु 'अहं तमोतिरिक्तैर्यष्टव्यः' इति भगवद्वाक्ये कथं भगवतो यष्टव्यत्वमुच्यते? न हि तमोनिष्ठा भगवन्तं कथञ्चिद्यजन्ति; तेषां रुद्रमात्रयाजकत्वादित्याशंक्याह - **अहं यष्टव्य इत्युक्ति**रिति । **न तु तदभिप्रायेणे**ति । तामसजनाभिप्रायेणेत्यर्थः । **मध्यमश्लोकोक्त**मिति । यद्वेदबाह्यं कर्मेति श्लोकोक्तमित्यर्थः । **एवमुक्तस्ततः (तदा?) तेने**ति । एवमुक्तोऽहंप्रकाशः कृतः स्वात्मा गोपित इति योजना । **त्रयीबाह्याविकारत्वस्य व्यवस्थितत्वा**दिति । न चैवमथर्वशिरःप्रोक्तपशुपतिशरीरकब्रह्मविद्यानुष्ठानं वैदिकं वक्ष्यमाणं त्रयीबाह्य-

पाशुपतानां कथमुपपद्यत इति वाच्यम् – तस्यापि वैदिकतान्त्रिकत्वेन शुद्धवैदिकत्वा-भावात् तत्राधिकारोपपत्तिरिति द्रष्टव्यम् । **साक्षादत्र वैदिककर्मान्वय** इति । शुद्धवैदिकधर्मान्वय इत्यर्थः । **अव्यवधानेन श्रुतिसिद्धभगवदुपासनार्हा अपीति** । अव्यवधानेन श्रुतिसिद्धभगवदुपासनानि दहरोपासनादीनि तत्र जीवान्त-रस्य व्यवधानाभावात् तदनर्हा अपीत्यर्थः ।

शास्त्रस्य प्राप्तार्थत्वबाधितविषयत्वाभ्यामप्रामाण्यप्रसङ्गमुपपादयति - **अनुमाने-नेत्यादिना** । **प्रतिरुद्धबाधिता वा स्यादिति** । प्राप्तार्थत्वबाधितविषयत्वाभ्यां शास्त्रस्याप्रामाण्यप्रसङ्गपरिहारार्थं शास्त्रारम्भे अनुमाननिरसनमपेक्षितमिति भावः । इह श्रुतिविरुद्धागमप्रामाण्यभङ्गार्थत्वस्य स्फुटत्वात् तन्नोपपादितमिति द्रष्टव्यम् । **प्रदान-वदेव तदुक्तमित्यादीति** । सङ्कर्षणकाण्डस्यापि पूर्वभागत्वादिति भावः । **ततश्च शून्यवादप्रसङ्ग** इति । कदाचिदसतः सर्वदा असत्त्वादिति भावः । **वास्तव-सङ्ख्येति** । परमार्थसङ्ख्येत्यर्थः । **प्रसञ्जकविपर्ययेऽपीति** । अनित्यत्वप्रसञ्जक-सङ्ख्यावत्त्वस्य विपर्यये सङ्ख्यावत्त्वाभावेऽपि प्रसञ्जनीयस्य अनित्यत्वरूपानिष्टधर्मस्या-पत्तेरित्यर्थः ।

इति पशुपत्यधिकरणम् ॥

---

## ( ८ ) उत्पत्त्यसंभवाधिकरणम् ।

**विज्ञानादिभावे वा तदप्रतिषेधः २-२-४१.**

**विज्ञानं च तदादि चेति** । ननु, "कयन्तो घुः" इत्यादिशब्दस्य नित्य-पुलिङ्गत्वात् कथमेतदिति चेत् - नायं घुः; किन्तु 'अद भक्षणे' इत्यस्मादावश्यकार्थे णिनिप्रत्यये 'आदि' इतिरूपं सिद्ध्यति । तेन च निखिलजगत्संहर्तृत्वमुखेनैव कारणत्वं प्रतिपाद्यत इति द्रष्टव्यम् । परयोजनामनूद्य दूषयति – **विज्ञानैश्वर्यादीति** । ननु परव्यूहविभवभेदभिन्नमिति वक्तव्ये कथं सूक्ष्मव्यूहविभवभिन्नमित्युच्यत इत्याशंक्याह– **सूक्ष्मं परमित्येकार्थं पदद्वयमिति** । **व्यूहः चतुर्व्यूह** इति निर्देशस्य अयुक्तता

मन्वान आह — **चतुर्व्यूहश्चतुर्विभाग** इति । **उक्तार्थे प्रमाणमाहे**ति । ज्ञानपूर्वेण कर्मणा अभ्यर्चितं परं ब्रह्म वासुदेवाख्यं प्राप्यमित्यस्मिन्नर्थे प्रमाणमाहेत्यर्थः । **भाष्ये तेषामेव जीवादिशब्दैरभिधानान्निरुद्धमि**ति । ननु सङ्कर्षणादिशब्दानां जीवादिषु परिभाषितत्वात् यत्र शास्त्रे, यच्छब्दो यत्रार्थे परिभाषितः, तत्र तस्य शब्दस्य स एव खल्वर्थो ग्राह्यः, शब्दशास्त्रगतनदीवृद्ध्यादिसंज्ञावत् । अत एव प्रद्युम्नसंज्ञकं मन इत्युक्तिरपि सङ्गता ; इतरथा प्रद्युम्नस्य मनोधिष्ठातुः प्रादुर्भावे नपुंसकलिङ्गस्वारस्याभावादिति चेन्न — अस्मिन् शास्त्रे तथापरिभाषायां प्रमाणाभावात् ; सङ्कर्षणप्रद्युम्नानिरुद्धानां जीवमनोऽहंकाराधिष्ठातृत्वस्य वासुदेवात् सङ्कर्षणस्य सङ्कर्षणात् प्रद्युम्नस्य प्रद्युम्नादनिरुद्धस्य च प्रादुर्भावस्य तस्मिन् शास्त्रे बहुशः क्षुण्णतया जीवाद्यधिष्ठातॄणां सङ्कर्षणादीनामेव ग्रहणौचित्यादिति भावः ।

विप्रतिषेधाच्च २ २-४२.

**यद्वा प्रतिपन्नेष्वर्थेष्वि**ति । इदं श्रेयो वा इदं श्रेयो वेति संशयं विना, यत् श्रेयः तन्न जानामि इति श्लोकार्थ इत्यर्थः । श्रीपाञ्चरात्रमूलभूतैकायनशाखाविषयमूलभूतवचनमुदाहरति — **मूलभूतो महानयमि**ति । **अयमि**त्येकायनवेद उच्यत इत्यर्थः । **वेदापाश्रयणेने**ति । वैदिकं कर्मावलम्ब्य सात्त्विकजनोपमर्दप्रवृत्तानामसुराणामित्यर्थः । **तच्च न रक्षणोपयुक्तमि**ति । दुष्कृतविनाशमन्तरेण साक्षात् भक्तसंरक्षणार्थमित्यर्थः ।

**सूत्रद्वयमित्यर्थ** इति । अस्मिन् सिद्धान्त इवेति शेषः । **सूत्रपदाननुगुणमित्यर्थ** इति । तदुत्तरत्र स्पष्टम् । **अधिकारिभेदेने**ति । उदितानुदितहोमयोरधिकारिभेदेन विकल्पः । **कालभेदेने**ति । कदाचित् व्रीह्यनुष्ठानं कदाचित् यवानुष्ठानमित्यर्थः । षोडशिग्रहणाग्रहणादौ फलभेदेन विकल्पः । तत्र हि फलभूमार्थिना षोडशिग्रहणं कर्तव्यमिति भावः । **आरभ्यशब्दोपात्तानी**ति । भाष्यगत - **आरभ्य** शब्देन इमानि वचनान्यभिप्रेतानीत्यर्थः । **आर्थमेकत्वमुक्तमि**ति । 'पञ्चरात्रं तु कथ्यते' इत्यत्र पञ्चरात्रमित्येकवचनार्थ उक्त इत्यर्थः ।

**कर्तृसामान्यं दर्शितमिति** । एककर्तृकं दर्शितमित्यर्थः । **विरुद्धतया अभिमतानामर्थानामिति** । त्रयीधर्मपरित्यागादीनां पाञ्चरात्रप्रतिपाद्यानामित्यर्थः । 'प्रत्यक्षहेतवो योगा' इत्यस्यार्थमाह – **अत्र हि साक्षात्कारात् मोक्ष** इति । योगशास्त्रस्थाः प्रत्यक्षस्य मोक्षहेतुत्ववादिनः, सांख्यास्तु शास्त्रजन्यज्ञानस्य मोक्षहेतुत्ववादिन इति श्लोकार्थ इति भावः । **भ्रमराहित्यवचनं कथं घटत** इति । भ्रमराहित्यप्रतिपादनं कथं घटत इत्यर्थः । भ्रमप्रतिपादकं वचनमेव दर्शयति – **कपिलादिभिरित्यादिशब्देनेति** । **एवं तस्य वेदनस्येति** । एवं सतीत्यर्थः । **अधिकरणनिष्कर्ष उपपन्नतर** इति । ननु

"सांख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा ।
ज्ञानान्येतानि राजर्षे विद्धि नानामतानि वै ॥
सांख्यस्य वक्ता कपिलः परमर्षिः स उच्यते ।
हिरण्यगर्भो योगस्य वक्ता नान्यः पुरातनः ॥
अवान्तरतपा नाम वेदाचार्यः स उच्यते ।
प्राचीनगर्भं तमृषिं प्रवदन्ति हि केचन ॥
उमापतिः पशुपतिः श्रीकण्ठो ब्रह्मणः सुतः ।
उक्तवानिदमव्यग्रो ज्ञानं पाशुपतं शिवः ॥
पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम् ।
सर्वेषु च नृपश्रेष्ठ ! ज्ञानेष्वेतेषु दृश्यते ॥
यथागमं यथान्यायं निष्ठा नारायणः प्रभुः ॥
न चैवमभिजानन्ति तमोभूता विशां पते ! ॥
तमेव शास्त्रकर्तारं(रः) प्रवदन्ति मनीषिणः ॥"

इति सांख्याद्यागमानां वैदिकमतान्तरत्वं नारायणैकनिष्ठत्वं च प्रतिपादितम् ।

तथा— "सांख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा ।
आत्मप्रमाणान्येतानि न हन्तव्यानि हेतुभिः ॥"

तथा— "सर्वं प्रमाणं हि तथा यथैतच्छास्त्रमुत्तमम् ।"

तथा— "एवं तत्त्वमिदं कृत्स्नं सांख्यानां विदितात्मनाम् ।
यदुक्तं यतिभिर्मुख्यैः कपिलादिभिरीश्वरैः ॥

यस्मिन्न विभ्रमाः केचित् दृश्यन्ते मनुजर्षभ ।
गुणाश्च यस्मिन् बहवो दोषहानिश्च केवला ॥"

तथा— "ब्रह्मविष्णुमहादेवप्रमुखैः परिकीर्तिता ॥

आगमाश्चानया नेया दिशा नैवान्यथा बुधाः ।
अन्यथा ते तु नेयाश्चेत् विरुद्धाः स्युर्न संशयः ॥"

तथा— "त्वामेवान्ये शिवोक्तेन मार्गेण शिवरूपिणम् ।
बह्वाचारविभेदेन भगवन्तमुपासते ॥"

इत्यादीनि भारतमानवभागवताद्युक्तानि सर्वागमानां साधारण्येन प्रामाण्यप्रतिपादकानि।

तथा— "तस्माद्वै वेदबाह्यानां रक्षणार्थं च पापिनाम् ।
विमोहनाय शास्त्राणि करिष्यावो वृषध्वज ! ॥

एवं सञ्चोदितो रुद्रो माधवेन मुरारिणा ।
चकार मोहशास्त्राणि केशवोऽपि शिवेरितः ॥

कापालं लागुडं शाक्तं भैरवं पूर्वपश्चिमम् ।
पञ्चरात्रं पाशुपतं तथाऽन्यानि सहस्रशः ॥"

तथा— "बुद्धश्रावकनिर्ग्रन्थाः पञ्चरात्रविदो जनाः ।
कापालिकाः पाशुपताः पाषण्डा ये च तद्विधाः ॥

यस्याश्नन्ति हवींष्येते दुरात्मानस्तु तामसाः ।
न तस्य तद्भवेच्छ्राद्धं प्रेत्येह च न तत्फलम् ॥

वामाः पाशुपताचाराः तथा वै पाञ्चरात्रिकाः ।
भविष्यन्ति कलौ तस्मिन् ब्राह्मणाः क्षत्रियास्तथा ॥

श्रुतिशिष्टस्मृतिप्रोक्तप्रायश्चित्ते भयं गताः ।
क्रमेण श्रुतिसिद्ध्यर्थं मनुष्यस्तन्त्रमाश्रयेत् ॥ ”

इति वैष्णवशिवागमसाधारणदूषणानि ।

तथा— “ धर्मशास्त्रे पुराणे च प्रोक्तं हि मरणान्तिकम् ।
प्रायश्चित्तं मनुष्याणां पापिष्ठानां सुदारुणम् ॥

भयदुर्बलचित्तानां मरणं जायते भृशम् ।
तेषामेव हि रक्षार्थं खल्वहं तन्त्रमुक्तवान् ॥ ”

तथा— “ अथांशः सात्त्वतो नाम विष्णुभक्तः प्रतापवान् ।
महात्मा दाननिरतो धनुर्वेदविदां वरः ॥

स नारदस्य वचनात् वासुदेवार्चने रतः ।
शास्त्रं प्रवर्तयामास गुण्डगोलादिभिः श्रुतम् ॥

तस्य नाम्ना तु विख्यातं सात्त्वतं नाम शोभनम् ।
प्रवर्तते महाशास्त्रं कुण्डादीनां हितावहम् ॥ ” — इति ।

तथा— “ तेनोक्तं सात्त्वतं तन्त्रं यज्ज्ञात्वा मुक्तिभाक् भवेत् ।
यत्र स्त्रीशूद्रदासानां संस्कारो वैष्णवः स्मृतः ॥

पञ्चरात्रं भागवतं तन्त्रं वैखानसाभिधम् ।
वेदभ्रष्टान् समुद्दिश्य कमलापतिरुक्तवान् ॥ ”

तथा— “ मत्तन्त्राश्रयणेनैव मत्पूजा च कृता त्वया ।
तपसा प्रीतवानस्मि तव शाण्डिल्य ! मे प्रिय ! ॥

कुमार्गेणापि शाण्डिल्य ! मम पूजा त्वया कृता ।
अतः कालेन महता देवमार्गं गमिष्यसि ॥ ”

इत्यादीनि कौर्मभागवतवासिष्ठलैङ्गकादीनि पञ्चरात्रनिन्दकानि वचनानि ।

“ इदं शतसहस्राद्धि भारताख्यानविस्तरात् ।
आविध्य मतिमन्थानं दध्नो घृतमिवोद्धृतम् ॥ ”

इत्यादीनि भाष्योदाहृतानि भारतवचनानि पञ्चरात्रस्तावकानि ।

“ एवमभ्यर्थितस्तैस्तु पुराऽहं द्विजसत्तम ! ।
वेदक्रियासमायुक्तां कृतवानस्मि संहिताम् ॥

निश्वासाख्यां ततस्तस्यां लीना बाभ्रव्यशाण्डिलाः ।
अल्पापराधा इत्येव शेषा बैडालिका भवन् ॥

मयैव मोहितास्ते तु भविष्यज्ज्ञानता द्विजाः ।
निश्वाससंहितायां हि लक्षयमात्रप्रमाणतः ॥

सैव पाशुपती दीक्षा योगः पाशुपतश्च सः ।
एतस्माद्वेदमार्गाद्धि यदन्य इह जायते ॥

तच्छूद्रकमविज्ञेयं रौद्रं शौचविवर्जितम् ।
ये रुद्रमुपजीवन्ति कलौ बैडलिका नराः ॥

उच्छिष्टरुद्रास्ते ज्ञेयाः नाहं तेषु व्यवस्थितः ।
तेषां गौतमशापाद्धि भविष्यन्त्यनु ये द्विजाः ॥

तेषां मध्ये सदाचारा ये तु मच्छासने रताः ।
ते स्वर्गमपवर्गञ्च यान्त्येव खलु निश्चयः ॥

बैडालिका ये यास्यन्ति मम सन्ततिदूषकाः ।
प्राक् गौतमाग्निनिर्दग्धाः पुनर्मद्वचनाद् द्विजाः ॥

नरकं तु गमिष्यन्ति नात्र कार्या विचारणा ।
निर्मितं हि मया पूर्वं व्रतं पाशुपतं शुभम् ॥

गुह्याद्गुह्यतमं सूक्ष्मं वेदसारं विमुक्तये ।
एष पाशुपतो योगः सेवनीयो मुमुक्षुभिः ॥

भस्मच्छन्नैर्हि सततं निष्कामैरिति हि श्रुतिः ।
वामं पाशुपतं सोमं लाङ्गलं चैव भैरवम् ।
न सेव्यमेतत् कथितं वेदबाह्यं तथेतरत् ॥ ”

इत्यादिवचनेषु वैदिकावैदिकविभागपूर्वकं केषाञ्चित्पाशुपतागमविशेषाणां वैदिकबाह्यत्वं प्रतिपाद्यते । एवं सति पाशुपतपाञ्चरात्रयोः किं वैषम्यमिति चेत् —

उच्यते । वेदाविरुद्धांशे सर्वेषां प्रामाण्यम् । सांख्ययोगादावपि प्रकृतेः अब्रह्मात्मकत्वस्य वेदविरुद्धत्वात्, तस्मिन्नंशेऽप्रामाण्यम् । पाशुपतस्यापि —

"शैवागमोऽपि द्विविधः श्रौतः स्मार्तश्च स स्मृतः ।
स्वतन्त्रो दशधा चैव तथाऽष्टादशधा पुनः ॥
कामिकादिप्रभेदेन बहुधा स व्यवस्थितः ।
श्रुतिसारमयोऽन्यस्तु शतकोटिप्रविस्तरः ॥
परं पाशुपतं यत्र व्रतं ज्ञानं च कथ्यते ।"

इति कामिकाद्यष्टाविंशतिभेदभिन्नसिद्धान्ततन्त्राणां स्वतन्त्रत्वप्रतिपादनादवैदिकत्वं सिद्धम् । पाञ्चरात्रे तु तन्निन्दापरवचनं प्रक्षेपशंकारहितेषु पुराणेषु न दृश्यते इति सर्वत्र प्रामाण्यमेव । अत एव पाञ्चरात्रकर्तुः वासुदेवस्य वेदादावेव सर्वज्ञत्वोपगमात् पतञ्जल्यादीनां च जीवत्वात्, पञ्चरात्रस्य च पुराणेषु बुद्धादिदेशनावत् व्यामोहनार्थमीश्वरप्रणीतत्वात्, न योगाद्यधिकरणेन गतार्थतेति मध्यस्थेन **कल्पतरुकारेण** प्रतिपादितमित्यलमतिचर्चया ।

**परेत्वित्यादि** । **कार्यविशेषरूपातिशयसंभवादिति** । सङ्कर्षणप्रद्युम्नानिरुद्धानां संहारस्थितिसृष्टिरूपकार्यविशेषरूपातिशयसद्भावादित्यर्थः ॥

इति उत्पत्त्यसम्भवाधिकरणम् ॥

इति दशोपनिषद्भाष्यकारैः श्रीमद्रङ्गरामानुजमुनिभिः विरचितायां श्रुतप्रकाशिकाव्याख्यायां भावप्रकाशिकायां द्वितीयाध्यायस्य द्वितीयः पादः समाप्तः ॥

---

श्रीः

श्रीमते रङ्गरामानुजमहादेशिकाय नमः ।

# अथ द्वितीयाध्याये तृतीयः पादः

## (१) वियदधिकरणम्

न वियदश्रुतेः २-३-१.

**अयमर्थ** इति । **सङ्गतिरित्ययमर्थः** इत्युत्तरत्रान्वयः । **कार्यविषये परोक्तेति** । यद्यपि परस्परविरोधेन वेदान्तानामप्रामाण्यशङ्का परेषामिव वियत्प्राणाधिकरणेषु न पूर्वपक्षत्वेन उद्भाव्यते, कार्यताप्रकारविरोधसमाधानमात्रपरत्वात्—तथाऽपि वियदनुत्पत्त्यादिपूर्वपक्षोद्भावनपूर्वकं वियदुत्पत्त्यादिश्रुतीनां स्वार्थसमन्वये स्थूणानिखननन्यायेन साधिते सति विप्रतिषेधेन निरस्तानां सांख्यानां हृदि विपरिवर्तमाना वेदान्तेष्वपि विप्रतिषेधप्रतिबन्दी दूरनिरस्ता भवति; अत एव विरोधाध्यायसङ्गतिरपि सिद्धा भवतीति भावः। **सूत्राभिप्रायविवरणमिति**। न तु श्रुतिशब्दस्य श्रवणार्थत्वप्रतिपादनपरमिति भावः। **श्रुतिनिर्देशस्वारस्यं स्यादिति** । गौणत्वस्य शब्दधर्मत्वेन प्रमितिधर्मत्वाभावादिति भावः । निरवयवत्वस्यानित्यगुणसाधारणतया तत्रानैकान्त्यपरिग्रहाय **द्रव्यत्वादित्युक्तम्** । न चास्य हेतोरसिद्धिः, क्वचिदपि तदभावस्य बुद्धावारोहासम्भवात् । अत्र वियत् नास्तीति निषेधस्य व्याहतत्वात् । 'आकाशे चाविशेषात्' इति वैभाषिकाधिकरणसूत्रे—'इहेति प्रत्ययवेद्यो देश आकाश' इति व्यवस्थापितत्वात् । न च हेतोरप्रयोजकत्वम्; निरवयवस्य सर्वगतस्य समवायिकारणाद्यनिरूपणादिति भावः । **तैत्तिरीयकतर्कविरुद्धेति** । तैत्तिरीयगततर्कविरुद्धेत्यर्थः ।

अस्ति तु २-३-२.

**अस्तीति श्रुतिः साधकतयेति** । अस्तीत्यस्मिन्नर्थे श्रुतिः साधकयेत्यर्थः । **उत्पत्तिप्रमितिजननहेतुरिति** । मानान्तरागोचरत्वस्य श्रौतत्वानुगुणत्वादित्यर्थः । **प्रत्यक्षसिद्धत्वमात्रेणेति** । मानान्तरसिद्धत्वमात्रेणेत्यर्थः । **प्रत्यक्षमनुमानं वेति** ।

शब्दोऽष्टद्रव्यातिरिक्तद्रव्याश्रित इत्यनुमानं वेत्यर्थः । **अनुमानान्तरं चे**दिति । आकाशं नित्यं निरवयद्रव्यत्वादित्यनुमानान्तरमित्यर्थः । ननु सर्गाद्यसमयावच्छिन्नाकाशस्य पक्षीकारे हि तस्य श्रुत्यैकसमधिगम्यतया तस्यानुत्पत्तिसाधने धर्मिग्राहकमानविरोधः, आकाशमात्रपक्षीकारे तु धर्मिग्राहकमानबाधस्य कः प्रसङ्ग इत्यस्वरसादाह— **निरवयवत्वहेतोर्महदादिष्वि**ति । **निरवयवत्वहेतो**रिति । निरवयवद्रव्यत्वहेतोरित्यर्थः । **संयोगविशेषवचनाच्चे**ति । निरवयवस्य संयोगा(गविशेषा ?) भावादिति भावः । **सर्वगतद्रव्यत्वहेतो**रिति । सर्वगतत्वादित्युक्ते नैयायिकमते प्रमेयत्वादिप्रत्यासत्तिजन्यज्ञानस्य सर्वगोचरत्वेन सर्वगततया तस्मिन् व्यभिचारात् तदभावार्थं द्रव्यत्वादिति वाच्यमिति भावः ।

स्याच्चैकस्य ब्रह्मशब्दवत् २ ३ ४.

**तपसा ब्रह्मे**ति । "तपसा ब्रह्म विजिज्ञासस्व" इति वाक्ये ब्रह्मशब्दो मुख्यः, 'तपो ब्रह्मे'ति वाक्यशेषे तु ब्रह्मज्ञानसाधनत्वेन गौण" इति भावः । **मुख्यामुख्यविषयत्वाभावादि**ति । 'अन्वयादिति चेत् स्यादवधारणात्' इत्यत्र, अन्नमयादिषु आत्मशब्दा अपरमात्मबुद्ध्या नोपचारतः प्रयुक्ताः; अपि तु परमात्मत्वबुद्ध्यैव । 'अन्तः प्रविष्टः शास्ता जनानाम्' इति तत्तदन्तःप्रवेशेन नियन्तृत्वमात्मत्वम् । तत्र प्राणमये अन्नमयात् अन्तरात्मत्वमात्रेण परमात्मत्वबुद्धिः जाता । तस्यापि अन्तरदर्शनेन तत्रापि परमात्मत्वबुद्धिर्जाता; पूर्वत्र तु निवृत्ता। यस्यान्यदन्तरं नास्ति, ईक्षणादिकं च श्रुतम्, तस्मिन् परमात्मत्वबुद्धिरात्मबुद्धिश्च प्रतितिष्ठति। एवञ्च पूर्वत्रापि परमात्मत्वबुद्धिविषय एव आत्मशब्दप्रयोगात् सर्वेष्वपि पर्यायेष्वात्मशब्दः परमात्मविषय एव; न तु औपचारिकः — इति वक्ष्यमाणत्वात् तन्न्यायेन 'अन्नं ब्रह्म' इत्यत्र ब्रह्मशब्दस्यापि ब्रह्मबुद्ध्या प्रवृत्तत्वात् न भाक्तत्वम् । यथा शुक्तौ रजतबुद्ध्या प्रयुज्यमानस्य रजतशब्दस्य नौपचारिकत्वम्, तथेत्यर्थः । **उभयत्रापि समाधिभङ्ग** इति। अनुषङ्ग-श्रवणावृत्त्योः वृत्तिद्वयविरोधरूपसमयभङ्गः कार्य इत्यर्थः॥

प्रतिज्ञाऽहानिरव्यतिरेकात् २-३-५

**कार्यतयैवाव्यतिरेको विवक्षित इति भाव** इति । ननु नित्यविभूत्यादीनामकार्यत्वेऽपि प्रतिज्ञाया अहानिवत् आकाशस्य अकार्यत्वेऽपि प्रतिज्ञाया

अहानिर्न प्रसज्यते । न च 'येनाश्रुत'मित्यादौ अश्रुतादिशब्दा नित्यविभूतिव्यतिरिक्तपराः; उत्तरत्र, 'सदेव सोम्य इदमग्र आसीत् एकमेवाद्वितीयम्' इति इदङ्कारगोचरस्यैव ततः पूर्वसन्मात्रतापत्तिप्रतिपादनादिति वाच्यम् — इदंशब्दस्य प्रत्यक्षादिप्रमाणोपस्थापितसर्ववस्तुपरामर्शितया नित्यविभूत्यपरिग्रहे बीजाभावात् । इतरथा अतीन्द्रियपदार्थानां सर्वविज्ञानप्रतिज्ञाविषयत्वं न स्यात् । ततश्च त्यक्तव्यं वा विभूतीनां नित्यत्वम; स्वीकर्तव्यं वा आकाशस्यापि नित्यत्वमिति चेत् — न, अस्य दोषस्य सर्वैरपि समाधेयत्वात् । इतरथा अविद्यावत् आकाशस्यापि अनाद्यध्यस्ततया अजन्यत्वमस्तु, ब्रह्मव्यतिरेकोऽपि तद्वदेवोपपद्यत इत्युक्तौ समाधानस्य मृग्यत्वात । न च कल्पतरौ, 'तथा प्राणाः' इत्यत्र प्राणानामविद्यावत् अनाद्यध्यस्तत्वे साक्षिण्यव्यवधानात् सुषुप्तावप्युपलम्भप्रसङ्ग इत्युक्तम् । तन्न्यायादत्रापि सुषुप्तावप्युपलम्भप्रसङ्ग इति वाच्यम्—अनाद्यध्यस्तेश्वरवत् उपपत्तेः; जीवान्तराविद्यावदनुपलम्भोपपत्तेश्च। अनन्यथासिद्धप्रमाणबलात् अविद्या[या अ ?]जन्यत्वमभ्युपगतम् (न्तव्यम्)। आकाशो न तथा; प्रत्युत उत्पत्तिश्रुतिरेव वर्तत इति यदि — तर्हि प्रकृतेऽपि नित्यविभूतावपि समानमेतत् । अवान्तरसाध्यविषयहेतुभेदानामिति । 'असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् युक्तेः शब्दान्तराच्च' इत्यादाववान्तरसाध्यविषयत्वात्, असमस्तपदोपात्तहेतूनामप्येकसूत्रप्रतिपाद्यत्वं दृष्टम्; परमसाध्येऽपि समस्तपदोपात्तहेतूनामेकसूत्रप्रतिपाद्यत्वं दृष्टम्, 'कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवञ्च' इत्यादिष्विति भावः । इदञ्च चशब्दाभावस्थल इति द्रष्टव्यम् । तेन 'वाङ्मनसि दर्शनाच्छब्दाच्च', 'उपादानाद्विहारोपदेशाच्च' इत्यादौ परमसाध्ये असमस्तपदोपात्तहेतूनामपि एकसूत्रप्रतिपाद्यत्वं दृश्यत इति न चोदनीयम् ॥

यावद्विकारं तु विभागो लोकवत् २-३-७-

[ **विकारत्वं कार्यत्वमिति** ] ननु कार्यत्वं सिद्धवत्कृत्य कथं विभागशब्दिता उत्पत्तिः समर्थ्यते ?, विकारशब्दितकार्यत्व एव विवादात्; इतरथा उत्पत्तावप्यविवादादिति चेन्न । छान्दोग्ये क्वचिद्विकारेषु उत्पत्तिवादाभावस्य गतिप्रदर्शनभावपरत्वेनादोषात् ।

असम्भवस्तु सतोऽनुपपत्तेः २-३-९

**परे** त्वित्यादि । **परमसाध्यत्वाभावादिति** । विप्रतिषेधमात्रस्य स्वतोऽनिष्टत्वाभावेन तस्यैव पूर्वपक्षपर्यवसानभूमित्वाभावादित्यर्थः । **न विप्रतिषेधमात्रं पूर्वपक्षितम् ; नाप्युत्पत्तिं सिद्धान्त्येकदेशिमतं कृत्वेति** पाठः । यद्यपि कल्पतरौ, "एवमाऽध्यायपरिसमाप्तेः प्रथमं विप्रतिषेधप्रामाण्येन पूर्वपक्षः, तत एकदेशिमतेन व्याख्या, ततः सिद्धान्त इति दर्शनीयम्" इत्युक्तम् — तथापि तस्य ग्रन्थस्याधुनिकतया तत्रोद्घाटितमिति द्रष्टव्यम् । **हेतुतया उपन्यासोऽनुपपन्न** इति । ननु वाचस्पतिना, — 'तैत्तिरीयके वियदुत्पत्तिश्रुतिः यद्यप्यस्ति, तथापि तस्याः प्रमाणान्तरविरोधात्, बहुश्रुतिविरोधाच्च गौणत्वम् । ततश्च मुख्यार्थश्रुत्यभाव एव श्रुतेरित्यस्यार्थः । ततश्च, 'न वियदश्रुतेः,' 'गौण्यसम्भवात्,' 'शब्दाच्च,' 'स्याच्चैकस्य ब्रह्मशब्दवत्' इति सूत्रचतुष्टयमपि सिद्धान्त्येकदेशिमतम् । अस्तित्विति पूर्वपक्षसूत्रम् । तस्य च आकाशसृष्टिप्राथम्यप्रतिपादकं तैत्तिरीयके, तेजस्सृष्टिप्राथम्यप्रतिपादकञ्च छान्दोग्येऽस्ति ; अतः श्रुत्योः परस्परविरोध इत्यर्थः — इति व्याख्यातमिति चेत् — सत्यं व्याख्यातम् । तत्तु शाङ्करभाष्यविरुद्धमिति भाष्याभिमतयोजनयैव दूषितमिति द्रष्टव्यम् । **पृथक् परिहरणीयत्वाभावाच्चेति** । ननु 'वायुश्चान्तरिक्षश्चैतदमृतम्' इति उभयसाधारण्येन अमृतत्वमुक्त्वा पुनः वायोः विशिष्योच्यते 'सैषा ऽनस्तमिता देवता यद्वायुः' इति । अतोऽभ्यासाद्वायोरमृतत्वं विवक्षितमिति ज्ञायते । अभ्यासे भूयस्त्वमर्थस्य भवतीति न्यायात् । अतोऽधिकाशंकाव्यावृत्त्यर्थमतिदेशाधिकरणमेवास्तु ; न तु पृथग्योगकरणमुत्तरार्थमिति समाधानं युक्तम् । तेजसि विशेषपक्षपाताभावात् 'तेजो ऽतस्तथा ह्याह' इत्येवं न सूत्रयितव्यम् । 'अहङ्कारस्तथे' ति वा वक्तव्यम् । महदहङ्कारादीनामपि तस्मिन्नधिकरणे विषयत्वस्य भाष्ये एव वक्ष्यमाणत्वात् । अतः पृथग्योगकरणमुत्तरार्थमिति नातीव युज्यत इति चेत् — सत्यम्, महदहङ्काराकाशवाय्वादिसाधारणावेव पूर्वोत्तरपक्षौ । तथापि 'तदैक्षत तत्तेजोऽसृजत' इति बहुभवनसङ्कल्पपूर्वकसृष्टेः स्फुटप्रतिपादनेन सिद्धान्तावतरणस्य सौलभ्यं पर्यालोच्य, 'तेजो ऽतस्तथाह्याह' इति सूत्रयिष्यन् तदर्थेऽधिकाशङ्कामाद्ये ऽप्यतिदिशति, 'एतेन मातरिश्वा व्याख्यातः' इति । अतो न किञ्चिदवद्यमित्युत्पश्यामः ॥ इति वियदधिकरणम् ॥

## (२) तेजोधिकरणम्

तेजोऽतस्तथा ह्याह २-३ १०.

**सृष्ट्यनन्तरानुप्रवेशकृतमौपचारिक**मिति । कादाचित्कानुप्रवेशनियमनमात्रेण शरीरत्वोक्तिः; न तु यावत्सत्त्वं धार्यत्वादिकमभिप्रेत्य; येन तत् मुख्यं स्यादिति भावः ।

आपः २-३-११.

ननु 'तेजोऽतस्तथा ह्याह' इति न्यायसाम्ये अप्सु पृथक्सूत्रकरणं किमर्थमिति चेत् — न — 'तथा ह्याह' त्यंशस्य साम्येऽपि तेजसि विषये, 'तदैक्षत' 'तत्तेजोऽसृजत' इत्यस्य परम्परयाऽप्युपपत्तिरिति परिहर्तव्यम् । अप्सु, 'तत्तेज ऐक्षत' 'तदपोऽसृजत' इति प्रथमश्श्रुततेजश्शब्दानुसारात्, 'तस्माद्यत्र क्वचन शोचति स्वेदते वा पुरुषः, तेजस एव तद्ध्यापोऽजायन्त' इति वाक्यशेषश्रवणाच्च ईक्षणं गौणमिति वा, 'अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्' इतिन्यायेन वा निर्वोढव्यमिति पूर्वपक्षिणो निर्वाहभेदप्रकारसत्त्वात् पृथक्सूत्रकरणसार्थक्यात् । न च पृथिव्याः पृथक् सूत्रं व्यर्थमिति वाच्यम् — अन्नपृथिवीशब्दयोः विरोधपरिहारार्थतया तत्रापि पृथक्सूत्रणमिति मन्तव्यम् ।

तदभिध्यानादेव तु तल्लिङ्गात् सः २-३ १४.

**तच्छरीरकत्वं श्रौतमित्याह**ेति । तच्छरीरकस्य कारणत्वं श्रौतमित्याशय इत्यर्थः । 'यः पृथिवीमन्तरो यमयति' इति तदधिष्ठितवस्तुन एव कार्यकरत्वश्रवणादिति द्रष्टव्यम् । **तेषामपीक्षणपूर्वकसृष्टिसिद्धय** इति । अत्र केचित्-पूर्वग्रन्थे ईक्षापूर्वकसृष्ट्युपपादकतयोक्तस्य तच्छरीरकत्वस्य ईक्षापूर्वकसृष्टिसिद्ध्यर्थत्वकथनमयुक्तम् । ततश्च महदादीनामपि परमात्मशरीरत्वप्रतिपादकवचनं दर्शयति — **सुबालोपनिषदि चे**ति इत्येवावतरणिका देयेति च (?) मन्यन्ते ॥

विपर्ययेण तु क्रमोऽत उपपद्यते च २-३-१५.

**आनन्तर्यरूपक्रमप्रतीते**रिति । यद्यपि पौर्वापर्य एव क्रमः; न तु अव्यवधानलक्षणमानन्तर्यम् — तथापि आनन्तर्यरूपाव्यवधानविशिष्टपौर्वापर्यलक्षणक्रम-

प्रतीतेरित्यर्थे बाधकाभावात् । न च क्रियाद्वारकमेव पौर्वापर्यं वक्तव्यमिति वाच्यम्, तथासति 'एतस्माज्जायते' इत्यस्य सृष्ट्युन्मुखादित्यर्थः प्रतीयते । ततश्च सृष्ट्यौन्मुख्यस्य प्राणाद्युत्पत्तेश्च क्रमिकत्वद्वारा तदाश्रययोः कार्यकारणयोरपि इत्यदोषात् । **इत्यन्वयाभिप्रायेणे**ति । न तु, 'एतस्माज्जायते प्राणः ; ततो मनः ; ततस्सर्वेन्द्रियाणि' इत्यन्वय इति भावः ॥

**चराचरव्यपाश्रयस्तु स्यात् तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् २-३ १७.**

भाष्ये भङ्क्त्वा **भङ्क्त्वा व्यपदिश्यन्त** इति । अस्मिन्[1] पक्षे, 'भञ्जो अवमर्दने' इति धातोः क्तिनि सति भक्तिः भङ्गः । [भाक्तः ?] भक्त्या प्रयुक्त इति भावः ।

**पूर्वसाध्ये अनन्वया**दिति । 'पृथिवी' इति सूत्रे पृथिव्युत्पत्तेरेव साध्यत्वात् तत्र च अविकाररूपशब्दान्तराणामन्नशब्दवाच्यपृथिवीत्वहेतुत्वेऽपि पृथिव्युत्पत्त्यहेतुत्वादिति भावः । **अभिमानिचेतनानुप्रवेशनिबन्धनत्वस्योक्तत्वा**दिति । ततश्च स्वतश्चैतन्यं नास्तीति भावः । ननु वाचस्पतिना तेजआद्यधिष्ठानदेवतानां परमेश्वराद्यधिष्ठितानामेव भूतसर्गे प्रवृत्तिः, उत तदनधिष्ठितानामिति विचारः प्रवर्तित इति चेन्न, तस्य तद्भाष्यविरुद्धत्वात् । 'परात्तु तच्छ्रुते'रित्यादिना कृतकरत्वाच्च तदनादृत्य यथाश्रुतभाष्य एव दूषणमुक्तमिति द्रष्टव्यम् । **एकशब्देन विवक्षितत्वे कारणाभावा**दिति । न च - प्राणशब्देन बुद्धिरुच्यते । बुद्धिर्नाम निश्चयहेतुभूतान्तःकरणावस्था ; संशयहेतुभूतान्तकरणावस्थं मन इति तयोर्भेदः । तत्र ज्ञायते अनेनेति व्युत्पत्त्या सौत्रविज्ञानशब्देन प्राणशब्दितबुद्धेरिन्द्रियाणाञ्च ग्रहणम् । मनश्शब्देन मनसो ग्रहणञ्च सम्भवतीति वाच्यम्—एतादृशकल्पनायां प्रमाणाभावादिति भावः । "जीवस्य परस्मादात्मन उत्पत्तिः वियदादीनामिवास्ति नास्ति वेत्येतदुत्तरसूत्रेण वक्ष्यति, देहाश्रयौ तावत् जीवस्य स्थूलौ उत्पत्तिप्रलयौ न स्तः इत्यनेन सूत्रेणावोचत्" इति परभाष्योक्तमाह — **अत्र देहाश्रयावि**ति । **शरीरजन्मविनाशयोः जीवगतत्वशङ्काया अनुदया**दिति । 'ननु "देवदत्तादिनामधेयं तावत् जीवस्य ; न शरीरस्य ; तन्नाम्ने

1. अनेन भक्तिः भागः एकदेशः । तत्र प्रयुक्तः भाक्त इति भजधातुग्रहणपक्षोऽपि पूर्वमभिप्रेत इति ज्ञायते ।

शरीराय श्राद्धादिकरणानुपपत्तेः । तस्मात् मृतो जातो देवदत्त इति व्यपदेशस्य मुख्यत्वं मन्वानस्य पूर्वपक्षः" इति वाचस्पत्ये स्पष्टमेव जीवभेदं सिद्धवत्कृत्य देहभिन्नजीवस्य देहोत्पत्तिविनाशानुयाय्युत्पत्तिविनाशवत्त्वं पूर्वपक्षीकृत्य सिद्धान्तितमित्यभिधानात्, शाङ्करभाष्येऽपि, "शरीरानुविनाशिनि हि जीवे—" इति तद्भेदसिद्धवत्कारेणैव, 'देहे उत्पद्यमाने जीवोऽप्युत्पद्यते; नश्यति तस्मिन् स्वयमपि नश्यती'ति पूर्वपक्षप्रतीतेः तस्यैवार्थस्य, "देहाश्रयौ तावज्जीवस्य स्थूलोत्पत्तिप्रलयौ न स्त." इति भाष्येऽनूद्यमानत्वात् देहाश्रयावित्यस्यापि देहोत्पत्तिविनाशानुयायिनावित्येवार्थप्रतीतेः कथमयं प्रपञ्च इति चेत् — सत्यम्, देहानुविधायिविनाशत्वे जीवस्वरूपस्याभ्युपगम्यमाने, 'नात्मा श्रुतेः' इत्यनेन पौनरुक्त्यात् देहाश्रयौ उत्पत्तिविनाशावित्यस्य यथाश्रुत एवार्थः स्वीकर्तव्यः, गत्यन्तराभावादित्यभिप्रेत्यैवमुक्तमिति द्रष्टव्यम् ।

**अन्येत्वित्यादि** । **प्रळयावस्थपुरुषस्य चे**ति । प्रळयावस्थस्य मोक्तृशस्य चेत्यर्थः । **अस्य पाठक्रमस्ये**ति । त्वदभिमतस्य सूत्रपाठक्रमस्य कुत्रापि अप्रसिद्धत्वादित्यर्थः । **सर्वेषामुत्पत्तिं च पूर्वपक्षीकृत्ये**ति । सर्वेषामुत्पत्तिर्वा स्यात्, सर्वेषामनुत्पत्तिर्वा स्यादिति पूर्वपक्षीकृत्येत्यर्थः । **मनस्याकाशमेव चेति प्रयोगाच्चे**ति । 'एतस्माज्जायत' इति श्रुतौ यदि मनश्शब्दो मनःपरः, तदा आकाशस्य इन्द्रियेषु, इन्द्रियाणाञ्च मनसि, मनसश्च प्राणशब्दितमहत्तत्त्वे च लयः कीर्त्यत इति भावः । **आकाशादिषु क्रमविवक्षादर्शना**दिति । 'खं वायुर्ज्योतिरापः' इत्युत्तरवाक्ये क्रमविवक्षादर्शनादिति भावः । पदार्थनिर्देशमात्रञ्च, अत्र वागादिक्रमविवक्षाप्रतीतेरभावादिति भावः । **अहङ्काराज्जातानीत्यर्थ** इति । अहङ्कारात् खादीनि साक्षाज्जातानि, इन्द्रियाणि तु खादिद्वारा जातानीत्यर्थ इति भावः । **अतो विरोध** इति । 'इन्द्रियेभ्यः परा ह्यर्था' इति श्रुत्यनुसारेण, 'सर्वेन्द्रियाणि च खं वायुर्ज्योतिरापः' इत्यत्र विरोधस्य परिहृतत्वात् मनश्शब्दिताहङ्कारस्य महतश्च मध्ये, 'मनसस्तु परा बुद्धिः', 'बुद्धिं तु सारथिं विद्धि', विज्ञानसारथिर्यस्तु' इति बुद्धिविज्ञानशब्दितं तत्त्वान्तरं प्रतीयत इति विरोध इत्यर्थः । **मनश्शब्दवाच्य** इति । 'मनसस्तु परा बुद्धिः' इति श्रुतपरापरभावो यथाकथञ्चिन्निर्वोढव्य इति भावः । **नव प्रकृतयःस्युरिति चे**दिति । 'ततश्च अष्टौ प्रकृतयः षोडश विकाराः' इति

श्रुतिविरोध इति भावः। **इन्द्रियमेव मन** इति। अन्तरिन्द्रियमेव मनः; नाहङ्कार इत्यर्थः। न चैवम्, 'इन्द्रियेभ्यः परा ह्यर्थाः' इति इन्द्रियापेक्षया परत्वेन प्रतिपादितादर्थात् इन्द्रियविशेषस्य मनसः कथं परत्वमिति शङ्क्यम्; आकारान्तरेण परापरत्वयोरुपपत्तेरिति भावः। **औचित्यभङ्गप्रसङ्गादि**ति। आत्मशब्दस्यैव महत्त्वेन विशेषणस्योचितत्वादिति भावः। **अर्थविरोधा**दिति। प्रकृतिमहदहंकाररूपार्थप्रतिपादकत्वादस्य संदर्भस्य वशीकार्यप्रकरणबाधो युक्त इति चेदित्यर्थः। **प्राचीनाधिकरणे**ति। आनुमानिकाधिकरणेत्यर्थः।

इति तेजोधिकरणम्।

---

## ( ३ ) ज्ञाधिकरणम्।

### ज्ञोऽत एव २-३-१९

**नियतधर्मधर्मिभाव उपपद्यते, ने**ति। धर्म्यपेक्षया अधिकदेशस्य धर्मत्वं सम्भवति नेति चिन्तायां निवेशनीयम्; अस्यार्थस्य, 'अविरोधश्चन्दनवत्', 'गुणाद्वा लोकवत्' इति सूत्रोपारूढतया तस्यावश्यं वक्तव्यत्वात्। **विप्रकृष्टार्थग्रहणाग्रहणासम्भवेने**ति। सर्वाङ्गीणवेदनासम्भवेन आत्मनो विभुत्वस्य वक्तव्यतया तस्य च नित्यज्ञानाश्रयत्वेन सर्वत्र नित्यस्वोपलब्धिप्रसङ्ग इत्यर्थः। भाष्ये—**ज्ञातृत्वस्वरूप एव न ज्ञानमात्रम्; नापि जडस्वरूप** इति। ज्ञातृत्वे साधितेऽपि न जडत्वव्यावृत्तिः; नैयायिकैर्जडत्वाभ्युपगमात्—तथापि, 'यावदात्मभावित्वाच्च' इति चशब्देन सिद्धिमभिप्रेत्य उक्तमिति द्रष्टव्यम्।

भाष्ये – **यत्तूक्तं ज्ञातृत्वे स्वाभाविके सती**ति। ननु स्वाभाविकज्ञातृत्वे कथं विभुत्वनिराकरणमुपयुज्यते, विभुत्वस्य स्वाभाविकज्ञातृत्वमात्रापरिपन्थित्वात्। 'नित्योपलब्ध्यनुपलब्धि' इति सूत्रोक्तन्यायेन विभुत्वस्य आगन्तुकज्ञानाश्रयत्वज्ञानरूपत्वस्वाभाविकज्ञत्वरूपसर्वपक्षविरुद्धत्वेन विशिष्य सिद्धान्तिनाऽपि निराकरणीयत्वात्। तत एव नैकाधिकरणत्वमपि, 'उत्क्रान्तिगत्यागतीनाम्' इत्यादेर्युज्यते, अणुत्वसमर्थनस्य स्वाभाविकज्ञातृत्वानुपयुक्तत्वात्। कथञ्चिदुपयोगमाश्रित्यैकाधि-

करण्याश्रयणे, 'कर्ता शास्त्रार्थवत्त्वात्' इत्यस्य ज्ञातृत्व [रूपज्ञान?] कर्तृत्वसमर्थनार्थस्य कुतो नैकाधिकरण्यम्? यदि कर्तृ(विभु)?)त्वनिराकरणं ज्ञातृत्वोपयुक्तम्, तर्हि तन्निराकरणार्थानामेकत्रैव निवेशनीयतया, 'ज्ञोऽत एव', 'व्यतिरेको गन्धवत्', 'पृथगुपदेशात्', 'तद्गुणसारत्वात्तुतद्व्यपदेशः', 'यावदात्मभावित्वाच्च न दोषः तद्दर्शनात्', 'पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात्' इति ज्ञत्वं समाप्य, 'उत्क्रान्तिगत्यागतीनाम्, स्वात्मना चोत्तरयोः, नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात, स्वशब्दोन्मानाभ्याञ्च, अविरोधश्चन्दनवत्, अवस्थितिवैशिष्यादिति चेन्नाभ्युपगमात् हृदि हि, गुणाद्वाऽऽलोकवत्, नित्योपलब्धिः–' इत्येव सूत्रन्यासः स्यादिति चेत्– उच्यते। यदुक्तं विभुत्वस्य स्वाभाविकज्ञातृत्वमात्रापरिपन्थित्वादिति – सत्यमेतत्, तथापि पूर्वपक्षिणः तथाभिमानसंभवेन तत्खण्डनस्य कर्तुं युक्तत्वात्। यदुक्तम्, 'कर्ता शास्त्रार्थवत्त्वात्' इत्यस्याप्यैकाधिकरण्यमिति–तत्र ज्ञातृत्वं हि ज्ञानाश्रयत्वम; न तु कर्तृत्वम्, प्रत्ययस्याश्रयत्वमात्रार्थकत्वात्। अस्तु वा कथञ्चिदुपयोगः, नैतावता ऐकाधिकरण्यम्; तस्य सूत्रकृदनभिमतत्वात्, प्रकृते तु ज्ञत्वाणुत्वसमर्थनसूत्राणां परस्परान्तरिततया करणादेवावसीयते ऐकाधिकरण्यं सूत्रकृदभिमतमिति। इतरथा त्वदुक्तरीत्या महत्त्वनिराकरणसूत्राणां बुद्धिसौकर्याय असङ्कीर्णतयैव निवेशः स्यात्। अतः सर्वं समञ्जसम्।

उत्क्रान्तिगत्यागतीनाम २-३-२०.

'स यदा तेजोमात्राः समभ्याददानो हृदयमेवापक्रामति शुक्रमादाय पुनरेति स्थानम्' इति परोक्तगतिश्रुत्यनुपन्यासे हेतुमाह – **उत्क्रान्तिशब्दानन्तरे**ति।

स्वात्मना चोत्तरयोः २-३-२१.

भाष्ये – **शरीरवियोगरूपत्वेने**ति। उत्क्रमणं हि अपसर्पण इव मरणेऽपि निरूढम्। तच्चाचलतोऽपि सतः कर्मक्षये देहस्वाम्यनिवृत्त्या उपपद्यते; गत्यागत्योश्चलने निरूढयोः कर्तृस्वभावरूपत्वादिति भावः।

स्वशब्दोन्मानाभ्याञ्च २ ३-२३.

भाष्ये – **अणुसदृशं वस्तूद्धृत्य तन्मानत्वं जीवस्य श्रूयत** इति। उद्धरणञ्च पृथक्करणम्। 'वालाग्रशतभागस्ये'ति अवयवावयविनोरवयवस्य पृथक्करणं

श्रूयते, श्राव्यते; प्रदर्श्यत इत्यर्थः। ततश्च पृथक्करणश्रावणयोः श्रुतिकर्तृकत्वात् समानकर्तृत्वोपपत्तिरिति द्रष्टव्यम्। आराग्रम् – चर्मभेदिसूच्यग्रम्॥

व्यतिरेको गन्धवत्तथा च दर्शयति २-३-२७.

**ननु उक्तं ज्ञानमात्रमेवात्मेति**। 'विज्ञानात्मा पुरुषः' इत्यादिश्रुतिष्वित्यर्थः॥

पृथगुपदेशात् २-३-२८.

**विशिष्टवाचिना शब्देनेति**। ज्ञानविशिष्टवाचिशब्देनेत्यर्थः॥

नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा २-३-३२.

**आत्मा कुत्रचिदुपलभ्यत इति**। आत्मा शरीरान्तरुपलभ्यते, तथा बहिर्नोपलभ्यत इत्येतत् 'अहमिहैवास्मि सदने जानानः' इति सार्वलौकिकानुभवसिद्धम्। न चैतत् पक्षद्वयेऽपि उपपद्यते। ज्ञानरूपः सर्वगत आत्मेति पक्षे किम् उपलभ्यानुपलभ्यस्वभावः, उत उपलभ्यैकस्वभावः, उतानुपलभ्यैकस्वभावः। आद्ये देहस्यान्तरेवोपलब्ध्यनुपलब्धी स्याताम्; द्वितीये सर्वत्रोपलब्धिः स्यात्; तृतीये अनुपलब्धिः स्यात्। देहस्यान्तरुपलभ्यस्वभावः अन्यत्रानुपलभ्यस्वभावः इति व्यवस्था न युज्यते। न ह्येकस्य क्वचिद्देशे स्वप्रकाशत्वम्; अन्यत्र नेति शक्यते वक्तुमिति भावः। एवं जडत्वपक्षेऽपि दूषणं द्रष्टव्यम्। भाष्ये – **सर्वैः करणैः सर्वदा संयुक्तत्वादिति**। नन्विदं सिद्धान्तेऽपि समानमेव; नित्यानां मुक्तानाञ्च धर्मभूतज्ञानानां अनन्तानां सर्वत्र विद्यमानत्वात्। धर्मभूतज्ञानानामपि सर्वात्मसम्बन्धात् मध्ये इदमेतदीयमिति नियन्तुमशक्यत्वात् कथमेतदिति चेत् – न – 'श्रुतेस्तु शब्दमूलत्वात्' इति न्यायेन श्रुतिप्रतिपन्नेऽर्थे यथाश्रुति अभ्युपगन्तुं युक्तम्; इतरथा न युज्यत इत्यत्र तात्पर्यात्।

**ज्ञशब्दस्य ज्ञप्तिवाचित्वाभावादिति**। 'इगुपधज्ञाप्रीकिरःकः' इति क – प्रत्ययस्य 'कर्तरि कृत्' इति कर्त्रर्थेऽनुशिष्टत्वादिति भावः। **अविकृतब्रह्मण एवेति**। अविकृतब्रह्मण एवोपाधिना जीवभावेनावस्थानादनुत्पन्नत्वेनेति योजना। **तस्य च चैतन्यस्वरूपत्वादिति**। ब्रह्मणः चैतन्यस्वरूपत्वात् तदभिन्नस्य जीवस्यापि चैतन्यस्वरूपत्वमिति भावः। **साध्यतया प्रकृतेति**। पूर्वाधिकरणे साध्यतया प्रकृतेत्यर्थः। **साक्षादेव ज्ञानस्वरूपत्वसाधकत्वाभावादिति**।

इदमुपलक्षणम्—परम्परयाऽपि साधकत्वं नास्ति। न ह्यनुत्पत्त्युपपादकस्य ब्रह्मानन्यत्वस्य चैतन्यस्वरूपत्वसाधकत्वमस्तीत्येतावत। अनुत्पत्तेः परम्परया उपयोगोऽस्तीत्यपि द्रष्टव्यम्। **तस्य ज्ञानस्वरूपत्वं चे**ति। ब्रह्मणो ज्ञानस्वरूपत्वं चेत्यर्थः। **परमसाध्यस्ये**ति। जीवचैतन्यस्वरूपस्येत्यर्थः। **प्रकृत्यर्थसाम्यस्य चे**ति। श्रुतेः, **अत** इति शब्दप्रकृत्योः श्रुत्येतच्छब्दयोः एकार्थत्वस्य ज्ञायमानत्वादित्यर्थः। ननु पूर्वसूत्रस्थस्य श्रुतेरिति पदस्य एतत्सूत्रस्थस्य अत इति पदस्य च नैकार्थत्वं युक्तम्, अनुत्पत्तिसाधकश्रुतेः ज्ञत्वसाधकश्रुतेश्च भिन्नार्थ(भिन्न?)त्वादित्याशंक्याह—**योग्यताव-शादि**ति। **विलम्बत्रयाभावाच्चे**ति। परमते तु **तदुपपादकब्रह्मानन्यत्व**मित्यादिना विलम्बत्रयं पूर्वमेव प्रतिपादितमिति भावः। **उच्छेदरहितज्ञानधर्मत्वं विवक्षित-मि**ति। अनुच्छित्तिधर्मेत्यत्र बहुव्रीहिगर्भबहुव्रीहिरिति भावः। **ताभ्य इति अन्वयो घटत** इति। यद्यपि अत एवेत्यनेन पूर्वसूत्रे ताभ्यइत्यत्र निर्दिष्टानां बुद्धिस्थानां श्रुतीनामेवातश्शब्देन परामर्शे तासामेव श्रुतीनां उत्क्रान्तिसूत्रेऽप्यनुवृत्तौ उत्क्रान्तिगत्यादीनां श्रुतिभ्य इत्यस्यार्थस्य सम्भवाददोषः—तथापि ताभ्य इत्यस्य विशेष्यतया श्रुतिभ्य इत्यध्याहारोऽप्यवश्यापेक्षितः। अत इहापि ताभ्यः श्रुतिभ्यः इति पदद्वयाध्याहारादिति भावः। **कारकव्यापारवैयर्थ्य**मिति। चक्षुरादि-व्यापारवैयर्थ्यमिति भावः। **तदाश्रितेष्वि**ति। तदाश्रयो मुख्यः प्राणः; तदाश्रिता इतरे प्राणा इति भावः। **सङ्घातरूपत्व** इति। उपाधेः संघातरूपत्व इत्यर्थः। **सुषुप्तिप्रलययोरप्रबोधेने**ति। सुषुप्तिप्रलययोरन्तःकरणादेः लीनत्वादित्यर्थः। **आत्मेन्द्रियविषयसन्निधानान्नित्यमुपलब्धिरि**ति। आत्मेन्द्रियविषयाणामुप-लब्धिसाधनानां सन्निधाने सति नित्यमेवोपलब्धिः प्रसज्यते। अथास(थ स?) सत्यपि हेतुसमवधाने फलाभावः, नित्यमेवानुपलब्धिः प्रसज्येत। अत आत्मेन्द्रियविषयसन्नि-धाने सत्यपि कादाचित्कोपलम्भाभावस्य कारणव्यतिरेकप्रयोज्यत्वात् कारणान्तर-समवधाने कारण (कार्य?) व्यतिरेकप्रयोजकव्यतिरेकप्रतियोगितया अन्तःकरणं स्वीकार्यमिति भावः। **अन्यतरनियमो वाऽन्यथे**ति सूत्रखण्डं व्याचष्टे **आत्म-नीन्द्रियेऽपि वे**ति।

इति ज्ञाधिकरणम्॥

———

## ( ४ ) कर्त्रधिकरणम् ।

### कर्ता शास्त्रार्थवत्वात् २-३-३३.

**सेतुं जन्तुमितिवदि**ति । औणादिक – तुमुन्प्रत्ययान्तः । ' य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् । उभौ तौ न विजानीतो नायं हन्ति न हन्यते ।' इति गीतावचनादिति भावः । भाष्ये – **शास्त्रफलं प्रयोक्तरी**तीति । " शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वात् तस्मात् स्वयं प्रयोगः स्यात् " ( ) इति जैमिनिसूत्रम् – अस्यार्थः – यस्मात् शास्त्रफलं स्वर्गादिकं प्रयोक्तरि भवति, ' स्वर्गकामो यजेत ' इति शास्त्रप्रामाण्यात्, तस्मात् स्वयं प्रयोगे कर्ता स्यादिति ।

### उपादानाद्विहारोपदेशाच्च २-३-३४.

भाष्ये – **स यथा महाराज इति प्रकृत्ये**ति । ' स यथा महाराजो जानपदान् गृहीत्वा स्वे जनपदे यथाकामं परिवर्तते, एवमेवैष एतत् प्राणान् गृहीत्वा स्वे शरीरे यथाकामं परिवर्तते ' इति स्वप्नविषया श्रुतिः । प्राणान् गृहीत्वा=जागरितस्थानेभ्य उपसंहृत्य स्वे शरीरे यथेष्टं सञ्चरतीत्यर्थः । **शरीरप्रेरणे चे**ति । शरीरे यथेष्टसञ्चारे शरीरप्रेरणमपि सिद्धमिति भावः ॥

### यथा च तक्षोभयथा २-३-३५.

**त्वन्मते बुद्ध्युपधानात् पूर्व**मिति । स्फटिकलौहित्यस्य जपाकुसुमसन्निधानोपाधिनिबन्धनत्वं जपाकुसुमसन्निधानात् प्राक् स्फटिके सत्यपि लौहित्याभावदर्शनादुपपद्यते । सत्यपि जीवेऽन्तःकरणोपाधिसन्निधानात् प्राक् यदि कर्तृत्वं नोपलभ्येत, तदाऽन्तःकरणस्य जीवगतकर्तृत्वोपाधित्वं वक्तुं शक्यते । न च तथाऽस्तीत्यर्थः । **विज्ञानशब्दस्य बुद्धिमात्रविषयत्वनिर्बन्धश्चे**ति । " यस्त्वयं व्यपदेशो दर्शितः, ' विज्ञानं यज्ञं तनुते ' इति, स बुद्धेरेव कर्तृत्वं प्रापयति । विज्ञानशब्दस्य तत्र प्रसिद्धत्वात् " इति, ' यथा च तक्षोभयथा ' इति सूत्रे यद्व्याख्यानम्, तदनुपपन्नमित्यर्थः । परिहर्तव्याभावमेवोपपादयति – **हितबुद्ध्यैव सर्वं चेतनः करो**तीति । **नास्ति विवाद इत्युक्त**मिति । यत् करणभिन्नं कर्तृतया त्वयाऽन्तः-

करणमित्यभिलप्यत इति, तदेव मया जीव इत्यभिलप्यत इत्यर्थः। **चित्तमनसोरिवेति**। यथा प्राप्तकालानुरूपबोधरूपस्य चेतयितृत्वलक्षणस्य चित्ताख्यस्य मनोवृत्तिविशेषस्य मनसश्च प्रकृतिविकृतिभावोपदेशो नास्ति, एवं बुद्धेः मनोवृत्तिरूपत्वे बुद्धिमनसोरपि प्रकृतिविकृतिभावोपदेशो न स्यात्। दृश्यते च, "मनो बुद्धिरेव च। अहङ्कार" इति मनोबुद्ध्यहंकाराणां प्रकृतिविकृतिभावोपदेश इति भावः। **अतः प्रकृतेरन्यत्वेन समाधिविधानमेव विवक्षितमिति**। यद्यपि भोक्तृत्वशून्यायाः प्रकृतेः कर्मफलभोक्तृत्वानुसन्धानेन यागादिप्रवृत्तिवत् प्रकृतिभिन्नत्वसमाधावपि न दोषः — तथापि प्रकृतिकर्तृकस्य, प्रकृतेरहमन्योऽस्मीति समाधेः भ्रान्तिरूपतया मोक्षहेतुत्वं न स्यादिति भावः। **स्रक्चन्दनाद्युपयोग** इति। स्रक्चन्दनादिधारणमित्यर्थः।

इति कर्त्रधिकरणम्।

## (५) परायत्ताधिकरणम्।

कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः २-३-४१.

गुणत्रयोद्भवाभिभवविशेषवासनाविशेषसन्निधीनां रुचिविशेषहेतुत्वं क्रमेणोपपादयति — **तथा हीत्यादिना**। **वस्तुस्वभावविशेषरूपेति**। वस्तुसन्निधिविशेषरूपेत्यर्थः। इति परायत्ताधिकरणम्।

## (६) अंशाधिकरणम्।

अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके २-३-४२.

**तत्र शरीरवाचिशब्दस्येति**। श्रुतिविप्रतिपत्त्या शरीरित्वमेवाक्षिप्य समाधीयत इति भावः। भाष्ये **न प्रतितिष्ठतीति**। अनन्यत्वाधिकत्वयोः परस्परविरुद्धयोरविरोधस्य अंशांशिभावेनैव समाधेयत्वादिति भावः। अपृथक्सिद्धप्रकारत्वमेव ह्यंशत्वम्; तत्र पृथक्सिद्धत्वेनानन्यत्वसमर्थनम्, प्रकारत्वेन भेदसमर्थनम्; अपृथ-

क्सिद्धत्वप्रकारत्वाभ्यां मिलिताभ्यामुभयव्यपदेशमुख्यत्वसमर्थनमित्यर्थः । **प्रभाप्रभावतोरिवापृथक्सिद्धांशांशित्वनिर्णयेने**ति। यद्यपि तदनन्यत्वमिति सूत्रे समर्थनीयमनन्यत्वं कारणावस्थस्य कार्यावस्थस्य चाभेदरूपम्; न तु जगद्ब्रह्मणोरंशांशित्वरूपम्—तथापि सूक्ष्मचिदचिच्छरीरकेण स्थूलचिदचिच्छरीरकस्यानन्यत्वस्य समर्थनीयतया अंशत्वरूपशरीरत्वं जगतः समर्थनीयम्। तत्र च चिदचिदंशस्यांशत्वमिह साध्यते; अचिदंशस्यांशत्वं तु अहिकुण्डलाधिकरणे साध्यत इति द्रष्टव्यम्। भाष्ये **ब्रह्म दाशा ब्रह्म दासा ब्रह्मेमे कितवा** इति। दासाः—धीवराः; कितवाः—द्यूतकृतः। **उत्कृष्टैः सामानाधिकरण्य** इति। श्रुताध्ययनसम्पन्नः साक्षाद्विष्णुरित्युक्ते स्तुतिपरत्वमुपपद्यते निकृष्टसामानाधिकरण्यं तु न ब्रह्मणः स्तुतये भवति, विरुद्धत्वात्। नापि दासादीनां स्तुतयें, तेषां स्तुत्यनर्हत्वात्। नापि ब्रह्मणो निन्दायै; ब्रह्मणो निन्द्यत्वाभावात्। नापि दासादीनां निन्दायै वा, असम्भवात्। तस्माद्ब्रह्मणः दासादिसामानाधिकरण्यमभेदस्य तात्त्विकत्वमेव द्योतयतीत्यर्थः। भाष्ये—**कुर्वाणेन भ्रमितव्यमि**ति। कुर्वाणत्वेन भ्रमितव्यम्, कुर्वाणमिव ब्रह्म भ्राम्यतीति नोपदिश्यत इति पर्यवसितोऽर्थः। शङ्कते—**जीवब्रह्मणोरि**ति।

## मन्त्रवर्णात् २-३-४४.

भाष्ये—[1] **मन्त्रेसूत्रेऽप्यंश इति एकवचनमि**ति। मन्त्रे सूत्रेऽपि पादोंश इत्येकवचनमित्यर्थः। **पराक्तेन च भेदो गृह्यत** इति। इदमुपलक्षणम्—परात्मसु भेदग्रहसिद्ध्यर्थम्, 'शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः' इत्युक्तरीत्या शक्त्यादिलक्षणः परस्परभेदः प्रत्यक्पराक्त्वातिरिक्तोऽप्यस्तीति द्रष्टव्यम्।

## प्रकाशादिवत्तु नैवं परः २-३-४५.

भाष्ये—**एकवस्त्वेकदेशत्वं ह्यंशत्वमि**ति। यद्येवं विशेष्यस्यापि परमात्मनोंशत्वप्रसङ्गः, विशिष्टवस्त्वेकदेशत्वाविशेषात्। ततश्च जीवपरयोरविशेषत्वप्रसङ्गः। किञ्च, 'ममैवांशो जीवलोके जीवभूतः' इति विशेष्यभूतपरमा-

1. भाष्ये **मन्त्र** इति न पूर्वान्वयि, व्यर्थत्वात्। ननु जीवबहुत्वात् बहुवचननिर्वाहे **पाद** इत्येकवचनं कथमित्याशङ्कायामाह **मन्त्र** इत्यादि। पादः अंशइति पदद्वये निर्देष्टव्ये पाद इत्यनिर्देशः शक्तिना पादशब्दमात्रेणैव पूरणतया तस्य ज्ञातत्वादिति भावः।

त्मानं प्रत्येकदेशत्वं जीवस्य प्रतीयते; न तु विशिष्टं प्रति; ममेत्यस्य विशिष्टपरत्वे प्रमाणाभावात्, 'ईश्वरांशत्वं हि स्वरसतः प्रतीयत' इति वक्ष्यमाणत्वाच्च। विशिष्टे विशेषणमंश इति लोकप्रसिद्धतया अयमेवांश इत्युपदेशवैयर्थ्यात्। तदर्थं समानाधिकरणत्वस्यापि व्यर्थत्वात्। किञ्च 'जीवभूतः सनातनः' इति विशिष्टजीवे अंशत्वकीर्तनं व्यर्थम्; ईदृशांशत्वस्य चिदचित्साधारण्यात्। अत एवाचितः पार्थक्येनांशत्वसमर्थनपरमहिकुण्डलाधिकरणमपि व्यर्थमिति चेन्न—अंशत्वस्य नियाम्यशेषत्वलक्षणशरीररूपत्वस्य इहाधिकरणे समर्थनीयत्वात्। वक्ष्यति च **विशेष्यस्य प्रधानतया अंशित्वोपपत्तिरि**ति। अहिकुण्डलाधिकरणेऽचितोंऽशत्वसमर्थनेऽपि न तेनास्य गतार्थता। भिन्नत्वाभिन्नत्वांशप्रतिपादकश्रुतिविरोधसमाधानप्रकारत्वादस्याधिकरणस्य। अतो मुखभेदान्नगतार्थता। अत एव, 'अवस्थितेरिति काशकृत्स्नः' इत्यनेनापि न गतार्थता। एकवस्त्वेकदेशत्वं ह्यंशत्वमित्यस्याप्यत्रैव तात्पर्यम्। यद्यत्र अपृथक्सिद्धत्वलक्षणमंशत्वं समर्थ्यते, तर्हि अपृथक्सिद्धविशेषणभूतचिदचिद्गतदोषाणां ब्रह्मणि परस्परं चाप्रसक्तेः तत्परिहारार्थानाम् 'प्रकाशादिवत्तु नैवं परः', 'अनुज्ञापरिहारौ देहसम्बन्धात् ज्योतिरादिवत्' इत्यादीनामानर्थक्यमिति चेन्न—अंशपदश्रवणमात्रात् विशेष्यैकदेशत्वरूपांशत्वमिह विवक्षितमिति भ्रान्त्या प्रवृत्तां शङ्कामभिमतांशत्वप्रदर्शनेन निराकरोतीत्युक्तौ दोषाभावात्।

**भानुर्भानुमानि**ति। **अत्र केचित्**—यथा घटाश्रये घटे प्रयुक्तौ घटघटवच्छब्दौ न तुल्यार्थौ, एवं प्रभारूपभान्वन्तराश्रये भानौ प्रयुज्यमानौ भानुभानुमच्छब्दौ न तुल्यार्थौ। यदि च भानुशब्दः प्रभावचन एव सन् अपर्यवसानवृत्त्या जातिगुणादिशब्दवत् प्रभावचनः स्यात्, तर्हि मत्वर्थप्रत्ययनिरपेक्षसामानाधिकरण्यं स्यात्। तस्माज्जात्यादिवाचकाः शब्दाः उदाहार्या इति **वदन्ति**।

**परे त्वि**त्यादि। **जीवेश्वरसम्बन्धनिरूपणपरमि**ति किं स्वामिभृत्यवत् सम्बन्धः? उताग्निविस्फुलिङ्गादिवत् इति निरूपणपरमित्यर्थः। **स्वात्मानं प्रत्यंशत्वानुपपत्तेरि**ति। विशिष्टस्य विशिष्टं प्रति अंशत्वानुपपत्तेरित्यर्थः। **वस्तुनि स्वतोंऽशभेदाभावेने**ति। आकाशस्य तु स्वतः सांशत्वादुपहितानुपहितभेद उपपद्यत

इति भावः । **अयुक्तावस्थायामिति** । योगराहित्यदशायामित्यर्थः । **अनन्वयस्य वक्तुमशक्यत्वाच्चेति** । नियोज्यत्वानन्वयस्य वक्तुमशक्यत्वाच्चेत्यर्थः । **परिच्छिन्नत्वे सति अनुपलभ्यमानत्वमणुत्वमिति** । न त्वणुपरिमाणत्वमिति भावः । **अन्तःकरणोपाधिकत्वानुपपत्तेरिति** । इदमुपलक्षणम् । 'प्रदीपवदावेशस्तथा हि दर्शयति' इत्यधिकरणे कायव्यूहस्थलेऽन्तःकरणभेदमभ्युपगम्य अन्तःकरणभेदेऽपि प्रतिसन्धानस्याभ्युपेतत्वादिति द्रष्टव्यम् । **गोमहिषहेमाद्यंशित्वव्यवहाराभाव** इति । ननु भूतलस्याधारत्वादिलक्षणप्राधान्ये विवक्षितेऽपि भूतलस्य गोमहिषादिकमंश इति व्यवहारो न दृश्यते । देवदत्तादेः दण्डकुण्डलादेश्च विशेष्यविशेषणभावलक्षणप्राधान्यविवक्षायामपि देवदत्तस्य दण्डकुण्डलादिकमंश इति व्यवहारो न दृश्यते । द्रव्यस्वामिन्यंशित्वव्यवहारस्तु समुदायापेक्षया विभक्तद्रव्यस्यांशेन (शत्वेन?) एतत्स्वामित्वात् देवदत्तादेः; न तु स्वामित्वादिलक्षणप्राधान्यमात्रात् । तथा सति क्रयदानादिलब्धगोमहिष्यादिस्वामिनि अंशित्वव्यवहारप्रसङ्गादिति चेन्न—अत्रांशशब्दस्य शरीरमर्थ इति प्रागेवोक्तत्वाददोषात् । **केचित्तु**—पटारम्भकतन्तुषु, घटावच्छिन्नाकाशे, टङ्कच्छिन्नपाषाणशकलादौ सर्वत्रांशशब्दव्यवहारेऽनुगतं प्रवृत्तिनिमित्तं तदेकदेशत्वमेव । अतः चिदचिद्विशिष्टस्यैव ब्रह्मशब्दार्थतया चिदचितोः तदेकदेशतया तदंशत्वमुपपद्यते । केवलविशेष्यमीश्वरं प्रति नांशत्वम् । 'ममैवांशः' इत्यादावपि विशिष्टाभिप्रायेणैवांशत्वम् । न चैवमीश्वरस्यापि जीववदंशत्वप्रसङ्गः; अल्पैकदेशे अंशत्वव्यवहारदर्शनेन ब्रह्मणोऽधिकत्वेनांशत्वव्यवहाराप्रसक्तेरिति **वदन्ति** ॥

इत्यंशाधिकरणम् ॥

---

इति दशोदनिषद्भाष्यकारैः श्रीरङ्गरामानुजमुनिविरचितायां

श्रुतप्रकाशिकाव्याख्यायां भावप्रकाशिकायां

द्वितीयस्याध्यायस्य तृतीयः पादः ॥



|| श्रीः ||

श्रीमते रङ्गरामानुजमहादेशिकाय नमः ।

श्रुतप्रकाशिकाव्याख्या भावप्रकाशिका

## द्वितीयाध्याये चतुर्थः पादः

## (१) प्राणोत्पत्त्यधिकरणम् ।

तथा प्राणाः २-४-१.

**पृथगिति** । "तथप्राणा" इत्यस्य पूर्वपक्षसूत्रत्वादिति भावः ।

तत्पूर्वकत्वाद्वाचः २-४-३.

**अदृष्टसंस्कार स्थितिकार्यदर्शनादिति** । **संस्कारो** वासनाप्रलयेऽपि अदृष्टसंस्कारस्थितिरूपकार्यदर्शनादित्यर्थः। **परैस्त्वित्यादि** । **पूर्वाधिकरणविषयवाक्यस्थेति** केषु चित्कोशेषु पठ्यते । तत्र **पूर्वशब्दः** लेखकदोषायातः। "अत्र प्राणोत्पत्तिवाक्यजातमुदाहरणम्"इति शाङ्करभाष्यदर्शनात **तद्धर्मातिदेश इति** लोकादिधर्मस्योत्पत्तेरतिदेश इत्यर्थः । जन्मशब्दस्येति (**ततोपीति** । ?) व्याहृतपूर्वसूत्रोदस्थापि [तः?] परामर्शसंभवे [तत्त्यागे ?] अनौचित्यादिति भावः । **जन्मशब्दस्येति** । जन्मवाचकशब्दस्येत्यर्थः ।

**इन्द्रियसमष्ट्युत्पत्तेः पूर्वमेव सिद्धतां मत्वेति** । इन्द्रियसमष्ट्युत्पत्तिः न्यायनिरपेक्षतयैव निश्चितेत्यर्थः ।

इति प्राणोत्पत्त्यधिकरणम् ।

## (२) सप्तगत्यधिकरणम्

सप्त गतेर्विशेषितत्वाच्च २-४-४

भाष्ये । **विशेषिताश्च ते गतिमन्तः प्राणा स्वरूपत** इति । ज्ञानानि पञ्च बुद्धिश्च मनश्चेत्येवं शृङ्खग्राहिकया विशिष्य निर्दिष्टा इत्यर्थः । भाष्ये [**प्राणा** इति]

सप्तानामेव गतिश्रवणात्, योगदशायां ज्ञानानि पञ्च मनो बुद्धिश्चेति सप्तानामेव निरोधश्रवणाच्च तेषामेव प्राणत्वमिति भावः । **ज्ञानानीति विशेषितत्वादिति** भाष्ये **ज्ञानानी**त्येतत् प्रतीकोपादानम् । ज्ञानानि मनसा सहेत्यादिना ज्ञानानि मनो बुद्धिरिति विशेषितत्वादित्यर्थः । भाष्ये **यानित्वितराणी**ति । क्वचिदष्टौ प्राणाः ग्रहत्वेन गुणेन सङ्कीर्त्यन्ते, अष्टौ ग्रहा अष्टावतिग्रहा इति। अतिग्रहा विषयाः । रागोत्पादनेन्द्रियाकर्षकत्वात् विषयाणामतिग्रहत्वम् । क्वचिन्नव सङ्कीर्त्यन्ते, "सप्त वै शीर्षण्याः प्राणाः द्वाववाञ्चौ" इति । अवाञ्चौ=पायूपस्थौ इत्यर्थः । क्वचिद्दश, "नव वै पुरुषे प्राणाः नाभिर्दशमी" इति, क्वचिदेकादश, "दशेमे पुरुषे प्राणा आत्मैकादशः" इति । अत्र आत्मशब्देन मन उच्यते । क्वचिद्द्वादश, - "सर्वेषां स्पर्शानां त्वगेकायनम्" इति त्वङ्नासिकारसनचक्षुश्श्रोत्रमनोहृदयहस्तपादोपस्थपायुवाग्रूपाः । क्वचित्त्रयोदश, "चक्षुश्च द्रष्टव्यञ्च" इत्यत्र अहङ्काराधिकाः पूर्वोक्ताः त्रयोदश प्रतिपाद्यन्ते । क्वचिच्चतुर्दश, "सप्त सप्त" इत्यादिषु ॥

हस्तादयस्तु स्थितेऽतो नैवम् २-४-५.

भाष्ये—**हस्तादीनामपि कार्यभेद आदानादिरि**ति । यद्यपि श्रुतयः स्वतः प्रमाणतया नापेक्षिताः (तद्युक्तयः?). तथापि परस्परविरोधात् नार्थतत्त्वपरिच्छेदायालम् । न च सिद्धे वस्तुनि अनुष्ठानरूपविकल्पः सम्भवति । तस्मात् प्रमाणान्तरोपनीतार्थवशेन व्यवस्थाप्यन्ते । यथा, "हस्तेनावद्यति, स्रुवेणावद्यति, स्वधितिनाऽवद्यति" इत्यत्र । अत्र ह्यविशेषेण हस्तस्रुवस्वधितीनामवदानसामान्यसाधनत्वश्रुतावपि सामर्थ्यवशेन द्रवद्रव्यावदाने स्रुवस्य, मांसावदाने स्वधितेः, पुरोडाशावदाने हस्तस्येति श्रुतेः व्यवस्था आश्रिता, तथेहापि गन्धाद्युपलब्धिपञ्चकमादानादिक्रियापञ्चकमान्तरज्ञानजातं चेति कार्यवशेन एकादशत्वमेव युक्तमाश्रयितुमिति भावः । **सर्वाधिकरणेषु यथापूर्वपक्षं न मन्तव्यमित्युच्यत** इति । न च स्वपक्षेऽपि समानोऽयं दोषः; "अतो हस्तादयो न सन्तीत्येवं न मन्तव्यमित्यर्थः" इत्येव भाष्ये व्याख्यातत्वादिति वाच्यम् – उक्तयुक्त्यनुग्राह्यश्रुतिप्रदर्शनार्थत्वेन सफलत्वोक्तेरिति ॥

इति सप्तगत्यधिकरणम् ॥

———

## (३) प्राणाणुत्वाधिकरणम् ।

अणवश्च २ ४ ६.

**परिच्छिन्नत्वे सति** [1]**स्पर्शवत्त्वमिति ।** अनुद्भूतस्पर्शवत्त्वमित्यर्थः । ननु निदाघदूनदेहस्य शिशिरह्रदनिमग्ननाभेः सर्वाङ्गीणशीतस्पर्शोपलब्धेः कथं त्वगिन्द्रियस्याणुत्वम्? कथञ्चोत्क्रान्तिवशेनाणुत्वे सूक्ष्मशरीरस्यापि नाणुत्वं स्यादित्याशंक्याह **परिमाणावन्तरभेदे सत्यपीति । कार्यबाहुल्यविशेषणविशिष्टतयोपासनार्थमानन्त्यकथनमित्यर्थ** इति । न च स्वरूपानन्त्यस्यैवोपासनार्थत्वमस्त्विति वाच्यम्; अनारोपितोपासनसम्भवे आरोपितोपासनस्य अन्याय्यत्वात् ।

श्रेष्ठश्च २-४-७

लङिति । 'रुदश्च पञ्चभ्यः' इति ईडागमः । यद्यपि लुङ्यप्येतद्रूपमस्ति, तथापि अनद्यतनत्वात् लङ् इत्युक्तम् । इति प्राणाणुत्वाधिकरणम् ।

## (४) वायुक्रियाधिकरणम्

न वायुक्रिये पृथगुपदेशात् २-४-८.

सहशिष्टिरादिर्यस्य विशिष्याभिधानस्य तदेतदेवेति सहशिष्ट्यादिनेति वक्तुं युक्तम्; न तु 'सहशिष्ट्यादिभ्य' इति । तद्गुणसंविज्ञानबहुव्रीह्याश्रयणेऽपि सहशिष्टेः विशिष्याभिधानस्य च द्वित्वात् द्विवचनमेव स्यादित्याशंक्याह — **अनेन बहुश्रुतिष्विति ।** अनेन बहुवचनेनेत्यर्थः । अस्यार्थस्य भाष्यकृदभिमतत्वं दर्शयति — **श्रुतिभेदेन सहशिष्टय** इति । ननु चक्षुरादिवत् उपकरणसमर्थनेन स्वतन्त्रशंकाव्यावृत्तिवत् भूतान्तरत्वशंका न व्यावर्त्यते, भूतान्तरत्वेऽपि उपकरणत्वसम्भवात् । 'यः प्राणः स वायुः' इति श्रुत्या तच्छङ्कावारणे उपकरणत्वमकिञ्चित्करमिति चेत् — न — न वयमुपकरणत्वेन भूतान्तरत्वं प्रतिक्षिपामः, येनायं दोषस्स्यात्, तुशब्देन

1. स्पर्शवत्त्वमित्येतत्स्थाने अतिस्वच्छत्वमिति उपलभ्यमानः टीकापाठः । अस्पर्शत्वमिति वा पाठः स्यात् । आहंकारिके स्पर्शाभावात् । आप्यायकमादाय वा निर्वाह्यम् । बृन्दावनमुद्रणे प्रतीकधारणमन्यथा । व्याख्यानाभावात् तदुपेक्ष्यम् ।

भूतांतरत्वं प्रतिक्षिप्यते। तत्र च, यः 'प्राणः स वायुः' इति श्रुतिरेव हेतुः। ततश्च तुशब्देन भूतान्तरत्वे प्रतिक्षिप्ते किं तदित्याकाङ्क्षायां चक्षुरादिवदुपकारकमित्युच्यते, ततश्च द्वयमप्यनेनैव सूत्रेण प्रतिपाद्यत इति भावः।

पञ्चवृत्तिर्मनोवत् व्यपदिश्यते २-४-११.

भाष्ये—**नन्वेवं नामभेदात् कार्यभेदाच्चेति**। ननु कथमस्याः शङ्कायाः उत्थानम्, 'पञ्चधा आत्मानं विभज्य एतद्बाणमवष्टभ्ये'ति श्रुत्यनुसारेण पञ्चधा अवस्थितः देहेन्द्रियधारणादीनि करोतीति वदन्तं प्रति अस्याः शङ्कायाः अनुपन्यसनीयत्वादिति चेत्—उच्यते। संज्ञाकार्यभेदसद्भावावस्थान्तरापत्तावपि पञ्चधा विभज्येत्यस्य विरोधादिति शङ्काभिप्रायात्॥ भाष्ये — **न कामादिकं मनसः तत्त्वान्तरमिति**। कामादिकमित्यनेन कामादिहेतुर्मन उच्यत इति द्रष्टव्यम्। **केचित्तु** मनश्शब्देन धर्मभूतज्ञानमुच्यत इति **वदन्ति**॥ भाष्ये — **अपानादयोऽपि प्राणस्यैव वृत्तिविशेषाः** इति। स्थानविशेषवृत्त्यवच्छिन्नप्राण इव अपानादिव्यपदेशं लभत इति भावः। ननु श्रोत्रादिनिमित्ताः शब्दादिविषयाः पञ्च वृत्तयो मनसः प्रसिद्धाः। ततश्च पञ्चवृत्तित्वांश एव मनसो दृष्टान्तत्वं वक्तव्यमिति(?) [1]यद्यभिनिवेशेन(?) तदा योगशास्त्रप्रसिद्धाः प्रमाणविपर्ययादयः पञ्चवृत्तयः गृह्यन्त इत्यभिप्रेत्य पक्षान्तरमाह — **प्रमाणविपर्ययेति**। द्वितीयपक्षं दूषयति—**सङ्कल्पस्यातिरिक्तत्वादिति**। अत औचित्यादिति संख्याविशेषानादरे सिद्धे, कामः सङ्कल्प इत्यादिश्रुतिप्रसिद्धकामादिनानावृत्तेरेव पञ्चवृत्तिरिति वृत्तित्वेन ग्रहणमुचितम्; न तु श्रोत्रादिनानावृत्तेरिति भावः॥

इति वायुक्रियाधिकरणम्॥

---

## (५) श्रेष्ठाणुत्वाधिकरणम्।

अणुश्च २-४-१२.

**न तथास्य निर्वाह** इति। यद्यपि, 'य एवमेतत् सामवेद' इत्युपासनं प्रतीयते — तथापि 'स यो ह वा एतानन्तानुपास्ते' इत्युपासनविधिवाक्ये

---

1. पञ्चवृत्तित्वे दृष्टान्त इति वाक्यावतारिकारूपेण भाव्यम्।

आनन्त्यकीर्तनवत् साम्यस्य विधिवाक्ये कीर्तनाभावात् उदाहृतश्रुतौ प्राणस्य सर्वसाम्यमुक्त्वा 'सर्वं हीदं प्राणेनाऽऽवृत' मिति उपपत्तिकीर्तनात् सोपपत्तिकविभुत्वग्रहणस्य प्राबल्यमित्यधिकाशंका सम्भवति—तथापि 'समः प्लुषिणा समो मशकेन समो नागेन सम एभिस्त्रिभिर्लोकैः । समः सर्वेण' इति विरुद्धपरिमाणश्रवणात् उत्क्रान्त्यादेः अनन्यथासिद्धत्वात्, 'सर्वं हीदं प्राणेनाऽऽवृत' मिति प्राणे सामान्यविषयतया कथञ्चित् वैभवविषयरूपतया वा उपपत्तिरिति सिद्धान्तः । आधिदैविकेन समष्टिरूपेण हैरण्यगर्भेण प्राणात्मना एतद्विभुत्वमाम्नायते, न त्वाध्यात्मिकेनेति तद्भाष्योक्तमनुवदति—**परैरानन्त्यश्रुतेरिति । समष्टीति । समष्टिः** सामान्यम् ॥

इति श्रेष्ठाणुत्वाधिकरणम् ।

---

## (६) ज्योतिराद्यधिष्ठानाधिकरणम्

ज्योतिराद्यधिष्ठानं तु तदामननात् प्राणवता शब्दात् २-४-१३.

**जीवस्याप्याराध्यत्वादिति** । आदित्यादीनां चक्षुराद्यधिष्ठातॄणां परमात्मदत्तैश्वर्याणामीश्वरवदाराध्यत्वफलप्रदत्वसत्त्वेन स्वातन्त्र्यमप्यस्तु, कर्तृत्वस्य परायत्तताश्रुतेः मनुष्यादिविषयत्वेन सङ्कोचसम्भवेन स्वातन्त्र्यश्रुतेर्बाधनायोगादिति भावः । **जीवस्योपादानं दृष्टान्ततयेति मन्तव्यमिति** । नन्वग्न्यादीनामपि जीवरूपतया 'परात्तु तच्छ्रुतेः' इत्यस्य विषयतया सिद्धत्वात् प्राणवतो दृष्टान्तत्वमग्न्यादीनां दार्ष्टान्तिकत्वमिति व्यवस्था कथं सिद्ध्यतीति चेत् — सत्यम् — अग्न्यादीनां महामहिमशालिनां परमात्मायत्तकर्तृत्वमनपेक्षितमिति शङ्कायामग्न्यादिविषये सम्भवादिति भावः । **केचित्तु** — वस्तुतस्तु इदं तस्यैव स्मरणार्थम् । अत एव संज्ञामूर्त्यधिकरणभाष्ये, **स्थिरीकरणाय स्मारित**मित्याहुः ।

तस्य च नित्यत्वात् २-४-१४.

भाष्ये — **परमात्माधिष्ठितत्वस्य नित्यत्वादिति** । पूर्वसूत्रे तदाममनात् भवतीति यद्भवनं प्रतीतम्, तदेव परमात्माधिष्ठितत्वं **तस्ये**ति तच्छब्देन परामृश्यत इति भावः ॥ इति ज्योतिराद्यधिष्ठानाधिकरणम् ।

---

# (७) संज्ञामूर्तिक्लृप्त्यधिकरणम्

संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् २-४-१७.

**देवानामपीति** । जीवदृष्टान्तेनेति शेषः । देवानां जीवदृष्टान्तेन परायत्तप्रवृत्तित्वनिर्णयेनापि जीवानां परायत्तकर्तृत्वं स्थिरं भवतीति मत्वा तदेव दृष्टान्ततया स्मारितमित्यर्थः । दृष्टान्ततया सूचनस्य संप्रतिपत्तिसूचनार्थत्वात् । **पेटिकासङ्गतिरिति** । पेटिकया सङ्गतिरित्यर्थः; न तु पेटिकयोः सङ्गतिरिति; संज्ञामूर्त्यधिकरणस्य एकत्वेन पेटिकात्वासम्भवात् । **त्रयो हेतव इति** । पाठक्रम—अण्डान्तर्वर्तित्रिवृत्करण प्रदर्शन—अन्नादित्रिवृत्करणश्रुतय इत्यर्थः । भाष्ये—**प्रविशतिर्लाक्षणिकः स्यादिति** । प्रवेशयेत्येवं णिजर्थलक्षणा स्यादित्यर्थः ।

भाष्ये—**जीवसमष्टिविशिष्टेनात्मनेति** । जीवसमष्टिविशिष्टेन स्वरूपेणेत्यर्थः । 'मृदात्मको घटः' इत्यादौ आत्मशब्दस्य स्वरूपपरत्वदर्शनात् । ततश्च व्यपदेशिवद्भावेन स्वरूपस्य भिन्नतया व्याकरणकर्तृत्वेन स्वरूपस्याभिधानात् तृतीयोपपद्यते । नन्वेवं जीवशब्दस्य जीवमात्रपरत्वमाश्रित्य आत्मशब्दस्य शरीरपरत्वं किं न स्यादिति चेन्न—तदा कर्तृप्रत्ययास्वारस्यं स्यात् । नन्वेवमपि जीवशरीरकेण मयेति आत्मशब्दस्य प्रत्यगर्थपरत्वं किं न स्यादिति चेन्न, तदा व्याकरणकर्तरि तिङाऽभिहिते अनभिहिताधिकारविहिततृतीयानुपपत्तेः ।

ननु व्याकरणकर्तुरभिधानेऽपि प्रवेशकर्तुरनभिधानात् तृतीयोपपद्यते, अनभिहित इति पर्युदासपक्षाश्रयणात् । अत एवानभिहितसूत्रे, द्वयोः क्रिययोः कारकेऽन्यतरेणाभिहिते विभक्त्यभावप्रसङ्ग इति वार्तिकेन, प्रासादे आस्ते इत्यत्र, "सदिक्रियायाः अस्तिक्रियायाश्च एकमधिकरणं प्रासादाख्यम्; तच्चान्यतरेणास्ति प्रत्ययेन घञाऽभिहितम्; प्रसीदन्त्यस्मिन्निति हि प्रासादः । तत्राभिहिते कारके न भवतीत्युच्यमाने सप्तमी न स्यात्" इति प्रतिषेधपक्षाश्रयणेन शङ्कामुत्थाप्य, 'न चान्यतरेण अनभिधानात्' इति अस्तिक्रियाधिकरणशक्तेरुपरि नन प्रत्ययेन यदभिधानम्, तदाश्रया च सप्तमी भविष्यतीति नायं दोषः प्रसज्यत इति पर्युदासाश्रयणेन परिहारो वर्णित इति चेत् —

एवं तर्हि, 'अहं भुक्त्वा व्रजामी'ति प्रयोगप्रसङ्गः, तथा, 'पक्त्वा भुज्यत ओदनः' इत्यत्र भुजिप्रत्ययेनाभिहितेऽप्योदने क्त्वाप्रत्ययेनानभिधानमाश्रित्य द्वितीयाप्रसङ्गः। तदयमत्र वैयाकरणनिष्कर्षः—'अहं भुक्त्वा व्रजानी'त्यत्र अहमर्थस्य युगपदुभाभ्यां भोजनव्रजनक्रियाभ्यामपि न शाब्दोऽन्वयः। किं तर्हि? व्रजनक्रिययैव; प्राधान्यात्, आर्थस्तु भोजनक्रियायामन्वयः। अतः शब्दव्यापारापेक्षायामभिधानमेव; न त्वनभिधानमपीति नाहंशब्दात् तृतीया प्राप्नोति। तथा, 'पक्त्वौदनो भुज्यत'इत्यत्रापि ओदनस्य भुजिनैव शाब्दोऽन्वयः; सन्निधानात्तु वचनान्वयः। केवलशब्दव्यापारनिरूपणे तु किमिष्टकाः पक्त्वौदनो भुज्यते, उत ओदनमेवेति द्वितीया न भविष्यति। 'प्रासादे आस्ते' इत्यत्र तु प्रासादस्य प्रसदनाऽऽसनक्रियाभ्यां शाब्द एवान्वयः। पदार्थदशायां घञ्प्रातिपदिकेन प्रसदनाधिकरणतयाऽन्वितस्यैव हि प्रासादद्रव्यस्य वाक्यार्थदशायाम् आसनक्रियाधिकरणत्वेनाप्यन्वयः। अतः तत्र शब्दव्यापारापेक्षयैव अनभिहितासनक्रियाधिकरणशक्त्याश्रयत्वमपि प्रासादस्यास्तीति तत्र सप्तम्युपपत्तिरिति।

कैयटस्तु—स्वामीप्रमीण(?) (स्वामिप्रवीण)(?) माश्रित्यक्त्वाप्रत्ययस्य भावार्थत्वात् 'पक्त्वौदनं भुंक्ते देवदत्तः', 'पक्त्वौदनो भुज्यते देवदत्तेने'ति क्त्वाप्रत्ययेन [1]कर्तृकर्मणोरनभिधानात् तृतीयाद्वितीये कुतो नेत्याशंक्य, आख्यातादिपदवाच्या क्रिया विशेष्यत्वात् प्रधानम्; इतरा तु विशेषणत्वादप्रधानम्। तत्क्रियासाधनयोरपि शक्त्योः तद्द्वारको गुणप्रधानभावः। तत्र प्रधानशक्त्यभिधाने गुणक्रियाशक्तिरभिहितवत् प्रकाशते, प्रधानानुरोधित्वात् गुणानां प्रधानमुखप्रेक्षित्वात् प्रथक् तद्विरुद्धस्वकार्यारम्भाभावादिति समादधे। एवं सति उभाभ्यामपि शाब्दे युगपदन्वयेऽपि न दोष इत्यलं विस्तरेण।

तस्मादनेन जीवेनात्मनेत्यस्य न मयेत्यर्थः; अपि तु स्वरूपेणेत्यर्थः। तथा च व्यपदेशिवद्भावेन भेदात् तस्य च करणत्वात् तृतीयोपपत्तिः। अत एव श्रीवेदान्ताचार्यैरधिकरणसारावल्याम् —

"तेनेशस्तद्विशिष्टस्वकरणकतयाऽनुप्रवेशेऽपि कर्ता" इति करणत्वमुक्तम्॥

1. 'कर्तृकरणयोर [न] भिधानात् द्वितीयातृतीये' इत्युपलभ्यमान पाठः।

मांसादि भौमं यथाशब्दमितरयोश्च २-४-१८.

भाष्ये – '**अन्नमशितं त्रेधा विधीयत**' इत्यत्रेत्यादि । एवं छान्दोग्ये श्रूयते – अन्नमशितं त्रेधा विधीयते । तस्य यः स्थविष्ठो भागः तत् पुरीषम्, यो मध्यमस्तन्मांसम्, योऽणिष्ठः तन्मनः । आपः पीताः त्रेधा विधीयन्ते तासां यः स्थविष्ठो धातुः तन्मूत्रं भवति । यो मध्यमः, तल्लोहितं भवति, योऽणिष्ठः सः प्राणः । तेजोऽशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुः तदस्थि भवति । यो मध्यमः, स मज्जा । योऽणिष्ठः सा वाक् । अन्नमयं हि सोम्य मनः । आपोमयः प्राणः । तेजोमयी वाक्" इति ॥ **कारणानुविधायित्वेने**त्यादि । त्रिवृत्करणेन पृथिव्यप्तेजांसि कार्यकारणभावमापन्नानि स्थूलाण्वणीयांसि । अतः त्रिवृत्कृतेष्वपि तत्तद्भूतांशानां स्वकारणानुगुण्येन स्थूलत्वाणुत्वाणीयस्त्वानि स्युः । तस्मात् 'अन्नमशित'मित्यादि-वाक्यं त्रिवृत्करणप्रदर्शनपरं चेत्–स्थविष्ठं पुरीषं पार्थिवम्, अणु मांसमाप्यम्, अणीयो मनश्च तैजसमापद्येत, तथा द्वितीयपर्याये मूत्रं पार्थिवं लोहितमाप्यं प्राणः तैजस' इति स्यात्, तृतीये पर्याये अस्थि पार्थिवं आप्यं मज्जा तैजसी वाक् इति स्यात्, ततश्च यत्, 'अन्नमशितं त्रेधा विधीयते' इति पुरीषमांसमनसां पार्थिवत्वमुक्तम्, यच्च आपः पीताः त्रेधा विधीयन्ते' इति मूत्रशोणितप्राणानामाप्यत्वमुक्तम्, यच्च 'तेजोऽशितं त्रेधा विधीयते' इति अस्थिमज्जावाचां तेजस्त्वमुक्तम्, पुनश्च 'अन्नमयं हि सोम्य मन आपोमयः प्राणः' इति यत् मनःप्राणयोः पार्थिवत्वाप्य-त्वमुक्तम; तत् सर्वं विरुद्ध्येत । अतो नात्र त्रिवृत्करणप्रकार उपदिश्यते । यत्तु अण्डान्तर्वर्तिषु अग्न्यादित्यादिषु त्रिवृत्करणप्रदर्शनं तत् सम्बोध्यस्य श्वेतकेतोः बुद्धि-संवादार्थम्; न तु तत्रैव त्रिवृत्करणमिदम्प्रथमतया प्रवृत्तमिति बोधनार्थमिति ।

ननु सिद्धान्ते बिम्बप्रतिबिम्बभावयोरैक्यात् कथं तद्विरुद्धमुच्यत इत्यस्वर-सादाह – **छायया आदर्श** इति । **तृतीयसूत्रेण अनुपपत्तिविशेषपरिहारायेति** । इदमन्नम्, इमा आपः, इदं तेजः इति विशेष्यव्यपदेशहेतुमुत्तरसूत्रेण कीर्तयिष्यन् तदुपयुक्ततया 'अन्नमशितं त्रेधा विधीयते' इति श्रुतिप्रतिपन्नमेवार्थं 'मांसादि-भौमम्' इति सूत्रेण कीर्तयतीत्यर्थः । वाचस्पत्युक्तिमाह – **मनस आहङ्कारिक-त्वनित्यत्वयोरि**ति । इदमुपलक्षणम् । वाचोऽपि द्रष्टव्यम् । सांख्यैः वाङ्मनसयोः

द्वयोरपि आहङ्कारिकत्वस्याभिधानात् । वाचस्पतिपक्षे च सूत्रस्यायमर्थः — मांसादि भौममित्येतत् दृष्टान्तार्थम् । यथा मांसादि भौमं भवति, एवं वाङ्मनसी अपि तैजसभौमे इति ॥

इति संज्ञामूर्तिक्लृप्त्यधिकरणम् ॥

---

इति दशोपनिषद्भाष्यकारैः श्रीमद्रङ्गरामानुजमुनिभिर्विरचितायां
श्रुतप्रकाशिकाव्याख्यायां भावप्रकाशिकायां
द्वितीयाध्यायस्य चतुर्थः पादः

—:※:—

॥ श्रीः ॥

श्रीमते रङ्गरामानुजमहादेशिकाय नमः ।

श्रुतप्रकाशिकाव्याख्या भावप्रकाशिका

## तृतीयाध्याये प्रथमः पादः

## (१) तदन्तरप्रतिपत्त्यधिकरणम् ।

---

**तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् ३-१-१.**

भाष्ये **तद्दुर्धर्षणत्वहेतुभिरिति** । प्रथमाध्यायार्थदुर्धर्षणत्वहेतुभिरित्यर्थः । अनेन च द्वितीयाध्यायार्थस्य प्रथमाध्यायशेषत्वं स्थापितम् । अत एव द्वितीयाध्यायार्थः तृतीयान्तपदाभ्यां निर्दिष्टः । 'सहयुक्तेऽप्रधाने'' इति हि स्मृतिः । **इदानीमिति** व्याख्येयं पदम् । **विषयिचिन्ता क्रियत इत्यर्थ** इति । प्राप्तेरप्यनुभवरूपतया उपासनप्राप्त्योः तृतीयचतुर्थाध्यायप्रतिपाद्ययोः ब्रह्मविषयकतया विषयिचिन्तात्वेन कोडीकारो युक्त इति भावः । भाष्ये **लोकान्तरेषु सञ्चरतो जाग्रत्

इति। लोकान्तरेषु सञ्चरतो जाग्रतो दोषा इति वैराग्यपादार्थ उक्तः। अत एव हि संध्याधिकरणे, "एवं कर्मानुरूपगमनागमनजन्मादियोगेन जाग्रतो जीवस्य दुःखित्वं ख्यापितम्" इति भाष्यकारः स्वयमेव वक्ष्यति। परैश्च, "यस्य पूर्वस्मिन् पादे जाग्रदवस्थायां इहलोकपरलोकसञ्चार उक्तः, तस्यैव जीवस्य अवस्थाभेदः स्वयंज्योतिष्ट्वसिध्यर्थं प्रपञ्च्यत इति तत्रैवाधिकरणे उक्तम्। भाष्ये **स्वपत** इति स्वप्नावस्थस्य ग्रहणम्; सुषुप्तपदसमभिव्याहारेण गोबलीवर्दन्यायात्। **सुषुप्तस्येति** भूतत्वमविवक्षितम्; अतावैरूप्याय सुस्वपत इति शत्रन्ततया निर्देशे कर्तव्ये निष्ठान्ततया निर्देशः, "तत्रैतत् सुप्तस्समस्तः संप्रसन्नः स्वप्नं न विजानाति," "यदा सुषुप्तः स्वप्नं न कथञ्चन पश्यति" इत्यादिश्रुतिनिर्देशाभिप्रायेणेति द्रष्टव्यम्। **कल्याणगुणाकरत्वञ्चेति** भाष्यानन्तरमितिशब्दः अध्याहर्तव्यः। स च प्रकारवचनः। ततश्च उभयलिङ्गत्वम्, सर्वस्मात्परत्वम्, फलप्रदत्वमित्येवंरूपोऽर्थः प्रतिपाद्यत इति। एवं च **प्रतिपाद्यत** इति एकवचनस्य बहुवचनान्तदोषशब्दान्वयेऽपि नानुपपत्तिः। केचित्तु, आदिर्ञिटुडवः, कर्मणो रोमन्थतपोभ्यां वर्तिचरोः, भृशादिभ्यो भुव्यच्व्यच्वेः — इत्यादिवत् प्रत्येकमभिसंबन्धादेकवचनं समर्थयमानाः सर्वोत्तरफलप्रदत्वयोरपि कल्याणगुणाकरत्वान्तर्भावं मन्यमाना इतिशब्दाध्याहारं न ममृषिरे।

ननु पूर्वं द्विकार्थानुक्रमण एव निरस्तनिखिलदोषगन्धस्यापरिमितगुणसागरस्य प्रतिपादितत्वाभिधानात्, "परस्य ब्रह्मणः तद्रहितता कल्याणगुणाकरत्वञ्च प्रतिपाद्यत" इति भाष्यमसंगतमिति चेत्—उभयलिङ्गपादस्य तद्दार्ढ्यार्थत्वेन अवैयर्थ्याददोषः। ननु लोकान्तरे सञ्चरतो जीवस्य दोषाः प्रतिपाद्यन्त इति यदभाषि, तदभ्युपगम्यते। प्रथमे पादे तथा प्रतिपादनात्। तथा हि—प्रथमे तावदधिकरणे संसारदुःखायतनस्य भूतेन्द्रियसंघातरूपस्य सूक्ष्मदेहस्य इह परत्र च गतागतयोरनुवृत्तिरस्तीति निरूप्यते; तत्रैव, 'भाक्तं वाऽनात्मवित्त्वा त्—'इति सूत्रेण देवभृत्यभावमवलम्ब्य तत्प्रयुक्तक्लेशकरम्बितस्य स्वर्गभोगानुभवस्य प्रक्षीणत्वं सातिशयत्वं चाविष्कृतम्। द्वितीयाधिकरणे सूक्ष्मदेहस्यापि कारणतया सकलसंस्कारक्लेशनिदानस्य कर्मबन्धस्य मुक्तिपर्यन्तमनुवृत्तिर्निरूपयिष्यते; तत्रैव स्वर्गभोगस्य क्षयिष्णुत्वं च कृतात्यय इति सूत्रभागेन दर्शयिष्यते। एवमनेकदोषदुष्टस्यापि स्वर्गभोगजनकं यागादिकमपि यावज्जीवकर्तव्यस्नानसंध्या-

वन्दनादिविहितानुष्ठाननिषिद्धपरिहाररूपबहुविधक्लेशसाध्यस्मार्ताचारसापेक्षत्वादतिदुष्करमिति 'चरणात्' इत्यादिसूत्रैः प्रकटीकरिष्यते। अनिष्टादिकारिणां तु, ग्रामं गच्छन् वृक्षमूलान्युपसर्पतीति न्यायेनापि स्वर्गप्राप्तिर्नास्ति, यमसदने रौरवादिषु च भूयान् यातनानुभवः, कीटादिजन्मप्राप्तिश्चेति तृतीये वर्णयिष्यते। चतुर्थे स्वर्गादवरोहतां आकाशादिभावश्रवणात् तदभिमानिदेवतानामिव आकाशादिशरीरत्वप्रयुक्तः कियान् दिव्यभोगानुभवोऽस्तीति शङ्कावारणाय आकाशादिषु संश्लेषमात्रमिति वर्णयिष्यते। पञ्चमे चिरमचिरं वाऽवस्थानमित्यनियमनिरासव्याजेन व्रीह्यादिषु सुखभोगरहितमिति चिरावस्थानं दृढीकरिष्यते। तेषु चावस्थानं तत्तदभिमानिजीवात्मना चेत्, तल्लवनपर्यन्तमेव स्यात्; ततश्च नातिहेयत्वं सिद्ध्येदिति अतिहेयत्वसिद्ध्यै तेषु संश्लेषमात्रमिति प्रदर्शयिष्यते। स संश्लेषः तेषां शोषणकुसूलावस्थापनावहननफलीकरणपाकभक्षणादिदशासु अनुवर्तमानः पितृवीर्यात्मना परिणामपर्यन्तः; पुरुषभक्षणविषयत्वमनापन्नेषु व्रीह्यादिषु संश्लिष्टानामनुशयिनां तेषु संश्लेषस्तु व्रीह्यादिपरिणामान्तरपरम्पराक्रमेण यथा कथंचित् पुरुषभक्षणविषयत्वप्राप्त्यनन्तरं तेषां तद्वीर्यात्मना परिणामपर्यन्त इति रेतःसिक्सूत्रे संसूचयिष्यते। तथा पुरुषवीर्यानुप्रवेशेऽपि योषितमप्राप्य तेषां न शरीरलाभः। तद्वीर्यं यदि ऊर्ध्वरेतसाम्, वंध्यादिषु प्रवृत्तानां वा स्यात्। तदा तद्वीर्यपरिणामान्तरक्रमेण पुनरपि पुरुषभक्षणविषयत्वं प्राप्य तद्वीर्यसंसक्ततया ऋतुमतीनां योषितां गर्भगोलकप्रवेशानन्तरमेव क्वचिज्जन्मनि भोगाश्रयस्य भोगमोक्षोपयोगिनश्च शरीरस्य लाभः, तथा, "स उल्बावृतो गर्भो दश मासान् अन्तः शयित्वा यावद्वा व्याप्य अथ जायते" इति मातुः कुक्षौ मूत्रपुरीषवातपित्तश्लेष्मादिपूर्णे तदनुलिप्तस्य गर्भस्योल्बाशुचिपटावृतस्य लोहितरेतोशुचिबीजस्य मातुरशितपीतरसानुप्रवेशेन विवर्धमानस्य निरुद्धबलशक्तिवीर्यतेजःप्रज्ञाचेष्टस्य शयनम्, ततो योनिद्वारेण पीड्यमानस्य कष्टतरा निस्सृतिर्जन्मेति, "योनेः शरीरम्" इति सूचयिष्यते। अत एव 'तस्मात् जुगुप्सेतेति' पञ्चप्रश्नीप्रतिवचनानन्तरं श्रूयते। ततश्च युक्तमिहामुत्र च सञ्चरतो दोषाः प्रतिपाद्यन्त इति। **जागराद्यवस्थस्य तु दोषाः प्रतिपाद्यन्ते** इत्येतत्तु न युज्यते, क्वापि तास्ववस्थासु दोषाप्रतिपादनात्। इहामुत्र च संचरणं जागरावस्थस्यैवेति जागरावस्थदोषप्रतिपादनस्य वैराग्यपादे फलितत्वेऽपि स्वप्नाद्यवस्थस्य दोषप्रतिपादन-

पराधिकरणस्यादर्शनात्; "संध्ये सृष्टिराहही" याद्यधिकरणानामुभयलिङ्गपादगतानामत्याश्चर्यस्वाप्नपदार्थसृष्टृत्वसुषुप्तविश्रान्त्याधारत्वादिपरमात्ममहामहिमप्रतिपादनपरत्वेन स्वप्नाद्यवस्थादोषप्रतिपादनपरत्वाभावादित्याशंकां निराकरोति **लोकान्तरेष्वित्यादिना फलिता** इत्यंतेन ग्रन्थेन। अयं भावः – संध्याद्यधिकरणेषु स्वप्नाद्यवस्थानिरूपणस्य घ्नन्तीत्यारभ्य "नाहमत्र भोग्यं पश्यामि; नाह खल्वयमेवं संप्रत्यात्मानं जानाति अयमहमस्मीति, नो एवेमानि भूतानि, विनाशमेवापीतो भवति, नाहमत्र भोग्यं पश्यामि" इति प्रजापतिविद्योदितदोषसंसूचकत्वात्, "पराभिध्यानात्तु तिरोहितम्,–देहयोगाद्वा सोऽपी"ति स्वप्नावस्थायां कर्मदेहसंबन्धाधीन—अपहतपाप्मत्वादितिरोधानवर्णनाच्च परमात्ममहिमप्रतिपादनपरेभ्योऽधिकरणेभ्यः स्वप्नाद्यवस्थस्य दोषाः, फलन्तीति।

**प्रथमाधिकरणस्य संशयमाहेति**। अवयावयविभावे षष्ठी। **किं श्रद्धादिशब्दैरिति**। आदिपदेन सोमवृष्ट्यादयो गृह्यन्ते। **पितृयाणेन पथा निवर्तने एष सोमोराजेति सोमशब्दस्येति**। **निवर्तनं** सञ्चरणम्, 'अथैतमेवाध्वानं पुनर्निवर्तन्ते' इत्यारभ्यैव निवृत्तेः प्रतिपादयिष्यमाणत्वात्। यद्वा **निवर्तन** इति अपादाने ल्युट्। ततश्च पितृयाणेन पथा यस्मात् द्युलोकात् निवर्तन्ते, तत्र विषये एष सोमो राजेति सोमशब्दस्येत्यन्वयः। अयमर्थः—"आकाशात् चंद्रमसम्, एष सोमो राजा तद्देवानामन्नम्; तं देवा भक्षयन्ती" ति पितृयाणवाक्यस्थसोमशब्दस्य यत् सोमदेहविशिष्टजीवपरत्वम्, तत्, "तस्मिन्नेतस्मिन्नग्नौदेवाः श्रद्धां जुह्वति। तस्या आहुतेः सोमो राजा संभवति" इति पूर्वप्रवृत्तपञ्चाग्निविद्यावाक्यगतस्य सोमशब्दस्य सोमदेहविशिष्टपरतामवगमयति, उत नेति **श्रद्धामि(हु)त्यनंतरवाक्यस्थसोमशब्दस्येति**। श्रद्धां जुह्वतीति वाक्यानंतरं यत्, 'तस्याः आहुतेः सोमो राजा संभवती' ति वाक्यम्, तत्स्थस्येत्यर्थः। भाष्ये **भूतसूक्ष्माणां सुलभत्वादिति**। भोग्यभोगोपकरणभोगस्थानवत् भोगायतनानामपि शरीराणां तत्रत्यैरेव भूतैरदृष्टाकृष्टैः आरम्भसंभवात् न तदर्थं इतो भूतसूक्ष्मानयनापेक्षेति भावः।

भाष्ये **रंहति गच्छतीत्यर्थ** इति। रहि गताविति धातोः निष्पन्नत्वादिति भावः। ननु भूतसूक्ष्मपरिष्वङ्गपरप्रश्नप्रतिवचनमात्रस्यैवोपन्यसनीयतया अधिको-

पन्यासासांगत्यमित्याशंक्याह **प्रश्नप्रतिवचनाभ्या**मित्यादिना । अत्र प्रश्नप्रतिवचनाभ्यामिति सूच्यते । न हि, "वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती" ति भूतसूक्ष्मसंपरिष्वङ्गपरप्रश्नानन्तरं संपरिष्वङ्गपरं प्रतिवचनं दृश्यते । "यामेव कुमारस्यान्ते वाचमभाषथाः, तामेव मे ब्रूही" ति गौतमकर्तृकप्रश्नान्तरेण व्यवधानात् । "इति तु पञ्चम्यावाहुतावापः पुरुषवचसो भवन्ति" इत्यस्य पाञ्चालराजकर्तृकप्रतिवचनस्य, "वेत्थ यथा पञ्चम्यामाहुतौ" इति पाञ्चालराजकर्तृकस्य गौतमप्रश्नव्यवहितप्रश्नस्योत्तरत्वासंभवात । एवं हि तत्र श्रूयते, श्वेतकेतुमारुणेयं पाञ्चालराजः प्रवाहणः, "वेत्थ यदितोऽधि प्रजाः प्रयन्ती" ति कर्मिणां गन्तव्यदेशम्, "वेत्थ यथा पुनरावर्तन्ता" इति पुनरावृत्तिप्रकारम्, "वेत्थ पथोर्देवयानस्य पितृयाणस्य च व्यावर्तना' इति देवयानपितृयाणयोः व्यावर्तकाकारौ — "वेत्थ यथाऽसौ लोको न संपूर्यत" इति अमुष्य लोकस्याप्राप्तारम्, "वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती" ति पञ्चम्यामाहुतावपां पुरुषवचस्त्वञ्च पप्रच्छ । स तावदिमान् प्रश्नान् प्रतिवक्तुमजानन् स्वपित्रे न्यवेदयत् । सोऽपि च अजानन् तमेव पाञ्चालराजं 'यामेव कुमारस्यान्ते वाचमभाषथाः तामेव मे ब्रूही' ति पप्रच्छ । तस्य हि प्रश्नस्य, "इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती" ति पाञ्चालराजप्रतिवचनमितीमां मन्दाशङ्कां निवर्तयितुम्, "इति तु पञ्चम्यामाहुतावाप" इत्यादिप्रतिवचनानां पाञ्चालराजकर्तृकाणां पञ्चानां पाञ्चालराजकर्तृकप्रश्नपञ्चकाव्यवधानक्रमरूपतां दर्शयतीत्यर्थः । "यामेव कुमारस्यान्ते वाचमभाषथाः" इति गौतमप्रश्नस्य पाञ्चालराजकर्तृकपञ्चप्रश्न्यभिन्नत्वेन तद्भिन्नत्वानुपपत्तेः । यद्ययं प्रश्नः भिन्नः स्यात्, तदा एकमेव प्रतिवचनं स्यात् । अतः प्रतिवचनपञ्चकदर्शनात् पाञ्चालराजकर्तृकाणामेव पञ्चानां प्रश्नानामुत्तरमवसीयते । अतः [एव यामेव]कुमारस्यान्ते वाचमभाषथा इति गौतमप्रश्नस्य पाञ्चालप्रश्नाभिन्नत्वात् प्रश्नप्रतिवचनयोः अव्यवधानरूपक्रमः सिद्धः । न खलु, पञ्चानां प्रश्नानां क्रमेण प्रतिवचनानि प्रथमस्य प्रथमं द्वितीयस्य द्वितीयमित्येवमिति भ्रमितव्यम् । न ह्यत्र प्रश्नक्रमेण प्रतिवचनानि प्रवृत्तानि, अपि तु, 'वेत्थ यथा पञ्चम्यामाहुतौ' इति पञ्चमस्य प्रश्नस्य, 'इति तु पञ्चम्यामाहुतौ' इति हि प्रथमतः प्रतिवचनं दृश्यते । न च प्रश्नप्रतिवचनानामानन्तर्यरूपः क्रमो भाष्ये न दर्शित

इति चोदनीयम्; **इममर्थं पप्रच्छ**; **प्रनिब्रुवंश्चे**ति भाष्यग्रन्थेन तत्प्रश्नानां प्रतिवचनत्वख्यापकेन तदानन्तर्यस्य ख्यापनात्।

**होतव्यद्रव्याकांक्षाया**मिति। यद्यप्यपां पुरुषवचस्त्वविशेषितभवनक्रिया संबन्धमात्रं शाब्दम्, तथाप्याहुतीनां द्रव्याकांक्षायां सन्निधानेनाऽऽप एव द्रव्यत्वेन संबध्यन्ते। अतश्च अपां पञ्चम्यामाहुतौ, तासामेवापां पुरुषाकारेण परिणामं वेत्थ किमिति प्रश्नवाक्यार्थः पर्यवस्यति। न च अपां सन्निहितत्वेऽपि तद् त्विधेः पुरुषवचस्त्वविशेषितभवनक्रियान्वयार्थतया अन्यार्थसन्निहिताभिः अद्भिः आहुतीनां न विशेषितत्वं संभवति। न हि, 'अश्वेन गच्छति, श्वेतेन पटेन प्रावृतः' इत्युक्ते पटार्थसन्निहितेन श्वेतेनाश्वोऽपि विशेष्यत इति वाच्यम् — सत्यामाकांक्षायां अन्यार्थसन्निहितस्यापि अन्यविशेषकत्वसंभवात्। 'मूलतः शाखां परिवास्योपवेषं करोती' त्यत्र परिवासनापादानतयान्वितस्य मूलत इत्यस्य उपवेषणं करोतीत्यत्र साकांक्षेणाप्यन्वितत्वस्य प्रयुक्तलक्षणे दर्शितत्वादिति भावः। **वाक्यान्तरस्था श्रद्धे**ति। ननु वाक्यान्तरस्थत्वेऽपि प्रथमेऽग्नौ श्रुतां श्रद्धां परित्यज्य स्ववाक्यस्थत्वरूप-संनिधिमात्रमवलम्ब्य आपो होम्यत्वेन परिकल्प्यन्त इत्येतत् कथमिति चेत् — असञ्जातविरोध्युपक्रमगतप्रश्नवाक्य एवापां होम्यत्वस्य निर्णयात्। उपसंहारे, 'इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती' त्यत्रापि तथैव प्रतीतेः। 'वाक्यान्तरस्था श्रद्धा प्रतिवचनवाक्यमध्यस्था, अन्तरशब्दो मध्यवचनः, मध्येऽपि तत्प्रकार एव उपपादितः' इति ग्रन्थकृतैव, 'प्रथमेऽश्रवणात्' इत्यत्र वक्ष्यमाणत्वात्। ततश्च संदंशन्यायेनोपक्रमाधिकरणन्यायेन च तदनुगुणतयैवात्मानं लभते, न तद्विरोधेनेत्यदोषः। **परिणामस्यायोग्ये**ति। इदमुपलक्षणम् — आत्मधर्मरूपायाः श्रद्धायाः आत्मतो निष्कृष्य होमासंभवाच्चेत्यपि द्रष्टव्यम्। एतत् सर्वम्, "प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः" इति सूत्राभिप्रेतं तत्रैवोपन्यसनीयम्, प्रतिपत्ति-सौकर्यायानागतावेक्षणन्यायेन इहोपात्त(पन्यस्त?)मिति द्रष्टव्यम्। **प्रश्नप्रतिवचना-भ्यामि**ति। प्रश्नयोर्निरूपणे प्रश्ननिरूपणे, ताभ्यामिति व्याख्यातव्यम् (विग्रहो निरूपित) इति भावः।

त्र्यात्मकत्वात्तु भूयस्त्वात् ३-१-२.

**शंकाग्रन्थस्थपरिष्वङ्गशब्देने**ति । अस्य पूर्वेणान्वयः । कथं परिष्वङ्ग इति शंकायामाह त्र्यात्मकत्वादिति भाष्यग्रन्थेन त्र्यात्मकत्वात् परिष्वङ्ग इत्यन्वयो दर्शित इति भावः ।

प्राणगतेश्च ३-१-३

**अवान्तरसाध्यान्वयव्यावृत्त्यर्थ**मिति । भूयस्त्वादिति हेत्वंशस्य यत् साध्यम् 'केवलानामपां श्रवणमुपपद्यत' इति – तदन्वयव्यावृत्त्यर्थमित्यर्थः ।

अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ३-१-४.

**औषधिवनस्पतिषु चाप्ययरहितैरि**ति । मृतस्य लोम्नां केशानां च उत्प्लुत्योत्प्लुत्य ओषधिवनस्पतिषु अप्ययादर्शनादिति भावः । **लोमाभिमानिदेवता** इति । "अग्निर्वाग् भूत्वा मुखं प्राविशत्, वायुः प्राणो भूत्वा नासिके प्राविशत्, आदित्यः चक्षुर्भूत्वा अक्षिणी प्राविशत्, दिशः श्रोत्रं भूत्वा कर्णौ प्राविशत्, ओषधिवनस्पतयो लोमानि भूत्वा त्वचं प्राविशन्" इत्यादिवाक्यपर्यालोचनया ओषध्यभिमानिदेवतानां लोमाभिमानिदेवतानाञ्च ऐक्यं सिद्धम् । ततश्च, 'ओषधीर्लोमानि वनस्पतीन् केशा' इति बृहदारण्यवाक्यस्यापि, लोमाभिमानिदेवताया ओषध्यभिमानिदेवतास्वप्ययो नाम तदभिमन्तृत्वरूपतन्नियन्तृत्वपरित्याग इत्यर्थः समाश्रयणीयः, एवं वागादिष्वप्युपपद्यत इति भावः । नन्वग्न्यादीनां मरणकाले वागाद्यभिमानित्वपरित्यागे प्राणानामुत्क्रान्तिगति चन्द्रसंवादादिकार्याण्यपि न सिद्ध्यन्ति । ततश्च, प्राणगतेश्चेति सूत्रासामञ्जस्यं परिहरता, प्रकारान्तरेण सूत्रासामञ्जस्यमेव दृढीकृतं स्यात् । ततश्च वागादीन्द्रियाणां म्रियमाणानुपकारकत्वेन असत्कल्पत्वेन अपीतसादृश्यात् वागादिरपीत इत्युच्यत इत्युपचाराश्रयणमेव ज्याय इति चेत्— म्रियमाणजीवं प्रति वागादीनामुपकारविशेषापादकत्वानुकूलाभिमानविशेषपरित्यागस्यैव विवक्षितत्वात् । न च भाक्तत्वाश्रयणे अविशिष्टे असत्कल्पत्वेन अपीतसादृश्यात् भाक्तत्वमिति परोक्तं किमिति नाश्रीयत इति वाच्यम् — शरीरवाचिशब्दानां शरीरिपर्यन्तत्वस्य सिद्धतया वागादिशब्दानां तद्देवतापरत्वस्य संभवात् तत्राप्ययश्रुते-

रभिमानविशेषपरित्यागमात्रेण कथञ्चिदुपपत्तिरस्तीति तदपेक्षया ज्यायस्त्वमिति भाष्यकाराभिप्रायः ।

अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ३-१-६.

ननु **अस्मिन्नेव वाक्य** इति भाष्यमयुक्तम्, पितृयाणवाक्य एवेष्टादिकारिणां सोमराजभावः श्रूयते; नास्मिन् पञ्चाग्निविद्यावाक्ये इत्यत आह **महावाक्य** इत्यर्थ इति । भाष्ये **सोमराजान** इति निर्देशः समासान्तविधेरनित्यत्वात्, तस्य च, "प्रतेरंश्वादयस्तत्पुरुषे" इति अंश्वादिषु राजशब्दपाठेन ज्ञापनात् । सोमा राजान इति वा, सोमो राजा इति वा पाठः समीचीनः । **उक्तप्रकारेणानुतिष्ठन्तीति** । श्रुतौ इतिशब्दः प्रकारवचनः । ततश्च इष्टं पूर्तं दत्तम् एवंजातीयकानि कर्माणि सुकृतशब्दवाच्यानि येऽनुतिष्ठन्तीत्यर्थः । **उक्तप्रकारेणे**त्यस्यापि स एवार्थः । पूर्वश्रुतावनुष्ठानप्रकारस्यानुक्तेः **तद्योगी भवतीत्यर्थ** इति । इदं तु (च) रेतस्सिवसूत्रे ग्रन्थकृतैव स्पष्टयिष्यते । **उभयत्रसोमराजशब्देने**ति । इदमुपलक्षणम् द्युलोकस्थानसंबन्धित्वेनेत्यपि द्रष्टव्यम् । **तत्सेवकत्वादिति** । नृत्तगीतादिना तत्सेवकत्वादित्यर्थः ।

**परे** त्वित्यादि । **द्रवद्रव्यभूयस्त्वादिति** पूर्वेणान्वयः । अग्निहोत्रादि-कर्मणां द्रवद्रव्यसाधनकतया तत्तत्कर्मसंबन्धिषु दधिपयःप्रभृतिषु हविष्षु भूयसी-नामपामुपलम्भात् ता एवाऽऽप इहाप्शब्देनाभिधीयन्त इति भावः । "**ते वा एते आहुती** = अग्निहोत्राहुती । **इमामिति** । पृथिवीमित्यर्थः । **अपूर्वरूपेणेति** । 'कर्मसमवायिन्य आहुतिमय्य आपः अपूर्वरूपास्सत्यः तान् इष्टादिकारिणो जीवान् परिवेष्ट्यामुं लोकं फलदानाय नयन्ती' ति शांकरभाष्योक्तेरिति भावः । **जीवान् परिष्वजत** इति पाठः । **पटैकदेश** इति । यथा पटैकदेशे दग्धे पटो दग्ध इति व्यवहारः अमुख्यः तथा, "ते वा एते आहुती" इत्यत्र आहुतिशब्दस्य आहुत्येकदेशे प्रयोगोऽमुख्यस्स्यादित्यर्थः । **पूर्वपक्षसूत्राणि (क्षपराणि) व्याख्या-तानीति** । पूर्वपक्षसूत्रतया व्याख्यातानीत्यर्थः ।

ननु द्युपृथिवीपुरुषयोषिद्रूपाणां प्रत्यभिज्ञापकानां पञ्चाग्निविद्यायां भूयसां सत्त्वेन षट्प्रश्नब्राह्मणप्रत्यभिज्ञानमस्त्येव । किञ्चिन्न्यूनातिरेकवशेन प्रत्यभिज्ञाभंगे,

"अर्चिरादिना तत्प्रथिते.", "सर्वाभेदादन्यत्रेमे" इत्याद्यधिकरणविरोधप्रसंगात् । देवन तृप्तिहेतुत्वेन श्रुतानां पुरुषवचस्त्वपर्यन्तावस्थाविशेषस्यापि नानुपपत्तिः; "तं देवा भक्षयन्ती"ति श्रुतस्य सोमाकारपरिणामदेहगतदेवभक्ष्यत्वस्य जीवे, "एतदेवामृतं दृष्ट्वा तृप्यन्ति" इति न्यायेन तृप्तिहेतुभूतदर्शनकर्मतारूपतया(ना ।?) सिद्धान्तिनोऽपि संमतत्वेन देवतातृप्तिहेतुत्वस्य वृष्ट्यन्नादिपरिणामाविरोधित्वादित्यस्वरसादाह – 'भवतु वा [विभागः] आहुतीनामिति । यद्वा त्वप्शब्द एवेति । अप्शब्दस्य पुरुषशब्दसामानाधिकरण्य निर्वाहाय लक्षणयापि समाश्रयणीयस्य जीवपरत्वस्य अन्तरेणैव लक्षणां मुख्यया वृत्त्या सिद्धौ कस्तत् परित्यजेदिति भावः । **चन्द्रप्राप्तिदशाया**मिति । **एष** इत्येतच्छब्दस्य, "आकाशाच्चन्द्रमसमभिसंभवन्ती' ति पूर्वनिर्दिष्टचन्द्राभिसंभवविशिष्टजीवपरामर्शित्वात् चन्द्रप्राप्त्यनन्तरं सोमराजत्वे सिद्धे तत्प्रत्यभिज्ञानात् पञ्चाग्निविद्यायामपि सोमभावस्य चन्द्रप्राप्त्यनन्तरभावित्वं सिद्ध्यतीति भावः । **एष इति सर्वनामपदेने**ति । प्रथमान्तसर्वनामपदेनेत्यर्थः । विभक्तिसारूप्येण प्रथमान्तनिर्दिष्टस्यैव प्राप्तुर्जीवस्य परामर्शो युक्तः । 'प्रजापतिर्वरुणायाश्वमनयत्, स स्वां देवतामार्च्छत्' इत्यत्र स इति प्रथमान्तपदेन न चतुर्थ्यन्तनिर्दिष्टस्य प्रतिग्रहीतुर्वरुणस्य ग्रहणम्; अपि तु समानविभक्तिनिर्दिष्टस्य प्रजापतेर्ग्रहणमिति तस्यैव, "वारुणान् चतुष्कपालान्निर्वपेत्" इति विहितेष्टिरिति पूर्वतन्त्रे ( ) स्थितत्वादिति भावः । न च विभक्त्यैकरूप्येण प्रथमान्तनिर्दिष्टस्य ग्रहणे, "स उत्तमः पुरुषः" इत्यत्रापि स इति तच्छब्देन, "एष संप्रसादोऽस्मात् शरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत" इति पूर्ववाक्ये प्रथमान्तसंप्रसादशब्दनिर्दिष्टस्य जीवस्यैव ग्रहणं स्यात्, न तु 'परञ्ज्योतिरुपसंपद्ये' ति द्वितीयान्तपदनिर्दिष्टस्य परस्य ब्रह्मण इति चेन्न – प्रथमान्तनिर्दिष्टस्य जीवस्य स इत्यनेन ग्रहणे तस्य, उत्तमः पुरुष इति प्रतिपाद्यमानपुरुषोत्तमत्वस्य जीवे बाधितत्वेन तत्र विभक्त्यैकरूप्यावगतसंप्रसादपदवाच्यजीवपरित्यागेऽपि असति बाधके विभक्त्यैकरूप्यस्य नियामकत्वसंभवात् । **विभक्तिमात्रस्ये**ति । वचनमात्रस्येत्यर्थः । एवमुत्तरत्रापि विभक्तिशब्दो वचनपरो द्रष्टव्यः । विभक्त्यर्थक्लेशस्याप्रसक्तेः । ततश्च बहुपत्नीकप्रयोगेऽपि; "पत्नीं सन्नह्ये' त्येकवचनात् वाक्यस्य प्रातिपदिकस्य च गुणभूतं वचनं प्रत्येकमेकत्वाभिप्रायेण वा जात्यभिप्रायेण वा योजनीयम् । अभ्युदितेष्टौ, 'यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा

अभ्युदितात् — स त्रेधा तण्डुलान् विभजे'दित्यत्र तण्डुलानां त्रेधा विभागो न विधीयते ; ये मध्यमास्स्युरित्यादिवाक्यैरेव मध्यमादिविभागस्य सिद्धत्वेन वाक्यवैयर्थ्य-प्रसंगात्; [अपितु ?] तण्डुलशब्देन दार्शिकहविर्लक्षयित्वा तस्य पूर्वदेवतापनयो विधीयते इत्येवं वाक्यावैयर्थ्याय वाक्यान्तर्गतबहुपदास्वारस्याश्रयणे न्यायसिद्धे वाक्यावैयर्थ्याय वचनमात्रास्वारस्याश्रयणं कैमुत्यसिद्धमिति भावः । **विभक्त्यर्थनिर्बन्धाभावदर्शनादिति** । एकवचनान्तनिर्दिष्टस्य एकवचनान्तेनैव निर्देशः, बहुवचनान्तनिर्दिष्टस्य बहुवचनान्तेनैव निर्देश इति नियमाभाव इत्यर्थः ।

**ननु पञ्चाग्निविद्यायामपीति** । अयं भावः — पञ्चाग्निविद्यायां सोमराजशब्दस्य चन्द्रेतरविषयत्वे सिद्धे तत्प्रत्यभिज्ञापनेन प्रयोजनवत्तया "एष सोमो राजे'ति पितृयाणवाक्ये एतच्छब्दस्य प्राप्तृविषयत्वं स्यात् । पञ्चाग्निविद्यावाक्यस्थ-सोमराजशब्दस्यापि चन्द्रविषयत्वे, "एष सोमो राजे'त्यस्यापि प्राप्तृपरत्वेऽपि निष्प्रयोजनत्वाविशेषात् एकवचनस्वारस्येन चन्द्रविषयत्वमेव स्यादिति । **अस्य सोमराजशब्दस्येति** । पञ्चाग्निविद्यावाक्यस्थसोमराजशब्दस्येत्यर्थः । **चन्द्रव्यतिरिक्तविषयताज्ञानमात्र(मात्रज्ञान)मिति** । तस्य चन्द्रविषयत्वनिश्चयेऽपि पितृयाणवाक्ये एष सोम इतीष्टादिकारिणं निर्दिश्य पञ्चाग्निविद्यावाक्यप्रतिपन्नचन्द्राभेद-बोधनासंभवात् । ननु तावता चन्द्रविषयत्वनिश्चयाभावस्य प्रतिबन्धकाभावत्वेनापेक्षितत्वेऽपि चन्द्रव्यतिरिक्तविषयत्वनिश्चयो नापेक्षित इति चेत्, सत्यम् । चन्द्रव्यतिरिक्तविषयत्वनिश्चयसामग्रीभूतसंभवहोम्यत्वानुपपत्तेः सत्त्वात् इह तथोक्तमिति द्रष्टव्यम् । **संभवहोम्यत्वानुपपत्त्येति** । "सोमो राजा संभवति", 'सोमं राजानं जुह्वती'ति प्रतिपादितसंभवहोम्यत्वयोरनुपपत्त्येत्यर्थः । **एतावत् ज्ञापनेनेति** । ननु चन्द्रप्राप्तिदशायां श्रद्धाहुतिसंभूतसोमराजभावज्ञापनम्, 'एष सोमो राजे'ति वाक्यस्य प्रयोजनम् । एष इत्यनेनाभिसंभवतीति लटा वर्तमानाभि-संभवविशिष्टश्चन्द्रं प्राप्नुवन् जीवः कथ्यते । सोमो राजेत्यनेन तु, 'तस्या आहुतेः सोमो राजा संभवती'ति पञ्चाग्निविद्यावाक्यात् प्रतिपन्नश्रद्धाहुते-रुत्पद्यमानः सोमो राजा अभिधीयते । ततश्च तयोरभेदबोधने चन्द्रप्राप्तिसोमराज-भावयोरेककालत्वप्रतीतेः चन्द्रप्राप्तिदशायां सोमराजभावस्सिद्ध्यतीत्येवं क्लेशेनोप-

पादनीयस्य चन्द्रप्राप्तिदशायां सोमराजभावस्य प्रयोजनत्वं किमित्याश्रीयते, एष इति निर्दिष्टस्य प्राप्तुः सोमो राजेति पञ्चाग्निविद्यावाक्यस्थसोमराजाभेदबोधनेन सिद्ध्यतः पञ्चाग्निविद्यावाक्यगतसोमराजशब्दे(ब्दस्ये?)ष्टादिकारिविषयत्वस्यैव प्रयोजनत्वोपपत्तेरिति चेत्—सत्यम्; प्रयोजनान्तरस्य संभवतः त्यागायोगात् तदप्युपन्यस्तम्।

ननु एष सोमो राजेति इष्टादिकारिणि प्रयुज्यमानस्य सोमराजशब्दस्य पञ्चाग्नि विद्यावाक्यस्थसोमराजशब्दगौणार्थीभूतश्रद्धाहुतिसंभूतामृतमयदेह ( देहाभेद ) बोधकत्वं न युज्यते । अतस्मिन् तच्छब्दस्य प्रयुज्यमानस्य तत्सादृश्यबोधकत्वमेव; न तु तत्सदृशगौणार्थाभेदबोधकत्वमित्यस्वरसादाह — **अथवेति । चन्द्रसादृश्यज्ञानमेवे(ज्ञापनमि)**ति । 'तद्देवानामन्नम्' इति वाक्यशेषे तस्यैव विवरणदर्शनात्, देवानामन्नम्- देवानामुपभोग्यमित्यर्थः। न च तत्सादृश्यप्रतिपादनमफलमिति वाच्यम्—तस्य, तं देवा भक्षयन्तीति देवोपभोग्यस्वरूपभक्ष्यत्वप्रतिपादनेनार्थवत्त्वात् । न चास्मिन् पक्षे पञ्चाग्निविद्यावाक्यगतसोमराजाभेदबोधनाभावात् तद्गतसोमराजशब्दस्य इष्टादिकारिविषयत्वासिद्धेः, 'अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः' इति सूत्रविरोधः। पञ्चाग्निविद्यायाम्, 'आपः पुरुषवचसो भवन्ती' ति चेतनवाचिपुरुषशब्दसामानाधिकरण्येन सिद्ध्युपपत्तेः गौणचन्द्रपदप्रयोगविषयत्वद्युलोकसंबन्धित्वकृततदैक्यप्रत्यभिज्ञानस्यानुनिष्पादिनः प्रत्याख्यातुमशक्यत्वादिति भावः । **तेषां न सोमराजशब्दाभिलप्यत्वमि**ति । किमिष्टादिकारिणां सोमराजशब्दगौणार्थत्वं निषिध्यते, उत मुख्यार्थत्वमिति विकल्प्य आद्यं दूषयति – **छान्दोग्यस्थस्य सोमराजशब्दस्ये**ति । यथा, 'श्येनेनाभिचरन् यजेत' त्यत्र श्येन इत्यस्य कथं नाम यागे प्रवृत्तिः स्यादित्यवमर्थम्, "यथा वै श्येनः" इत्यादिवाक्यं प्रवर्तते, तद्वदिति भावः(त्यर्थः) । द्वितीयमिष्टापत्त्या दूषयति – **न हि वृत्त्यन्तर** इति ।

इति तदन्तरप्रतिपत्त्यधिकरणम् ।



## ( २ ) कृतात्ययाधिकरणम्

कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवञ्च १३-१-८.

अत्र भाष्ये **पुनरावर्तनञ्च आम्नात**मित्यस्यानन्तरम्, "अथ य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते ते धूममभिसंभवन्ती" त्यारभ्य इत्यध्याहृत्य, "यावत्संपातमुषित्वा अथैतमेवाध्वानं पुनर्निवर्तन्त " इत्याम्नातमित्यन्वयो द्रष्टव्यः। ततश्च यावत्संपातमिति भाष्योपात्तश्रुतिवाक्येन पितृयाणपथानाम्नानं न दोषः। अथ वा— केवलेष्टादिकारिणां धूमादिना पितृयाणेन पथा गमनं भूतपरिष्वंगादिप्रकारयुक्तं चिन्तितमिति शेषपूरणेन समाप्तं वाक्यम्; **कर्मफलावसान** – इत्यादि तु वाक्यान्तरम्। अस्मिन् पक्षे अवान्तरसंगतेः भाष्ये कण्ठतः प्रतिपादनात् **विषयशुद्ध्यर्थं अवान्तरसंगत्यर्थश्चे**ति टीका सुसंगता। पादसंगतिसूचकं संगत्यन्तरमनयोरधिकरणयोर्दर्शयति **यावत्संसार**मित्यादिना। **संगतिरित्यर्थ** इति। **अत्रेति**शब्दः प्रकारवचनः। **अर्थः** प्रयोजनम्। एवंजातीया संगतिः फलितेति यावत्। भुक्तशिष्टं कर्म न शिष्येतेति विरोधमाशंक्याह – **तच्छब्द** इति। **अवशिष्टं कर्म न संभवतीत्यर्थ** इति। **नावशिष्यत** इत्यस्य न संभवतीत्यर्थ इति भावः। **वाक्यवैयर्थ्य**मिति। यावन्मरणं जीवनमिति वाक्यवदिति भावः। भाष्ये **संपतन्त्यनेने**ति। करणे घञिति भावः। **अभ्याङ्पूर्वा**दिति। यद्यपि, "कामं ध्यायन्नप्रमत्तोऽभ्याशो ह यदस्मै स कामस्समृध्येत" इत्यादौ अभ्यागन्तृवचनत्वं न संभवति; परोक्तं क्षिप्रवचनत्वं तु संभवति – तथाप्यत्रास्यार्थस्य संभवात् तथोक्तमिति द्रष्टव्यम्। भाष्ये **प्रत्यवरूढेष्वि**ति निर्धारणे सप्तमी। भाष्ये **दर्शयती**ति। श्रुतिरित्यनुषज्यते। **गौतमापस्तम्बवचन**मिति। 'वर्णा' इत्यादि गौतमवचनम्; 'तत' इत्यादि आपस्तम्बवचनम्।

भाष्ये **यावत्संपातमिति फलदानप्रवृत्तकर्मविशेषविषयमिति**। यावन्त्यस्य कर्माणि, तानि सर्वाण्यपि कदाचित् चन्द्रमसमारूढेन न भोक्तुं शक्यन्ते; अनादिजन्ममरणप्रवाहे केषाञ्चित् कर्मणां ततः प्रागेव भुक्तत्वात्; नानाविधदेवमनुष्यपशुपक्षिसरीसृपादिदेहभोग्यत्वेन श्रुतानां कर्मणामेकेन स्व(?)-

शरीरेण भोक्तुमशक्यत्वात् । तस्मादुपक्रमगतस्यापि संपातशब्दस्य स्वत एव संकोचकापेक्षायां स्मृत्यनुगृहीत – उपसंहारगत – रमणीयचरणादिश्रुत्यनुरोधेन तथा संकोचः कर्तुं युक्त इति भावः । तद्व्यवच्छेद इति । फलदानाप्रवृत्तस्वर्गार्थकर्मैकदेशनिरास इत्यर्थः । **स्वर्गकामो यजेतेति श्रुतिस्वारस्यविरुद्धमिति** । स्वर्गार्थज्योतिष्टोमस्यैव रमणीययोन्यादिफलत्वे स्वर्गस्य निरपेक्षसाध्यत्वप्रतिपादकश्रुतिविरोध इत्यर्थः । अत एव, "सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकामः" इत्यादिवाक्यप्रतिपन्नब्रह्मवर्चसादिफलेषु सौर्यादिषु शास्त्रस्य बहुविषयत्वसिद्ध्यै विश्वजिन्न्यायेन स्वर्गस्यापि फलत्वे कल्प्यमाने कामश्रुतिप्रतिपन्ननिरपेक्षसाध्यत्वभंगप्रसङ्गात् न स्वर्गाद्यर्थत्वमित्युक्तं (   ) पूर्वतन्त्रे । अत एव सर्वकामसाधनत्वेन प्रतिपन्नज्योतिष्टोमादेरपि एकस्मिन् प्रयोगे न फलद्वयसाधनत्वमित्यपि पूर्वतन्त्रे (   ) वर्णितमिति भावः । भाष्ये **फलानुभवान्नाश** इति हेतौ पञ्चमी । "विभाषा गुणे" इति योगविभागात् । फलानुभवेन नाश इत्यर्थः । "प्रायः पापं विजानीयात् चित्तं तस्य निरोधनम्" इति पापस्यैव प्रायश्चित्तनाश्यत्वम्, न पुण्यस्येति शंकां निरस्यति – **पुण्यकर्मणो मुमुक्ष्वपेक्षयेति** । ननु **यथेतमनेवञ्चेति** सूत्रखण्डो व्यर्थः । निवर्तनीयशङ्काया अभावात् । श्रुतिवाक्य एवास्यार्थस्य स्पष्टं प्रतिपादनात् । अतो न्यायनिबन्धनात्मके शास्त्रे (सूत्रे) किमर्थं तन्निबन्धनमिति चेत् – अत्र ब्रूमः – "अथैतमेवाध्वानं पुनर्निवर्तन्ते यथैतमाकाशम्" इति शब्दादारोहपर्वणामेवावरोहेऽपि प्रातिलोम्येन क्रमप्रतीतावपि, 'आकाशाद्वायुम्' इत्यौपसंहारिकबहुवाक्यानुरोधात् यथा यथेतमनेवञ्चावरोहणमभ्युपगम्यते, तथैवोपक्रमश्रुतया यावदिति श्रुत्या निरवशेषकर्मभोगप्रतीतावपि, 'रमणीयचरणाः' 'कपूयचरणाः' इत्याद्यौपसंहारिकबहुवाक्यानुरोधात् सावशेष एव कर्मभोग इति दृष्टान्तसूचनार्थमिति ॥

**चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः ३-१-९.**

**पृथङ्निर्देशो भिन्नार्थत्वकृत इत्यर्थ** इति । अत एव, "न वायुक्रिये पृथगुपदेशात्" इति पृथगुपदेशस्यार्थभेदनिबन्धनत्वं सूत्रितमिति भावः ।

**सुकृतदुष्कृते एवेति तु बादरिः ३-१-११.**

**आचारशब्दस्येति** । पूर्वपक्षिणा आचारवाचित्वेनोपन्यस्तस्य **चरणशब्दस्ये**त्यर्थः । भाष्ये **पुण्यं कर्माचरतीति** । आङुपसर्गस्य प्रयोगस्त्वविवक्षितः; अत

एव हि उत्तरत्र कर्मणि चरतेः प्रयोगादिति भाष्यम्; चरणशब्दसाधारणाय चरतेरेव प्रयोगस्य वाच्यत्वादिति द्रष्टव्यम् । कर्मानुष्ठाने प्रयोगादिति । ततश्च चर्यते अनुष्ठीयत इति कर्मणि, "कृत्यल्युटः" इति ल्युटि चरणशब्दस्य कर्मवाचित्वमुपपद्यत इति भावः । भाष्ये आचारानुमितश्रुतिविहितसन्ध्यावन्दनादीति । "आचारहीनं न पुनन्ति वेदाः" इत्यादिस्मार्तप्रयोगानुसारेण आचारानुमितश्रुतिविहितत्वेनाचारशब्दवाच्यानां सन्ध्यावन्दनादीनामग्निहोत्रादिवैदिककर्माधिकारसम्पादकत्वं युक्तमिति भावः । ननु कृत्स्नस्याप्याचारस्य कथमाचारानुमितश्रुतिविहितत्वेन आचारशब्दवाच्यत्वम्; आचारेष्वेव सन्ध्यावन्दनादिषु केषुचित् स्मृत्यनुमितश्रुतिविहितत्वस्यापि दर्शनात् । सन्ध्योपासनस्यैव, "अहरहः सन्ध्यामुपासीत" इति प्रत्यक्षश्रुतिसिद्धत्वाच्च । किं बहुना, सिद्धान्ते विकीर्णशाखया एव स्मृत्याचारमूलत्वाभ्युपगमेन सर्वेषामप्याचाराणां प्रत्यक्षश्रुतिसिद्धतया आचारशब्दवाच्यानां सन्ध्यावन्दनादीनामङ्गत्वमिति व्यवस्था कथमिति चेत्, अत्र ब्रूमः । सत्यं सर्वमपि कर्म प्रत्यक्षश्रुतिसिद्धमिति — तथाप्यस्त्येव व्यवस्थापकं वैदिकत्वावैदिकत्वयोः । त्रयी हि वैतानिककर्माधिकारेण प्रवर्तते; तन्मध्ये तु प्रसङ्गादवैतानिकं किञ्चिदुच्यते । ततश्च यदधिकृत्य त्रयी प्रवर्तते तत वैदिकम्; इतरत्त्ववैदिकम् । ततश्चास्, यत् सर्वं लौकिकम्, स्मार्त आचार इत्येव हि वैदिकगोष्ठीव्यवहारः । अयं चार्थः पूर्वतन्त्रे सप्तमे विध्यन्ताधिकरणे (७ ४-१) स्पष्टः । ततश्च वैतानिके कर्मणि अवैतानिकमङ्गमित्यर्थः ॥ इति कृतात्ययाधिकरणम् ।

---

## ( ३ ) अनिष्टादिकार्यधिकरणम्

**अनिष्टादिकारिणामपि च श्रुतम् ३-१-१२**

साधुकर्मसंबन्धनियमो नास्तीत्युच्यत इति । अत्र साधुकर्मशब्देन तत्फलभूतद्युलोको लक्ष्यते । अस्याधिकरणस्य साधुकर्मरहितेषु द्युलोकसंबन्धाभावप्रतिपादनपरत्वादिति द्रष्टव्यम् । अथ वा इत्युच्यत इत्यत्र इतिशब्दः प्रकारवचनः । ततश्च वैराग्यहेतोः — केचिदनिष्टादिकारिणोऽपि जीवाः सन्तीति,

तृतीयस्थानस्थिताः केचन याम्ययातना अनुभवन्ति, न च सर्वेऽपि चंद्रमसं गच्छन्तीत्येवञ्जातीयकमिहाधिकरणे प्रतिपद्यत इति भावः। भाष्ये **केवलेष्टापूर्ते**ति। केवलेत्यनेन ब्रह्मविद्याङ्गभूतेष्टादिव्यावृत्तिः; पापव्यावृत्तिर्वा। भाष्ये **विहितं न कुर्वन्ती**ति। ननु कथमुभयेषामनिष्टादिकारिशब्देन ग्रहणम्? न च नञ इष्टादिकारिशब्देनान्वये, ये सुकृतं न कुर्वन्ति, ते लभ्यन्ते; इष्टादिशब्देनान्वये तद्विरुद्धदुष्कृतकारिणो लभ्यन्ते। तत्रासंकोचात् समासद्वयलभ्यार्थद्वयसंग्रहः। ततश्च सुकृतं ये सेवमाना अपि दुष्कृतमपि सेवन्ते, तेषामपि चन्द्रलोकप्राप्तिव्युदासः सिध्यतीति वाच्यम् — तन्त्रावृत्त्येकशेषाणामन्यतमाश्रयणेन समासद्वयाश्रयणस्य क्लिष्टत्वादिति शंकां व्युदस्यति — भाष्ये **उभयेऽपि पापकर्माण** इति। अयं भावः — नञ इष्टादिशब्देन सुकृतवाचिना समासः। ततश्च दुष्कृतकारित्वमेवानिष्टादिकारिशब्दार्थः। तच्च दुष्कृतं द्विविधमपि भवतीति। वस्तुतस्तु सर्वेषामेव पुण्यकारिणां किञ्चिन्निषिद्धकर्तृत्वस्यापि संभवेन सर्वेषामपि चन्द्रप्राप्त्यसंभवेन (व प्रसंगेन?) इष्टादिकारिशब्देन स्वर्गफलोन्मुखेष्टादिकारिण उच्यन्ते; ताच्छील्ये णिनिप्रत्ययान्तत्वात्; तद्भिन्ना इहानिष्टादिकारिणः उच्यन्ते इति न काप्यनुपपत्तिः। **दत्तपूर्ते उच्येते** इति। **इष्टादिशब्दः** सुकृतोपलक्षक इति भावः। **श्रुत्यर्थापत्तिरि**ति।[1] पञ्चमाहुत्यपेक्षारूपश्रुत्यर्थापत्तिरित्यर्थः। "पंचम्यामाहुतावापः पुरुषवचसो भवन्ती" त्यविशेषश्रवणात्। न चैतन्मनुष्यमात्राभिप्रायमिति वाच्यम्— "रमणीयचरणाः कपूयचरणाः श्वयोनिं वा सूकरयोनिं वा" इत्यविशेषश्रवणात्।

भाष्ये **अविशेषेण सर्वेषां गतिश्रवणा**दिति। अनेन पूर्वत्र, 'यावत्संपात' मिति विशेषश्रवणस्य स्वतः संकोचसाकांक्षस्य रमणीयचरणा इत्यौपचारिकवचनानुसारेण संकोचाश्रयणेऽपि इह, "चन्द्रमसमेव ते सर्वे गच्छन्ती" ति श्रुतेः न संकोचः संभवतीति प्रत्यवस्थानलक्षणा संगतिः सूचितेति द्रष्टव्यम्।

**संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ३-१-१३.**

**पापस्य निष्फलत्वं स्यादित्यर्थ** इति। यद्यपि द्वयोः तुल्यफलत्वे बहुवित्तव्ययायाससाध्यस्य सुकृतस्य व्यर्थत्वं स्यादित्येव वक्तुमुचितम् — तथापि

1. एवं व्याख्यातप्रकारेणैवाव्यक्तमूलपाठः।

"संयमने त्वनुभूय" इति पापफलानुभवप्रदर्शकसूत्रावतरणभाष्यत्वात् तथोक्तमिति द्रष्टव्यम् ॥

**यमाज्ञयेत्यर्थ** इति। ननु च संयमनपदं निरोधने प्रसिद्धम्; न तु शासने। तत्रापि यमशासन इत्यर्थश्च दुर्लभः; यमस्याप्रकृतत्वात्। निमित्तसप्तमी चात्यन्तक्लिष्टा। 'निमित्तात् कर्मसंयोगे सप्तमी वक्तव्ये' ति प्रयोजनतया निमित्त एव, कर्मसंयोगे च सा शिष्टा। यथा, "चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम्। केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः ॥" इत्यादौ। अत एव कैयटे, "क्रियाफलमिह निमित्तत्त्वेन विवक्षितम्। यत् क्रियायाः प्रयोजकम्, यदर्थः क्रियारम्भः, ततः, "हेतौ" इति तृतीयायां प्राप्तायां सप्तमी विधीयते, तस्य निमित्तस्य कर्मणा यदि संयोगः संबन्धः। तेन, वेतनेन धान्यं लुनातीत्यत्र सप्तमी न भवति, वेतनस्य धान्येन संयोगाभावात्" इति वर्णितम्। न ह्यत्र यमाज्ञायाः प्रयोजनतया निमित्तत्वमस्ति। संयमनशब्दस्य यमाज्ञापरत्वे, 'तत्रापि च तद्व्यापारादविरोधः' इति न सामञ्जस्यम्। यमसदनपरत्वे हि यमसदननरकगमनयोः विरोधशङ्कापरिहारार्थतया सूत्रं समञ्जसं स्यात्। तथा संयमनपदस्य यमाज्ञापरत्वे तत्सूत्रावतरणभाष्यग्रन्थस्यापि न सामञ्जस्यम्। न च पुराणान्तरसिद्धयमसदनगमनमादाय विरोधाशङ्कोत्थितिरिति टीकायामुपपादितमिति वाच्यम् — तस्यातिक्लिष्टत्वात्। **संयमने यमशासने तत्प्रयुक्तयमयातना अनुभूये**ति भाष्यस्यापि, यमशासने — शास्त्यस्मिन्निति अधिकरणे ल्युट् — यमाज्ञाविषये संयमने पत्तने यमप्रयुक्तयातना अनुभूयेति व्याख्यानसंभवात्। "तत्रापि च तद्व्यापाराद-विरोधः" इति सूत्रावतारिकाभाष्यानुरोधेनार्थाश्रयणे दोषाभावादिति चेत् — सत्यम्; सूत्रकाराभिप्रायदर्शिबोधायनवृत्त्यनुसारेणार्थस्य वर्णनीयत्वेन एवं व्याख्यानोपपत्तिः। "प्रभवति संयमने ममापि विष्णुः" इत्यादौ संयमनशब्दस्य यमपुरवाचित्वप्रसिध्यभावाच्च। परिपाल्यमानतया यमाज्ञायाः फलत्वेन निमित्तत्वसंभवात्। कर्मसंयोगाभावेऽपि सप्तम्या नानुपपत्तिः। अतएव "अन्तर्धौ येनादर्शनमिच्छति" इत्यत्र, "अन्तर्धिर्व्यवधानम्, अन्तर्धौ निमित्त इति निमित्तसप्तमी" ति व्याख्यातं वृत्तिकारैः। अत्र हीच्छाकर्मणा अदर्शनेन अन्तर्धेर्योगो नास्ति। ततश्चान्तर्धावित्यत्र कर्मसंयोगा-

भावेऽपि, प्रयोजनतया निमित्तत्वस्याभावेऽपि निमित्तमात्रे सप्तमीदर्शनात् अत्रापि न दोषः। ननु तत्र परमञ्जर्याम्, "निमित्तात् कर्मसंयोग" इति यदि कारणं निमित्तं गृह्यते, 'जाड्यात् बद्धः' अत्रापि प्राप्नोति। तस्मात् प्रयोजनस्य निमित्तस्य ग्रहणम्। यथा "चर्मणि द्वीपिनं हन्ती" त्यादौ। इहान्तर्धानमदर्शनस्य कारणम्। अन्तर्हितः खल्वसौ न दृश्यते। तस्मान्निमित्तात् सप्तमी निमित्तसप्तमी। पञ्चम्यर्थस्य शेषत्वविवक्षया षष्ठीसमासः। ततश्च, "यस्य च भावेन भावलक्षणम्" इति सत्सप्तमी वा, 'सप्तम्यधिकरणे चे' ति विषयसप्तमी वा भविष्यती"त्युक्तमिति चेत्— इहापि तथाऽस्तु। अथवा, 'संयमने यमशासने तत्प्रयुक्तयातना अनुभूये' ति भाष्ये संयमन इत्यस्य यमशासन इति नार्थकथनम्; अपितु संयमने यमपुरे यमशासने सति यमाज्ञायां सत्यां तत्प्रयुक्तयातना अनुभूयेत्यर्थः। अयमेवार्थः, **संयमन इति निमित्तसप्तमी; यमाज्ञयेत्यर्थ** इति टीकाग्रन्थस्याप्यभिप्रेतः। अस्य वाक्यस्यायमर्थः – संयमनइत्यादिवाक्यस्थयमशासनपदे निमित्तसप्तमी। सा च पूर्वमेवोपपादिता। न चैवं संयमनप्राप्तेः नरकगमनस्य च विरोधशङ्कायाः संभवात्, "यमसदनप्रापिताराणि वचनानि पुराणादिषु पठ्यन्ते; तन्निबन्धनेयं शङ्का" इति टीकाग्रन्थस्याप्यारम्भमिति वाच्यम्— न हि संयमननरकगमनयोर्यमगृहनरकगमनयोः, "तत्रापि च तद्व्यापारादविरोध" इति विरोध आशङ्क्य परिहृतः; अपि तु संयमन इति सूत्रे यमपुरप्रवेश एवोक्तः; न तु सदनप्रवेशः। ततश्च सूत्रे प्रतिपाद्येन विरोधसंभवात्, 'यमसदनप्रापितराणि वचनानि पुराणादिषु पठ्यन्ते, तन्निबन्धनेयं शङ्के' ति ग्रन्थः संगच्छते। इत्थं हि, "तत्रापि च तद्व्यापारादविरोध" इत्यस्य शङ्करभाष्यम्, "ननु सप्तसु लोकेषु गच्छतां कथं यमसदनप्राप्तिः" इति।

**अयं लोको नास्ति पर** इतीति। "न सांपरायः प्रतिभाति बालं प्रमाद्यन्तं वित्तमोहेन मूढम्। अयं लोको नास्ति पर इति मानी पुनःपुनर्वशमापद्यते मे" इति कठवल्लीषु मृत्योर्नचिकेतसं प्रति वचनमिदम्। सम्यक् = अवश्यम्भावेन परः = परस्तात्, देहपातस्य पश्चात् ईयते = गम्यत इति संपरायः। तत्प्राप्त्यर्थः साधनविशेषः सांपरायः बालम् अविवेकिनम्, अत एव प्रमाद्यन्तम् = अनवहितं प्रति न भाति। अत एव, 'अयमेव लोकः स्त्र्यन्नपानादिरूपोऽस्ति; न परः = परलोकः'

इति मानी = इति मननशीलः तदनुरूपमाचरन् पुनपुनर्जन्ममरणप्राप्त्या मम वशमापद्यत" इत्येवम्, 'अयं लोक' इत्यत्र एवशब्दमध्याहृत्य व्याख्यातं परैः। आचार्यास्तु चशब्दमध्याहृत्य व्याचक्षते **अत्रामुत्रच सुखं नास्तीत्यर्थ** इति। देहान्तरोपभोग्यमिति शेषः। भाष्ये, "वैवस्वतं **संगमनं जनानाम्**" इति **संगमनं** संगम्यमित्यर्थः।

**स्मरन्ति च ३-१-१४.**

भाष्ये 'स्मरन्ति चे' ति सूत्रस्यानवतारितत्वात् स्वयमवतारयति — **तद्गति-दर्शनादित्यत्रे**त्यादिना। ' संयमने त्वनुभूयेतरेषामारोहावरोहौ" इति प्रतिज्ञाते तत्रैव पापफलानुभवार्थे प्रमाणप्रदर्शनं ह्युचितम्; न तु तद्गतौ। अतस्तद्गतिदर्शनादित्यर्थे अनुशयानः सूत्रकारः पापफलानुभवदर्शकम्, "सर्वे चैते वशं यान्ती" ति स्मृतिवचनमेव प्रमाणं दर्शयति, 'स्मरन्ति चे' ति सूत्रेणेत्यर्थः। नन्विदानीमपि स दोषस्तदवस्थ एव! "अङ्गुलस्य ष्टभागोऽपि न सोऽस्ति द्विजसत्तम। न सन्ति प्राणिनो यत्र कर्मबन्धनिबन्धनाः" इति प्रकृत्य, "सर्वे चैते वशं यान्ति यमस्य भगवन् किल" इति हि स्मर्यते। न ह्येतद्वचनं पापिनां यमयातनारूपफलानुभवे प्रमाणयितुं शक्यते; यमवश्यतामात्रस्मरणात्; सर्वसाधारणत्वेन पापिमात्रपरत्वा-भावाच्चेति चेन्न — "आयुषोऽन्ते तदा यान्ति यातनास्तत्र चोदिताः" इति पाप-फलयातनानुभवदर्शनात्। न चैतस्य सर्वसाधारणत्वात् पापिनां पापफलानुभवे न प्रमाणीकर्तुं शक्यम् (मिदमिति शक्यम्?) — उत्तरत्र भगवद्भक्तानां यमविषय-गमनाभावप्रतिपादनेन, "सर्वे चैते वशं यान्ति" इति वचनस्यानिष्टादिकारिमात्र-विषयत्वस्य निश्चेतुं शक्यत्वात्। नन्वेतस्य वचनस्य पापफलभूतयातनानुभव-प्रदर्शनपर्यन्तत्वे, "स्मरन्ति च यमवश्यतां पराशरादयः" इति भाष्यविरोधः; "फलानुभवं स्मरन्ती" ति हि भाष्येण भाव्यमिति चेन्न — यमवश्यतामित्यस्यैव फलानुभवपर्यन्तयमवश्यतापरत्वसंभवेनाविरोधात्।

**विद्याकर्मणोरिति तु प्रकृतत्वात् ३-१-१७.**

**संबन्धसामान्यविषया षष्ठीति।** अयमत्र सौत्रपदान्वयक्रमः। देवयानपितृयाणे इति प्रश्नाद्विवचनान्तं पदमध्याहार्यम्। ततश्च यतो देवयानपि-

तृयाणे विद्याकर्मणोः = विद्याकर्मसंबन्धिनी ; विद्याकर्मार्थे इति यावत् । तादर्थ्यञ्च तत्फलानुभवार्थत्वमेव । इतिर्हेतौ । ततश्च यतो देवयानपितृयाणे विद्याकर्मफलार्थे, अतो विद्याकर्मविधुरेषु न देवयानपितृयाणे विद्याकर्मफलार्थे । अतो विद्याकर्मविधुरेषु न देवयानपितृयाणे इत्यर्थः । ननु कुतो देवयानपितृयाणयोः विद्याकर्मार्थत्वमित्यत्राह — **प्रकृतत्वादि**ति । विद्वांसमिष्टादिकारिणञ्च प्रकृत्य आम्नानादित्यर्थः । यद्यपि **विद्याकर्मणो**रिति साध्यसाधनभावे षष्ठी । देवयानपितृयाणयोः विद्याकर्मसाध्यत्वादित्यर्थाश्रयणे प्रतीतिसौकर्यं भवति । अत एव हि, 'देवयानपितृयाणयोर्विद्याविषयत्वं पुण्यविषयत्वम्' इति वक्ष्यति । ततश्चोक्तक्लिष्टगतिमन्तरेणैव विवक्षितार्थस्य प्रतिपत्तिः सुलभा — तथापि देवयानपितृयाणयोः फलभूतयोः फलान्तरशेषत्वमप्यस्तीति सूचयितुं तथोक्तमिति द्रष्टव्यम् ।

विषिण्वन् हि विषय इति पाठः समीचीनः । "विशब्दो हि विशेषार्थः सिनोति बन्ध उच्यते । विशेषेण सिनोतीति विषयोऽतो नियामकः" इत्यभियुक्तोक्तेः । षिञ् बन्धने कर्तर्युत्सृष्टोऽच् प्रत्ययः (कर्तरि श्नुः; शतृप्रत्ययः [विषिण्वन् ?]) यद्वा विशिंषन्नित्येतत् फलितार्थकथनम् । ननु देवयानपितृयाणयो विद्याकर्मफलार्थत्वात् विद्याभावेन देवयानाभाववत् कर्माभावेन पितृयाणाभाव इति सूत्रार्थाश्रयणमस्थानविजृम्भणम् । न हि पूर्वपक्षिणा देवयानेन पितृयाणेन वा चन्द्रप्राप्तिराशंकिता । 'ये वै के चास्माल्लोकात् प्रयन्ति चंद्रमसमेव ते सर्वे गच्छन्ती' ति कौषीतकीवचनानुसारेण चन्द्रप्राप्तिमात्रमाशङ्कितम् । नैतस्य पितृयाणप्रापकं किञ्चिदस्ति नियामकम्; येनात्र पितृयाणं पूर्वपक्ष्यभिमतं स्यात् । अत एवाचार्यः स्वयमेव यादवमिश्रमतदूषणावसरे वक्ष्यति, "गन्तव्यैक्येऽपि गन्तृभेदेन मार्गनियमश्च भवती" ति । तथा, "धूमादिनिरपेक्षा पितृलोकप्राप्तिः संभवती" ति । अत एव देवयानस्य दृष्टान्तीकरणमप्ययुक्तम् ; तदभावस्य परप्रतिपन्नत्वे हेत्वभावादिति चेत् — न 'द्वे सृती अशृणवं पितॄणामुत देवानामुत मर्त्यानां ताभ्यामिदं विश्वमेतत् समेती" ति बृहदारण्यकश्रुत्यनुसारेण गतिद्वयव्यतिरिक्तगत्यन्तराभावात्, "एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्त" इति देवयानस्यानावृत्तिहेतुत्वात् पितृयाणेन पथा चन्द्रमसं

गच्छन्तीत्येवं पूर्वपक्षीकर्तव्यतया भाष्यकारोक्तरीत्या विद्याकर्म गोरिति सूत्रार्थाश्रयणस्य अस्थानविजृम्भणत्वाभावात् ।

**न तृतीये तथोपलब्धेः ३-१-१८.**

**संपूर्यते प्राप्यते इत्यर्थ** इति । 'अमुष्य लोकस्य अप्राप्तारम्' इति रंहत्यधिकरणभाष्यदर्शनात् तथोक्तमिति द्रष्टव्यम् । ननु भाष्ये वा किमिति, "यथाऽसौ लोको न संपूर्यत" इत्यत्र यथाशब्दसंपूरणशब्दयोः स्वारस्यपरित्यागेन केन पुंसा असौ लोको न संपूर्यते इत्यर्थाश्रयणम्? नित्यं बहुभिः प्रयद्भिरपि येन कारणेन चन्द्रलोको न संपूर्यते, न निबिडीक्रियत' इत्यर्थो हि स्वरसतः प्रतीयते इति चेन्न — "जायस्व म्रियस्वेत्येतत् तृतीयं स्थानम्; तेनासौ लोको न संपूर्यत" इति प्रतिवचने तृतीयस्थानशब्दितकृमिकीटादिलक्षणपापकर्मभिरप्राप्यत्वप्रतिपादनेन प्रश्नस्याप्यप्राप्तिपरत्वमेवोचितमिति भाष्याभिप्रायात् ।

नन्विदमन्धस्य जात्यन्धेन यष्टेः प्रदानम् । प्रतिवचने ह्येवमर्थः प्रतीयते । एवं हि तस्य प्रश्नस्य प्रतिवचनं श्रूयते, "अथैतयोः पथोः न कतरेण चन तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत् तृतीयं स्थानम्; तेनासौ लोको न संपूर्यते" इति एतयोर्देवयानपितृयाणयोर्मध्येन कतरेणचन = केनापि मार्गेण गच्छन्ति, तानीमानि क्षुद्राणि यूकालिक्षमशकादीनि असकृदावर्तीनि जायस्व म्रियस्वेति भवन्ति = जननमरणपौनःपुन्यरूपासकृदावृत्तियुक्तानि भवन्ति । एतत्तृतीयं स्थानम् । जननमरणरूपमसकृदावर्तनं तृतीयं स्थानम् = तृतीयो मार्गः । तस्मात् क्षुद्रजन्तूनां मार्गान्तरसत्त्वात् देवयानपितृयाणप्राप्त्यभावेन चन्द्रप्राप्त्यभावात् क्षुद्रजन्तुभिराक्रान्तोऽयं लोक इवासौ लोको न संपूर्यत इत्यर्थः स्वरसतः प्रतीयते । न च स्थानशब्दस्य मार्गवाचित्वं न स्वरसमिति वाच्यम् — अथैतयोः पथोरिति प्रकृतमार्गद्वयापेक्षया तृतीयत्वस्य मार्गान्तर एवान्वयात् । अस्य गौर्द्वितीयोऽन्वेष्टव्य इत्यदाविव संख्यायाः सजातीयनिवेशित्वौचित्यात् । न च स्थानशब्दः फलानुभवाश्रयपरः । ततश्च विद्याफलभूतब्रह्मप्राप्त्याश्रय एकः; इष्टापूर्तादिफलानुभवरूपचन्द्रप्राप्त्याश्रयोऽपरः । पापफलभूतजननमरणरूपासकृदावर्तनाश्रयस्तृतीय इति पाप-

कर्मणां तृतीयस्थानत्वं संगच्छत इति वाच्यम् — तथा सति हि ब्रह्मचन्द्ररूपप्राप्ति स्थानद्वयापेक्षया सुकृतविशेषफलभूतब्राह्मणादियोनिप्राप्तिरूपफलानुभवाश्रयाणामपि तृतीयराशित्वेन संग्रहापत्तेः"। तस्मात् 'एतत् तृतीयं स्थानम्' इति स्थानशब्दो जननमरणपौनःपुन्यरूपासकृदावृत्तिरूपमार्गान्तरवाचक एवाभ्युपगन्तव्यः। अतः 'तेनासौ लोको न संपूर्यत' इत्यत्र तेन = तस्मादित्यर्थः । हेतौ तृतीया । यस्मान्मार्गान्तरमस्ति, ततो हेतोरित्यर्थः; न तु तेन तृतीयस्थानशब्दितेन जीवेन पापकर्मणेति कर्तरि तृतीया । अतः, 'न संपूर्यत' इति औत्संसारिकस्यापि हि नास्वरसार्थसमाश्रयणमिति चेत् —

अत्र ब्रूमः, सर्वनाम्नां हि पूर्वनिर्दिष्टप्रधानपरामर्शित्वं न्यायसिद्धम्। अत एव, "तप्ते पयसि दध्यानयति, सा वैश्वदेव्यामिक्षा" इत्यत्र पूर्वस्मिन् वाक्ये आनयनकर्मणा दध्नाऽपि व्याप्यमानतया यत् प्रधानं पयः तस्यैव तच्छब्देन परामर्शः। न तु अप्रधानस्य दध्नः, ततश्चामिक्षायाः पयोविकारत्वमिति चतुर्थे (४-१ ९) अष्टमे च (८-२-३) स्थितम् । यथा "षड्विंशतिरस्य वङ्क्रयः । ता अनुष्ठयोच्यावयतात्" इति स्त्रीलिंगद्वितीयाबहुवचनान्ततच्छब्देन वङ्क्रीणामेव परामर्शदर्शनात् तासामेव प्राधान्यम्; न तु षड्विंशतिसंख्यायाः, अस्यशब्दाभिधेयपशोर्वा प्राधान्यम् । ततश्च वङ्क्रिप्रधानत्वात् वाक्यस्य वङ्क्रीयत्ताप्रदर्शनाय ऊहः कर्तव्य इति नवमे (९-४ १) स्थितम् । ततश्च "जायस्व म्रियस्वेति भूतानि भवन्ति एतत् तृतीयं स्थानम्" इत्यत्र एतच्छब्देन पूर्ववाक्ये भवन्तीति भवनाश्रयतया निर्दिष्टानां भूतानामेव ग्रहणमुचितम्; न तु भवितृविशेषणतयोपस्थितस्य जननमरणादिरूपभवनस्य। भवन्तीत्याख्यातेन साध्यतयाऽभिधीयमानस्य भवनस्य एतदिति सिद्धपरामर्शिसर्वनाम्ना परामर्शश्च न स्वरसः। ततश्च जननमरणशालिनां पापकर्मणां तृतीयस्थानशब्देन परामर्शात्, "तेनासौ लोको न संपूर्यत" इत्यत्रापि तच्छब्दः प्रकृततृतीयस्थानशब्दितजीवपरामर्श्येव । तृतीयाऽपि कर्त्रर्थैव । न तु तस्मादिति हेतौ । न च 'एतत्तृतीयं स्थानम' इत्यत्र प्रकृतानाम्, 'असकृदावर्तीनि भूतानि भवन्ती' ति निर्दिष्टानां पापकर्मणामेतच्छब्देन परामर्शे तेषां बहुत्वात् एकवचननिर्देशानुपपत्तिरिति वाच्यम् — [यतः ?] 'सा वैश्वदेव्यामिक्षे' त्यत्र तच्छब्दस्य नपुंसकलिंग-

परामर्शिनोऽप्यामिक्षापदसामानाधिकरण्यप्राप्तस्त्रीलिंगानुवादवत् तृतीयं स्थानमिति नपुंसकलिंगैकवचनान्तस्थानशब्दसामानाधिकरण्यप्राप्तलिंगवचनानुवाद ( मार ) उपपन्नः । एवमुत्तरत्रापि "तेनासौ लोको न संपूर्यत" इत्यत्र तेनेति निर्देशोपपत्तिः ।

केचित्तु—"क्रियाप्रधानमाख्यातम्" इति न्यायेन भवन्तीत्यत्र भवनक्रियाया एव प्राधान्यात् तस्या एवैतच्छब्देन परामर्शः; न तु भवितुः । अत एवालंकारिकैरपि, "पिनष्टीव तरङ्गाग्रैः समुद्रः फेनचन्दनम् । तदादाय करैरिन्दुर्लिम्पतीव दिगङ्गनाः" इत्यत्र समुद्रस्य चन्दनघर्षणशिलाप्रान्तस्थानीये तटे हस्तस्थानीयतरङ्गैः फेनप्रेरणे दिगङ्गनाधवलीकरणहेतुचन्द्रकिरणव्यापने च पेषणलेपनतादात्म्यमात्रमुत्प्रेक्ष्यते ; न तु तयोः पेषणलेपनकर्तृतादात्म्यम् । पिनष्टिलिम्पतीत्याख्यातयोः कर्तृवाचित्वेऽपि, "भावप्रधानमाख्यातम्" इति कर्तुः प्रधानभूतक्रियोपसर्जनत्वेनान्वयासंभवादित्युक्तम् । अत एव "लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः" इत्युत्प्रेक्षामुदाहृतवता दण्डिना उदाहरणयोरिवशब्दश्रवणात् लेपनवर्षणकर्तृभ्यां तमोनभसोरुपमामाशंक्य, "कर्ता यद्युपमानं स्यात् न्यग्भूतोऽसौ क्रियापदे । स्वक्रियासाधनव्यग्रो नालमन्यद्व्यपेक्षितुम्" इति दूषितम् । अत एव, पश्य मृगो धावतीत्यादौ धावनक्रियाया दर्शनकर्मत्वमित्यभियुक्तानां व्यवहारः । तस्मात्, "जायस्व म्रियस्वेति भवन्ती" ति निर्दिष्टं पौनःपुण्येन जननमरणभवनमेव एतच्छब्देन परामर्शयोग्यम् । अतश्च, "तेनासौ लोको न संपूर्यत" इत्यत्रापि तस्माद्धेतोरसंपूरणमित्यर्थः प्रतीयते । "द्युलोकारोहावरोहाभावेन द्युलोकासंपूरणस्य द्युलोकाप्राप्तिहेतुत्वकीर्तनात् तस्य रस्यानुग्रहाय, "तृतीयस्थानशब्देन पापकर्माणि उच्यन्त" इति भाष्यस्थापकर्मशब्दस्य मार्गलक्षकत्वमेवाश्रीयते । आचार्यग्रन्थोऽपि तदनुसारेण नेय इति वर्णयन्ति ।

**ईश्वरशासनानुवर्तीनीति** । जायस्व म्रियस्वेतीश्वरशासनानुवर्तनम् । **वेदस्मार्तन्यायादिति** । छन्दसि, "व्यत्ययो बहुलम्" इत्यनुशासनादिति भावः । इदञ्च काकाक्षिन्यायेन **जज्ञे ममारेति भूतार्थता** वेत्युत्तरेण च संबध्यते । **जज्ञे मम्रे** इति क्वचित् पठ्यते । तत्र, 'म्रियतेर्लुङ्लिङोश्च' इति परस्मैपदप्रसङ्गात् भावे प्रयोग इति केचिद्वदन्ति । **पुरीमवस्कन्द लुनीहि नन्दनमित्यादिवदिति** । अत्र **भूतार्थता** वेत्यतो वेत्यनुकृष्यते । पुरीमवस्कन्द लुनीहि नन्दनमित्यादिवद्वेत्यर्थः ।

अयं भावः — 'समुच्चयेऽन्यतरस्याम्' इति—अनेकक्रियाध्याहारः समुच्चयः—समुचीयमानक्रियावचनाद्धातोः विभाषा लोट् । तस्य च हिस्वौ भवतः । तध्वंभाविनस्तु वा भवत इति सूत्रार्थः । तत्र, "समुच्चये सामान्यवाचिनो धातोरनुप्रयोगो विहितः । ओदनं भुङ्क्ष्व, धानाः खाद, सक्तून् पिबेत्येवाभ्यवहरतीति । अत्र समुच्चयद्योतनाय समुच्चयेऽन्यतरस्यामिति वैकल्पिकलोण्मध्यमपुरुषः । 'असकृदावर्तीनि भवन्ति' इति क्रियासामान्यवाचिनः भवतेरनुप्रयोगश्च । तत्रश्च, "पुरीमवस्कन्द लुनीहि नन्दनं मुषाण रत्नानि हरामराङ्गनाः । विगृह्य चक्रे" इति अवस्कन्दनलवनमोषणहरणक्रियाणां समुच्चये, 'समुच्चयेऽन्यतरस्याम्' इतिलोण्मध्यमपुरुषैकवचनम्, "समुच्चये सामान्यवचनस्ये' ति सामान्यवाचिनः चक्र इत्यस्यानुप्रयोगश्च यथा भवति — एवमिहापि, जायस्वम्रियस्वेति जननमरणक्रियासमुच्चये लोण्मध्यमपुरुषैकवचनम्, भवन्तीत्यस्य च सामान्यवाचिनोऽनुप्रयोग इति । अयमेव पारमार्थिकः परिहार आचार्याणामभिमतः । इतः परं परिहारान्तरानुपन्यासात् ।

## दर्शनाच्च ३-१-२०.

"तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्ती"ति बीजत्रैविध्ये प्रतिज्ञाते अण्डं जीवं उद्भिदित्येव वक्तुमुचितम्; न तु आण्डजं जीवजं उद्भिज्जमितीत्याशङ्क्य स्वतन्त्रायाः श्रुतेः पर्यनुयोगासंभवात् बीजत्रैविध्यफलकं प्रकारमुपदिशतीत्याह — **बीजत्रैविध्यमिति** । आण्डजमिति । अण्डजमेव आण्डजम् । स्वार्थे अण् । जरायुः= गर्भपरिवेष्टनम् । जरायुजं पुरुषपश्वादि । अत्र **श्रुतावपि दृश्यत** इति भाष्यस्यायमर्थः — श्रुतावपि चतुर्विधभूतजातं दृश्यते; तन्मध्ये केषांचिदुद्भिज्जानां स्वेदजानां चोभयविधानां पञ्चमाहुत्यनपेक्षा लोके दृश्यत इति । **तेषां खल्वेषां भूतानामित्युत्तरभाष्यग्रन्थस्तु** एतद्वयाख्यानरूपः । ततश्च दर्शनाच्चेत्यत्र दर्शनादित्येतत् तन्त्रावृत्त्येकशेषाणामन्यतमाश्रयणेनार्थद्वयं प्रतिपादयति । न त्वत्र यथाश्रुतार्थो ग्राह्यः; न ह्याण्डजं जीवजमुद्भिज्जमितिश्रुतौ पञ्चमाहुत्यनपेक्षा श्रूयते । यद्येवम्, परीत्या चतुर्विधभूतजातमध्ये केषांचित् पञ्चमाहुत्यनपेक्षयैवोत्पत्तिर्दृश्यत इत्येवं व्याख्यायताम्; किं श्रौतदर्शनस्यापि संग्रहयतेनेति चेत् — उत्तरसूत्रनिर्दिष्टशंकोत्थापकार्थतया तन्त्रावृत्त्यादीनामन्यतमाश्रयणेनैव एवमर्थद्वयप्रतिपादनमिति भावः ।

**परे त्वित्यादि** । **श्रुत्या सर्वेषां चन्द्रप्राप्तिशङ्केति** । "चन्द्रमसमेव ते सर्वे गच्छन्ती" ति कौषीतकीश्रुत्या संजाता सर्वेषां चंद्रप्राप्तिशङ्केत्यर्थः । **द्वितीयसूत्रे तु व्युदसनीयशंकेति** । संयमनेइति सूत्रस्थतुशब्दव्युदसनीयशंका, सुकृतदुष्कृतकारिणोरविशिष्टैव गतिः स्यादित्युपन्यस्तेत्यर्थः । **याम्या यातना** इति । यमाचेति वक्तव्यमिति व्यत्ययः । **यामीर्यातना** इति पाठे तु निर्वाहान्तरं द्रष्टव्यम् । **ततोऽवरोहणस्य चासंभवा(चाभावा ?)**दिति । एतेन, '**संयमने** त्वनुभूयेति सूत्रश्रुतसंयमनस्यैवावरोहापादानता शीघ्रं गम्यते ; न चन्द्रमण्डलस्य ; चन्द्रमण्डलादवरोह इत्यध्याहारसापेक्षत्वात् । ततश्चेदं सिद्धान्तसूत्रमेव ; न तु भास्करीत्या पूर्वपक्षसूत्र' मिति भामतीकल्पतर्वादावुक्तं निरस्तम् । संयमनस्यैवावरोहापादानत्वे 'अनुभूयारोहे' ति अनुभवानन्तरभाव्यारोहाश्रयत्वस्यापि संयमनस्यैव वक्तव्यतया तस्य च तत्रासंभवात् । **नरकानुभवादनन्तरमिति** । अनन्तरशब्दस्य पश्चाच्छब्दादिवत् दिक्शब्दत्वमभिप्रेत्य पञ्चमीनिर्देशः कृत इति द्रष्टव्यम् । अथ वा ऊर्ध्वमित्यध्याहारेण दिग्योगलक्षणा पञ्चमी । यथोक्तं वैयाकरणैः, "अनुनासिकात् परोऽनुस्वार" इत्यत्र, "अन्यशब्दाध्याहारेणानुनासिकादिति पञ्चमी" इति । **अनन्तरमिति** यमालयमित्यस्य विशेषणम् । नरकानुभवादूर्ध्वं सन्निहितं यमालयमित्यर्थः । स्वमते सूत्रस्य साफल्यमाह—**यमप्राप्तिवाक्य** इति । 'अयं लोको नास्ति पर' इति वाक्य इत्यर्थः ।

**अन्येत्वित्यादि** । किमनिष्टादिकारिणः पापफलानुभवार्थं धूमादिना गच्छन्ति, उत सुकृतफलानुभवार्थमिति विकल्पद्वयमभिप्रेत्य प्रथमं दूषयति — **तत्र पापफलभोगाभावादिति** । तत्र मार्गे पापफलभोगस्यासंभवादित्यर्थः । द्वितीयं दूषयति **कर्मणा विनेति** । इष्टादिना पुण्येन कर्मणेत्यर्थः । **शास्त्रवैयर्थ्याच्चेति** । ज्योतिष्टोमादिकमन्तरेणैव तत्फललाभे तत्र कोऽपि न प्रवर्तेत इति, ज्योतिष्टोमेन स्वर्गकामो यजेतेति शास्त्रस्य स्वर्गार्थतया ज्योतिष्टोमादौ प्रवर्तकस्य वैयर्थ्यम् ; प्रवर्तकत्वं न स्यादित्यर्थः । अथवा शास्त्रशब्दः तत्प्रतिपादककर्मपरः । **द्वे सृती** इति । द्वे गती इत्यर्थः । **अशृणवम्** — अश्रौषम् । **पितॄणां देवानां** च प्रापिके इत्यर्थः । मर्त्यानामित्यस्य प्राप्तृत्वेन संबन्धः । **पितरं मातरञ्चेति** । द्यावापृथि-

व्यावेव मातापितरौ । गमनस्यापुरुषतन्त्रस्येति । विद्याकर्मरूपसाधनेऽनुष्ठिते स्वयमेव सिद्ध्यतो मार्गस्य विधेयत्वायोगात् । अत एव – तृप्तिर्भक्षानुनिष्पन्ना, न व्यापारान्तरमपेक्षत इत्यपुरुषतन्त्रत्वेनाविधेयतया अननुष्ठेयत्वेन मन्त्रप्रकाश्यत्वायोगात् तृप्तिप्रकाशकमन्त्रांशस्य न तृप्तौ विभज्य विनियोज्यत्वमिति शेषलक्षणे ( ) स्थितमिति भावः । तृतीयस्थानमृतानामिति । यूकालिक्षा(यूकामक्षिका)दीनामित्यर्थः । पापिनां दुःखभोक्तृत्व इति । पापिनां दुःखभोक्तृत्वे आरोग श्राजादीनां सप्तानां सूर्याणां दुःखभोजयितृत्वरूपयातयितृत्वे वा संशयाभावात् यद्वेत्यादि द्वितीययोजना-ऽप्यसंगतेत्यर्थः । अत एव तृतीयस्थानमृतानामिति । अनिष्टादिकारिणां पुरुषाणामपि च द्युप्राप्तिनिवारणे किमु वक्तव्यं तृतीयस्थानमृतानां यूकालिक्षादीना-मिति भावः ।

इति अनिष्टादिकार्यधिकरणम् ।

—:*:—

## ( ४ ) तत्स्वाभाव्यापत्त्यधिकरणम् ।

—

**तत्स्वाभाव्यापत्तिरुपपत्तेः ३-१-२२.**

पेटिकाभेदेनेति । पेटिकाविशेषेणेत्यर्थः । कृतात्यय इत्यारभ्य आपाद-परिसमाप्ति अवरोहणपेटिका; तयाऽस्याधिकरणस्य संगत्यर्थमित्यर्थः । पूर्वस्मिन्नधिकरणे हि देवयानपितृयाणयोः विद्याकर्मफलार्थत्वात् अनिष्टादिकारिणाञ्च विद्याकर्मफला-भावात् देवयानाभाववत् पितृयाणमपि नास्तीत्युक्तम् । एवमत्राप्यनुशयिनामाकाशादि-शरीरकत्वफलरूपसुखदुःखोपभोगाभावात् आकाशादिशरीरकत्वं नास्तीति समर्थ्यत इति प्रकृताधिकरणसंगतिर्द्रष्टव्या । भाष्ये यथैतमनेवञ्चेति सूत्रखण्ड एव परामृश्यते । उक्तमिति नपुंसकनिर्देशोऽपि द्विगुरेकवचनमित्यादिवदुपपन्न इति वर्णयन्ति । अनेन भाष्येण, ' कृतात्ययेऽनुशयवान्'' इति व्यवहिताधिकरणेन संगतिः; समनन्तराधिकरणं तु प्रासंगिकमिति सूच्यते । अपो बिभर्तीत्यभ्रमिति । मूलविभुजादित्वात् कप्रत्ययः ।

**मिह सेचन इति धातोरि**ति । पचादित्वादेवमेषादिवत् इगुपधालक्षणं कं बाधित्वा अच्प्रत्यये, 'न्यङ्क्वादीनाञ्चे' ति कुत्वे रूपम् ।

**तत्रास्याकाशादिप्रतिपाताविति** भाष्यस्याममर्थः – "यथेतमाकाशमाकाशाद्वायुम्" इत्यादौ कर्मत्वनिर्देशेनाकाशादिभावप्राप्तेरेव स्फुटमनवगमेऽपि, 'वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवती' त्युपरितनस्फुटतरभूयोवाक्यानुसारेण इहाप्याकाशादिभावप्राप्तेरेव प्रतिपाद्यत्वे निश्चिते सति, स किमाकाशादिभावो देवमनुष्यादिभाववदा काशादिशरीरकत्वम्, उत तत्सादृश्यापत्तिमात्रमिति ।

**तत्स्वाभाव्यापत्ति**रिति । स्वभाव एव स्वाभाव्यम् । वर्तमानसामीप्यइत्यादिवत् स्वार्थिकः ष्यङ् । अथवा स्वस्य भाव इव भावो येषां ते स्वभावाः = सदृशाः ; तद्भावः स्वाभाव्यम् ; सादृश्यम् । तत्स्वाभाव्यापत्तिः तत्सादृश्यापत्तिरित्यर्थः । "**स्वाभाविकमेतत्**" इति महाभाष्यनिर्देशात् स्वभावशब्दस्य न, "द्वारादीनां च" इत्यैजागम इति प्राहुः । एवं सांप्रदायिकपाठमनुसृत्य समर्थनसंभवे भामतीरीत्या **साभाव्यापत्ति**रिति पाठशिक्षा न कल्पनीया ।

**यथेतमाकाश**मित्यादेरयमर्थः – या आपश्चन्द्रमण्डले शरीरमारब्धवत्यः, तासां कर्मक्षये द्रवीभूतानामाकाशगतानां भेदकाकारप्रहाणेनाकाशसादृश्ये तदुपश्लिष्टानुशयिनोऽपि आकाशस्वरूपा भवन्ति । ता आप इतश्चामुतश्च नीयमाना वायुसमा भवन्ति । अनुशयिनोऽपि तादृशा भवन्ति । एवमभ्रादिभावेऽपि द्रष्टव्यमिति ।

**भाष्ये अत्र त्वाकाशावित्यादि** । ननु प्रयोजनाभावेन श्रुतपरित्यागो न संभवति । तथा हि सति भूतानां सर्वत्र सुलभत्वात् प्रयोजनाभावात् भूतपरिष्वक्तगमनमपि न कल्पनीयं स्यात् । किञ्च, "तानि परे तथा ह्याह" इत्यत्र प्रयतां परमात्मसंपत्तौ प्रयोजनभावात्, 'तेजः परस्यां देवतायाम्' इति श्रुता परमात्मसंपत्तिर्न संभवतीत्याक्षिप्य प्रमाणानुरोधेन प्रयोजनस्य कल्पनीयत्वात् न प्रमाणप्रतिपन्नार्थत्याग इत्युक्तम् । तस्मादाकाशादिशरीरकप्रमाणानुरोधेनाकाशादीनां तदभिमानिदेवताः प्रति भोगाश्रयाणामनुशयिनोऽपि प्रति भोगाश्रयत्वमङ्गीकर्तव्यमिति चेन्न – युगपद्भोक्तृद्वयसमावेशे तयोः परस्परविरुद्धभोगार्थितायां शरीरोन्मथनप्रसंगात् । ननु तत्तदभिमानि-

देवतात्वेनैवाकाशादिशरीरकत्वमस्त्विति चेत् - न - सर्गाद्यकालमारभ्याप्रलयमाकाशाद्य-भिमानिदेवतानामनुशयिभ्योऽन्यासां कल्पानां सत्त्वेन प्रतिक्षणमवरोहतामनुशायिनामा-काशाद्यभिमानिदेवतात्वानुपपत्तेरिति भावः ।

परे त्वाकाशादिस्वरूपापत्तिं पूर्वपक्षीकुर्वन्तीति । ननु, "न चान्यस्या-न्यभावानुपपत्तिः । मनुष्यशरीरस्य नन्दिकेश्वरस्य देवदेहरूपपरिणामस्मरणात् । देवदेहस्यापि नहुषस्य तिर्यक्त्वस्मरणात् । तद्वदिहोपपत्तेः" इति भामत्युक्तेः, "नन्दिकेश्वरो हि रुद्रमाराध्य मनुष्यशरीरेणैव देवत्वेन परिणनाम । तथा नहुषोऽपि इन्द्रत्वं गतोऽगस्त्यशापात् अजगरत्वं जगाम" ति कल्पतरूक्तेश्चाकाशादिशरीर-कत्वमेव परैः पूर्वपक्षितमिति प्रतीयत इति कथं तन्मतदूषणमिति चेन्न — शांकर-भाष्ये आकाशादिस्वरूपमेव प्रतिपद्यन्त इति पूर्वपक्षे उक्तत्वात्, सिद्धान्ते च, "न ह्यन्यस्यान्यभाव उपपद्यत" इत्युक्तत्वाच्च तथाभिप्रायं निर्णीय दूषणोपपत्तेः । तथा पूर्वपक्षो न युक्त इति मन्यमानैः तद्व्याख्यातृभिः असदभिमतार्थ एव पर्यव-सानं कारितं चेत्, न कापि क्षतिरिति द्रष्टव्यम् ॥

## नातिचिरेण विशेषात् ३-१-२३.

ननु, "अतो वै खलु दुर्निष्प्रपतरम्" इति व्रीह्यादितो विशिष्य चिर-निष्क्रमणाभिधानात् पूर्वत्र ह्याकाशादिप्राप्तावचिरनिष्क्रमणं गम्यत इति न शक्यते वक्तुम् । अतो वै खल्वित्यादिवाक्ये न व्रीह्यादिषु चिरावस्थानसत्तामात्रं विधि-त्सितम् । चिरमचिरं वेत्यनियतस्य चिरावस्थानस्य व्रीह्यादिष्ववस्थानोक्त्यैव सिद्धत्वेन तस्याविधेयत्वात् । किंतु व्रीह्यादिषु चिरावस्थाननियमो विधित्सित इत्यभ्युपेयम् । तथा च विशिष्य व्रीह्यादिषु चिरावस्थाननियमप्रतिपादनसामर्थ्यात् आकाशादिभ्यः चिरावस्थाननियम एव व्यावर्त्यते ; न त्वनियतं चिरावस्थानमपि । अत एव, "वैखानसं पूर्वेऽहन् साम भवति, षोडश्युत्तरे" इति विशिष्याङ्गिरसां-द्विरात्रस्योत्तरेऽहनि षोडशिग्रहनियमविधानसामर्थ्यात्, "उत्तरेऽहन् द्विरात्रस्य गृह्यते" इति सामान्यवचनप्राप्तषोडशिग्रहनियम एव द्विरात्रान्तरेभ्यो व्यावर्त्यते ; न तु प्रकृतेरतिरात्रादनियतप्राप्तषोडशिग्रहोऽपीत्युक्तं दशमे ( ) । अत एव — 'कर्तृ-कर्मणोः कृती' ति सूत्रप्राप्तषष्ठीविषये, "उभयप्राप्तौ कर्मणि" इति प्राप्तनियमस्य

'अकाकारयोः प्रतिषेध' इति प्रतिषेधे पुनः, 'कर्तृकर्मणोः कृति' इत्यनियतप्राप्तषष्ठ्या न निषेधः, यथा भेदिका काष्ठानां देवदत्तस्येतीति वैयाकरणैरभ्युपगम्यते। ततश्च व्रीह्यादिषु चिरावस्थाननियमप्रतिपादनात् पूर्वत्र चिरावस्थाननियमो व्यावर्त्यताम्; न तु चिरावस्थानस्वरूपमपि व्यावर्त्येत इत्यस्वरसादाह भाष्ये दुर्निष्प्रपतरमिति छान्दसस्तशब्दलोप इत्यादिना।

अयं भावः — नात्र दुर्निष्प्रपतरशब्दस्य दुर्निष्प्रपतनमिति ल्युडन्ततामाश्रित्य दुःखनिष्क्रमणनियमः प्रतिपाद्यते। अपि तु खलन्तात् दुर्निष्प्रपतशब्दादातिशयिनिके तरप्प्रत्यये छान्दसे तशब्दलोपे दुर्निष्प्रपतरमिति रूपम्। ततश्चातिशयस्य प्रतियोग्याकांक्षायां प्रागनुक्रान्ताकाशादीनां बुद्धिसन्निधानात् तत्प्रतियोगित्वेनान्वयः स्यात्। ततश्च व्रीह्यादिषु आकाशापेक्षया चिरावस्थानोक्त्या आकाशादिष्ववस्थानस्य तदपेक्षयाऽल्पकालत्वपर्यवसानात् समीहितसिद्ध्युपपत्तेः। ननु नायं वर्णविकारः; अपि तु तरपि तशब्दलोप एवेत्यत्र किं विनिगमकमिति चेत् — "ईषद्दुस्सुषु कृच्छ्राकृच्छ्रार्थेषु खल्" इति खला बाधितं ल्युटं काशकुशावलम्बनेन समर्थ्य नकारस्य च रेफरूपवर्णविकाराश्रयणस्यायुक्तत्वात्। कश्चित्तु — दुरुपपदात् पदिधातोः खलर्थे डप्रत्यये सति दुर्निष्प्रपमिति रूपसिद्धौ ततस्तरप् प्रत्ययेन दुर्निष्प्रपतरमिति दुर्निष्प्रपतरशब्दनिष्पत्तिः। अन्येष्वपि दृश्यते इति जनेरुपपदान्तरयोगे डविधायकसूत्रे, "अन्येभ्योऽपि दृश्यत इति वक्तव्यम्" इति धात्वन्तरेभ्योऽपि डस्य शिष्टत्वात्, दृशिग्रहणं सर्वोपाधिव्यभिचारार्थमिति वृत्तावुक्तत्वात्, 'कृत्यल्युटो बहुल'मिति सूत्रे बहुलग्रहणादन्येऽपि कृतः प्राप्तमभिधेयं व्यभिचरन्तीत्य'पि वृत्तावुक्तत्वात् तस्य डस्य खलर्थत्वोपपत्तेश्च वर्णागमवर्णलोपादिकमन्तरेणैव रूपं सिद्ध्यतीत्याह — तदतिमन्दम्; एतादृशक्लिष्टगत्याश्रयणापेक्षया छान्दसवर्णलोपाश्रयणस्यैव न्याय्यत्वात्। केचित्तु — अतो खलु वै दुर्निष्प्रपतरमित्यत्र तरशब्दस्य एवकारसमानार्थत्वात्, "त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहत्यनुष्टुप्। अत्र ह्येवावपन्ति, अत एवोद्वपन्ति" इत्यत्र एवकारेण पवमानगतगायत्र्यादिभ्यो अन्यत्रावापपरिसंख्यानवत्, 'अत एव दुर्निष्प्रपतर'मिति व्रीह्यादिभ्योऽन्यत्र चिरनिष्क्रमणप्रतिषेधस्य श्रौतत्वात् आकाशादिष्वनतिचिरेण निष्क्रमणसिद्धिः। "अतो दुक्", "छन्दसि मत्वर्थेभ्यः" इति

छन्दसि विशेषविहितयुजन्त एवायं शब्दः। रेफरूपवर्णविकारः छान्दसः। इतरथा खलर्थप्रत्ययस्य, "तयोरेव कृत्यर्थखलर्थाः" इति भावकर्मणोरेव विधानात्। अस्य चाकर्मकत्वेन भावार्थस्यैव परिशिष्टत्वात्। तदर्थस्य प्रकर्षाभावेन ततस्तरपो दुर्लभत्वात्। न चैवं तशब्दलोपश्छान्दस इति भाष्यविरोध इति वाच्यम्—कर्त्रर्थपचाद्यजन्तात् प्रकर्षसंभवेन तरपः संभवादिति वदन्ति।

इति नातिचिराधिकरणम्।

---

## (६) अन्याधिष्ठिताधिकरणम्

**अशुद्धमिति चेन्न शब्दात् ३-१-२५.**

**नित्यकर्मादीनामपि संवत्सरपश्वालम्भनादिभिरशुद्धियुक्तत्वमिति।** संवत्सरग्रहणं निन्दितकर्माभ्यासवशेन महापातकयुक्तत्वसूचनार्थम्। अत्रादिपदेन सायंप्रातःकालनिषिद्धमग्निहोत्राद्यङ्गहविश्शेषभक्षणं गृह्यते। अतो हिंसाशून्यानामपि अग्निहोत्रादीनामशुद्धियुक्तत्वमिति द्रष्टव्यम्। भाष्ये **न वा उ एत**दित्यादि। एतत् = अधुना न म्रियसे। न रिष्यसि = न हिंस्यस इत्यर्थः। रुष रिष हिंसायामिति धातुः।

**अयमेव समीचीनो दुष्प्रधर्षणः परिहार** इति। ननु हिरण्यशरीर ऊर्ध्व इत्यर्थवादार्थे बाधकाभावात् पशुसंज्ञपनस्य स्वर्गसाधनत्वेऽपि मरणोद्देश्यकमरणानुकूलव्यापारत्वेन हिंसात्वमप्यवश्याभ्युपेत्यमेव। न च तस्य रक्षणरूपत्वादहिंसात्वं व्रणद हच्छेदयोर्दाहच्छेदरूपत्वेऽपि रक्षणरूपत्ववत् हिंसारूपत्वेऽपि पशुरक्षणरूपत्वोपपत्तेः। अस्य परिहारस्यासार्वत्रिकत्वाच्च। न खलु सौत्रामण्यां वर्णत्रयेऽपि निषिद्धायाः पैष्ट्याः सुरायाः पानं न पानम्। नाप्यश्वमेधे राजाज्ञया अश्वसंरक्षकैः क्रियमाणमश्वमेधमन्त्रब्राह्मणानभिज्ञब्राह्मणस्वहरणं न हरणम्। नापि वामदेव्योपासकस्य प्रार्थयमानसर्वयोषिदपहरणं न परस्त्रीहरणमिति वक्तुं

शक्यम् । तस्मात्तेष्वन्य एव परिहारो वक्तव्यः । स एव हिंसायामप्यस्तु । किमनेन लोकविरुद्धेन हिंसात्वापलापेन? तर्हि कः सार्वत्रिकः परिहारः । न हिंस्यादिति निषेधवाक्ये पुरुषार्थैव हिंसा धातुनाऽनूद्यते; न क्रत्वर्थापि । कर्तुराख्यातवाच्यत्वपक्षे समानपदश्रुत्या हिंसायास्तच्छेषत्वप्रतीतेः । तस्याख्यातवाच्यभावनाक्षेप्यत्वपक्षेऽपि तदाक्षिप्तकर्तृशेषत्वप्रतीतेः । नात्र क्रतोर्वाचकं किञ्चिदस्ति; येन, 'अथातोऽग्निमग्निष्टोमेनानुयजन्ति' इति अनारभ्याधीतवाक्ये चित्याग्नेर्यजिशब्दोक्तयागशेषत्ववत् अस्याः क्रतुशेषत्वमवगम्येत । नापि क्रतोराक्षेपकं किञ्चिदस्ति, येन पर्णताया जुह्वाक्षिप्तक्रतुशेषत्ववत् अस्याः क्रतुशेषत्वमवगम्येत । न च प्रकरणेन क्रतोर्विपरिवृत्तिरस्ति; येन, नानृतं वदेदिति दर्शपूर्णमासप्रकरणाम्नातवाक्येऽनूद्यमानस्य अनृतवदनस्येव क्रत्वर्थत्वप्रतीतिर्भवेत् । तस्मादिह हिंसिधातुनाऽनुवादः पुरुषार्थहिंसाया इति तस्या एव निषेधः, न क्रत्वर्थायाः । ननु तथापि हिंसिधातोः क्रत्वर्थपुरुषार्थहिंसाद्वयसाधारण्येन शब्दशक्तिबलादुपस्थितं हिंसाद्वयमप्यनूद्य निषिध्यतामिति चेत् — नैतन्न्याय्यम् । आख्यातवाच्यत्वेन तदर्थभावनाक्षेप्यत्वेन वोपस्थितस्य पुरुषस्य शेषभूताया हिंसायाः शीघ्रोपस्थितिकतया तन्निषेधेन चरितार्थस्याहिंसावाक्यस्य विलम्बितोपस्थितिकक्रतुशेषहिंसानिषेधकत्वस्यापि कल्पनायोगात् । ननु शब्दशक्तिसाम्येऽपि शीघ्रोपस्थितस्यैव शक्यस्य वाक्यार्थान्वयः न विलम्बितोपस्थितिकस्येति वैषम्याभ्युपगमे, 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यत्र पूर्णमासपदेनोत्पत्तिवाक्यश्रुतदर्शपूर्णमासकालयोराग्नेयाग्नीषोमीययोरेव झटिति प्रवृत्तिनिमित्तावगत्या शीघ्रोपस्थितिकयोः फलान्वयः स्यात् । उपांशुयाजस्य तु पौर्णमासीकर्तव्याग्नेयाग्नीषोमीययागद्वयान्तरालविधानात् अर्थसिद्धपौर्णमासकालस्य झटिति प्रवृत्तिनिमित्तानवगत्या विलम्बितोपस्थितिकस्य फलान्वयो न स्यादिति चेत् — सत्यम् । आग्नेयाग्नीषोमीयवत् उपांशुयाजस्यापि श्रौतपौर्णमासीकालत्वेन झडिति प्रवृत्तिनिमित्तावगत्या शीघ्रोपस्थितिकत्वाविशेषेण फलान्वयसिद्ध्यर्थमेव, 'तावब्रूतामाज्यस्यैव नावुपांशु पौर्णमास्यां यजन्' इत्याहत्य पौर्णमासीकालविधानमाश्रीयते । एतदेवास्य विधानस्य प्रयोजनम् उपांशुयाजाधिकरणे, 'प्रयोजनाच्चे' ति सूत्रेण तद्वार्तिकेन स्पष्टीकृतम् । ततश्च शीघ्रप्रतीतस्यैव पदार्थस्य वाक्यार्थान्वय इति सिद्धत्वात् पुरुषार्थहिंसाया एव शीघ्रोपस्थितिकत्वात् तस्या एव निषेध्यत्वम् । अपिच यदर्थतया यत् प्रसक्तम्,

तस्य निषेधोऽपि तदर्थ इति न्यायमर्यादा। अन्यथा अप्रसक्तप्रतिषेधत्वात् असामञ्जस्यं स्यात्। अत एव दर्शपूर्णमासप्रकरणाम्नातः, 'नानृतं वदेत्' इति निषेधः प्रकरणात् क्रत्वर्थो भवन् क्रत्वर्थस्यैवानृतवदनस्य निषेधः। तेन क्रतूपयोगिद्रव्यादिसम्पादनार्थानृतवदने क्रत्वर्थनिषेधातिक्रमात् क्रतोर्वैगुण्यम्। क्रतुमध्येऽपि पुरुषार्थानृतवदने सति न क्रतोर्वैगुण्यम्। "यो नाम क्रतुमध्यस्थः कलञ्जादीनि भक्षयेत्। न क्रतोस्तस्य वैगुण्यम् यथा चोदितसिद्धितः" इति न्यायात्। किन्तु पुरुषस्य प्रत्यवायमात्रम्। प्रकरणाम्नातोऽपि यो निषेधः क्रत्वर्थस्य निषेधो भवितुं नार्हति, नासौ क्रत्वर्थः; यथा दर्शपूर्णमासप्रकरणाम्नातः, 'मलवद्वाससा न संवदेत; न तया सहासीत; नास्या अन्नमद्यात्' इति निषेधः। यद्यपि तया सह संवादः सहासनं चेत्युभयं क्रत्वर्थतयाऽर्थतः प्राप्नोति, तथापि मलवद्वाससा तथा न प्राप्नोति; 'यस्य व्रत्येऽहन् पत्नी अनालम्भुका स्यात्, तामवरुध्य यजेत' इति मलवद्वाससः क्रतौ सर्वात्मना उदासीनीकरणरूपस्यावरोधस्य विहितत्वात्। तदन्नादनं तु, 'अथो खल्वाहुरभ्यञ्जनं वाव स्त्रिया अन्नमभ्यञ्जनमेव न प्रतिग्राह्यम्' इति अभ्यञ्जनशब्दोक्ततत्म्रक्षणरूपतया व्याख्यातं क्रत्वर्थत्वेन कथमपि न प्राप्नोति। एवंच 'न हिंस्यात्' इति निषेधः क्रत्वर्थपुरुषार्थोभयविधहिंसारूपत्वे स्वयमपि क्रत्वर्थपुरुषार्थोभयरूपो भवन् स्वस्य क्रतुपुरुषसम्बन्धबोधनार्थं वाक्यं भिन्द्यात्। एवमेव सुराग्रहणपानादिनिषेधकवाक्यानामपि क्रत्वर्थग्रहणाद्यस्पर्शित्वं वक्तव्यम्। नान्या। गतिरस्ति न च तेषामस्त्येव पापत्वम्; अपितु प्रायश्चित्तेन समाधीयत इति वाच्यम् — तर्हि हिंसापि तथा समाधीयताम्; किमनेन लोकप्रसिद्धहिंसात्वनिरसनव्यसनेन। यच्चोक्तं सोमपाने उच्छिष्टदोषनिषेधोऽस्ति, 'न सोमेनोच्छिष्टा भवन्ति' इति निषेधात्। हिंसायां न सोऽस्ति। येनायमुत्सर्गापवादन्यायस्य विषयः स्यादिति — तन्न; 'न सोमेनोच्छिष्टा भवन्ति' इत्यत्रोच्छिष्टताया एव निषिद्धत्वेन दोषस्यानिषिद्धत्वात्। न चोच्छिष्टत्वस्य निषेद्धुमशक्यत्वात् तद्दोषनिषेधपरत्वात्। तर्हि 'न वा उ—एतन्म्रियसे न रिष्यसि' इत्यत्र हिंसात्वस्य निषेद्धुमशक्यत्वात् तद्गतदोषाभावादिपरत्वस्यैव संभवात्। 'न दोषो हिंसायामाहवे अन्यत्रेनस्वी राजे' ति क्वचिद्धिंसाविशेषेषु दोषाभावप्रतिपादनस्याप्युपलम्भात्। 'अहिंसन् सर्वभूतान्यन्यत्र तीर्थेभ्यः' इतिच्छान्दोग्यश्रुतौ यागीयहिंसाया हिंसात्वमभ्युपगम्य तस्या [अ?] निषेद्ध-

व्यत्वाविष्करणाच्च । श्रुतिष्वपि यागीयसंज्ञपने हिंसात्वव्यपदेशस्य बहुलमुपलम्भाच्च हिंसात्वमभ्युपगम्यैव परिहार उक्तरीत्या समाश्रयणीय इति चेत् —

अत्र ब्रूमः – यदुक्तं यदर्थः प्रतियोगी तदर्थः प्रतिषेध इति न्यायमर्यादेति— तन्न – 'दीक्षितो न ददाति न जुहोति न पचते' इत्यत्र पुरुषार्थानामेव होमानां प्रतिषेधः क्रत्वर्थ इति स्थापितत्वात् । यच्चाप्युक्तम् – पुरुषार्थहिंसायाः शीघ्रोपस्थिति-कत्वात् तस्या एव निषेधवाक्यार्थान्वयित्वमिति – तदपि न – 'यदाहवनीये जुहोती'त्यत्र शीघ्रोपस्थितपुरुषार्थानामेव आहवनीयाङ्गकत्वप्रसङ्गात् । तस्मादुभय-विधहिंसानिषेधे प्रवर्तनानिवर्तनारूपयोः विधिनिषेधयोः पदाहवनीयादिवत् परस्पर-विरोधात् उत्सर्गापवादन्यायेन क्रत्वर्थहिंसाव्यतिरिक्तविषयत्वकल्पनमेव न्याय्यः । अत एव भामतीकल्पतरुभ्याम् – विशेषविधिविहितस्यार्थस्य सामान्यविधिना विषयीकारे ह्युत्सर्गापवादन्यायः । यथा 'आहवनीये जुहोति' इति होममात्रस्याहवनीयान्वय-विधायिना पदहोमस्यापि विषयीकारे पदहोमान्वयविशेषविधानात् तदतिरिक्तपरत्वं सामान्यशास्त्रस्य । अत्र तु वर्णितेन न्यायेनोत्पत्तिसमय एव निषेधस्य पुरुषार्थहिंसा-विषयत्वान्न क्रत्वर्थहिंसाप्रवेशः । शाङ्करभाष्ये उत्सर्गापवादन्यायोक्तिस्तु अविशेष-प्रवृत्तत्वेनावभासमानस्य शास्त्रस्य विशेषत्याजनलक्षणगुणसामान्याद्गौणीति यच्छाङ्कर-भाष्यशिक्षणम् – तदयुक्तमेव । उत्सर्गापवादन्याय एव सार्वत्रिकः परिहारः । हिंसायां तु मन्त्रार्थवादादिभिः हिंसात्वाभावावगमेन संभवतः परिहारान्तरस्योपेक्षा-नर्हत्वात् भगवता भाष्यकृता हिंसाविषये परिहारान्तरमुक्तम् । यच्चोक्तम् – मरणो-द्देश्यकमरणानुकूलव्यापारत्वं हिंसापदप्रवृत्तिनिमित्तमिति — तन्न ; अर्थापहारकशा-प्रहारादिना महतीं वेदनामुत्पादयति हिंसकत्वव्यवहाराभावप्रसङ्गेन वेदनोत्पत्त्यनु-कूलव्यापारत्वस्यैव सर्वत्रानुगततया हिंसापदप्रवृत्तिनिमित्तत्वे वक्तव्ये सति, व्रण-चिकित्सके तादात्विकतीव्रवेदनोत्पादके हिंसकत्वव्यपदेशाभावेन बलवदिष्टाजनकत्वे सति दुःखसाधनव्यापारत्वमेव हिंसापदप्रवृत्तिनिमित्तम् ; तत्कर्तर्येव हिंसकत्वव्यव-हारात् मरणोद्देश्यकमरणानुकूलव्यापारेऽपि अनेनैव बलवदिष्टाजनकत्वे सति अनिष्टसाधनव्यापारत्वरूपसाधारणप्रवृत्तिनिमित्तेन हिंसात्वव्यपदेशोपपत्तेः मरणो-द्देश्यकमरणानुकूलव्यापारत्वस्य पृथक्प्रवृत्तिनिमित्तत्वकल्पनानौचित्यात् । पशुसंज्ञपनस्य

तादात्विकदु:खजनकस्यापि बलवदिष्टभूतस्वर्गजनकतया न हिंसात्वमित्यभिप्रेत्य भगवता भाष्यकृताऽयं परिहार उपन्यस्तः ; न तु हिंसात्वमभ्युपगम्य उत्सर्गापवादन्यायेन परिहारः । यथा हिंसाविधितन्निषेधविषयभेदन्यायानभिज्ञेन वादकथायाम्, 'श्येनेन यजेते' ति वाक्यमयुक्तार्थम् ; श्येनपक्षिणः पुरोडाशादिवत् यागीयद्रव्यत्वे अहिंसाशास्त्रविरोधादिति शङ्किते श्येनाङ्गपशुषु आवश्यकेनापि विषयभेदन्यायोपन्यासेन न तत्समाधानमुचितम् ; किन्तु वस्तुस्थितिमनुसरता वाक्यशेषमुदाहृत्य कर्मनामत्वोपन्यासेनैव तत् समाधीयते, एवमिहाप्युत्सर्गापवादन्यायेन परिहार्येऽप्यस्मिन् आक्षेपे वस्तुस्थितिमनुसरन् भगवान् भाष्यकारो हिंसात्वाभावमेव प्रत्यपीपददिति न किञ्चिदवद्यम् ।

योनेश्शरीरम् ३-१-२७.

**संसारिजीवशरीरं चे**ति । यत्र पुण्यापुण्यरूपे कर्मणी तत्रैव सुखदुःखे, यत्र च सुखदुःखे तत्रैव तद्धेतुभूतं शरीरमिति, आकाशादिषु कर्मकीर्तनाभावेन तत्फलभूतसुखदुःखाद्यनुभवाभावात् न तद्धेतुभूतं शरीरमिति भावः ॥

इति अन्याधिष्ठिताधिकरणम् ॥

इति दशोपनिषद्भाष्यकारैः श्रीमद्रङ्गरामानुजमुनिभिर्विरचितायां

श्रुतप्रकाशिकाव्याख्यायां भावप्रकाशिकायां

तृतीयाध्यायस्य प्रथमः पादः

शुभं भवतु ॥



॥ श्रीः ॥

श्रीमते भगवद्रामानुजाय नमः । श्रीमते रङ्गरामानुजमहादेशिकाय नमः ।

श्रुतप्रकाशिकाव्याख्यायां भावप्रकाशिकायां

## तृतीयाध्याये द्वितीयः पादः

## (१) सन्ध्याधिकरणम् ।

**सन्ध्ये सृष्टिराह हि ३-२-१.**

**सुखानुभवेऽपी**ति । 'कृतात्यय' इति सूत्रांशेन स्वर्गक्षयिष्णुत्वस्य सूत्रकृता ख्यापितत्वादिति भावः । दुःखित्वज्ञापनप्रकारः सर्वोऽपि रंहत्यधिकरणे अस्माभिः प्रपञ्चितः तत्रैवानुसन्धेयः । भाष्ये **स्वप्नमधिकृत्ये**ति । प्रवृत्तेति शेषः । स्वप्नमधिकृत्य प्रवृत्ता श्रुतिः श्रूयत इति योजना । तेन समानकर्तृकत्वात् न क्त्वानुपपत्तिः । **अधिकृत्य प्रस्तुत्ये**त्यर्थः । भाष्ये **रथयोगा** इति । रथैर्युज्यन्त इति रथयोगाः = रथाश्वाः । कर्मणि घञ् । 'कर्तृकरण' इति समासः । **वेशन्ताः** पल्वलानीत्यर्थः । **पुष्करिण्य** इति द्वितीयार्थे, सुपां सुपो भवन्तीति जसादेशः । अथ वा छान्दसः पूर्वसवर्णदीर्घाभावः । **स्वप्नं पश्यतीनि हि प्रकृत**मिति । यद्यपि, "स यत्र स्वपिति अस्य लोकस्य सर्वावतो मात्रा उपदाय स्वयं विहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपिति; अत्रायं पुरुषः स्वयं ज्योतिर्भवती" त्युपक्रम्य हि, 'न तत्र रथा' इति बृहदारण्यके श्रूयते – अत एव शाङ्करभाष्ये, "स यत्र प्रस्वपिती' त्युपक्रम्ये" त्येवोक्तम् – तथापि प्रस्वपितीत्यस्य अस्पष्टार्थत्वात् स्पष्टार्थं लौकिकं वाक्यान्तरमुपात्तम्; न त्वेतत् श्रुतिवाक्यमुपात्तमिति द्रष्टव्यम् । एवमुत्तरत्र **स्वप्नं पश्यतीति प्रकृतो जीव**' इत्यत्रापि द्रष्टव्यम् । भाष्ये **सन्ध्यं स्वप्नस्थानमुच्यत** इति । "तस्य हवा एतस्य पुरुषस्य द्वे एव स्थाने भवतः, इदं च परलोकस्थानं च । सन्ध्यं तृतीयं स्वप्नस्थानम् । तस्मिन् सन्ध्ये स्थाने तिष्ठन् एते उभे स्थाने पश्यति, इदं च परलोकस्थानं च" इति श्रुतिः । यथा ग्रामसन्धिः

द्वो ग्रामौ भजते, एवं स्वप्न उभौ लोकौ लक्षणतो भजते। एतल्लोकवर्तिचक्षुराद्यजन्यरूपादिसाक्षात्कारवत्त्वलक्षणं परलोकलक्षणं भजते; परलोकवर्तिचक्षुराद्यजन्यरूपादिसाक्षात्कारवत्त्वरूपमैहलौकिकलक्षणमपि भजत इत्यर्थमस्याः श्रुतेः केचन वर्णयन्ति। भाष्ये **सृजते स हि कर्तेत्याह** **हीति**—हिशब्दो हेत्वर्थः। ततश्च कर्तेत्यस्य सृजत इत्येतेनैकार्थ्यात् (र्थ्ये ?)—हेतुहेतुमद्भावाभावात् कर्तृत्वोपयुक्तसत्यसङ्कल्पत्वगुणशालीत्यर्थः। ततश्च सत्यसङ्कल्पत्वात् जीवस्य कर्तृत्वं युज्यत इति पूर्वपक्षिणो भावः। न च सत्यसङ्कल्पत्वादिसद्भावे जागरेऽपि जीवस्य रथादिस्रष्टृत्वं स्यादिति वाच्यम्—जागरदशायां तिरोहितस्य स्वप्नदशायां मुक्ताविवाऽऽविर्भावसंभवात्। पूर्वं पश्चाच्चासतां स्वाप्नपदार्थानां स्वप्ने भवनवत् सत्यसंकल्पत्वस्यापि तन्मात्र एवाविर्भावोपपत्तेः। न चैवं सति प्रबुद्धस्य रथादीन् अद्राक्षमिति परामर्शवत् रथादीन् अस्राक्षमित्यपि परामर्शः स्यादिति वाच्यम्—स्वप्ने जागरानुभूतपितृपितामहात्ययादिवृत्तान्तस्याननुसन्धानवत् स्वप्नेऽनुभूतस्य रथादिस्रष्टृत्वस्य जागरणेऽननुसन्धाने दोषाभावात्। न च जीवस्य स्वापार्थस्रष्टृत्वे शुभसूचकानेव सृष्ट्वा पश्येत्; नाशुभसूचकानिति वाच्यम्—तदानीं स्वाप्नार्थस्याशुभसूचकत्वाननुसन्धानेन तत्स्रष्टृत्वोपपत्तेः। स्वप्नदृक्कर्तृकेषु तैलपात-तैलघटवगाहन-बिसभक्षण-मध्वशनैकपुण्डरीकधारणादिषु सिद्धान्तेऽप्येवमेवोपपादनीयत्वात्। तस्माज्जीव एव कर्तेति पूर्वपक्षिणो भावः।

### निर्मातारञ्चैके पुत्रादयश्च ३-२-२.

**जीवलिङ्गं दर्शयतीति**। ततश्च परमात्मनस्तत्र प्रकृतत्वेऽपि पुत्रपौत्रादिसम्बन्धरूपस्य जीवलिङ्गस्य बलवत्त्वात्, 'य एषु सुप्तेषु' इति वाक्ये जीव एव कर्तृत्वेन प्रतिपाद्यत इति भावः॥

### मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ३-२-३.

**तुशब्दसिद्धार्थ उक्त इति**। जीवकर्तृकत्वरूपपूर्वपक्षव्यावर्तकतुशब्दबलात् परमात्मकर्तृकत्वं लभ्यते। मायामात्रं स्वप्ने पुष्करिण्याद्यर्थजातं परमपुरुषसृष्टमिति भाष्ये योजना। मायामात्रमित्येतत् हेतुगर्भं पक्षविशेषणम्। सर्वांशस्याप्याश्चर्यरूपत्वात् परमात्मसृष्टमिति भावः। ततश्च **परमपुरुषसृष्टमित्येतत्** मायामात्र-

मित्येतस्य व्याख्यानमिति न मन्तव्यमिति भावः। **न भवन्तीति वाक्यस्य वैयर्थ्यमिति**। पूर्वकालीनाभावपरत्वे, नाभूवन्नित्येवं निर्देशप्रसङ्गेन लडन्तनिर्देशानुपपत्तिरित्यस्वारस्यमपि बोध्यम्। ननु यद्यपि प्रसिद्धरथादीनामभावस्य लोकसिद्धत्वेऽपि तेषामनुभवाभावो न लोकसिद्धः। सुप्तोत्थितो हीत्थं परामृशति — **पुरा यो रथो** माहिष्मत्यां दृष्ट, तमेव रथं स्वप्नेऽन्वभूवमिति। ततश्च प्रसिद्धरथादीनां कथमनुभवाभावो लोकसिद्ध इति चेत् — सत्यम्; 'सृजते स हि कर्ते'ति सृज्यत्वकथनादेव प्रसिद्धानामननुभूतत्वस्य सिद्धिसंभवात् न तत्प्रतिपादनाय, 'न तत्र रथा' इत्यादिवाक्यमर्थवदिति भावः। **विजातीयविचित्रार्थसृष्टिपरत्वमिति**। ननु वैजात्यं लोकसिद्धम्; स्रष्टृत्वमात्रमेव हि प्रतिपिपादयिषितमिति पर्यवसन्नम्। ततश्च सृजन इत्येतन्मात्रस्यैव सार्थक्यम्; न तु 'न तत्र रथा' इत्यादिपूर्वभागस्येति चेत्—सत्यम्; "जन्माद्यस्य यतः", "यतो वा इमानी"त्यादौ इदंशब्दस्य कार्यवर्गवैचित्र्यसूचकत्वेन साफल्यवत्, 'न तत्र रथा' इत्यादि वाक्यस्यापि स्वप्नार्थवैचित्र्यसूचनमुखेन अतिविचित्रस्वाप्नार्थस्रष्टृत्वरूपपरब्रह्ममहिमप्रतिपादने तात्पर्यमिति भावः। **तत्कालमात्रावसायित्वरूपमित्यनन्तरं** पर्यवस्यतीति शेषः पूरणीयः। अथवा **इतिः** समाप्तौ द्रष्टव्यः। **णमुलन्तमिति**। "आभीक्ष्ण्ये णमुल् च" इति णमुल्। "आभीक्ष्ण्ये द्वे भवतः" इति नित्यवीप्सयोरिति वा द्विर्भावः॥

**पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ३ २ ४.**

ननु तिरोधानस्य तत्सङ्कल्पायत्तत्वं प्रतिज्ञातश्चेत्, 'ततो ह्यस्य तिरोधानविपर्ययौ" इत्येव निर्देष्टव्यमित्यत आह **बन्धस्य तत्सङ्कल्पायत्तत्व** इति।

**सूचकश्च हि श्रुतेराचक्षते च तद्विदः ३-२-६.**

**स्वप्नत्वाचिवेदवाक्यविद** इति। ननु स्वप्नाध्यायस्य पुराणगतस्य ग्रहणे न किञ्चिद्बाधकमिति चेन्न — "श्रुतेराचक्षते च तद्विदः" इत्यत्र तच्छब्दस्य संनिहितश्रुतिपरामर्शकत्वस्यैव युक्तत्वात्। श्रुतावप्यध्यायव्यवहारसत्त्वेन भाष्यविरोधाभावाच्च भाष्यस्थस्वप्नाध्यायपदेन श्रुतिरेव गृह्यत इत्यभिप्रायः। भाष्ये **शुभस्य सूचकमेवे**ति। न चाशुभसूचकत्वापरिज्ञानात् तत्सृष्टिरिति वाच्यम् — तदानीन्तनानिष्टकारिणां सृष्टिदर्शनेनस्वाप्नसृष्टेर्जीवकर्तृकत्वासम्भवादिति भावः।

परे तु — स्वाप्नाः पदार्थाः वियदादिवत् सत्याः, बृहदारण्यके स्वप्नमधिकृत्य, "अथ रथान् रथयोगान् पथः सृजत" इति सृष्ट्याम्नानात् । उपसंहारे, 'स हि कर्ते'ति सुप्तजीवकर्तृकत्वाम्नानात् अपरमार्थस्य सृष्टेः कर्तुर्वा असंभवात् । तथा कठशाखायाम्, "एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः" इति कामशब्दनिर्दिष्टानां स्वाप्नानां पुत्रपौत्रादीनां निर्माणश्रवणात् तस्य निर्माणस्य प्राज्ञकर्तृकत्वाच्च प्राज्ञकर्तृकाणां वियदादीनां पारमार्थ्यवत् स्वाप्नानामपि तथ्यरूपत्वमेवोचितम् । न च प्राज्ञकर्तृकत्वहेतोरसिद्धिः, "य एष सुप्तेषु" इति वाक्यस्याधस्तात् परमात्मन एव प्रकृतत्वात् । "तदेव शुक्रं तद्ब्रह्म" इति वाक्यशेषाच्च । जीवकर्तृकत्वेऽपि जीवस्य प्राज्ञाभिन्नत्वेन प्राज्ञकर्तृकत्वानपायात् । किञ्च, स्वाप्नप्रत्ययः प्रमा, प्रत्ययत्वात्, संवादिप्रत्ययवदित्यनुमानाच्च स्वाप्नार्थस्य सत्यत्वसिद्धेः । न चोत्तरकालं बाधदर्शनादसत्यत्वम्; उभयोर्भिन्नविषयत्वेन बाध्यबाधकभावाभावात्, एकस्यैव क्षीरस्य कालान्तरे दधिभाववत् स्वप्ने रथादिरूपाणामेव तेषां जाग्रद्दशायां तद्भिन्नरूपेण परिणामसंभवेन बाध्यबाधकत्वेनाभिमतयोः कालभेदेन वस्तुद्वयविषययोरविरोधात् । अथवा सर्वं सर्वरूपमेव निद्रारूपव्यञ्जकसमवधाने रथाद्यात्मना गृह्यते, अतद्रूपत्वव्यञ्जिका तु जाग्रद्दशा । किञ्च केषांचित् स्वप्नानां जाग्रत्प्रत्ययसंवाददर्शनात् तत्सामान्यादितरेषामपि स्वप्नानां तथात्वं वक्तव्यम् । एवं प्रामाण्योपपादनसंभवेऽप्रामाण्याश्रयणस्यान्याय्यत्वात् । "न तत्र रथा" इत्यादिरथाद्यभावश्रुतिस्तु जाग्रदवस्थादर्शनयोग्या न सन्तीत्येवं भाक्ततया व्याख्येया — इत्येवम् आद्याभ्यां सूत्राभ्यां पूर्वपक्षं कृत्वा — "मायामात्रं तु" इत्यादिभिः सूत्रैः सिद्धान्तः कृतः । **मायामात्रम्** = न परमार्थगन्धोऽस्तीत्यर्थः । परमार्थवस्तुधर्माणां देशकालनिमित्ताबाधानां कार्त्स्न्येन तत्राभावात् । न तावत्स्वप्ने रथगिरिनदीसमुद्रादीनामुचितो देशः संभवति । अतिस्वल्पे स्वप्नदृग्देहदेशे रथादीनामवकाशासंभवात् । न च तत्रैव, "बहिष्कुलायादचरश्चरित्वा स ईयते अमृतो यत्र कामम्" इति कुलायशब्दितात् शरीरात् बहिश्चरित्वा यत्र विषये कामो भवति तत्र तत्र ईयते — गच्छतीति शरीरात् बहिः सञ्चरणश्रवणेन स्वप्नदृक् न स्वदेहान्तर्गतदेश एव स्वाप्नान् पदार्थान् पश्यति, येन देशस्याननुरूपत्वं स्यादिति वाच्यम् — देहाद्बहिस्सञ्चरणे दण्डताडनादावप्यनुत्थानप्रसङ्गेन तस्याः श्रुतेरुपपत्तिविरुद्धत्वात् । "स्वे शरीरे यथाकामं परिवर्तते" इति श्रुतिवशाच्च बहिष्कुलायश्रुतेर्गौणत्वस्य

वक्तव्यत्वात् स्वप्नदृग्देहान्तर्वर्तिदेशस्यैव स्वाप्नपदार्थदेशत्वात् तस्य च तदुचित-देशसंपत्त्यभावात् देशस्य दुर्निरूपत्वं सिद्धम् । तथा मुहूर्तमात्रे स्वप्नकाले न चिरकालसाध्यविवाहपुत्रोत्पादनादयः संभवन्ति । न वा रथाद्युत्पत्तिनिमित्तानि दार्वादीनि तद्दर्शनानिमित्तानि वा बाह्यकरणानि संभवन्ति। यच्चोक्तं कालभेदेन भिन्नविषयत्वान्न प्रतीत्योर्बाध्यबाधकभाव इति – तन्न – न हि जात्वीश्वरग्र(गृ)हे चिरस्थितरजतभाजनानि शुक्तिभावमनुभवन्ति दृश्यन्ते । न वाऽन्येन रजततयाऽनु-भूयमानानि वस्तूनि अन्येन अनाकुलेन्द्रियेण पुंसा शुक्तित्वेनानुभूयन्ते । नाप्येकस्य सर्वदा सर्वरूपत्वमिति पक्षः संभवति । तथासति सर्वस्य वस्तुनः सर्वार्थक्रिया-कारित्वप्रसङ्गात् । तस्मादुपपत्तिविरुद्धा सर्गश्रुतिः उपपत्तिसहितप्रक्रमश्रुतरथाद्यभाव-श्रुत्यनुरोधेन भाक्ततया व्याख्येया । सृजते = प्रत्येतीत्यर्थः । 'स हि कर्ते' त्यत्रापि, न हि जीवस्य सुप्तस्य रथादिषु स्रष्टृत्वं वक्तुं शक्यत इति तद्दर्शननिमित्तसुकृतदुष्कृत-कर्तृत्वेन तत्कर्तृत्वमुपचरितम् । एतेन, "एषु सुप्तेषु जागर्ती" ति कठशाखायां निर्माणश्रुतिर्भाक्ततया व्याख्येया । यदप्युक्तम् – 'प्राज्ञमेतं निर्मातारमामनन्ती'ति – तदसत् – बृहदारण्यके "स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपिती" ति जीवव्यापारश्रवणात् इहापि "य एष सुप्तेषु जागर्ती" ति प्रसिद्धानुवादात् जीव-एवायं स्वयं कामानां निर्माता संकीर्त्यते । ब्रह्मप्रकरणं तु तदभेदबोधनार्थत्वान्न विरुध्यते । ततश्च प्राज्ञकर्तृकत्वहेतोरसिद्धिः । अस्तु वा प्राज्ञकर्तृकत्वम् । न चास्माभिः स्वप्नेऽपि प्राज्ञव्यापारः प्रतिषिध्यते । तस्य सर्वेश्वरत्वात् सर्वास्वप्यवस्थासु अधिष्ठातृत्वोपपत्तेः । न ह्येतावता प्राज्ञकर्तृकत्वमात्रेण सत्यत्वं साधयितुं शक्यम्; प्रत्यक्षविरोधात् । एवमपरमार्थद्रव्यावच्छिन्नस्य स्वप्नदर्शनस्य प्रमाणबलात् सूचक-त्वमप्यभ्युपेयम् । ननु न जीवकर्तृकत्वश्रुतेरौपचारिकत्वमभ्युपेयम्; सत्यसङ्कल्पस्य तस्य सृष्टिसंभवात् इति शङ्कापाकरणार्थम्, "पराभिध्यानात्तु" इत्यादिसूत्रद्वयं (द्वयमिति?) वर्णयन्ति । तत्र दूष्यांशमनूद्य दूषयति —— **परे**त्वित्यादिना ।

**एषां च जीवकर्तृकत्वमेव सृजत इत्युच्यत** इत्यस्यानन्तरम् 'इति यदुक्तं पूर्वपक्षिणे' ति शेषः । **तच्चौपचारिक**मिति । तच्चोच्यमानं जीवकर्तृ-कत्व**मौपचारिक**मुपचरितमित्यर्थः । ननु न देशस्य दुर्निरूपत्वम्, यदि वयं

संवृते देहदेश एव स्वाप्नार्थानां सृष्टिमभ्युपगच्छामः, तदा हि तस्य दुर्निरूपता । नैवमभ्युपगम्यते । ‘बहिष्कुलायादवरश्चरित्वा स ईयते अमृतो यत्र — हिरण्मयः पुरुष एकहंसः’ इति श्रुतेरित्याशङ्क्य — सुप्तस्य जन्तोः क्षणमात्रेण योजनशतान्तरितदेशपर्यटनसामर्थ्याभावात्, “स्वे शरीरे यथाकामं परिवर्तत” इति स्वशरीर एव स्वप्नावस्थस्य परिवर्तनाम्नानाच्च बहिष्कुलायश्रुतिरुपचरितार्थेत्युक्तम् । तदेतदनुभाषते **बहिष्कुलायादवरश्चरित्वेति** । ‘एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाण’ इति कठवल्लीषु न प्राज्ञकर्तृकत्वमभिधीयते । ‘य एष सुप्तेषु जागर्ती’ति प्रासङ्गानुवादाज्जीव एवायं कामानां निर्माता सङ्कीर्त्यते । तस्मिन् प्रकरणे — “तदेव शुक्रं तद्ब्रह्मे” ति सङ्कीर्तनं जीवस्य ब्रह्माभेदोपदेशार्थमित्येतदनुभाषते **तस्मिन् प्रकरण** इत्यादिना । तस्मिन् प्रकरण इति — कठवल्लीस्वप्नप्रकरण इत्यर्थः ; न तु, ‘बहिष्कुलायादवरश्चरित्वे’ति प्रकरण इति भ्रमितव्यम् । तस्य बृहदारण्यकवाक्यस्थतया तत्र ब्रह्मप्रकरणाभावात् ; परैस्तथाऽनुक्तेश्च ।

**तच्च द्वितीय**मिति । मायामात्रं त्विति सूत्रानन्तरं पराभिध्यानादित्यस्मात् प्राक् पठितमिति भावः । **अस्य बन्धमोक्षौ हि परमात्माधीनाविति** । परमात्माज्ञानज्ञानाधीनावित्यर्थः । **स्वाप्नार्थानां जीवकर्तृकतये**ति । यद्यपि न परैर्मिथ्यात्वे जीवकर्तृकत्वं हेतूकृतम् ; किन्तु प्राज्ञकर्तृकत्वरूपहेत्वभावसंपादकत्वेन जीवकर्तृकत्वं वर्णितम् — तथापि साधकाभावस्य बाधकत्वमिति न्यायेन सत्यत्वसाधकाभावस्य तदभावसाधकत्वलक्षणं तद्बाधकत्वमस्तीत्यभिप्रेत्य तथोक्तम् । एवमुत्तरत्रापि द्रष्टव्यम् । **श्रुतिवाक्यकृतसत्यत्वशङ्के**ति । सर्गनिर्माणादिश्रुतिवाक्यकृतसत्यत्वशङ्केत्यर्थः । **व्यावहारिकसत्यत्वनिवृत्त्यविरोधादि**ति । अभिमतार्थविरुद्धत्वे हि त्याग उचित इति भावः । यद्यपि तैरेव, “न चास्माभिः स्वप्ने प्राज्ञव्यवहारः प्रतिषिध्यते, तस्य सर्वेश्वरत्वात् सर्वास्वप्यवस्थास्वधिष्ठातृत्वोपपत्तेः । अपि तु न प्राज्ञकर्तृकत्वस्य सत्यत्वसाधकत्वम्” इत्युक्तम — तथाऽपि पूर्वस्मिन् ग्रन्थे परमात्मकर्तृकत्वव्युदासेन जीवकर्तृकत्वं प्रसाध्य पुनः परमात्मकर्तृकत्वं प्रसाधयतो वाक्यं कथम्, ‘विप्रतिषेधाच्चासमञ्जसम्’ इति न्यायमतिवर्ततेति भावः । **जीवसृष्टत्वस्ये**ति । ततश्चाय-

मप्यपरो विप्रतिषेध इति भावः । **एवं जीवानामिति** । पराभिध्यानादिति **साक्षात् सूत्रितत्वादिति** योजना । अथवा **साक्षादि**त्यस्य स्वाप्नार्थकर्तृत्वाभावस्येत्यनेनैवान्वयः । साक्षात्कर्तृत्वाभावस्य, मुख्यकर्तृत्वाभावस्येत्यर्थः । **न त्वनुपयुक्तविरुद्धानी**ति यद्यपि विरुद्धान्यप्यनुपयुक्तान्येव — तथापि बलीवर्दन्यायेन सूत्रार्थविरुद्धत्वे साध्यस्यात्यन्तपरिहर्तव्यत्वख्यापनार्थं तदुपादानम् । यस्मिन् साध्ये सूत्राण्यनुपयुक्तानि विरुद्धानि **च न** स्युः, तदेव साध्यं भवितुमर्हतीत्यर्थः । **अर्थक्रियाया** इतिच्छेदः । सूचनरूपार्थक्रियाकारित्वस्य सत्यत्वासाधकत्वेन मिथ्यात्वविरोधित्वादित्यर्थः । **अध्याहारव्युत्क्रमान्वयावि**त्यादि । अयमर्थः—पराभिध्यानात्तिरोहितमाविर्भवतीति योजनायां अविर्भवतीति पदाध्याहारः पराभिध्यानादिति पञ्चम्यन्तपदस्य तिरोहितमित्यनेनाव्यवहितान्वयः परित्यज्याविर्भवतीत्यनेनान्वयात् व्युत्क्रमान्वय इति । **तिरोभावशब्दस्याप्रकृतत्वादि**ति । तिरोहितमाविर्भवतीत्याविर्भावस्यैव त्वन्मते प्राधान्येन प्रकृतत्वादित्यर्थः । **स इति परामर्शायोग्यत्वाचे**ति । न च सिद्धान्तेऽप्येष दोषः समान इति वाच्यम् — पूर्वोक्तप्राधान्याप्राधान्य एव तात्पर्यात् । **निरूप्य**मिति । विचारणीयमित्यर्थः । **न्यायविदा**मिति । उक्थ्याग्निष्टोमाधिकरणन्यायविदामित्यर्थः । "अप्यग्निष्टोमे राजन्यस्य गृह्णीयात्, अप्युक्थ्ये ग्राह्यः' इति विहितस्य षोडशिग्रहस्य स्तोत्रशस्त्राद्यङ्गकत्वे अग्निष्टोमोक्थ्यस्तोत्राभ्यां तस्य यागस्य समाप्त्यभावेन उक्थ्यत्वाग्निष्टोमत्वरूपोद्देश्यविशेषणभङ्गप्रसङ्गाद्विधेयस्य षोडशिग्रहस्य शस्त्राद्यङ्गराहित्यमेवाश्रयणीयमिति पूर्वपक्षे प्राप्ते साङ्गप्रधानविधायकत्वाद्विधेस्तत्स्वारस्यस्याभञ्जनीयतया अग्निष्टोमत्वोक्थ्यत्वरूपोद्देश्योपमर्दः सोढव्यः । ततश्च य उक्थ्यसंस्थः प्राप्तः स षोडशिसंस्थः कर्तव्य इति भवतीति व्यवस्थापितम् । **न च स्वाप्नार्थानामिति** । प्राक्कालीनपदं प्रयोगबाहुल्यात्, "तद्धिताः" इत्यत्र बहुवचननिर्देशेन अन्यत्रापि तद्धितप्रत्यया भवन्तीति प्रतिपादितत्वाच्च सौम्यधुरीणादिवत् साध्विति मन्तव्यम् । **ज्ञानाधिष्ठितेने**ति । ततश्चाणोरपि जीवस्य धर्मभूतज्ञानेन अनेकदेहाधिष्ठानमुपपद्यत इति भावः । **बहिर्वृत्त्युपपत्तेरि**ति । बहिर्व्यापारोपपत्तेरित्यर्थः । अनेन, 'प्राणेन रक्षन्नवरं कुलायम्' इति श्रुत्यर्थः प्रदर्शितो भवति । प्राणेन सहितं कुलायं धर्मभूतज्ञानेन रक्षन्निति हि तस्यार्थः । एतेन बहिष्कुलायश्रुतेर्गौणत्वं वदन्तः प्रत्याख्याताः ।

कुलायाद्बहिस्सञ्चरणस्य वस्तुतोऽभावे पूर्वकुलायस्य विनाशप्रसङ्गेन रक्षणप्रतिपादनं व्यर्थं स्यात्। अतो बहिष्कुलायश्रुतेः सञ्चरणे तात्पर्यमवसीयते।

ननु "स्वे शरीरे यथाकामं परिवर्तत" इति श्रुतिविरोधात् "बहिष्कुलायादमृतश्चरित्वा" इति बहिष्कुलायश्रुतिर्गौणी व्याख्यातव्या। यो हि वसन्नपि शरीरे न तेन प्रयोजनं करोति बहिरिव शरीरात् भवतीत्युच्यते। न च शरीरात् बहिस्सञ्चरणेऽपि तस्यापि शरीरस्य स्वीयत्वादेव स्वे शरीर इत्युपपद्यत इति वाच्यम्— तथात्वे स्व इत्यस्य वैयर्थ्यप्रसङ्गात्। अवश्यञ्च बहिष्कुलायश्रुतेः भाक्तत्वमभ्युपेयम्, अन्यथा प्रधानप्रकरणार्थविरोधापत्तेः। आत्मनः स्वयंज्योतिष्ट्वं प्रतिपादयितुं प्रवृत्ते हि प्रकरणे जाग्रदवस्थायामादित्यादिज्योतिर्व्यतिकरात्तद्दुर्विवेचमिति तद्विवेचनार्थं स्वप्नावस्थाऽवतारिता। तत्र यदि सृष्टिः प्रतिपाद्येत, तदा तत्रापि तद्दुर्विवेचं स्यात्। आदित्यचन्द्राग्निवाक्प्रतिभासस्य तदानीमपि सत्त्वात्, अतः प्रधानप्रतिपाद्यविरोधात् स्वर्गार्थज्योतिष्टोमप्रकरणे तदङ्गविध्यर्थवादस्य, "को हि तद्वेद यद्यमुष्मिन् लोकेऽस्ति वा न वेति" इति वाक्यस्येव स्वाप्नसृष्टिवचनस्य न स्वार्थे तात्पर्यम्। इहापि, "न तत्र रथा न रथयोगा न पन्थानो भवन्ती" त्युपक्रमेणैव सृष्टिवचनस्यापारमार्थिकविषयत्वं द्योतितम्। न च लोकसिद्धतदपारमार्थ्यकथने वाक्यवैयर्थ्यमिति वाच्यम्— लोकसिद्धस्वाप्नरथादिमिथ्यात्वस्य स्वयंज्योतिष्ट्वविवेचनोपयोगित्वेनानुवादोपपत्तेरिति चेत्—मैवं—उक्तरीत्या बहिष्कुलायश्रुतेस्तात्पर्यवत्त्वात्, 'स्वे शरीर' इति श्रुतेरपि स्वाप्नशरीराणां धर्मभूतज्ञानमात्रव्याप्त्यैव स्वाधिष्ठितानामणोर्जीवस्य यथाकामं सञ्चरणपरत्वात्—अनेकजनपदाधिपतेर्महाराजस्य स्वजनपदेषु स्वीयत्वाविशेषेण यथेष्टसञ्चारवत्, "स यथा महाराजो जानपदान् गृहीत्वा स्वे जनपदे यथाकामं परिवर्तत" इति पूर्ववाक्यानुसारेण सौभरिन्यायेन शरीरेषु यथेष्टं सञ्चरणप्रतिपादनपरत्वादस्य वाक्यस्य, स्वपदस्य च स्वीयत्वरूपहेतुसाधारण्यप्रतिपादनपरत्वेन सार्थक्यात्। प्रकरणस्य रथादिमिथ्यात्वप्रतिपादनद्वारा स्वयंज्योतिष्ट्वप्रतिपादनार्थत्वमप्यसत्—आदित्यादीनामवभासकानामभावेऽपि मनस आत्मव्यतिरिक्तस्य सत्त्वेन स्वयंज्योतिष्ट्वासिद्धेः। न च मनः स्वप्ने सदपि दृश्यत्वान्नात्मावभासकमिति वाच्यम् — तर्ह्यादित्यादीनामपि दृश्यत्वाविशेषेणानवभासकत्वसिद्धेः तद्व्यतिरेकप्रतिपादनस्य व्यर्थत्वात्—

"अस्तमिते आदित्ये याज्ञवल्क्य! चन्द्रमस्यस्तमिते शान्तेऽग्नौ शान्तायां वाचि किञ्ज्योतिरेवायं पुरुषः" इति पृष्टप्रतिवचनादित्याद्यभावस्य, "न तत्र रथा" इत्यादिवाक्यप्रतिपाद्यत्वायोग्यत्वाच्च। आदित्याद्यवभासकान्तराभावस्य प्रतिपाद्यत्वे, "न तत्रादित्या" इत्येव श्रुतिनिर्देशोऽपि स्यात्।

तस्मात् सकलेतरविजातीयरथादिसृष्टृत्वरूपपरमात्ममहामहिमप्रतिपादनार्थेयं श्रुतिः। अत एव रथादिसृष्ट्यनन्तरम्, "स हि कर्ता" इति हेतूपन्यासः सङ्गच्छते। स्वप्नदृक् यस्मिन् देशे रथं पश्यति यदा, तदानीं तत्र स्थितोऽन्यस्तं न पश्यति। स्वप्नदृगपि प्रबोधानन्तरं तत्र गतस्तं न पश्यति, तथा तत्र तस्यान्यत्र नयनचिह्नानि नाशचिह्नानि वा न पश्यति। कथमेतादृशाश्चर्यसहस्रशालिनी स्वप्नसृष्टिर्भवतीत्याकाङ्क्षायाम्, 'स हि कर्ते'ति तत्र हेतुरुच्यते। सकलप्रपञ्चनाटकसूत्रधारः सर्वेश्वरः खलु तत्र कर्ता। स किं किं कर्तुं न शक्नुयादिति हिशब्दाभिप्रायः। न चास्यार्थस्य प्रकरणासङ्गतिः। "उभयान् पाप्मन आनन्दांश्च पश्यति" इति स्वप्नद्रष्टुरनुकूलप्रतिकूलविषयप्रतिभासकत्वेन स्वयञ्ज्योतिष्ट्वे निर्दिष्टे तदानीं लोकदृष्ट्या द्रष्टव्यान्तराभावशङ्कां निवर्तयितुं परमात्मकर्तृकाणां सद्भावः प्रतिपाद्यत इति नात्र मिथ्यात्वप्रसक्तिः। न चात्मनो विषयावभासकत्वं सिद्धान्ते नाभ्युपगतम्, धर्मभूतज्ञानस्यैव तथात्वादिति वाच्यम् — धर्मभूतज्ञानगतभासकत्वस्यैव तद्द्वारा आत्मनिष्ठस्यैवेह प्रतिपाद्यत्वात्। "कतम आत्मे"ति, "योयं विज्ञानमय" इति विज्ञानगुणकत्वमुपपाद्य तस्य स्वयञ्ज्योतिष्ट्वप्रतिपादनपरत्वात् प्रकरणस्येति नात्र मिथ्यात्वप्रसक्तिरित्यलं विस्तरेण।

**देशान्तरगतविशेषप्रश्ने प्रतिवचनाभावोपपत्तिः**रिति। तद्देशगतस्वाप्नार्थव्यतिरिक्तार्थान्तरदर्शनं नास्तीत्यर्थः। ननु स्वप्नदृष्टकाञ्च्यादिदेशस्यापि भिन्नत्वेन तत्र जाग्रद्दृश्यपदार्थान्तरस्य सत्त्वाप्रसक्त्या तत्प्रश्नप्रतिवचनयोरप्यप्रसक्तत्वेन तेषां चक्षुरादिना स्वाप्नार्थमात्रग्रहणयोग्यत्वात् तद्देशगतविशेषान्तरप्रश्ने प्रतिवचनाभावोपपत्तिरस्थानसंभ्रमः। अत एव प्रतिघातकत्वाप्रतिघातकत्वादिविचारात्मकोत्तरसन्दर्भोऽपि तादृश एव। देशभेदेन प्रतिघातकत्वादिविचारस्यासङ्गतत्वादिति चेत् — सत्यं —

देशैक्येऽपि परिहारः संभवतीत्यभिप्रेत्य एवमुक्तमिति द्रष्टव्यम्। **आपेक्षिका भवन्तीति**। न हि भारतवर्षवासिनां या प्राची दिक्, यः प्रातःकालः, सैव केतुमालवासिनां प्राची, स एव प्रातःकाल इति भावः। **जलगतं वस्तु द्रष्टुमशक्यमिति**। विषयालोकसंयोगस्य कारणत्वेनागाधस्वच्छजलान्तर्वर्तिसिकतादिरूप-विषयाणामालोकसंयोगस्य वश्यकत्वेन सलिलानामप्रतिघातकत्वस्य वक्तव्यत्वादिति भावः। **निम्नपातितयेति**। ऊर्ध्वाधरभावेन संयुक्तानां गुरुतया निपतनशीलानां द्रवद्रव्याणां मध्ये छिद्रासंभवादित्यर्थः। **निरुध्यमानतयेति**। असति हेत्वादौ निरोधके परस्परसंसर्गानुकूलगतिमतां दक्षिणोत्तरभावेनावस्थितानामपि द्रवद्रव्याणां न छिद्रसंभव इति भावः।

**तत्र पराभिध्यानादित्यादीति**। अत्रैषा योजना—पराभिध्यानात्त्वित्यादि-सूत्रद्वययोजनायां पूर्ववत्=परमत इवानुपयोगविरोधाभावेऽपि सूत्रान्तरे श्रुतौ च अस्वारस्यं पूर्ववदनुसन्धेयमिति। सूत्रश्रुत्योरस्वारस्यं क्रमेण दर्शयति **मायाशब्दस्येत्यादिना**॥

इति सन्ध्याधिकरणम्॥

---

## (२) तदभावाधिकरणम्।

**तदभावो नाडीषु तच्छ्रुतेरात्मनि च ३-२-७.**

**तद्यत्रैतदित्यादि** छान्दोग्ये श्रूयते। **तत्** तत्रैव सति, **यत्र** यस्मिन् काले **एतत् स्वप्नं सुप्तः** कुर्वन्, — ओदनपाकं पचतीतिवत्—स्वापस्य द्विप्रकारत्वात् सुषुप्तिसिद्ध्यर्थं विशेषणं **समस्त इति**। उपसंहृतसर्वकरण इत्यर्थः। विषय-सम्पर्कजनितकालुष्याभावात्= संप्रसन्नः, **सुप्तो भवति**=प्रविष्टो भवतीत्यर्थः। इदं तु छान्दोग्ये दहरविद्यागतं वाक्यम्। "अथ यदा सुप्तो भवती" त्यादि बृहदारण्यक-वाक्यम्। "यत्रैतत् पुरुषः स्वपिती" त्यादिकं छान्दोग्यसद्विद्यागतम्। ननु, 'सता सोम्ये' त्यत्र सप्तम्याः अश्रवणात् कथमाधारत्वप्रतीतिरिति चेत्—सत्यम्; तद्वाक्यशेषे, "सति संपद्य न विदुः, सति संपत्स्यामह" इति सप्तम्याः श्रवणात्,

तथा, "य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते" इति श्रुत्यन्तरैकार्थ्याच्च आधारत्व-प्रतीतेः। **खट्वापर्यङ्कवदिति**। पर्यङ्कशब्दोऽयमास्तरणवाची। 'नागपर्यङ्कमुत्सृज्ये'त्यादौ प्रयोगदर्शनात्। अतः पर्यङ्कशब्दस्य खट्वापर्यायत्वमेवेति न भ्रमितव्यम्। **कार्यभेदावगमकत्वे त्विति**। यद्यपि ब्रह्मणः प्रबोधश्रवणं ब्रह्मणो नियमेन सुषुप्तिस्थानत्वरूपस्य परमसाध्यस्यैवोपपादकम्; न तु कार्यभेदावगमद्वारा ब्रह्मणो नियमेन सुषुप्तिस्थानत्वोपपादकम् — तथापि समुच्चयरूपस्याधिकरणार्थस्य कार्यभेदावगममन्तरेणानिर्वाहात् सोऽप्युपपादककोटौ निविशत इति द्रष्टव्यम्। ननु "सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः" इति श्रवणात् नियमेन ब्रह्माश्रितस्य कथं तदनपेक्ष्य नाड्यां पुरीततीह सुषुप्तिराशङ्क्यते? उच्यते — न केवलस्य ब्रह्मणोऽत्र विकल्पकोटित्वम्; किन्तु दहराकाशरूपस्य। छान्दोग्य एव दहरविद्यायां दहराकाशरूपं ब्रह्म प्रस्तुत्य — "एवमेवेमास्सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ती"ति सुषुप्तिस्थानत्वश्रवणात्। किञ्च सद्विद्यावाक्य-शेषेऽपि, "सत आगम्य न विदुः सत आगच्छामह" इति श्रूयते। तेन किञ्चित्प्रदेशावच्छिन्नमेव सुषुप्तिस्थानमिति सिध्यति। न हि ग्रामादिवापरिच्छिन्ना-द्ब्रह्मण आगमनं संभवति, स चावच्छेदको हृदयपुण्डरीकरूप इति छान्दोग्य एव प्रदेशान्तरपर्यालोचनया निश्चीयते। श्रुत्यन्तरे, "य एषोऽन्तर्हृदय आकाशस्तस्मि-ञ्छेते" इति हृदयपुण्डरीकावच्छिन्नब्रह्माधारकत्वस्य स्पष्टमाम्नानाच्च। तस्मात् उपपन्ना ब्रह्मणो वैकल्पिकाधिकरणत्वशङ्का।

भाष्ये **निरपेक्षत्वप्रतीतेरिति**। उक्तं हि पूर्वतन्त्रे (१२-१-१०) "एकार्थास्तु विकल्पेरन् समुच्चये ह्यावृत्तिः स्यात् प्रधानस्य" इति। तत्र हि — 'व्रीहिभिर्यजेत', 'यवैर्यजेते'त्यादिषु सर्वाङ्गोपसंहारिप्रयोगवचनानुग्रहायाष्टदोषदुष्टविकल्पपरिहाराय समुच्चय एव स्यात्; ततश्च ज्योतिष्टोमवत् दर्शपूर्णमासप्रधानयागाभ्याममाश्रित्य समुच्चयोऽभ्युपगन्तव्यः; अथवा व्रीहियवानां मिश्रणेन वा यागः कर्तव्य इति पूर्वपक्षं कृत्वा — एकार्थानाम् — एकस्मिन्नुपकारे अन्योन्यनिरपेक्षतया विनियुक्तानां विकल्प एवाभ्युपगन्तव्यः। ज्योतिष्टोमे हि — द्रव्यदेवतासंयोगानामदृष्टार्थानामपर्याय-विधायिना प्रकरणेन युगपद्ग्रहणात् सर्वसम्पादनाय युक्तम्, यदभ्यस्यते। व्रीहियवौ तु

द्वाभ्यां वाक्याभ्यां अन्योन्यनिरपेक्षौ यागद्रव्यपुरोडाशप्रकृतितया विधीयमानौ तद्द्वारेण प्रयोगवचनो गृह्णन् पर्यायेण गृह्णाति, न युगपत् , येन बलात् ज्योतिष्टोमवत् प्रधानयागाभ्यासः स्यात् । मिश्रणमपि निरपेक्षविधानादयुक्तम् । मिश्रणे हि वाक्यद्वयमपि बाधितं स्यात् । तस्मात् द्वाभ्यामपि वाक्याभ्यां द्वयोरपि निरपेक्षयोः प्रकृतित्वेन विधानात् तद्बलेन द्रव्यान्तरनिवृत्तिः प्रतीयते । तस्माद्विकल्प इत्युक्तम् । तन्न्यायेनेहापि विकल्प इति भावः ।

**श्रुत्यनुसारादिति** । स्वप्नाभावसुषुप्त्योः सम्बन्धस्य श्रुति षु प्रसिद्धत्वात् स्वप्नाभाववाचिशब्देन सुषुप्तिलक्षणा उचितेति भावः । **पूर्वपक्षयुक्तिव्युदासार्थ**मिति । पूर्वपक्षयुक्तित्वव्युदासार्थमित्यर्थः । त्रयाणां स्थानत्वश्रुतेः विकल्पस्यैव साधकत्वेन पूर्वपक्षयुक्तित्वेन समुच्चयसाधकयुक्तित्वाभावादिति शङ्काव्युदासार्थमाहेत्यर्थः । अयं भावः — असम्भवत्कार्यभेदस्थले एकविभक्तिनिर्देशस्य विकल्पसाधकत्वेऽपि संभवत्कार्यभेदस्थले एकविभक्तिनिर्देशस्याष्टदोषदुष्टविकल्पभीत्या समुच्चयस्यैव साधकत्वात् । इतरथा नित्यवदाम्नानभङ्गप्रसङ्गादिति । **अत्र तु यथासंभवं बाध इति** । अपूर्वोत्पत्तिबाधफलबाधयोरत्यन्तासंभवादित्यर्थः । इदमुपलक्षणम् — व्रीहियवादिशब्देष्विव प्रामाण्यपरित्यागाप्रामाण्यस्वीकारस्वीकृताप्रामाण्यपरित्यागपरित्यक्तप्रामाण्यस्वीकाराः चत्वारो दोषा एकस्मिन् शास्त्र इति नाडीपुरीतद्ब्रह्मशास्त्रेषु त्रिष्वपि प्रत्येकं चत्वारश्चत्वारो दोषा इति द्वादश दोषा द्रष्टव्याः । तथाहि — एकस्यां सुप्तौ नाड्यां शयने पुरीतद्वाक्ये ब्रह्मवाक्ये च प्रत्येकं प्रामाण्यपरित्यागाप्रामाण्यस्वीकारौ द्वौ द्वौ दोषौ ; सुप्त्यन्तरे पुरीतति शयने नाडीवाक्ये प्रामाण्यपरित्यागाप्रामाण्यस्वीकारौ द्वौ दोषौ, पुरीतद्वाक्ये तु परित्यक्तप्रामाण्यस्वीकारः स्वीकृताप्रामाण्यपरित्याग इति दोषद्वयमिति चत्वारो दोषाः ; पुनः सुप्त्यन्तरे ब्रह्मणि शयने ब्रह्मवाक्येऽपि स्वीकृताप्रामाण्यपरित्यागपरित्यक्ताप्रामाण्यस्वीकाररूपौ द्वौ दोषौ ; ततः सुप्त्यन्तरे नाड्यां शयने नाडीवाक्येऽपि पूर्ववत् दोषद्वयमिति स्वापचतुष्टये द्वादश दोषाः प्रादुःष्युः । अष्टदोषदुष्टो विकल्प इत्युक्तिस्तु प्रसिद्धव्रीहियवोदाहरणाभिप्राया ।

भाष्ये **नाडीपुरीतता**विति । यद्यपि आन्त्रं पुरीतदिति निघण्टुषु नपुंसकतया निर्दिष्टम् , तद्व्याख्यातृभिः व्याख्यातञ्च — तथाऽपि 'पुरीततमभिप्रतिष्ठन्त'

इति वैदिकव्यवहारदर्शनादुभयलिङ्गत्वमस्तीत्यभिप्रेत्य भाष्यकृता पुँल्लिङ्गतया निर्देशः कृत इति द्रष्टव्यम्। **परम्परया एकप्रयोजनत्व** इति। अङ्गानाम् अवान्तरकार्यभेदद्वारा करणसामर्थ्योद्बोधनरूपैकप्रयोजनपर्यवसितानामपि समुच्चयदर्शनादिति भावः। न च साक्षादेकप्रयोजनत्वं विकल्पप्रयोजकमिति वाच्यम्—एकवाक्यप्रतिपाद्यतया साकाङ्क्षयोः एकक्रियनिर्वर्तकयोरारुण्यैकहायन्ये विकल्पाभावेन नैरपेक्ष्यस्याप्यपेक्षितत्वादिति भावः। **नाड्यादिसमुच्चयश्च श्रुत्या प्रदर्शि(र्श्य)त** इति। "तासु तदा सुप्तो भवती" ति श्रुत्या नाडीनां प्राणशब्दितस्य ब्रह्मणश्च समुच्चयः प्रदर्श्यते। 'ताभिः प्रत्यवसृप्ये' ति श्रुत्या नाडीपुरीततोः समुच्चयः प्रदर्शित इति भावः। **कथमविरोध** इति। पुरीततो हृदयाद् बाह्यत्वेन प्रासादखट्वापर्यङ्कन्यायासंभवादिति भावः। **हृदय इति वच** इति। परमात्मनो व्यापकत्वेऽपि हृदयावच्छिन्नपरमात्मनोऽन्यथात्वात् तत्र शयनस्य पुरीतच्छयनं विरुद्धमेवेति भावः। **अविरोध इति वाच्यमि**ति। तच्चायुक्तमिति शेषः। **हृदि शयनस्य च विरोधादि**ति। "अन्तर्हृदय आकाशस्तस्मिञ्छेते" इति प्रतिपादितेन हृदयाकाशसदनेन, "हिता नाम नाड्यो द्वासप्ततिसहस्राणि हृदयात् पुरीततमभिप्रतिष्ठन्ते, ताभिः प्रत्यवसृप्य पुरीतति शेते" इति पुरीतति शयनस्य च विरोधात्। न हि प्रासादप्रावरणप्राकारे शयानः, प्रासादे शेत इति शक्यते वक्तुमिति भावः। कस्तर्हि परिहार इति चेत्—इत्थम्। अवहितमना शृणु। पुरीतदाख्यं मांसं हृदयमध्यगतं दहरपुण्डरीकाधारभूतम्। दहरपुण्डरीकावच्छिन्न आकाश दहराकाशः, तत्र जीवस्य सुषुप्तिः। "हृदयस्य मध्ये लोहितं मांसपिण्डं यस्मिंस्तद्दहरं पुण्डरीकं कुमदमिवानेकधा विकसितम्" इति सौबालश्रुतेः। पुरीततो हृदयवेष्टनोक्तिस्तु हृदयान्तर्वर्तिदहरपुण्डरीकवेष्टनाभिप्रायेण। ततश्च न क्वापि विरोधगन्धः। तस्य च हृदयस्य दशच्छिद्राणि जागराद्यवस्थजीवस्थानभूतानि प्राकारस्य द्वाराणीव सन्ति। तत्र जागरस्वप्नावस्थे अनुभूय सुषुप्तिदशायां हितानामनाडीद्वारा अन्तःप्रविश्य प्राकारस्थानीयस्य हृदयस्य मध्यवर्ति यत् पुरीतदाख्यं लोहितं मांसपिण्डम्, तत् प्राप्य तस्योपरि निविष्टदहरपुण्डरीकान्तर्वर्ति दहराकाशशब्दितपरब्रह्मणि सुषुप्तौ विरोधाभावात्; प्राकारद्वारे विहृत्य राजमार्गेण प्राकारद्वारात् राजभवनं प्रत्यवसृप्य

प्रासादे शयाने महाराजे, प्राकारान्निर्गत्य राजमार्गेण राजभवनं प्रत्यवसृप्य राजभवने शेत इत्युक्तौ विरोधाभावात् ॥

इति तदभावाधिकरणम् ॥

---

## ( ३ ) कर्मानुस्मृतिशब्दविध्यधिकरणम्

---

स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ३-२-९.

**अत्र न कश्चन पाप्मानं स्पृशतीति श्रुतिरभिप्रेतेति ।** "आसु तदा नाडीषु सृप्तो भवति तं न कश्चन पाप्मा स्पृशति । तेजसा हि तदा सम्पन्नो भवती" ति श्रूयते । तत्र पाप्मशब्दस्य सुकृतदुष्कृतसाधारणत्वेन सर्वोपाधिविनिर्मोक्षाभिप्रायत्वादिति भावः । ततश्च सुषुप्तस्य पुनरावृत्तिहेत्वभावादन्य एवोत्तिष्ठति । ततश्च कर्मानुस्मृतिशब्दविधयो यथाकथञ्चिदुपपादनीयाः । कथम् । कर्मफलभोगनियमः सुषुप्त्यभावे; अतः पुण्यफलं भोगार्थिना सुषुप्तितोऽपि रक्षणीयम् । अनुस्मृतिस्तु भ्रान्तिरूपैव । 'त इह व्याघ्रो वे' त्यादिशब्दो यच्छरीरकः प्राचीनः तच्छरीर एवान्य उत्तिष्ठतीत्येवम्परः । मोक्षार्थविधयोऽपि ब्रह्मानन्दानुभवार्थिविषयाः । सुषुप्तस्य तु स्वरूपानन्दानुभव एव; न ब्रह्मानन्दानुभवोऽपि । अतो नानुपपत्तिरिति भावः । **यद्यद्भवन्तीति** – " त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यद्भवन्ति, तदाभवन्ती" ति छान्दोग्ये श्रूयते । **यद्यद्भवन्ति** येयेऽभवन्, तत्तदेव त एवेत्यर्थः; आ सुषुप्तादागत्य भवन्तीत्यर्थः । **पूर्वं ये यथा भवन्ति, ते तथा भवन्तीत्यर्थ** इतीदं तु फलितार्थकथनम्; श्रुतौ **यथातथा**शब्दाभावात् । 'यद्यद्भवन्ति तदाभवन्ती' ति हि श्रुतिवाक्यम् । **अनुष्ठानाशक्तिर्विवक्षितेति** । ननु परमात्मसम्पत्तिदशायां तन्महिम्ना पाप्मनामस्पर्शः परं कथ्यते; न त्वनुष्ठानाशक्तिः, अशब्दार्थत्वात् । 'तेजसा हि तदा सम्पन्नो भवती' ति परमात्मसम्पत्तेः पापासंस्पर्शहेतुत्वप्रतिपादकोत्तरवाक्यविरोधाच्चेति चेत् –

नैवम्; 'तेजसा हि तदा सम्पन्नो भवती' त्यत्राशंसायां क्तप्रत्ययः। तेजसा ब्रह्मणा सम्पत्तिं तदाऽभिलषति। ततश्चानुष्ठानाशक्तस्सन् तदानीं परमात्मानं हि विश्रान्तिस्थानमभिलषतीत्यर्थः सिद्ध्यति। अर्थान्तरप्रत्यभिज्ञावत्त्व(धारत्व)मिति। मयेदं प्रक्रान्तं मयेदं दृष्टमित्यर्थान्तरप्रत्यभिज्ञानं कर्मशब्देन उच्यते। "योऽहं सुषुप्तः, स एव जागर्मी' त्यादिस्वविषयप्रत्यभिज्ञानमनुस्मृतिशब्देनोच्यत इति वैषम्यमिति भावः। निर्हेतुकत्वप्रसङ्गाभिप्रायत्वादिति। 'नाभुक्तं क्षीयते कर्म' त्यादिस्मारकत्वादिति भावः॥

इति कर्मानुस्मृतिशब्दविध्यधिकरणम्।

---

## [४] मुग्धाधिकरणम्

मुग्धेऽर्धसम्पत्तिः परिशेषात् ३-२-१०.

भाष्ये – निमित्तं हि मूर्च्छाया अभिघातादिरिति। सुषुप्तेस्तु श्रमादि निमित्तमिति भावः। इदञ्चोपलक्षणमाकारवैरूप्यस्यापि। भाष्ये स्पष्टत्वात् नोदाहृतम्। सुषुप्तौ हि प्रसन्नवदनत्वश्वासपूर्णत्वादिरुपलभ्यते; मूर्च्छायां तु कराल-वदनत्वसूक्ष्मश्वासादिरूपमाकारवैरूप्यम्। मूर्च्छामरणयोरप्येवमेव निमित्तवैरूप्य-माकारवैरूप्यं च स्पष्टमेव। अतो निमित्तवैरूप्यादाकारवैरूप्याच्चेतद्द्वयमपि सुषुप्तिमरणयोर्द्वयोरप्यन्वेतीति केचिद्वर्णयन्ति। न चैवं निमित्तवैरूप्यात् सुषुप्ति-व्यावृत्तिः, आकारवैरूप्यात् मरणव्यावृत्तिरिति टीकाविरोध इति वाच्यम्—मार्गान्तरस्य मार्गान्तरादूषकत्वात्। न चास्यां योजनायां निमित्ताकारवैरूप्याभ्यां मूर्छायाः सुषुप्तिमरणभेदस्य सिद्धत्वात्, मरणं हि सर्वप्राणदेहसम्बन्धोपगति-रित्याद्युत्तरभाष्यग्रन्थो व्यर्थ इति वाच्यम्—मरणार्धसम्पत्तिर्मूर्छेत्युक्ते किं तन्मरणम्, केयमर्धसम्पत्तिरित्याकाङ्क्षायाम्, अस्य ग्रन्थस्य प्रवृत्तेर्नासङ्गतिः। मरणायार्द्ध-सम्पत्तिः मूर्छेति वाक्यस्यायमर्थः – मरणं सर्वप्राणवियोगः। सर्वप्राणवियोगार्थाः कतिपयप्राणवियोगसम्पत्तिर्मूर्छेति। न च यत्नौषधादिवशान्न मरणम्, तत्र सर्व-

प्राणविरतिलक्षणमरणार्थत्वाभावात्, तत्र कतिपयप्राणवियोगसम्पत्तिरूपमूर्च्छायाः मूर्च्छात्वं न स्यादिति वाच्यम् — मरणार्थार्द्धसम्पत्तिरित्यत्र फलोपधानस्याविवक्षितत्वात् । न हि प्रतिबन्धकवशेन मरणकार्यानुत्पत्तिमात्रेण स्थूलप्राणवियोगरूपमूर्छायाः मरणार्थत्वं हीयते । अतः सुष्ठूक्तं **मरणार्थार्द्धसम्पत्तिरिति** । ननु मरणव्यावर्तकाकारवैरूप्यविवरणात् प्रागेव सुषुप्तिमरणपारिशेष्यकथनं कथं युज्यते, सुषुप्तिव्यावर्तककथनात् सुप्तिपारिशेष्यकथनं हि युज्यत इत्याशङ्क्याह — **न सुषुप्तिमणे इत्युक्तेरिति** ।

इति मुग्धाधिकरणम् ॥

---

## (५) उभयलिङ्गाधिकरणम्

**न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ३-२-११.**

**अवस्थास्वित्यर्थ** इति । सुषुप्तिमुग्ध्युत्क्रान्तीनां स्थानत्वासंभवादिति भावः । भाष्ये **तच्च देहसम्बन्धस्यापुरुषार्थत्वेन भवतीति । तच्च** कर्मणां देहयोगद्वारा अपुरुषार्थसाधनत्वमित्यर्थः ॥

**अपि चैवमेके ३-२-१३.**

**पूर्वसूत्रेनिगदव्याख्यानेति** । अनिगदव्याख्यानेति छेदः । **अनिगदव्याख्याना** अस्पष्टार्था ; नेयार्थेति यावत् । **निगदः** पाठः । पाठमात्रेण यस्य व्याख्यानं नास्ति, सा तथोक्ता । नित्यादिसाधारणस्यामृतशब्दस्य निर्दोषत्वार्थकत्वस्यास्पष्टत्वात् । **अप्राकृतविग्रह** इति । अत्र तद्योग्यत्वं विवक्षितम् । अतस्तादात्विकाप्राकृतविग्रहशून्ये जीवे नानुपपत्तिरिति द्रष्टव्यम् ॥

**अरूपवदेव हि तत्प्रधानत्वात् ३-२-१४.**

भाष्ये **नामरूपेति** । उदाहृतश्रुतौ नामरूपनिर्वोढुः तत्सम्बन्धाभाव उक्तः । स च बाधितः । निर्वाह्यनिर्वाहकभावरूपसम्बन्धस्यैव सत्त्वात् । अतस्तत्कार्यरूप-

तु खैश्वर्यादिसम्बन्धाभावपरा सा श्रुतिरिति भावः। **अर्थानुपपत्त्येति**। सर्वज्ञस्य सर्वनियन्तुरीश्वरस्य बुद्ध्यधीनज्ञानवत्त्वस्य विधिपर्यत्वस्य वा प्रयोजनस्यानुपपत्त्येत्यर्थः। **सद्वारकं कर्मवश्यत्वमिति**। सर्वज्ञस्य सर्वनियन्तुरपि ज्ञाप्यत्वपर्यत्वादिकं सद्वारकमुपपद्यत इति भावः। **अधिकारस्तादर्थ्यबोधनमिति**। "अधिकारो विनियोगः" इत्यभियुक्तोक्तेः अधिकुर्वन्त विनियुञ्जत इत्यर्थ इत्यभिप्रायः। विनियोगो हि व्यापारणम्। कर्मवश्यानेव ब्राह्मणादीन् तदर्थज्ञापनेन व्यापारयन्तीत्यर्थः।

## आह च तन्मात्रम् ३-२-१६.

**इतरनिषेधव्यवच्छेदपर** इति। सत्यज्ञानादिवाक्यस्य सर्वज्ञत्वादिगुणान्तरनिषेधपरत्वव्यवच्छेदपर इत्यर्थः॥

## दर्शयति चाथो अपि स्मर्यते ३-२-१७.

**अथोशब्दः कात्स्न्र्यपर इत्यर्थ** इति। अत्रार्थशब्दोऽभिप्रायपरः। **अथो** अपीति सूत्रे "ओत्" इति प्रगृह्यसंज्ञायाम्, "प्लुतप्रगृह्या अचि—" इति प्रकृतिभावः। **गुणविशेषनिषेध** इति। "निष्कलं निष्क्रियम्" इत्यवयवक्रियादिरूपगुणविशेषनिषेधे सति निर्गुणमिति सामान्यनिषेधस्य तत्पर्यवसायित्वादिति भावः। न चैवम्, "ब्राह्मणो न हन्तव्यः" इति निषेधस्य, "आत्रेयं न हन्यात्" इति विशेषनिषेध पर्यवसायित्वं किं न स्यादिति वाच्यम्। अत्र गुणविशेषविधायकवचनसत्त्वेनासङ्कोचेन निषेधावृत्त्या विशेषपर्यवसानमपेक्षमाणस्य श्रुतेर्गुणविशेषनिषेधे पर्यवसानस्यावश्यकत्वात्।

## अत एव चोपमा सूर्यकादिवत् ३-२-१८.

**एकस्वभाव इत्यर्थ** इति। "आकाशमेकं हि यथा" इत्यादिस्मृतौ पृथक् पृथक्संयुज्य घटादिषु वर्तमानमाकाशं तद्गतदोषाद्यसंस्पृष्टं यथा एकस्वभावमेव भवति, यथा नानाजलाधारेषु प्रतिबिम्बितः अंशुमान् — तथाऽनेकस्थोऽप्यात्मा तद्गतदोषासंस्पृष्टतया एकस्वभाव एव भवतीत्युद्देश्यविधेयभाव इति भावः॥

अम्बुवदग्रहणात्तु न तथात्वम् ३-२-१९.

तुल्यत्वाभावादिति । तुल्यत्वाभावप्रसङ्गादित्यर्थः । ततश्च सूत्रे **न तथात्वमित्यत्र** स्यादिति शेषोऽध्याहर्तव्य इत्याचार्याणामभिप्रायः ॥

वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवं दर्शनाच्च ३-२-२०

भाष्ये — **पृथिव्यादिस्थानान्तर्भावादिति** । अत्र प्रतीयमानादिति शेषोऽध्याहर्तव्यः । ततश्च प्रतीयमानात् पृथिव्यादिस्थानान्तर्भावात यत् प्रसक्तं वृद्धिह्रासभाक्त्वम्, तन्निवर्त्यत इत्यर्थः । प्रतीतिश्च प्रमाभ्रमसाधारणी । ततश्च यथा घटादिषु अवस्थिततया भासमानस्य वस्तुतोऽसतोऽप्यंशुमतस्तद्गतदोषास्पृष्टत्वम् ' तथा पृथिव्यादिस्थानस्थिततया प्रतीयमानस्य परमात्मनस्तद्गतदोषासंस्पृष्टत्वमुपपद्यत इत्यर्थः । एतेनान्तर्भावप्रयुक्तत्तद्दोषस्पर्शशङ्कायास्तदन्तर्भावशून्यांशुमद्दृष्टान्तेन कथमपनेयत्वमिति शङ्काऽप्यपास्ता । तदन्तर्भावप्रतीतिप्रयुक्तशङ्काया एवात्रापनेयत्वात् । तत्र, यथान्तर्गततया प्रतीयमानस्यांशुमतो न तद्दोषभाक्त्वमिति दृष्टान्तोपन्याससंभवाच्च ॥

प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ३-२-२१.

भाष्ये **द्वे वाव ब्रह्मणो रूपे** इति । अत्र मूर्तशब्देन पृथिव्यप्तेजांसि अमूर्तशब्देन वाय्वन्तरिक्षे च कथ्यन्ते । उत्तरत्र 'तदेतन्मूर्तं यदन्यद्वायोश्चान्तरिक्षाच्च अथो अमूर्तं वायुश्चान्तरिक्षं च " इति श्रवणात् । " यथा महारजनं वासो यथा पाण्ड्वाविकं यथेन्द्रगोपो यथाग्न्यर्चिर्यथा पुण्डरीकम् "इत्यादिना आत्मनो मूर्तामूर्तानुभवजनितवासनाजन्यविज्ञानविषयभूतस्वाप्नरूपाणि चोपन्यस्य, " अथात आदेशो नेति नेती " ति रूपद्वयमपि प्रतिषिध्य, " सत्यस्य सत्यम्; प्राणा वै सत्यम्; तेषामेष सत्यम् " इति प्राणशब्दोपलक्षितस्य प्रपञ्चस्य व्यावहारिकसत्यत्वमुक्त्वा ब्रह्मण एव परमार्थसत्यत्वमुक्तमित्युपसंहृतं बृहदारण्यक इति **अथ स्यादिति** भाष्यस्यार्थः ॥

**प्रकृतैतावत्त्वम्** । अत्र प्रकृतैर्गुणैः यदेतावत्त्वम्, प्रकृतं यदेतावत्त्वमिति समासद्वयमप्यभिप्रेतम्; " ये ब्रह्मणो विशेषाः प्रकृताः तद्विशिष्टतया ब्रह्मणः प्रतीयमाना इयत्ता " इति च, " या ब्रह्मण इयत्ता प्रकृता " इति च भाष्ये दर्शनात् ।

**उक्तप्रकारमात्रविशिष्टतया ब्रह्मणः इयत्ता प्रकृतेति** । ननु गुणानां प्रकृतत्वेऽपि कथं तन्मात्रगुणकत्वं प्रकृतम् ; गुणान्तरनिषेधस्य अशब्दार्थत्वात् । 'आह च तन्मात्र' मिति न्यायविरुद्धत्वाच्चेति चेत् – सत्यम् , 'सर्वं वाक्यं सावधारण' मिति न्यायेन गुणान्तरनिषेधविशिष्टतद्गुणवत्त्वरूपविशिष्टस्य एतावत्त्वस्य प्रकृतत्वमभिप्रेत्य तथोक्त्युपपत्तेः । **एतावदेव वक्तव्य**मिति । वस्तुतस्तु न तदपि वक्तव्यम् ; प्रकृतान् प्रतिषेधतीत्येवं चारितार्थ्यादिति द्रष्टव्यम् । **भूयिष्ठत्वमुच्यत** इति । गुणभूयिष्ठत्वमुच्यत इत्यर्थः । ततश्च भूयोभूयो ब्रवीतीति न क्रियान्वय इति भावः । **सार्थसङ्ग्रह**मिति अर्थसङ्ग्रहयुक्तं विषयवाक्यमुपादातुं सौत्रं पदं पुनरप्युपादत्ते । अतो न पौनरुक्त्यशङ्का कार्येति भावः । **अचेतनजीवव्यावृत्तिरिति** । अचेतनस्य जडरूपतया स्वरूपतो निकृष्टत्वम् , जीवस्य तु गुणतो निकृष्टत्वमित्यर्थः ॥

इति उभयलिङ्गाधिकरणम् ।

---

## ( ६ ) अहिकुण्डलाधिकरणम् ।

---

**उभयव्यपदेशात्त्वहिकुण्डलवत् ३-२-२६.**

ननु "द्वे वाव ब्रह्मणो रूपे" इत्यत्र चिदचित्संवलनरूपस्यैव मूर्तामूर्तशब्दिततया कथं मूर्तामूर्तात्मकाचित्प्रपञ्चस्येति भाष्योक्तिरित्याशङ्क्याह **चिदचिदात्मके**त्यादिना । भाष्ये अहिकुण्डलन्यायेनेति । यथा ह्यहेरहित्वेनाभेदेऽपि कुण्डलभाव — ऋजुभावरूपसंस्थानविशेषापत्त्या भेदः, एवं ब्रह्मणः स्वरूपेणाभेदेऽपि कार्यप्रपञ्चरूपापत्त्या भेदः । न चाहेर्विश्रान्तिसञ्चरणादिप्रयुक्तभोगविशेषलाभार्थं कुण्डलभाव – ऋजुभावापत्तिर्भवतीति युक्तम् ; ब्रह्मणस्तु सर्वज्ञस्य सर्वशक्तिकस्य ज्ञानानन्दरहिताचित्प्रपञ्चतापत्तिर्न युक्तेति वाच्यम् — न ह्यहिवत् ब्रह्म स्वप्रयोजनार्थं प्रवर्तते ; अपि तु प्राणिनामनुग्रहार्थम् । तदनुग्रहश्च भोगानुष्ठानाद्युपयुक्तप्रपञ्चात्मतापत्त्यभावे न भवतीति तदात्मतां ब्रह्म प्रतिपद्यते । **अचिद्धर्मप्रतिषेध** इति । 'अज' इत्यादिना जननाद्यचिद्धर्मप्रतिषेध इत्यर्थः । **पृथगधि-**

**करणत्वे निदानं श्रोतव्य**मित्यादि । यद्यपि, 'अतोऽनन्तेन तथाहि लिङ्गमिति सूत्रस्य परमसाध्योपसंहारत्वप्रतिपादनमुखेन अधिकरणसमाप्तेरधिकरणात् प्रकृतैतावत्त्वमित्यादेः तादर्थ्यानन्तर्याभ्यां न पृथगधिकरणत्वमित्यादेर्वक्ष्यमाणत्वात् तत्रैव सूत्रे '**अनन्तर**शब्देन ततश्शब्दो व्याख्यातः । **भूय**श्शब्देभूयिष्ठत्वमुच्यत' इति **ततो-भूय**श्शब्दयो र्व्याख्यातत्वाच्च न श्रोतव्यान्तरमवशिष्यते — तथाऽपि तदर्थस्य गहनत्वमभिप्रेत्य तथोक्तमिति द्रष्टव्यम् ।

पूर्ववद्वा ३-२ २८

**द्वितीये जगत्कारणत्वे**ति । जातेर्जगत्कारणत्व सर्वज्ञत्वाद्यसंभवादिति भावः।

**परेत्वित्यादि, अतत्प्रधानेभ्यो हि बलीयांसी**ति । श्रुतिप्रतिपाद्ययोरेकत्वनानात्वयोः एकस्मिन् वस्तुन्यसंभवात् अन्यतरस्मिन् समाश्रयणीये, एकत्वस्य मानान्तराप्राप्तत्वेन विधेयत्वस्योचिततया एकत्वविधानाय प्रमाणान्तरसिद्धं नानात्वं तदङ्गतयाऽनूद्यत इत्यस्यैवार्थस्योचितत्वात्, भेददर्शने निन्दायाः श्रवणात्, साक्षाद्भूयसीभिः श्रुतिभिः अभेदप्रतिपादनाच्च आकारवद्ब्रह्मविषयाणाञ्च कासाञ्चित् श्रुतीनामुपासनापरत्वम्, कासांचित् द्वैतमभिधायिनीनां 'द्वा सुपर्णे' त्यादिश्रुतीनां बुद्ध्युपाध्यध्यस्तकर्तृत्वनिषेधमुखेन निर्विशेषप्रतीत्युपयोगित्वमिति अतत्प्रधानभेदश्रुतिभ्यः तत्प्रधानानामभेदश्रुतीनां प्राबल्यमित्यर्थः । **तर्हि निष्प्रपञ्चं ब्रह्म कीदृशम् ? तत्राह** इति क्वचित् पाठो दृश्यते । स तु चिन्तनीयः, "आह च तन्मात्र" इति सूत्रेणापि निष्प्रपञ्चत्वस्यैव तदन्ते प्रतिपिपादयिषितत्वेन निष्प्रपञ्चत्वं सिद्धवत्कृत्य तत् कीदृशमिति जिज्ञासायामस्य सूत्रस्यानवतारात् । **पुरश्चक्रे द्विपद** इति । पुरः = पुराणि द्विपदोपलक्षितानि शरीराणि चक्रे, पुरः = पुरस्तात्, चक्षुराद्यभिव्यक्तेः पूर्वमेव, स ईश्वरः पक्षी, लिङ्गशरीरस्य तैत्तिरीयादौ पक्षपुच्छादिसंपादनात् पक्षीति लिङ्गशरीरमुच्यते । तदभिमानी पुरुष आविशत प्रविष्ट-इत्यर्थः । ततश्चेयं श्रुतिः, "अनेन जीवेनात्मनाऽनुप्रविश्य" इत्यादिश्रुतिश्च परमात्मन एव अन्तर्भावादिति पूर्वसूत्रोक्तमुपाध्यन्तर्भावं दर्शयतीति हि सूत्रार्थ इति भावः । **अन्यस्य नास्तित्वमि**ति । ब्रह्मण इति शेषः । 'न ह्येतस्मादिति नेत्यन्यत् परमस्ती' ति वाक्यं नेतिनेतीत्यस्य निर्वचनम् । न ह्येतस्मात् ब्रह्मणः

व्यतिरिक्तमस्तीत्यतो नेतीत्युच्यते । न पुनः स्वयमेव नास्तीति कृत्वा नेतीत्युच्यत इति तस्य वाक्यस्यार्थः । ततश्च यतोऽन्यत् परं नेति प्रतिषिध्यते तस्य ब्रह्मणः सिद्धमेवास्तित्वमिति न तस्य प्रतिषेध इति भावः । **इदं वाक्यमिति** । 'न ह्येतस्मादिति नेत्यन्यत् परमिति वाक्यमित्यर्थः । **अथ नामधेयमिति वाक्यविषयमिति** । 'न ह्येतस्मादिति नेत्यन्यत् परमस्ती'ति वाक्यस्य इतिनेत्येवंरूपादेशान्यादेशनिषेधपरत्वेन ब्रह्मान्यनिषेधपरत्वाभावेन ब्रह्मपरिशेषकत्वासंभवात्, 'अथ नामधेय'मिति वाक्यस्यैव, "ब्रवीति च भूयः" इति सूत्रखण्डविषयत्वम् । तत्र हि वाक्ये, 'सत्यस्य सत्य'मिति ब्रह्मणः परमार्थसत्यत्वावेदनात् । **ब्रह्मणोऽपि सूर्यप्रकाशाद्यवैशेष्यं तत्तुल्यत्वमिति** । सूर्यप्रकाशादेः अवैशेष्यं सूर्यप्रकाशाद्यवैशेष्यम् । अवैशेष्यं=विशेषरहितत्वम्, अङ्गुल्याद्युपाधिकृतऋजुवक्रत्वादिविशेषरहितत्वमिति यावत् । संप्रतिपन्नमिति शेषः । तत्तुल्यत्वं ब्रह्मणोऽपीत्यन्वयः । सूर्यप्रकाशादिवत् ब्रह्मणोऽप्यवैशेष्यम्=निर्विशेषत्वम्, उपाधिकृतविशेषराहित्यमित्यर्थः । न तु सौत्रस्यावैशेष्यशब्दस्य तत्तुल्यत्वमित्येतत् विवरणमिति भ्रमितव्यम्; परैस्तथा अव्याख्यानात्, **प्रकाशादिवदिति** वतिप्रत्ययेनैव तुल्यत्वस्य प्रतिपादितत्वेन प्रकाशादिवच्च तुल्यत्वमित्यस्यासङ्गतत्वाच्चेति बोध्यम् । **अवस्थाभेदादिति** । उभयव्यपदेशादिति सूत्रे जीवस्य परमात्मावस्थाभेदत्वात् संराध्यसंराधकभावाविरोध उपन्यस्तः, प्रकाशाश्रयवद्वेति सूत्रे तु जीवस्य ब्रह्मैकदेशत्वेन तदंशत्वात् संराध्यसंराधकभावः समर्थित इत्यर्थः । **अर्थान्तरत्वमिति** । गन्धविधितन्निषेधश्रुत्योः प्राकृताप्राकृतगन्धविषयत्वेन विषयभेदोऽङ्गीकार्य इत्यर्थः । **सार्वज्ञ्यादीनां स्वरूपपरवाक्यसिद्धत्वादिति** । "यः सर्वज्ञस्सर्ववित्" इत्यादिवाक्यसिद्धत्वादित्यर्थः । इदमुपलक्षणम् — चतुष्पात्त्वषोडशकलत्वादीनाम्, "बुद्ध्यर्थः पादवत्" इति न्यायेनोपासनार्थानां व्यावहारिकसत्यत्वाभाववत् सार्वज्ञ्यादीनामुपासनार्थत्वे व्यावहारिकसत्यत्वाभावप्रसङ्गाच्चेति द्रष्टव्यम् । **अन्यतराप्रामाण्यमेवोक्तं स्यादिति** । उक्तं हि ।

"को हि मीमांसको ब्रूयात् विरोधे शास्त्रयोर्मिथः ।
एकं प्रमाणमितरत्त्वप्रमाणं भवेदिति" ॥

**प्रतिज्ञानुगुणहेतुसिद्धौ तु नान्योन्याश्रय** इति । साकारत्वनिराकारत्वरूपोभयलिङ्गत्वनिषेधस्य साध्यत्वे निश्चिते तदानुगुण्येन सर्वत्र निर्विशेषप्रतिपादनस्यैव हेतूकर्तुमुचितत्वेन योग्यतावशेन तस्यैवाध्याहारो युक्त इति भावः । **एकत्वेन निर्देश** इति । सदसत्त्ववदिति भावः । **अतद्वचनत्वञ्च त्वदुदाहृतश्रुतौ नास्तीति** । यद्यपि, 'यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषः, यश्चायमध्यात्मं शारीरस्तेजोमयोऽमृतमयः पुरुषः, अयमेव सोऽयमात्मे'ति प्रत्युपाधिभेदवचनेनाभेदवचनत्वरूपमतद्वचनत्वमस्त्येव — तथाऽपि न तावता निर्विशेषत्वसिद्धिः । न हि सर्वत्रावस्थितस्य ब्रह्मण एकत्वमात्रेण शास्त्रप्रतिपादितानां तेजोमयत्वादीनां मिथ्यात्वसिद्धिरिति भावः । **निर्विकारत्वानन्दरूपत्वेति** । एतद्द्वयमप्यमृतमयशब्दफलितमिति भावः । **अरूपवदित्यत्र वच्छब्दवैयर्थ्यमिति** । मतुप्प्रत्ययवैयर्थ्यमिति भावः । न विद्यते रूपमस्येति बहुव्रीहिणैव मत्वर्थस्योक्तत्वात् उक्तार्थानामप्रयोग इति न्यायेन मतुप्प्रत्ययो व्यर्थ इति भावः । यद्यपि, "उगवादिभ्यो यत्" इत्यत्र महाभाष्ये, 'अनरवन्ति चक्राणी' ति प्रयुक्तम् — तथापि यत्र बहुव्रीहिमत्वर्थयोः तुल्यार्थत्वम् , तत्र बहुव्रीहिरेव लाघवाद्भवति, यथा अगुः, अनश्व इति ; न त्वगोमान् अनश्ववानिति भवति । यत्र त्वतुल्यार्थत्वम् , तत्र कृते मत्वर्थीये तदन्तेन नञ्समासः, यथा 'अहस्तो' ति । न ह्यहस्त इत्युक्ते जातिपर्युदासप्रतीतिः । यत्रापि मत्वर्थीयेनार्थविशेषप्रतीतिः, तत्रापि तदन्तेन नञ्समासः — यथा अदण्डः, अच्छत्री, अवाग्मीति । दण्डछत्रसंयोगनिषेधस्य सम्यग्भाषितत्वनिषेधस्य च बहुव्रीहेरनवगमात् , अत एव कैयटे, "उगवादिभ्य" इत्यत्र — 'अनराणीति वक्तव्ये जातिविशेषप्रतिपत्त्यर्थो मतुम्निर्देशः । अनराणीति ह्युक्ते भग्नाराण्यपि चक्राणि प्रतीयेरन् । तस्मात् अरवत्पर्युदासेन अनुपजातारचक्रप्रतीतिः अनरवन्तीत्यनेन भवती' ति अर्थविशेषसत्त्वात् मतुम्निर्देश उपपादितः । अत्र तु अर्थभेदाभावात् मतुप्प्रत्ययो दुर्लभ इति भावः । **तात्पर्यलिङ्गावगमाच्चेति** । सद्विद्यायां सविशेषत्व एव षड्विधतात्पर्यलिङ्गस्य प्रथमसूत्र एव समर्थितत्वादिति भावः । **औपाधिकाकारयोगे दृष्टान्तत्वादिति** । ततश्च प्रकाशवच्चौपाधिकाकारयोग इत्येव सूत्रं स्यादिति भावः । **आस्त्रीबालं प्रसिद्धत्वादिति** । यद्यपि स्वपक्षेऽपि समानोऽयं दोषः — तथाऽपि

स्वपक्षे पृथिव्यादिस्थानानवस्थितिपर्यन्तत्वादाक्षेपस्य तस्य च अवश्यपरिहरणीयत्वाच्च तत्परत्वे न दोष इत्यभिप्रायः । **चिह्नपर्यायत्वाच्चेति** । न चात्र लिङ्गशब्दस्यान्यार्थदर्शनरूपलिङ्गपरत्वात् श्रुतेश्च तादृक्त्वसंभवात् न दोष इति वक्तुं शक्यम् — उक्तार्थसाक्षात्प्रतिपादकस्य, "ब्रह्म वेद ब्रह्मैव भवती" त्यस्यान्यार्थदर्शनरूपलिङ्गत्वाभावादिति भावः । **प्रकाशादिवदिति सूत्रस्य तत्प्रयुक्तजीवभेदव्युदासकत्वाभावादिति** । तथात्वे हीदं सूत्रद्वयं मतान्तरोपन्यासपरं स्यात्, तस्यैव निराकृतत्वादिति भावः ।

अपरे त्वित्यादि । **स्वापाद्यवस्थानां प्रकृतत्वादिति** । ननु भाष्ये 'भेदादिति चेन्न' इति सूत्रे देवादिदेहयोगरूपावस्थाभेदादित्येवोक्तम्; न तु स्वप्नाद्यवस्थाभेदादिति चेन्न — तत्र स्वप्नाद्यवस्थदेहयोगरूपावस्थाभेदस्यैव विवक्षितत्वेन दोषाभावादिति भावः । **अन्ये त्वित्यादि** । **मधुविद्यावाक्य** इति । बृहदारण्यके मधुविद्यावाक्ये, "यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मम्" इत्यादिभिर्वाक्यैः प्रतिपर्यायमेकत्ववचनादित्यर्थः । 'न स्थानतोऽपी' त्यारभ्य 'अरूपवदेव ही' त्यन्तं ब्रह्मस्वरूपाभेदप्रतिपादनपरमेकमधिकरणम्, प्रकाशवच्च वैयर्थ्यमित्यारभ्य प्रकृतैतावत्त्वमित्यतः प्राक् ब्रह्मणो दीप्तिमत्ताप्रतिपादनपरमेकमधिकरणम् । प्रकृतैतावत्त्वमित्यारभ्य उभयव्यपदेशादित्यतः प्राक् रूपद्वयातिरिक्तं ब्रह्मेति सिद्धान्तयन्ति । उभयव्यपदेशादित्यारभ्य 'परमतस्सेतून्माने' त्यतः प्राक् ब्रह्मजगतोरहिकुण्डलन्यायेन अत्यन्ताभिन्नतया उपादानोपादेयभावः, ईश्वरस्य तु निर्विकारत्वात् तस्य जगतश्च मणिप्रभयोरिव शक्तिमच्छक्तिविशेषरूपेण उपादानोपादेयभाव इति वर्णयन्ति । **ब्रवीति च भूयोऽपीत्युपादानादिति** । ब्रवीति च भूयइत्यस्य सूत्रखण्डस्य पूर्वोक्तार्थोपपादकत्वमभ्युपगच्छता तेन खण्डेन यदुपपादनार्हम्, तस्यैव, "प्रकृतैतावत्त्वं हि प्रतिषेधती" ति सूत्रखण्डप्रतिपाद्यत्वस्य वक्तव्यतया, ब्रवीति च भूय इति निर्दिष्टस्य, सत्यस्य सत्यमिति वाक्यार्थस्य रूपद्वयनिषेधेन प्रपञ्चातिरिक्तकारणरूपास्तित्वस्य चोपपाद्योपपादकत्वायोगादित्यर्थः ॥

इति अहिकुण्डलाधिकरणम् ।

## ( ७ ) पराधिकरणम् ।

**परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ३-२-३०.**

**उभयलिङ्गाद्ब्रह्मण** इति । यद्यप्येतदधिकरणपूर्वपक्षदशायां नोभयलिङ्गत्वं ब्रह्मणः सुपनिष्ठितम्; उभयलिङ्गस्थेमार्थत्वादस्याधिकरणस्य — तथापि पूर्वपक्षस्याति मन्दत्वादुभयलिङ्गत्वं सिद्धवत्कृत्यैवमुक्तम् । अत एव भाष्ये, **कैश्चिद्धेत्वाभासैरा-शङ्क्य**त्युक्तमिति द्रष्टव्यम् । भाष्ये **चतुष्पात् ब्रह्मे**ति । षोडशकलब्रह्मविद्यायां हि ब्रह्मणश्चत्वारः पादा निरूपिताः, — "प्राची दिक्कला प्रतीची दिक्कला, दक्षिणा दिक्कला, उदीची दिक्कला एष वै सोम्य चतुष्कलः पादो ब्रह्मणः प्रकाशवान् नाम । पृथिवी कलाऽन्तरिक्षं कला द्यौः कला समुद्रः कला एष वै सोम्य चतुष्कलः पादो ब्रह्मणः अनन्तवान्नाम अग्निः कला सूर्यः कला चन्द्रः कला विद्युत् कला एष वै सोम्य चतुष्कलः पादो ब्रह्मणः ज्योतिष्मान्नाम । प्राणः कला चक्षुः कला श्रोत्रं कला मनः कला एष वै सोम्य चतुष्कलः पादो ब्रह्मण आय-तनवान्नाम" इति । गवां पादेषु पुरस्तात् द्वौ खुरौ पश्चात् द्वौ पार्ष्णी इत्ये-कैकस्मिन् पादे चत्वारश्चत्वारः खुरांशाः सन्ति । ते कलाशब्देनोच्यन्ते, प्राची प्रतीची दक्षिणोदीची दिगिति चतस्रः कलाः = अवयवा इव कलाः । स प्रकाशवान् प्रथमः पादः=तदुपासनायां प्रकाशवान् उपासको भवतीति प्रकाशवान् पादः । पृथिव्यन्तरिक्षं द्यौःसमुद्र इति चतस्रः कलाः । एष द्वितीयः पादोऽनन्त-वान्नाम । सोऽयमनन्तवत्त्वेन गुणेनोपास्यमानोऽनन्तवत्त्वमुपासकस्यावहतीति अनन्त-वान् पादः । अग्निः सूर्यश्चन्द्रो विद्युदिति चतस्रः कलाः । स ज्योतिष्मान्नाम तृतीयः पादः । तमुपासीनो ज्योतिष्मान् भवतीति ज्योतिष्मान् पादः । प्राणश्चक्षुः श्रोत्रं मन इति चतस्रः कलाः चतुर्थः पादः आयतनवान्नाम । तदुपासनादायतनवान भवतीत्यायतनवान्नाम पादः । तदेवं चतुष्पाद्ब्रह्म अष्टाशफं, षोडशकलम् ।

भाष्ये **अनुन्मितस्यास्तितां द्योतयती**ति । नन्वेतस्योन्मितत्वमात्रेण तत्प्राप्यस्य कथमनुन्मितत्वम् । न ह्युन्मितेन मृद्दार्वादिप्रचयात्मकेन सेतुना प्राप्यस्य प्रदेशान्तरस्यानुन्मितत्वमस्तीति चेत् — मैवम् । यत्प्राप्यं मोक्षशास्त्रेषु अपरिमितं प्रसि-

द्भम, तस्यानेन सेतुना प्राप्यस्वरूपभेदेनास्तितां द्योतयति । चतुष्पात्त्वादेनोन्मितत्वात् ब्रह्मण, वेदान्तप्रसिद्धादनुन्मितात् प्राप्यात् भेदोऽवसीयत इति पर्यवसितोऽर्थ इति भावः ॥

सामान्यात्तु ३ २-३१.

भाष्ये – **सेतुसामान्येनेति** । अत्र **समान्य**शब्दो भावप्रधानः । सर्वलोकासङ्करकारित्वस्य, 'एषां लोकानामसंभेदाये'ति श्रुतौ साधारणधर्मत्वेन श्रवणात् तद्गुणयोगेन तत्र सेतुशब्दो गौण इत्यर्थः ॥

बुद्ध्यर्थः पादवत् ३ २-३२.

भाष्ये–**पादोऽस्य विश्वा भूतानीति** अत्र पादशब्दस्यांशपरत्वेन स्वरूपोपदेशपरत्वात् बुद्ध्यर्थत्वोक्तिः प्रौढवादेनेति द्रष्टव्यम् । भाष्ये **ब्रह्मणो वागादिपादव्यपदेश उपासनार्थ** इति । ब्रह्मप्रतीकस्य मनस आकाशस्य वा वागादिपादव्यपदेश उपासनार्थ इत्यर्थः । एवं हि श्रूयते – "मनो ब्रह्मेत्युपासीतेत्यध्यात्मम । अथाधिदैवतमाकाशो ब्रह्मेति । उभयमादिष्टं भवत्यध्यात्मं चाधिदैवतं चेति । तदेतत् चतुष्पात् ब्रह्म, वाक् पादः प्राणःपादः चक्षुःपादः श्रोत्रं पादइतीत्यध्यात्मम् । अथाधिदैवतम् । अग्निःपादो वायुः पाद आदित्यः पादो दिशः पाद इत्युभयमादिष्टं भवति, अध्यात्मं चाधिदैवतं चेति । तदेतत् चतुष्पाद्ब्रह्म" । तदेतन्मनआख्यं ब्रह्म चतुष्पात् – चत्वारः पादाः अस्येति । कथं चतुष्पात्त्वं मनोरूपस्य ब्रह्मण इत्यत आह – वाक्पाद इत्यादि । मनो हि वक्तव्य - घ्रातव्य - द्रष्टव्य - श्रोतव्यान् गोचरान् वागादिभिः सञ्चरते इति सञ्चरणसाधनतया मनसः पादाः । आकाशस्य ब्रह्मप्रतीकस्य अग्निर्वायुरादित्यो दिश इति चत्वारः पादाः । ते हि व्यापिनो नभस उदर इव गोः पादा विलग्ना उपलक्ष्यन्त इति भावः । ततश्च अध्यात्मब्रह्मप्रतीकस्य मनस अधिदैवतब्रह्मप्रतीकस्य चाकाशस्य च वागादिपादत्वव्यपदेशो यथा वस्तुतो मनस आकाशस्य वा वागादिपादत्वासंभवात् उपासनार्थः – तथा ब्रह्मणोऽपि चतुष्पात्त्वषोडशकलत्वाद्युपदेश उपासनार्थ इति भावः ।

**निखिलजगत्कारणस्येश्वरस्येति** । निखिलजगत्कारणेश्वरप्रतीकस्य मनस आकाशस्य वेत्यर्थः ॥

तथाऽन्यप्रतिषेधात् ३-२ ३५.

तत्रैवेति व्याख्येयं पदम् । **समाधिकनिषेधः कुतः स्यादिति** । अयमेव सर्वस्मात्परः अतोऽन्यस्सर्वस्मात् परो नास्तीत्युक्तेः समाधिकनिषेधः सिध्यतीत्यर्थः । **परत्वेन विवक्षितेति** । **अपरं** परभूतरुद्रव्यतिरिक्तं यस्मात्परं नास्तीत्यर्थः । अपरशब्दाभावे हि रुद्रस्यापि परत्वनिषेधप्रसङ्गः । अतोऽपरशब्दस्यार्थवत्त्वमिति भावः । **अनन्यथासिद्धसङ्कोचकाभावादिति** । अपरशब्दस्य यस्मादिति श्रुतपञ्चम्यन्तपदान्वयेनैव समाभ्यधिकनिषेधकतया सप्रयोजनत्वसंभवेन अन्यथासिद्धत्वेनापरशब्दो न सङ्कोचक इति भावः । **तस्यान्यथासिद्धिः कथमित्याहेति** । अन्यथासिद्धिं वक्तुं प्रश्नमवतारयतीत्यर्थः । **अतो निधायेति** क्त्वाप्रतिपाद्यनिधानसमानकर्तृकत्वोपपत्तिरिति द्रष्टव्यम् ।

उपपत्तेश्च ३-२-३६.

उपपत्तेश्चेति सूत्रार्थमाह—**ईदृश इति** । न ह्यनपायिना स्वरूपेण सम्बन्धः संयोगादिर्भवितुमर्हतीति; अपि तु भेदोपशमरूप एवेत्यर्थः । **न हि कारणमेवेति** । यदि हि कारणमेव सेतुः, कार्यमेव तत्प्राप्यमिति नियमः स्यात्, तदा सेतुतत्प्राप्यभेदसाधकस्य कार्यकारणभेदसाधकत्वमपि भवेत् ; न त्वेतदस्तीति भावः । **तस्य भेदरूपत्वाभावादिति** । सर्ववस्तुसामानाधिकरण्यानर्हत्वस्यैव वस्तुपरिच्छेदरूपत्वादित्यर्थः । **अन्यथा ईश्वरद्वयप्रसङ्गादिति** । **अन्यथा** स्वरूपभेदाभ्युपगम इत्यर्थः ॥ इति पराधिकरणम् ।

---

## ( ८ ) फलाधिकरणम् ।

फलमत उपपत्तेः ३-२-३७.

**सर्वस्मात्परत्वं प्राप्यतरमिति** पाठो दृश्यते । तस्यायमर्थः—प्राप्यत्वोपयुक्तं सर्वस्मात्परत्वं तत्कल्याणगुणाकरत्वान्तर्भूतमपीति । आयुर्घृतमितिवत् अभेदोपचारात् सामानाधिकरण्यनिर्देशः । **तच्च कल्याणगुणगण इति** । अन्तर्भूतमिति शेषः । समूहसमूहिनोरभेदोपचाराद्वा सामानाधिकरण्यनिर्देशः । **कल्याणगुण इति**

पाठे तु नानुपपत्तिः । **अत्र तु द्वारविशेषो निरूप्यत इति भिदे**ति । अतो न पूर्वोत्तरविरोधः, तत्र धर्मस्य द्वारतायाः कण्ठतोऽनुक्तेरिति भावः । **उत कर्मोपासनाराधितादि**त्यादि । अत्र कर्माराधितत्वं वाय्वादिदेवतारूपस्य, उपासनाराधितत्वं केवलस्य ब्रह्मण इति योग्यतावशेन यथाक्रमेण संबन्धः । यथा "शीतोष्णस्पर्शगुणकं जलं तेजश्चे"ति निर्देशे इति द्रष्टव्यम् । भाष्ये **न ह्यचेतनं कर्म क्षणध्वंसि कालान्तरभाविफलसाधनं भवितुमर्हती**ति । अयं भावः । किं कर्मजनितस्यापूर्वस्य फलसाधनत्वम्, उत कर्मण एव तावत्पर्यन्तमवस्थायित्वं, उत फलस्यापि कर्मानन्तरमेवोत्पत्तिरित्यभ्युपेयते, उत विनष्टस्यैव कर्मणः कार्यार्जकत्वमिति चतुर्धा विकल्पमभिप्रेत्य प्रथमं दूषयति भाष्ये **न ह्यचेतन**मिति । यद्यदचेतनं तत्सर्वं चेतनाधिष्ठितमेव प्रवर्तत इति प्रत्यक्षागमाभ्यामवधारितत्वात् नापूर्वस्य फलहेतुत्वमित्यर्थः । द्वितीयं दूषयति–**कर्म क्षणध्वंसी**ति । तृतीयं दूषयति – **कालान्तरभावी**ति । अधुना स्वर्गोत्पत्तेर्बाधितत्वादिति भावः । चतुर्थं दूषयति – **भवितुमर्हती**ति । विनष्टस्यापि कार्यार्जकत्वे अतिप्रसङ्गः स्यादिति भावः ॥

धर्मं जैमिनिरत एव ३-२-३९.

भाष्ये – **कृष्यादिकं गात्रमर्दनादिकं चे**ति । गात्रमर्दनादिकं साक्षात्सुखहेतुः ; कृष्यादिकं तु परम्परया । **शास्त्रं दर्शयति एवं वेदेऽपी**ति क्वचित् पठ्यते । स तु न समीचीनः । **शास्त्रं दर्शयति, तथा यजेते**ति बहुषु कोशेषु दृष्टः पाठः समीचीनः ॥

पूर्वं तु बादरायणो हेतुव्यपदेशात् ३-२-४०.

**अपगोरणशतयातनासाध्यसाधनभावे**ति । **अपगोरणं** वधोद्यमः । **शतयातना** नरकविशेषः । "यो ब्राह्मणायापगुरेत् तं शतेन यातयात् । तस्माद्ब्राह्मणाय नापगुरेते"ति निषेधविधेरर्थवादः । तत्र च, "हेतुहेतुमतोर्लिङ्" इत्यनुशासनबलात् अपगोरणशतयातनयोः साध्यसाधनभावस्य अर्थवादप्रतिपन्नस्य स्वीकारादित्यर्थः ॥ **शर्कराञ्जनद्रव्यपशुविशेषादि**रिति । अत्र विशेषशब्दः शर्कराञ्जनद्रव्येणापि संबध्यते । "अक्ताः शर्करा उपदधाती"त्यत्र शर्कराञ्जनसाधन-

ज्योतिर्न तदा ज्योतिरेषाम् " इति, " यथाऽतिथये प्रद्रुतायान्नं हरेयुः, तादृक् तत्, यदुदिते जुह्वती " ति च शाखाभेदेन उदितानुदितहोमयोः परस्परनिन्दा। प्रद्रुताय = निर्गतायेत्यर्थः। ततश्च यस्यां शाखायां यत् कर्म निन्द्यते, तत् कर्म तच्छाखाविहितात् कर्मणो भिन्नमित्यर्थः। अशक्तिः सर्वशाखागतानामङ्गानामेकत्रोपसंहारे। मैत्रायणीयानामन्वारोहसंज्ञकेषु स्थलारोहणमन्त्रेषु अग्निः समाप्यते; अन्यत्रान्येषामिति समाप्तिभेदः। केषाञ्चित् शाखायाम् उदितहोमव्यतिक्रमे प्रायश्चितम्; केषाञ्चिदनुदितहोमव्यतिक्रम इति प्रायश्चित्तभेदः। कर्मभेदे उदितानुदितहोमविधानं वैकल्पिकत्वेनोपपन्नमिति उभयथाप्यवैगुण्यात् प्रायश्चित्तविधानमनर्थकं स्यात्। एवं नामभेदादिभिः शाखाभेदे कर्मभेदः। अन्यार्थदर्शनाच्च। तथाहि — द्वादशाहे श्रूयते — यदि पुरा दिदीक्षाणाः स्युः बृहत्सामानमतिरात्रमुपेयुः, उपेतं ह्येषां रथन्तरम्। अथ यदि अदिदीक्षाणा रथन्तरसामानमतिरात्रमुपेयुः " इति। पुरा दिदीक्षाणाः, पूर्वं दीक्षितवन्तः, लिटः कानचि द्विर्वचनम्। अत्र अनिष्टप्रथमयज्ञानां द्वादशाहदर्शनं शाखाभेदेन द्वादशाहभेदे लिङ्गम्। कथम्? ताण्डिशाखायाम्, " य एतेनानिष्ट्वा " इत्यादिना सर्वक्रतूनां ज्योतिष्टोमपश्चाद्भावोऽङ्गतया विहितः। यदि प्रतिशाखं द्वादशाहादयः क्रतवो भिन्ना न स्युः, तदा एक एव द्वादशाहो नानाशाखासु विहित इति तस्य ज्योतिष्टोमपूर्वत्वनियमात् अनिष्टप्रथमयज्ञस्य द्वादशाहदर्शनं नोपपद्यते। यदि प्रतिशाखं ते भिन्नाः, तदा ताण्डिशाखायाम्, " अथान्येन यजेत " इत्यन्यशब्दस्य ताण्डिशाखागतद्वादशाहादिक्रत्वन्तरविषयत्वोपपत्तेः शाखान्तरगतद्वादशाहादीनां ज्योतिष्टोमपाश्चात्यत्वस्याविधानात् यस्यां शाखायामनिष्टप्रथमयज्ञस्य द्वादशाहदर्शनम्, तच्छाखागतद्वादशाहविषयत्वेन तदुपपद्यत इति। एवं नामभेदादिहेतुभिः प्रतिशाखमग्निहोत्रादिकं भिद्यत इति पूर्वपक्षे कृते — " एकं वा संयोगरूपचोदनाख्याविशेषात् " इति सूत्रितम्। अस्य सूत्रस्यायमर्थः — सर्वासु शाखासु एकमग्निहोत्रादिकं कर्म स्वर्गादिफलसंयोगस्य, रूपाख्यस्य द्रव्यदेवतस्य, जुहोत्यादिचोदनायाः, अग्निहोत्राद्याख्यायाश्च ऐक्येन तेषामभेदप्रत्यभिज्ञापकानामविशेषादिति। तथा काठककौथुमादीनि शाखानां नामानि; न तु कर्मणाम्। अतो नामभेदात् शाखा

एव भिद्येरन्; न कर्माणि। न चात्र विनिगमनाविरहः। कौथुमादिशब्दानामेकैकशाखानामत्वेन तदाम्नातेषु कर्मसु लाक्षणिकत्वोपपत्तौ तावत्सु कर्मसु प्रत्येकं शक्तिं कल्पयित्वा तत्सम्बन्धात् शाखायां लक्षणाकल्पनस्य गौरवपराहतत्वात्। यथाहुः –

" शाखया ह्येकया योगात् बहुकर्मावबोधनम्।
युज्यते कर्मनानात्वे नैकशाखोपलक्षणम्॥ "

इति। किञ्च कौथुमशब्दः कुथुमिना प्रोक्त इत्यर्थे प्रोक्तप्रत्ययान्तः प्रवचननिमित्तकः। न च प्रवचनं शब्दादन्यस्य संभवति; तस्य शब्दविषयकत्वात् वाजसनेयकशब्दोऽपि आम्नायविशेषपरः। " शौनकादिभ्यश्छन्दसी " ति शौनकादिगणपठितात् वाजसनेयशब्दात् तेन प्रोक्तं छन्द इत्यस्मिन् अर्थे णिनिप्रत्यये तदन्तस्य, " छन्दोब्राह्मणानि च तद्विषयाणि " ति सूत्रेणाध्येतृवेदितृविषयत्वनियमेन, तदधीते तद्वेदेत्यर्थे विहितस्य प्राग्दीव्यतीयप्रत्ययस्य, " प्रोक्ताल्लुक् " इति लुकि वाजसनेयेन प्रोक्तमधीयते विदन्ति वेति वाजसनेयिन इति रूपं भवति। ततस्तेषामाम्नाय इत्यर्थे विवक्षिते, " गोत्रचरणाद्वुञ् " इति सूत्रेण " तस्येदम् " इत्यविशेषेण शैषिकेष्वर्थेषु प्राप्तस्य, " चरणाद्धर्माम्नाययोः " इति वार्तिकेन अनयोरर्थयोरेव भवतीति नियमात् तयोरर्थयोः वुञि कृते, " नस्तद्धिते " इति टिलोपे च सति वाजसनेयमिति रूपनिष्पत्तेः। एवं कौथुमादिशब्दानां शाखानामत्वम्; न तु कर्मनामत्वमित्येवं नामादिपूर्वपक्षहेतवः, " न नाम्ना स्यादचोदनाभिधानत्वात् " इत्यादिभिः शाखान्तराधिकरणगुणसूत्रैः निराकृता इति।

**एकस्यामपि शाखायामि**ति छेदः। **अपि**शब्दः शाखाभेदे कैमुतिकन्यायसूचनार्थः। **शिरोव्रतस्ये**ति। शिरस्यङ्गारपात्रधारणस्येत्यर्थः। ननु शाखान्तराम्नाताक्षरब्रह्मविद्याया मुण्डकाम्नाताक्षरब्रह्मविद्यैक्येऽपि आथर्वणिकमात्राधिकारिकशिरोव्रताङ्गत्वानुरोधेन आथर्वणिकमात्राधिकारिका विद्यापीति अधिकारिसंकोचोऽस्तु; यथा, " ऋद्धिकामाः सत्रमासीरन् " इत्यविशेषश्रवणे सत्रे, " ये यजमानास्ते ऋत्विज " इति ब्राह्मणकर्तृकेषु आर्त्विज्यकर्मसु यजमानानां कर्तृत्वविध्यनुरोधेन ब्राह्मणानामेव अधिकारः। तत्रापि " राजन्यवासिष्ठानां नाराशँसो द्वितीयः

प्रयाजस्तनूनपादन्येषाम् '' इति प्रयाजेषु कल्पभेदश्रवणात् सर्वेषां यजमानानां तद्वैगुण्यानुरोधेन तुल्यकल्पनामेवाधिकारः। तत्रापि, 'वैश्वामित्रो होते' ति वचनाद्वैश्वामित्रतुल्यकल्पानामेवाधिकार इति अङ्गानुरोधेन प्रधानाधिकारसङ्कोचदर्शनात्। तथा च मुण्डके शाखान्तरेषु च अक्षरविद्याया एकत्वेऽपि सा विद्या आथर्वणिकमात्रानुष्ठेयैव; शिरोव्रताङ्गस्यान्यत्राभावात्। तेषां मुक्तिस्तु दहरवैश्वानर(?) विद्यान्तराद्भवतीति चेन्न — शाखान्तरोक्ताक्षरविद्याया मुण्डकोक्ताक्षरविद्यातो भेदेन अधिकारासङ्कोचोपपत्तेः तत्संकोचकल्पनस्यान्याय्यत्वात्। न च चोदनाद्यविशेषाद्भेदसिद्धेः तत्सङ्कोचकल्पनम्। तस्याभ्यासादिभिर्बाधितत्वादिति भावः।

**प्रतीयमानमित्यर्थ** इति। इण् गताविति धातोः कर्मणि, '' एरच् '' इत्यच् प्रत्ययः। न च अच्प्रत्ययान्तत्वे '' घञजपाः पुंसी '' ति पुल्लिङ्गत्वं शङ्क्यम् — तस्य भावविषयत्वादिति भावः॥

## भेदान्नेति चेदेकस्यामपि ३-३-२.

ननु विधेयभेदान्न विद्यैक्यमित्यसङ्गतम, साध्याविशेषादित्याशङ्क्याह — **विधेयं सामान्यमिति**। वस्तुतस्तु भेदनैक्याभावसाधने न साध्याविशेषशङ्का। न चैक्याभावातिरिक्तभेदस्याभावात् कथं न साध्याविशेषशङ्केति वाच्यम् — वस्तुतः तस्यैकत्वेऽपि भेदत्वैकत्वाभावस्वरूपधर्मभेदमादाय साध्यसाधनभावोपपत्तेः॥ इतरथा देवदत्तयज्ञदत्तयोर्भेदात् नैक्यमित्यादौ सामान्यविशेषभावरूपपरिहारस्याप्रवृत्त्या साध्याविशेषप्रसङ्गात्। परमार्थतस्तु, **प्रकरणान्तराच्च विधेयभेदप्रतीतेर्न विद्यैक्यमित्येतदनुवादरूपत्वेन** विधेयभेदशब्दस्य प्रतीतिपरत्वात् न साध्याविशेष इति द्रष्टव्यम्। **प्रकरणभेदो नास्तीति च परिहार्यमिति**। मासाग्निहोत्र इवानुपादेयगुणसमभिव्याहृतासंनिधिलक्षणप्रकरणान्तराभावादिति भावः॥

## स्वाध्यायस्य तथात्वे हि समाचारेऽधिकाराच्च सववच्च तन्नियमः ३-३ ३.

अत्र, '' स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च '' इति परैः सूत्रं पठित्वा, '' शिरोव्रतं स्वाध्यायस्य धर्मः। तथात्वेन = तद्धर्मत्वेनैव वेदव्रतोपदेशपरे समाचाराख्ये ग्रन्थे आथर्वणिकैः, इदमपि वेदव्रतत्वेन व्याख्यातम् ''इति समाचारग्रन्थ-

पाठोऽप्यन्यथा पठितः । भाष्यकृता तु बोधायनवृत्तिपाठमनुसृत्य तथात्वेहीति पाठ आदृतः । समाचारग्रन्थपाठोऽपि, "वेदव्रतेन" इत्येव ; न तु वेदव्रतत्वेनेति । शिरोव्रतमुपदिश्य व्रतान्तरं प्रस्तुत्य, "इदमपि वेदव्रतेन व्याख्यातम्" इति निर्देशे शिरोव्रतस्य वेदव्रतशब्देन निर्देशे किं प्रमाणम् ? वेदव्रतानामितरेषां बहूनाम्, "चत्वारि वेदव्रतानि" इत्युक्तानां सत्त्वादिति चेन्न – पूर्वपूर्वधर्मातिदेशप्रकरणत्वेन एतस्यापि तत्प्रकरणस्थत्वादिति भाव इति केचित् ।

भाष्ये **ब्रह्मविद्यां वेदविद्यामित्यर्थ** इति । ननु "नैतदचीर्णव्रतोऽधीयीते" ति अग्रिमवाक्यानुसारेण कथं ब्रह्मविद्याशब्दो वेदरूपविद्यास्थानपरतया व्याख्यायते ? उपसंहारानुसारेण उपक्रमस्यान्यथानयनासंभवात् । विरोधाभावाच्च । अध्ययनाङ्गस्यैव सतः संयोगपृथक्त्वेन विद्याङ्गत्वस्यापि सम्भवात् । तेषामेवैतामित्यनेनापि अध्ययनाङ्गत्वस्य बोधने अग्रिमवाक्येन पौनरुक्त्यापत्तेश्चेति चेन्न – मुण्डकोपनिषदुपक्रमे "द्वे विद्ये वेदितव्ये इति ह स्म यत् ब्रह्मविदो वदन्ति परा चैवापरा च । तत्रापरा ऋग्वेदो यजुर्वेदस्सामवेदः शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषमितिहासपुराणं न्यायो मीमांसा धर्मशास्त्राणीति । अथ परा यया तदक्षरमधिगम्यते" इत्यत्र प्रकरणे विद्याशब्दो विद्यास्थानपरोऽवगतः । तदनुसारेणोपसंहारेऽपि तस्य तादर्थ्ये स्थिते निषादस्थपतिन्यायेन समानाधिकरणसमासस्याभ्यर्हितत्वात् ब्रह्मशब्दः प्रकृतमुण्डकोपनिषद्रूपवेदपरो मुख्यार्थो व्याख्येयः । षष्ठीसमासेन मुख्यार्थो वा अस्तु । न च, "नैतदचीर्णव्रतोऽधीयीत" इत्यग्रिमवाक्येन पौनरुक्त्यम् । अग्रिमवाक्यमचीर्णव्रतस्याध्यापननिषेधपरम् । शूद्रविषयाध्ययनाध्यापनविषयनिषेधवाक्ययोरिव विषयभेदसत्त्वेन पौनरुक्त्याभावात् ।

एतेन, "ब्रह्मविद्योपदेशस्य योग्यं वक्ष्यामि सुव्रत" इत्युपक्रम्य, "विधिवच्छ्रद्धया सार्धं न चीर्णं यैः शिरोव्रतम् । ब्रह्मविद्यामिमां तेषां न वदेत कदाचन । इदं शिरोव्रतं चीर्णं विधिवत् यैर्द्विजातिभिः । तेषामेव वदेद्विद्यां वदेदज्ञान बाधिकाम् । शिरोव्रतमिदं नाम्ना शिरस्याथर्वणश्रुतेः । अग्निरित्यादिभिर्मन्त्रैः षड्भिः शुद्धेन भस्मना । सर्वाङ्गोद्धूलनं कुर्यात् शिरोव्रतसमाह्वयम् ॥" इति सौरसंहिता-

वचनात्, भस्मोद्धूलनमेव शिरोव्रतशब्दवाच्यम्; तच्च सर्वब्रह्मविद्याङ्गमिति वदन्तः सूत्रविरोधान्निरस्ताः। तामसपुराणगतस्य प्रक्षेपशंकास्पदस्य तादृशवचनस्य सर्वसम्प्रतिपन्नशारीरकसूत्रविरोधे उपेक्षणीयत्वात्। न च मुण्डकाध्ययनस्याथर्वणिकमात्रानुष्ठेयशिरोव्रताङ्गकत्वविधिपरत्वे अस्य वाक्यस्य बह्वृचत्वेन प्रसिद्धस्य शौनकस्य कथं मुण्डकोपनिषदध्ययनम्, तस्याचीर्णशिरोव्रतत्वादिति शङ्क्यम् — शौनको बह्वृच एवेत्यत्र प्रमाणाभावात्। सामगाचार्यवंशेऽपि शौनकस्य गणनदर्शनाच्चेति।

**परेत्वित्यादि**। **रूपभेद**मिति। पञ्चाग्निविद्यायां पञ्चत्वषट्त्वरूपसंख्यात्मकरूपभेदमित्यर्थः। **भूमिभोजनादिव**दिति। कारीर्याद्यध्ययने भूमिभोजनवदित्यर्थः। **शाखान्तरसंख्याप्रक्रियाश्चे**ति। ननु पञ्चाग्निविद्यागतसंख्याभेदस्य रूपभेद एवान्तर्भूतत्वात्, "सप्तदश प्राजापत्यान् पशूनालभेत" इति, "तिस्र आहुतीर्जुहोती"त्यादिवत् कर्मसमवायिसंख्यात्वाभावेन शब्दान्तरादिकर्मभेदषट्कान्तर्गतसंख्यारूपत्वाभावेन गुणभेदरूपतयैव अस्य भेदकत्वस्य वक्तव्यतया रूपभेदात् पार्थक्यमनुपपन्नम्। परैरपि संख्याभेदस्य रूपभेदान्तर्भूततयैवोदाहृतत्वाच्चायमनुक्तानुवाद इति चेन्न — आनन्दगिरिणा शाखान्तरसंख्याप्रक्रिया इत्युदाहृतत्वात् अत्रापि बहुषु कोशेषु तथोपलम्भाच्च तदनुवादरूपोऽयम्। तदुक्तानुवादरूपत्वाच्च नाक्षेपान्तरस्याप्यवकाश इति द्रष्टव्यम्॥ **रेतो वै प्रजापति**रिति। रेतः = प्रजननेन्द्रियम्। प्रजननगुणविशिष्टमित्यर्थः। **इत्यादिने**ति। 'रेतो वै प्रजापतिः प्रजायते ह प्रजया पशुभिः, य एवं वेद' इत्यनेनेत्यर्थः॥ **साम्पादिकाग्न्यभिप्रायेणे**ति। साम्पादिकः सम्पत्प्रयोजनकः उपास्तिफलक इत्यर्थः। उपास्त्यर्थं कल्पितानग्नीन् आमनन्तीत्यर्थः। **षष्ठस्त्व**ति। "तस्याग्निरेवाग्निर्भवति समित् समित" इत्यादिना आम्नातो यः स्वाभाविकाग्निः स छन्दोगैः उपसंहर्तुं शक्यते। पञ्चत्वसंख्यायाः साम्पादिकत्वाभिप्रायत्वेन पञ्चत्वसंख्याविरोधाभावादित्यर्थः। **अथ तस्य भयं भवती**ति। "यदा ह्येवैष उदरमन्तरं कुरुते, अथ तस्य भयं भवति। तत्त्वेव भयं विदुषोऽमन्वानस्य" इति हि श्रुतिः। तन्मते अस्य वाक्यस्यायमर्थः। एषोऽधिकृतः पुरुषः एतस्मिन्नात्मनि उत् अरमन्तरं — भेदम्, अल्पमपि भेदं यदा

कुरुते, अथ तदा तस्य भयं भवति तत्र तु एव—ब्रह्मैव विदुषः कृतश्रवणस्य अमन्वानस्य मननमकुर्वाणस्य, भयं भयहेतुर्भवतीत्यर्थः । **यस्त्वेतमेव प्रादेशमात्रमिति** । वाजसनेयके – तथा तत्त्वैतान् वक्ष्यामि यथा प्रादेशमात्रमेवाऽभिसम्पादयिष्यामी'ति प्रतिज्ञापूर्वकम्, 'स होवाचे' त्यादेः आरब्धत्वेन छान्दोग्येपि समानप्रकरणे मूर्धचिबुकान्तरालप्रतिष्ठितत्वलभ्यस्यैव प्रादेशमात्रत्वस्य ग्राह्यत्वमिति सिद्धवदुपादानाच्चेत्यर्थः । **अग्निहोत्रादिधर्मपरत्वेनेति** । अग्निहोत्रादेरङ्गभूतो धर्मः अग्निहोत्रधर्मः ।

**परं**[1]**ज्योतिःप्राप्तेरिति** । "नित्यं समासेऽनुत्तरपदस्थस्य" इति षत्वमुत्तरपदस्थत्वान्न भवति । "इसुसोः सामर्थ्ये" इत्यस्य तु वैकल्पिकत्वात् तदभावे रूपम् । परंशब्दश्च विभक्तिप्रतिरूपकनिपाताव्ययम् । यद्वा परञ्ज्योतिरित्यनुकरणशब्दः, परं कार्यत्वायेतिवत । तस्मिंश्च पक्षे शब्दान्तरत्वान्न सुपो लुक् । यथा अस्यवामीयं कयाशुभीयमिति । इस्प्रत्ययान्तत्वाभावाच्च न षत्वप्राप्तिरिति द्रष्टव्यम् । **साधारणपूर्वपक्षत्वानुपयोगादिति** । अभ्यासप्रकरणान्तरवदत्यन्तोपकाराभावादिति भावः । न तु सर्वात्मना उपयोगाभाव इति भ्रमितव्यम् ; तथाहि सति अग्निहोत्रादिसाधारणपूर्वपक्षहेतुतया नामरूपधर्मविशेषे इत्यादि सूत्रयतो जैमिनेरज्ञत्वप्रसङ्गः । एवं गुणभेदाद्यधीनेत्याद्युत्तरग्रन्थस्यापि अत्रैव तात्पर्यं द्रष्टव्यम् । इतरथा पूर्वतन्त्रेपि गत्यभावादिति । **विद्यानामत्वेन प्रसिद्ध्यभावादिति** । कर्मनामत्वेन प्रसिद्धिसंभवात् तदादाय पूर्वतन्त्रे कर्मभेदपूर्वपक्षस्योत्थापनम्, "न नाम्ना स्यादचोदनाभिधानत्वात" इति परिहारश्च युज्यते । इह तु विद्यानामत्वप्रसिद्ध्यभावात् न तस्य पूर्वपक्षहेतुत्वेनोपन्यासः शक्यत इत्यर्थः । **उपासनविच्छेदस्येति** । 'तत्त्वेव भयम्' इत्यत्र तच्छब्देन ब्रह्मणो न परामर्शः ; अपितु उपासनविच्छेदस्यैव ; अन्तरशब्दस्य विच्छेदवाचित्वात् । अयञ्चार्थः प्रथमसूत्र एव वर्णितः । **उपजीव्योपजीवकभावाभावेनेति** । भाष्योदाहृतस्य, 'तत्रापि दहृम्' इति तैत्तरीयकवाक्यस्य छान्दोग्यदहरविद्यावाक्यस्य च उपजीव्योपजीवकभावाभावादित्यर्थः । **पूर्वप्रतिपादितस्यानुवादेनेति** । इदमुपलक्षणम् । मूर्धचिबुकान्तरालप्रतिष्ठितत्व-

---

1. परंज्योतिरित्यपि टीकापाठः ।

लभ्यं वाजसनेयोक्तं प्रादेशमात्रत्वमिह नोपजीव्यम् । द्युपृथिव्यादिप्रदेशसंबन्धिन्या मात्रया परिच्छिन्नत्वलक्षणप्रादेशमात्रत्वस्यैव छान्दोग्ये प्रतिपादनादिति भावः ।

**अन्येत्वित्यादि पृथगधिकरणमाहुरि**ति । ननु परैरपि पृथगधिकरणत्वमेवोक्तम् । भामत्यां पूर्वोत्तरपक्षयोः स्पष्टमाम्नानादिति चेन्न — इदं प्रयोजनसूत्रमिति तद्भाष्यस्वारस्यविरुद्धत्वात् तदनादृतमिति द्रष्टव्यम् । **अज्ञानमूलत्वायोगा**दिति । ततश्च शाखान्तरे तदनुक्तितः कर्मैक्येऽप्यनपेक्षितत्वं ज्ञापयतीति भावः । **कार्याभावायोगाच्चे**ति । कृष्णलश्रपणवत् उपदेशे सति प्रयोजनस्यापि कल्प्यत्वात् । ततश्च सर्वशाखागतानामुपसंहारस्यावश्यकत्वप्रसङ्गः । न च स युज्यते । ब्रह्मणाऽप्यशक्यानुष्ठानत्वादिति पूर्वपक्ष्यभिप्रायः । **प्रतिकल्प**मिति । अत्र कल्पशब्दः तत्तदृषिप्रोक्तकल्पाभिप्रायः ।

इति सर्ववेदान्तप्रत्ययाधिकरणम् ॥



## (२) अन्यथात्वाधिकरणम् ।

**अन्यथात्वं शब्दादिति चेन्नाविशेषात् ३-३-६.**

इति **सङ्गति**रिति । पादशेषसंगतिरित्यर्थः । **आसन्न्यम्** । असन्नमिति स्वार्थे ष्यञ् इति भावः । **मुख्यमित्यर्थ** इति । लोके हि श्रेष्ठ आसन्नो भवति । अतस्तेन मुख्यत्वं लक्ष्यते । केषुचित् कोशेषु **आसन्यं मुख्यमित्यर्थ** इति पठ्यते । तदा आस्ये भवमासन्यमित्यर्थः । शरीरावयवात् यत् । पद्न्निति आस्यशब्दस्यासन् आदेशः । **आखन्यत इति आखण**मिति । अत्र छान्दसं णत्वम् । अत्र चोदयन्ति — "खनो घ च" इति घप्रत्ययस्य करणाधिकरणयोरित्यनुवृत्त्या कर्मण्यभावात् करणार्थे एव घप्रत्ययो वक्तव्यः । अत आखणशब्दस्याश्मविशेषणत्वमेव वक्तव्यम् । खननसाधनतया दृढमश्मानं प्राप्य यथा लोष्टादि विध्वंसत इति हि तस्यार्थः । अत एव वाक्यशेषे, "स एषोऽश्माखण" इत्यश्मविशेषणत्वमेव आखणशब्दस्य श्रूयत इति — ते प्रतिवक्तव्याः । वाजसनेयके, समानप्रकरणे, "यथाश्मानमृत्वा लोष्टो विध्वंसते" इति श्रवणेन तत्समानार्थत्वस्य वक्तव्यतया

अस्खगशब्दस्य लोष्टवाचित्वस्यैव बहुलवचनात् कर्मसाधनतया वक्तव्यत्वात् । इतरथा कर्तृवाचिपदाध्याहारप्रसङ्गात् । "स एषोऽश्माखण" इति वाक्यशेषस्यायमर्थः — स एष इति, "य एवंविदि पापं कामयत" इति परामृष्टः शत्रुरुद्गीथोपासके पापकाम उच्यते । स अश्मप्राप्ताखणः । अश्माखण इति समस्तं पदम् । स एष इति पुल्लिङ्गसामानाधिकरण्यात् पूर्ववाक्ये नपुंसकनिर्दिष्टस्यापि वाक्यशेषे पुल्लिङ्गतया प्रयोग इति ।

भाष्ये **फलसाधनत्वश्रवणादिति** । ननु औदुम्बराधिकरणे, 'विधिविभक्तिरहितेन फलसाधनत्वं न प्रतिपाद्यत इति वक्तुं शक्यत' इत्युक्तत्वात् तद्विरोधः । किञ्च साधनत्वस्य श्रुतत्वे विधिकल्पनं व्यर्थमेव, तदर्थत्वात् तत्कल्पनस्येति चेत् — सत्यम् । विधिप्रत्ययाश्रवणेऽपि "यः पर्णमश्नाति स कल्यः" इत्यादाविव वर्तमानापदेशस्थलेऽपि सिद्धसाध्यसमभिव्याहारे, "सिद्धं साध्यायोपदिश्यते(युज्यते)" इति न्यायसहकृतात् शब्दात् फलसाधनत्वप्रतीतेरनुभवसिद्धत्वात् तादृशार्थवादस्य फलविधिव्याप्ततया फलविधिकल्पनोपपत्तेः । न च तद्विधिवैयर्थ्यं शङ्कनीयम्; न्यायबलात् कथञ्चित् प्रतीतावपि साधनत्वस्य शाब्दत्वसिद्ध्यर्थं विधिकल्पनोपपत्तेः । **फलसाधनत्वमेव नास्तीति** । ननु वस्तुतः फलसाधनत्वाभावे किं विधिमात्रमेव न संभवतीत्यभिप्रायः, उत फलसाधनतया विधिर्न संभवतीति । नाद्यः, फलसाधनत्वाभावेऽपि क्रत्वर्थेषूदुम्बरतादिषु विधिकल्पनदर्शनात् । न द्वितीयः; अन्योन्याश्रयात्, फलसाधनत्वाधीनो विधिः, तदधीनं फलसाधनत्वमिति — उच्यते । **फलसाधनत्वश्रवणे सति हीत्यादेरयमर्थः** — आर्थवादिकफलसाधनत्वश्रवणाद्धि विधिकल्पनम् । अर्थवादत एव विधिकल्पनमित्यर्थः । ततश्च, 'तद्वाक्यमर्थवादतया विधिशक्तिमुपजनय्य विहितस्य फलाकांक्षायां फलमपि समर्पयतीत्युक्ते विरम्यव्यापारप्रसङ्गात्' इत्यौदुम्बराधिकरणोक्तन्यायेन फलसमर्पकत्वाभावेन फलसाधनत्वमुद्गीथविद्याया नास्तीत्यर्थः । ततश्चोद्गीथविद्यायाः पर्णतादिवत् कर्मसाद्गुण्यफलकतया क्रत्वर्थत्वमेव । न त्वार्थवादिकशत्रुपराभवार्थत्वमिति । ततश्च शत्रुपराभवाय उद्गीथे प्राणदृष्टिर्विहितेत्युक्तमयुक्तमित्यत्राहेत्यर्थः । **उद्गीथविद्याया** इत्यादिभाष्यस्यायमर्थः — उद्गीथविद्यायाः क्रत्वर्थत्वेऽपि आर्थवादिकं फलं क्रतुसाद्गुण्योपयुक्तं ग्राह्यमेव; किमुत

"तन्निर्धारणानियम॰ तद्दृष्टेः पृथग्ध्यप्रतिबन्धः फलम्", "अङ्गेषु यथाश्रयभावः" इति न्यायाभ्यां निरस्तक्रत्वर्थभावाया उद्गीथविद्याया इत्यर्थः (?) । ततश्च पूर्वोत्तरविरोधः । केचित्तु—"असार्वत्रिकी" इति पुरुषार्थाधिकरणगुणसूत्रे उद्गीथविद्यायाः क्रत्वर्थत्वस्याभ्युपेतत्वात् अस्त्येवोद्गाथविद्यायाः क्रत्वर्थत्वम् । न च, 'तन्निर्धारणे' त्यधिकरणविरोधः । तस्योद्गीथविद्याया अनियममात्रप्रतिपादनपरतया क्रत्वर्थत्वनिराकरणे तात्पर्याभावात् । "पृथग्ध्यप्रतिबन्धः फलम्" इत्यस्यापि उद्गीथविद्यासद्भावे क्रतूपकारभूयस्तामात्रप्रतिपादनपरत्वात् । अत एव, "मन्त्रादिवद्वाऽविरोधः" इत्यत्र **यथा मन्त्रादीना**मिति भाष्येण, "मन्त्रादीनां श्रुत्यादिभिर्विनियोगादविरोधश्चेत्—इहाप्युद्गीथपदश्रुत्या विनियोगात्" इति टीकाग्रन्थेन च क्रत्वङ्गत्वमाविष्कृतमिति प्रतिपादयन्ति । न च क्रत्वर्थेष्वार्थवादिकफलग्रहणे पर्णताया अपि अपापश्रवणफलकत्वप्रसङ्ग इति शंक्यम्—प्रस्तरणप्रहरणस्य क्रत्वर्थस्यापि सूक्तवाकमन्त्रप्रतिपाद्यफलार्थत्ववत्, उपकोसलविद्याङ्गभूताग्निविद्यायाम्, "नास्यावरपुरुषाः क्षीयन्ते" इति प्रतिपन्नब्रह्मविद्याऽविरोधिफलार्थत्ववच्च क्रत्वर्थस्यौदुम्बरत्वस्यार्थवादप्रतिपन्नक्रत्वविरुद्धफलार्थत्वे दोषाभावादिति भावः । **उद्गातरि प्राणदृष्टिं कृतवन्त इत्यर्थ** इति । उदगायत्—उद्गाता अभवदिति यथाश्रुतार्थस्याभेदस्य बाधितत्वादेव दृष्टिविधिपरत्वे, औचित्यात्, "आदित्यादिमतयश्चाङ्ग उपपत्तेः" इति न्यायेनोत्कृष्टप्राणतया उद्गातुरुपास्यत्वं सिध्यतीति भावः । ननु शब्दान्तरादिषु यथैकैकस्यापि भेदसाधनत्वम्, एवं संयोगरूपचोदनाख्याविशेषाणामेकैकस्यैवाभेदसाधकत्वमस्तीत्यत आह—**चोदनाद्यविशेषसमुच्चय** इति ॥

**न वा प्रकरणभेदात् परोवरीयस्त्वादिवत् ३-३-७.**

**स्वरविशेषसिद्ध्यर्थ**मिति । ऋग्वेदादिगतस्य प्रणवस्य भिन्नभिन्नस्वरत्वात् तद्व्यावृत्त्यर्थमुद्गीथावयव इति प्रणवो विशेषित इति भावः । **विधेयार्थप्रतिपादकप्रदेशविशेष** इति । विधेयार्थप्रतिपादकवाक्यगतः प्रदेशविशेषः प्रक्रमरूपः । प्रकरणं प्रक्रमः प्रस्ताव इति पर्यायाः । ततश्च छान्दोग्यवाजसनेयकयोः उपक्रमभेदादित्यर्थः । यद्वा प्रदेशभूतो विशेषः सन्निहिताभिधानम् । तद्भेदश्चासन्निहिताभिधानरूपः । अत एव हि, "प्रकरणान्तरे प्रयोजनान्यत्वम्" इत्यत्र (२-३-२४) प्रकरणान्तरम-

प्रकृताभिधानमसन्निहिताभिधानमिति मीमांसकाः । ननु विधेयभेदस्यैव रूपभेदतया कथं तयोः साध्यसाधनभावेन निर्देश इत्याशङ्क्याह – **रूपभेदः फलित इत्यर्थ** इति । विधेयं सामान्यं रूपं विशेष इति भावः । **उद्गातुद्गी (तृगी) थमानोद्गीथ** इति । उद्गातृशब्दान्तर्गतोद्गीथ एवेत्यर्थः । वस्तुतस्तु उपसंहारगतोद्गातृशब्द-बाहुल्यात् प्रक्रमश्रुतस्योद्गीथशब्दस्य, "अध्यात्मसम्बन्धभूमा ह्यस्मिन्" इति न्यायेन उद्गातृलक्षणाऽपि न दोषायेति द्रष्टव्यम् ।

ननु यागे देवतास्थानीय उपासनायामुपास्यः । एवञ्च यथा उपांशुयाजे सत्यपि विष्णुप्रजापत्याग्नीषोमलक्षणदेवताभेदे भेदो नाश्रितः ; किन्तु एकस्मिन्नेवोपांशुयाजे देवतानां विकल्प आश्रितः । तथा [यथा?] इन्द्रवाय्वादिदेवताभेदेऽपि सोमयागे भेदो नाश्रितः ; किन्त्वेकस्यैव सोमयागस्य देवताभेदेन अभ्यासः समाश्रितः – एवमिहाप्युपास्यविकल्पः । तद्भेदे भेद उपासनाभ्यासो वा भविष्यति । अथ वा, "त्वाष्ट्रं पात्नीवतमालभेते" त्यत्र प्रत्येकं तद्धितश्रवणात् त्वष्टा पत्नीवांश्च पृथक् पृथक् देवतेति तदुभयोद्देश्यक एको यागः । एवमुद्गीथोद्गातुद्देश्यकमेवोपासनं भविष्यतीति चेन्न – "उपांशुयाजमन्तरा यजती" त्येकेन वाक्येनोत्पन्ने तस्मिन् भेदस्यासंभावितत्वेनैक्ये सिद्धे पश्चात् याज्यानुवाक्यामुखेनापतन्तीनां देवतानां विकल्पं विना गत्यन्तराभावात् विकल्प आश्रितः । अत एव सोमन्यायोऽपि न प्रवर्तते । सोमेन यजतीत्येकेन वाक्येनोत्पन्नस्य सोमयागस्यैक्ये सिद्धे तद्द्रव्य-संस्काररूपग्रहणमुखेनापतन्तीनां देवतानां ग्रहणसमुच्चयेन समुच्चये सत्यपि ततः प्राक् सिद्धसोमयागैक्यबाधनासंभवात् । इह तूपासनोत्पत्तिदशायामेवानुसन्धीयमानं प्रधानोपास्यवैरूप्यं भिन्नयोरेवोपासनयोरुत्पत्तिं गमयेत् । द्वयोरपि वाक्ययोरैक्यप्रत्यभि-ज्ञाविच्छेदात् प्रधानगुणवैरूप्ये सति अप्रधानगुणसाम्यस्याप्रयोजकत्वेनार्थवादसारूप्य-मात्रस्याप्रयोजकत्वात् ।

अत एव जनकसप्तरात्रे, "चत्वारि त्रिवृन्त्यहानी" ति श्रुतानामह्नां सारूप्येण प्रकृतौ कल्पनीयायां यदि त्रिवृत्त्वसारूप्यं प्रयोजकमाद्रियेत ; तदा द्वादशाहे पार्ष्ठिकेष्वहस्सु प्रथममेवाहश्चतुर्णां प्रकृतिः स्यात् । तस्य त्रिवृत्स्तोमकत्वेन सरूपत्वात् ; द्वितीयतृतीयचतुर्थानामह्नाञ्च पञ्चदशसप्तदशैकविंशस्तोमकतया विरूपत्वात

यदि संघातसामान्यमाद्रियेत, तदा प्रथमस्य प्रथमं द्वितीयस्य द्वितीयं तृतीयस्य तृतीयं चतुर्थस्य चतुर्थं प्रकृतिः स्यात् । तत्राहर्धर्मसङ्घातसामान्यस्य प्रधानगुणसारूप्यरूपत्वात् अहरङ्गभूतस्तोत्रोपसर्जनऋक्संख्यारूपत्रिवृत्त्वादिवैषम्ये सत्यपि संघातसारूप्येण चतुर्णामह्नां क्रमेण चत्वार्यहानि प्रकृतय इति "गणचोदनायां यस्य लिङ्गं तदावृत्तिः प्रतीयेताग्नेयवत्" इत्याष्टमिकाधिकरणे (८-३-२) निर्णीतम् । अत एव बह्वर्थवादसारूप्ये सत्यपि [ उद्गीथोद्गातृरूपोपास्यगुणभेदेन भेदाभ्युपगमे ? ] द्रव्यदेवताकालरूपबहुगुणसारूप्ये सत्यप्येकादशत्वद्वादशत्वरूपसंख्यावैषम्यात् शाखाद्वयाम्नाताग्नीषोमीययागैक्यमपि न स्यादिति शंका निरस्ता । द्रव्यदेवताकालरूपप्रधानबहुगुणसारूप्ये सति द्रव्योपसर्जनकपालविशेषणसंख्यावैषम्यमात्रस्य प्रत्यभिज्ञाविच्छेदकत्वाभावात् प्रत्यभिज्ञयैक्यसिद्धौ संख्याद्वयस्याप्युत्पत्तिशिष्टतया तुल्यबलत्वाद्विकल्पो न्याय्यः । इह तु प्रधानोपास्यवैरूप्यस्य प्रत्यभिज्ञाविच्छेदकतया प्रत्यभिज्ञानुदयात् न विद्यैक्यसिद्धिः । "त्वाष्ट्रं पात्नीवतमालभेते" ति एकवाक्योपात्तत्वात् त्वष्टृपत्नीवतोः समुच्चयसंभवेऽपि इहोद्गीथोद्गात्रोः एकवाक्योपात्तत्वाभावात् विद्यैक्येपि समुच्चयप्रसक्तिशंकाया अभावात् ।

प्रधानोपास्यरूपभेदे अवगम्यमानेऽपि वाक्यच्छायानुसारमात्रेण छान्दोग्यवाजसनेयवाक्ययोः समानार्थत्वे अवसीयमाने अभ्युदयवाक्ये पशुकामवाक्ये च, 'ये मध्यमाः स्युः, तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्यात्" इत्यादिनिर्देशसाम्यात् सामानार्थत्वप्रसङ्गः । न चैवमिष्यते । "यस्य हविर्निरुप्तं पुरस्तात् चन्द्रमा अभ्युदियात्, स त्रेधा तण्डुलान् विभजेत्; ये मध्यमाः स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेत्, ये स्थविष्ठाः स्युः तानिन्द्राय प्रदात्रे दधंश्चरुम् । येऽणिष्ठास्तान् विष्णवे शिपिविष्टाय शृते चरुम्" इति अभ्युदयेष्टिवाक्यम् । अत्र चतुर्दश्याममावास्याभ्रान्त्या दर्शोपक्रमे प्रायश्चित्तं विधीयते । "स त्रेधा तण्डुलान्" इत्यदिना तण्डुलानां त्रिभागमात्रं न विधेयम् । तस्य, ये मध्यमाः स्युरित्यादिवाक्यैरेव प्राप्तत्वात् । अपितु तण्डुलशब्दोपलक्षितानां दार्शिकहविषां पूर्वदेवताभ्योऽपनयरूपो विभागो विधीयते । अपनीतपूर्वदेवताकानां हविषां देवतान्तरसंयोगसाकांक्षाणाम्, 'ये मध्यमा' दिवाक्यै र्देवतान्तरसंयोजनमात्रं क्रियते । "मध्य-

मानामग्निर्देवता, स्थविष्ठानां दध्नश्चेन्द्रः प्रदाता देवता, अणिष्ठानां शृतस्य च विष्णुःशिपिविष्ट इति न कर्मान्तरमिति सिद्धान्तः । यः पशुकामः स्यात्, सोऽमावास्यायामिष्ट्वा वत्सानपाकुर्यात् । ये मध्यमाः स्युः, तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्यात्; ये स्थविष्ठाः स्युः, तानिन्द्राय प्रदात्रे दधश्चरुम्; येऽणिष्ठाः, तान् विष्णवे शिपिविष्टाय शृते चरुम् " इति पशुकामवाक्ये कर्मान्तरमेव । पूर्वप्रस्तुतकर्माभावादिति स्थितिः । सापि न स्यात् ।

तस्मात् प्रधानोपास्यभेदे सति अर्थवादसारूप्यमकिञ्चित्करमिति सिद्धम् ॥

ननु वाजसनेयकेऽपि उद्गीथस्योपक्रमगततया तस्यैवोपास्यत्वं युज्यते । 'त्वं न उद्गाये' ति औपसंहारिकस्योद्गातुरुद्गीथविशेषणत्वमेव युक्तम् । न तूद्गीथस्योद्गातृविशेषणत्वम् । ततश्चोद्गातुरुद्गीयमानोद्गीथ इति टीकाग्रन्थस्य च स्वारस्यमस्तीति । न चैवं सति **कृत्स्नस्योद्गीथस्य कर्ता उद्गाता प्राणदृष्ट्योपास्य** इति भाष्यविरोध इति वाच्यम् — उद्गातृविशिष्टस्य उद्गीथस्योपासने उद्गातुरपि कथञ्चिदुपास्यकोटिनिवेशाभिप्रायेण तदुपपत्तेः, 'उद्गीथेनात्ययामे' ति उपक्रमश्रुतोद्गीथप्राधान्यभङ्गायोगात्। उद्गाथकर्मकोद्गानकर्तुः उपास्यत्वे उद्गीथस्य(?), महेन्द्रयागे महत्त्वस्य देवताविशेषणत्वेनादेवतात्ववत् उद्गीथस्यानुपास्यत्वेन उपक्रमोपसंहारयोरविरोधस्य उद्गीथस्योद्गातृविशेषणत्वपक्षे असंभवादिति चेत् — वाजसनेयके उपक्रमे उद्गीथशब्दश्रवणेऽपि उद्गातृशब्दस्य बहुकृत्वोऽभ्यस्तत्वेन तत्प्राधान्यस्यैव वक्तव्यत्वेन प्रक्रमश्रुतस्यैवोद्गीथशब्दस्य तद्विशिष्टोद्गातृपरत्वस्य वक्तव्यत्वादिति सिद्धान्त्याशयात् । यद्येवं पूर्वपक्षे पररीत्या छान्दोग्यस्योद्गीथशब्दस्य कर्तृलक्षकत्वमेवाऽऽश्रयणीयं स्यात्; न तु कर्तृवाचिशब्दस्य कर्मण्येव सौकर्यातिशयविवक्षया गौणत्वम्; ततश्च परमतदूषणोत्तरग्रन्थविरोधः स्यादिति न वाच्यम् — छान्दोग्ये "तद्ध देवा उद्गीथमाजह्रुः, ते ह नासिक्यं प्राणमुद्गीथमुपासाञ्चक्रिरे, श्रोत्रमुद्गीथमुपासाञ्चक्रिरे"इति बहुकृत्वोभ्यस्तस्योद्गीथपदस्य, वाजसनेयके च, 'हन्तासुरान् यज्ञ उद्गीथेनात्ययाम' इति उपक्रमे श्रुतस्य उद्गीथशब्दस्य च द्वयोरपि कर्तृलक्षकत्वं पूर्वपक्षिणा नाभ्युपगन्तुमुचितमित्यत्र तात्पर्यात् तस्य ग्रन्थस्य विरोधाभावात् । ननूद्गीथस्य गीतिक्रियारूपसामावयवस्य कथं गानक्रियाकर्मत्वोक्तिर्भाष्ये । अत एव शाङ्करभाष्यभामत्यादौ उद्गीथस्य क्रियात्वेन

व्यवहारो दृश्यत इति चेन्न – "ओमित्येतदक्षरमुद्गीथमुपासीत" इत्यत्र प्रणवस्य क्रियावयवत्वाभावेनोद्गीथशब्दस्य गीतिक्रियायुक्तमन्त्रावयववचनत्वस्यैव वक्तव्यत्वात् । सामशब्दस्य गीतिविशिष्टमन्त्रेष्वेव बहुशो दृष्टप्रयोगत्वेन परग्रन्थस्योपेक्षणीयत्वात् ।

**परोरजाइत्यादिवदिति** । ननु वरीयसां पर इत्यर्थे कथमेतद्रूपम् ? "षष्ठी" इति समासश्चेत्, वरीयःपर इति स्यात । न च सोपि प्राप्नोति । "न निर्धारणे" इति निषेधात् । "यतश्च निर्धारणम्" इति ह्यत्र षष्ठी वाच्येति चेत् – अत्राहुः – "कर्तृकरणे कृता बहुलम्" इति समासः – यथा परश्शतानि कार्याणीत्यत्रोक्तं कैयटेन, "शतात्पराणि परश्शतानि, शताधिकानीत्यर्थः । "कर्तृकरणे कृता बहुल" मिति बहुलवचनात समासः । पारस्करादित्वात् सुडागमः" इति – यथा च परोक्षमित्यत्र, परोभावस्तद्वत् । उक्तं हि – "परोभावः परस्याक्षणः परोक्षे लिटि गृह्यताम् । उत्वं वादेः परादक्ष्णः सिद्धं वा स्या (बाह्या) न्निपातनात्" इति ।

संज्ञातश्चेत् तदुक्तमस्ति तु तदपि ३-३-८.

भाष्ये **यथाग्निहोत्रसंज्ञेति** । नन्वध्वरमीमांसकैः, नैयमिकाग्निहोत्रस्यैव तत्प्रख्यनयादियं संज्ञा ; न तु कौण्डपायिनामयनिकाग्निहोत्रस्य । अनेकार्थत्वस्यान्याय्यत्वात् । अमी पिष्टपिण्डाः सिंहाः क्रियन्तामितिवत् अतस्मिन् तच्छब्दप्रयोगः तद्धर्मातिदेशार्थ' इत्यङ्गीकारात् कथमेकसंज्ञात्वम् ? अत एव हि, "उक्तम् क्रियाभिधानं तच्छुतावन्यत्र विधिप्रदेशः स्यात्" इति सप्तमे (७-३-१.) सूत्रितम् । तस्यायमर्थः – क्रियया नित्याग्निहोत्रस्याभिधानं = नामधेयम् अग्निहोत्रपदमुक्तम् तत्प्रख्याधिकरणे । तस्यान्यत्र श्रवणे विधिप्रदेशः विधेयधर्मातिदेशः स्यादिति । ततश्च कथमेकनामत्वमिति चेन्न – संज्ञित्वेन सम्बन्धाभावेऽपि तत्पदप्रयोगविषयत्वरूपसम्बन्धेन एकसंज्ञासम्बन्धसम्भवात् । अत एव भामत्याम् – "आदरादलोपः" इत्यत्र, "साध्यसादृश्येन नैयमिकाग्निहोत्रसमाननामतया तद्धर्मातिदेशेन तद्धर्म- ( रूपधर्मान्तर ? ) प्राप्तिः" इत्युक्तम् । श्येनादिशब्दानां गौणवृत्या कर्मणि प्रवर्तमानानामपि कर्मनामत्ववत् गौणस्याप्यग्निहोत्रशब्दस्य मासाग्निहोत्रनामत्वसम्भवे बाधकाभावाच्चेति । इयांस्तु विशेषः । नैयमिकाग्निहोत्रे अग्निदेवत्यत्वं प्रवृत्तिनिमित्तम् ;

अपरत्र तत्सादृश्यं प्रवृत्तिनिमित्तमिति न कश्चिद्दोषः । **मासमात्रहोमसमाप्तिकमिति** । ततश्च नित्यकर्तव्यादग्निहोत्रादिदं भिन्नमिति भावः । अत्र **होम**शब्दः सम्पातायातः । मासगुणकं कर्मान्तरमिति सावितमित्यर्थः । **स्ववाक्यस्थत्वाभावेऽपीति** । आख्यातसामानाधिकरण्याभावेपीत्यर्थः ।

## व्याप्तेश्च समञ्जसम् ३-३-९.

**प्रणवमात्रस्ये**त्यादि । "ओमित्येतदक्षरमुद्गीथमुपासीत" इत्यत्र उद्गीथशब्दस्य प्रणववाचित्वेऽपि द्वितीयखण्डस्थप्राणविद्यागतोद्गीथशब्दस्य तद्विषयत्वमसंप्रतिपन्नमित्यत आहेत्यर्थः । **व्याकरणोक्त**मिति । तान्त्रिकोक्तत्वादश्लीलमप्युदाहृतमिति भावः ।

**फलनिर्देशवदि**ति । "हन्तासुरान् यज्ञ उद्गीथेनात्ययाम " इति परपरिभवरूपफलनिर्देशवदित्यर्थः । **उद्गीथाध्यासविशिष्टमुपासीतेति वाक्यस्यार्थ** इति । मनो ब्रह्मेत्युपासीतेतिवदोङ्कारे उद्गीथमध्यस्य उपासीतेति वाक्यार्थ इत्यर्थः । **एवमोङ्कारशब्दश्चे**ति । यत्र यदध्यस्यते, तत्र तच्छब्दस्य लक्षणावश्यम्भावादिति भावः। **आप्त्यादिदृष्टिफल**मिति । "आपयतो वै तावन्योन्यस्य कामम । आपयिता ह वै कामानां भवती" ति ऋक्सामयोरन्योन्यकामापयितृत्वदृष्टिफलमेव ; न त्वक्षरे उद्गीथदृष्टिफलमिति भावः ।

**प्रणवविशेष्यत्वमप्यविरुद्धं स्यादि**ति । यद्यप्यतिरिक्तवृत्तेरेव विशेष्यत्वम् । ओङ्कारस्य चातिरिक्तवृत्तित्वसम्भवात् प्रणवस्य विशेष्यत्वं सम्भवति, "सम्भवव्यभिचाराभ्यां हि विशेषणविशेष्यभावः" इति न्यायादिति वदन्तं प्रति नायमाक्षेपः समञ्जसः — तथाप्यतिरिक्तवृत्तित्वस्य विशेष्यत्वप्रयोजकत्ववादिनं प्रति इदं दूषणमिति द्रष्टव्यम् ।

**भेदशब्दाध्याहाराच्चे**ति । 'अन्यथात्वं शब्दभेदात्' इति पाठकल्पनाप्रसङ्गादित्यर्थः । इदञ्च सिंहावलोकितकेन पूर्वसूत्रदूषणम । 'भेदशब्दाध्यहारप्रसङ्गाच्च' इति वाक्यस्य, 'प्रकरणभेदात' इति वाक्यात् पूर्वनिवेशस्तूचितः ॥

इति अन्यथात्वाधिकरणम् ।

---

## ( ३ ) सर्वाभेदाधिकरणम् ।

सर्वाभेदादन्यत्रेमे ३-३-१०.

**प्रशस्यशब्दस्य आदेशात् श्रैष्ठ्यं प्रशस्त(स्य)त्वमिति** । अभिहितमिति शेषः । **वृद्धशब्दस्य ज्यादेश** इति । वृद्धशब्दस्य चेत्यर्थः । **तस्मादिति** । श्रेष्ठशब्देन प्रशस्तत्वस्याभिहितत्वात् वृद्धशब्दस्थानिक एवायं ज्यशब्दः ; न तु प्रशस्यशब्दस्थानिक इत्यर्थः । ज्यैष्ठ्यं हि वयःकृतम् । मुख्यप्राणो हि सर्वेषां प्राणानां मध्ये वयसाऽधिकः । गर्भस्थे पुरुषे चक्षुरादिभ्यः पूर्वमेव प्राणस्य वृत्तिर्लब्धात्मिका भवति । अत एव गर्भो वर्धते । चक्षुरादीनां तु गोलकनिष्पत्तौ सत्यां वृत्तिलाभ इति । **श्रेष्ठः** — चक्षुरादिभ्यो गुणैरधिक इत्यर्थः । **तत्तत्कार्यजननसामर्थ्यानीति** । वाचो वसिष्ठत्वं वग्मिनः स्वव्यवहारजनने वसुमत्तासम्पादकत्वम्, चक्षुषः प्रतिष्ठात्वं चक्षुष्मतां समविषमभूतलादिप्रदर्शनेन प्रतिष्ठासम्पादकत्वम्, श्रोत्रस्य सम्पत्त्वं वेदशास्त्रतदर्थश्रवणादिसम्पादनेन सम्पत्करत्वम्, मनस आयतनत्वं समीहितस्रक्चन्दनादिविषयज्ञानरूपभोगायतनत्वम्, "चक्षुषा हि समे च दुर्गे च प्रतितिष्ठति; श्रोत्रेण हीमे सर्वे वेदा अभिसम्पन्नाः" इति वाजसनेयगतवाक्यशेषानुसारेणावगम्यते । **नैराकांक्ष्यादिति** । ननु प्रकरणाम्नातगुणैर्नैराकांक्ष्ये शाखाद्वयोक्तगुणानामन्योन्यमुपसंहारः क्वापि न स्यादिति चेत् — इष्टापत्तेः (त्तिः ?) । किञ्च कौषीतकिनामुपनिषदि दशमाध्याये छान्दोग्यवाजसनेयकरीत्या प्रवृत्तायां प्राणविद्यायां वागादीनां वसिष्ठत्वादिगुणजातमेवोक्तम् । अतस्तद्वत्त्वेन वागादीनामेवानुसन्धानं लभ्यते; न प्राणस्य । अतो विरुद्धगुणावरुद्धत्वात् विद्याभेद इति पूर्वपक्षिणो भावः । **अहंश्रेयसे व्यूदिरे** । अहंश्रेयसे — आत्मनः श्रेष्ठत्वायेत्यर्थः । व्यूदिरे इति वदेर्विपूर्वात् लिटि सम्प्रसारणे धातूपसर्गयोः यणादेशे च रूपम् । "विभाषा विप्रलापे" इति वैकल्पिकमात्मनेपदम् । एवं **विवदमानाः** इत्यत्रापि विवादः — विप्रलापः — युगपत् परस्परप्रतिषेधेन विरुद्धकथनमित्यर्थो वर्णितः । ततश्च नाना विरुद्धञ्चोक्तवन्त इत्यर्थो भवति ।

परैस्तु—कौषीतकिनामुपनिषदि चतुर्थाध्याये, "अथातो निःश्रेयसादानम् एता ह वै देवता अहंश्रेयसे विवदमाना" इत्यादिना प्राणस्य श्रैष्ठ्यमुक्त्वा "अथो एवैवं विद्वान् प्राणे निःश्रेयसं विदित्वा" इति एवंशब्दस्य श्रावणादेवंशब्दस्य च सन्निहितावलम्बनत्वात् शाखान्तरोक्तानां वसिष्ठत्वादीनामिहासन्निहितत्वात् केवलानां तत्प्रकरणस्थगुणानामेव एवंशब्देन परामर्शात् न शाखान्तरोक्तवसिष्ठत्वादीनामन्वयः । तथाहि सति एवंशब्दप्रतिपादितस्य तन्मात्रगुणकत्वस्य हानिः स्यात् । अश्रुतानाञ्च गुणान्तराणां कल्पना स्यादिति पूर्वपक्षे — एवं शब्दस्य सन्निहितवचनत्वमेव ; न तु शब्दोपात्तसन्निहितमात्रवचनत्वम् । ततश्च शाखान्तरीयमपि वसिष्ठत्वादिकं गुणिद्वारा सन्निहितं भवतीति तस्याप्येवंशब्देन परामर्शोपपत्तेः वाक्यार्थप्रतीतिविषयत्वोपपत्तेः । मा वा भूत् कौषीतकि वाक्येन एवंशब्देन गुणानां परामर्शः । वाजसनेयगतब्राह्मणगतेन एवंशब्देन तेषामपि परामर्शात् न श्रुतहानिः । गुणान्तराणाञ्च शाखान्तरे श्रुतत्वान्नाश्रुतकल्पना । एकस्यामपि शाखायां श्रुता गुणाः श्रुता एव सर्वत्र भवन्ति । गुणवतो भेदाभावात् । न हि देवदत्तः शौर्यादिगुणवत्त्वेन स्वदेशे प्रसिद्धो देशान्तरगतः तद्देश्यैरविभावितशौर्यादिगुणोऽप्यतद्गुणो भवति । यथा च तत्र परिचयविशेषात् देशान्तरेऽपि देवदत्तगुणा विभाव्यन्ते, एवमिहापि प्राणसंवादादिसारूप्यस्याभेदेन प्राणविज्ञानस्यैकत्वेन एकप्रधानसंबन्धात् तेऽपि गुणाः उपास्या एवेत्युक्तम् । तदेतदनुभाषते — **परेत्वित्यादिना** । **अतिप्रसङ्गादनादृत** इति । वैश्वानरविद्यादिषु गुणसांकर्यप्रसङ्गादिति भावः । **नचैकं प्रति शिष्यत इति न्यायादिति** । न ह्येकं प्रतिपत्तारं प्रति शास्त्रं प्रवृत्तम् । येन शाखावाक्यानां नियतप्रतिपत्तृकतया केषाञ्चिच्छ्रुतमपि केषाञ्चिदश्रुतं स्यादिति भावः ॥ इति सर्वाभेदाधिकरणम् ।

---

## ( ४ ) आनन्दाद्यधिकरणम्

---

**आनन्दादयः प्रधानस्य ३-३-११.**

सौर्यादीष्टिविकृतिषु तत्प्रकरणानधीतानां दर्शपूर्णमासप्रकरणाधीतप्रयाजानामतिदेशत उपसंहारदर्शनादित्यत आह — **समानप्रकरणे** चेति । विद्यासु प्रकृतिविकृतिभावस्याप्यभावेन उपदेशतोऽतिदेशतो वा असम्भवत्प्राप्तिकानामङ्गानामुपसंहारे

प्रमाणाभावादित्यर्थः । तत्रश्च तद्विद्याप्रकरणाम्नातानामङ्गानानुपसंहारे प्रमाणाभावादिति यथाश्रुतेऽनुपपत्त्यभावात् नानाशाखाम्नातानामपि तत्प्रकरणाधीतत्वाविशेषात् किमर्थमेवं व्याख्यानमिति न चोदनीयम् ॥

इतरे त्वर्थसामान्यात् ३-३-१३

भाष्ये **अर्थसमाना** इति । अर्थस्य समाना अर्थसमानाः धर्मिस्वरूपप्रतीत्यनुबन्धित्वं धर्मधर्मिणोरविशिष्टम् । तेन रूपेण समाना इत्यर्थः । **सामान्यशब्दाभिहितं साम्यमित्यर्थ** इति ।

नन्वितरव्यावृत्तब्रह्मस्वरूपप्रतिपत्तिकाले सत्यत्वज्ञानत्वादीनां न प्रतीयमानत्वनियमः संभवति । अस्थूलत्वादिना अन्तर्यामित्वादिना वा जगत्कारणत्व - लक्ष्मीपतित्व - निरुपाधिकसर्वशेषित्व — निरुपाधिकसर्वज्ञत्वादिभिर्वा इतरव्यावृत्तब्रह्मस्वरूपप्रतिपत्तेः संभवात् । अत आनन्दादीनां सत्यकामत्वसंयद्वामत्वादीनाञ्च वैषम्यं दुर्विवेचमिति चेत् —

अत्र केचित् — धर्मा हि द्विविधाः । विशेष्यस्वरूपनिष्ठाः, विशिष्टस्वरूपनिष्ठाश्च । ये विशेष्यस्वरूपनिष्ठा आनन्दादयः, ते सर्वानुयायिनः । इतरे तु व्यवस्थिताः । जगत्कारणत्वस्य प्रकृतिपुरुषकालविशिष्टलक्षणतया तदुपयुक्तसार्वज्ञ्यादेरपि तथात्वात् न सर्वानुयायित्वम् । अयं भावः — केचित् धर्मिस्वरूपप्रयुक्ताः सततैकरूपनिर्विकाराः । अत एव, "यच्च कालान्तरेणापि नान्यसंज्ञामुपैति वै । परिणामादिसम्भूतां तद् वस्तु नृप तच्च किम् । अनाशी परमार्थश्च प्राज्ञैरभ्युपगम्यत" इत्यादिभिरुपपादिताः परमार्थशब्दवाच्यभाव (वादयः?) सर्वज्ञत्वसर्वनियन्तृत्वादिवि[1]लक्षणाः, ते सर्वविद्यानुयायिनः । संयद्वामत्वसर्वज्ञत्वादयस्तु धर्मिस्वरूपव्यतिरिक्तसततैकरूपत्वशून्यप्रकृतितत्कार्यजीवकालेश्वरधर्मभूतज्ञानघटिता न ते एकरूपाः । ईश्वरधर्मभूतज्ञानस्यापि नानाविधसङ्कल्पादिलक्षणविकारशालितया ईश्वरतत्क्रियाणामप्यनेकरूपत्वात् तद्घटितधर्माणामपि नैकरूपत्वम् । अत एवापरमार्थशब्दितत्वञ्च । अतस्तेषां न सर्वानुयायित्वम् । ज्ञानत्वानन्दत्वसत्यत्वादीनां तु न तथा इति वैषम्यमाहुः ।

1. त्वादिलक्षण इति पा०

अन्ये तु — स्वरूपप्रतीत्यन्तर्गतत्वं स्वरूपान्तर्गतत्वमेव। ज्ञानत्वानन्दत्वादयस्तु स्वरूपाभिन्नधर्माः । अत एव परैरपि, " आनन्दो विषयानुभवो नित्यत्वञ्चेति सन्ति धर्माः ते चापृथक्त्वेपि पृथगिवावभासन्त " इत्युक्तम् । अतश्च ये स्वरूपभिन्नाः, ते सर्वविद्यानुयायिनः । सर्वज्ञत्वसर्वकर्तृत्वादयस्तु धर्मभूतज्ञानविततिरूपा धर्मिस्वरूपभिन्ना इति न सर्वानुयायिनः इति ।

अपरे तु स्वरूपोपदेशपरवाक्यप्रतिपन्नानां सर्वविद्यानुयायित्वम्; नोपासनार्थोपदिष्टानाम् । न च, "यः सर्वज्ञः सर्ववित्" इत्यादिस्वरूपोपदेशवाक्यप्रतिपन्नतया सार्वज्ञ्यादीनामपि सर्वविद्यानुयायित्वप्रसङ्ग इति वाच्यम् — तस्याप्युपासनविध्यश्रवणेऽपि तत्परत्वात । अत एव, " सम्भृतिद्युव्याप्त्यपि चातः " इत्यधिकरणे अनारभ्यश्रुतानामश्रुतोपासनविधीनामप्युपासनार्थत्वं सिद्धवत्कृत्यैव किं सर्वविद्यानिवेशः, उताल्पायतनव्यतिरिक्तास्विति चिन्ता प्रवर्तिता । न चैवमुपासनार्थत्वे सार्वज्ञ्यादीनामप्यपारमार्थ्यप्रसङ्ग इति वाच्यम् — बाधकाभावेन सत्यत्वात् । अत एव, "आध्यानार्थत्वेपि सत्यकामादिगुणोपदेशे तद्गुण ईश्वरः सिद्ध्यती " ति व्यतिहारसूत्रे शाङ्करभाष्येऽप्युक्तम् । इतरथा परमते सत्यकामत्वादीनां वागादिपादत्वादिवत् व्यावहारिकभाव (भावाभाव ?) प्रसङ्गादित्याहुः ।

**केषुचिदुपासनेष्विति** । 'यतो वा' इत्यादिवाक्ये, 'तद्विजिज्ञासस्व' इति मोक्षसाधनभूतोपासनविषयत्वं विधेयम् । ततश्च केषुचिदुपासनेषु कारणत्वस्यान्वयात् केषुचिच्चानन्वयात् विशेषणत्वोपलक्षणत्वोक्तिः सङ्गच्छत इति भावः । यदि च 'यतो वा' इत्यादिवाक्ये निरतिशयबृहत्त्वस्वरूपं ज्ञाप्यम् , तदा तस्य स्वरूपबहिर्भूतत्वात् उपलक्षणत्वमेवेति द्रष्टव्यम् । अत्र च वक्तव्यं जन्मादिसूत्रे उक्तं द्रष्टव्यम् । **ज्ञाप्यान्तर्गतत्वा**दिति । विधेयान्तर्गतत्वादित्यर्थः ।

## आध्यानाय प्रयोजनाभावात् ३-३-१४.

**अपि तु गुण एवेत्यर्थ** इति । ततश्च प्रियशिरस्त्वाद्यप्राप्तिरिति सूत्रोक्तमसङ्गतमिति सिंहावलोकितकेन दूषणं द्रष्टव्यम् । न तु परमतोपयुक्ततया ; ब्रह्मगुणत्वेऽपि सत्यकामत्वादिवत् स्वरूपप्रतीत्यनन्तर्गततया सर्वविद्यानुयायित्वशंकाया अभावादिति द्रष्टव्यम् । **शास्त्रेण प्रतिपत्ता**विति । शास्त्रेण प्रतिपाद्यदशायामित्यर्थः ॥

अन्वयादिति चेत् स्यादवधारणात् ३-३-१७.

**अपितु परमात्मबुध्यैव प्रयुक्त** इति । प्राणमयादिशब्दानां तदन्तर्यामिपरत्वमभिप्रेत्य तस्य च परमात्मत्वं संभवतीत्यभिप्रेत्य प्रयुक्त इत्यर्थः । श्रोतुस्तु तदभिप्रायानभिज्ञानात् तत्रैव परमात्मत्वबुद्धिरुत्पन्नेति भावः । **परमात्मबुद्धिविषय एवात्मशब्दप्रयोगादिति** । अयं भावः — अन्वयादिति चेदित्यस्य कोऽर्थः ? अन्नमयादीनां सावयवानामप्यात्मपदजन्यप्रतीतिविषयत्वात् इहापि तथास्त्वित्यभिप्रायः, उत पूर्वेषामपि आत्मपदतात्पर्यविषयत्वात् इहापि तथा स्यादिति । प्रथमस्तु, "आत्मशब्दाच" इति सूत्रे विवक्षितो न; येनान्नमयादिषु निरवयवत्वव्यभिचारादसाधकः स्यात् । किंतु आत्मशब्दतात्पर्यविषयत्वम् । तच्च न देहादाविति नातिप्रसङ्ग इति भावः । यद्वा यथा शुक्तौ रजतभ्रान्त्युत्पादनाय प्रयुक्तो रजतशब्दो नौपचारिकः । तथा प्राणमयादिषु प्रयुज्यमानात्मशब्दोऽपि । ततश्च माणवके सादृश्यबुद्ध्या प्रयुक्तसिंहशब्दवत् न गौणत्वम् । ननु गौणत्वाभावेऽपि तद्वदेव भ्रान्त्यर्थं प्रयुक्तः किं न स्यादिति शंका तदवस्थेति चेन्न — तत्रोत्तरोत्तरोपदेशवदानन्दमयानन्तरमुपदेशान्तराभावेन तत्रैव प्रतिष्ठिततया मुख्यत्वात् ।

**प्रियं मोदः प्रमोद** इतीति । प्रियं मोदः प्रमोद आनन्द इत्येते परस्परापेक्षया भोक्त्रन्तरापेक्षया च उपचितापचितरूपाः लोके उपदृश्यन्ते । उपचयापचयौ च सभेदे; न निर्भेदे ब्रह्मणीत्यर्थः; परैस्तथोक्तेरिति द्रष्टव्यम् । **ब्रह्मगुणानामिति** । ततश्च प्रियमोदादीनामुपचितापचितत्वनियमो नास्तीत्यर्थः । **उपचयापचयप्रसङ्गाच्च निषेध** इति प्रियमोदादिसंबन्धे उपचयापचयावश्यम्भावेन तन्मूलभेदप्रसङ्गादित्यर्थः ।

**इतरेत्वित्यादि । अधिकरणद्वयेन** आनुमानिकाधिकरणे अत्त्रधिकरणे चेत्यर्थः । **ताभ्यो गामानयदिति** । ताभ्यो वागाद्यभिमान्यग्न्यादिदेवताभ्यो भोगसिद्ध्यर्थं शरीरं याचमानाभ्यो गां गोशरीरमानीतवान् । तथाऽश्वशरीरं पुरुषशरीरञ्चेत्यर्थः । एतादृशसर्गपारः प्रजापतिकर्तृकः स्मृतिषु प्रसिद्धः । न तु परमात्मकर्तृकः । याच्ञादिपुरस्सरप्रदानादेः परमात्मन्यसम्भवात् । **क्वचिदात्मशब्देनोपक्रम** इति । "कतम आत्मा योऽयं विज्ञानमय" इति वाजसनेयके

प्रक्रमादिति भावः। तादात्म्योपदेशादिति। 'स वा एषमहानज आत्मा' इति वाजसनेयके ब्रह्मात्मभावोपदेशवत् छान्दोग्येऽपि "तत्वमसी" ति तादात्म्योपदेश-दर्शनादिति भावः। अन्वयादिति चेदिति मूलस्यार्थमाह – **उपक्रमेणान्वयादिति**। औपसंहारिकस्य तत्त्वमसीत्यस्योपक्रमेणैकवाक्यतया अन्वयस्य वक्तव्यत्वादुपक्रमे सच्छब्दश्रवणेऽप्यात्मशब्दाश्रवणादित्यर्थः। **आत्मशब्दाश्रवणान्नेति चेदिति**। आत्मशब्दाश्रवणात् आत्मगृहीतिर्नेति चेदित्यर्थः। **उभयथाप्यधिकरणं पादा-सङ्गतमिति**। ननु प्रथमवर्णकगतपूर्वपक्षे ऐतरेयवाक्यं हिरण्यगर्भोपास्तिपरम्। सिद्धान्ते तु तद्वाक्यं ब्रह्मात्मत्वप्रतिपादनद्वारेणार्थात् तद्भावनायां पुरुषप्रवृत्तिहेतुः। द्वितीयवर्णके पूर्वपक्षे छान्दोग्यवाक्यं सदेवेति निर्दिष्टब्रह्मरूपसत्तासामान्ये ब्रह्मत्व-सम्पत्त्यर्थम्, वाजसनेयवाक्यं तु आत्मनो ब्रह्मत्वगोचरमिति विद्याभेदः सिध्यति। सिद्धान्ते तु द्वे अपि वाक्ये प्रत्यग्ब्रह्मैक्यगोचरे इत्येवं विद्याभेदाभेदयोरुपयोगो वक्तुं सुशक इति चेत् – तर्हि समन्वयाध्याये विचारितानां सर्वेषामप्युपयोगस्य वक्तुं शक्यत्वेनात्र विचारणीयत्वप्रसङ्गात्। **पूर्वमेव वर्णकमपरैरादृतमिति** पाठः।

**अन्येत्वित्यादि। भाष्यविदां स्फुटमिति**। न च सर्वगुणानामुपास्यत्वे, कार्त्स्न्यादिगुणानां प्रतीत्यनुबन्धित्वाभावान् ये यत्र श्रुतास्ते तत्रैवोपसंहर्तव्या इति, "इतरे त्वर्थसामान्यात्" इति सूत्रभाष्यविरोध इति वाच्यम् – सत्यकामत्वादीनां स्वासाधारणाकारेणानुपास्यत्वप्रतिपादनपरं तत् भाष्यम्, इदं तु गुणत्वाकारेण तेषा-मुपास्यत्वप्रतिपादनपरमिति न विरोध इत्यर्थ इति द्रष्टव्यम्। **स्थानभेदादिति**। उच्चावचस्थानभेदेनाधिष्ठेयराज्यादिभेदेन च ऐश्वर्यभेदस्य, विषयभेदेनानन्दादिभेदस्य च दर्शनादिति भावः। **लयेऽपि तदवस्थेति**। ततश्च तन्नियमनानुकूलज्ञान-शक्त्यादीनां नित्यतया न शक्तिमात्रपरिशेष इति भावः। **अधिष्ठेयभेदात् भेद इति**। वक्तव्य इति शेषः। **भेदाभावेऽभिहित इति**। 'न स्थानतोऽपी' ति सूत्र इति शेषः। **स एव ब्रह्मेति**। स्यादिति शेषः। तच्च तत्रानिष्टमिति भावः। **कठवल्ल्यामिति**। **तदिन्द्रियसंयमनमित्यनेनैव सम्बध्यते**। न शिरःपक्षपुच्छादि-कल्पनेन; तस्य तैत्तरीयगतत्वादिति द्रष्टव्यम्। **उत्कृष्टान्वयोपपत्तेरिति**। प्रकरणादुत्कर्षेण अन्वयोपपत्तेरित्यर्थः। **प्रतिसर्गक्रमस्येति**। "इन्द्रियाणि

भूतादौ लीयन्ते भूतादिर्महति लीयन " इति क्रमस्येत्यर्थः । **श्रद्धाजननार्थतये**ति । नन्वेवम्, "जर्तिलयवाग्वा वा जुहुयात् गवीधुकयवाग्वा वा जुहुयात्" इत्यस्य, "अनाहुतिर्वै जर्तिलाश्च गवीधुकाश्च पयसा जुहुयात्" इति पयोहोमविध्येकवाक्यतया होमान्तरापेक्षया प्रशस्तोऽपि जर्तिलहोमो यस्मात् पयोहोमादपकृष्टः, सोऽतीव प्रशस्त इति पयोहोमप्राशस्त्यसमर्पकत्वेन तदेकवाक्यतया यथा न जर्तिलहोमविधिपरत्वम्, एवमन्नाद्युपासनविधीनामप्यानन्दमयोपासनप्राशस्त्यसमर्पकतया अन्नाद्युपासनविधिपरत्वाभावात् तेषामप्रामाणिकत्वमेव स्यादिति चेन्न — विद्याप्रकरणपठितनामादिप्राणान्तोपासनविधिष्विव एकवाक्यत्वोपपत्तेरिति भावः ॥

इत्यानन्दाद्यधिकरणम् ॥

---

## [५] कार्याख्यानाधिकरणम्

कार्याख्यानादपूर्वम् ३-३-१८.

भाष्ये, "**तद्विद्वांसः श्रोत्रिया**" इति श्रुतिवाक्यम्; न वागादिवक्तृकमिति द्रष्टव्यम् । **तस्मादेवंविदशिष्यन्** इत्यादि तु माध्यन्दिनशाखाभिप्रायम् । काण्वशाखायां तु "अनग्नं कुर्वन्तो मन्यन्त" इत्यत्रैव समाप्तिः । भाष्ये, "**एतदेव तदनमनग्नं कुरुत**" **इति वेदने विधिप्रत्ययाभावा**दिति । "एतदेव तदनमनग्नं कुर्वन्तो मन्यन्त" इति पूर्ववाक्ये मननस्य श्रवणेऽपि वेदनस्याश्रवणात्; कथञ्चिद्वेदनस्य श्रवणेऽपि विधिप्रत्ययाश्रवणाच्चेति भावः । "एतदेव तदनमनग्नं कुर्वन्तो मन्यन्त" इत्यत्र वेदने विधिप्रत्ययाश्रवणादिति पाठश्चेत्, समीचीनः । न च वासस्त्वानुसन्धाने विधिप्रत्ययाश्रवणादिति वक्तव्ये अनग्नताचिन्तने विधिप्रत्ययाश्रवणादिति कथमुच्यत इति शंकनीयम् — सर्वस्याप्येकत्वात् । वासःकार्यत्वात् परिधानस्य परिधानकार्यत्वाच्चानग्नत्वस्य तद्धिततिरूपत्वात् । भाष्ये **स्मृत्याचारप्राप्तत्वेने**ति । न च स्मृत्याचारयोरपि इदमेव श्रुतिवचनं मूलं भविष्यतीति शंक्यम् — सर्वकर्माङ्गाचमनस्मृतेर्भोजनाङ्गाचमनविधिमूलत्वाभावेन स्मृत्याचारयोः श्रुत्यन्तरमूलत्वस्यैव वक्तव्यत्वात् । न च, अग्रवन्त्युदगग्राणीति साधारणस्मृतिवचनप्राप्त-

दर्भोदगग्रतायाः, " ये पुरोदञ्चो दर्भाः " इत्यग्निहोत्राङ्गोदगग्रताप्रतिपादकश्रुत्याऽनुवादवदिहापि स्मृत्याचारसिद्धभोजनाङ्गाचमनानुवादोऽस्त्विति वाच्यम् — विस्पष्टविधिविभक्तिश्रवणात् । न च, 'नानृतं वदेत' इति प्राप्तस्यैवानृतवदननिषेधस्य दर्शपूर्णमासाङ्गतया तत्प्रकरणे पुनर्विधानवदिहापि प्राप्तस्यैवाचमनस्य भोजनाङ्गतया विधानमुपपद्यत इति वाच्यम् — अनृतवदननिषेधस्य पुरुषार्थतया प्राप्तस्यापि क्रत्वर्थतया दर्शपूर्णमासप्रकरणे विधानमुपपद्यते ; इह तु सर्वकर्माङ्गत्वप्रापकस्मृत्याचाराभ्यामेव भोजनाङ्गत्वेनापि प्राप्तेस्तदङ्गतया विधानस्य व्यर्थत्वात् आचमनान्तरमेव विधीयते, द्विप्रणयनवदित्येव युक्तम् । निर्णीतं हि पूर्वतन्त्रे सप्तमे, चातुर्मास्येषु, " द्वयोः प्रणयन्ती " त्यनेन मध्यमयोः पर्वणोश्चोदकप्राप्तप्रणयनभिन्नमपूर्वं प्रणयनान्तरमाहवनीयापादानकं विधीयत इति ; तद्वदित्यर्थः । **प्राणान्नत्वदृष्टिर्विधित्सितेति** । सर्वप्राण्यन्नादनस्य कर्तुमशक्यत्वात् तत्र दृष्टिविधिरसन्दिग्ध इति भावः । **स्नात्वा भुञ्जीतेति विधिवदिति** । इतरथा तत्र विस्पष्टविधिविभक्तिश्रवणात् भोजनान्तरमेव विधीयेतेति प्रतिबन्दी अभिप्रेता । " द्वयोः प्रणयन्ती " त्यत्र तु विध्यन्तरैकवाक्यत्वासम्भवात् शाखान्तरे " द्वावग्नी प्रणयत " इत्याहवनीयापादानकप्रणयनान्तरविधानं गत्यभावादाश्रितम् ; नैवमिहेति भावः । **प्रतिपन्नस्यैवाप्राप्तत्वादिति** । एवंविदिति प्रतिपन्नस्य वासस्त्वानुसन्धानस्यैवाप्राप्तत्वादित्यर्थः । **उपक्रमोपसंहारतात्पर्यलिङ्गोपेतत्वादिति** । " किं मे वास " इत्याद्युपक्रमस्य " अद्भिः परिदधति लम्भुको ह वासो भवत्यनग्नो भवती " ति छान्दोग्योपसंहारार्थवादस्य " तदनम[न]ग्नं कुरुत " इति वाजसनेयकोपसंहारार्थवादस्य च वासस्त्वानग्नत्वानुसन्धानानुगुणफलसमर्पकतया दृष्टिविध्यनुगुणत्वादिति भावः । **शाखाद्वयानुयायित्वाच्चेति** । इदमुपलक्षणम् — शाखात्रयानुयायित्वाच्चेत्यपि द्रष्टव्यम् ; छान्दोग्यवाजसनेयगतकाण्वमाध्यन्दिनशाखानुयायित्वात् । " तस्मादशिष्यन्नाचामेत् " इत्यस्य तु माध्यन्दिनशाखामात्रगतत्वेन शाखात्रयानु(याननु ?)यायित्वादिति वैषम्यं द्रष्टव्यम् ।

**पैरस्त्वित्यादि । इति च योजयन्तीति** । कार्याख्यानात् कार्यत्वेन कर्तव्यत्वेन सिद्धस्यैवाऽऽचामेदित्याख्यानात् तस्य च विधेयत्वासम्भवात् अपूर्वं वासस्त्वानुसन्धानमेव विधीयत इति योजनान्तरमपि तद्भाष्ये प्रतीयते । तदभिप्रेत्य **इति च**

**योजयन्तीति च**शब्दः प्रयुक्तः । यद्यपि वासःकार्यपरिधानाख्यानादिति योजना शाङ्करभाष्ये न स्पष्टं प्रतीयते, तथापि, 'आचमनीयास्वप्सु वासस्त्वानुसन्धानं परिधानार्थ' मित्युक्त्वा, "अवश्यविधेये त्वन्यतरस्मिन् कार्याख्यानादपां वासस्त्वकल्पनमेवापूर्वं विधीयते; नाचमनम्, पूर्ववद्धि तत्" इति वाक्यस्य योग्यतया कार्यशब्दस्य परिधानमेवार्थ इति निश्चित्य एवं प्रदर्शितमिति द्रष्टव्यम् । **अप्सु कर्तव्यताया** इति । वासस्त्वानुसन्धानकर्तव्यताया इत्यर्थः ॥

इति कार्याख्यानाधिकरणम् ।

## (६) समानाधिकरणम् ।

### समान एवञ्चाभेदात् ३-३-१९.

**बृहदारण्यकवाक्योदाहरणे**, "सर्वस्य वशी" इति पाठो माध्यन्दिनशाखान्तरपाठः । काण्वशाखायां तु सप्तमाध्याये शाण्डिल्यविद्यायां सर्वस्य वशीति पाठादर्शनात् ।

नन्वस्मिन्नधिकरणे वशित्वादिसत्यकामत्वादिगुणभेदात् विद्याभेदं पूर्वपक्षीकृत्य वशित्वादेः सत्यसङ्कल्पत्वादिगुणाभिन्नत्वात् विद्यैक्यमिति सिद्धान्तः कृत इति भाष्ये प्रतिभाति । नैवं पूर्वोत्तरपक्षौ युज्येते । मनोमयत्वभारूपत्वादिगुणप्रत्यभिज्ञानात् विद्यैक्ये सिद्धे उभयत्रापि परस्परानाम्नातगुणोपसंहारस्य न्यायसिद्धत्वेन पूर्वपक्षानुत्थितेः । गुणाभेदेन सिद्धान्तोऽप्यनुपपन्नः । सत्यसंकल्पवशित्वाद्युपाधीनां परस्परभिन्नत्वात् परस्परव्याप्यत्वमात्रस्य प्रयोजकत्वे ब्रह्मासाधारणानां सर्वेषां परस्परव्याप्यत्वेन सर्वब्रह्मविद्यासु सर्वब्रह्मगुणानां सङ्करप्रसङ्गादिति चेत् — अत्र ब्रूमः — विरुद्धगुण एव पूर्वपक्षे हेतुः । वशित्वं हि वश्यत्वम् । "इमौ स्म मुनिशार्दूल किङ्करौ समुपस्थितौ" इति । तच्च सत्यसङ्कल्पत्वविरुद्धम् । न हि सत्यसङ्कल्पस्य पराधीनत्वं सम्भवति । किञ्च आकाशात्मानमिति आकाशवत् महत्त्वमुच्यते । तच्च बृहदारण्यकगताणीयस्त्वगुणविरुद्धमित्येवं गुणविरोधमवलम्ब्य विद्याभेद इति पूर्वपक्षः । तस्य चाभ्यासोऽनुग्राहकः । अत्र च गुणविशेषश्रवणेनाविशेषश्रवणाभावेऽपि अभ्यासन्यायमूलस्यानर्थक्यस्य तुल्यत्वात् । अत एव हि भाष्ये छान्दोग्यगतशाण्डिल्यविद्यामनुदाहृत्य एकशा-

न्तान्तर्गताग्निरहस्यबृहदारण्यकगतशाण्डिल्यविद्यामेव उदाजहार । छान्दोग्यगत-शाण्डिल्यविद्योदाहरणे अभ्यासमूलः पूर्वपक्षः प्रवर्तयितुं न शक्यते । अभ्यासस्य प्रतिपत्तृभेदेन सफलतया आनर्थक्याभावेन तन्मूलकपूर्वपक्षानुत्थितेः । अग्निरहस्य-बृहदारण्यकयोस्त्वेकवाजसनेयिशाखान्तर्गतत्वेन प्रतिपत्तृभेदेन साफल्यासम्भवेन आनर्थक्यमूलपूर्वपक्षोत्थितेः । न चैकत्र विधिः, अपरत्र तदनुवादेन गुणविधिरिति शक्यते वक्तुम् । क विधिः, क चानुवाद इति नियन्तुमशक्यत्वात् । न च, "भूय-स्त्वेनोभयश्रुति" इतिन्यायेन यत्र भूयांसो गुणास्तत्राग्निरहस्ये विधिः, अन्यत्र तदनु-वादेन गुणविधिरिति व्यवस्था सिध्यति । गुणभूयस्त्वस्य विनिगमकस्यात्र सत्त्वात् । यथा हि द्विविधे सेनासन्निवेशे यत्र छत्रचामरध्वजगजतुरगादिबाहुल्यम्, तत्र राजा : यत्र न, तत्रामात्यादिः तद्गुण इत्यवधार्यते — एवमिहाप्यग्निरहस्ये गुणबहुत्वसत्त्वात् तत्रैव विधिः ; अपरत्र गुणमात्रविधिरिति वाच्यम् — अग्निरहस्यविहितविद्यानुवादेन अनेकगुणविधाने वाक्यभेदापत्तेः । बृहदारण्यकेऽपि विद्याविधेराश्रयणीयतया विहितस्य विधानायोगात् विद्यान्तरत्वमिति पूर्वपक्ष्यभिप्रायः । सिद्धान्तस्तु — 'भूयस्त्वेनोभय-श्रुती' तिन्यायेन अग्निरहस्य एव विद्याविधिः । बृहदारण्यके तु तदनुवादेन गुण-मात्रविधिः । न च प्राप्तानुवादेन अनेकगुणविधानासम्भव इति वाच्यम् — विधेय-तावच्छेदकैक्येऽपि बहूनां गुणानां विधानसम्भवात् अत्र च वशित्वादिनिष्ठवितति-रूपक्रमविशेषस्य विधेयतावच्छेकस्यैकत्वे बहूनामपि गुणानां विधेयत्वं सिद्ध्यति । यथा गुरुमते, "अग्निहत्रं जुहोती" ति वाक्यप्राप्तहोमानुवादेन, "यदग्नये च प्रजापतये च" इति वाक्ये अग्निप्रजापती समुच्चयरूपैकधर्मकोडीकृतौ विधीयेते, एवमिहापि क्रमरूपैकाकारकोडीकृतानां विधेयत्वं सम्भवति । अथवा गुण निष्ठः क्रम एव विधीयते । गुणानां विधिराक्षेपादेव । यथा, "विश्वजित् सर्वपृष्ठ" इत्यत्र पृष्ठगतसर्वताविधानात् पृष्ठानां तद्विशेषणतया तेषामपि विधानम् — एवमिहापि वशित्वादिनिष्ठविततिरूपैकक्रमविधाने तद्विशेषणभूतानां वशित्वादीनामाक्षेपतो विधान-सिद्धेः वाक्यभेदाभावात् । यच्चोक्तं वशित्वस्य सत्यसङ्कल्पत्वविरोधित्वमिति — तन्न ; सर्वस्य वशित्वं हि न सर्ववश्यत्वम् ; अपि तु वश्यसर्ववस्तुकत्वमेव । अथवा वश्यत्वमाश्रितवश्यत्वम् । तच्च सत्यसङ्कल्पत्वाविरुद्धमेव । आकाशात्मत्वम् आकाशवत्

स्वच्छत्वम् । निर्लेपत्वमित्यर्थः । ततश्च प्रदेशद्वयाम्नातगुणानां न परस्परं विरोधः । **वशित्वादेः सत्यसंकल्पत्वाभेदा**दिति भाष्यस्यापि अविरोधादित्येवार्थः । यथा राज्ञामभेद इत्यादौ । ततश्च परमतदूषणटीकाग्रन्थस्यापि, न हि निन्दान्यायेन भाष्याभिमतगुणविरोधनिबन्धनपूर्वपक्षोत्थितिप्राशस्त्यमात्रतात्पर्यकत्वेन अभ्यासस्य पूर्वपक्षहेतुदूषणे तात्पर्याभावात् ॥

इति समानाधिकरणम् ॥

---

## ( ७ ) संबन्धाधिकरणम् ।

### संबन्धादेवमन्यत्रापि ३-३-२०.

भाष्ये **सत्यस्य ब्रह्मणो व्याहृतिशरीरकत्वेनोपास्यत्व**मिति । "य एष एतस्मिन् मण्डले पुरुषः तस्य भूरिति शिरः भुव इति बाहू सुवरिति प्रतिष्ठा" – पादावित्यर्थः – इति व्याहृतिशरीरकत्वमुक्त्वा, "तस्योपनिषदहः" इति आदित्यपुरुषस्य अहर्नामकत्वमुक्तम् । अहश्शब्दः प्रकाशवचनः । अनन्तरम्, "योऽयं दक्षिणेऽक्षिन् पुरुषः, तस्य भूरिति शिरः" इत्यादिना व्याहृतिशरीरकत्वमुक्त्वा, "तस्योपनिषदहम्" इत्यहंनामकत्वमुक्तम् । अहंशब्द आत्मवाची । नन्वस्मिन्नधिकरणे उपास्यभेदस्यैवोपासनभेदप्रयोजकत्वात् स्थानस्य बहिर्भूततया तद्भेदस्य उपासनभेदाप्रयोजकत्वात् विद्याभेदाभावात् नाम्नोरव्यवस्थितत्वमिति पूर्वपक्षं कृत्वा स्थानस्याप्युपास्यान्तर्भावेन तद्भेदेऽपि विद्याभेदात् नाम्नोर्व्यवस्थेति सिद्धान्त इति टीकापर्यालोचनया प्रतिभाति । न तावदिदं युज्यते । सर्वव्याप्तब्रह्मणः स्थानोपदेशस्योपासनार्थत्वेन सिद्धत्वेन स्थानस्यानुपास्यत्वशङ्काया एवाभावात् । इतरथा नामोपदेशस्यापि तथात्वप्रसङ्गेन, "द्वे नामनी उपासनशेषतया आम्नायेते" इति सिद्धवत्कृत्य भाष्ये निर्देशोऽनुपपन्नः स्यात् । किञ्च उपास्यभेदमात्रस्योपासनभेदप्रयोजकत्वेन नाम्नोरप्युपास्यत्वस्य पूर्वपक्षिणोऽप्यभ्युपेयतया तद्भेदेनैव विद्याभेदस्य सिद्धत्वात् स्थानस्योपास्यान्तर्भावबहिर्भावचिन्ता व्यर्था । किञ्च आदित्यमण्डलस्थपुरुषस्यापि अहमिति नामास्तु, अक्षिस्थपुरुषस्यापि अहरिति नामास्तु इत्यव्यवस्था हि

पूर्वपक्षिणोऽभिप्रेता। यदि हि स्थानविशिष्टस्यानुपास्यत्वं पूर्वपक्ष्यभिमतं स्यात्, तर्हि कथमेवं स्थानविशेषविशिष्टस्याव्यवस्था पूर्वपक्षे प्रसज्यते? स्थानस्योपास्यबहिर्भावात्। तस्मात् स्थानस्योपास्यान्तर्भावमभ्युपेत्यैव स्थानविशिष्टे नाम्नोर्नियतत्वानियतत्वचिन्तेति चेत् — सत्यम्। यथा, "अग्निहोत्रं जुहोति" इत्युत्पन्नस्य अग्निहोत्रहोमस्य, "सायं जुहोति," "प्रातर्जुहोति" इति सायंप्रातः-कालभेदेनाभ्यसनीयस्य एकस्यैव कर्मणः, "अग्निर्ज्योतिर्ज्योतिस्सूर्यः स्वाहेति सायं जुहोति; सूर्यो ज्योतिर्ज्योतिरग्निः स्वाहेति प्रातः" इति वचनबलात् व्यवस्थितमन्त्रकत्वं सायं प्रातरिति निर्देशभेदात् — एवमेकस्या एव व्याहृतिविद्याया अक्ष्यादित्यस्थानभेदेनाभ्यसनीयाया अपि, "तस्योपनिषदहरिति" इति वाक्ये तच्छब्दस्य पूर्वनिर्दिष्टस्थानविशेषविशिष्टपरामर्शितया व्याहृतिशरीरब्रह्ममात्रपरामर्शित्वाभावात् व्यवस्था सिद्ध्यतीत्येवास्मिन्नधिकरणे सिद्धान्तः; न तु विद्याभेदमभ्युपेत्य। नचैवं रूपभेदात् विद्याभेद इति भाष्यविरोध इति वाच्यम् — तत्तत्स्थानसंबन्धित्वरूपरूपभेदेन, तस्योपनिषदित्यत्र तच्छब्दस्य तत्तत्स्थानविशिष्टपरतया एकस्यामेव विद्यायां भेदोऽस्ति — नामकृतविशेषोऽस्तीति हि तस्यार्थः। टीकायां **स्थानं किमुपास्यान्तर्गत**मित्यादेरयमर्थः — तस्योपनिषदित्यादौ उपास्यवाचकतच्छब्दे स्थानमन्तर्गतं न वेत्यर्थः (न वेति?।) तच्छब्दः स्थानविशिष्टपरामर्शी न वेत्येव विचारः। विशेष्यमात्रपरामर्शित्वादव्यवस्थेति पूर्वपक्षः। विशिष्टपरामर्शित्वात् व्यवस्थेति सिद्धान्तः। यदि विद्याभेदाभेदयोः पूर्वपक्षसिद्धान्तत्वं भाष्याभिमतमभविष्यत्, तथासति पूर्वोत्तरपक्षयोः विद्यैक्यमभ्युपेत्य परैः प्रवर्तितपूर्वोत्तरपक्षप्रकारे दूषणमवक्ष्यत। अतः पराभिमतपूर्वोत्तपक्षावेव भाष्याभिप्रेतावित्येव निश्चिनुम इति केचिद्वदन्ति — तदसङ्गतम्। "सैव हि सत्यादयः" इति सूत्रभाष्ये, **उत्तरवाक्ये अक्ष्यादित्यस्थानभेदेन विद्याभेदस्य पूर्वमेव, "न वा विशेषात्"इत्यनेन प्रतिपादितत्वादिति** अनुवाददर्शनेन अस्यार्थस्य भाष्यानभिमतत्वात् नायं पन्थाः। अत एकोपक्रमावसानत्वात् व्याहृतिविद्येति संज्ञैक्याच्च तयोर्विद्ययोरैक्यम्। ततश्च एकस्यां विद्यायां स्थानद्वयस्य नामद्वयस्य च एकार्थतया विकल्पे कदाचित् किञ्चित् स्थानं किञ्चिन्नाम चोपसंहर्तव्यमित्येतावदेव सिध्यति; न तु अस्मिन् स्थाने इदं नामेति। अतो

व्यवस्था न युक्तेति पूर्वपक्षाभिप्रायः । सिद्धान्तस्तु "न वा प्रकरणभेदात्" इति इति सूत्रोक्तन्यायेन प्रक्रम एव, "य एष एतस्मिन् मण्डले पुरुषो यश्चायं दक्षिणोऽक्षिन् पुरुषस्तावेतावन्योन्यस्मिन् प्रतिष्ठितौ" इति द्वित्वसंख्यया प्रधानोपास्यभेदप्रतीतौ सत्याम् उपक्रमैक्यमात्रस्य विद्यैक्यासाधकत्वात्, "साहस्राः साद्यस्काः" इति युगपदुपक्रमाणां कर्मणामैक्यादर्शनेन उपक्रमैक्यस्य कर्मैक्यासाधकत्वात् , प्रकृते च, "हन्ति पाप्मानं जहाति च य एवं वेद" इति मण्डलपुरुषविद्यां परिसमाप्यैव, "योऽयं दक्षिणेऽक्षिन् पुरुषस्तस्य भूरिति शिरः" इत्यादिवाक्यसन्दर्भेण अक्षिपुरुषविद्याप्रतिपादनसमापनयोर्दर्शनेन एकोपक्रमावसानत्वस्याप्यभावात् , व्याहृतिविद्येति सञ्ज्ञैक्यमात्रस्य, "संज्ञातश्चेत् तदुक्तमस्ति तु तदपि" इति सूत्रेण निरस्तत्वात् न तयोर्विद्ययोरैक्यम् । न चैवं संवर्गविद्यादिष्वपि अधिदैवाध्यात्मादिभेदेन विद्याभेदप्रसङ्ग इति वाच्यम् — इष्टत्वात् । न च "अनु म एतां भगवो देवतां शाधि यां देवतामुपास्से" इति ब्रह्मविद्यामात्रार्थिने जानश्रुतये विद्याद्वयोपदेशो न युक्त इति वाच्यम्— "यां देवतामुपास्स" इति वाक्ये रैक्वोपास्यसंवर्गस्य उपासनाद्वयसम्भवमभिप्रेत्य रैक्वेणापि विद्याद्वयमुपदिष्टमित्युक्तौ दोषाभावात् । न च "विकल्पोऽविशिष्टफलत्वात्" इति न्यायेन रैक्वस्य विद्याद्वयानुष्ठानाभावात्, स्वानुष्ठीयमानविद्यामात्रोपदेश एव युक्तः, नाधिक इति वाच्यम् — अप्रयोजकत्वादिति ॥ इति सम्बन्धाधिकरणम् ।

---

## [८] संभृतिद्युव्याप्त्यधिकरणम्

**संभृतिद्युव्याप्त्यपि चातः ३-३-२३.**

ब्रह्म **ज्येष्ठा** = ज्येष्ठानि । 'शेः, "सुपां सुलुक्" इति लुकि नलोपे च रूपम् । **वीर्या** = वीर्याणि = पराक्रमविशेषाः । अत्रापि पूर्ववद्रूपम् । ब्रह्मणा अविघ्नेन सम्भृतानीत्यर्थः । अन्येषां पराक्रमाणां बलवद्भिर्मध्ये भङ्गोऽपि भवति । ब्रह्मवीर्याणि तु न तथेति भावः । तच्च ज्येष्ठं ब्रह्म । अग्रे इन्द्रादिजन्मनः प्रागेव, **दिवं** स्वर्गम् **आततान** । नित्यमेव विश्वव्यापकमित्यर्थः । देशतोऽपरिच्छेद-

मुक्त्वा कालतोप्याह — **ब्रह्म भूताना**मिति । जज्ञे बभूवेत्यर्थः । नन्वयं विचारो निर्मूलः । ब्रह्मज्येष्ठेत्यादिवाक्यस्य स्वरूपोपदेशपरत्वसम्भवेन उपासनार्थत्वस्यैवाभावात् । उपासनार्थत्वावश्यम्भावेऽपि ब्रह्मज्येष्ठेत्यादिवाक्य एवोपासनविधिकल्पनसम्भवेन सर्वविद्यार्थत्वतदभावविचाराप्रसक्तेरिति चेन्न — सर्वव्याप्ते तस्मिन् द्युव्याप्तिकथनस्य तदुपासनैकफलकत्वात् । अनारभ्याधीतस्याप्यस्य तत्तत्प्रकरणश्रुतोपासनार्थत्वे संभवति, तत्रैवोपासनान्तरविधिकल्पनायोगात् तत्तत्प्रकरणश्रुतोपासनासु संभृत्यादेरुपसंहर्तव्यतां निश्चित्य किं सर्वासु विद्यासु उपसंहारः उत कासुचिदेवेति विचारस्य समूलत्वात् ।

**कथं सर्वविद्यानुयायिषु आनन्दादिष्वनन्तभूतस्यानन्त्यस्यानुसन्धेय**त्वमिति ग्रन्थस्यानन्तरम्, केचिद्रूचिर इति पठित्वा औपाधिकाल्पत्ववतो ब्रह्मण इत्यादि पठितव्यम् । अतः **स्वतोऽनन्तत्वरूपमाहात्म्यप्रतिपादनपरेत्यर्थः ; न त्वेतद्विद्याया उपास्याकारपरेत्यर्थ** इति पूर्वपक्षग्रन्थेन न विरोधः । **औपाधिकं महत्त्वं विरुद्ध**मिति । द्युव्याप्तत्वस्य द्युपरिच्छिन्नत्वरूपस्य औपाधिकत्वादिति भावः । **उभयत्र समानमनोमयत्वादिव**दिति । शाखाद्वयगतशाण्डिल्यादिविद्यासु मनोमयत्वादिवत् प्रत्यभिज्ञापकाभावेन आध्यात्मिकहृदयाक्ष्याद्यायतनासु विद्यासु द्युव्याप्तिप्रभृतय आधिदैविकविभूतयो नोपसंहारार्हा इत्यर्थः ॥ ब्रह्मसम्बन्धित्वस्य प्रत्यभिज्ञापकस्य सत्त्वेन प्रत्यभिज्ञाहेत्वभावकृतप्रत्यभिज्ञाभावस्य वक्तुमशक्यतया प्रतिबन्धकप्रयुक्तस्यैव प्रत्यभिज्ञाभावस्य वक्तव्यत्वमभिप्रेत्याह — **तद्गुणविशिष्टताभेदा**दिति । ननु ब्रह्मसम्बन्धित्वमात्रस्य प्रत्यभिज्ञापकत्वे सर्वब्रह्मविद्यासु ब्रह्मगुणसांकर्यप्रसङ्ग इति चेन्न — परिशिष्टात्मकखिलग्रन्थपठितेषु स्वप्रकरणपठितोपासनविधिशून्यतया उपसनान्तरान्वयसाकांक्षेषु असति प्रत्यभिज्ञाभञ्जकगुणे ब्रह्मसंबन्धित्वमात्रस्यापि प्रत्यभिज्ञापकत्वसंभवादिति भावः ॥

इति सम्भृतिद्युव्याप्त्यधिकरणम् ।

## [ ९ ] पुरुषविद्याधिकरणम्

पुरुषविद्यायामपि चेतरेषामनाम्नानात् ३-३-२४.

तैत्तिरीयके पठ्यते – "तस्यैवं विदुषो यज्ञस्यात्मा यजमानःश्रद्धा पत्नी शरीरमिध्ममुरो वेदिर्लोमानि बर्हिर्वेदश्शिखा हृदयं यूपः काममाज्यं मन्युः पशुस्तपोऽग्निः शमयिता दक्षिणा वाग्घोता प्राण उद्गाता चक्षुरध्वर्युर्मनो ब्रह्मा श्रोत्रमग्नीत् यावद्ध्रियते सा दीक्षा यदश्नाति यत् पिबति तदस्य सोमपानं यद्रमते तदुपसदो यत्सञ्चरत्युपविशत्युत्तिष्ठते च स प्रवर्ग्यो यन्मुखं तदाहवनीयो यदस्य विज्ञानं तज्जुहोति यत् सायं प्रातर्मध्यन्दिनं च तानि सवनानि ये अहोरात्रे ते दर्शपूर्णमासौ येऽर्धमासाश्च मासाश्च ते चातुर्मास्यानि य ऋतवस्ते पशुबन्धा ये संवत्सराश्च परिवत्सराश्च तेऽर्गणाः सर्ववेदसं वा एतत्सत्रं यन्मरणं तदवभृथः" इति। शमयिता= भोज्यानां संस्कर्ता –। छान्दोग्ये तु 'पुरुषो वा व यज्ञ' इत्यादिना पुरुषस्य यज्ञत्वकल्पनमुपक्रम्य यज्ञावयवाः सम्पादिताः । षोडशोत्तरवर्षशतमिते पुरुषायुषे चतुर्विंशतिवर्षाणि प्रातस्सवनम्; चतुश्चत्वारिंशद्वर्षाणि माध्यन्दिनं सवनम्; अष्टाचत्वारिंशद्वर्षाणि तृतीयसवनम्। यदशिशिषति पिपासति न रमते, ता दीक्षाः। यदश्नाति पिबति रमते ता उपसदः। यद्धसति जक्षति तानि स्तुतशस्त्राणि। यत्तपोदानमार्जवमहिंसा सत्यवचनम्, ता दक्षिणाः। यन्मरणम्, तदवभृथः इति। तत्तत्सवनतया विभक्ते वयसि रोगादिप्रादुर्भावे सति ब्रूयात् 'प्राणा वसव इदं मे प्रातस्सवनम्, माध्यन्दिनं सवनमनु संतनुत' इत्यादयः तन्निवृत्तये जप्या मन्त्राः विहिताः। 'प्र ह षोडशवर्षशतं जीवति' इति षोडशाधिकवर्षशतजीवनं फलत्वेन विहितम्। षोडश अधिका अस्मिन् वर्षशत इति षोडशवर्षशतम्। तदस्मिन्नधिकमिति 'दशान्ताड्डः' इति डप्रत्ययः। भाष्ये **पुरुषावयवेषु यज्ञावयवत्वकल्पनसाम्येने**ति। अत्र पुरुषावयवशब्दः तत्सम्बन्धिधर्मपरः। पुरुषसम्बन्धिधर्मेषु यज्ञावयवत्व कल्पनासाम्येनेत्यर्थः। तेन छान्दोग्ये पुरुषावयवानामनुपादानादसङ्गतिशङ्का पराकृता।

ननु प्रणव एव विस्वर इति न्यायेन तैत्तिरीयके पुरुषस्य यज्ञत्वकल्पनाऽभावात् कथमेकत्वशङ्केति वाच्यम् – 'तस्यैवं विदुषो यज्ञस्ये' त्यत्र समानाधिकरणे

षष्ठ्यौ । विद्वान् यज्ञ इति पुरुषे यज्ञत्वकल्पनमस्तीति पूर्वपक्षिणो हृदयम् । पुरुषस्यैव यज्ञत्वे तस्यैव यजमानत्वं विरुद्धम् । यज्ञत्वयजमानत्वयोरेकस्मिन् विरोधात्, 'विदुषो यज्ञस्यात्मा यजमानः' इत्यस्यैकवाक्यत्वभङ्गप्रसङ्गाच्च । विदुषो यज्ञत्वकल्पने हि, 'विद्वान् यज्ञ आत्मा यजमान' इति वक्तव्यं स्यात् । यज्ञशब्दस्य गौणत्वप्रसङ्गाच्च । विद्वत्सम्बन्धियज्ञस्येति मुख्यार्थसम्भवे गौणार्थग्रहणस्यान्याय्यत्वात् इति सिद्धान्तिनो हृदयम् ॥

**सत्रप्रकरणेऽधीतमपी**ति । अत्र सत्रशब्देनाहीनभिन्नत्वं विवक्षितम् । ततश्चास्य वाक्यस्य ज्योतिष्टोमप्रकरणपठितत्वादयुक्तत्वशङ्का पराकृता । ज्योतिष्टोमप्रकरणे, "तिस्र एव साह्नस्योपसदो द्वादशाहीनस्य" इति श्रूयते । तत्र साह्नशब्देन अह्ना समाप्यमानत्वात् ज्योतिष्टोमोऽभिधीयत इति त्र्युपसत्त्वं तावत् अङ्गमित्यविवादम् । द्वादशोपसत्त्वमपि किं तस्यैवाङ्गम्, उत द्वादशाहादेरहर्गणस्येति संशयः । किमहीनश्रुत्या प्रकरणं विरुध्यते, नेति । तत्र पूर्वः पक्षः — प्रकरणात् ज्योतिष्टोमाङ्गमिदम् । अहीनशब्दोऽपि न हीनः अहीन इति नञ्समासोऽयं प्रकरणविरोधादङ्गीक्रियते । न ह्यसौ केन चित् क्रतुना हीयते । सर्वे हि क्रतवः तं प्रकृतित्वेनापेक्षमाणाः न जहतीति । न तु खप्रत्ययान्तः, येनाहर्गणवाचित्वं स्यात् । एवञ्चाहीनशब्दस्य ज्योतिष्टोमपरत्वसंभवेन श्रुत्यविरोधात् प्रकरणेन ज्योतिष्टोमाङ्गत्वमिति । इति प्राप्तेऽभिधीयते—'साह्नशब्देन ज्योतिष्टोममभिधाय पुनरहीनमित्युच्यमानं संज्ञाभेदादेव तावदर्थान्तरं गम्यते ।', 'रूढिश्चेयं द्विरात्रादौ । सा च योगाद्बलीयसी ।' ततश्च श्रुतिविरोधात् प्रकरणबाधेन द्विरात्राद्यङ्गत्वमिति तृतीये (३-३-८) स्थितम् । **साह्नप्रकरणेऽधीत**मिति पाठस्तु समीचीनः ॥

**एवं साङ्गमभिहिताया** इति । इदमुपलक्षणम्; 'सोमापौष्णं त्रैतमालभेत पशुकामः' इति श्रुतस्य प्रधानफलस्य तदङ्गयूपोदुम्बरत्व इवात्रापि प्रधानफलस्याङ्गेऽनुवादोपपत्तेश्च । सूर्याचन्द्रमःप्राप्तिपूर्वकत्वविशेषप्रतिपादनार्थत्वेन अनुवादसाफल्योपपत्तेश्चेति द्रष्टव्यम् ॥

इति पुरुषविद्याधिकरणम् ॥

## ( १० ) वेधाद्यधिकरणम् ।



वेधाद्यर्थभेदात् ३-३-२५.

'शुक्रं प्रविध्य हृदयं प्रविध्य सर्वं प्रविध्य धमनीः प्रविध्य । शिरो विमृज्य त्रिधा त्रिधा विकृत्त' इत्यादि । सर्वं प्रविध्य हृदयं प्रविश्येत्यपि पठन्ति । अयं च मन्त्रोऽभिचारकर्मणि देवताप्रार्थनारूपः । हे देवते, मद्रिपोः शुक्रं तेजिष्ठम् अङ्गं प्रविध्य — लोण्मध्यमैकवचनम् — विदारयेत्यर्थः । हृदयं प्रविध्य हृदयं च दारयेत्यर्थः । धमनीः = सिराः प्रविध्यदारयेत्यर्थः । एवं मम रिपुः त्रिधा कृत्तः विश्लिष्ट इत्यर्थः । देव सवितः प्रसुव यज्ञम् । हे! देवः सवितः यज्ञं प्रसुव यज्ञं कर्तुमनुजानीहीत्यर्थः । शं नो मित्रः आदित्यः नः अस्माकं शं सुखकरो भूयादित्यर्थः ॥

**उत ब्रह्मविद्यायां प्रकरणाद्विनियोग** इति । प्रकरणं समानदेशत्वम् । तच्च द्विविधम् पाठसादेश्यम् अनुष्ठानसादेश्यम् । पाठसादेश्यं च द्विधा । यथासंख्याम्नातं सन्निध्याम्नातं च । इह सन्निध्याम्नानरूपस्थानप्रमाणादित्यर्थः ॥

**यथायथं श्रुतिलिङ्गवाक्यै**रिति । मन्त्राणां लिङ्गादभिचारादौ, अनारभ्याधीतप्रवर्ग्यस्य 'पुरस्तादुपसदां प्रवर्ग्येण चरन्ती'ति वाक्येनाव्यभिचरितक्रतुसम्बन्ध्युपसदुपस्थापितज्योतिष्टोमे, महाव्रतस्य तत्फले च तृतीयाश्रुत्या विनियोग इति द्रष्टव्यम् । **यदाऽङ्गत्वाये**ति । यदा प्रयोजनान्तरं नातीत्यर्थः । भाष्ये **अन्यत्र विनियोगाभावा**दिति । हृदयं प्रविध्येत्यादिवत् उपक्रम एव विस्पष्टमध्ययनादिशेषत्वाप्रतीतेरिति भावः । भाष्ये सर्वसाधारणं हेतुमाह **विद्याधिकाराच्चे**ति । विद्यासन्निधेरित्यर्थः । अयं भावः — शुक्रं प्रविध्येत्यादीनां प्रवर्ग्यादीनां च कर्मणां बलवत्प्रमाणैरन्यत्र विनियुक्तत्वेऽपि विद्यासन्निधेरवैयर्थ्याय विद्यार्थत्वमपि वक्तव्यम् । 'आनर्थक्यप्रतिहतानां विपरीतं बलाबलम्'इति न्यायात् । अत एव, 'अथातोऽग्निमग्निष्टोमेनानुयुञ्जन्ती'ति वाक्यविनियुक्तस्यापि अग्नेः प्राकरणिकोत्तरवेद्या सह विकल्पोऽङ्गीकृतः । इतरथा प्रकरणाम्नानमनर्थकं स्यादिति । अत एव, 'तुल्यस्सर्वेषां पशुविधिः'इति (३-६-७)

तार्तीयीकाधिकरणे अवान्तरप्रकरणेन सवनीयार्थानामेव सतां पशुधर्माणामग्नीषोमीयस्थानानर्थक्यपरिहाराय अग्नीषोमीयार्थत्वमस्तीति पूर्वपक्षः प्रवर्तितः । अतो विद्यासन्निधेरानर्थक्यपरिहाराय स्वस्वप्रकरणाम्नानात्निराकांक्षाणामपि विद्यानामाकांक्षामुत्थाप्य तया मन्त्राणामेकवाक्यतां परिकल्प्य एकवाक्यतानिर्वाहाय मन्त्राणां ब्रह्मविद्याप्रकाशकसामर्थ्यमपि कल्पयित्वा तद्विनियोजकश्रुतिकल्पनापूर्वकं विद्यासु विनियोगः कार्य इति पूर्वपक्षाभिप्राय इति । न च पूर्वोत्तरपक्षयोः, शुक्रं प्रविध्येति मन्त्रासाधारण्येन प्रवृत्तौ, श्रुतिलिङ्गवाक्यैः विनियुक्तानां शुक्रंप्रविध्येत्यादिमन्त्राणां प्रवर्ग्यादीनां च कर्मणां दृष्टान्ततयोपात्तत्वप्रतिपादकभाष्यटीकाग्रन्थविरोध इति वाच्यम् — शं नो मित्रइत्यादिमन्त्रापेक्षया शुक्रंप्रविध्येत्यादिमन्त्रेषु उपक्रम एवाभिचारादिविनियोगस्य स्फुटप्रतीतिरिति वैषम्यप्रदर्शनार्था तदुक्तिः । न तु वेधादिमन्त्राणां प्रवर्ग्यादीनां च कर्मणां पूर्वोत्तरपक्षविषयत्वमभिप्रेत्य । तथा हि सति पूर्वपक्षे **यदाङ्गत्वाये**त्यादिना सन्निधेरानर्थक्योक्तिरनर्थिकैव स्यात् । बलवद्भिः प्रमाणैरन्यत्र विनियुक्तानामपि दुर्बलप्रमाणेनान्यत्रापि विनियोगसम्भावनासूचकत्वात् तदुक्तेरिति द्रष्टव्यम् ॥

**मन्त्रागतवस्तुसामर्थ्यरूपाल्लिङ्गादिति** ॥ मन्त्रस्वरूपान्तर्भूतवस्तुसामर्थ्यरूपाल्लिङ्गादित्यर्थः । अयं भावः — यद्यपि शुक्रं प्रविध्येत्यादिमन्त्राणां हृदयसम्बन्धिविद्यासु कथञ्चिल्लक्षणायाः सम्भवात् ऐन्द्या गार्हपत्यप्रकाशन इव गौणं सामर्थ्यं सम्भवेत् — तथापि शब्दस्वरूपाविर्भूतं सामर्थ्यमभिचार एव; न विद्यासु । उक्तं हि पूर्वतन्त्रे – 'अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावः स्यात्' इत्यस्मिन् गुणमुख्याधिकरणे — ( ३ - ३ - २ ) ।

'गौणे सदपि सामर्थ्यं न प्रमाणान्तराद्विना ।
आविर्भवति मुख्ये तु शब्दादेवाविरस्ति तत् ॥'

'तात्पर्यं च स्वतो मुख्ये गौणार्थपरता पुनः ।
प्रमाणान्तरविज्ञेया तदभावान्न सिध्यति ॥'

इति । न ह्यग्निरित्येतावता प्रमाणान्तरमन्तरेण गौणार्थसामर्थ्यं तात्पर्यं वा कथञ्चिदपि लौकिकाः प्रतिपद्यन्ते । मुख्यार्थे तु शब्दस्य श्रवणादेव उभयमप्यवगच्छन्ति । न चेह

प्रमाणान्तरमस्ति। येनैषां मन्त्राणां गौणेऽर्थे ऐन्द्र्याः गार्हपत्य इव सामर्थ्यं तात्पर्यं वा अभिव्यज्येत। न चाविर्भूते तात्पर्ये सामर्थ्ये च शब्दादर्थः प्रतीयते। गौणोऽर्थो मन्त्रान्न प्रतीयत एवेति कथमप्रतीयमाने गौणेऽर्थे विनियोगः स्यात्। मुख्यस्त्वर्थः शब्दप्रमाणादेवावगम्यत इति युक्तस्तत्र विनियोग इति॥

ननु कथं भाष्ये **दिवाकीर्त्यमारण्येऽनुवाकत्वकृत** इति समासमध्ये सुबन्तनिर्देश इत्यत आह — **अरण्येऽनुवाकत्वपदमलुगिति** ॥ न विद्यते लुक् सप्तम्या यस्मिन्निति बहुव्रीहिः। 'तत्पुरुषे कृति बहुलम्' इति बहुलवचनात्। अलुक्सप्तमीकं पदमित्यर्थः। 'अरण्येऽनुवाक्या अनुवक्तव्या इति। सप्तमीति योगविभागात् समासः। अनुवचनमनुवाकः। घञ्। तमर्हतीत्यनुवाक्यः। यत्प्रत्ययः। न त्वनुवक्तव्यम् अनुवाक्यमिति ण्यति रूपम् सिध्यति। 'वचोऽशब्दसंज्ञाया' मिति आत्वनिषेधात् अनुवाच्यमित्येव ण्यति रूपं स्यात्॥

इति वेधाद्यधिकरणम्॥

---

## (११) हान्यधिकरणम्

हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दस्तुत्युपगानवत् तदुक्तम् ३-३-२६.

ननु विद्यानन्तरभाविनोस्तत्फलभूतयोः कथं विद्याङ्गत्वमित्यत आह **शब्देनापेक्षितमुच्यत इति**। ज्ञानादिवत् सविषयत्वाभावमाशंक्याह **प्रहीणविषयशब्देनेति**। प्रसिद्धेनान्यप्रवेशशब्देनैव भाष्ये किमिति न व्यवह्रियत इत्यत आह **सुकृतमुपायन्तीति श्रुत्यनुसारादिति**। **तत्क्रतुन्यायादित्यादि**। अयं भावः— हानोपायनश्रवणमिदं[1] वै नुचिन्तनार्थमेव; न केवलं विद्यामहिमप्रख्यापनार्थम्; विद्याप्रकरणपाठस्य स्थानगुणादिपाठवत् अनुचिन्तनार्थत्वस्यैवोचितत्वात्, "ज्यायान् दिवः" इत्यादाविव विरोधाभावाच्च, न च स्थानगुणादिपाठ एव अनुचिन्तनार्थः, फलपाठस्तु तत्संबन्धबोधनैकप्रयोजन इति वाच्यम् — शाण्डिल्यविद्यायाम्, 'एतमितः प्रेत्याभिसंभवितास्मी' ति फलभूताया एव ब्रह्मप्राप्तेरनुचिन्तनीयत्वोक्तिदर्शनात्। किञ्च,

1. इदं प्रतकधारणं न वेति विमृश्यम्।

'अश्व इव रोमाणि विधूय पापम्' इति ताण्डिनां शाखायां ब्रह्मप्राप्त्या सह हानस्यानुचिन्तनीयत्वमुच्यते। तत्समानार्थत्वेन कौषीतकिशाखायामपि हानस्यानुचिन्तनीयत्वसिद्धौ तत्साहचर्यादुपायनस्यापि तत् सिद्ध्यति। तदेवोपायनं शाट्यायनशाखायां श्रूयत इति तत्रापि तस्य तत् सिद्ध्यतीति। **विकल्पेन तिष्ठेयुरित्यर्थ** इति। **वि**शब्दो हि सहानवस्थानलक्षणविरोधार्थकः। क्लृप् सामर्थ्ये इति धातुः। ततश्च परस्परनिरपेक्षाणि स्वकार्यसमर्थानि भवन्तीत्यर्थः। **विकल्पेरन्नि**त्यत्र क्लृपेर्ण्यन्तात् कर्मणि रूपम्। **किमुपायनं हानिशेषतया विद्याङ्ग**मिति। हानिनिर्वाहकतया हान्यर्थत्वेन विद्यायां चिन्तनीयम्, उत स्वत एवेत्यर्थः। न च हान्यनन्तरभाविन उपायनस्य कथं हानिशेषत्वमिति शंक्यम् — उपासनात् प्रहीणस्य पापवृन्दस्य क्वचिदुपायनाभावे निराश्रयतया अवस्थानाभावेन हानेरेव सिद्धिप्रसङ्गात्। **हानिवाक्यशेषमुत स्वतन्त्र**मिति। किं हान्यर्थत्वेनोपायनं चिन्तनाय प्रतिपादयति, उत नेत्यर्थः। **तच्चिन्तनानां विकल्प** इति। यद्यपि स्वातन्त्र्यमात्रं विद्यानां विकल्पसाधकम् — तथापि पृथगाम्नानानर्थक्यप्रसङ्गेन विकल्पः सिद्ध्यतीति भावः।

ननु सर्वपापप्रहाणमन्तरेण मुक्त्यसंभवात् सर्वपापप्रहाणस्य सर्वब्रह्मविद्यापेक्षितत्वं सिद्धम्। प्रहाणञ्च उपायनमन्तरेण न संभवतीति प्रहाणार्थत्वमुपायनस्य सिद्धम्। तच्च तत्क्रतुन्यायादवश्यं चिन्त्यमेवेति सिद्धे कथमिह पूर्वपक्षोत्थितिः? न च पृथगाम्नानसामर्थ्यात् पूर्वपक्षोत्थितिरिति वाच्यम् — किं पृथगाम्नानसामर्थ्यबलात् क्वचित् सर्वपापप्रहाणमन्तरेणैव मुक्तिः सिद्ध्यतीति विकल्पवादिनः पूर्वपक्षिणोऽभिप्रायः, किं वोपायनमन्तरेण सर्वपापप्रहाणं सिद्ध्यतीत्यभिप्रायः, किं वा प्रहाणोपायनं तच्चिन्तनमन्तरेणैव तत्क्रतुन्यायं भङ्क्त्वा सिद्ध्यतीत्यभिप्राय इति (त्रयविवेचनादिति?) चेन्न — हानमन्तरेण मुक्तेः, उपायनमन्तरेण च हानस्यात्यन्तासंभवात् अस्त्येव हानमुपायनञ्च; अपि तु पृथगाम्नानसामर्थ्यात् तत्क्रतुन्यायभङ्गेन हानोपायनचिन्तनमन्तरेणैव तत् सिद्ध्यत्विति पूर्वपक्षिण आशय इति केचित्। अपरे तु प्रायश्चित्तस्थले पापप्रहाणस्य उपायमन्तरेणापि दर्शनादिहापि तथास्तु। न चैवमपि उपायनमन्तरेण कथंचित् प्रहाणसंभवेऽपि प्रहाणमन्तरेण न काप्युपायनं संभवतीति कथमुपायनचिन्तनमिति वाच्यम् — फलसंक्रमणरूपस्योपायनस्य प्रहाणमन्तरेणापि संभवान्न दोषः।

**प्रहाणोपयोगी ह्यन्यत्र प्रवेश** इति । प्रायश्चित्तस्थले पापस्य नाशेनोपायनानपेक्षत्वेऽपीह नाशाभावेनोपायनस्यापेक्षितत्वाद्विदुषि फलजनकत्वशक्तिप्रहाणाभावे सुहृदाद्युपायनस्याभावाच्च परस्परसापेक्षत्वात् द्वयमपि उपसंहर्तव्यमिति भावः । ननु पृथगाम्नानसामर्थ्यमात्रेण विकल्पप्रसंगेन च, 'शिखिना कर्तव्यम्', 'उपवीतिना कर्म कर्तव्यम्', 'शिखोपवीतिना कर्म कर्तव्य'मिति प्रदेशभेदेन वाक्यत्रयश्रवणे एतदधिकरणपूर्वपक्षन्यायेन विकल्पप्रसंगः । किं बहुना; नानाशाखोपदिष्टन्यूनाधिकाङ्गकलापयुक्तेऽप्येष प्रसङ्गः । न चेष्टापत्तिः । अत्रोपायनस्य हानशेषत्ववत् शिखोपवीतयोः परस्परशेषत्वाभावेन एतत्सिद्धान्तन्यायाप्रवृत्त्या तस्य दुस्समाधानत्वप्रसंगादिति चेत् — सत्यम् । प्रतिपत्तृभेदादित्येव पारमार्थिकः परिहारः । प्रकृते तु हानोपायनयोः परस्पराविनाभावात् न विकल्पगन्ध इत्याविष्कृतं सूत्रकृतेति न दोषः ।

**प्रधानशेषभावे दृष्टान्तो मा भूदिति** । प्रकृते प्रदेशान्तरस्थशेषत्वमात्रस्यापेक्षितत्वादिति भावः । **कुशाः** उद्गातॄणां प्रस्तावकर्मणि उदुम्बरदारुशलाकाः । कुशाशब्दश्च स्त्रीलिङ्गः आकारान्तः स्तोत्रीयागणनार्थेषु शङ्कुषु वर्तत इत्यभियुक्तोक्तेः । न च जानपदेतिसूत्रेण स्त्रियां ङीष्प्रसंग इति वाच्यम् — अयोविकारार्थे तस्य विधानात् । अत्र यत् **वाचस्पतिना** कुशाशब्दो नास्तीति मत्वा, "अछन्द एवाच्छन्दः । आच्छादनादाच्छन्दो भवती" ति कुश आच्छन्द इति पदच्छेदेन व्याख्यातम् — यच्च **कल्पतरुकारेण**, "कुशशब्दोऽयमस्त्रीलिङ्गः, अस्त्री कुशमिति अमरसिंहेनानुशिष्टत्वात्" । अतः तदविरोधेन सूत्रे पदं छिनत्ति **आछन्द** इति । आङुपसर्गस्यार्थमाह — **आच्छादनादिति** । अनुष्ठातारं पापादाच्छादयतीत्याच्छन्द इत्यर्थः । श्रूयते हि, 'छादयन्ति ह वा एनं छन्दांसि पापात् कर्मणः' इति । अत्र सामिधः कुशा इत्युच्यन्ते । औदुम्बरा इति विशेषणात् । केचित्तु अत्र समिद्वाचिकुशाशब्दोऽन्य एव स्त्रीलिङ्ग इति लिङ्गानभिज्ञानात् वाचस्पतिः पदं चिच्छेदेति वदन्ति — तदतिमन्दम् । अनेकशब्दत्वस्यान्याय्यत्वात् । कुशसंबन्धात् समित्सु कुशशब्दस्य च लाक्षणिकत्वोपपत्तेः, यज्ञसंबन्धादिव गार्हपत्ये इन्द्रशब्दस्य । यदि तु कस्यां चित श्रुतौ औदुम्बर्य इति प्रयोगः स्यात्, तर्हि छान्दसं भवेत् । भाष्ये च तस्यानुकारमात्रम् । तस्मात्, पदवाक्यप्रमाणाब्धेः परं पारमुपेयुषः ।

वाचस्पतेरियत्यर्थेऽप्यबोध इति साहसम् ॥" इति विजृम्भितम्—तदेतदज्ञानकल्पितम्; यतः कुशाशब्दसद्भावः आबालगोपालं प्रसिद्धः। तथा हि पाणिनीयसूत्रे, "अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य" इति निर्देशः। अयस्कुशेत्युदाहरणम्। तथा जानपदेति सूत्रे, 'कुशाशब्दात् अयोविकारार्थे ङीप् अभिधीयते। कुशी अयोविकारश्चेद्भवति; कुशाऽन्ये'त्युदाहृतम्। यदि कुशाशब्दः स्त्रीलिङ्गो न स्यात्, किं तन्निवृत्त्यर्थेन अयोविकार इत्यर्थविशेषोपादानेन। अतः स्मृतिविरोधात् जानपदेति सूत्रे, 'वृत्तिकारैरयोविकारश्चेत्कुशी भवति। कुशाऽन्ये'त्युदाहरणयोः दर्शितत्वात्, कुशाऽन्येत्यत्र, 'छन्दोगाः स्तोत्रीयागणनार्थान् औदम्बरान् शङ्कून् कुशा इति व्यवहरन्ती'ति च तद्व्याख्यातृभिः व्याख्यातत्वात्, श्रुतिषु, "औदुम्बर्यः कुशाः" इति च सर्वत्र स्त्रीलिङ्गतयैव पठितत्वात् क्वाप्यौदुम्बराः कुशा इति वा औदुम्बराणि कुशानीति वा पाठाभावात्, "अस्त्री कुशं कुशो दर्भः पवित्रम्" इति दर्भार्थ एवामरसिंहेन स्त्रीलिङ्गाभावस्याऽनुशिष्टत्वेन विरोधाभावात्, "छन्देरादेश्च छ" इति सूत्रेण चदि आह्लादने दीप्तौ चेत्यस्मात् चन्दतीति छन्द इति असुनि चकारस्य च छकारे निष्पन्नत्वेन आच्छादयतीत्याच्छन्द इति अस्मिन्नर्थे तस्य रूपस्यासिद्ध्या आच्छादयतीत्याच्छन्द इत्यर्थकथनस्यासंभवात्, 'छादयन्ति ह वा' इत्यादिश्रुतौ च आङः प्रयोगाभावात्, छन्दस्सु च आच्छन्दशब्दस्य प्रयोगाभावात्, अर्थभेदेन शब्दभेदस्य लिङ्गभेदस्य च मित्रभूतसैन्धवादिशब्देषु, "मित्रशब्दः सखिपर्यायः नपुंसकलिङ्गः, सूर्यवाची पुंलिङ्गः; भूतशब्दः पिशाचे उभयलिङ्गः, क्रियावचनस्त्वभिधेयवल्लिङ्गः; सैन्धवशब्दः लवणे उभयलिङ्गः यौगिकस्त्वभिधेयवल्लिङ्गः" इत्याद्युक्तरीत्या दर्शनात्, लक्षणायाश्चातिप्रसंगात् प्रमाणाभावाच्चायुक्तत्वात्, स्वभाष्ये च स्त्रीलिङ्गस्य दृष्टप्रयोगत्वात् तस्य अनुकरणत्वेन शिक्षणायोगाच्चेति। अतः कुशाशब्दः समित्सु स्त्रीलिङ्ग एव आकारान्तः। अयोविकारेऽर्थे कुशीशब्द ईकारान्तस्त्रीलिङ्ग एव। दर्भे त्वकारान्तोऽस्त्रीलिङ्ग एव। जले नपुंसकलिङ्गः। क्षत्रीये पुंलिङ्ग एवेति व्यवस्थेति व्य(यु?)क्तमुत्पश्यामः। तस्मात् —

वाचस्पतिरिहाच्छन्द इति चिच्छेद यः पदम्।

(वाचस्पतेरिहाच्छन्द इति च्छेदयतः पदम् ।)
लिङ्गाज्ञत्वं कथं तस्य पण्डितो नावधारयेत् ॥

तस्य लिंगानभिज्ञानप्रवादासहनोदिता ।
अपि कल्पतरूक्तिः सा नोपहास्या कथं भवेत् — इत्याहुः ॥

अल्पाच्तरत्वात् देवेति । (?)सूत्रकारवचनप्रामाण्यात् "स्तोश्चुना श्चुः"इति चुत्वाभाव इति साधुत्वम् । अत एव, "पृष्ठ्यः षडहो बृहद्रथन्तरसामा कार्यः" इत्यत्र पाठक्रमेण आद्यस्याह्नो बृहत् द्वितीयस्याह्नो रथन्तरमित्याशङ्क्य अल्पाच्तरत्वेन बृहतः पूर्वनिर्देशस्यान्यथासिद्धत्वेन प्रथमस्य रथन्तरम्, द्वितीयस्य बृहत् इत्यस्यार्थस्य चोदकप्राप्तस्य बाधायोगादिति दशमे स्थितम् । ननु तत्र चोदकप्राप्तबाधप्रसंगेन अल्पाच्तरत्वेनान्यथासिद्धपूर्वनिर्देशाधीनपाठक्रमस्यानादरेऽपि इह बाधकाभावात् पाठस्यैव विनिगमकत्वमस्तु । किञ्च, "जगतीं छन्दांसि प्रत्यवरोहन्ति; आग्रयणं ग्रहाः; बृहत् पृष्ठानि' इति गवामयनस्योत्तरे पक्षसि पार्ष्ठिकस्य पञ्चमस्याह्नो बृहत्पृष्ठत्वलिङ्गेन आद्यस्य रथन्तरं द्वितीयस्य बृहदित्यादिक्रमस्यैव निर्णयाच्च । 'बृहद्रथन्तरसामा कार्य' इत्यादिविषयो हि गवामयनस्य पूर्वस्मिन् पक्षसि अवान्तरप्रकरणेन निविशन्ते । पूर्वस्मिन् पक्षस्यनुष्ठिताः छन्दोनी*पृष्ठसामस्तोमगणा उत्तरे पक्षसि प्रातिलोम्येनानुष्ठेयाः; 'प्रत्यवरोहिणो मासा भवन्ति उत्तरे पक्षस्यावृत्तगणाः' इत्यादिदर्शनात् । ततश्च यदि पूर्वस्मिन् पक्षसि अयुग्मस्याह्नो बृहदिति नियमः स्यात्, तदैवोत्तरपक्षसि अयुग्मस्य पञ्चमस्याह्नो बृहत्पृष्ठत्वादर्शनमुपपन्नम् । तस्माद् 'बृहद्रथन्तरसामा कार्य' इत्यत्राद्यस्याह्नो रथन्तरं द्वितीयस्य बृहदित्यादिक्रमेणैव षडहोद्देशेन बृहद्रथन्तरसामत्वं विधीयत इति लिङ्गबलात् पाठक्रमानादर उपपद्यते, प्रकृते बाधकाभावात् क्रमविनिगमकाकांक्षायामन्यथा सिद्धपाठक्रमोऽपि विनिगमको भवत्येवेति चेत् — सत्यम् । यावत् पाठतः क्रमः कल्प्यते, ततः प्रागेव, "देवच्छन्दांसि पूर्वाणि" इति श्रुत्या क्रमे अवगते न पाठक्रमकल्पकत्वम् । अत एव पशुसोमाधिकरणे 'पशुना यजेते' ति प्रत्यक्षविधौ सति नैन्द्रवायवादिवाक्यैर्विधिकल्पनेति स्थितम् ।

**स्तोत्रं** प्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानम्; अप्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानं **शस्त्रम्**; **उपाकरणं** स्तोतॄन् प्रति प्रेरणम्। **उपाकरोति प्रस्तौतीत्यर्थ** इति। प्रस्तावयतीत्यर्थः। पञ्चभिर्हलैः कर्षतीतिवत् अन्तर्भावितण्यर्थः। **समयाविषिते** अर्धास्तमिते। विपूर्वात्, 'षोऽन्तकर्मणि' इत्यस्मात् निष्ठायां 'द्यतिस्यती' ति इत्वे, 'उपसर्गात् सुनोती' ति षत्वे च रूपम्। केषुचित् कोशेषु **समयाविषिते समया उदिते इत्यर्थः** इति पठ्यते। तस्य वाक्यस्यायमर्थः साम्प्रदायिकः — उदितशब्दः प्रकाशमानपरः। समयाविषिते = अर्धं प्रकाशमाने; अर्धास्तमित इत्यर्थः पर्यवसित इति। अस्य ग्रन्थस्य बहुषु कोशेषु पाठश्च न दृश्यते। यद्यपि, 'यदा पुरस्तात् अरुणा स्यादथ प्रव्रज्यः उपकाश उपव्युषं समयाविषिते उदितानुदिते उदिते वा प्रातः संगवे माध्यंदिने वा पवमाने स्तुते' इत्यापस्तम्बप्रवर्ग्यसूत्रभाष्ये, 'यदा यस्मिन् काले पुरस्तादरुणा रक्ता स्यात्, अथ अस्मिन् काले प्रचरितव्यः प्रवर्ग्यः; उपकाशे उदयसमीपे वा। समयाविषितम् — उदयप्राप्तम्; उदितानुदितम् — अर्धोदितम्; उदिते वा समस्ते संगवान्तः प्रातर्माध्यंदिने वा पवमाने स्तुत इति। केचित् समयाविषितशब्दार्थमुदितानुदितमित्याहुः। उपदे(का ?)शः समयाविषितम्, अर्धास्तमितमिति च। मनुश्च, "उदितेऽनुदिते चैव समयाविषिते तथा। सर्वथा वर्तते यज्ञ इतीयं वैदिकी श्रुतिः" इति। 'समयाविषिते उदितानुदिते इत्यर्थः। सूर्य इति शेषः" इति समयाविषित इति पदं व्याख्यातम् — तथापि प्रवर्ग्यप्रकरणे समयाविषितशब्दस्य अर्धोदितपरत्वेऽपि षोडशीस्तोत्रप्रकरणे तथात्वासंभवात् सांप्रदायिकार्थ एव युक्त इति द्रष्टव्यम्।

उपगानमुद्गातृषु स्तुवत्सु ऋत्विग्भिः कर्तव्यं भो इति शब्दोच्चारणम्। "अपि तु वाक्यशेषः स्यात् अन्याय्यत्वाद्विकल्पस्य विधीनामेकदेशः स्यात्" इति 'यज्ञेषु (यजतिषु ?) येयजामहं करोति; नानूयाजेषु' इत्यनारभ्य श्रूयते। तत्र सामान्येन सर्वयज्ञेषु येयजामहस्य विधिः, ततो विशिष्यानूयाजेषु तन्निषेध इति पर्युदासाधिकरणे पूर्वपक्षः कृतः। तत्र सिद्धान्तसूत्रमिदम्। तथा सति अनूयाजेषु येयजामहतन्निषेधयोः षोडशिग्रहणाग्रहणयोरिव विकल्पो भवेत्। न च पदाहवनीय-

शास्त्रवत् इह सामान्यविशेषन्यायः प्रवर्तते। तत्र होमसामान्यद्वारा पदशास्त्रविषये होमे प्राप्तिपर्यवमानात् आहवनीयशास्त्रात् प्रागेवाहत्य होमविशेषविषयतया तत्र प्रवर्तितेन पदशास्त्रेणापहृतपदविशेषविषयमाहवनीयशास्त्रं तदितरविशेषविषयं व्यवतिष्ठत इति युक्तम्; इह तु सामान्यविषयमपि विधिशास्त्रमेवानूयाजानपि क्रोडीकृत्य प्रवर्तत इति वक्तव्यम्। अन्यथा प्रसक्त्यभावेन निषेधायोगात्। एवं शास्त्रप्राप्तस्य शास्त्रान्तरेण सर्वथा निषेधे प्रापकशास्त्रस्य सर्वथा अप्रामाण्यं स्यात्। अतः तत्परिहारार्थम् अनुयाजेषु येयजामहविधिनिषेधयोः शास्त्रीययोः विकल्पोऽङ्गीकार्यः स्यात्। स चान्याय्यः। तस्मात् नानूयाजेष्वित्ययमंशः पर्युदासवृत्त्या अनूयाजव्यतिरिक्तपरः यज्ञेषु येयजामह इत्यत्र यज्ञविशेषणसमर्पकतया तदेकदेशो भवतीति सूत्रार्थः।

ननु नेदं सूत्रं प्रदेशान्तरस्थवाक्यशेषतायामुदाहरणम्। किन्तु, 'दीक्षितो न जुहोति न ददाती'ति ज्योतिष्टोमप्रकरणाम्नातं वाक्यं क्रत्वर्थपुरुषार्थसाधारण्येन सर्वेषामपि होमानां प्रतिषेधकम्। अथ वा क्रत्वर्थेषु प्रत्यक्षशिष्टान् विहायातिदेशप्राप्तानां पुरुषार्थानाञ्च होमानां प्रतिषेधकमिति प्रतिषेधपूर्वपक्षनिराकरणार्थं यत् प्रवृत्तम्, 'अपि तु वाक्यशेषत्वादितरपर्युदासः स्यात् प्रतिषेधे विकल्पः स्यात्'(१०-८-४)इति सूत्रम्, तदिहोदाहर्तव्यम्। तेन हि सूत्रेणाग्निहोत्रादिहोमानां स्वस्वविधिभिः क्रतुमध्ये कर्तव्यत्वेन, 'न दीक्षित' इत्यादिना वचनेन अकर्तव्यत्वेन च पर्युदासाधिकरणपूर्वपक्षन्यायात् विकल्पप्राप्तौ तत्परिहाराय अदीक्षित इत्यादिवाक्यस्य अग्निहोत्रादिवाक्यशेषत्वमभ्युपगम्य नञः पर्युदासवृत्तिराश्रिता। तेन अदीक्षितो यावज्जीवमग्निहोत्रं जुहोती'त्यादिरग्निहोत्रादिवाक्यानामर्थः संपद्यत इति प्रतिपादितम्। अतः तदेव सूत्रमिहोदाहर्तव्यम्। अत एव शङ्करभाष्ये तदेवोदाहृतमिति चेत्—सत्यमेतत्। तथापि तत्र प्रतिषेधाश्रयणेऽपि वस्तुतो न विकल्पप्रसङ्गः; न जुहोतीति होमनिषेधः क्रत्वर्थः, होमः पुनः पुरुषार्थ इति विधिनिषेधयोः भिन्नविषयत्वात्। विधिनिषेधयोः क्रत्वर्थत्वे हि तयोः परस्परविरोधेन युगपदुपसंहारासामर्थ्येन षोडशिग्रहणरीत्या तयोरन्यतरस्य कस्य चित्परिग्रहेऽपि क्रतोः साद्गुण्यात् विकल्पो भवेत्। इह तु होमनिषेध एव क्रत्वर्थ इति होमपक्षे क्रतोर्वैगुण्यात् न वस्तुतो विकल्पस्य प्रसक्तिः। कृत्वाचिन्तया प्रवृत्तं तत् सूत्रम्, यदि पुरुषार्थहोमप्रतिषेधाश्रयणे

पर्युदासाधिकरणपूर्वपक्षरीत्या विकल्पः प्रसज्येत, तदा तत्परिहाराय, 'न दीक्षित' इत्यस्य अग्निहोत्रादिवाक्यशेषत्वमङ्गीकृत्यापि विकल्पः परिहरणीयः; किञ्चित्प्रकरणाम्नानस्यैकस्य शब्दस्य प्रदेशान्तराम्नानेऽन्यवाक्यशेषभावादपि अन्याय्यो विकल्प इति न्यायव्युत्पादनार्थमिति, नातीवादर्तव्यम् । अत एव **भामत्यां** भाष्यं शिक्षित्वा इदमेव सूत्रं लिखितम् । एवञ्च प्रदेशान्तराम्नातस्य शब्दस्य प्रदेशान्तराम्नातवाक्यशेषत्वं कुशादिदृष्टान्तेनोपपादितमेव । तदुक्तमित्ययं सूत्रांशस्तु वस्तुतः प्राप्नुवन् विकल्पः सति संभवे सर्वथा परिहरणीय इति एतावन्मात्रे पूर्वतन्त्रसंमतिप्रदर्शनार्थं इत्यभिप्रायेण, नानूयाजेष्वित्यत्र प्रतिषेधपक्षे विधिनिषेधयोरुभयोरपि क्रत्वर्थत्वेन वस्तुतो विकल्पप्राप्तिरस्तीति तत्प्रदर्शनाय पर्युदासाधिकरण सिद्धान्तसूत्रमुदाहृतम् ।

**परेत्वित्यादि** । यथा अश्रूयमाणमेकत्र शाखायामङ्गं तस्मिन्नेवोपासने शाखान्तरे श्रूयमाणमुपसंह्रियते । एवं शाखान्तरे श्रुतमुपासनमुपसंहरिष्यत इत्यत आह **विद्यान्तरशेषतया श्रुतस्येति** । द्वादशमासा इत्यर्थवादाश्रवणे आदित्ये एकविंशत्वस्य दुर्ज्ञानत्वादिति भावः । **कार्यान्तरप्रतिबन्ध** इति । किञ्चित्कालं कार्यानुपपत्तिरित्यर्थः । ननु, 'तत्सुकृतदुष्कृते धूनुते । तस्य प्रिया ज्ञातयः सुकृतमुपयन्ति; अप्रिया दुष्कृतम्' इति **कौषीतकी**वाक्ये उपायनसंनिधानात् धूननशब्दस्य हानलक्षकत्वेऽपि, 'अश्व इव रोमाणि विधूय पापम्' इत्यादौ शाखान्तरे उपायनासंनिधानात् कथं प्रहाणलक्षणोचितेत्याशंक्याह — **शाखान्तरस्थस्ये**त्यादिना । **अधिकरणविशेषपश्चाद्भावनियामकेने**ति । अधिकरणविशेषः वेधाद्यर्थभेदाद्यधिकरणमित्यर्थः । **द्वितीयानन्तरमि**ति । उपसंहारोऽर्थाभेदादिति द्वितीयाधिकरणानन्तरमित्यर्थः । तन्मते तस्य द्वितीयत्वादिति द्रष्टव्यम् । **सर्वकर्मप्रहाणप्रत्यभिज्ञापनेनेति** । कौषीतकीशाखायामिति शेषः । ननु कौषीतकीवाक्यस्य पर्यङ्कविद्याप्रकरणपठिततया प्रकरणादेव विद्योपस्थापनसंभवात् न लिङ्गात् विद्योपस्थापनम् — तथापि सर्वब्रह्मविद्योपस्थापनं प्रकरणान्न संभवतीति ब्रह्मविद्याव्यभिचरितकर्मक्षयरूपलिङ्गेन सर्वब्रह्मविद्योपस्थापनं युक्तमिति भावः । **निद्राया अन्यैरुपायनमपेक्षितमि**ति । ननु तत्र विधूतशब्दस्य नाशार्थकत्वात् नष्टाया निद्राया उपायननिरपेक्षत्वेऽपि प्रकृते

पुण्यपापयोर्नाशाभावेन प्रहाणार्थकतया तत्र चोपायनस्यापेक्षितत्वात् । इतरथा उपायनस्य हानौ योगित्वप्रतिपादकभाष्यवाक्यस्ववाक्याभ्यां विरोध इति चेन्न— हानोपायनवाक्यद्वये रसदर्थावलम्बनत्वेन स्तुतिमात्रपरत्वमिति वदता एकस्यासदर्थस्य असदर्थान्तरोपयोगित्वस्यापि वक्तुमशक्यत्वादित्यर्थः । **क्रियोत्तीर्णयो**रिति । क्रियाव्यतिरिक्तयोरित्यर्थः ।

इति हान्यधिकरणम् ।

---

## ( १२ ) साम्परायाधिकरणम् ।

साम्पराये तर्तव्याभावात्तथा ह्यन्ये ३-३ २७.

**ताण्डिनः = छन्दोगा** इति । छन्दोगविशेषा इत्यर्थः । अकृतं ब्रह्मलोकं कृतात्मा कृतकृत्यात्मा अभिसंभवानीति श्रुत्यर्थः । **न हि कौषीतकीवाक्यमात्रेण संशयो जायत** इति । ननु कौषीतकीवाक्यपाठक्रमार्थस्वभावाभ्यां संशय इति शक्यते वक्तुम् । अत एवार्थस्वाभाव्यात् सुकृतदुष्कृतहानिकाले अवधृते सतीति भाष्यमिति चेन्न— स्वाभाव्यस्य श्रुत्यनुग्राहकत्वस्यैव युक्तत्वेन श्रुतौ सत्यामर्थस्वाभाव्यस्य प्रधानहेतुत्वाश्रयणस्यान्याय्यत्वादिति भावः । ननु शाण्डिल्यशाख्याश्रुतिश्रुतिभ्यामर्थस्वाभाव्येन च देहपातसमय एव हानप्रतीतेः कौषीतकीपाठमात्रमवलम्ब्य कथं पूर्वपक्षः, श्रुत्यर्थाभ्यां पाठस्य दुर्बलत्वादिति चेत् — उच्यते । न पाठक्रममात्रमवलम्ब्य पूर्वपक्षः, अपि तु श्रुतिमपि । तथाहि — " तत् सुकृतदुष्कृते धूनुत " इत्यत्र तदिति शब्दस्य तस्मादित्यर्थकस्य संनिहितपरामर्शितया विरजानद्यतिक्रमणरूपहेतोरिति ह्यर्थः । ततश्च श्रुतिपाठाभ्यां पूर्वपक्षः । सिद्धान्ते तु तच्छब्दस्य सन्निहितप्रधानपरामर्शित्वात् अर्थद्वयविद्यायाः संनिहितत्वात् तस्या एव परामर्शेन श्रुत्यभावात् पाठमात्रं पूर्वपक्षहेतुरवशिष्यते । तत्तु अर्थक्रमेण श्रुत्या च बाध्यत इति न काप्यनुपपत्तिः । यद्वा, 'तत् सुकृतदुष्कृते धूनुत ' इत्यत्र तच्छब्दस्य तदेत्यर्थः । स च तच्छब्दः, 'ये वै के चास्माल्लोकात् प्रयन्ती' ति व्यवहितवाक्यनिर्दिष्टप्रायणकालपरामर्शीति द्रष्टव्यम् । **सांपराय** इति । 'युद्धायत्योस्सांपरायः' इति

निखण्डुः, संपरा = देहविगमस्य पश्चात् ईयते = प्राप्यते इति संपरायः । तच्च् । संपराय एव सांपरायः ; प्रज्ञादित्वात् स्वार्थे अण् । तर्तव्याभावादिति । तरतिः प्राप्तिवचनः, वेदान्तं तरतीत्यादि त् । तॄ प्लवनतरणयो रिति धातोः सेट्त्वादत्रेडभावः आगमशासनस्यानित्यत्वनिबन्धनः ॥

छन्दत उभयाविरोधात् ३-३-२८.

तद्वदिहापीति छेदः । भाष्ये चरणश्रुतो वाक्यात् यत्र इति, वाक्यार्थ इत्यर्थः । न तु तथा पठितव्यमिति पाठः कल्प्यत इति भावः । 'अग्निहोत्रं जुहोति यवागूं पचति' इत्यत्रेव पाठानुमितक्रमस्यैव बाध्यत्वस्य वक्तव्यत्वेन पाठस्यान्यथाकल्पनासंभवादिति द्रष्टव्यम् ।

गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः ३-३-२९.

शङ्कते केवलस्येत्यादिना । अनाविर्भूतत्वाच्चेति छेदः ।

उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ३-३-३०.

लक्षणशब्दः स्वरूपवाचीति । स्वासाधारणधर्मशरीरत्वादिवाचीत्यर्थः । ततश्च तस्य लक्षणमिव लक्षणं यस्येति उपमानगर्भबहुव्रीहिः । तज्जातीयोपलब्धेरित्यर्थ इति भावः । तल्लक्षणार्थोपलब्धेरित्युक्तमिति । इतरथा सूक्ष्मशरीरस्य प्रकृततया तद्व्यक्तेरेव ग्रहणं स्यादित्यर्थः ।

यावदधिकारमवस्थितिराधिकारिकाणाम् ३-३-३१.

वर्णकान्तरञ्च कृतमिति । द्वितीयं सूत्रं परैरन्यथा व्याख्यातमित्यर्थः । न तु सूत्रस्य वर्णकद्वयं कृतमिति मन्तव्यम् । यद्वा जीवद्दशायां छन्दतोऽनुष्ठानमुपपद्यते उत्क्रान्तस्य छन्दतोऽनुष्ठानं नोपपद्यत इति छन्दत इति पदस्य योजनाद्वयं प्रदर्शितमिति भावः । एवं सति निमित्तनैमित्तिकयोरिति । कारणानन्तरमेव कार्योत्पादे सति कार्यकारणभावोपपत्तिः ; न तु विलम्ब इत्यर्थः । कथमर्थवत्त्वस्य प्रकारोऽर्थशून्यत्वमिति । न च — उभयथाऽर्थवत्त्वमिति नान्वयः । अपि तु गतेरर्थवत्त्वं गतिप्रयोजनवत्त्वमुभयथा = अस्ति च नास्ति च, क्वचिदस्ति क्वचिन्नास्तीत्यर्थे दोषाभावादिति वाच्यम् — सत्त्वासत्त्वयोः प्रकारतया कथनस्यातिक्लिष्टत्वादिति

भावः । **परेतित्यादि । गन्तृपुरुषसमवायित्वाभावेनेति** । न हि गच्छन् पुरुषः मम अनावृत्तिश्रुत्यविरोधोऽस्त्विति कामनया गच्छतीति भावः ।

इति सांपरायाधिकरणम् ।

---

## ( १३ ) अनियमाधिकरणम् ।

**अनियमः सर्वेषामविरोधः शब्दानुमानाभ्याम् ३-३-३२.**

**आचार्यस्तु ते गतिं वक्तेति गत्यनुवाद** इति । आचार्यस्तु ते गतिं वक्तेति अङ्गिरावाक्येन परिशेषिताया गतेः, 'तेर्चिषमभिसंभवन्ती' ति यत् कीर्तनम्, तत् उपायनान्तरे अर्चिरादिगतिं निरुणद्धि, उत नेत्यर्थः । अयं भावः—यद्यर्चिरादि-गतिः सर्वसाधारणी, 'तद्य इत्थं विदुः' इति पञ्चाग्निवाक्येनोपदिश्येत, तर्हि तस्यामेव शाखायामुपकोसलविद्यायामर्चिरादिपाठोऽनर्थकः स्यात् । शाखैक्येन प्रतिपत्तृभेदेन परिहारासंभवात् । न च शाण्डिल्यविद्यायामेव एकत्र विधिः, अन्यत्रानुवाद इति नियन्तुं शक्यते; विनिगमकाभावात् । 'आचार्यस्तु ते गतिं वक्तेति' गत्युक्तिपरि-शेषेण उपकोसलविद्यायां गतेः प्रतिपिपादयिषितत्वावगमेन स्तुत्यर्थानुवादत्वाभावाच्च विद्यान्तरप्रतिपत्तिं प्रतिबध्नातीति पूर्वपक्ष्यभिप्रायः । 'यदु चैवास्मिन् शव्यं कुर्वन्ति यदु च न, तेर्चिषमभिसंभवन्ति'' इति शवदहनादिवैगुण्येऽपि अर्चिरादिगतिरुपको-सलविद्यानिष्ठस्य सिद्ध्यतीति विद्यास्तुत्यर्थतया, श्रुतोपनिषत्कसूत्रटीकोक्तरीत्या अपुनरावृत्तिरूपगुणविधानार्थतया वा अर्चिरादिकीर्तनस्य न विद्यान्तरे अर्चिरादि-गत्यवगतिप्रतिबन्धकत्वमिति सिद्धान्त्यभिप्राय इति । एतत् सर्वं हृदि निधाय **किमुपकोसलविद्यायामिति** वाक्यं प्रयुक्तमिति द्रष्टव्यम् । **उदाहृतवाक्यैः सर्व-ब्रह्मविद्यानिष्ठानां अर्चिरादिगमित्त्वं दर्शयति छान्दोग्ये इत्थं विदुरिति** कचित्कोशेषु पाठो दृश्यते । तत्र **छान्दोग्य** इत्येतत् लेखकदोषकृतम्; छान्दोग्य इत्येतस्य पूर्वान्वितत्वात् । भाष्ये **य इत्थं** विदुरित्येतदुपलक्षणम्, य एवमेतद्वि-दुरिति वाजसनेयिवाक्यस्यापि । ततश्च, 'य इत्थं विदुः', 'य एवमेतद्विदु' रिति च पञ्चाग्निविद्यानिष्ठानित्यर्थः । 'ये चेमेऽरण्ये' इत्यादिनेत्यत्रादिशब्देन 'ये

चामी अरण्य ' इत्यादिवाजसनेयवाक्यस्य ग्रहणम् । ये चामी अरण्ये स्थिता अमी वनस्थादयः श्रद्धां कृत्वा सत्यं परं ब्रह्मोपासत इति श्रुत्यर्थः । **यत्र कामाः परागताः** = कामा क्षुद्रविषयाः परागताः = निवृत्ता भवन्ति, तद्ब्रह्मलोकाख्यं स्थानं विद्यया आरोहन्ति । तत्र स्थाने दक्षिणमार्गगा न यन्ति = न गच्छन्ति ; तपस्विनोप्यविद्वांसो न यन्तीत्यर्थः । **शाब्दत्वं संभवदि**ति । भाष्योक्तरीत्या तपश्शब्दस्यैव ब्रह्मवाचकत्वसंभवादिति भावः । **संकोचः अनुवादत्वञ्चे**ति । ' श्रद्धां सत्यमुपासत ' इत्यस्य पञ्चाग्निविद्यामात्रविषयत्वमेव । ततश्च, ' तद्य इत्थं विदुः ' इत्येतत्, ' अनुविद्य विजानाती ' त्यत्र अनुविद्येतिवदनुवाद इत्यर्थः । न च ' तद्य इत्थं विदुर्येचेमेऽरण्य ' इति यच्छब्दद्वयस्य चशब्दस्य च वैयर्थ्यं शङ्क्यम् — गत्यभावादुपपत्तेरिति भावः । **अन्येषामनुवादत्वमात्रमि**ति । उपकोसलविद्यापर्यङ्कविद्यादिवाक्यानामित्यर्थः । **तद्व्यक्तीभविष्यती**ति । उत्तराधिकरणे संभूतिश्रुतिव्याख्याने गतेः सर्वविद्याचिन्तनीयत्वं व्यक्तीभविष्यतीत्यर्थः । **इतिहासपुराणवचसामप्रमाणतये**ति । ननु भवत्पक्षेऽपि समानमेतत् ; ' अश्व इव रोमाणि विधूय पापम् ' इति श्रुतिबलात् ब्रह्मविदः शरीरपातसमये सर्वकर्मक्षयार्चिरादिगतिविरजातरणब्रह्मप्राप्त्यादीनां श्रवणात् वसिष्ठावा(पा)न्तरपःप्रभृतीनां देहान्तरसंबन्धप्रतिपादकपुराणवचसामप्रामाण्यप्रसंगेन शक्त्यनुस्थितिप्रसंगात् । न च ' भोगेन त्वितरे क्षपयित्वा अथ संपद्यत ' इत्यत्रोक्तन्यायेन, ' तस्य तावदेव चिरं यावन्न विमोक्ष्ये ' इत्यस्य विद्यायोनिशरीरावसानत्वनिराकरणात् तच्छ्रुत्यनुग्रहसत्त्वेन वसिष्ठादीनां देहान्तरसत्त्वप्रतिपादकपुराणवचसां प्रामाण्यं संभवतीति वाच्यम् — तर्हि तन्मतेऽपि तेषां प्रामाण्यं संभवतीति वक्तुं शक्यत्वात् । किञ्च तेनैवाधिकरणेन प्रारब्धनाशावधिकत्वे संसारस्य निश्चिते सति किमत्र विचार्यमवशिष्यत इति चेत् — अत्रोच्यते । अस्मन्मते विदुषः शरीरपातसमये सर्वकर्मक्षये वसिष्ठावा(पा)न्तरतपःप्रभृतीनां जन्मान्तरसंबन्धप्रतिपादकपुराणानां का गतिरित्याशंक्य, ' भोगेन त्वितरे ' इत्यधिकरणसिद्धन्यायस्मारणं सूत्रकृता क्रियत इति शक्यं वक्तुम् । परमते स्मृतिप्रमाणमवलम्ब्य श्रुतिप्रामाण्याक्षेपपर्यन्तपूर्वपक्षप्रवर्तनमसंगतमित्यत्र तात्पर्यात् । ननु, 'अर्चिरादिना तत्प्रथितेः' इत्यधिकरणे अर्चिरादिमार्गव्यतिरेकेण मार्गान्तरं नास्तीति स्थापयिष्यमाणत्वात् देशविशेष-

विशिष्टब्रह्मप्राप्तेः मार्गान्तरेणासंभवात्, अर्चिरादिगतेः सर्वविद्यासाधारण्यं सिद्धमेवेति (सिद्धयत्येव सर्वविद्यासाधारण्यमिति) व्यर्थोऽयं विचारः। न च अर्चिरादिगतेस्सर्व-विद्यासाधारण्येऽपि सर्वविद्यासु अनुचिन्तनीयत्वसिद्धयर्थमिदमधिकरणमिति वाच्यम्—ब्रह्मप्राप्त्युपायतया सर्वविद्यान्वये सिद्धे तत्क्रतुन्यायेन सर्वत्र चिन्तनीयत्वस्यापि सिद्धेः। अस्मन्मतेऽस्याधिकरणस्यार्चिरादिगतिचिन्तनविषयत्वाभावाच्चेति चेत्—सत्यम्। छान्दोग्य एव प्रदेशभेदेन द्विः पाठस्य गतिप्रदर्शनपरत्वादस्याधिकरणस्य ॥

इति अनियमाधिकरणम्।

---

## [१४] अक्षरध्यधिकरणम्

---

अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत् तदुक्तम् ३-३-३३.

नन्वस्थूलत्वादीनां सर्वेषां प्रपञ्चप्रत्यनीकतारूपत्वे एकतरवैयर्थ्यमित्याशंक्याह—**प्रपञ्चप्रत्यनीकमित्यादिना**। सर्वैरप्यस्थूलत्वादिभिर्धर्मैः प्रपञ्चप्रत्यनीकत्वं प्रत्याय्यते। निरूप्यनिरूपकयोरभेदोपचारेण च तथा निर्देश इति भावः। **किं मैत्रेयी-ब्राह्मणश्रुत**मित्यत्र मैत्रेयीशब्दो लेखकस्खलनकृतः। **गार्गिब्राह्मण** इति पठितव्यम्। **समुच्चित्य एको हेतु**रिति। ब्रह्मस्वरूपप्रतीत्यन्तर्भावलक्षणस्तद्भाव एव हेतुः। तत्र तु प्रपञ्चप्रत्यनीकब्रह्मस्वरूपस्य सर्वविद्यानुगतत्वलक्षणं सामान्यं हेतुरिति व्यापारव्यापारिभावापन्नतया सामान्यतद्भावयोर्हेतुत्वमिति भावः।

भाष्ये **स्थूलत्वादिविपरीतत्वरूपमि**ति। ततश्च स्थूलत्वादिषु प्रतिषिद्धेषु हेयप्रत्यनीकत्वं फलतीत्यर्थः। मुण्डकाद्याम्नातैः सर्वैरपि मिळितैरस्थूलत्वादिभिर्हेय-प्रत्यनीकत्वमुपस्थाप्यत इति भावः। ननु निषेधप्रतीतेर्निषेधाधिकरणप्रतीतिनिबन्धन-त्वादित्यस्य कः परिहार उक्त इति चेत्—शाब्दाभावज्ञाने अधिकरणज्ञानस्याकारण-त्वात् प्रत्यगात्मव्यावृत्तब्रह्मस्वरूपप्रतीत्यभावेऽपि ब्रह्मस्वरूपप्रतीतिमात्रस्य प्रागपि सत्त्वाच्च नानुपपत्तिः।

अस्थूलत्वं सूक्ष्मशब्देनोक्तमिति । न चैवम्, अह्रस्व इत्युक्ते दीर्घत्वस्य अदीर्घमित्युक्ते ह्रस्वत्वस्य च प्रसंग इति वाच्यम् – न हि दीर्घत्वाभावो ह्रस्वत्वम्; ह्रस्वत्वाभावो वा दीर्घत्वम्; तथा हि सति गुणक्रियादीनां अह्रस्वत्वादीर्घत्वाद्यभावप्रसंगात्; अपि तु धर्मान्तरमिति नोक्तदोषः । ननु स्थूलत्वादिविरुद्धो धर्मः ज्ञानानन्दत्वादिरेव; न तु तद्व्यतिरिक्तः, प्रमाणाभावात् । ज्ञानानन्दत्वादिश्च सत्यज्ञानादिवाक्यादेव प्रतिपन्न इति व्यर्थमस्थूलत्वादिप्रतिपादनमिति चेन्न – ज्ञानानन्दत्वादिप्रतीतेः स्थूलत्वादिप्रतीतिविरोधित्वाभावेन ज्ञानानन्दत्वादेः स्थूलत्वाद्यभावरूपत्वाभावात् । यस्मिन् प्रतीयमाने यत्प्रतीतिर्न भवति, तस्य तदभावरूपत्वात्; यथा पटत्वप्रतीतिप्रतिबन्धकप्रतीतिविषयस्य घटत्वस्य पटत्वाभावरूपत्वम्; आनन्दत्वादिप्रतीतेश्च स्थूलत्वादिप्रतीत्यप्रतिबन्धकत्वेन स्थूलत्वाभावरूपत्वाभावात् । सत्यपि स्थूलत्वाद्यभावरूपत्वे अस्थूलत्वाद्युपदेशस्यार्थवत्त्वमस्त्येव, गोत्वस्यैवाश्वाद्भिन्नरूपत्वेऽपि गौरश्वाद्भिन्न इति वाक्यस्य साफल्यदर्शनात् । ननु गोत्वस्याश्वात् भेदरूपत्वप्रतिपादकतया गौरश्वाद्भिन्न इति वाक्यं सफलमिति चेत् – तर्हि ज्ञानानन्दादेः स्थूलत्वाद्यभावरूपत्वप्रत्यायकतया अथूलत्वादिवाक्यमपि सफलमस्तु । यद्येवं ब्रह्मस्वरूपाभिन्नत्वेऽपि आनन्दत्वास्थूलत्वादेः तदुपदेशसाफल्यमस्तु; किमतिरिक्तेन आनन्दत्वास्थूलत्वादिधर्मजातेन । ततश्च आनन्दत्वास्थूलत्वादीनां ब्रह्मस्वरूपादभिन्नतया सर्वविद्यानुयायित्वमपि सूपपादितमिति चेत् – इष्टत्वात् । तर्हि सर्वाधारत्वसर्वशेषित्वादीनामपि स्वरूपरूपतया सर्वविद्यानुयायित्वं कुतो न भवेदिति चेन्न – सर्वविशेषितमाधारत्वं न स्वरूपरूपम्, तद्घटकपदार्थानां सर्वमुक्तौ वा प्राकृतप्रळये वा अभावेन इतरेषाञ्च विकारशालितया तद्घटितमाधारत्वमपि न सततैकरूपमिति न धर्मिस्वरूपाभिन्नमिति वैषम्यात् । 'आनन्दादयः प्रधानस्य' इत्यधिकरणे अस्यापि पक्षस्य प्रदर्शितत्वेनास्य विरुद्धत्वाभावादिति सर्वमवदातम् ।

नन्वस्थूलत्वादीनामुपसंहारे, "निष्कळं निष्क्रियं शान्तम्" इत्यादिशाखान्तरस्थितानामप्युपसंहारप्रसंगः । निषेध्यानामानन्त्यादुपसंहाराशक्तिश्चेति चेत – अस्थूलमित्यादि – अदीर्घमित्यन्तेन अवाय्वनाकाशमित्यनेन च दोषावहशरीरदोषनिषेधः, अचक्षुरित्यादिना इन्द्रियनिषेध इत्यादिरूपेण परिपूर्णस्य शरीरेन्द्रियादिदोषनिषेधस्य

अस्थूलादिवाक्ये मुण्डकवाक्ये च श्रवणात् तदुपसंहारे च नान्यापेक्षाऽस्तीति, आनन्त्यदोषपरिजिहीर्षयैव सूत्रे अक्षरग्रहणं कृतमिति नानुपपत्तिः ।

**जमदग्निना मुहुरनुष्ठितमिति** । सकृदनुष्ठानस्य सर्वसाधारण्यान्मुहुरित्युक्तम् । "जामदग्न्यं पुष्टिकामः । तस्य पुरोडाशिन्य उपसदः" इति जामदग्न्यस्य चतूरात्रस्याहीनविशेषस्य पुरोडाशिन्य उपसदो विहिताः । तत्र एककपालादिद्वादशकपालान्तपुरोडाशद्रव्यकाणां द्वादशानां यागानाम्, "अग्ने वेर्होत्रं वेः" इत्याद्याः स्वाहान्ता द्वादश होममन्त्राः समाम्नाता इत्यर्थः । **उच्चैस्साम्नेति वचनादिति** । उच्चैस्साम्नेत्यस्यायमर्थः — सामशब्द उपक्रमाधिकरणन्यायेन मन्त्रब्राह्मणसमुदायात्मकसामवेदपरः । ततश्चायमर्थः—सामवेदेन यत् क्रियते:=यद्विधीयते तस्योच्चैस्त्वं धर्म इति । ततश्चैषामपि मन्त्राणां सामवेदे उत्पन्नत्वेन उत्पत्तेरपि विधिरूपत्वेन सामवेदविहितत्वात् तन्निबन्धनमुच्चैस्त्वं प्राप्तमित्यर्थः । **सामवेदे पठितत्वेन** सामवेदे विहितत्वेनेत्यर्थः । **उच्चैर्गान** इति । उच्चैरुच्चारण इत्यर्थः । एषां होममन्त्राणां गानस्याप्राप्तेरिति द्रष्टव्यम् । **उपांशुपठितव्येति** । उपांशु पठितव्यं यत् यजुर्वेदविहितमुपसत्कर्मेत्यर्थः । उपांशु यजुषेत्यस्यापि पूर्वोक्तन्यायेन, यजुर्वेदेन यत् विधीयते तदुपांशु कर्तव्यम् । तस्योपांशुत्वं धर्म इत्यर्थः । ततश्चोपसदोपि यजुर्वेदविहिततया तत्र च स्वरस्योपांशुत्वस्य साक्षादनुष्ठातुमशक्यत्वात् आनर्थक्यतदङ्गन्यायेन तदङ्गभूतेषु मन्त्रेषु उपांशुत्वं निविशते । ततश्चोपांशुपठितव्यत्वं मन्त्रद्वारेण लभ्यते । ततश्चोपांशुत्वं मन्त्रनिष्ठमपि उपसदङ्गम्; उच्चैस्त्वं तु मन्त्राङ्गम् । ततश्च तेषु मन्त्रेषु सामवेदविहितमन्त्रधर्मभूतस्य उच्चैष्ट्वस्य यजुर्वेदविहितोपसद्धर्मभूतस्योपांशुत्वस्य च प्रसक्तौ प्रधानधर्मेणोपांशुत्वेन तदङ्गधर्मभूतमुच्चैष्ट्वं बाध्यत इत्यर्थः ।

**गुणमुख्यव्यतिक्रमे तदर्थत्वात् मुख्येन वेदसंयोग** इति । गुणमुख्ययोर्मन्त्रोपसदोर्व्यतिक्रमे स्वस्ववेदविहितस्वरप्राप्त्या विरोधे सति **मुख्येन** प्रधानानुसारेण वेदसंयोगः = स्वरविधायकवेदसंबन्धः प्रधानविधिविधेयत्वादङ्गानामित्यर्थः । अत्र तु **शबरस्वामिना** न्यायसाम्यादन्यदुदाहरणं दर्शितम्— अस्त्याधानं यजुर्वेदविहितम्, 'य एवं विद्वानग्निमाधत्त' इति । तदङ्गत्वेन 'वारवन्तीयं गायती' त्यादिना

सामवेदे सामानि विहितानि । तत्र सामसु सामवेदविहितत्वनिबन्धनोच्चैष्ट्वस्य प्राप्तिं पूर्वपक्षीकृत्य — आधानस्य प्रधानस्य याजुर्वेदिकतया तद्धर्मत्वादुपांशुत्वस्य तेनोच्चैष्ट्वं बाध्यते ; ततश्च वारवन्तीयादिसामसु उपांशुत्वं प्रयोक्तव्यमिति सिद्धान्तितम् ; न तूच्चैष्ट्वमभिप्रेतमिति । न चानेन तस्य गतार्थता शङ्कनीया ; तस्यैव न्यायस्य प्रपञ्चनं क्रियत इत्युक्तत्वात् । ‘ इयदामननात् ’ इति सूत्रमपि, ‘ इतरे त्वर्थसामान्यात् ’ इत्यस्यैव प्रपञ्चः ।

**परेरित्वित्यादि** । **समानत्वादिति** । सर्वविद्यापेक्षितत्वेन समानत्वादित्यर्थः । **अङ्गानां प्रधानानुवर्तित्वे हीति** । त्वन्मते निर्भेदतया अङ्गप्रधानभावाभावादिति भावः । **न पौनरुक्त्यमित्याहुरिति** । सिद्धस्यापि प्रपञ्चनस्य बहुशः शास्त्रेषु दर्शनादिति भावः । **ऋतं पिबन्ताविति** । अयं मन्त्रः कठवल्लीगतः । द्वासुपर्णेति मन्त्रस्तु मुण्डकश्वेताश्वतरगत इति द्रष्टव्यम् । **इयदामननादिति सूत्रमिति** । इयतः द्वासुपर्णाविति प्रतिपाद्यस्य द्वित्वसंख्योपेतस्याभेदेनाऽऽमननादिति सूत्रार्थः । **छत्रिन्यायेनाविरोधादिति** । ऋतं पिबन्तावित्यत्र पिबच्छब्दः पातृत्वशून्ये परमात्मनि छत्रिन्यायेन प्रयुक्त इत्यर्थः । वस्तुतस्तु अनयोर्मन्त्रयोः पौर्वापर्यपर्यालोचनायां केवलपरमात्मपरत्वमेव प्रतीयते ; न तु जीवेन सद्वितीयत्वमपि । कथं तर्हि जीवोपादानमिति चेन्न — तादात्म्यविवक्षया परमात्मना अभेदं जीवस्य दर्शयितुं जीवोऽनूद्यते । परमात्मविद्यायाश्च निर्भेदविषयत्वात् भेदाभेदविचारस्यापि न प्रसक्तिरिति यदुक्तम् — तदनुभाषते — **जीवोपादनस्येति** । **इयच्छब्दोऽपीति** । इदं परिमाणमस्येत्यर्थे परिमाणे वतुप् । ‘ किमिदंभ्यां वो घः ’ इति वतुब्वस्य च घः । अत्र च परिमाणशब्दः प्रस्थादिविषयः ।

“ ऊर्ध्वमानं किलोन्मानं परिमाणं तु सर्वतः ।
आयामस्तु प्रमाणं स्यात् संख्या बाह्या तु सर्वतः ” ॥

इति श्लोकवार्तिककारेण उन्मानपरिमाणसंख्यानां परस्परभेदः प्रतिपादितः । तुलादावारोप्य येन द्रव्यान्तरपरिच्छिन्नगुरुत्वेन पलादिशब्दवाच्येन पाषाणादिना सुवर्णादेः गुरुत्वमुन्मीयते, तत् गुरुत्वमानमुन्मानम् । आयाममानं प्रमाणम् । आयामो

दैर्घ्यम्; स येन मीयते तदित्यर्थः। एतच्च क्वचित्तिर्यगवस्थितस्य वस्तुनो भवति, यथा वस्त्रादेर्हस्तादिः। क्वचिदूर्ध्वाधोदिगवस्थितस्य भवति, यथा हास्तिन- मुदकं ऊरुद्वयसमिति। आरोहपरिणाहमानं परिमाणम्। आरोह उच्छ्रायः। परिणाहो विस्तारः। ताभ्यां आरोहपरिणाहाभ्यां स्वगताभ्यां येन काष्ठादिनिर्मितेन प्रस्थादिशब्दवाच्येन व्रीह्यादि परिमीयते तत् परिमाणमित्यर्थः। परिः सर्वतो भावे। संख्या बाह्या तु सर्वतः — पूर्वोक्तादुन्मानादेः सर्वस्माद्बाह्या, तत्रान- न्तर्भावादिति श्लोकार्थः। ततश्च द्वित्वसंख्यायाः परिमाणादिभिन्नत्वेन तस्यार्थस्या- संभवात् तावती रज्जुः, तावानद्धेत्यत्र तत्प्रमाणके तावच्छब्दप्रयोगवत् तत्संख्याकेऽपि तावच्छब्दप्रयोगः सादृश्यादिनिबन्धन औपचारिकः। ततश्चेदं- संख्याके इयच्छब्दप्रयोगस्य त्वन्मते औपचारिकत्वेन वक्तव्यत्वात् तादृशस्य प्रयोगस्य देशकालादिसाम्यमादाय प्रयोगः संभवति। लोके हि तावानयमित्युक्ते स यावन्तं देशं व्याप्नोति तावन्तमसावपि; स यत्संख्याकः, स यत्कालव्यापी, तत्काल- व्यापीत्यपि प्रतीतेरविशेषादित्यर्थः। **पैंगीश्रुत्यनुसारेणेति**। "तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्त्वम्, अनश्नन्नन्योऽभिचाकशीतीति ज्ञः, तावेतौ सत्त्वक्षेत्रज्ञौ" इति अन्तःकरणजीवपरतया व्याख्यातत्वादित्यर्थः। **पौनरुक्त्य**मुक्तमिति। गुहां प्रविष्टावित्यनेनेति शेषः। **द्वित्वसंख्याव्यवच्छेद**मिति। संख्याव्यवच्छिन्न- मित्यर्थः। एवमुत्तरत्रापि द्रष्टव्यम्।

**अन्ये त्वित्यादि**। संभूतिः = प्रपञ्चात्मना उत्पत्तिः। संभूतिविनाशौ सप्रपञ्चत्वनिष्प्रपञ्चत्वे इत्यर्थः। **ब्रह्मसंभूतिभिरेव विनाशस्समुच्चीयत** इति। यत्र सप्रपञ्चत्वलक्षणसंभूतिमत्तया ब्रह्मण उपास्यत्वम्, तत्रैव निष्प्रपञ्चत्वरूपविनाशवत्तया ब्रह्मण उपास्यत्वम्; न तु प्राणादिसंभूतावित्यर्थः। **अक्षरविद्याशाण्डिल्यविद्या- दीना**मिति। अक्षरविद्या निष्प्रपञ्चविद्या, शाण्डिल्यविद्या सप्रपञ्चविद्येति भावः।

इति अक्षरध्यधिकरणम्।



## ( १५ ) अन्तरत्वाधिकरणम्

अन्तरा भूतग्रामवत्स्वात्मनोऽन्यथा भेदानुपपत्तिरिति चेन्नोपदेशवत् ३-३-३५.

उषस्तप्रश्न एव प्रश्नप्रतिवचनयोरनाम्नानादाह **तत्प्रकरणं विवक्षितमिति** । प्रश्नप्रतिवचनसन्दर्भो विवक्षित इत्यर्थः । **सर्वान्तरत्वप्राणितृत्वे** इति । सर्वान्तरत्वं देहाद्यपेक्षम्; प्राणितृत्वं जाग्रदाद्यवस्थापेक्षमित्यर्थः । **अपरोक्षात् ब्रह्म** = अपरोक्षं ब्रह्मेत्यर्थः । कहोळप्रश्ने, 'यदेव साक्षाद्ब्रह्मे' ति प्रक्रान्तस्याऽऽवृत्त्यर्थस्यैवकारस्य श्रवणात् कथं पूर्वपक्ष इति न वाच्यम् – यदपरोक्षादेव; न तु कदाचिदपि परोक्षमित्येवं योजनासंभवेन एवकारस्य प्रकृतानुवृत्त्यर्थत्वाभावादिति पूर्वपक्षाभिप्रायात् । सिद्धान्ते तु व्यवहितान्वयदोषप्रसङ्गात् नेयं साध्वी योजना; अपि तु प्रकृतानुवृत्त्यर्थ एवकार इत्यभिप्राय इति द्रष्टव्यम् । भाष्ये **अन्तरा=सर्वान्तरत्वेनेति** । अन्तरशब्दात् भावप्रधानात्, "सुपां सुलुक्" इति तृतीयैकवचनस्य आकारादेशे रूपमिति सर्वान्तरत्वेनेत्यर्थो लभ्यते । 'प्रथमं प्रतिवचन' मिति चाध्याह्रियत इत्यर्थः । केचित्तु – **अन्तरा**शब्दोऽयं मध्यवचनः । प्रश्नयोर्मध्ये यत् प्रतिवचनमित्यर्थः । ततश्च प्रथमस्य ग्रहणं भविष्यति । ततश्चान्तराशब्दस्यावृत्त्याऽर्थद्वयं लभ्यते । अत एव 'अन्तरत्वेनेत्यनुक्तिः । इतरथा अन्तरत्वेनेति निर्देशप्रसंगात् ॥

व्यतिहारो विशिंषति हीतरवत् ३-३-३६.

**तिष्ठासेदि**ति । "तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत् । बाल्यञ्च पाण्डित्यञ्च निर्विद्याथ मुनिः । मौनञ्चामौनञ्च निर्विद्याथ ब्राह्मणः" इत्यत्र तिष्ठासेदिति पदानुषङ्गेण ब्राह्मणस्तिष्ठासेदित्यर्थो लभ्यते । ब्रह्म वेदेत्यर्थे, तदधीते तद्वेदेत्यणि अन्निति प्रकृतिभावे ब्राह्मण इति रूपम् । 'ब्राह्मो जातौ' इत्येतत्तु छान्दसत्वान्न भवति । ततश्चायमर्थो निष्पन्न इति भावः । अत एव सहकार्यन्तरविधिरित्यधिकरणभाष्ये, 'मौनञ्चामौनञ्चेत्यस्य विद्याकाष्ठां तदेकनिष्पाद्यां लभत इत्यर्थो वर्णितः ।

· **अतः कहोलप्रश्नस्ये**त्यत्र **अत** इति व्याख्येयं पदम्; **कहोळप्रश्नस्ये**त्यादि तद्व्याख्यानम्। ननु व्यावृत्तिप्रतीतिसिद्ध्यर्थमुभाभ्यां परस्परबुद्धिव्यतिहारः कर्तव्य इति भाष्यमयुक्तम्। सर्वात्मना जीवस्यासंभावितेनाशनायाद्यतीतत्वेन कहोलस्य प्रत्यगर्थव्यावृत्तेः सिद्धत्वेन प्रत्यगात्मसाधारणशंकास्पदप्राणितृत्वव्यतिहारानपेक्षणात्। अत एवोषस्तस्यापि नाशनायाद्यतीतत्वापेक्षा; "न दृष्टेर्द्रष्टारं पश्येः" इत्यनेनैव प्रत्यगात्मव्यावृत्तस्वरूपस्य उपस्तेनाप्यवधृतत्वादित्यत आह — **व्यावर्तकधर्मभूयस्त्वे**ति। अयं भावः — सत्यं जातैव द्वयोर्व्यावृत्तिवृद्धिः। तथाप्यवगतार्थस्य कदाचिदप्यप्रकम्प्यत्वाय द्रढिमा संपादनीय इति। **रूपाभेदशंकाकृतो विद्याभेद** इति। ननु सर्वान्तरत्वादिगुणप्रत्यभिज्ञया विद्यैक्येऽवधृते सद्विद्यान्यायेन प्रश्नप्रतिवचनरूपाभ्यासात्मके भेदकप्रमाणेऽप्यपोदिते सति वैश्वानरादिविद्यायामौपमन्यवादिप्रष्टृबहुत्ववत् प्रष्टृभेदात्मके भेदकप्रमाणे चापोदिते सति सर्वप्राणिप्राणयितृत्वाशनायाद्यतीतत्वयोः 'उपसंहारोऽर्थाभेदात्' इति न्यायेनोपसंहार एवोचितः; न तु तस्योपास्यबहिर्भावाभ्युपगम इति चेत् — सत्यम्; यथा 'यः शुक्लवासाः स देवदत्तपदवाच्य' इत्युक्ते वाससि यथा देवदत्तपदवाच्यत्वानन्वयः, तथा यदशनायाद्यतीतं सर्वप्राणयितृ च, तत् सर्वान्तरं साक्षाद्ब्रह्म उपास्यमित्युक्ते उपास्यत्वस्य अशनायाद्यतीतत्वादावनन्वयादित्यभिप्रेत्य तेषामुपास्यबहिर्भावकथनोपपत्तेरिति वदन्ति॥

**सैव हि सत्यादयः ३-३-३७.**

**प्रवृत्तिनिमित्तभेदाद्ब्रह्मपर्यन्तावि**ति। अभिमुखपुरुषत्ववक्तृपुरुषत्वरूपप्रवृत्तिनिमित्तभेदादित्यर्थः। भाष्ये **हन्ति पाप्मानं जहातीति च गुणफलाधिकारत्वमि**ति। अहर्नामोपासनरूपाङ्गप्रशंसार्थः फलविधिसरूपार्थवाद इत्यर्थः। **शांकरभाष्ये** भामत्यादिग्रन्थेषु अर्थवादत्वस्योक्तत्वेन गुणफलाधिकारत्वानुक्तेः। **गुणफलमङ्गफलमि**ति टीकाग्रन्थस्याप्यत्रैव तात्पर्यम्। **केचित्तु** तैरनुक्तमपि संभावितमिति तदाशंक्य निराक्रियत इति **वदन्ति**।

**न हि द्वौ सर्वान्तरावि**त्यादि। ननु उभयत्र वेद्यैक्यत्वेन विद्यैक्यसमर्थनमनुपपन्नम्, प्रत्युत वेद्यैक्ये सति अविशेषपुनश्श्रवणसत्त्वेन पूर्वपक्षस्यैवोपपादकत्वादिति चेत् — सत्यमस्तीयमनुपपत्तिः। सा तु न दोषः। अस्य ग्रन्थस्य शंकर-

भाष्यग्रन्थानुवादरूपत्वात् वेद्यभेदात् विद्याभेदोऽस्तीति पूर्वपक्ष्येकदेशिनिराकरणपरतया **भामत्यां** नीतत्वाच्च न दोषः । **व्यवहितान्वयोऽध्याहारबाहुल्यञ्चे**ति । अन्तरा आम्नानाविशेषात् स्वात्मनो विद्यैक्यं स्यात । उभयत्रापि वेद्यस्यैक्यात्. वेद्यभेदे तु भूतग्रामवदापेक्षिकं सर्वान्तरत्वं स्यात् इत्यन्वयाङ्गीकारात् अध्याहारबाहुल्यव्यवहितान्वयौ स्पष्टौ ।

**अहंकारहृद्देशदिक्कालादीनां ब्रह्मणि प्रतिपत्तिरि**ति । 'तद्योऽहं सोसौ', 'त्वं वा अहमस्मि' इत्यादिवाक्यैर्जीवसंबन्धितया प्रतिपन्नानां अहन्त्वहृद्देशस्थस्वाभिमुखदिग्वर्तित्ववर्तमानकालसंबन्धित्वादीनां ब्रह्मगततया प्रतिपत्त्यर्थमित्यर्थः ॥

इति अन्तरत्वाधिकरणम् ॥

---

## [ १६ ] कामाद्यधिकरणम्

---

कामादीतरत्र तत्र चायतनादिभ्यः ३-३-३८.

**व्योमातीतनिरामः फलित** इति । वाजसनेयके आकाशे शयानत्वेन प्रतिपादितस्यैव छान्दोग्यप्रतिपादित—दहराकाशशब्दितब्रह्मत्वप्रतिपादनादिति भावः । ननु छान्दोग्यवाजसनेयगताकाशशब्दयोरेकार्थत्वमस्त्वित्याशंक्य, छान्दोग्ये श्रुतस्याकाशस्यापहतपाप्मत्वादिगुणाष्टकप्रतिपादनात् तस्य ब्रह्मत्वम् , वाजसनेयकोक्ताकाशस्य तु वशित्वादिगुणविशिष्टात्माश्रयत्वप्रतिपादनात् भूताकाशत्वं वक्तव्यमित्याह **आकाशान्तर्वर्तिन** इत्यादिना । **गुणत्वेने**ति । अपहतपाप्मत्वादिगुणरूपत्वेनेत्यर्थः ।

आदरादलोपः ३-३-३९.

भाष्ये **मोक्षार्थेषूपासनेषु लोप** इति । वाजसनेयकश्रुताया दहरविद्यायाः मोक्षसाधननिर्गुणविद्यात्वेन छान्दोग्यश्रुतक्षुद्रफलसाधनसगुणदहरविद्याप्रकरणोपदिष्टाः गुणा न निर्गुणविद्यायामुपसंहर्तव्याः ; तयोर्भिन्नत्वादिति भावः । **स्वीकारास्वीकारयोरि**ति । उपासनानुपासनयोरित्यर्थः । 'य इहात्मानमनुविद्य', 'य इहात्मानमननुविद्येति श्रुतेरिति भावः ।

**परेत्वित्यादि** । **छान्दोग्ये वशित्वादिसंबन्ध उपासनार्थ** इति । यद्यपि भामत्याम् – ‘निर्गुणायां विद्यायां ब्रह्मस्तुत्यर्थमेव सगुणविद्यासंबन्धिगुणोपसंहारः संभवी, सगुणायां तु न ध्यानाय वशित्वादिगुणोपसंहारसंभवः । न हि निर्गुणायामाध्यातव्यत्वेन एते चोदिताः ; येन सगुणविद्यायां वशित्वादयो ध्यातव्यत्वेन संबद्ध्येरन् । अपि तु सत्यकामादिगुणनान्तरीयकत्वेनैव तेषां प्राप्तिरित्युपसंहार उच्यत’ इत्युक्तम् । कल्पतरौ च, ‘यत्र वशित्वादयः श्रूयन्ते, न तत्राप्येषां ध्येयत्वमिति अन्यत्र गतानामपि न ध्येयत्वम् । अतो वशित्वादेः सत्यकामत्वाद्यन्तर्भाव एवोपसंहार इत्यर्थ इत्युक्तम् – तथापि निर्गुणविद्याप्रकरणाम्नातवशित्वादीनामानर्थक्यपरिहारायोपासनसाकांक्षाणां सगुणविद्यायामुपास्यत्वेनान्वय इति सोपपत्तिकं विवरणकारादिभिर्व्याख्यात्रन्तरैरुक्तत्वात् तथानूदितमिति न दोष इति द्रष्टव्यम् ।

**अतिथिभोजने न भक्तक्षय** इति । इदं तु यादवमिश्रोक्तम् । वक्ष्यति चोत्तरत्र **अन्येत्वित्यादि** । ततश्च परानुक्तत्वादनुक्तानुवादशंका पराकृता । **प्राथम्यविधिर्जाबालश्रुतौ, ‘पूर्वमतिथिभ्योऽश्नीयादित्यस्यानन्तरम्’** इतिरध्याहर्तव्यः । **भोजनलोपे लोपः तच्च कौण्डपायिनाम**[यना ?]**ग्निहोत्र** इति क्वचित् पाठो दृश्यते । तत्र **तच्चे**त्येतत् संपातायातमिव भाति । **गुणभूतद्रव्यलोपेऽपी**ति । भोजनद्रव्यस्य प्राणाग्निहोत्रे गुणभूतस्याभावेऽपीत्यर्थः । यथा पवमानेष्टिषु, ‘अग्निहोत्रहवण्या हवींषि निर्वपती’ति निर्वापसाधनत्वेन श्रुतायाः चोदकाप्राप्ताया अग्निहोत्रहवण्या अभावेऽपि हविर्निर्वापस्य प्रधानस्य न लोपः । गुणलोपमात्रेण प्रधानलोपस्यायुक्तत्वात् । पवमानेष्टिषु अग्निहोत्रहवण्यभावश्च पवमानहविर्भ्यः पूर्वमग्नेरसिद्धतया अग्निहोत्रस्याहुतत्वादिति भावः । **आमिक्षादध्यानयनप्रयोजकत्वाभाववदि**ति । वाजिनयागस्यामिक्षाप्रयुक्तदध्यानयनप्रयोजकत्वाभाववदित्यर्थः । **परार्थद्रव्यसाध्यानां कर्मणां प्रयोजकत्वाभावादि**ति । ‘पुरोडाशकपालेन तुषानुपवपती’ति पुरोडाशप्रयुक्तकपालोपजीविनः तुषोपवापस्य कपालाननुष्ठापकत्वदर्शनादिति भावः । **अग्न्युद्धरणादिधर्मायोगादि**ति । अग्निहोत्रधर्मातिदेशपक्षे अग्न्युद्धरणादयोऽपि धर्माः स्युः । न चेष्टापत्तिः ; अग्न्युद्धरणस्य होमार्थत्वात्

प्राणाग्निहोत्रस्य च आस्याधिकरणकत्वेनाहवनीयाधिकरणकत्वाभावात् । न च प्रयोजनाभावात् कृष्णलचरावक्घातवदुद्धरणादीनां बाधेऽपि इतरेषां द्रव्यादीनां नामातिदेशोऽस्त्विति वाच्यम्—अतिदेशत्वमभ्युपगम्य बाधकल्पनापेक्षया अग्निहोत्रं जुहोतीत्यस्यार्थवादतया स्तावकत्वस्यैव युक्तत्वादिति भावः । **सांपादिकत्वदर्शनाच्चेति** । 'उरएव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोन्वाहार्यपचनमास्यमाहवनीयः' इति उरःप्रभृतिकं वेद्यादित्वेन संपाद्यते । यदि ह्यग्निहोत्रादिधर्मातिदेशः स्यात्, तर्हि वेद्यादीनां सत्त्वादेव संपादनमसंगतं स्यात् । कामिन्यां किल कुचनयनादि असता चक्रवाकनळिनादिरूपेण संपाद्यते ; न तु नद्यां चक्रवाकादय एव चक्रवाकादिभिः संपाद्यन्ते । अतोऽप्यवगच्छामो नात्र चोदकप्राप्तिरिति । **आद्यवचनस्यापीति** । पूर्वमतिथिभ्योऽश्नीयादिति अतिथिप्राग्भोजनविधायकवचनस्येत्यर्थः । **विद्यातदुपयोगिविषयत्वाभावेनेति** । प्राणाहुतीनां पुरुषार्थतया वैश्वानरविद्याङ्गत्वाभावात् वैश्वानरविद्याप्रकरणे 'उर एव वेदिर्लोमानि बर्हिः' इत्यादिसन्दर्भेण प्राणाहुतावग्निहोत्रदृष्टेरेव वैश्वानरविद्याङ्गतया विधानोपपत्तेरिति भावः । **यावद्दौर्बल्यनिश्चयमिति** अत्र साधकत्वस्य सर्वात्मना अप्रतीतेरिति भावः । तदेवोपपादयति **किमतिथिभोजनप्राथम्यनिन्दनमित्यादिना** । **वाजिनकर्मेति** । वाजिनयागेत्यर्थः । अत्र **पूर्वकाण्डसिद्धमित्यस्य** अनन्तरम्, "एकनिष्पत्तेः सर्वं समं स्यात्" (४-१-२२) "पदकर्माप्रयोजकं नयनस्य परार्थत्वात्" (४-१-२५) इति पाठः समीचीनः ॥

इति कामाद्यधिकरणम् ।

## ( १७ ) तन्निर्धारणानियमाधिकरणम् ।

**तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ३-३-४१.**

**फलविधिश्चेदनियमवाक्यस्य पुरुषार्थत्वगमकतयेति** । फलविधिश्चेत्तस्यैव पुरुषार्थत्वात्रगमकतया गोदोहनतुल्यत्वात्, अनियमवाक्यस्याप्यनुग्रहाय उपादानानियम इत्यर्थः । ततश्चान्यस्य फलविधित्वेऽन्यस्य पुरुषार्थत्वगमकत्वोक्तिरयुक्तेति चोद्यं निरस्तम् । **हेतुरयमिति** । यद्यपि, 'कतमा कतमर्क् कतमत्क-

नमत्साम कतमः कतम उद्गीथ' इति का ऋक् किं साम क उद्गीथ इति ऋक्सामोद्गीथानां विमर्शपूर्वकम्, 'वागेव ऋक् प्राणः साम ओमित्येतदक्षरमुद्गीथः' इति निर्धारणपूर्वकमाप्त्यादिगुणकोपासनं विहितमिति तस्य निर्धारणपूर्वकत्वसत्त्वेऽपि न सर्वेषामीदृग्रूपत्वम् — तथाप्युपासनस्योपास्यनिर्धारणसापेक्षत्वात् सर्वमपि निर्धारणशब्देन लक्ष्यत इति भावः। **निश्चयेन मनसोवस्थापनमिति** भाष्यस्यापि निश्चयपूर्वकोपासनमित्यत्र तात्पर्यात्। **प्रकरणान्तराधीतमपीति**। अनारभ्याधीतमपीत्यर्थः। एवमुत्तरत्रापि द्रष्टव्यम्। **वर्तमाननिर्देशस्य........फलत्वकल्पनायोगादिति** भाष्यमयुक्तम्। फलत्वकल्पकत्वायोगादिति हि वक्तव्यम्। किञ्च **अपापश्लोकश्रवणवदित्यप्यसंगतम्**; अपापश्लोकश्रवणशब्दस्यैव दृष्टान्तीकर्तुमुचितत्वादित्यत आह **वर्तमानो निर्देशो यस्येति बहुव्रीहिरिति**। **वर्तमानः** वर्तमानत्वप्रतिपादक इत्यर्थः। गोदोहनवाक्ये गोदोहनस्य प्रणयनसंबन्धपशुफलसंबन्धबोधनात् वाक्यभेद इत्यत आह **पशुकामस्य प्रणयनसाधनत्वं हीति**। अयमत्रान्वयः — गोदोहनस्य प्रणयनसाधनत्वं हि पशुकामस्य विधेयम्। प्रणयनगोदोहनयोः लोकसिद्धः क्रियाकारकलक्षणसंबन्धः पशुकामस्य विधेय इत्यर्थः। 'दध्नेन्द्रियकामा' विकरणे होमे कारकीभूतं दधि फलकामस्य विधीयत इत्युपगमादिति भावः। **नान्यस्येति**। विधेयता इत्यध्याहारः। लोकसिद्धत्वात्क्रियाकारकसंबन्धस्य न विधेयत्वमित्यर्थः। **फलेऽपीति**। अत्र अपिशब्दः फलस्य रागप्राप्तत्वेऽपि इत्यर्थसूचनार्थः। यद्यपि फलस्य लिप्सासूत्रोक्तन्यायेन न विधेयत्वम् — अथापि फलसंबन्धितया कर्मविधानस्य प्राप्ताप्राप्तविवेकेन फलविधौ पर्यवसानसंभवादिति भावः। **नियमेनोपादेयं ह्यङ्गमित्यादि**। अत्र चोदयन्ति — नियमेनोपादेयं ह्यङ्गमित्युक्तिर्न संभवति। अनियतानामपि षोडशिग्रहादीनामङ्गत्वदर्शनात्। 'पशुकामनाऽस्ति चेत् — गोदोहनोपसंहार' इत्यप्ययुक्तम्। गोदोहनस्य क्रत्वर्थत्ववादिनं पूर्वपक्षिणं प्रति गोदोहनस्यानियतत्वोपन्यासासंप्रतिपत्तेः। 'अङ्गत्वाभावात् गोदोहनस्य न क्रत्वर्थत्व' मित्यप्ययुक्तम्; साध्याविशेषात्। 'अपि तु पुरुषार्थत्वमेवेति निर्णीतं कर्मकाण्ड' इत्यप्ययुक्तम्। अनया प्रणाड्या निर्णयस्य क्वाप्यनुपलम्भादिति। तदेतद्वाक्यार्थानभिज्ञानविजृम्भणम्। एवं ह्यस्यार्थः— अङ्ग हि नियमे-

नोपादेयम् । अङ्गस्यैव सतो नियमेन उपादेयत्वम् । **अतोऽङ्गत्वाभावात् पशुकामनाऽस्ति चेत्, गोदोहनोसंहारः;** नत्वन्यदेत्यन्वयः । ननु कथं गोदोहनस्याङ्गत्वाभावः इत्याशंक्याह – **गोदोहनस्य न क्रत्वर्थत्वम्; अपि तु पुरुषार्थत्वमेवेति निर्णीतमिति** । चतुर्थे लिप्सासूत्र इति भावः । अङ्गत्वनिराकरण-प्रकारः, " अङ्गेषु यथाश्रयभाव " इत्यत्र प्रपञ्चयिष्यते ॥

इति तन्निर्धारणानियमाधिकरणम् ।

---

## ( १८ ) प्रदानाधिकरणम्

### प्रदानवदेव तदुक्तम् ३-३-४२.

**गुणचिन्तनार्थश्चेति** । ब्रह्मण इमे गुणाः अपहतपाप्मत्वादय इत्यनु-सन्धानार्थमित्यर्थः । **गुणिपर्यन्तानामेव गुणानामुपासनं विहितमिति** । 'तस्मिन् यदन्तस्तदन्वेष्टव्यम्' इति वाक्ये यो दहराकाशः यच्च तदन्तर्वर्ति, तदुभयमन्वेष्टव्यम्' इति द्वयोरपि साम्येनान्वेष्टव्यत्वप्रतीतेः, 'य इहा मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्' इति फलवाक्येऽपि द्वयोरपि साम्यप्रतीतेः द्वावपि पृथगेव चिन्तनीयाविति पूर्वपक्ष्यभिप्रायः । 'अस्मिन् कामाः समाहिताः' इति ब्रह्मणि कामसमाधानाधारत्वमुक्त्वा, के ते कामा इत्याकांक्षायां निष्कृष्यापहतपाप्मत्वं विजरत्वमित्यनुक्त्वा, 'अपहतपाप्मा विजरो विमृत्युः' इति तद्विशिष्टविशेष्यपर्यन्ततया निर्देशात् अनेनैव प्रकारेणोपासनं कर्तव्यमिति श्रुत्याशय उन्नीयत इति वैशिष्ट्यमनु-संधेयम् । वैशिष्ट्ये च विशेष्यविशेषणतत्संबन्धानामन्तर्गतत्वात् संबन्धिचिन्तने विशेष्यावृत्तिः सिद्धेति सिद्धान्त्याशयः । भाष्ये **विशिष्टतया अनुसन्धानार्थ-मावृत्तिः कर्तव्येति** । वैशिष्ट्यस्यापि विशिष्टान्तःपातित्वात् तस्य च विशेष्य-विशेषणोभयनिरूप्यस्य प्रतीतौ उभयोरपि प्रतीत्यारोहमन्तरेणासंभवादेकप्रतीत्युपा-रूढत्वं त्रयाणां वक्तव्यमिति विशेष्यस्वरूपचिन्तनावृत्तिः सिद्धेत्यर्थः ।

**नाना वा देवतापृथक्त्वादिति** । तत् नानाप्रदानाधिकरणमित्थम् । अस्ति त्रैधातवीयेष्टिः, "इन्द्राय राज्ञे" इत्यादिवचनविहिता । सा त्रिपुरोडाशा । तेषां पुरोडाशानाम् उपर्युपर्यधिश्रयणं सर्वेषां युगपदवदानञ्च विहितम् । तेषां पूर्वार्धादवदानं प्रवृत्तिवत् कर्तुं शक्यम । तथापि मध्यादवदानं कर्तुमशक्यम् । पुरोडाशानां मध्ये नळकप्रवेशाद्युपायेन मध्यादपि युगपदवदानं ग्राह्यम् । एवं स्थिते प्रदानमपि युगपत्कर्तव्यम्, क्रमेण वेति संशये, "तेषामपृथक्प्रदानमवदानैकत्वात्" इति सूत्रेण अवदानवत् प्रदानमपि युगपदेव कार्यमिति पूर्वः पक्षः । तत्रेदं सिद्धान्तसूत्रम्—"नाना वा देवतापृथक्त्वात्" इति । त्रयाणां यागद्रव्याणां भेदात् विशिष्टरूपाणां देवतानाञ्च भेदात् त्रिभिर्द्रव्यदेवतासंबन्धैः कल्प्यानाञ्च यागानां तत्तद्देवतोद्देशेन क्रमिकाणि प्रदानानि कर्तव्यानीति सूत्रार्थः ।

**परेत्वित्यादि** । **वायुप्राणयोस्तत्त्वैक्य**ादिति । "यः प्राणः स वायु"रिति विस्पष्टमेकत्वविज्ञानात् विध्यैक्याच्च उभयविषयमेकमेव चिन्तनम्, ऐन्द्रयोर्दधिपयसोः प्रदानवदिति पूर्वपक्षं कृत्वा—विद्याया एकत्वेऽपि पृथगेव प्रवृत्तिः । यथा अग्निहोत्रहोमस्यैकत्वेऽपि युगपदनुपसंहरणीयसायंप्रातःकालरूपगुणभेदात् प्रवृत्तिभेदः—एवमिहापि युगपदनुपसंहरणीयस्थानद्वयवशेन प्रयोगभेदोऽस्ति प्रदानवत्—यथा, इन्द्राय राज्ञ इति त्रिपुरोडाशायां त्रैधातवीयायामिष्टौ देवतापृथक्त्वात् प्रदानपृथक्त्वम् । इयांस्तु विशेषः—दृष्टान्ते यागभेदोऽस्ति; प्रकृते तु न विद्याभेदोऽस्तीति; प्रवृत्तिभेदांशे दृष्टान्तः इति परे वर्णयन्तीत्यर्थः । **विद्याभेदस्य समर्थितत्वादिति** । असद्भाष्यकृतेति शेषः । **वित्तिभेदापादकत्वेति** । यद्यपि परमते नात्र विद्याभेदः तथापि—स्वमतदार्ढ्येनेदमुक्तमिति द्रष्टव्यम् । परपक्षे प्रदानवदेवेति सूत्रमयुक्तम्; इन्द्राय राज्ञ इत्यादौ प्रदानभेदस्य सिद्धतया तद्दृष्टान्तीकरणेन दार्ष्टान्तिकेऽपि विद्याभेदस्यैव प्रतीतेर्विध्यैक्यवादिपरमते सूत्रमस्वरसमिति द्रष्टव्यम् । **विद्याद्वयोत्तीर्णत्वेनेति** । विद्याद्वयाकारप्रष्टत्वादिति भावः ।

इति प्रदानाधिकरणम् ।

---

# (१९) लिङ्गभूयस्त्वाधिकरणम्

लिङ्गभूयस्त्वात् तद्धि बलीयस्तदपि ३-३-४३.

नन्वस्मिन्नधिकरणे नारायणानुवाकस्य सकलविद्योपास्यनिर्धारकत्वम्, उत प्रकृतदहरविद्योपास्यनिर्धारकत्वमिति विचारो व्यर्थः। दहरविद्योपास्यनिर्णायकत्वेऽपि दहरविद्याया मोक्षसाधनतया तद्विद्योपास्यस्यैव सर्वविद्योपास्यत्वं सिद्धमेव, एकस्यैव मोक्षसाधनज्ञानविषयत्वात्, 'नान्यः पन्था' इति इतरविषयज्ञानस्य मोक्षासाधनत्वश्रुतेरिति चेत्—सत्यम्; एकस्यैव मोक्षसाधनज्ञानविषयत्वमित्यर्थोपजीवनमन्तरेणापि नारायणस्यैव सर्वविद्याविषयत्वं विधिबलात् सिद्ध्यतीति प्रतिपाद्यत इति न कश्चिद्दोषः। अस्मिन्नधिकरणे 'पद्मकोशप्रतीकाश' मिति प्रकृतप्रत्यभिज्ञानात् प्रकृतं दह्रमनूद्य विश्वोपजीव्यत्वपरब्रह्मत्वनारायणत्वपरमधामात्वब्रह्मत्वशिवत्वादिकं विधीयते, 'नारायण परं ब्रह्मे' त्यादीनाम्, 'स ब्रह्मा स शिवः सेन्द्रस्सोक्षरः परमस्स्वराट्' इति वाक्यसारूप्यात्। न तु, नारायणपरं ब्रह्मेत्यादिवाक्यनिर्दिष्टानां मध्ये अन्यतमानुवादेन अन्यतमस्य विधानम्; प्रमाणाभावादिति पूर्वपक्ष्यभिप्रायः।

भाष्ये **दहरविद्यानन्तर**मिति। विद्याशब्दोऽत्र तत्प्रतिपादकवाक्यपरः।

**इतरे त्रयोपी**त्यादि। 'सर्वाणि भूतानि चिन्वन्त्यपि स्वपत' इति चयनप्रयोगप्रातत्यदर्शनं लिङ्गम् एषां क्रियाननुप्रवेशेन स्वातन्त्र्ये। यदि हि क्रियानुप्रवेशः स्यात्, क्रियाप्रयोगस्याल्पकालत्वात् प्रातत्येनैषां प्रयोगोऽनर्थकः। ततश्च प्रातत्यलिङ्गेन विद्याविधिरेव स्वतन्त्रोऽभ्युपगन्तव्यः, न क्रियाशेष इत्यर्थः। 'यत्किञ्चेमानि मनसा सङ्कल्पयन्ति, तेषामेव सा कृतिः' इति संकल्पस्य(?) मनस्सङ्कल्पस्याग्निकृतित्वश्रवणमित्येवमादिकमादिपदग्राह्यम्। **नन्वसत्यामन्यस्यां प्राप्ताविति**। **अयं भावः**—सत्यं लिङ्गानि मनश्चिदादीनामक्रियाशेषत्वेन स्वातन्त्र्यप्रतिपादकानि; प्रमाणप्रापितं तु स्वतन्त्र्यमुपोद्बलयन्ति। न चास्ति स्वातन्त्र्यप्रतिपादकमन्यत् प्रमाणम्। न चेदं सामर्थ्यलक्षणं लिङ्गम्; येनेदं स्वातन्त्र्येण प्रतिपादकं प्रमाणं भवेत्, तद्धि सामर्थ्यं शब्दगतम्, अर्थगतं वा स्यात्, यथा

पूषाद्यनुमन्त्रणमन्त्रस्य पूषाद्यनुमन्त्रणे, यथा वा पशुना यजेतेत्यत्र एकत्वसंख्यार्थस्य संख्येयावच्छेदसामर्थ्यम् । न चेहान्यार्थदर्शनलक्षणं लिङ्गं तथा भवितुमर्हति । स्तुत्यर्थत्वेनाप्युपपत्तेः । ततश्च सामर्थ्यलक्षणलिङ्गस्य विरोधिनोऽभावात् निष्प्रत्यूहेन प्रकरणेन मनश्चिदादीनां क्रियाशेषत्वाध्यवसीयत इति । **विधिः कल्पनीय इति चेदिति** । ततश्चैतेभ्यो यादृशोऽर्थः प्रतीयते, तदनुरूप एव कल्पनीयः। प्रतीयते चैतेभ्यो मनश्चिदादीनां प्रातत्यं कर्मपारतन्त्र्यविरोधि । अतो मनोव्यापारेषु अग्निदृष्टिविषयः स्वतन्त्राः नान्यविधिशेषभूता इति, विधिः कल्प्यत इत्यर्थः। **विधिकल्पनामूलत्वादिति** । ननु यथा पुरुषार्थत्वलक्षणं स्वातन्त्र्यं विधिकल्पनमूलकम्, एवं क्रत्वर्थत्वलक्षणं पारतन्त्र्यमपि; 'न चाविहितमङ्ग' मिति न्यायादिति कथं तस्य स्वातन्त्र्यसाधकत्वम् । किञ्च भाष्यरीत्या विद्यामयशेषिक्रतुविधिः कल्प्यत इत्यभ्युपगमः प्रत्युत स्वातन्त्र्यविरुद्ध एव विद्यामयशेषिपरतन्त्रत्वादिति; परमते मनश्चिदादीनां विद्यारूपाणां विद्यामयक्रतुशेषत्वानभ्युपगमेन स्वातन्त्र्याभ्युपगमादिति चेत् — न; फलसाधनत्वविधिकल्पनस्य फलसाधनत्वलक्षणस्वातन्त्र्योपजीव्यत्वमस्तीत्यत्र तात्पर्यात् ।

**मानसग्रहसामान्येन न क्रियाशेषत्व**मिति पाठः । **तस्य अप्रकृतत्वेने**ति । सूत्रे परस्य ब्राह्मणस्य प्रकृतत्वात् तच्छब्देन ब्राह्मणं परामृश्यते । तस्य विधेव विधा यस्य सः तद्विधः, तस्य भावः ताद्विध्यमित्यर्थ उचितः । न तु तच्छब्देन विद्यां परामृश्य, तस्या विधिस्तद्विधिः, तस्य भावस्ताद्विध्यमित्यर्थ इति; अस्मिन् सूत्रे ब्राह्मणस्य प्रकृतत्वात् विद्याया अप्रकृतत्वादित्यर्थः । शेषमतिरोहितार्थम् ।

**अवेष्टौ यज्ञसंयोगा**दित्यधिकरणमित्थम् । अस्ति राजसूयः, राजा स्वाराज्यकामो राजसूयेन यजेतेति । तं प्रकृत्यामनन्ति अवेष्टिनामेष्टिम्, 'आग्नेयोऽष्टाकपालो हिरण्यं दक्षिणे'त्यादिना । तां प्रकृत्याधीयते "यदि ब्राह्मणो यजेत, बार्हस्पत्यं मध्ये निधायाहुतिमाहुतिं हुत्वा तमभिघारयेत्; यदि वैश्यः, वैश्वदेवम्; यदि राजन्यः, ऐन्द्रम्" इति । तत्र संदिह्यते । किं ब्राह्मणादीनामवेष्टौ प्राप्तानां निमित्तार्थानि श्रवणानि, उत ब्राह्मणादीनामयं यागो विधीयते इति । यदि

प्रजापरिपालनकण्टकोद्धारणादिकर्म रूढ्या राज्यम् , तस्य कर्ता राजेति राजशब्दस्यार्थः, ततः, 'राजा राजसूयेन यजेते'ति राज्यस्य कर्तुः राजसूयाधिकारः। तस्मात् संभवन्त्यविशेषेण ब्राह्मणक्षत्रियवैश्या राज्यस्य कर्तार इति, सिद्धं सर्व एवैते ब्राह्मणादयो राजसूये प्राप्ता इति निमित्तार्थानि श्रवणानीति । अथ राज्ञः कर्म राज्यमिति योगात् राज्यशब्दस्य प्रजापालने वृत्तिः, तदा को राजेत्यपेक्षायाम्, आर्येषु तत्प्रसिद्धेरभावात् पिकनेमसततामरसादिशब्दार्थावधारणाय म्लेच्छप्रसिद्धिरिव आन्ध्रादीनां म्लेच्छानां क्षत्रियजातौ तत्प्रसिद्धिरिति तद्बलात् क्षत्रिय एव राजेति न ब्राह्मणवैश्ययोः प्राप्तिरस्तीति राजसूयप्रकरणं भित्त्वा ब्राह्मणादिकर्तृकावेष्टिः प्राप्यते, न निमित्तार्थानि श्रवणानीति सिद्ध्यति ।

किं तावत् प्राप्तम् । नैमित्तिकानीति । राज्यस्य कर्ता राजेति आन्ध्राणामार्याणां चाविवादम् । तथा हि ब्राह्मणादिषु प्रजापालनादिकर्तृषु कनकदण्डातपत्रश्वेतच्छत्रचामरादिलाञ्छनेषु राजपदमार्याश्चान्ध्राश्चाविवादं प्रयुञ्जाना दृश्यन्ते । ततो विप्रतिपत्तिः । विप्रतिपत्तावप्यार्यान्ध्रप्रयोगयोर्यववराहवत् [आर्य?]प्रसिद्धेरान्ध्रप्रसिद्धितो बलवत्त्वात् बलवदार्यप्रसिद्धिविरोधे तन्मूलायाः पाणिनीयस्मृतिप्रसिद्धेः, 'विरोधे त्वनपेक्षं स्यात्' इति न्यायेन बाधात् तदनुगुणतया वा कथञ्चित् नखनकतुल्येन्द्रियादिशब्दवदन्वाख्यानमात्रपरतया नेतव्यत्वात् , राज्यस्य कर्ता राजेति सिद्धेः निमित्तार्थानि श्रवणानीति। तथा च यदिशब्दोऽपि समञ्जस इति प्राप्ते—उच्यते —

"रूपतो न विशेषस्तत्रार्यम्लेच्छप्रयोगयोः ।
वैदिकाद्वाक्यशेषात्तु विशेषस्तत्र दर्शितः ॥"

तदिह राजशब्दस्य प्रजापालनकर्मयोगात् वा कर्तरि प्रयोगः, कर्तृयोगाद्वा कर्मणीति विशये, वैदिकवाक्यशेषतया अभियुक्ततरपाणिनिस्मृतेर्विशेषो निर्णीयते। प्रसिद्धिरान्ध्राणामनादिः । आदिमती चार्याणां प्रसिद्धिः, गाव्यादिशब्दवत् ! न च संभावितादिमद्भावा प्रसिद्धिः पाणिनिस्मृतिमपोद्य अनादिप्रसिद्धिमादिमतीं कर्तुमुत्सहते। गाव्यादिशब्दप्रसिद्धेरादिमत्त्वेन गवादिपदप्रसिद्धेरप्यादिमत्त्वापातात् पाणिनीयस्मृत्यनुगतान्ध्रप्रसिद्धिबलीयस्त्वेन क्षत्रियत्वजातौ राजशब्दो मुख्यः, तत्कर्तरि अतज्जातौ

राजशब्दो गौण इत्यवसीयते । ततश्च क्षत्रियस्यैव राजसूये अधिकारात् तत्प्रकरणमपोद्य अवेष्टेरुत्कर्षः । यदिशब्दश्च प्राप्त्यनुरोधी, न तु अपूर्वविधौ सति तमन्यथयितुमर्हति । अत एवाहुर्भट्टपादाः — "यदि शब्दपरित्यागो रुच्यध्याहार-कल्पना," यदि रोचेत(रोचयेत ?) फलं मे स्यादिति, तर्हि ब्राह्मणो यजेतेति रुच्यध्याहारकल्पनात्र विधिरवक्षतिरित्यर्थ इति ॥

"श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्" इति । अस्यायमर्थो मीमांसकैर्वर्णितः । —

"श्रुतिश्शब्दोऽनपेक्षः सा विध्युक्तिविनियोगकृत् ।
विनियोक्त्री त्रिधा भिन्ना तुल्यशब्दादिरूपतः ॥

सर्वभावगता शक्तिः लिङ्गमित्यभिधीयते ।
वाक्यं तु पदसंघातमात्रं विद्वद्भिरुच्यते ॥

इतिकर्तव्यताकाङ्क्षा प्रक्रिया द्विविधा च सा ।
समाख्या यौगिकी संज्ञा लौकिकी वैदिकी च सा ॥

तत्र लिङादिश्रुतिर्विधात्री । इन्द्रादिश्रुतिरभिधात्री । विनियोक्त्री तु एकप्रत्ययरूपा, एकपदरूपा, विभक्तिरूपा चेति त्रिविधा । तत्राद्या, पशुना यजेतेति तृतीया । तया हि स्वोक्तकरणकारकं प्रति स्वोक्तैकत्वसंख्यायाः शेषत्वं बोध्यते । द्वितीया तु यजेतेति पदम् । तेन प्रत्ययोक्तभावनां प्रति प्रकृत्युपात्तयागस्य शेषता बोध्यते । तृतीया तु शेषित्वबोधिका शेषत्वबोधिका च । यथा — व्रीहीन् प्रोक्ष-तीत्यत्र द्वितीयाश्रुतिः शेषित्वबोधिका । 'बर्हिर्देवसदनं दामी' ति मन्त्रस्य लवनशेषता लवनप्रकाशनसामर्थ्यरूपलिङ्गात् । न ह्यस्य विनियोजिका श्रुतिरस्ति । 'यजेत स्वर्गकाम' इति पदसमभिव्याहाररूपवाक्यात् यागस्य स्वर्गशेषता । न ह्यत्र यागेनेति तृतीया वा स्वर्गकाममिति द्वितीया वाऽस्ति ; किन्तु समभिव्याहारादेव साध्यसाधन-ताधीः । महाप्रकरणावान्तरप्रकरणभेदेन प्रकरणं द्विविधम् । तत्र महाप्रकरणेन प्रयाजादीनां दर्शपूर्णमासादिशेषता ; अवान्तरप्रकरणेन अभिक्रमणादेः प्रयाजादि-शेषत्वम् । स्थानं द्विविधम् — पाठसादेश्यम् , अनुष्ठानसादेश्यं चेति । पाठ-

सादेश्यमपि यथासंख्यापाठं सन्निधिश्च । तत्र यथासंख्यापाठेन, 'दब्धिरसि अदब्धो भूयासम्' इति मन्त्रस्य उपांशुयाजशेषत्वम् । सन्निधिवशेन शुन्धध्वमिति मन्त्रस्य सान्नाय्यपात्रप्रोक्षणाङ्गत्वम् । अनुष्ठानसादेश्यात् पशुधर्माणामग्नीषोमीयार्थत्वम् । होतृचमसादिवैदिकसमाख्यया होतुः चमसभक्षणशेषता । आध्वर्यवमिति लौकिकसमाख्यया अध्वर्योराध्वर्यवादिकं प्रति शेषतेति स्थितिः ।

तत्र च श्रुतेरनपेक्षणात् साक्षादेव प्रामाण्यम् । लिङ्गस्य श्रुतिमात्रापेक्षत्वात् एकान्तरितं प्रामाण्यम् । वाक्यस्य तु लिङ्गश्रुतिकल्पनापेक्षत्वात् द्व्यन्तरितम् । प्रकरणस्य तु वाक्यलिङ्गश्रुतिकल्पनासापेक्षत्वात् त्र्यन्तरितम् । स्थानस्य तु प्रकरणवाक्यलिङ्गश्रुतिकल्पनापेक्षत्वात् चतुरन्तरितम् । समाख्यायास्तु स्थानप्रकरणवाक्यलिङ्गश्रुतिकल्पनापेक्षत्वात् पञ्चान्तरितमिति विप्रकर्षात् परदौर्बल्यम् । तदुक्तम् —

" एकद्वित्रिचतुःपञ्चश्रुत्यन्तरय[1]कारितम् ।
श्रुत्यर्थं प्रति वैषम्यं लिङ्गादीनामपीष्यते ॥ " इति ।

एवञ्च 'ऐन्द्र्या गार्हपत्यमुपतिष्ठत' इत्यत्र गार्हपत्यमिति द्वितीयाश्रुत्या, 'कदाचन स्तरीरसि नेन्द्र सश्चसि दाशुषे' इति मन्त्रस्य इन्द्रप्रकाशनसामर्थ्यरूपलिङ्गबाधेन गार्हपत्ये विनियोगः । तथा, "स्योनं ते सदनं कृणोमि घृतस्य धारया सुशेवं कल्पयामि, तस्मिन् सीद, अमृते प्रतितिष्ठ व्रीहीणां मेध! सुमनस्यमानः" इति 'स्योनं त' इति मन्त्रे पूर्वोत्तरभागयोः प्रत्येकमनुष्ठेयसदनकरणप्रतिष्ठापनप्रकाशनसामर्थ्यरूपात् लिङ्गात् समभिव्याहाररूपवाक्यबाधात् विभज्य विनियोगः । तथा, 'इन्द्राग्नी इदं हविरजुषेताम्' इत्यत्र इदं हविरित्यादेः इन्द्राग्निपदसमभिव्याहाररूपवाक्येन पौर्णमासप्रकरणबाधात् 'अग्नीषोमाविदं हविरजुषेतां' इति श्रुतपौर्णमासीयपदानन्वयः । तथा राजसूयप्रकरणस्थस्य विदेवनादेरभिषेचनीयसन्निहितस्य प्रकरणेन सन्निधिरूपस्थानबाधेन राजसूयाङ्गत्वम् । तथा शोधनमन्त्रस्य सान्नाय्यपात्रसान्निध्यरूपस्थानेन पौरोडाशिकमिति समाख्याप्राप्तपुरोडाशपात्रान्वयबाधात् सान्नाय्यपात्रान्वय इत्येवं परदौर्बल्यं द्रष्टव्यम् ।

---

1. अन्तरयः = अन्तरयनम् अन्तरितत्वम् । इण् गतौ ।

ननु लिङ्गस्य श्रुतिव्याप्तत्ववत् श्रुत्यर्थीभूतविनियोगव्याप्तत्वस्यापि सत्त्वेन विनियोगापेक्षत्वमेवास्तु ; किं मध्ये श्रुतिकल्पनेन । न हि स्मृतेरिव लिङ्गस्य प्रामाण्याय मूलत्वेन श्रुतिकल्पनम् । स्मरणस्य पौरुषेयतया मूलप्रमाणसापेक्षत्वेऽपि वैदिकलिङ्गस्य विनियोजकश्रुताविव विनियोगेऽप्यन्यानपेक्षस्य प्रमापकत्वादिति चेत्, अत्राहुः । सत्यं लिङ्गादिगम्यत्वम्, अथापि विध्यन्वयाय श्रुत्यपेक्षाऽस्त्येव । उक्तं हि राणके[1] —

"शेषो लिङ्गादिगम्योऽपि न विधिग्रहणादृते ।
अनुष्ठेयो न चाशब्दो विधिनाऽन्वयमर्हति ॥
विध्यन्वयाय तेनास्य कल्प्या लिङ्गादिभिः श्रुतिः ।
प्रयोगवचनस्यैकदेशः सोऽपि भविष्यति ॥
अतः प्रयोगवाक्यस्य पूरणायेह कल्प्यते ।
लिङ्गादिभिः श्रुतिः सा च विरोधे नावकल्प्य(ल्प?)ते" ॥

इति । ततश्च श्रुत्यादीनां लिङ्गाद्यपेक्षया बलवत्त्वमिति ।

गुरुमतानुसारिणस्तु बलाबलमेवं वर्णयन्ति —। व्रीहीनित्यादौ द्वितीया श्रुतिः शब्दरूपतया अन्यानपेक्षैव व्रीहीणां शेषित्वं बोधयितुं प्रवृत्ता शेषिणः कार्यार्थतालक्षणामन्तरेण बोधयितुमशक्ता लक्षणार्थं ग्राहकान्वयमात्रमपेक्षत इति ग्राहकान्वयमात्रपूर्विका द्वारैदमर्थ्ये प्रमाणम् । लिङ्गं त्वशब्दात्मकत्वात् न स्वयमेवाह शेषत्वम् । किन्तु ग्राहकगृहीतमन्त्रस्य ग्राहकैदमर्थ्यनिर्वाहाय करणैदमर्थ्ये कल्पिते, तत्रापि देवतोद्देशेन द्रव्यत्यागात्मकयागरूपं करणं प्रति मन्त्रस्य साक्षादनिर्वर्तकतया करणीयं द्रव्यं अनेनोपकर्तव्यमिति निश्चिते सति, किं तदिति विशेषाकाङ्क्षायाम्, यच्छक्यं तदित्येव द्वारशेषता मन्त्रस्य लिङ्गेन कल्प्या । तस्मात् द्वारैदमर्थ्ये श्रुतितो विलम्बितत्वात् लिङ्गं दुर्बलम् । तथा मन्त्राणां न पाठमात्रात् संभूयबोधकतया एकवाक्यता ; विनियोगाधीनत्वात् मन्त्रभेदाभेदयोः । 'स्योनं त' इति मन्त्रस्य विनियोगश्च लैङ्गिक इति लिङ्गपूर्वकं वाक्यं स्वापेक्षणीयात् लिङ्गात् विलम्बितमिति

1. न्यायसुधायामित्यर्थः ।

दुर्बलम् । अयमेव वाक्यस्य लिङ्गेन बाधो नाम, यल्लिङ्गानुसारेण भेदकल्पनम् । तथा इतिकर्तव्यताकाङ्क्षालक्षणप्रकरणस्य सर्वापेक्षणीयत्वेन प्राधान्येऽपि, तेन करणान्वयस्यैव सिद्धेः करणीयद्वारान्वयस्य कल्पनीयत्वात् क्लृप्ते च वाक्यादाभिधानिके द्वारशेषान्वये सति द्वारान्तरकल्पनायोगे क्लृप्तद्वारान्वयाद्वाक्यात् कल्प्यद्वारान्वयं प्रकरणं दुर्बलमिति, इन्द्राग्नी इदमित्यादिकं समभिव्याहृतेन्द्राग्न्यादिपदेनैवान्वेति ; नान्येन । तथा राजसूयप्रकरणे अभिषेचनीयमन्निहितानां विदेवनादीनां वाक्यार्थत्वात्, 'अरुणया क्रीणाति' त्यादौ पदार्थानां क्रियाकारकान्वये आम्नायसन्निधेः तन्त्रत्वेऽपि वाक्यार्थान्वयेऽपि तस्यातन्त्रत्वात् नियोगाकाङ्क्षामुखसन्निधानस्यैव तन्त्रत्वात् । तस्य च नियोगीयसर्वकरणसाधारण्यात् तदीयसर्वकरणान्वयः ; न तु सन्निधानादभिषेचनीयमात्रान्वयः । तत्सन्निधानं तु आम्नानार्थम् । तथा पौरुषेययौगिकसंज्ञारूपसमाख्या न वैदिकीति, अन्वयहेतुर्वैदिकसन्निधानकल्पनयैवान्वयहेतुः, न साक्षादिति, शुन्धनमन्त्रस्य पुरोडाशपात्रान्वयबाधेन सान्नाय्यपात्रशुन्धनाङ्गत्वमिति ॥

इति लिङ्गभूयस्त्वाधिकरणम् ।

---

## (२०) पूर्वविकल्पाधिकरणम् ।

---

**पूर्वविकल्पः प्रकरणात् स्यात् क्रिया मानसवत् ३-३ ४४.**

अग्निरहस्ये, 'नैव वा इदमग्र आसीत' इत्यस्मिन् ब्राह्मणे, 'तद्धेदं मन एवासीत्' इति प्रथमोत्पन्नं मनः प्रकृत्य 'षट्त्रिंशतं सहस्राण्यपश्यत् आत्मनोऽग्नीनर्कान् मनोमयान् मनश्चितः' इति । तथा 'वाक्चितः प्राणचितश्चक्षुश्चितश्श्रोत्रचितः कर्मचितोऽग्निचित' इत्यादिना मनश्चिदादयोऽग्नयः समाम्नाताः । षट्त्रिंशत्सहस्रदिनात्मकपुरुषायुषान्तर्गतैकैकदिनप्रभवमानसवृत्तिसघाताः अग्नित्वदृष्ट्या उपास्यमानाः मनश्चितः । एवमेव वाक्चिदादयोऽपि प्रत्येकं षट्त्रिंशच्छतसंख्याकाः । कर्मचितः — वागिन्द्रयातिरिक्तकर्मेन्द्रियव्यापाराः देहव्यापारा वा । अग्निचितः — जाठराग्निव्यापाराः । तन्मन एवात्मनस्संबन्धिनः अर्कान् — अर्चनीयान् अपश्यदित्यर्थः । भाष्ये, **किमेते मनश्चिदादयः सांपादिकत्वेनेति** । "कर्मण्यग्न्याख्यायाम्"

इति मनश्चीयत इत्यर्थे क्विप्। श्येनचिदादिशब्दवदसौ क्विबन्तो निष्पन्नः। तेन तदनभिज्ञैः कैश्चित् कोशेषु मनश्चितादय इति इष्टकचितादिशब्दवत् अकारान्तत्वभ्रमात् लिखितम्। तदनादरणीयम्। ततश्च मनश्चिदादय इत्येव पाठः। **सांपादिकं** — संपादितमित्यर्थः। तदर्हतीति ठक् संपादमर्हतीति सांपादिकमिति। ज्वलनवाचिनोऽग्निशब्दस्य कथं स्थण्डिलाग्निवाचित्वमित्याशङ्क्य, अग्न्याधारतया अग्निशब्देन निर्देश इत्याह **होमस्थानत्वा**दिति। होमशब्दो लक्षणया अर्शआद्यजन्ततया हूयते अस्मिन्निति व्युत्पत्त्या वा अग्निपरः। तस्य स्थानत्वादग्निरित्युच्यत इत्यर्थः। अथ वा अग्निशब्देन गौण्या वृत्त्या स्थण्डिलाग्निरुच्यत इत्यर्थः। सादृश्यं च होमस्थानत्वम्। अस्ति च स्थण्डिलस्यापि परंपरया होमस्थानत्वम्। तत्र स्थापितस्याग्नेः होमाधारत्वादिति द्रष्टव्यम्। चित्यापदप्रयोजनमाह — **न हि होमसाधनमात्रस्ये**ति। ज्वलनमात्रस्येत्यर्थः। भाष्ये **क्रत्वनुप्रवेशसाकाङ्क्षाणा**मिति। फलत्वसिद्ध्यर्थमिति शेषः। भाष्ये **इष्टकचितेनाग्निना विकल्प्यमान** इति। "इष्टकेषीकामालानां चिततूलभारिषु" इति इष्टकाशब्दस्य ह्रस्वः।

ननु तुल्यार्थयोरेव विकल्पः, यथा व्रीहियवयोः। न च सांपादिकस्य मनश्चिदाद्यग्नेरिष्टकचिताग्नितुल्यकार्यताऽस्ति; अग्निधारणासमर्थत्वात् सांपादिकाग्नेः। अत एव, 'एषामेकैक एव तावान् यावानसौ पूर्वः' इत्यतिदेशोऽपि न संभवति। न ह्यशकनीयमर्थं शास्त्रसहस्रमपि संभूय विधातुं शक्नोति। न च 'हिरण्यगर्भः समवर्तताग्रे' इति मन्त्रस्य वृत्त्यन्तराश्रयणेनैन्द्राघारप्रकाशन इव, 'उत्करे वाजिनमासादयती'ति वचनबलेन उत्करस्य पृथ्वग्रताश्रयणेन वाजिनपात्रधारण इव, 'परिधौ पशुं नियुञ्जीते'ति वचनबलात् परिधेः पृथुत्वाश्रयणेन पशुनियोजन इव, 'रथघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोती'ति वचनबलेन रथघोषस्य सूचकत्वकल्पनेन उद्गातृप्रेरण इव सांपादिकानां केनाप्युपायेनाग्निधारणसामर्थ्यं संपादयितुं शक्यम्; येनायमतिदेशो विकल्पो वा स्यादिति चेत् — उच्यते। इष्टकचितोऽग्निरुत्तरवेदिवदाहवनीयधारणार्थतया न क्रत्वङ्गम्; अपि तु गोदोहनादिवत् क्रत्वङ्गाश्रितः पुरुषार्थः। 'पशुकामश्चिन्वीते'ति श्रवणात्। "अभागिप्रतिषेधात्" इति सूत्रे वार्तिके तथोक्तत्वात्। ततश्च पूर्वाग्निकार्यस्य पशुफलस्यातिदेशसंभवात् न कश्चि-

द्विरोधः । एवञ्च विद्यामयाग्निभिः सिद्धस्वफलस्येष्टकचिताग्नेः निवृत्तौ अन्यतः स्वकर्तव्योपकारलाभमपश्यन्ती उत्तरवेदिः प्राप्नोतीति, तया अग्निधारणसिद्धिः ।

**ग्रहः पात्रविशेष** इति । "अनया त्वा पृथिव्या पात्रेण समुद्रं रसया प्राजापत्यं मनोग्रहं गृह्णामि" इति मन्त्रवशात् पृथिव्यादिकं पात्रादित्वेन ध्यातव्यम् । ततश्च तादृशपात्रविशेषयुक्तग्रहणरूपसंस्कार इत्यर्थः । अर्शआद्यजन्तो **विशेष**शब्दः । अथ वा पात्रशब्दः सांपादिकपात्रपरः । तेन विशिष्यत इति विशेषः । तद्विशिष्ट इत्यर्थः । **विवाक्ये विगतवाक्ये** इति । यद्यपि दशमस्याह्नः अविवाक्यमित्येव नाम, अथापि विविधवाक्यरहिततया अविवाक्यमिति संज्ञितस्यैव विगतवाक्यत्वमादाय विवाक्यमित्यपि वक्तुं सुशकत्वमभिप्रेत्य विवाक्य इति छेदो दर्शितः, न तु विवाक्य इति सञ्ज्ञाप्यस्तीति द्रष्टव्यम् । **मनोनिष्पाद्येत्यत्र** बहुव्रीहिः । मानसैः ग्रहस्तोत्राद्यङ्गैर्युक्तस्य मानसग्रहयागस्येत्यर्थः । ग्रहणं — सोमरसस्य पात्रे ग्रहणम्, आसादनं — स्थापनम् । प्रत्याहरणं — होमानन्तरं हुतशेषस्याहरणम् । ननु सर्वत्र द्रव्यत्यागात्मकयागस्य मानसत्वात् कथमस्य विशिष्य मानसत्वमित्याशङ्क्य, यज्ञान्तरे ग्रहणादीनां स्वरूपेण सत्त्वेऽपि मानसयागाभ्यासाङ्गभूतग्रहणासादनतद्द्रव्यादीनां मनोनिष्पाद्यतया उपयोगित्वेन मानसत्वम् । तद्योगाच्च मानसग्रहयागस्य विशिष्य मानसत्वं सिद्ध्यतीत्याहुः । **मनोनिष्पाद्योपयोगित्वेने**ति । मनोनिष्पाद्यैस्सोमरसतद्ग्रहणासादनादिभिरुपयोगो मनोनिष्पाद्योपयोगः, सोऽस्यास्तीति मनोनिष्पाद्योपयोगी, तत्त्वेनेत्यर्थः । **केचित्तु**, उपांशुपात्रे मानसं गृह्णाती' ति मानसग्रहणस्याधारतया उपांशुपात्रस्य विहितत्वात्, [1]**स हि स्वरूपेण विद्यत** इति अत्र स इत्युपांशुपात्रात्मकग्रहविशेषः परामृश्यते । स हि स्वरूपेणास्तीति **वदन्ति** ।

विद्यैव तु निर्धारणाद्दर्शनाच्च ३-३-४६.

**प्रधानभूतं कर्म क्रियत** इति । 'यत्किञ्च यज्ञ' इत्यत्र यज्ञशब्दः प्रयोगवचनः, न प्रथमयज्ञे प्रवृञ्ज्यादितिवत् । ततश्च यज्ञकर्मेत्यनेन प्रधानस्य परामर्शो भविष्यति । अतो **यज्ञे कर्मे**ति भेदनिर्देशे नानुपपत्तिरिति द्रष्टव्यम् ।

1. **न हि स्वरूपेण विद्यत** इति टीकापाठः ।

**दीपसारयो**रिति । यद्यपि भाष्यकृत्यनन्तरमेव दीपसारकृतिः—तथापि ग्रन्थकाराणां चिकीर्षितग्रन्थान्तरेषु वक्ष्यमाणार्थानामप्युक्ततया निर्देशोऽस्ति । अतो नायं दोषः। वस्तुन उ(तस्तू)पायोपेयोपेतॄणामेवोपासनादिरूपत्वात् न विरोध इति द्रष्टव्यम्। **तदुपयोगित्वेनाहे**ति । **इदमुपलक्षणम्**—प्रत्यगात्मनोऽनुसन्धेयत्वे सिद्धे हि किंरूप उपास्य इति चिन्ताऽवतरेत्; नान्यथा। अतो विचारोपयोगार्थमेव 'आत्मेति तूपगच्छन्ति' इति सूत्रोपादानम्। अत एव **सूत्रद्वयोक्तार्थोपजीवनेने**ति वक्ष्यति । '**तं यथायथोपासत**' इति । अत्र तच्छब्दस्य परमात्मस्वरूपपरत्वात् तं परमात्मानं यद्गुणविशिष्टमुपासत इत्यर्थः । ततश्च जीवगतापहतपाप्मत्वादेः ब्रह्मस्वरूपविशेषणत्वाभावात् न तत्र तत्क्रतुन्यायः इति पूर्वपक्षाभिप्रायः । 'यथा यथोपासत' इत्यत्र यत्प्रकारविशिष्टमुपासत इति हि (?) तस्यार्थः । तत्र च ब्रह्मगुणानामिव अपहतपाप्मत्वादिविशिष्टजीवस्वरूपस्यापि प्रकारत्वमस्तीति अपहत पाप्मत्वादिविशिष्टस्वात्मतयोपासने तथैव फलं भवतीति स्वात्मनोऽप्यपहतपाप्मत्वादिविशिष्टस्यैवानुसन्धानं सिद्ध्यतीति सिद्धान्ताभिप्रायः। नन्वेवं सति तच्छब्दस्य विशेष्यस्वरूपपरत्वेऽपि यथाशब्दक्रोडीकृतत्वात् अपहतपाप्मत्वादिविशिष्टस्वात्मस्वरूपस्यानुसन्धानसिद्धेः तच्छब्दस्य विशिष्टपरामर्शित्वसाधनं विफलमिति चेत्—तस्य युक्त्यन्तरत्वात्। **तच्छब्दो विशिष्टविषय इति भाव** इति सिद्धान्तग्रन्थे चशब्दमध्याहृत्य, इति च भाव इति योजनीयम् । अतो नानुपपत्तिः । ननु, "उपासितगुणादेर्या प्राप्तावप्यबहिष्क्रिया । सा तत्क्रतुनयग्राह्या नाकारान्तरवर्जनम्" इत्युक्तरीत्या अपहतपाप्मत्वाद्यनुसन्धानमन्तरेणापि तत्प्राप्तिसंभवेन कथमवश्यानुसन्धेयत्वम् । न च कर्तृत्वादिसांसारिकधर्मवत्तयाऽनुसन्धाने तत्क्रतुन्यायेन फलदशायामपि सांसारिकधर्मानुवृत्तिप्रसङ्ग इति वाच्यम्—तावता कर्तृत्वाद्यनुसन्धानस्यायुक्तत्वेऽपि अपहतपाप्मत्वादिविशिष्टोपासने नियामकाभावादिति चेत्—सत्यम् । तथापि कर्तृत्वाद्यनुसंधानस्य चिरकालानुवृत्तस्य निवृत्तेः तद्विरुद्धापहतपाप्मत्वादिरूपानुसन्धानमन्तरेणासंभवादित्यत्र तात्पर्यात्। **देहात्मविवेकः प्रसजेदि**ति । न चेष्टापत्तिः, तदर्थमध्ययनानन्तरं शास्त्रान्तरश्रवणे प्रवृत्तिप्रसंग इति भावः । **स्वयमेव शास्त्रप्रवृत्ती**ति । त्वया तथाऽनभ्युपगमात्; नित्यानित्यवस्तुविवेकस्य निश्चयस्य पूर्ववृत्तत्वाभ्युपगमादिति

भावः। **वृत्तिकारोक्तिरि**ति। शरीरातिरिक्तात्मास्तित्वप्रसक्तौ, "शारीरके वक्ष्याम" इत्युपवर्ष वृत्तिकृत उक्तिरित्यर्थः। **विभुत्वाणुत्वाद्याकारे**ति। स्वरूपतोणुत्वम्, धर्मभूतज्ञानद्वारा विभुत्वमित्यर्थः॥

इति शरीरेभावाधिकरणम्।

## [२२] अङ्गावबद्धाधिकरणम्

अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ३-३-५२.

भाष्ये **उक्थथमुक्थमितीति**। इत्थं कर्माङ्गभूतं शस्त्रं यत् प्रजा वदन्ति तदिदमेव, येयं पृथिवी इत्युक्थे पृथिवीत्वदृष्टिविधिः, भाष्ये **तास्वेव नियता** इति। अयं भावः—सामवेद एव ताण्डिशाखाप्रभृतयो बह्व्यश्शाखाः। तासु च शाखासु सर्वासु सामावयवोद्गीथाः स्वरवर्णविशेषादिभेदेन भिन्नाः। ताण्डिशाखायां च आप्त्यादिगुणविशिष्टतया हिरण्मयप्राणाकाशादिदृष्टिविशिष्टतया चोद्गीथाद्युपासनानि विहितानि। तानि च क्रतुमध्ये अनुष्ठेयानि। तत्र यदा क्रत्वङ्गतया ताण्डिशाखागतोद्गीथः प्रयुज्यते, तदा तस्मिन्नेव तच्छाखाविहिताप्त्यादिगुणविशिष्टोपासनं कर्तव्यम्, उत शाखान्तरगतेऽप्युद्गीथे क्रत्वङ्गतया प्रयुज्यमाने इति। एवं वेदान्तरविहितोद्गीथ द्युपासनेपि तत्तद्वेदविहितोद्गीथाद्युपासनप्रकारः तत्तद्वेदविहितोद्गीथमात्रविषयकः, उत वेदान्तरविहितविषयकोऽपि वेति। उपांशु यजुषेति वचनबलात् यजुर्वेदविहित उद्गीथ उपांशुत्वगुणः; वेदान्तरविहितस्तु उच्चैष्ट्वगुणक इति द्रष्टव्यम्। भाष्ये **सर्ववेदान्तप्रत्ययत्व** इति। ननु उद्गीथानां मन्त्रावयवरूपाणां नानाशाखाम्नातानामभेदः प्रत्यक्षप्रत्यभिज्ञानादेव सुवचो न सर्ववेदान्तप्रत्ययन्यायमपेक्षते। न हि नानाशाखाम्नातमन्त्राभेदप्रत्ययः सर्ववेदान्तप्रत्ययन्यायसाध्य इति चेत्—सत्यम्। सामवेदान्तर्गतनानाशाखाम्नातोद्गीथव्यक्तीनामभेदो न न्यायसापेक्षः। प्रत्यभिज्ञयैव ऐक्यस्य सुज्ञानत्वात्—तथापि वेदान्तरविहितादुद्गीथाद्वेदान्तरविहितस्य उद्गीथस्य विहितस्य विधानायोगादित्यभ्यासाधिकरणोक्तन्यायेन भेदशंका समुन्मिषति; तत्परिहारस्तु सर्ववेदान्तप्रत्ययन्यायमपेक्षत इति भावः। भाष्ये **उद्गीथसंबन्धि-**

**तया श्रुताया** इति । उपासनाया इति शेषः । भाष्ये **एवमाद्यास्तास्वेव शाखास्विति** । "ओमित्येतदक्षरमुद्गीथमुपासीत" इत्यादिवाक्यविहित – आप्त्यादि गुणकोद्गीथोपासनाप्रभृतय इत्यर्थः । **अनेन सन्निधेः व्यवस्थापकत्वमिति** । नन्विदमसंगतम् । उद्गीथवाक्यप्रवृत्तेः प्राक् तत्तच्छाखागतोद्गीथादिव्यक्तीनामेव सन्निहितत्वात् अविशेषप्रवृत्तापि श्रुतिः सन्निधिवशेन व्यवस्थास्यत इति पूर्वपक्षिणो-पक्षिप्ते अविशेषप्रवृत्ताया श्रुतेर्दुर्बलसन्निध्यनुरोधेन संकोचासंभवादित्येव परिहर्तव्यम् । श्रुतजनितप्रतीतेरपि प्राक् सन्निहित एव विषय इति वदन्तं पूर्वपक्षिणं प्रति एतस्यानुत्तरत्वात् । श्रुतिप्रवृत्तेः प्राक् उद्गीथव्यक्त्यन्तराणामसन्निधानस्यैव हेतू-करणेन तस्य पूर्वपक्षहेतोः तादवस्थ्यादिति चेत् – सत्यम् ; अविशेषप्रवृत्तायाः श्रुतेः सन्निधिवशेन संकोचस्यायुक्तत्वादित्यत्रैव तात्पर्यात् । ननु उद्गीथमुपासीते त्यत्र उद्गीथश्रुतेरुद्गीथसामान्यं वाच्यम् । उद्गीथव्यक्तिर्लक्ष्या । स्वशाखागतोद्गीथ-व्यक्त्युपादाने च सामान्यस्य प्रतिव्यक्तिसमाप्त्या सामान्यविशेषौ द्वावपि श्रुत्यर्थौ गृहीतौ । तत्र कथं श्रुतिबाधः । यथाहुः,

"जातिव्यक्ती गृहीत्वेह वयं तु श्रुतलक्षिते ।
कृष्णादि यदि मुञ्चामः का श्रुतिस्तत्र पीड्यते" ॥

इति । 'पटं शुक्लमानयेति प्रयोगे पटपदेन श्रुतपटत्वजातिं लक्षितां च शुक्लपटव्यक्तिं गृहीत्वा कृष्णादिव्यक्तिं यदि मुञ्चामः, का श्रुतिस्तत्र पीड्यते? न कापीत्यर्थः ।' इत्युक्तमिति चेत्, न । शुक्लपटमानयेत्यत्र शुक्लमात्रस्य पटमात्रस्य च ग्रहणे परस्परविशिष्टार्थप्रत्यायकत्वभङ्गप्रसंगेन संकोचेपि इह अविशेषप्रवृत्तोद्गीथमात्रग्रहणे बाधकाभावादिति भावः । भाष्ये **सर्वशाखाप्रत्ययन्यायेन** चेति । ननु "भूयस्त्वेन उभयश्रुती"तिन्यायेन(३-३-३)ज्योतिष्टोमस्य याजुर्वैदिकतया ताण्डिशाखायां विधाना-भावेन तद्द्वारा उद्गीथाद्यङ्गानामसन्निधापितत्वेन आप्त्यादिगुणविशिष्टताण्डिशाखाविहितो-द्गीथोपासनेषु ज्योतिष्टोमाङ्गभूतनानाशाखागतस्वरविशेषविशिष्टसर्वोद्गीथव्यक्तीना-मुपास्यत्वं न स्यात् । किं बहुना, यस्यां शाखायां यस्य क्रतोः न विधिः, तदङ्गभूतो-द्गीथव्यक्तीनां नानाशाखागतानां अङ्गिद्वारा सन्निधापनाभावाद्विषयत्वं न स्यात् इति

चेन्न । एतस्य अभ्युच्चययुक्तितया उपन्यस्तत्वेन एतस्याव्यापित्वेपि पूर्वोक्तयुक्ते-र्व्यापित्वेन तन्निराकरणसंभवेन दोषाभावात् ॥

मन्त्रादिवद्वाऽविरोधः ३ ३-५४.

**भाष्ये आदिशब्देने**ति । पशुनायजेतेत्यत्र पशुत्वजातिः एकत्वसंख्या, ' अरुणयैकहायन्या " इत्यत्र आरुणिमगुणः एकहायनीद्रव्यम् , "श्येनञ्चितं चिन्वीत" इत्यादौ सादृश्यम् , " वेदं कृत्वा वेदिं करोती " त्यादौ क्रमः, प्रयाजादीनि च कर्माणि । **उद्गीथपदश्रुत्या विनियोगा**दिति । उद्गीथपदगतद्वितीया-श्रुत्येत्यर्थः । न चैवमुपासनस्योद्गीथाङ्गत्वप्रसक्त्या, " तन्निर्धारणानियमः", " अङ्गेषु यथाश्रयभावः " इत्याद्यधिकरणविरोध इति वाच्यम् – तत्परिहारस्य, "अन्यथात्वं शब्दादितिचेत् " इत्यत्र अस्माभिः प्रपञ्चितत्वात् । **सर्वशाखिनामुपासनेष्वधि-कारः फल**मिति । सर्वशाखिनां सर्वशाखागतोद्गीथप्रयोक्तॄणां सर्वशाखाविहितो-द्गीथोपासनेष्वधिकारः फलमित्यर्थः । ततश्च यथा आप्त्यादिगुणविशिष्टमुपासनं ताण्डिशाखायां श्रुतं क्रतुमध्ये ताण्डिशाखागतोद्गीथप्रयोक्तारमधिकरोति, एवं क्रतुमध्ये शाखान्तरगतोद्गीथप्रयोक्तारमपि इदमुपासनमधिकुर्यात् । अन्यथा ताण्डिशाखागतोद्गीथविषयमेव तच्छाखाविहितमाप्त्यादिगुणविशिष्टमुपासनमिति क्रतुषु जैमिन्यादिशाखागतोद्गीथप्रयुक्तः तत्रोपासने अधिकारो न स्यादिति भावः ॥

इत्यङ्गावबद्धाधिकरणम् ।

## [ २३ ] भूमज्यायस्त्वाधिकरणम्

भूम्नः क्रतुवत् ज्यायस्त्वं तथा हि दर्शयति ३-३-५५.

**श्रुतिसिद्ध**मिति । "ओमित्येतदक्षरमुद्गीथम् " इत्यत्र व्यस्तोपासनम् । " पृथिवी हिंकारोऽग्निः प्रस्ताव आदित्य उद्गीथ " इति द्वितीयप्रपाठके समस्तो-पासनं सिद्धमित्यर्थः । **किमवयवभूतमिति** । किंरूपावयवभूतमित्यर्थः । **' एतमेवात्मानं वैश्वानरमुपास्त ' इत्यादिष्वित्यर्थ** इति । ' " एष वै सुतेजा

आत्मा वैश्वानरः" इत्यादिना तेषु तेषूपासनेषु उपास्यस्य वैश्वानरत्वं चाहे' ति भाष्ये स्फुटान्वये प्रतीयमाने एवं व्याख्यानमयुक्तमिति मन्यमाना इमं ग्रन्थं लेखकप्रक्षिप्तं वर्णयन्ति । एवं श्रुतिः, "औपमन्यव! कं त्वमात्मानमुपास्स इति दिवमेव भगवो राजन्निति होवाच, एष वै सुतेजा आत्मा वैश्वानरः, यं त्वमात्मानमुपास्से। अत्स्यन्नं पश्यसि प्रियम्। अत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एवमेतमात्मानं वैश्वानरमुपास्ते। मूर्धा त्वेष आत्मन इति होवाच मूर्धा ते न्यपतिष्यत्, यन्मां नागमिष्यः"इति । अत्र च अत्त्यन्नमित्यादिरुत्तरसन्दर्भो व्यस्तोपासने तत्फले च प्रमाणीकर्तुं योग्यः । एष वै सुतेजा इत्यादिपूर्वसन्दर्भस्तु उपास्यस्य वैश्वानरत्वे प्रमाणीकर्तुमुचितः। अतोऽयं ग्रन्थः प्रक्षिप्त इत्येव युक्तमिति । **केचित्तु** "मूर्धादिषु व्यस्तेषूपासनं तत्र फलं चोक्तवान् । 'अत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एवमेतमात्मानं वैश्वानरमुपास्ते। मूर्धा त्वेष आत्मन इति" इत्येतावत्येव वाक्यं परिसमाप्तम् । मूर्धा त्वेष आत्मनः इत्यस्य मूर्धरूपव्यस्तोपासनमात्रप्रमाणत्वेन मूर्धादिव्यस्तोपासने प्रमाणत्वाभावात् । अतः, "एष वै सुतेजा आत्मा वैश्वानर, (नरइत्यादिना?") इत्यस्य फलञ्चोक्तवानिति पूर्वेणान्वयो वक्तव्यः। न तु **वैश्वानरत्वं चाहे**त्युत्तरेण। तमिममर्थमभिप्रेत्य '**एतवात्मानं वैश्वानरमुपास्त' इत्यादिष्वित्यर्थ** इत्युक्तमिति वर्णयन्ति। भाष्ये **द्युप्रभृतिप्रदेशावच्छिन्नमात्र** इति। द्युप्रभृतिप्रदेशसंबन्धिनी प्रादेशिकी मात्रा यस्य स प्रादेशमात्र इति श्रुत्यर्थ इति भावः ।

**व्यस्तोपासनफलात्पृथक्फलनिर्देशा**दिति । न च 'यस्त्वेतमेवं प्रादेशमात्र'मित्येतत् व्यस्तोपासनसमुदायानुवाद इत्युक्तमिति वाच्यम् — व्यस्तोपासनेषु फलोक्तेरेवावयुत्यानुवादत्वमित्यपि सुवचत्वेन विनिगमनाविरहात् उभयोपासनमपि विधीयत इत्येवाभ्युपगमनीयमिति भावः। **समस्तोपासनं प्रधानप्रतिपाद्य**मिति। भूमविद्यायां सत्यशब्दोक्तस्य ब्रह्मणः सर्वतो भूयस्त्व प्रतिपादनार्थं तदवधित्वेनोपास्यमानेषु नामादिप्राणान्तेष्विव सर्वशरीरकस्य वैश्वानरस्यप्रतिपादनार्थं तदवयत्वेनोपन्यस्यमानेषु नामादिप्राणान्तेष्विव सर्वशरीरकस्य वैश्वानरस्य प्रतिपादनार्थं तदवयत्वेनोपन्यस्यमानेषु स्वर्लोकादिषु प्रासंगिकोपासनतत्फलाभिधानस्य महा-

वाक्यैक्याविरोधित्वादिति भावः । न च—भूमविद्यायां नामाद्युपासनानामश्रुता निन्दा ; इह तु व्यस्तोपासनानां निन्दा श्रूयते । सा च उदितानुदितहोमनिन्दान्यायेन प्रक्रान्तविषयत्यागविषयतया योजयितुं न शक्यते । समस्तोपासनामविज्ञाय व्यस्तोपासना एव कृतवतः प्राचीनशालादीन् प्रति तन्निन्दाश्रवणादिति वाच्यम् — तथापि 'न हि निन्दा' न्यायेन योजयितुं शक्यत्वात् । न ह्यत्र उदितानुदितहोमयोरिव व्यस्तोपासनेषु प्रायश्चित्तश्रवणमस्ति ; येन प्रक्रान्तविषयत्यागविषयतायोजनपर्यन्तमपेक्ष्येत । 'न हि निन्दा' न्यायेन विधेयप्रशंसापरत्वात् । निन्दया व्यस्तोपासननिषेधोन्नयनेपि, 'न चतुस्त्रिंशदिति ब्रूयात्' इत्यत्र निषेधेनेव विध्युन्नयनमवर्जनीयम् । निषेधस्य रागप्राप्तविषयत्वाभावात् । तस्मात् समस्तोपासनवत् व्यस्तोपासनान्यपि नामाद्युपासनवत् विधेयानीति भावः । **अनर्थाश्रवणमेकं वैषम्यमित्यर्थ** इति ।

नन्वनर्थवचनं 'नहिनिन्दा' न्यायेन समस्तोपासनस्तुत्यर्थतयोपपन्नम्, न निषेधानुमापकम् । तथात्वेपि लोकतोऽप्राप्तानां व्यस्तोपानानां निषेधः तेषु विधेः साधक एव, न बाधक इत्युक्तमिति चेन्मैवम् । अग्निहोत्रं प्रकृत्य श्रुतेन, 'जर्तिलयवाग्वा वा जुहुयात् गवीधुकयवाग्वा वा जुहुयात्, न ग्राम्यान् पशून् हिनस्ति नारण्यान्' इति वाक्येन जर्तिलगवीधुकशब्दवाच्यारण्यतिलारण्यगोधूमकृतयवाग्वोर्विकल्पेनाग्निहोत्राहुतौ द्रव्यत्वविधाने लिङ्विभक्तिबलेन, ग्राम्यारण्यपशुहिंसारहिततया तयोः स्तवने च प्रतीयमानेपि, 'अथो खल्वाहुरनाहुतिर्वै जर्तिलाश्च गवीधुकाश्च पयसाऽग्निहोत्रं जुहुया' दिति तदनन्तरं जर्तिलादिप्रतिक्षेपेण पयोविधिदर्शनात् । तदेकवाक्यतया "जर्तियवाग्वा वा जुहुयात्" इत्यादेः, ग्राम्यारण्यपशुहिंसाराहित्येन प्रशस्ततया होमार्हा अपि जर्तिला गवीधुकाश्च यदपेक्षया दुष्टाः, तत्पयोऽत्यन्तप्रशस्तमिति पयस्स्तुत्यर्थत्वम् एकवाक्यतानुरोधादिति, "न चेदन्यं प्रकल्पयेत् प्रक्लृप्तावर्थवादः स्यादानर्थक्यात्परसामर्थ्याच्च" इति पूर्वतन्त्राधिकरणे (१०-८-४) यत्किञ्चिद्विधिपूर्वकनिन्दायास्सह विधिना विध्यन्तर (रे ?) श्रवणे सति तदर्थवादत्वं तदेकवाक्यतानुरोधात् समर्थितम् । एवमिहाप्यङ्गीकर्तुं युक्तम् । ननु जर्तिलगवीधुकयोः पयसा सह संबन्धाभावात् जर्तिलगवीधुकयवागूविधानयोः पयोविध्येकवाक्यता अर्थवादतयैव समर्थनीयतेति तत्र तथास्तु नाम । इह तु भूमविद्यायां नामादीनां सत्येन ब्रह्मणा सह भूय

स्त्वावधितयेव द्युादीनां समस्तोपासनाविषयेण वैश्वानरात्मना सहावयवत्वेन संबन्धोऽस्तीति प्रासङ्गिकतदुपासनाविधानैरेकवाक्यत्वभङ्गोऽस्ति । अतो भूमविद्यान्याय एवात्र प्रवर्तितः; न तु जर्तिलगवीधुकयवागून्याय इति चेत् — मैवम्; व्यस्तोपासननिन्दनेन, 'मूर्धा त्वेष आत्मन इति होवाच' इत्यादिवाक्येषु तुशब्दकृतेन द्युादीनां स्वतन्त्रोपास्यत्वव्यवच्छेदेन, 'तान् होवाच एते वै खलु यूयं पृथगिवेममात्मानं वैश्वानरं विद्वांसोऽन्नमत्थ' इति व्यस्तोपासनानां भ्रममूलकत्वोद्घाटनेन भूमविद्यावैषम्यस्य बहुविधस्य सत्त्वेन जर्तिलयवागून्यायस्यैव प्रवृत्त्यौचित्यादिति । **प्रामाणिकत्वाभिप्रायेणाप्युपपन्न** इति । **ज्यायस्त्वं** प्राचीनत्वम् । 'वृद्धस्य च' इति सूत्रेण वृद्धशब्दस्यापि ज्यादेशविधानात् । तत्तु प्रमाणिकत्वपर्यवसायि । प्रामाणिकत्वं प्रायोऽनादिसिद्धं भवति; भ्रान्तिकल्पितं तु पूर्वपक्षिणोत्प्रेक्षितमित्यद्यतनं भवतीति भावः । ( **भाष्योक्त दृष्टान्त एवौचित** इति ) ..................... ।

इति भूमज्यायस्त्वाधिकरणम् ।

---

## ( २४ ) शब्दादिभेदाधिकरणम्

**नाना शब्दादिभेदात् ३-३-५६.**

भाष्ये **अन्याः प्राणाद्येकविषयफला** इति । प्राणाद्येकविषया एकफला विद्या अप्युदाहरणमित्यर्थः । **पौनरुक्त्यशङ्कां परिहरतीति** । "सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्" इत्यत्राभ्यासप्रकरणान्तराभ्यां भेदहेतुभ्यां भेदं पूर्वपक्षीकृत्य चोदनाद्यविशेषेण सिद्धान्तः क्रियते । यद्यभ्यासप्रकरणान्तरयोः भेदहेतुत्वमसिद्धं स्यात्, तदा पूर्वपक्ष एवानुपपन्नः स्यात् । सिद्धान्तश्च ततस्तराम् । ततस्तयोर्भेदहेतुत्वं तत्रैव समर्थितमिति पौनरुक्त्यशङ्का भवतीति भावः । एवं वदत आचार्यस्य तु **अन्तेवासां परस्परभेदे समर्थिते सतीति** भाष्यस्य, अभ्यासप्रकरणान्तरयोर्भेदहेतुत्वे समर्थिते सतीत्यर्थ इति हृदयम् । **साङ्गं प्रधानकर्मे**ति । प्रयोगापरपर्याया धात्वर्थकरणिका भावनेत्यर्थः । साङ्गप्रधानानुष्ठानमिति यावत् । शब्दान्तरादिभिः यागदानादिलक्षणधात्वर्थात्मकानुबन्धभेदसिद्धिः । धात्वर्थभेदानुनिष्पादी

च भावनाभेद इपि मीमांसकप्रक्रिया । **तदेकदेशा धात्वर्था**(?) इति । धात्वर्थस्य यागादेः साङ्गप्रधानानुष्ठानविषयत्वेन एकदेशत्वोक्तिरिति द्रष्टव्यम् । (?) **विधेयभेदहेतव इत्यर्थ** इति । शब्दान्तराद्यवगमितधात्वर्थभेदानुनिष्पादी भावनाभेद इत्यर्थः । **रूपभेदो मा भूदिति** । रूप्यत इति रूपं भावना । भावनाभेदो मा भूदित्यर्थः । **वेदनोपासनादिशब्दाश्चेति** । विद्युपास्योर्व्यतिकरेण उपक्रमोपसंहारदर्शनादिति भावः । **रूपभेदात् को विशेष** इति । यद्यपि न्यासविद्यायां शब्दान्तरं भेदकम्; उपासनेषु रूपभेदो नियामक इति सिद्धावपि न दोषः—तथाऽप्युपासनेऽपि शब्दान्तरेऽपि भेदकत्वं वक्तव्यमित्यभिप्रेत्य तथोक्तमिति द्रष्टव्यम् । **देवतोद्देशेति** । देवतोद्देशेन द्रव्यत्यागो यागः, देशविशेषप्रक्षेपविशिष्टस्त्यागो होमः, परस्वत्वापादनपर्यन्तस्त्यागो दानमिति पूर्वतन्त्रे चतुर्थे जैमिनिना प्रतिपादितत्वादिति भावः । **देशविशेषविशिष्टप्रहाणगोचरतयेति** । देशविशेषविशिष्टप्रक्षेपविशिष्टप्रहाणगोचरतयेत्यर्थः । तर्हि यजत्यादितुल्यत्वे मुख्यशब्दान्तरत्वमेव स्यादित्यत आह—**तत्रैकैकविद्याश्रवणवेलायामिति** । यजत्यादिशब्दानां व्युत्पत्तिदशायामेव भिन्नार्थत्वावगमः; उपासनादिशब्दानां तु न व्युत्पत्तिदशायां भिन्नार्थत्वावगमः, अपि तु पश्चादिति भावः । **ब्रह्मेति प्रकरणभेद उक्त** इति । **ब्रह्मप्राप्तिरूपफलसंबन्धीति** वाक्येनेत्यर्थः । **कुदृष्टिनिरसनं चेति** । शब्दान्तरादीनि हि उत्पत्तिपरतां विधेर्बोधयन्ति सन्त्युत्पन्नस्य पुनरुत्पत्त्ययोगात् कर्म भिन्दन्ति । अतः शब्दान्तरादिभिः भेदसाधने सिद्धं विधेयत्वमिति भावः । **बह्वधिकरणेष्विति** । पूर्वतन्त्र इति शेषः ।

**वेदनस्य द्रव्यनिष्ठत्वादिति** । द्रव्यशेषत्वादित्यर्थः । **प्रोक्षणावघातादीनामेवेति** । उत्पत्त्याप्तिविकृतिसंस्कृतिकरणोपकारकरणावान्तरव्यापाराधिकारापूर्वरूपसप्तविधसाध्यभेदात् अनुबन्धभेदाच्च शास्त्रभेद इति गुरुमर्यादा । प्रकृते च कस्याप्यभावात् श्रवणमनननिदिध्यासनानामन्योन्यं निदिध्यासनेष्वपि न परस्परं भेद इति पूर्वपक्षाभिप्रायः । **अत एवेति** । पूर्वपक्षावकाशाभावादित्यर्थः ।

इति शब्दादिभेदाधिकरणम् ।

---

## ( २५ ) विकल्पाधिकरणम्

विकल्पोऽविशिष्टफलत्वात् ३-३-५७.

**न्यासविद्याऽभिप्रेतेति** । न्यासविद्याऽप्यभिप्रेतेत्यर्थः ।

काम्यास्तु यथाकामं समुच्चीयेरन् न वा पूर्वहेत्वभावात् ३-३-५८,

**समुच्चयनिरासायोगाच्चेति** । ब्रह्मानुभवविशेषहेतुसाक्षात्कारार्थतया समुच्चयशङ्कातादवस्थ्यादिति भावः ।

**ये चेमेऽरण्य इत्यत्रेति** । 'तद्य इत्थं विदुर्ये चेमेऽरण्य' इति सर्वब्रह्मविद्यानां ब्रह्मप्राप्तिफलकत्वश्रवणेन षण्णामाग्नेयादीनां समुच्चित्य स्वर्गसाधनत्ववत् इहापि वक्तव्यमिति भावः । **सैवाविशिष्टफलत्वेन निराकार्येति** । फलातिशयसंभावनैव अविशिष्टफलत्वादिति सूत्रखण्डेन निरसनीयेत्यर्थः ।

इति विकल्पाधिकरणम् ।

## ( २६ ) यथाश्रयभावाधिकरणम्

अङ्गेषु यथाश्रयभावः ३-३ ५९.

**पर्णतादिवदिति** । जुह्वादिमुखेनेति शेषः । **अधिकरणान्तरं मध्ये प्राप्तमिति** । ननु तन्निर्धारणानियम इत्यत्रैवेमाः शङ्काः परिहरणीयाः, एकविषयत्वान्मुखभेदाभावादित्याक्षिपन्तं प्रति नेदमुत्तरमिति चेत्— उच्यते । तस्मिन्नधिकरणे एतदधिकरणसिद्धं पुरुषार्थत्वमुपजीव्यानियमदर्शनादनियमः प्रतिपादितः । इह तु पुरुषार्थत्वं समर्थ्यत इति मुखभेदान्नैकाधिकरणप्रतिपाद्यत्वनिर्बन्ध इति भावः । अत एवास्मिन्नेवाधिकरणे भाष्यटीकयोः पुरुषार्थत्वप्रतिपादकयुक्त्युपन्यासो भूयान् दृश्यत- इत्यवगन्तव्यम् । **अतो न तत्र कृतमिति** । तदनन्तरमेव न कृतमित्यर्थः । **स्ववाक्ये श्रूयमाणमिति** । कामिपदोपबन्धादिति शेषः । **वाक्यान्तरस्थत्वेनेति** । कामिपदाद्युपबन्धयुक्तवाक्यविलक्षणवाक्यस्थत्वेनेत्यर्थः । एवं सर्वत्र **वाक्यान्तरस्थ**

शब्दस्यार्थो द्रष्टव्यः । इतरथा 'यदेव विद्यया करोति', 'यस्य पर्णमयी जुहूर्भवती' त्यादावाख्यातभेदे सत्यपि यच्छब्दादिभिरेकवाक्यतावगमेन वाक्यभेदाभावादिति द्रष्टव्यम् । **अनुकूलहेतुमाहेति** । यद्यपि क्रत्वङ्गभूतोद्गीथसंबन्धितया उपासनविधानरूपा युक्तिः शिष्टेश्चेति सूत्रप्रतिपाद्या । प्रथमसूत्रे च कमिपदोपबन्धरूपस्य क्रत्वर्थत्वप्रतिबन्धकस्याभाव एव हि प्रतिपाद्यः — अथापि बुद्धिसौकर्याय वक्ष्यमाणार्थ इहोपन्यस्त इति द्रष्टव्यम् । **द्वितीयाश्रुतिरिति** । द्वितीयया शेषित्वे बोधिते शेषत्वमपि सिद्धयतीति भावः । **अपदेश**शब्दस्य व्याजाद्यर्थकत्वभ्रान्तिं व्युदस्यति — **वर्तमानव्यपदेश इति** । **अनुष्ठापकत्वदशापन्नविधिरिति** । उत्पत्तिविनियोगप्रयोगाधिकारभेदेन विधिश्चतुर्विधः । उत्पत्तिः प्राथमिकावगतिः । विनियोगः शेषशेषिभावसंबन्धः । अधिकारः फलसंबन्धः । प्रयोगो हि साङ्गप्रधानानुष्ठानम् । तदुपयुक्तविधिः प्रयोगविधिरित्यर्थः । नानाशाखावाक्ये चोदकस्मृत्याचारप्रापितसर्वाङ्गोपसङ्ग्रहेण अनुक्रमणिकारूपेण श्रुतानुमितैकदेशनिष्पन्नो बुद्धिमद्भिः कल्पितो विधिः प्रयोगविधिरुच्यते —

"उत्पत्तिविधिनामैको यो द्वितीये विचिन्तितः ।
विनियोगविधिस्त्वन्यो यस्तृतीये विचिन्तितः ।
चतुर्थे पञ्चमे चैव प्रयोगविधिचिन्तनम् ।
अधिकारविधिः प्रोक्तो यः षष्ठाध्यायगोचरः" इति ॥

**शिष्टेश्च ३-३-६०.**

**अथ लिङ्गानि प्रदर्श्यन्त** इति । ननु शिष्टेश्चेति सूत्रस्य साक्षात् शेषशेषिभावप्रदर्शकश्रुतिप्रदर्शनपरतया कथं लिङ्गोपन्यासरूपत्वमिति चेन्न — कमिपदोपबन्धाभावे सति क्रत्वर्थाश्रिततया विधीयमानत्वस्य क्रत्वर्थत्वसाधकलिङ्गतया अस्यापि सूत्रस्य क्रत्वर्थत्वव्याप्तलिङ्गोपन्यासपरत्वे विरोधाभावात् ।

**समाहारात् ३-३-६१.**

भाष्ये **वेदनहीनमुद्गीथमिति** । ननु, 'अथ खलु य उद्गीथः स प्रणवो यः प्रणवस्स उद्गीथः' इति प्रणवोद्गीथयोरेकत्वविज्ञानं विधाय तत्र श्रूयते,

'होतृषदनाद्धैवापि दुरुद्गीथ' मिति । तस्य ह्ययमर्थः । होत्रा प्रयुज्यमानस्य प्रणवस्य उद्गात्रा प्रयुज्यमानस्य उद्गीथस्य च, एकत्वविज्ञाने उद्गात्रा अनुष्ठिते सति, तद्विज्ञान-माहात्म्यात् उद्गात्रा स्वकर्मणि उद्गाने यत्क्षतं स्वरप्रमादादिरूपं तद्धोतृकृतात् सम्यक् शंसनात् हेतोः समादधातीति । दुष्टस्य समीचीनेनैक्ये हि दुष्टस्य सामीचीन्यं भवतीति युज्यत इति । न तु (ननु?) दुरुद्गीथमित्यस्य वेदनहीनमित्यर्थः । वेदनस्यैव फलश्रवणादिति चेत् — सत्यम्; प्रणवोद्गीथैक्यविज्ञानफलमेवेदम्; तथापीदं विज्ञानं उद्गीथविषयकत्वात् उद्गातृकर्तृकमपि संभवति; होत्रा प्रयुज्यमानप्रणवविषयत्वात् होतृकर्तृकमपि भवति । ततश्चोद्गातृकर्तृकवेदनहीनतया दुरुद्गीथं होत्रा स्वकृतात् शंसनात् प्रतिसमादधातीत्यर्थः । ततश्चोद्गीथोपासनस्याऽऽवश्यकत्वं सिद्ध्यतीति भावः।

गुणसाधारण्यश्रुतेश्च ३-३-६२.

भाष्ये **गुण**शब्दस्य सूत्रगतस्याश्रयत्वमर्थ इति कथमुच्यते इत्याशङ्क्याह — **उपासनार्थत्वविवक्षयेति** । प्रधानस्याप्योङ्कारस्य उपासननिर्वर्तकत्वेन गुणत्व-संभवात् तद्विवक्षया आश्रये गुणशब्द उपचरितः सूत्र इति भावः ।

न वा तत्सहभावाश्रुतेः ३-३-६३.

भाष्ये **अङ्गभावे हि सहभावनियमो भवतीति** । अङ्गभाव एव सहभावनियम इत्यर्थः । सहभावनियम एवाङ्गत्वमित्युत्तरटीकाग्रन्थानुसारात् । ततश्च **सहभाव**शब्देन तन्नियमरूपाङ्गभावस्य लक्षणासंभवात् **सहभावाश्रुते**रित्यस्याङ्ग-भावाश्रुतेरिति व्याख्या युज्यत इति भावः । यथाश्रुतेऽनुपपत्तिमाह — **सहभावमात्र-स्येति** । **पूर्वपक्षिणाप्यङ्गीकृतत्वादिति** । पूर्वपक्षिसिद्धान्तिभ्यामङ्गीकृतत्वेन सहभावाश्रुतेरिति यथाश्रुतार्थासंभवादिति भावः । नन्वङ्गभावाश्रवणमप्रयोजकम् । पर्णतान्यायेन वाक्यविधया बाधनसंभवादित्यत आह — **अङ्गत्वविरोधीत्यादि** । **अन्यतरविलम्बाभावसाधर्म्यादिति** । ननु गोदोहनवाक्येऽपि गोदोहनेनेति तृतीया श्रूयते । तत्र कथं फलसाधनत्वाश्रवणम्, इह कथं विद्ययेति तृतीयया साधन-त्वश्रवणमिति चेत्—न; गोदोहनस्य सिद्धरूपस्य क्रियामनिवर्तयतः फलं प्रति कारणत्वा-संभवात् अप्प्रणयनक्रियाकारकस्यैव गोदोहनस्य फलं प्रति करणत्वमिति प्रणयन-क्रियाकरणत्वं तृतीययोच्यते । प्रकृते तु उपासनस्य क्रियारूपत्वेन स्वत एव फल-

भावनाकरणान्वयार्हत्वात् विद्ययेति तृतीयाश्रुतिः वीर्यवत्तरत्वरूपफलं प्रत्येव करणत्वं ब्रवीतीति वैषम्यात । न च अत्रापि विद्यया करोतीति करोत्यर्थं प्रत्येव करणत्वं विद्यायास्तृतीया प्रतिपादयति; न तु वीर्यवत्तरत्वं प्रतीति वाच्यम् – ज्योतिष्टोमेन यत् करोति, स स्वर्ग इत्युक्ते स्वर्गं प्रत्येव तृतीया हेतुत्वं प्रतिपादयति । विद्यया यत् क्रियते, तद्वीर्यवत्तरत्वरूपमिति तस्यार्थ इत्यभिप्रायः । नन्वसार्वत्रिकीति पुरुषार्थाधिकरणगुणसूत्रे यदेवेति वाक्यस्य कर्मशेषत्वबोधकत्वं पूर्वपक्ष्युक्तमभ्युपेत्य प्रकृतोद्गीथविद्यापरत्वं समर्थितम् । इह तु तस्यैव वाक्यस्य पुरुषार्थपरत्वमुच्यत इति चेन्न – तस्याभ्युपगम्यवादत्वेनादोषात । **पर्णताया अक्रियारूपत्वादिति ।** पर्णताया जुहूसंबन्धेऽपि अव्यापाररूपत्वात् फलनिष्पादकत्वं न संभवतीति तत्सिद्धये क्रतूपरागेण व्यापाररूपतां संपादयितुं जुहूलिङ्गेन क्रतुमुपस्थाप्य तत्संबन्धबोधकशब्दः कल्प्यते; जुहूशब्दस्यैव वा जुहूसंबन्धिक्रतुलक्षकत्वमङ्गीक्रियते । इहोपासनायाः स्वयं व्यापाररूपायाः स्वत एव फलपर्यवमाने संभवति किमुद्गीथाद्युपस्थापितक्रतु-संबन्धबोधकशब्दकल्पनादिना तस्यापि क्रत्वर्थत्वमङ्गीक्रियते । न च–आधानस्याग्निभिः फलवत्त्वमस्ति; न तूपासनानां केन चित् फलवत्त्वमस्ति । अतस्तेषां क्रतुफलेन फलवत्त्वसिद्ध्यर्थं क्रतुसंबन्धबोधकवाक्यकल्पनापेक्षाऽस्तीति वाच्यम् – उपासनवाक्य-शेषस्यैव फलसमर्पकतया विपरिणामसंभवे फलवत्कर्मान्तरान्वयबोधकवाक्यकल्पनाद्यन-पेक्षणात् । तस्माद्वाक्यशेषश्रुताय तस्मै फलाय उद्गीथाद्याश्रयत्वविशिष्टोपासनविधि-रित्येव युक्तम् । एवमुद्गीथादिश्रवणस्य उपासनार्थतायामेव दृष्टार्थत्वं लभ्यते । निरालम्बनध्यानासंभवेन उद्गीथादेरालम्बनस्य उपासनेनापेक्षितत्वात् । उपासनश्रवणस्य उद्गीथाद्यर्थत्वे तु अदृष्टार्थता स्यात् । उपासनेनोद्गीथादिषु उत्पत्तिविकृतिप्राप्तीनाम-संभवेनादृष्टसंस्कारस्यैव वक्तव्यत्वेन (त्वात ?) दृष्टादृष्टप्रयोजनपर्यवसाय्यन्वयद्वयसंभवे दृष्टप्रयोजनपर्यवसाय्यन्वय एव ग्राह्यः । अत एव 'खलेवाली यूपो भवती'त्यस्य यः खादिरादिः प्रकृतितः प्राप्तो यूपः, तदनुवादेन खलेवाल्याकृतिविधाने अदृष्टार्थता-प्रसङ्गात् विधेर्दृष्टार्थत्वलिप्सया खलेवाल्या यूपकार्ये विधिराश्रितः । तस्माद्गोदोहन-विधिवत् आश्रित्यविधिरूपा अङ्गावबद्धोपासनेत्येव युक्तम्; न तु पर्णताविधिवत् क्रत्वङ्गविधिरूपेति भावः ।

दर्शनाच्च ३-३-६४.

"उद्गातृप्रभृतिवेदनानियमसिद्धिरिति । ऋत्विक्षु मन्त्रवैकल्ये यजमाने दक्षिणादानादिवैकल्ये—

"अन्नहीनो दहेद्राष्ट्रं मन्त्रहीनस्तु ऋत्विजः ।
आत्मानं दक्षिणाहीनो नास्ति यज्ञसमो रिपुः ॥"

इत्युक्तन्यायेन तेषां प्राप्तं दोषं प्रायश्चित्तप्रकाराभिज्ञो ब्रह्मा परिहरतीत्युक्त्या कथं वेदनस्यानियतत्वसिद्धिः । प्रत्युत, समाहारादिति सूत्रोक्तन्यायेन तत्कृतवैगुण्यस्य ब्रह्मवेदनेन समाधानदर्शनात् आवश्यकत्वमायातीति चेन्न – ऋत्विग्यजमानयज्ञरक्षा क्रतुफलाप्रतिबन्धरूपैव । एवंरूपरक्षाया एव ऋत्विग्भिर्यजमानैश्चाशासनीयत्वात् । तस्याश्चाद्रोथमन्तरेण सिद्धेर्दर्शितत्वादनियतत्वं सिद्धमिति । किञ्च सर्वप्रत्ययोपसंहारे सर्वे सर्वविद इति न विज्ञानवता ब्रह्मणा परिपाल्यत्वमितरेषां संकीर्त्यतेति भावः ॥

इति यथाश्रयभावाधिकरणम् ॥

इति दशोपनिषद्भाष्यकारैः श्रीमद्रङ्गरामानुजमुनिभिर्विरचितायां
श्रुतप्रकाशिकाव्याख्यायां भावप्रकाशिकायां
तृतीयस्याध्यायस्य तृतीयः पादः
श्रीमते रङ्गरामानुजमहादेशिकाय नमः ॥
श्रीरस्तु ॥



॥ श्रीः ॥

श्रीमते भगवद्रामानुजाय नमः । श्रीमते रङ्गरामानुजमहादेशिकाय नमः ।

श्रुतप्रकाशिकाव्याख्यायां भावप्रकाशिकायां

# (१) पुरुषार्थाधिकरणम् ।

## तृतीयाध्याये चतुर्थपादे

पुरुषार्थोऽतश्शब्दादिति बादरायणः ३-४-१.

**किमाचारशब्दादिलिङ्गानुगृहीतमिति** । **लिङ्गशब्दः** प्रमाणमात्रपरः । आचारदर्शनादिरूपशेषत्वग्राहकप्रमाणानुगृहीतमित्यर्थः । एवमुत्तरत्रापि लिङ्गशब्दः प्रमाणमात्रपरो द्रष्टव्यः । इतरथा तच्छ्रुतेरिति सूत्रोक्ततृतीयाश्रुतेरसंगृहीतत्व-प्रसङ्गात् । केचित्तु — यदेव विद्यया करोतीत्यादिरपि वर्तमाननिर्देशतया अन्यार्थ-दर्शनरूपलिङ्गमेव । न चैवं सति तच्छ्रुतेरित्यस्य, 'लिङ्गमिदम्; प्राप्तिरुच्यताम्' इत्यवतारिकाभाष्यतट्टीकाग्रन्थविरोध इति वाच्यम् — अस्याभ्युपेत्यवादत्वादिति वर्णयन्ति । **अनैकान्तिकत्वाभाव** इति । आचारदर्शनादीनां विद्यायाः कर्मशेष-त्वानन्यथासिद्धत्वसाधकत्व इत्यर्थः ।

नन्वाचारदर्शनादीनामनैकान्तिकत्वाभावे विद्या क्रत्वर्थेत्येतावतैव फल-फलिभावस्य परिपूर्णतया तदनुगृहीतसामानाधिकरण्येनेत्यादिरुत्तरग्रन्थसन्दर्भो व्यर्थः । शेषत्वसिद्ध्युपजीविनः उपास्यजीवभावावगमस्य कथं शेषत्वसाधकत्वम्, अन्यो-न्याश्रयप्रसङ्गात् । तथा हि — आचारदर्शनादित्यादिपूर्वपक्षसूत्रपञ्चकोक्त-न्यायेन विद्यायाः कर्मशेषत्वे सिद्धे पार्वणहोमयोः कालार्थेज्यात्वे आरादुप-कारकत्वप्रसङ्गात् सामवायिकत्वलिप्सया कर्मसमुदायेज्यात्वाङ्गीकारवत्, सामवायि-काङ्गत्वे सम्भवति आरादुपकारकाङ्गत्वस्यान्याय्यत्वादिति न्यायेन कर्तृसंस्कारमुखेन

शेषत्वस्योचितत्वात्, 'आत्मा द्रष्टव्यः', 'आत्मानमुपासीत' इति द्वितीयातव्यप्रत्ययादिना आत्मसंस्कारत्वावगमात् आत्मनः कर्मसु कर्तृतया उपयोगसम्भवे सक्तुन्यायेन विनियोग[भङ्ग?]स्यायुक्तत्वात् कर्तृसंस्कारमुखेनोपासनस्य क्रतुशेषत्वं न्याय्यम्। अतः कर्मकर्तुर्वेदान्तविहितोपासनकर्मभूतब्रह्माभिन्नत्वम् । अतश्च तत्त्वमसि इति सामानाधिकरण्यनिर्देशोऽप्यनुगृहीतो भवतीत्येवं शेषत्वसिद्ध्युपजीवित्वात् जीवब्रह्माभेदस्य कथं तस्य शेषित्वोपपादककोटौ निवेशनमिति चेन् —

अत्राहुः — न ह्याचारदर्शनादीनां लिङ्गत्वसद्भावमात्रे विद्यायाः क्रत्वर्थत्वसिद्धिः । लिङ्गानामनुग्राह्यप्रमाणसापेक्षत्वात् अनुग्राह्यस्य च 'आत्मानमुपासीत' इत्यादिवाक्यादन्यस्याभावात् तत्र चात्मानमित्यस्य कर्तृजीवातिरिक्तविषयत्वे वाक्यविधया क्रत्वर्थत्वबोधकत्वासम्भवेन तस्य वाक्यस्य लिङ्गानुग्राह्यवाक्यविधया क्रत्वर्थत्वबोधकत्वसिद्धेः जीवस्य ब्रह्माभेदमन्तरेणासम्भवात् उत्तरग्रन्थस्य साफल्यादिति । **केचित्तु** — सत्यं शेषत्वोपपाद्य एव जीवब्रह्माभेदः । तथापि न तत्साधितेन जीवब्रह्माभेदेन पुनस्तदेव साध्यते । येनान्योन्याश्रयः स्यात् । किन्तु शेषत्वसाधितेन जीवब्रह्माभेदेन कर्मकर्तृसंस्कारमुखेन शेषत्वं साध्यते । तावत्पर्यन्तो हि पूर्वपक्षः । न शेषत्वमात्रपर्यवसितः । 'शेषत्वात्पुरुषार्थवाद' इति सूत्रेऽपि कर्तृसंस्कारद्वारा शेषत्वं विवक्षितमिति भाष्याभिप्रायात् । अस्याधिकरणस्य जीवब्रह्माभेदप्रतिपादनपर्यन्ततया तथैव सूत्राभिप्रायस्य वक्तव्यत्वादिति **वदन्ति** ।

**प्रतिबन्धनिवृत्तिद्वारक**मिति । 'अमृत इह भवति' इति निर्दोषत्वश्रवणादित्यर्थः । **उभयमप्यभिहित**मिति । प्रतिबन्धनिवृत्तिरिष्टप्राप्तिश्चेत्यर्थः ।

शेषत्वात् पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः ३-४-२.

**अधीत्य स्नास्यन्निति ज्ञानमपि कर्मशेषत्वेनावगत**मिति । इदम्, आचारदर्शनादिति सूत्रपञ्चकोक्तस्योपलक्षणम् । अत्र **अपिः** भिन्नक्रमः । कर्मशेषत्वेनाप्यवगतमित्यर्थः । **तत्स्वरूपप्रतिपादनपर**मिति । तत्स्वरूपोपासनप्रतिपादनपरमित्यर्थः । **पृथक्फलसाधनत्वान्न कर्माङ्गत्व**मिति । यद्यपि क्रत्वर्थस्य श्रुतिलिङ्गादिभिरवगतत्वादेव नास्याः शङ्काया अवतारः — तथापि विद्यायाः क्रत्वर्थत्वे,

'आत्मानमुपासीत' इत्यादिवाक्यमपि प्रमाणयितुमियं शङ्काऽवतारितेति द्रष्टव्यम्। यद्वा तेषां लिङ्गमात्रत्वेन प्रापकप्रमाणत्वासंभवादित्यत्र तात्पर्यमिति द्रष्टव्यम्। [एतेन?] भाष्ये **ननु च कर्तृसंस्कारमुखेने**त्यादिशङ्कापरिहारौ नोपपद्येते। यदि हि 'यस्य पर्णमयी जुहूर्भवती' त्यादिवत् 'आत्मानमुपासीत' इत्यादिवाक्येन क्रत्वर्थत्वं बोध्येत, तदा आत्मनो जुह्वादिवत् क्रत्वव्यभिचरिततया क्रतूपस्थापनसमर्थत्वात् क्रत्वपूर्वीयजुहूपलक्षकत्ववत् आत्मशब्दस्य क्रत्वपूर्वलक्षकत्वात् क्रत्वर्थत्वमित्येवं क्रत्वर्थत्वे वाक्यं प्रमाणीकृतं स्यात्। तदा चेमौ शङ्कापरिहारौ युज्येते। न हि तथा प्राक् वाक्यं प्रमाणतयोपपादितम्; अपि त्वाचारदर्शनादिलिङ्गेन 'यदेव विद्यया' इति श्रुत्या च क्रतुशेषत्वमवगम्यते; 'आत्मा द्रष्टव्य' इत्यात्मशेषता चावगम्यते। ततश्चोभयसामञ्जस्याय प्रोक्षणस्य प्रकरणावगतक्रत्वङ्गभावस्य द्वितीयाश्रुत्यवगतव्रीहिशेषभावनिर्वाहाय व्रीहिसंस्कारद्वारा क्रत्वर्थत्ववत् उपासनस्यापि कर्मसंस्कारद्वारा कर्मार्थत्वं निर्वोढव्यमित्यस्योपक्षिप्तत्वेन, 'आत्मानमुपासीत' इत्यस्य वाक्यविधया कर्मार्थत्वपर्यन्तप्रतिपादकत्वस्यानुपक्षिप्तत्वादिति केषाञ्चिन्मन्दाशङ्का पराकृता। अत्र वाक्यस्यापि, "अतः कर्तुः संस्कारद्वारा विद्यायाः क्रतुशेषत्वम् (त्?)" इति भाष्ये प्रमाणीकरणात्। भाष्ये **'द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्यात्'** इति। 'यस्य पर्णमयी जुहूर्भवति, न स पापं श्लोकं शृणोति', 'यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते', 'यत्प्रयाजानूयाजा इज्यन्ते, वर्म वा एतद्यज्ञस्य क्रियते वर्म यजमानाय भ्रातृव्याभिभूत्यै' इत्यादिविधिविधेयेषु वाक्यप्रकरणावगतक्रत्वङ्गभावेषु पर्णतादिद्रव्येषु, अञ्जनादिसंस्कारेषु, प्रयाजादिकर्मसु च फलश्रवणमर्थवाद इति पूर्वतन्त्रे निर्णीतम्। **न ह्यन्यशेषमन्यशेषं भवतीति**। लौकिकवैदिककर्मसाधारणस्यात्मनो वैदिककर्माव्यभिचरितत्वं न सम्भवतीत्यर्थः। **तदसाधारणमेव हि तदङ्गमिति**। तत्प्रत्यभिज्ञापकमित्यर्थः।

## आचारदर्शनात् ३-४-३.

**गुणमुख्ययोर्विरोध** इति। अङ्गप्रधानयोर्दीक्षणीयासोमयोः, 'य इष्ट्या पशुना सोमेन वा यजेत, सोऽमावास्यायां पौर्णमास्यां वा यजेत' इत्येकस्मिन् पर्वकाले प्रसक्तौ प्रधानस्यैव पर्वकालकर्तव्यत्वम्, न दीक्षणीयाया इति पूर्वतन्त्रे

निर्णीतत्वात् सोमयागेषु सुत्याप्रयोगस्याहोरात्रव्यापित्वात् विद्यायाश्चान्वहं शीलनीयतया विरोधसद्भावात् विद्यायाः प्रधानत्वे तत्त्यागेन कर्मणामनुष्ठानं नोपपद्यत इत्यर्थः । ननु विद्ययेति तृतीयाश्रुतेर्न शेषत्वप्रमाणत्वम् । तृतीयया साधनत्वमात्रप्रतिपादनेऽपि समीहितसाधनत्वरूपशेषत्वाप्रतिपादनादित्याशङ्क्य—श्रुतिमात्रस्य तत्राप्रमाणत्वेऽपि श्रुतिलिङ्गादिसहितचोदनायाः प्रमाणत्वं सम्भवति,

'क्रतुस्समीहितं येन सिध्यत्यङ्गं तदुच्यते ।
प्रमाणं च विधिस्तत्त श्रुतिलिङ्गादिसंयुतः ॥'

इत्यभियुक्तोक्तेरित्यभिप्रयन्नाह — **आगमप्रमाणस्य श्रुतिलिङ्गादयोऽनुग्राहका** इति । श्रुतिलिङ्गाद्यनुगृहीतस्य विधेः प्रमाणत्वमित्यर्थः ।

तच्छ्रुतेः ३-४-४.

भाष्ये **नेयं श्रुतिरिति** । विद्यापदश्रुतिरित्यर्थः । न तु प्रकृता तृतीयाश्रुतिरिति भ्रमितव्यम् । भाष्ये **विद्यामात्रविषया हीयं श्रुतिरिति** । य एव वह्निमान् देशः स एव धूमवानितिवत्, यदेवेति सर्वनामावधारणाभ्यां हि व्याप्तिरवगम्यते । यदेव कर्म करोति—यद्यत् कर्म करोतीत्यर्थः । ततश्च कर्ममात्रे विद्या साधनत्वेन विधीयते । ततश्च विद्यायाः सर्वकर्माङ्गत्वं विद्याशब्दस्योद्गीथविद्यामात्रविषयत्वे नावकल्पत इति विद्याशब्दस्य सर्वविद्याविषयकत्वमेव वक्तव्यमित्यतोऽपि सर्वविषयत्वं विद्याशब्दस्येति द्रष्टव्यम् ।

तद्वतो विधानात् ३-४-६.

'आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान् विदधत्' इति छान्दोग्ये श्रूयते । आचार्यकुलवासी सन् वेदमधीत्य यथाविधानम्=स्मृत्युक्तनियमैर्युक्त इत्यर्थः—स्मृत्युक्तनियमेष्वपि गुरुशुश्रूषायाः प्राधान्यमुच्यते गुरोः कर्मातिशेषेणेति । कर्मानवरुद्धकालेन वेदमधीत्येत्यन्वयः — अभिसमावृत्य = गुरुकुलान्निवृत्येत्यर्थः – कुटुम्बे = गार्हस्थ्याश्रमे स्थित्वा, गार्हस्थ्येऽप्यविस्मरणार्थं वेदाभ्यासं कुर्वन्नेव धार्मिकान् विदधत् = पुत्रशिष्यादीन् धर्मनिरतान् कुर्वन्, धर्मोपयुक्तानर्थान् सम्पादयन्निति वा ।

एवमर्थज्ञानपर्यन्ताध्ययनवतः कर्मसु निरतेर्विधानात् अर्थज्ञानं कर्माङ्गमित्येवं परे वर्णयन्ति । **आचार्यास्तु** भुक्त्वा सानन्दमास्त इत्यादौ सानन्दमित्यस्यान्वेतुं योग्यत्वेऽपि न पूर्वनिर्दिष्टेन क्त्वाप्रत्ययान्तेनान्वयः, अपि तूत्तरेण आस्त इत्यनेनैवेत्येवं दर्शनात् , यथाविधानं गुरोः कर्मातिशेषेणेत्यस्य न पूर्वेण आधीत्येत्यनेनान्वयः; व्यवहितान्वयदोषप्रसङ्गश्च । अतो ब्रह्मचारी वेदमधीत्य, ' उपेत्याहृत्य गुरवेऽनुज्ञातो दारान् कुर्वीत', 'विद्यान्ते गुरुरर्थेन निमन्त्र्यः कृत्वानुज्ञातस्य वा स्नानम् ' इत्यादिस्मृत्यनुसारात् , 'आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः ' इत्यादिश्रुत्यनुसाराच्च गुरोर्यथाविधानम्=आचार्यस्य नियमनमनतिलङ्घ्य तस्य कर्तव्यं कर्म, अतिशेषेण = अ शेषेण अभिसमावृत्य = निर्वर्त्य इत्येवार्थो वक्तव्य इत्यभिप्रेत्य निश्शेषमितीति **व्याचक्रुः** । अतिशेषेणेत्यत्रातिरर्थाभावे वर्तते; अतिमर्यादोऽमर्याद इत्यर्थदर्शनात् । न च ' गुरोः कर्मातिशेषेण(कर्मशेषेण?)जपेत् ' इति स्मृत्यैकरूप्यात् तद्वदेव कर्मातिशेषशब्दस्यापि कर्माति (व?) शिष्टकालपरत्वं वक्तव्यमिति वाच्यम् – शेषातिशेषशब्दयोर्भिन्नार्थत्वेन तत्प्रत्यभिज्ञाभावात् तस्य नैष्ठिकब्रह्मचारिविषयत्वात् अस्मदुक्तार्थस्य स्मृत्यनुगुणार्थत्वात् आचार्योक्तार्थत्वमेव वक्तुं युक्तम् । **अविवक्षितार्थत्वादीति** । तात्पर्यासिद्ध्यादिदोषपरिहारार्थमित्यर्थः । अर्थावबोधमुद्दिश्य शब्दोच्चारणे हि लोके वाक्यानां तात्पर्यमवगम्य तन्निर्वाहाय मुख्यार्थासम्भवे लक्षणादिकं कल्प्यते ; न तूच्चारणमात्रेण । अत एव, गौरश्वः पुरुषो हस्तीति पदानामुच्चारणमात्रेण लक्षणा न कल्प्यते । यदा विशिष्टार्थबोधमुद्दिश्य तेषामुच्चारणमिति तात्पर्यमवगम्यते, तदैव तन्निर्वाहार्थं अयं गौर्बलीवर्दः, अश्वो वेगवान् , पुरुषो नियतचेष्टः, हस्ती महाबल इत्यश्वादिपदानां लक्षणाध्याहारादिकं कल्प्यते । एवं च वेदवाक्यानामर्थावबोधमुद्दिश्योच्चारणाभावे तात्पर्यासिद्ध्या तन्निर्वाहार्थलक्षणागौणवृत्त्यध्याहारव्यवधारणकल्पनोच्छेददोषप्रसङ्गादवश्यं वेदेऽप्यर्थावबोधमुद्दिश्योच्चारणस्य वक्तव्यत्वात् वेदे च लोक इव रागप्राप्तस्यार्थावबोधोद्देश्यकोच्चारणस्याभावात् विधिप्रयुक्तमेव तदाश्रयणीयम् । विधिश्चाध्ययनविधेरन्यो न दृश्यत इति तेनैवार्थावबोधमुद्दिश्य गुरुमुखोच्चारणानूच्चारणरूपमध्ययनं विधीयत इत्यकामेनापि स्वीकार्यम् । तत्समानार्थत्वात् आचार्यकुलाद्वेदमधीत्य इत्यत्रापि तथोक्तमिति भावः । **स्नात्वा जुहुयादिति** ।

क्त्वाप्रत्ययेन सति सम्भवे कर्तृकारकैक्यावगमात्तस्य च प्रयोगैक्य एव सत्त्वात् प्रयोगैक्यस्य चाङ्गाङ्गिभावमन्तरेणानुपपत्तेः, कालार्थसंयोगस्य सति गत्यन्तरे अयुक्तत्वाच्चेति भावः । नन्वङ्गाङ्गिभावे सत्यपि औपनिषदब्रह्मविद्याया एवाङ्गित्वं किं न स्यादित्यत आह – **न हि क्रतुज्ञानस्येति** । पूर्वभागार्थज्ञानतुल्यत्वादौपनिषदार्थज्ञानस्येत्यर्थः ।

अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ३-४-८.

ननूपात्तेषु वेदान्तवाक्येषु 'यः सर्वज्ञ' इत्यादीनां स्वरूपोपदेशपराणां सत्त्वेन **वेदनोपदेशवाक्ये**ष्विति भाष्ये कथमुच्यत इत्यत आह–**उपासनवाक्योपयोगित्वादि**त्यादिना ।

तुल्यं तु दर्शनम् ३-४-९.

**अङ्गित्वे ह्यननुष्ठानं नोपपद्यत** इति । नन्वङ्गत्वेऽप्यननुष्ठानं नोपपद्यत एव । यदि चानभिसंहितफलकर्मण एवाङ्गत्वम्; न तस्याननुष्ठानमिति–तर्हि तस्यैवाङ्गित्वमप्यस्त्विति चेत्, तथा पूर्वपक्षिणोऽनभिप्रेतत्वादिति भावः ।

असार्वत्रिकी ३-४-१०

भाष्ये **प्रस्तुतोद्गीथविशेषनिष्ठत्वा**दिति । विशेष्यत इति **विशेषः** । **उद्गीथ**शब्द उद्गीथविद्यापरः । ततश्च यच्छब्दस्योद्गीथविद्याक्रियमाणसोमयागनिष्ठत्वादित्यर्थः । केचित्तु उद्गीथाख्यकर्मपरत्वेऽपि न दोषः । न च प्रबलकर्मान्तराप्रतिबद्धफलजनकत्वरूपं वीर्यवत्तरत्वमुद्गीथे न सम्भवति, उद्गीथस्याङ्गत्वेन फलजनकत्वाप्रसक्तेरिति वाच्यम् – कारणानुग्रहस्यैवाङ्गकार्यत्वेन तादृशफले वीर्यवत्तरत्वस्य प्रबलकर्मान्तराप्रतिबद्धस्य सम्भवादित्याहुः । **एकपदसामर्थ्यं हि श्रुति**रिति । अत्रैकपदमसहायवाचि; 'अभिधातुं पदेऽन्यस्मिन्निरपेक्षो रवः श्रुतिः' इत्यभियुक्तोक्तेः । स्वत एव निश्चयसमर्थत्वमिति यावत् । इयांस्तु विशेषः – समभिव्याहृतपदान्तरसापेक्षत्वे न श्रुतित्वमित्यध्वरमीमांसकाः । सङ्कोचकाभावात् प्रापकप्रमाणान्तरनैरपेक्ष्यमपि श्रुतिकोटौ निविशत इत्याचार्याणामभिप्रायः । अत एवानुवादस्सन्निहित परामर्शीति वाचोयुक्तिर्युक्तिमती । अनुवादस्यापि श्रुतिरूपत्वे सन्निध्यनुरोधेन सङ्कोचस्य क्लेशेन

निर्वाह्यत्वात्। केचित्तु **श्रुतिर्न सम्भवतीत्यर्थ** इत्यस्य, सति सम्भवेऽनुवादस्य सन्निहितगामित्वात् प्रकृताप्रकृतग्राहिणी श्रुतिर्न सम्भवतीत्यर्थ इति व्याचक्षते।

**अध्ययनमात्रवतः ३-४-१२.**

**अग्निशब्दस्य तावन्मात्रे प्रसिद्धिस्वारस्यादिति।** जुह्वादिशब्दवत् क्रत्वपूर्वीयत्वस्यानादरणीयत्वात्। अयं भावः — क्रत्वपूर्वीयत्वं हि न शक्त्या उपस्थाप्यम्, अपि तु लक्षणया। सा च मुख्यार्थानुपपत्तौ सत्यामवकल्पते। 'यस्य पर्णमयी जुहूर्भवति' इत्यत्र तु जुहूशब्दस्य जुह्वाकृतिमात्रपर्यवसायित्वेन तस्याः पर्णतामन्तरेणापि सम्भवात् जुहूस्वरूपमात्रपर्यवसितपर्णताया आनर्थक्यप्रसङ्गेन जुहूपदस्य क्रत्वपूर्वीयलक्षणाश्रयणेऽपि, अग्निशब्दस्य 'नक्तं गार्हपत्यमादधाती'त्यादिवाक्यपर्यालोचनया संस्कारविशेषविशिष्टवचनतया तावन्मात्रपर्यवसितत्वेऽप्यानर्थक्याप्रसङ्गेन जुह्वादिवत् क्रत्वपूर्वीयलक्षणाया अनावश्यकतया क्रतुपर्यन्तत्वाभावादिति। **शब्दस्वारस्यमि**ति। तव्यप्रत्ययस्वारस्यमित्यर्थः। तव्यप्रत्ययेन स्वाध्यायशब्दवाच्यवेदाख्याक्षरराशेः शेषित्वावगमादिति भावः। **वेदमधीत्य स्नास्यन्नि**ति। यद्यपि समावर्तनाङ्गकलापस्यैव अध्ययनानन्तर्यं शब्दार्थः, न तु समावर्तनस्य। यदि हि क्त्वाप्रत्ययेन स्नानस्याध्ययनानन्तर्यं प्रतिपिपादयिषितं स्यात्, तदा पक्त्वा भोक्ष्यमाणः स्नातीत्यादौ स्नानस्य पाकपूर्वभावित्ववत् गोष्ठप्रवेशादीनामध्ययनप्राग्भावित्वस्यापि प्रसङ्गात् — तथापि समावर्तनाङ्गानामानन्तर्ये समावर्तनस्याप्यानन्तर्यमिति भावः। **स्नोपयोग्यर्थज्ञानस्ये**ति। स्नानोपयोग्यर्थज्ञानस्येत्यर्थः। न च तावन्मात्रस्यैवावसरप्रदः स्यात्; नान्यस्येति वाच्यम् — तुल्यन्यायतया स्नानानन्तरमेव दारपरिग्रहस्य कर्तव्यत्वेन दारपरिग्रहमारभ्य चाग्निहोत्रादेर्नैरन्तर्येणानुष्ठेयतया तस्याप्यवसरप्रदत्वसम्भवादित्यर्थः। ननु समावर्तनदारपरिग्रहादेरप्यर्थज्ञानसाध्यतया तस्य च मीमांसामन्तरेणासाध्यत्वात् अध्ययनशब्दस्यार्थज्ञानपरत्वाभावे समावर्तनदारपरिग्रहादेरप्यनिष्पत्तिप्रसङ्गादित्यत आह — **यावदर्थज्ञानमि**ति।

**'न शूद्राय मतिं दद्यात्'** इति। अध्ययनस्यार्थज्ञानपर्यन्तत्वपक्षेऽपि 'स्वाध्यायोऽध्येतव्य' इत्यध्ययननियमस्य स्वशाखामात्रविषयतया स्वीयेतरशाखाविहिताङ्गजाते तदध्ययनविधिमन्तरेणैव तत्तदध्येतृभ्यो गृहीत्वाऽनुष्ठानं युक्तमिति

त्रैवर्णिकेष्वभ्युपेतत्वात् शूद्रं प्रति सर्वासामपि शाखानां स्वीयेतरत्वात्तदध्ययनाभावेऽपि तदध्येतृभ्यो गृहीत्वा कर्मानुष्ठानं को वारयेत् । ननु शूद्रस्य क्रत्वनुष्ठानापेक्षितं ज्ञानं कार्त्स्न्येनाक्षेप्यम्; त्रैवर्णिकानां तु स्वशाखेतरशाखाविहिताङ्गमात्रविषयमित्याक्षेपलाघवात् क्रतुविधयस्तानेवाधिकुर्वन्ति; न शूद्रमिति चेत् – एवं तर्हि यस्य कर्मणो यस्यां शाखायां विधानम्, 'भूयस्त्वेनोभयश्रुती'ति न्यायेन प्रधानस्यापि विधानम्, शाखान्तरे तु किञ्चिदङ्गविधानम् – तत्र कर्मणि तच्छाखाध्यायिनामेवाधिकारः स्यात्, ज्ञानाक्षेपलाघवात् । न तु शाखान्तराध्यायिनाम् । यस्य कर्मणः तदङ्गस्य कस्यचित् यस्यां शाखायां विधानं नास्ति; किन्तु शाखान्तर एव साङ्गस्य तस्य विधानम् – तत्र कर्मणि तच्छाखाध्यायिनामधिकारो न स्यात्; शूद्रवत्तेषां तदनुष्ठानोपयोगिज्ञानस्य कार्त्स्न्येनाक्षेप्यत्वात् । तस्मात् त्रैवर्णिकानामपि ज्ञानाक्षेपस्य सम्प्रतिपन्नतया तद्वदेव शूद्रस्यापि कर्मानुष्ठानोपयोगिज्ञानाक्षेपसम्भवात् तत्तद्वेदविद्भ्योऽवगत्य कर्मानुष्ठानमुपपद्यत एवेति, अध्ययनस्यार्थज्ञानपर्यन्तत्वे शूद्राधिकारस्यानिवार्यतया 'तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः' इत्यादिनिषेधविधिरेव शरणीकरणीय इति भावः ।

**अध्ययनशब्दवाच्यव्यतिरिक्तत्वाद्विद्याया** इति । अध्ययनफलव्यतिरिक्तत्वाद्विद्याया इत्यर्थः ।

**नाविशेषात् ३-४-१३.**

**अर्थज्ञानादर्थान्तरत्वं कर्मेतिकर्तव्यताकत्वं चेति ।** कर्माङ्गत्वानर्हवाक्यार्थज्ञानादर्थान्तरभूतायाः कर्माङ्गत्वस्वभाववत्तया कुर्वन्नेवेति वाक्यस्य अङ्गभूतकर्मविषयत्वेनाप्युपपत्तिरस्तीत्युक्तमित्यर्थः ।

**कामकारेण चैके ३-४-१५.**

भाष्ये '**येषां नोऽयमात्माऽयं लोक**' इति । लोक इव प्रत्यक्ष इत्यर्थः । **एके** वाजसनेयिन इत्यर्थः ।

**उपमर्दं च ३-४-१६.**

**न ह्यङ्गेनाङ्गिन** इति । नन्वेवं सति कर्मणो विद्याङ्गत्वमपि न स्यात्, अङ्गिनाऽङ्गोपमर्दस्य चाप्ययोगादिति चेन्न – येषां कर्मणां निवर्त्यत्वम्, तेषां विद्याङ्ग-

त्वानभ्युपगमात् । न चैतत् परेणापि कर्मभेदाभ्युपगमेन सुवचमिति वाच्यम्— जैमिनिना उपनिषदां जीवातिरिक्तब्रह्मपरत्वमपह्नुत्य देहातिरिक्तात्मपरत्वमभ्युपगम्य तद्वेदनं पारलौकिकसर्वकर्माङ्गमित्यङ्गीकृतत्वात् तन्मते विद्यानिवर्त्यकर्मणामपि पारलौकिकात्मवेदनसाध्यत्वाविशेषेण विद्यां प्रत्यप्यङ्गित्वस्य वक्तव्यत्वात् अङ्गेनाङ्गिन उपमर्दो न सम्भवतीति भावः ।

**परामर्शं जैमिनिरचोदनाचापवदति हि ३-४-१८.**

भाष्ये **प्रकृतं प्रणवेन ब्रह्मोपासनं स्तूयत** इति । प्रकरिष्यमाण-मित्यर्थः । 'ओङ्कारेण सर्वा वाक् संतृण्णा । ओंकार एवेदं सर्व' मित्युत्तरत्र प्रणवोपासनस्य विधित्सितत्वादिति भावः । भाष्ये **तेषामाश्रमाणा**मिति च्छेदः । ननु परामर्शेऽप्याश्रमा गम्यन्त एव । सत्यं गम्यन्ते, स्मृत्याचाराभ्यां तु तेषां प्रसिद्धिर्न प्रत्यक्षया श्रुत्या । प्रत्यक्षश्रुतिविरोधे चानादरणीयत्वम् , 'विरोधे त्वनपेक्षं स्यात्' इति नयेन सिद्धम् । अथ वा अन्धपङ्ग्वादिकर्मानधिकृतविषया स्यात् । ननु गार्हस्थ्यस्यापि परामर्शमात्रम्, 'यज्ञोऽध्ययनं दानम्' इति । ततश्च तदपि न सिध्येदिति चेत् — सत्यम् । एवं गृहस्थं प्रत्येव सर्वकर्मणां श्रुतिषु विधानात् श्रुतिप्रसिद्धमेव तदस्तित्वम् । भाष्ये **ये चेमेऽरण्ये........इति च देवयानविधिपरत्वा**दिति । 'तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसम्भवन्ति' इति देवयानविधिपरत्वादित्यर्थः । 'एतदेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' इत्ययं तु लोकसंस्तवः; न पारिव्राज्यविधिरिति भावः । भाष्ये **योऽग्निमुद्वासयते इत्यादिके**ति । आदिशब्देन 'आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः', 'नापुत्रस्य लोकोऽस्ति' इत्यादि गृह्यते ।

**अनुष्ठेयं बादरायणः साम्यश्रुतेः ३-४-१९.**

भाष्ये **अथ गृहस्थाश्रमस्यानुवाद** इति । अन्यतः प्राप्तेरभावेनानुवाद-त्वासम्भवेन यद्यस्यैव विधिपरत्वमभ्युपेयते, तदितरेषामपि समानमिति भावः । **परामर्शपक्षे विधानपक्षे च ........ तुल्य**मित्याद्युपसंहारभाष्यानुसारात् । न च **स्तुत्यर्थतयाऽनुवादसाम्यं प्रमाणान्तरप्राप्तिसाम्यं चोभयं सूत्राभिप्रेत**मिति टीकाविरोध इति वाच्यम् — वर्षकृतं दुर्भिक्षमितिवत् प्रमाणान्तरप्राप्त्यभावकृतं

साम्यमिति तदर्थात्। इहैव विधिपक्षाश्रयणमिति पर्यवसितोऽर्थः। केचित्तु **परामर्शपक्षे विधानपक्षे चेति** भाष्यस्य मानान्तरप्राप्तपरामर्शपक्षे मानान्तरविहितपरामर्शपक्षे चेत्यर्थः। न त्वत्रैव विधित्वपक्ष इत्यर्थः। तस्य पक्षस्योत्तरसूत्रप्रतिपाद्यत्वाभावात्। न च अस्मिन् सूत्रे पक्षद्वयस्याप्यनुपक्षेपे, 'विधिर्वा धारणवत्' इत्यत्र वाशब्दस्यावधारणार्थत्वप्रतिपादकभाष्यासामञ्जस्यम्। पूर्वत्र पक्षद्वयोपक्षेप एवावधारणस्वारस्यादिति वाच्यम्—अप्रयोजकत्वादिति वदन्ति। भाष्ये **तपो ब्रह्मचर्यमिति सर्वैश्शब्दैरिति**। यद्यपि श्रुतौ ब्रह्मचार्याचार्यकुलवासीति ब्रह्मचारिशब्द एव श्रूयते—तथापि **ब्रह्मचारिधर्म एव ब्रह्मचर्य(चारि ?)शब्देनाभिधीयते** इत्युत्तरभाष्यानुरोधात् ब्रह्मचारिशब्दस्य ब्रह्मचर्यपरत्वात् ब्रह्मचर्यमित्युक्तमिति द्रष्टव्यम्। भाष्ये **ब्रह्मचर्यतपसोर्गृहस्थस्यैव सम्भवादिति**। यज्ञोऽध्ययनमिति निर्दिष्टस्य गृहस्थस्य सम्भवादित्यर्थः। अत उपकुर्वाणेऽपि सम्भवात् गृहस्थस्यैवेत्येवकारोऽनुपपन्न इति चोद्यं निरस्तम्। एवकारस्येतरव्यवच्छेदकत्वाभावात्। भाष्ये **त्रित्वेन संगृह्येति**। अत्र स्कन्धशब्दो यद्याश्रमपरो न स्यात्, ततो यज्ञादीनां प्रातिस्विकोत्पत्तीनां किमपेक्ष्य त्रित्वसंख्या व्यवस्थाप्यते। एकैकाश्रमोपगृहीतत्वे त्वाश्रमधर्माणां त्रित्वाच्छक्यं त्रित्वे व्यवस्थापयितुमिति आश्रमप्रतिज्ञोपपत्तिरिति भावः।

## विधिर्वा धारणवत् ३-४-२०.

भाष्ये **दिष्टाग्निहोत्र** इति। मृताग्निहोत्र इत्यर्थः। दिष्टाग्निहोत्रे श्रूयते, 'उपरि हि देवेभ्यो धारयती' ति। एषोऽनुवादः, वर्तमानापदेशात् हिशब्दाच्चाचाराच्चोपरिधारणप्राप्तेः। हविषोऽभ्यर्हितद्रव्यत्वात् प्रच्छादनं येन केनचित् प्राप्नोति। ततः, 'स्रुग्दण्डे समिधमुपसंगृह्यानुद्रवती' ति वाक्यान्तरप्रतिपत्तौ समिन्नियम्यते। तस्मादनुवाद इति प्राप्ते—समिधो हविराच्छादनासमर्थत्वात् स्रुग्दण्ड इत्यनेन हविषः प्राग्देशस्य प्राप्तत्वेऽपि हविष उपर्यप्राप्तत्वाद्विधिरिति स्थितं तृतीये (३-४-६)। **'वीरहा वा एष देवानां योऽग्निमुद्वासयते' इति एपेतिच्छेदः**। भाष्ये **अविरक्तविषया एवेति**। गृहस्थस्य विहिते उत्सर्गेष्टिपूर्वकत्यागे दोषादर्शनादविहितत्यागविषयैव दोषश्रुतिः। ततश्च प्रविव्रजिषोर्विरक्तस्य त्यागविधिसद्भावात् विहितस्त्यागो न दोषावहः। न च कर्मानधिकृतान्धपङ्गुबधिरादिविषया पारिव्राज्य-

श्रुतिरिति वक्तुं शक्यम् — अविशेषश्रवणात् । जाबालश्रुतौ, 'व्रती वा अव्रती वा स्नातको वा अस्नातको वा उत्सन्नाग्निरनग्निको वा' इति पृथग्विधानात् । अतः 'प्रतिपन्नं गार्हस्थ्यं प्रमादादज्ञानाद्वा उद्वासयितुं प्रवृत्तं प्रति वा अविरक्तं प्रति वा, 'वीरहा वा' इति श्रुतिरुपपन्नेति भावः ।

**परेत्वित्यादि** । **ऐकाधिकरण्यमिति** । यद्यपि कल्पतरावधिकरणभेदः सूचितः, तथापि भाष्यभामत्योरनुक्तत्वादेवमुक्तमिति द्रष्टव्यम् । **इत्यादौ विषय** इति । विषयवाक्य इत्यर्थः । **देवदत्तयज्ञदत्तौ मन्दप्रज्ञावित्यादि** । अन्यतरः कश्चिदित्यर्थः । ननु च शाङ्करभाष्ये, "न ह्येवं भवति देवदत्तयज्ञदत्तौ मन्दप्रज्ञौ अन्यतरस्तु तयोर्महाप्राज्ञ इति । भवति त्वेवम्—देवदत्तयज्ञदत्तौ मन्दप्रज्ञौ विष्णुमित्रस्तु महाप्राज्ञः" इति ईदृशोक्त्यसम्भवपरतैव प्रतीयते । न त्वादृशीमुक्तिमभ्युपगम्य यज्ञदत्तस्योच्यमानत्वनिषेधपरत्वमिति चेन्न — न ह्येवं भवति वह्निस्सेककरणम् इत्युक्ते वह्नेः सेककरणत्वमित्युच्यमानत्वं न सम्भवतीत्यस्यार्थस्य फलितत्वदर्शनात् फलितार्थमादायानुवादोपपत्तेः । किञ्च दार्ष्टान्तिके, 'त्रय एते पुण्यलोका भवन्ति ब्रह्मसंस्थोऽमृतत्वमेति' इति श्रुतावुक्तेस्सिद्धतया उक्तिं सिद्धवत्कृत्यैव ईदृशोक्त्या उच्यमानत्वं न प्राङ्निर्दिष्टानाम्, अपि तु ततोऽन्यस्य परिव्राज इत्यस्मिन्नर्थ एव दृष्टान्तस्योपन्यसनीयतया दृष्टान्तेऽप्युक्तिं सिद्धवत्कृत्यैव प्राङ्निर्दिष्टानां नोच्यमानत्वं दृष्टम्, अपि तु ततोऽन्यस्यैवेत्येवमुपन्यासस्योचितत्वेन तत्रैव शङ्करभाष्यस्यापि तात्पर्यमभिप्रेत्य तथानूदितमिति द्रष्टव्यम् । **प्रकृताश्रमत्रयेति** । केवलयौगिकानामाग्नेयीन्यायेन (३-२-८) सन्निहितगामित्वादिति भावः । **कालभेदेनेति** । पूर्वं मन्दप्रज्ञस्यैवेदानीं शास्त्राभ्यासपाटववशेन महाप्राज्ञत्वसम्भवादिति भावः । **धर्म्यन्तरोपस्थापकेति** । अन्यतरश्चासौ शब्दश्चान्यतरशब्दः, न त्वन्यतर इत्ययं शब्द इति भ्रमितव्यम् । ततश्च निर्दिष्टमन्दप्रज्ञापेक्षया धर्म्यन्तरोपस्थापकस्तत्रवाक्यनिर्दिष्टपदद्वयान्यतरभूतमहत्पदसमभिव्याहारादित्यर्थः । **यौगिकस्येति** । यौगिकस्यापीत्यर्थः । **इह तु ब्रह्मसंस्थशब्दातिरेकेणेति** । त्रिष्वेवाश्रमेषु ब्रह्मसंस्थश्चेत्, अमृतत्वभाग् भवतीत्यर्थकत्वेऽपि विरोधाभावादित्यर्थः । किञ्च ब्रह्मसंस्थपदस्य चतुर्थाश्रमपरत्वे, 'ऊर्ध्वरेतस आश्रमा न सन्ति; त्रयो धर्मस्कन्धा इति तु विधेयब्रह्म-

संस्थतास्तुतये अनुवादमात्र'मित्येवमर्थकतया प्रयुक्तस्य 'परामर्शं जैमिनिरचोदना'दिति सूत्रस्य व्याहतार्थत्वप्रसङ्गः। तथा हि सति ब्रह्मसंस्थताविधेरेव संन्यासविधिरूपत्वेन ऊर्ध्वरेतसामाश्रमस्य सिद्धत्वेन पूर्वपक्षसिद्धान्तयोरप्रवृत्तेरिति द्रष्टव्यम्। अत्र परमहंसस्य शिखोपवीताद्यावश्यकत्वं शतदूषण्यामाचार्यैरेव प्रपञ्चितमिति नात्र प्रयत्यते।

इति पुरुषार्थाधिकरणम्।

## (२) स्तुतिमात्रोधिकरणम्

१ स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ३-४-२१.

**अनन्तराधिकरणद्वयमिति**। पुरुषार्थाधिकरणापेक्षयेति शेषः। भाष्ये **परमः परार्ध्य** इति। परमात्मप्रतीकत्वात् परमः। परस्य ब्रह्मणः अर्धं स्थानमर्हतीति परार्ध्यः। **पूर्वं सप्तानां रसानामिति**। "एषां भूतानां पृथिवी रसः पृथिव्या आपो रसोऽपामोषधयो रस ओषधीनां पुरुषो रसः पुरुषस्य वाग्रसो वाच ऋग्रसः ऋचस्साम रसः साम्न उद्गीथो रसः" इति पृथिव्यादीनां सप्तानां पूर्वं रसानां कीर्तितत्वादित्यर्थः। भाष्ये **अत्र प्रतिपादितमुपासनपरत्व**मित्यादि। नन्वस्मिन्नधिकरणे स एष रसानां रसतम इत्यादिवाक्यानां उपास्यविशेषसमर्पकत्वमुत स्तुतिपरत्वमित्येव चिन्ता प्रक्रियते। न तु, ओमित्येतदक्षरमुद्गीथमुपासीतेत्यादिवाक्यानामपि उपासनविधिपरत्वमस्ति नेति विचारः प्रवर्त्यते। तेषां वाक्यानामनुदाहृतत्वादिति चेत्—मैवम्। रसतमादिवाक्यानामपि स्तावकत्वमिति पूर्वपक्षिणो द्वेधाऽभिप्रायः—अत्र उद्गीथमुपासीत इति नोपासनं विधीयते। उद्गीथविधिसिद्धानुष्ठानौपयिकज्ञानसामान्यवाची उपासनशब्दः। अतोऽनुवाद एव। अतश्च रसतमादिवाक्ये समभिव्याहृतविध्यभावेन तदेकवाक्यतया स्तावकत्वाभावेन उद्गीथपदोपस्थापितक्रतुप्रकरणगतोद्गीथविध्येकवाक्यतयैव रसतमादिवाक्यानां स्तावकत्वम्। न च स्तावकवाक्यानां स्तुत्यविधिसमभिव्याहारनियमोऽस्ति। 'एतद्ब्राह्मणान्येव पञ्च हवींषि यद्ब्राह्मणानीतराणि' इत्यतिदिष्टेष्वर्थवादेषु व्यभिचारादित्येकः पक्षः। 'उद्गीथमुपासीत' इत्युपासनाविधिमभ्युपेत्य तदेकवाक्यतया तत्स्तावकत्वम्; नोपासनाविषय-

समर्पकत्वम् । 'ओमित्येतदक्षर' मित्यनेनैव उपासनविषयसमर्पणादिति द्वितीयः पक्षः । तत्र द्वितीयपक्षे उपासनानां सद्भावेऽपि प्रथमपक्षे उपासनाविध्यभावात् **अत्र प्रतिपादितमुपासनविधिपरत्वमित्येतत्** तदभिप्रायेणेति द्रष्टव्यम् । **स्तुतिर्हि प्रमाणान्तरप्राप्ते**ति ।

'विरोधे गुणवादः स्यात् अनुवादोऽवधारिते ।
भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः'

इति वाक्यविद्भिरुक्तत्वात् मानान्तरविरोधे गुणवादः, यथा 'यजमानः प्रस्तरः', 'ग्रावाणः प्लवन्त' इत्यादौ, मानान्तरावधारितेऽनुवादः, यथा, 'वज्रहस्तः पुरन्दर' इत्यादौ । **अप्राप्तगुणविधानेन** वेति । अप्राप्तधर्मोपदेशेन भूतार्थवादेनेत्यर्थः । अतश्च कथं गुणविधायकस्यार्थवादान्तर्भाव इति शङ्का न कार्या । **अत्र तु तथा सन्निहितत्वाभावेने**ति । 'एतद्ब्राह्मणान्येव पञ्च हवींषि' इत्यादिवचनबलात् पञ्चसञ्चरविध्येकवाक्यत्वमिति भावः ।

## भावशब्दाच्च ३-४-२२.

भाष्ये **विधिपरत्वमेव न्याय्यमि**ति । विस्पष्टविधिविभक्तिश्रवणात् ध्यानपर्यायस्योपासनस्याप्राप्तत्वाच्चोपासनविधिपरत्वमेव न्याय्यम् । ततश्च समभिव्याहृतोपासनविध्येकवाक्यत्वे सति नासमभिव्याहृतोपासनविध्येकवाक्यत्वं युक्तमित्यर्थः । नन्वस्तु समभिव्याहृतोपासनविधिनैकवाक्यत्वम्; तथापि स्तुत्यर्थत्वेनान्वयः किं न स्यादिति शङ्कामुपसंहारव्याजेन निरस्यति भाष्ये **तस्मादुपासनविधानार्था एताः श्रुतय** इति । उपास्यत इत्युपासनम्, कर्मणि बहुलवचनाल्ल्युट् । उपास्यविधानार्था इत्यर्थः । यद्वा उपासने विषयविधानार्था इत्यर्थः । उपासनविषयसमर्पकतया प्रवृत्तिविशेषपरत्वे संभवति व्यर्थप्रयासस्तुत्यर्थत्वकल्पनाऽयोगादिति भावः ।

इति स्तुतिमात्राधिकरणम् ।



## ( ३ ) पारिप्लवाधिकरणम्

पारिप्लवार्था इति चेन्न विशेषितत्वात्।

**शङ्कया संगतिरिति**। विचारणात् सङ्गतिरित्यर्थः। ननु, 'दक्षिणत आहवनीयस्य हिरण्यकशिपावासीनोऽभिषिक्ताय पुत्रामात्यपरिवृताय राज्ञे पारिप्लवमाचक्षीत प्रथमेऽहनि, 'मनुर्वैवस्वतो राजा' इति' इति पारिप्लवशब्दस्याख्यानाभिधायकत्वदर्शनात् कथमाख्यानानां पारिप्लवनामकशस्त्रार्थत्वपूर्वपक्ष इत्यत आह — **पारिप्लवा आख्यानानि। इह पारिप्लवशब्देन आख्यानशंसनं विवक्षितमिति**। शंसनं शस्त्रम्; आख्यानसाध्यं शस्त्रमित्यर्थः। परिप्लुत्य शंसनमिति पारिप्लवशब्दस्य शस्त्रेऽपि वृत्त्युपपत्तेरिति भावः। भाष्ये **विद्याविशेषप्रतिपत्त्यर्थानीति**। 'ते हैते महाशाला महाश्रोत्रियाः समेत्य मीमांसाञ्चक्रु' रित्याख्यायिकया विद्यायाः परमात्मविषयत्वरूपविशेषप्रतिपत्तेः, 'मटचीहतेषु कुरुष्वाटक्या सह जायया' इत्याख्यायिकया विद्यायां भक्ष्यनियमनादिरूपविशेषप्रतिपत्तेर्दर्शनात्तदर्थानीत्यर्थः। तथा आख्यायिकाश्रवणे अनवहितानामपि अवधानसम्पादनेन प्रतिपत्तिसौकर्यार्थानीत्यर्थः। ननु पारिप्लवे वाक्येन विनियुक्तानामपि सन्निधेर्विद्यार्थत्वमपि स्यादिति शङ्कां निरस्यति — भाष्ये **न विद्याप्राधान्यं (प्रधानत्वं?) न्याय्यमिति**। वैधाद्यर्थभेदादिति न्यायविरुद्धमिति भावः। ननु 'एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमः तस्मादेतेनेष्ट्वा अथान्येन यजेते' त्यत्रान्यशब्दस्य ज्योतिष्टोमेतरसर्वक्रतुपरामर्शिनः, 'यो वै त्रिवृदन्यं यज्ञक्रतुमापद्यते स तं दीपयति यः पञ्चदशम्' इत्यादिवाक्यशेषगतत्रिवृदादिस्तोमकक्रतुसङ्कीर्तनानुसारेण तावन्मात्रे सङ्कुचितवृत्तित्वापत्त्या अनेकस्तोमकानां क्रतूनां ज्योतिष्टोमात् प्रागप्यनुष्ठानं स्यादिति। ततश्च 'एकस्तोमे वा क्रतुसंयोगात्', 'सर्वेषां वा चोदनाविशेषात्प्रशंसा स्तोमाना' मिति पूर्वपक्षसिद्धान्तसूत्राभ्यां प्रवर्तितेन(५-३-१५)पाञ्चिमिकाधिकरणेन विरोधः स्यात्। तस्मादुपक्रमगतसर्वश्रुत्या विद्याप्रकरणगताख्यानानामपि कर्मसु विनियोगात् पारिप्लवार्थत्वमेव स्यात्; न विद्यार्थत्वमित्यस्वरसादाह — **प्रकरणोपात्तेति**। उपक्रमानुसारेणोपसंहारनयनस्यौत्सर्गिकत्वेऽपि अत्र अनन्तशाखागतशंसनस्य अशक्यत्वेन स्वत एवोप-

क्रमगतसर्वश्रुतेः सङ्कोचकापेक्षासत्त्वात् वाक्यशेषेण चापेक्षितसमर्पणात् वाक्यशेषगते-ष्वाख्यानेषु सङ्कोचः । यथा 'अथैतस्य हारियोजनस्य सर्वे एव लिप्सन्ते' इत्यत्र सर्वशब्दस्यासङ्कुचितसर्वपरत्वासंभवेन सङ्कोचकापेक्षायां ज्योतिष्टोमे प्रकृतेषु ऋत्विक्ष्वेव सङ्कोचः, न सर्वेषाम् । किञ्च यद्युपक्रमगतसर्वश्रुत्या आख्यानानां सर्वेषां गृहीतिः स्यात्, तदा 'मनुर्वैवस्वतो राजा' इत्यादिवाक्यशेषविशेषणमनर्थकमेव स्यात् । न चार्थवत्त्वे संभवत्यानर्थक्यं युक्तम् । अतः सङ्कोचः । 'यो वै त्रिवृदन्य' मित्यादिवाक्यशेषस्तु संयोगमात्रेणैवोपपद्यते, अन्यशब्देन चाविशेषः प्रतीयते । त्रिवृदादीनामनेकस्तोमकेष्वपि विनापि व्याप्त्या संयोगमात्रेण दीपकत्वं संभवतीति वैषम्यमस्तीति द्रष्टव्यम् ।

तथा चैकवाक्योपबन्धात् ३-४-२४.

**हिरण्यस्यादक्षिण्यत्ववाक्येने**ति । रजतहिरण्यस्येत्यर्थः । 'तस्माद्धिरण्य' मिति श्रुतेरिति भावः ।

इति पारिप्लवार्थाधिकरणम् ।

---

## ( ४ ) अग्नीन्धनाद्यधिकरणम्

अत एव चाग्नीन्धनाद्यनपेक्षा ३-४-२५.

भाष्ये **ऊर्ध्वरेतसो यज्ञाद्यभावा**दिति । 'ये चेमेऽरण्ये श्रद्धा तप इत्युपासते' इति विद्यासम्बन्धबोधकवाक्यानामान्यपर्यमाश्रयणीयमिति भावः । यदि चावश्यमूर्ध्वरेतसां विद्यासम्बन्धो वक्तव्यः, तर्हि अङ्गानुपकृतविद्यया फलानवाप्ते-रङ्गभूतयज्ञाद्यनुष्ठानस्यावश्यकत्वात् तदर्थं दारान्तरं परिगृह्याधानं कर्तव्यम् । न च दारपरिग्रहे सति ऊर्ध्वरेतस्त्वविरोधापत्तिः । 'सोऽयमुपनयन्नादधीत होमसंयोगात्' (इति) पूर्वतन्त्राधिकरणपूर्वपक्षरीत्या पूर्वपक्षः (ज्ञातः?) । तत्र हि उपनयनाङ्गहोम आहवनीये कर्तव्यः । अस्मिन् दारपरिग्रहे सति उपनयनविधिपूर्वकविद्याग्रहणोत्तरकालविहितो दारपरिग्रहः प्रजार्थो भविष्यतीति पूर्वपक्षः प्रवर्तितः । तद्वदत्रापि । न चाश्रमधर्मैरेव विद्याङ्गसिद्धेर्यज्ञाद्यनुष्ठानार्थमाधानदारसंग्रहयोराक्षेपो न प्राप्नोतीति वाच्यम् — यज्ञेने-

त्यादितृतीयाश्रुत्या विशिष्य यज्ञादीनामपि विद्याङ्गत्वविधानात् । कर्मत्यागश्रुतिस्तु विद्यानङ्गकर्मविषया । सिद्धान्तस्तु, केवलपुत्रार्थमिव केवलधर्मार्थं दारसंग्रहायोगात् 'धर्मे चार्थे च नातिचरितव्या' इति स्मृतेः । भीष्मस्य तु धर्मप्रजोभयार्थे दारपरिग्रहे निर्वृत्त एव पितृप्रीत्यर्थमूर्ध्वरेतस्त्वप्रतिज्ञया पुत्रोत्पादनान्निवृत्तौ सत्यां दाराणां धर्मार्थत्वमात्रमवशिष्टमिति तेन यज्ञाद्यनुष्ठानम्; न तूर्ध्वरेतस्त्वप्रतिज्ञानन्तरं केवलधर्मार्थदारसंग्रहः । श्रुतिस्मृतिसिद्धनिकेतनत्वादिसंन्यासधर्मपर्यालोचनया न संन्यासिनो दारपरिग्रहादिकमुपपद्यत इति भावः । **विद्यया फलोत्पत्तौ न कर्मापेक्षे**ति । क्रत्वर्थत्वाभावेन स्वशेषिभूतकर्मापेक्षा नास्तीत्यर्थः । निगमनप्रयोजनमाह—**इदं च निगमनमिति** ।

इति अग्नीन्धनाद्यधिकरणम् ।

---

## (५) सर्वापेक्षाधिकरणम् ।

सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ३-४-२६.

**यज्ञादिनां ज्ञानसाधनत्वे** सत्येवेत्यादिभाष्यमयुक्तम्, प्रकृतिप्रत्यययोर्मध्ये प्रत्ययार्थप्राधान्येनेच्छायामेव तृतीयया साधनत्वप्रतीतेरित्यत्राह—**परमसाध्येच्छया विनेत्यादि** । नन्वन्नद्वेषेण कार्श्यं प्राप्तस्य तत्परिहारायान्नविषयौन्मुख्यलक्षणायामिच्छायां सत्यामपि उत्कटाजीर्णादिप्रयुक्तधातुवैषम्यदोषात् तत्र प्रवृत्तिपर्यन्ता रुचिर्न जायत इति तद्रोचकौषधवत्, 'निरतिशयानन्दं ब्रह्म; तत्प्राप्तौ विद्यासाधन'मित्यर्थे प्राचीनबहुजन्मानुष्ठितानभिसंहितनित्यनैमित्तिककर्मोपसञ्जातचित्तप्रसादमहिम्ना सम्पन्नविश्वासस्य पुरुषस्य ब्रह्मावाप्तौ तत्साधनविद्यायां च औन्मुख्यलक्षणायामिच्छायां सत्यामपि अनादिभवसञ्चितानेकदुरितदोषेण, आस्तिककामुकस्य हेयकर्मणीव, विषयभोगप्रावण्यं सम्पादयता प्रतिबन्धाद्विद्यासाधने श्रवणादौ प्रवृत्तिपर्यन्ता रुचिर्न जायत इति प्रतिबन्धादिनिरासपूर्वकमिच्छासम्पादकयज्ञादिविधानमुपपन्नतरमिति चेत्—सत्यम्; यद्यनेन वाक्येन कर्मणामिच्छादिसंयोगः प्रतिपाद्येत, तदा श्रुतनिर्वाहाय कथञ्चिदियं प्रणाड्याश्रीयेत । न त्वेतदस्ति । प्रकृतिप्रत्ययार्थयोर्मध्ये

प्रत्ययार्थस्य प्राधान्यमित्यौपगवादिदृष्टसामान्यन्यायापेक्षया, 'इच्छाविषयतया शब्द-बोध्य एव शाब्दसाधनान्वय' इति स्वर्गकामादिवाक्ये क्लृप्तविशेषन्यायस्य बलीयस्त्वात्। 'अश्वेन जिगमिषति, असिना जिघांसति' इत्यादिलौकिकप्रयोगे च अश्वादिरूपसाधनस्य, तद्विजिज्ञासितव्यम्, निदिध्यासितव्यम् इत्यादिवैदिकप्रयोगे च तव्यप्रत्ययार्थीभूतविधेश्च सन्प्रत्ययाभिहितेच्छाविषय एव गमनादावन्वयस्य क्लृप्तत्वाच्च प्रकृत्यभिहितायां विद्यायामेवान्वयस्य क्लृप्तत्वादिति भावः।

**उत्पत्तावपेक्षैव सूत्रप्रतिपाद्येति**। यद्यपि परैः, पूर्वसूत्रे फलोत्पत्तावनपेक्षत्वम्, अस्मिन् सूत्रे विद्योत्पत्तौ कर्मापेक्षितत्वमित्येवोक्तम् — तथाप्यश्ववदित्यत्र यथाऽश्वो न लाङ्गलाकर्षणे विनियुज्यते, रथचर्यायां तु युज्यते — एवमाश्रमकर्माणि विद्यया फलोत्पत्तौ नापेक्ष्यन्ते; उत्पत्तौ त्वपेक्ष्यन्त इति भाष्योक्तत्वात् फलोत्पत्तावनपेक्षाप्यस्मिन्नधिकरणे प्रतिपाद्यत इत्यभिप्रेत्य दूषणमुक्तमिति द्रष्टव्यम्।

**अनन्तराधिकरणपूर्वपक्षहेतुरिति**। आद्यसूत्रापेक्षयानन्तराधिकरण इत्यर्थः।

इति सर्वापेक्षाधिकरणम्।

---

## [६] शमदमाद्यधिकरणम्

**शमदमाद्युपेतः स्यात्तथापि तु तद्विधेस्तदङ्गतया तेषामप्यवश्यानुष्ठेयत्वात् ३-४-२७.**

दूषयति — **परेत्वित्यादि**। **शङ्का तावदयुक्तेति**। **तथापीति वैयर्थ्यमिति**। यज्ञाद्यपेक्षयैव शमदमादेर्विरोधप्रसक्तिसत्त्वेन तदनपेक्षया साकं विरोधाभावात् विरोधसूचकस्यापीत्येतस्य वैयर्थ्यम्। ततश्च **तथापीत्यस्य** यज्ञाद्यपेक्षायामपीत्येवार्थः, न तु यज्ञाद्य[न?]पेक्षत्वेऽपीत्यर्थ इति भावः। **पूर्वसूत्रविवक्षितस्येति**। स्तुत्यर्थपरत्वनिरासस्येत्यर्थः। **ततोऽपि वरमिति**। विविदिषासंयोगसमर्थनपरे पूर्वसूत्रे स्तुत्यर्थत्वनिरासस्यापेक्षिततया तत्रैव तन्निरासस्योचितत्वादिति भावः।

इति शमदमाद्यधिकरणम्।

---

## [ ७ ] सर्वान्नानुमत्यधिकरणम्

**सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ३-४-२८.**

**अस्ति न वेति विचार्यत** इति। प्राणविदामिति शेषः। **प्राणविद्यानिष्ठस्यापी**ति। ननु वामदेव्योपासननिष्ठस्य, 'न काञ्चन परिहरेत्। तद् व्रतम्' इति सर्वस्त्र्यपरिहारानुमतिदर्शनात् किंपुनर्न्यायेन ब्रह्मविदामपि सर्वस्त्र्यपरिहारप्रसङ्गः। यदि च विद्यान्तरप्रकरणे श्रुतस्य विद्यान्तरान्वये प्रमाणाभावात् वामदेव्योपासनाङ्गस्य सर्वस्त्र्यपरिहारस्य न ब्रह्मविदः प्रसक्तिरस्तीति, तर्हि प्राणविद्याङ्गभूतस्य सर्वान्नीनत्वस्य न ब्रह्मविदि प्रसक्तिरस्तीति चेन्न – वामदेव्योपासने, 'न काञ्चन परिहरेत् तद् व्रतम्' इति सर्वस्त्र्यपरिहरणे विस्पष्टविधिविभक्तिश्रवणेन विधेयत्वावगमेऽपीह तादृशविधिप्रत्ययाभावेन सर्वान्नीनत्वस्याङ्गत्वेन विधानाभावेन 'एवं विदि पापं कर्म न श्लिष्यते' इत्यादिवत्, 'न ह वा एवंविदि किञ्चनानन्नं भवति' इत्यत्रापि अभक्ष्यभक्षणकृतदोषाभावमात्रप्रतिपादनपरत्वे सिद्धे – किमिदं कामकृतेऽप्यभक्ष्यभक्षणे दोषाभावप्रतिपादनपरम्, उत प्रामादिक एवेति चिन्ताया एवास्मिन्नधिकरणे प्रवृत्ततया तत्र च प्राणविद्यायाः कामकारस्थलेऽपि अन्नदोषास्पर्शरूपफलसामर्थ्ये पूर्वपक्षिणोपक्षिप्ते सति – यदि प्राणविद्याया अपीदृशं सामर्थ्यम्, तर्हि सर्वविद्याश्रेष्ठाया ब्रह्मविद्याया अपि कामकृताभक्ष्यभक्षणकृतदोषासंस्पर्शहेतुत्वं किं न स्यादिति यदि कश्चिच्चोदयेत्, तं प्रति तदपि पूर्वपक्षिणो नानिष्टमित्येवंपरत्वादस्य ग्रन्थस्य न दोषगन्ध इति ध्येयम्। **पूर्वपक्षेऽभिप्रेते**ति। प्राणविद्याविषयविचारे न ब्रह्मविद्यायाः सङ्गतिरस्ति, तन्मात्रपर्यवसितत्वादस्य विचारस्य। न हि ब्रह्मविदः सर्वान्नीनत्वसदसद्भावयोः पूर्वोत्तरपक्षफलत्वमिति शक्यं वक्तुम् – सिद्धान्ते ब्रह्मविदः सर्वान्नीनत्वाभावस्य प्राणविदः सर्वान्नीनत्वाभावे साधकत्वोपन्यासेन फलत्वासम्भवात्।

**ब्रह्मविदामपी**ति। ननु ब्रह्मविदां दोषसत्त्वेऽपि 'न ह वा एवंविदि किञ्चनानन्नं भवति' इति प्राणविदां दोषाभावकीर्तनात् नाभक्ष्यभक्षणदोष इति चेन्न – 'एवंविदि पापं कर्म न श्लिष्यते' इति ब्रह्मविद्विषयेऽपि दोषाभावदर्शनसाम्यात्।

यदि च, 'नाविरतो दुश्चरितात्' इति दुश्चरितस्य निषिद्धतया तद्वचनं प्रामादिकविषयमिति, तर्हि, 'प्राणसंशयमापन्नो योऽन्नमत्ति यतस्ततः ।

लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥'

इति, 'तस्माद्ब्राह्मणः सुरां न पिबेत्' इत्यादिक्लृप्तसामान्यशास्त्राविरोधेनैव, 'न ह वा एवंविदि' इति शास्त्रस्य कल्प्यविधिभावस्य निर्वाह्यत्वात् । यद्वा नायं फलविधिः । क्लृप्तो हि विशेषविधिः सामान्यविधिं बाधते, अत्र क्लृप्तसामान्यविधिविरोधे, 'न ह वा एवंविदि किञ्चनानन्नं भवति' इत्यस्य फलविधिकल्पनायोगेनार्थवादत्वस्यैव युक्तत्वात् । न चैवम्, 'एवंविदि पापं कर्म न श्लिष्यत' इत्यादेरपि स्तुतिमात्रत्वप्रसङ्गः, पाप्मनामश्लेषाभावे अनिर्मोक्षप्रसङ्गेन सकलपापाश्लेषस्य मोक्षविधिशास्त्रापेक्षितत्वेन फलविधित्वस्य वक्तव्यत्वात्, प्राणविद्यायाश्च ज्येष्ठत्वश्रेष्ठत्वादिफलकत्वेष फलाकांक्षाया अभावात्, 'स होवाच किं मेऽन्नं भविष्यतीति यत्किञ्चिदिदम् आ श्वभ्य आ शकुनिभ्य इति होचुस्तद्वा एतदनस्यान्नम्' इति श्वपर्यन्तप्राणिजाते विहितस्य प्राणविद्याङ्गस्य प्राणान्नत्वचिन्तनस्य स्तुतिः क्रियते, 'न ह वा एवंविदि किञ्चनानन्नं भवती'ति । अतः फलविधित्वाभावात् प्राणविदः प्राणात्यय एव सर्वान्नानुमतिः । 'अनाविष्कुर्वन्नन्वयात्' इत्यत्र क्लृप्तस्यैव विशेषविधेः, 'नाविरतो दुश्चरितात्' इति विशेषशास्त्रेण सङ्कुचितविषयत्वम्, इह तु क्लृप्तसामान्यशास्त्रानुरोधेन, 'न ह वा एवंविदि' इत्यस्य विधिकल्पनाभङ्ग इति विवेकः ।

केचित्तु — परमतवत् वामदेव्योपासकस्य सर्वस्त्र्यपरिहारवत् प्राणविद्यानिष्ठस्य तदङ्गतया सर्वान्नानुमतिर्विधीयत इति पूर्वपक्षं कृत्वा सिद्धान्तमपि तथैव वर्णयन्ति, परापरमतदूषणपरस्य टीकाग्रन्थस्य च परापरोक्तसूत्राक्षरयोजनामात्रदूषणपरतया विरोधप्रसङ्गो नास्तीति प्रतिपादयन्ति ।

**ज्ञानस्य फलत्वादिति ।** अङ्गभूतज्ञानस्य फलत्वेन कीर्तनादपापश्लोकश्रवणवदर्थवाद इत्यर्थः ।

इति सर्वान्नानुमत्यधिकरणम् ।

## (८) विहितत्वाधिकरणम्

---

विहितत्वाच्चाश्रमकर्मापि ३-४-३२.

**किं विद्याङ्गभूतानि** इति। विद्याङ्गभूतान्याश्रमकर्माणि न वेति विचारः। **आश्रमकर्माणी**त्यस्य विवरणं **केवलाश्रमिणोऽपी**ति। न तु विद्याङ्गभूतान्याश्रमकर्माणीति पक्षनिर्देश इति मन्तव्यम्; विद्याङ्गभूतानामाश्रमकर्मत्वस्यैवास्मिन्नधिकरणे सिषाधयिषितत्वादिति द्रष्टव्यम्। **केवलाश्रमाङ्गत्व**मिति। आश्रमशब्देन तद्वान् पुरुष उच्यते। आश्रमनिष्ठपुरुषार्थत्वमित्यर्थः। अथ वा केवल आश्रमो यस्येति बहुव्रीहिः पुरुषोऽन्यपदार्थः। **कर्मान्तरत्वे सती**त्यादि। अयमत्रान्वयः— नित्यानित्यसंयोगविरोधप्रसङ्गेन, एकस्य कर्मणो विनियोगपृथक्त्वस्याप्यभावेन च कर्मान्तरत्वे सति विद्याङ्गभूतानां केवलाश्रमाङ्गत्वासम्भवात् तान्यमुमुक्षोर्नानुष्ठेयानि, विनियोगपृथक्त्वेन नित्यानित्यसंयोगविरोधाभावात् कर्मान्तरत्वं नास्ति चेत्, विद्याङ्गानामेव तेषां केवलाश्रमाङ्गत्वसम्भवात् केवलाश्रमिणोऽप्यनुष्ठेयानीति। **अनुष्ठानं च विरुद्ध**मिति। वास्तवस्य विरोधस्य न वाक्यसहस्रेणापि निवृत्तिर्युक्तेत्यर्थः। एतेन, 'एकस्य तूभयत्वे संयोगपृथक्त्वम्' इति पूर्वतन्त्राधिकरणमपि आक्षिप्तं द्रष्टव्यम्।

सहकारित्वेन च ३-४-३३.

**नित्यानित्यसंयोगपरिहारः सूत्रद्वयफल**मिति। अयं भावः— सिद्धरूपे वस्तुनि नित्यत्वानित्यत्वादेरिव नित्यत्वकाम्यत्वयोर्न वस्तुतो विरोधः, षोडशिग्रहणे कर्तव्यत्वाकर्तव्यत्वयोरिव सम्भवात्। अपि त्वेकस्य वाक्यस्य उभयबोधकत्वासम्भवात् विध्येकावसेये च प्रमाणान्तराप्रवृत्तेः विरोधो वक्तव्यः। अत्र तु विनियोजकप्रमाणद्वयमप्यस्ति। तत्र प्रमाणद्वयवशादुभयार्थत्वे न विरोधः। ननु विद्याया नित्यसमीहितफलत्वाभावात् तदङ्गत्वेनानुष्ठीयमानस्य नित्यत्वं न स्यात्। ततश्च विद्यार्थत्वेन कर्म कुर्वतः प्रत्यवायपरिहाराय नित्यप्रयोगोऽपि पृथक् कर्तव्यः। न चैवं नित्यप्रयोगस्यैवानित्यत्वं स्यादिति चेत् न— यथा स्वर्गार्थो ह्यग्निहोत्रप्रयोगः

काम्यो नैमित्तिको वा नित्यं विकृत्यैव निविशत इति न्यायात् नित्यप्रयोगं विकृत्य प्रयोगस्योभयत्राप्यविशेषात् नित्यविधेः प्रयोजकत्वमात्रं बाधित्वा निविशते, यथा, 'यदि राजन्यं वैश्यं वा याजयेत, स यदि सोमं बिभक्षयिष्येत्, न्यग्रोधस्तिभिनीराहृत्य ताः संपिष्य दध्न्युन्मृज्य तमस्मै भक्षं प्रयच्छेत्' इति नित्यसोमं विकृत्यैव निविशते; न तावता नित्यप्रयोगस्यानित्यतापत्तिः — एवमिहापि न विरोध इति भावः। **न त्वेकस्ये**ति। फलमिति शेषः।

### सर्वथापि त एवोभयलिङ्गात् ३-४-३४.

भाष्ये **कर्मस्वरूपभेदे प्रमाणाभावाच्चेति**। मासाग्निहोत्रे सन्निहिताग्निहोत्रहोमासम्भवेनानुवादत्वासम्भवेन विधित्वे सिद्धे विहितस्य विधानायोगेन विहितात् प्रसिद्धाग्निहोत्रहोमादस्य होमस्यान्यत्वसिद्धौ तत्र वर्तमानमाख्यातपरतन्त्रमग्निहोत्रमिति नाम न प्रसिद्धाग्निहोत्रप्रत्यभिज्ञापनसमर्थमिति तत्र प्रकरणभेदात् कर्मान्तरत्वमस्तु नाम। इह तु यज्ञादिषु विधेरश्रवणात् विद्यायामेव विधिश्रवणेन न प्रसिद्धयज्ञापेक्षया एषां भेदः। नन्विहापीष्यमाणविद्योद्देशेन यज्ञादिकमेव विधेयम्; न तु विद्या। तस्याः फलत्वेन विधेयत्वायोगात् अग्निहोत्रतुल्यत्वमेव। न च प्रसिद्धस्यैव यज्ञादेः फलसम्बन्धितया विधानमस्त्विति वाच्यम् — तर्हि प्रसिद्धस्यैवाग्निहोत्रस्य माससम्बन्धितया विधानप्रसङ्गात्। अतो मासाग्निहोत्रवत् प्रकरणान्तरात् भेद एव स्यादिति चेन्न — मासाग्निहोत्रस्य प्रसिद्धाग्निहोत्रभेदवत् इह यज्ञादिशब्दोपात्तस्य प्रसिद्धयज्ञादेरन्यत्वे प्रसिद्धयज्ञादीनां मध्ये कस्य रूपमतिदिश्यत इति दुर्ज्ञानत्वात् यज्ञदिनाम्ना द्रव्यदेवताद्यतिदेशे देवतोद्देश्यकद्रव्यत्यागत्वादिरूपयज्ञादिशब्दप्रवृत्तिनिमित्तप्राप्तेरनिवार्यत्वेन विधेयस्य कर्मणो यज्ञादिभिन्नत्वासम्भवाच्च, 'यज्ञोऽध्ययनं दानमिति प्रथमः', 'यज्ञानां जपयज्ञोऽसि', भोक्तारं यज्ञतपसाम्' इत्यादिष्विव प्रसिद्धयज्ञादिपरत्वमेव युक्तमिति भावः।

### अनभिभवं च दर्शयति ३-४-३५.

**आदिशब्दो यज्ञादिवाक्यपर** इति। यज्ञादीनां प्रतिपादकं वाक्यं यज्ञादिवाक्यम्, 'कषाये कर्मभिः पक्वे' इत्यादिकं गृह्यते। **अङ्गत्वं वदतेति**। अयमिहान्वयः — अङ्गत्वं वदता, 'यज्ञेन दानेन' इत्यादिना ये निर्दिष्टाः,

तानेवाङ्गत्वेन किञ्चित्कारं वदत् वाक्यमपि यज्ञादिपर्याय[1]धर्मकर्मादिशब्देन निर्दिशतीत्यर्थ इति । ततश्च तत्रापि वाक्ये प्रसिद्धविलक्षणधर्मभ्रान्तिः [न?] कार्येति भावः । **सिद्धवदिति** । सिद्धवन्निर्देशरूपादित्यर्थः । 'अग्निहोत्रं जुहोति' इत्यादौ हि साध्यावस्थार्थाभिधायित्वस्वभावेनाख्यातेनापूर्वं रूपमुत्पाद्यते ; नैवं कृदन्तेषु यज्ञादिशब्देष्वित्यर्थः ।

इति विहितत्वाधिकरणम् ।

---

## (९) विधुराधिकरणम्

अन्तरा चापि तु तद्दृष्टेः ३-४-३६.

**अकृतदार इति** । समावृत्य अकृतविवाह इत्यर्थः ।

अतस्त्वितरत् ज्यायो लिङ्गाच्च ३-४-३९.

भूयोधर्माल्पधर्मकयोर्भक्तिप्रवृत्त्योर्व्यभिचारादाह — **शक्तमिति** । **पारिव्राज्यव्यावृत्त्यर्थमिति** । ननु मृतभार्यस्याकृतदारस्य वा दारालाभेन दारसाध्याश्रमासम्भवेऽपि संन्यासाश्रमस्य सम्भवात् किमित्यनाश्रमित्वं सोढव्यमिति शङ्काव्यावृत्त्यर्थम् **अवैराग्ये सतीत्युक्तमित्यर्थः** ।

**परेचेत्यादि** । **आश्रमबहिष्ठब्रह्मचर्यास्मरणपरमिति** । आश्रमासाधारणधर्मबहिर्भूतब्रह्मचर्यास्मरणपरमित्यर्थः । यद्यपि शाङ्करभाष्ये संवर्तकप्रभृतीनां च ब्रह्मचर्यादियोगात् अनपेक्षिताश्रमकर्मणामपि महायोगित्वं स्मर्यत इति महायोगित्वस्यैव स्मर्यमाणत्वमुक्तम् ; न तु ब्रह्मचर्यायाः — तथापि ब्रह्मचर्यात्ततो महायोगित्वं स्मर्यत इत्युक्ते महायोगिनो ब्रह्मचर्या स्मर्यत इत्युक्तप्रायत्वात् तथोक्तमिति द्रष्टव्यम् । ननु ब्रह्मचर्यायोगात् अनपेक्षिताश्रमकर्मणां महायोगित्वं स्मर्यत इति किमभिप्रेतम्? ब्रह्मचर्यायोगात् महायोगित्वं स्मर्यत इत्यन्वयोऽभिप्रेतः । ततश्च 'अपि स्मर्यत' इति सूत्रस्य 'विशेषानुग्रहश्च' इति सूत्रस्य चासाधारणधर्मानुग्राह्यत्वपरत्वमिति —

---

1. यज्ञादिपर्यायेण धर्मः, कर्म इत्येवं रूपशब्देनेत्यर्थः ।

उत नग्नचर्यायोगादनपेक्षिताश्रमकर्मणामित्यन्वयोऽभिप्रेतः । ततश्च 'अन्तरा चापि तु तद्दृष्टेः' इति सूत्रस्य च 'अपि स्मर्यते' इति सूत्रस्य चाश्रमकर्मानपेक्षत्वपरत्वमिति विकल्पमभिप्रेत्य प्रथमं दूषयति – **विद्यायाः साधारणधर्मानुग्राह्यत्व** इति । **अतः सूत्रद्वयस्येति** । साधारणधर्मानुग्रहपरत्व इति शेषः । द्वितीयं दूषयति – **उन्मत्तचर्यास्मरणेनेति** । **दृष्टे सम्भवतीति** । आश्रमकर्मसाध्यस्यादृष्टस्यानेनानुत्पत्तेः माहात्म्याच्छादनं दृष्टमेव प्रयोजनमिति भावः । **विद्यन्तरादर्शनादिति** । "तपसा ब्रह्मचर्येण श्रद्धया विद्यया आत्मानमन्विष्य" इति भावः ।

इति विधुराधिकरणम् ॥



## [१०] तद्भूताधिकरणम्

तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात् तद्रूपाभावेभ्यः ३-४-४०.

**अवकीर्णिपशुश्च तद्वदिति** । "अवकीर्णिपशुश्च तद्वदाधानस्याप्राप्तकालत्वम्" (६-८-२२) इति जैमिनिसूत्रम् । अवकीर्णिनां = ब्रह्मचर्यप्रच्युतानाम्, "ब्रह्मचार्यवकीर्णी नैर्ऋतं गर्दभमालभेत" इति स्मृतिविहितनैर्ऋतपशुरूपं प्रायश्चित्तं सिद्धं कृत्वा तत्राग्निर्विचारितः । तदधिकरणमित्थम् – 'यदाहवनीये जुहोति' इति सर्वेषां होमानामाहवनीयाधारत्वविधेः अवकीर्णी यथाऽवकीर्णः तया सह वा, भार्यामधिगम्य वा अग्नीनाधायाहवनीयेऽवकीर्णिपशुं करोत्विति पूर्वपक्षे 'जायापती अग्निमादधीयाताम्' इत्याधानस्य दम्पतिकर्तृकत्वस्मरणेन परस्त्रिया सहाग्न्याधानासम्भवात्, 'अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत्' इत्यस्खलितब्रह्मचर्यस्य विवाहविधानेन अकृतप्रायश्चित्तस्य विवाहायोगाच्चाग्न्याधानासम्भवात् उपनयनहोमवत् लौकिकाग्नावेव अवकीर्णिपशुरिति । पूर्वाधिकरणे – लौकिकाग्नावेवोपनयनहोमः = समावर्तनानन्तरं श्रुतस्य दारपरिग्रहस्योपनयनात्पूर्वमसम्भवेन अग्न्याधानरहितस्य माणवकस्याहवनीयाभावात् लौकिकाग्नावेवोपनयनहोम इति निरूपितम् । तदर्थः सूत्रे तद्वदिति परामृश्यते ।

उपपूर्वमपीत्येके भावमशनवत् तदुक्तम् ३-४-४२.

**इदं चोद्यसूत्र**मिति । अस्योपपातकत्वप्रतिपादनपूर्वकप्रायश्चित्तसद्भावप्रतिपादनमुखेन ब्रह्मविद्याधिकारप्रतिपादनपरत्वादेवमुक्तम् । प्रायश्चित्तसद्भावमात्रप्रतिपादनपरत्वे तु सिद्धान्तसूत्रत्वमेव । न हि सामान्यमुखेन प्रवृत्तौ नैर्ऋतपशुः, 'आरूढो नैष्ठिकं धर्मं' इति स्मृत्या विशेषविषययापि न सङ्कोचमर्हति । स्मृतेर्नैष्ठिकरूपब्रह्मचारिविशेषविषयत्वेऽपि, 'प्रायश्चित्तं न पश्यामि' इति प्रायश्चित्तदर्शनाभावेन प्रायश्चित्ताभावानुमानम्, तेन च श्रुत्यनुमानमिति विलम्बद्वयमस्ति; 'यो ब्रह्मचार्यवकिरेत' इति प्रायश्चित्तश्रुतेः सामान्यमुखेन प्रवृत्ततया सामान्यद्वारा विशेषपर्यवसानमित्येक एव विलम्ब इति प्रायश्चित्तश्रुतेरेव बलीयस्त्वम् । ततः 'प्रायश्चित्तं न पश्यामि' इति स्मृतिः संव्यवहार्यतापादकप्रायश्चित्ताभावपरैवाभ्युपगन्तव्या । ततश्च प्रायश्चित्तसद्भावमात्रपर्यवसितत्वे न चोद्यसूत्रत्वम् । तन्मुखेन विद्याधिकारप्रतिपादनपर्यन्तत्वमस्य सूत्रस्य प्रकृतोपयोगाद्वक्तव्यमित्यभिप्रेत्य चोद्यसूत्रत्वमुक्तमिति द्रष्टव्यम् । ननूपकुर्वाणस्येव नैष्ठिकादीनां मध्वशननिषेधस्यादर्शनात् कथं साम्यमित्याशङ्क्याह — भाष्ये **तदुक्तं स्मृतिकारैरि**ति । **प्रायश्चित्तं च परामृशती**ति ।

ननु प्रायश्चित्तं न प्राङ्निर्दिष्टम्; ब्रह्मचर्याग्नीन्धनभैक्षचरणसत्यवचनमधुमांसगन्धमाल्यादिस्वप्नाञ्जनाभ्यञ्जनयानोपानच्छत्रकामक्रोधलोभमोहवाद (द्य ?) वादनस्नानदन्तधावनहर्षनृत्तगीतादिवर्जनस्यैव प्राङ् निर्दिष्टत्वात् । तद्व्याख्यातृभिश्च, "उत्तरेषामप्याश्रमाणामिदं वृत्तं द्रष्टव्यम् । किमविशेषेण, नेत्याह अविरोधीति । यत् स्वाश्रमाविरुद्धं द्यूतादिवर्जनं तदेव भवति; न तु विरुद्धम् । अतो नाग्नीन्धनं प्रव्रजिते प्राप्नोति; न गुरुकुलवासो वैखानसे प्राप्नोति; न ब्रह्मचर्यं गृहस्थे प्राप्नोति" इति व्याख्यातम् । ततश्च प्रायश्चित्तस्याप्रकृततया न, एतच्छब्दस्य प्रायश्चित्तपरामर्शित्वं सम्भवति । अत एव, 'स्वाश्रमाविरोधिशब्दः स्त्रीसंसर्गादिनिमित्तप्रायश्चित्तादेः गृहस्थेष्वनापातार्थ इति ग्रन्थोऽप्यसङ्गतः । स्त्रीसंसर्गादिनिमित्तप्रायश्चित्तादेः प्रागनुक्तेरिति चेत् — अत्राहुः । ब्रह्मचर्यस्यातिदेशे, 'गर्दभेनावकीर्णी निर्ऋतिं चतुष्पथे यजेत । तस्याजिनमूर्ध्ववालं परिधाय लोहितपात्रः सप्त गृहान् भैक्षं

चरेत् कर्माचक्षाणः । संवत्सरेण शुध्येत्' इति प्रायश्चित्तप्रकरणे वक्ष्यमाणस्य प्रायश्चित्तस्य, 'सापवादकमेकं शास्त्रम्, कार्यकालं संज्ञापरिभाष' मिति न्यायेन तदेकवाक्यतापन्नतया ब्रह्मचर्योपदेशे तत् प्रायश्चित्तमप्यतिदिष्टं भवतीत्यभिप्रायेण, "प्रायश्चित्तं च परामृशती" त्युपपत्तेरिति ।

ननु ब्रह्मचर्ये निर्दिष्टे, 'गर्दभेनावकीर्णी' इति प्रायश्चित्तप्रकरणगतस्योपदिष्टातिदिष्टब्रह्मचर्यसाधारण्येनोपदेशत एव प्राप्तिसम्भवात् 'उत्तरेषां चैतदविरोधि' इत्यनेनातिदेशो व्यर्थ इति चेत्—नूनं भवान् अनारभ्यविधानानाम्, 'प्रकृतौ वा द्विरुक्तत्वात्' इति न्यायमनालोचितपूर्वी । तथा हि सति उपदिष्टातिदिष्टजुहूसाधारण्येन पर्णताया अपि प्राप्तिप्रसङ्गात् । यदि च येनातिदेशेन जुहूः प्राप्यते, तेनैव पर्णताया अपि प्राप्तिसम्भवात् द्विरुक्तिदोषप्रसङ्गेन विकृतौ पर्णतोपदेशो व्यर्थ इति—तर्हि प्रकृतेऽप्युपदिष्टातिदिष्टब्रह्मचर्यसाधारण्येन प्रायश्चित्तोपदेशो व्यर्थः । यद्येवम्, उपकुर्वाणस्यापि ब्रह्मचर्यं नोपदिष्टम् । 'प्रागुपनयनात् कामचारवादभक्षो हुतात् ब्रह्मचारी' त्यनुपनीतस्यैव ह्युपदिष्टम् । उपकुर्वाणे तु, "उक्तं ब्रह्मचर्यम् । अग्नीन्धनभैक्षचरणे" इत्यादिनातिदिश्यते । अत उपकुर्वाणस्यापि ब्रह्मचर्यमतिदिष्टमिति कृत्वा अनुपनीतब्रह्मचर्य एव प्रायश्चित्तमुपदेशतः प्राप्नोति, नोपकुर्वाणब्रह्मचर्येऽपीति चेत्—मा भूत् ब्रह्मचर्यमुपदिष्टम्; मा च भूत् प्रायश्चित्तमपि । तथाप्यनुपनीते उपदिष्टस्य प्रायश्चित्तस्य, 'उक्तं ब्रह्मचर्यमग्नीन्धनभैक्षचरणे' इत्यनेनोपकुर्वाणेऽतिदिष्टतया तस्य, 'उत्तरेषां चैतदविरोधि' इत्यनेन परामर्शे दोषाभावात् ।

ननु 'अथातोऽग्निमग्निष्टोमेनानुयजन्ति तमुक्थ्येन तमतिरात्रेण तं द्विरात्रेण' इत्युपदेशत एव अग्नेरग्निष्टोमोक्थ्यादिसाधारण्यमुपदिश्यते । ततश्च तदाश्रिताः श्येनाकृत्यादिगुणकामाः सर्वसाधारणा भवन्तीतिवत् 'उत्तरेषां चैतदविरोधी' त्यस्यापि 'तमुक्थ्येन तमतिरात्रेण' इत्यादिनिर्देशतुल्यतया ब्रह्मचर्यस्योपदेशत एव प्रायश्चित्तस्य सर्वसाधारणत्वेन नातिदेशतः प्राप्तस्य प्राप्तिरिति चेन्न—इष्टापत्तेः । अतिदेशतोऽपि प्राप्तिमपेक्षमाणानामुपदेशतः प्राप्तिर्लभ्यते चेत्—कथमनिष्टाय सा स्यात् ।

बहिस्तूभयथापि स्मृतेराचाराच्च ३-४-४३.

भाष्ये **कर्माधिकारानुगुणशुद्धिहेतुप्रायश्चित्तं न संभवतीति** ।

"बालघ्नांश्च कृतघ्नांश्च विशुद्धानपि धर्मतः ।
शरणागतहन्तॄंश्च स्त्रीहन्तॄंश्च न संवसेत्" ॥ इति मनुवचनम् ।

न संवसेत् = अन्योन्यगृहभोजनादिसंव्यवहारं न कुर्यादित्यर्थः । 'नास्मिन् लोके प्रत्यापत्तिर्विद्यते; कल्मषं तु निहन्यते,' 'प्रायश्चित्तैरपैत्येनो यदज्ञानकृतं भवेत् । कामतोऽव्यवहार्यस्तु वचनादिह जायते ॥' इत्यादिस्मरणात् । अज्ञानकृतं च यद्भवेत्, तत्प्रायश्चित्तैरपैति । तत् कामाच्चेत् वचनादव्यवहार्यस्तु जायत इत्यर्थः । अतश्च, 'प्रायश्चित्तं न पश्यामी' ति स्मृतेरपि तदनुगुण एवार्थः ।

**परेत्वित्यादि** । प्रत्यवरोहः पूर्वाश्रमप्राप्तिः । **विद्याधिकारानधिकारसिद्ध्यर्थमिति** पूर्वेणान्वयः । **पूर्वाश्रमधर्म[1]स्वनुष्ठानचिकीर्षयेति** । पूर्वाश्रमधर्मेषु यागहोमादिषु सुखानुष्ठेयताप्रयुक्तचिकीर्षयेत्यर्थः । **रागादिनेति** । गृहस्थोऽहं पत्न्यादिपरिवृतः स्यामित्याशयेनेत्यर्थः । **नियमश्रुत्येति** । तेषां 'तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्यः' इति सूत्रपाठ इत्यर्थः । तद्भूतस्य ऊर्ध्वरेतस आश्रमान् प्राप्तस्य, नातद्भावः=न ततः प्रच्युतिः; न ततः प्रत्यवरोह इति यावत् । 'अत्यन्तमात्मानमाचार्यकुलेऽवसादयन्नरण्यमियान्न पुनरेयात्' इति नियमादित्यर्थः । [ अनद्रूपात् ? ] तथा 'ब्रह्मचर्यं समाप्य गृही भवेत् गृही भूत्वा वनी भवेत्' इत्यारोहवचोदर्शनवत् अवरोहवचसोऽदर्शनादित्यर्थः । अभावाच्च = शिष्टाचाराणामभावाच्चेत्यर्थः । इत्येवं नियमश्रुत्या, अतद्रूपेण, अभावेन च प्रत्यवरोहाप्रामाणिकत्वं सिद्धान्तयन्तीत्यर्थः ।

**तदप्रामाणिकत्वं सिद्धान्तयन्तीत्यस्यानन्तरम्**, "न चाधिकारिकमपी' त्यधिकरणान्तरम् । नैष्ठिकादीनामाश्रमभ्रष्टानां प्रायश्चित्तसम्भवासम्भवपरं वर्णयन्तोऽसम्भव इति सिद्धान्तयन्ती" ति केषुचित्पाठो दृश्यते । स त्वपग्रन्थः । तदंशो, उत्तरत्र दूषणस्य कस्याप्यनुक्तेः, परमते च 'न चाधिकारिकमपि पतनानुमानात्तद-

1. अत्र कर्मानुष्ठानेत्युपलभ्यमानटीकापाठः ।

योगात्' इति सूत्रेण प्रायश्चित्तासम्भवं पूर्वपक्षीकृत्य, 'उपपूर्वमपीत्येके भावमशन-वत्तदुक्तम्' इति प्रायश्चित्तसद्भावः सिद्धान्तितः। 'बहिस्तूभयथापि' इति सूत्रं च कृतप्रायश्चित्तानामपि असंव्यवहार्यतापादनपरं पृथगधिकरणम्। अतो नायं परमतानुवादो भवितुमर्हतीति लेखकदोषायत्तः। केचित्तु 'बहिस्तूभयथापि' इत्यधिकरणे कृतप्रायश्चित्तस्याप्यसंव्यवहार्यताप्रतिपादनात् संव्यवहार्यतापादकप्रायश्चित्तासम्भवपरोऽयं ग्रन्थ इत्याहुः।

**सद्भावे प्रमाणविरुद्धत्वे** चेति। प्रामाणिकत्वाप्रामाणिकत्वयोरित्यर्थः। प्रामाणिकत्वरूपप्रथमाधिकरणपूर्वपक्षोत्थापकाभावात् प्रथमाधिकरणसंशयोऽनुपपन्न इति भावः।

**मूलविचार** इति। मूलभूतप्रायश्चित्तविचारे निर्णायकोत्तरसूत्रप्रतिपाद्यन्यायगर्भतयैकमधिकरणमित्यर्थः। **प्रच्युतिरस्ति नेति विचार** इति। प्रच्युतिः प्रामाणिकी अप्रामाणिकी वेति विचार इत्यर्थः।

इति तद्भूताधिकरणम्।

---

## [११] स्वाम्यधिकरणम्

स्वामिनः फलश्रुतेरित्यात्रेयः ३-४-४४.

**कर्माङ्गाश्रयाणीत्युक्त**मिति। प्रणयनाश्रितगोदोहनस्येव उद्गीथाश्रितस्योपासनस्याङ्गत्वाभावात् उद्गीथस्याश्रयत्वमात्रतयाऽङ्गित्वाभावादित्यर्थः। भाष्ये **उद्गीथोपासनफलस्य यजमानाश्रयत्वश्रवणादित्यर्थ** इति। इदमुपलक्षणम् — "तथा कामोऽर्थसंयोगात्" इत्यधिकरणे(      ), 'यदि कामयेत वर्षुकः पर्जन्यः स्यादिति नीचैः सदो मिनुयात्' इति विहितानां सदोमानाश्रितानां गुणानां फलं यजमानगाम्येव। यथा, त्र्यहं नाश्नीयादित्यादिकं तपः सत्यप्याध्वर्यवसमाम्नाने याजमानम्, तपसः प्रधानफलसिद्ध्यर्थत्वात् प्रधानफलस्य च याजमानत्वात् — तथा कर्माङ्गफलमपि

यजमानगाम्येव । कुतः? अर्थसंयोगात् । यजेतेत्यात्मनेपदेन साङ्गप्रधानफलस्य यजमानगामित्वश्रवणात् अङ्गाश्रितफलानामपि परम्परया तत्साध्यत्वादिति समर्थितत्वात् अङ्गाश्रितोपासनफलं यजमानगाम्येव । अतः 'वर्षति ह' इत्यादीनामपि वृष्ट्यादिफलानां यजमानगामित्वं सिद्धमिति द्रष्टव्यम् । **तदाश्रयस्य गोदोहनस्येति** । स आश्रयो यस्येति बहुव्रीहिः । 'यत्र हि गुणः कारकतां प्रतिपद्यते स आश्रयः' इति निर्वर्त्य एव मीमांसकानामाश्रयत्वव्यवहारात् निर्वर्तकतयोपादानं कर्तुमशक्यमित्यर्थः ।

## आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते ३-४-४५

भाष्ये **फलसाधनभूतस्येति** । भूतस्य=प्राप्तस्येत्यर्थः । फलसाधनगोदोहनोपासनादिगुणकामयुक्तस्येत्यर्थः । यद्वा **साङ्गस्येत्येतत्** अङ्गाश्रितानामप्युपलक्षणम् । ततश्च, 'तस्मै हि परिक्रीयत' इति सूत्रे **हिः** अप्यर्थः । उद्गीथाद्युपासनमार्त्विज्यम्; तस्मा अपि परिक्रीयते ऋत्विगिति सूत्रार्थ इति भाष्यकृतामाशयः । भाष्ये **साङ्गं कर्म ऋत्विग्भिरनुष्ठेयमित्यवगम्यत** इति । न चैवं प्रधानस्य द्रव्यत्यागात्मकस्य यागस्यापि ऋत्विक्कर्तृकत्वप्रसङ्ग इति वाच्यम् — यजमानद्रव्यस्य त्यागे ऋत्विजामसामर्थ्येन लिङ्गबलात् हविस्त्यागदक्षिणादानादिव्यतिरिक्त एव ऋत्विजां कर्तृत्वमिति सामर्थ्यादवसीयते । **न हि ऋत्विजाऽन्येनेति** । यदि शक्त्यशक्त्योरेव कर्तृनियमे नियामकत्वम्, तर्हि अध्वर्य्वादिना कार्यस्यापि यजमानेनापि कर्तुं शक्यत्वात् याजमानत्वप्रसङ्गः । अतश्च, 'शास्त्रफलं प्रयोक्तरि' इत्यधिकरणे (          ) द्वितीयपूर्वपक्षन्यायेन अशक्तस्यैव यजमानस्य ऋत्विग्द्वारा कर्तृत्वमित्यापतेत् । तस्मात् परिक्रयवचनबलादेवाङ्गानां यजमानभिन्नकर्तृकत्वं वक्तव्यम् । तादृशं वचनमुपासनेऽप्यविशिष्टमिति भावः । **वचननिबन्धनमिति** । 'गोदोहनेन पशुकामस्य प्रणयेत्' इत्यध्वर्युकर्तृकप्रणयने गोदोहनस्य कारकत्वविधायकवचनबलादित्यर्थः । गोदोहनस्याप्यध्वर्युकर्तृकव्यापारविषयत्वाभावे तत्कारकत्वासम्भवादिति भावः । प्रकृते तु परिक्रयवचनबलात् ऋत्विक्कर्तृकत्वसिद्धिरिति द्रष्टव्यम् । **अङ्गत्वे सति हि ऋत्विक्कर्तृकत्वमिति** । दक्षिणानतानामृत्विजां साङ्गप्रधानानुष्ठानापरपर्यायभावनाशब्दवाच्यप्रयोगाङ्गत्वात् न गुणकामेषु कर्तृत्वं सम्भवतीत्यर्थः । **ऋत्विक्कर्तृककर्मोपयोगित्वेनेति** । अङ्गभूतस्याप्युपासनस्य क्रतु-

प्रयोगाद्बहिरनुष्ठातुमशक्यत्वेन तत्प्रयोगमध्यपातित्वाविशेषात् परिक्रयस्य च चिकीर्षितसर्वार्थत्वावगमाच्चोद्गीथोपासनस्यापि ऋत्विक्कर्तृकत्वं सिद्धमिति भावः। **प्रोक्षणादिवदिति**। 'नीचैस्सदो मिनुयात्' इति प्रतिपादितसदोमानादिगुणा आदिपदेन परामृश्यन्ते। **अग्रयप्रायन्यायादिति**। 'तत्सामान्यादितरेषु तथात्वम्' इति न्यायादित्यर्थः। अग्रयप्रायन्यायोऽप्यत्रैव पर्यवसितः। **'तस्मादु हैवंविदुद्गाता ब्रूयात्'** इति। एवंवित् = अन्तरादित्ये अन्तरक्षिणि चोपदिष्टं परमात्मरूपं सर्वपापोदितत्वादिधर्मैः, देवलोककामावाप्तिफलाभ्यां सह विद्वानुद्गाता यजमानं प्रति ब्रूयात् कं ते कामम् = ऐहिकमामुष्मिकं किं फलमुद्दिश्य आगायानीति = तत्फलानुकूलोपासनसहितं गानं करवाणीति। हि = यस्मादेष एवोद्गाता कामगानस्य = अभिमतफलसाधनोपासनसहितगानस्य ईष्टे। य एवं विद्वान् = अधिदैवताध्यात्मोपदिष्टपरमात्मस्वरूपं विद्वान् साम गायतीत्यर्थः। अत्रोद्गातृकर्तृकमेवोपासनं यजमानगामिफलजनकमिति स्पष्टं प्रतीतेः ऋत्विजां परिक्रीततया यजमानस्य प्रयोजककर्तृत्वसम्भवेन 'शास्त्रफलं प्रयोक्तरि' इति न्यायस्याप्यविरुद्धत्वादिति भावः।

इति स्वाम्यधिकरणम्।

---

## (१२) सहकार्यन्तराधिकरणम्

**सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ३ ४-४६.**

**मननस्य प्रवृत्तिरूपत्वेऽपीति**। यज्ञादिवदिति शेषः। **उक्तार्थान्तरं मननरूपमित्यस्यानन्तरम्**, "मुनिशब्दस्य प्रकृष्टमननशीले व्यासादौ प्रयोगदर्शनमर्थान्तरत्वमुपोद्बलयति, नेति" इति पाठोऽस्ति चेत्, समीचीनः। **किं मननं विधातुं योग्यमुत नेति**। सर्वाश्रमधर्माङ्गकविद्यासहकारितया विद्याङ्गभूतसर्वाश्रमधर्मवदिति शेषः; तस्यैवैतदधिकरणकृत्यत्वात्। अत्र च, 'अनस्सर्वेष्वाश्रमेषु स्थितस्यैवे' त्युपसंहारभाष्यस्यैव साक्षित्वात्। **किं मननस्येति**। मननशब्दो निदिध्यासनपरः। उत्तरत्रापि तथैवेति द्रष्टव्यम्। **यज्ञादिश्रुतिविरोध इति**।

आश्रमधर्मप्रतिपादकयज्ञादिश्रुतिविरोध इत्यर्थः। न चास्याः शङ्कायाः प्रकृतासङ्गतिः शङ्क्या; सर्वाश्रमाङ्गकविद्यायां सर्वाश्रमधर्मवत् तत्सहकार्यन्तरतया मौनं विधीयत इत्यस्य प्रकृततया प्रकृतासङ्गतेरभावात्। **किं कतिपयोक्तिरनुक्तानादरमूलैव स्यादिति।** वाजसनेयके, 'भैक्षं चरेत्' इति पारिव्राज्यधर्मोपदेशः, 'कुटुम्बे शुचौ देशे स्वाध्यायमधीयानः' इत्यादिच्छान्दोग्यविहितगार्हस्थ्यधर्मादिपरिसंख्यार्थः। एवं छान्दोग्यगतगार्हस्थ्यधर्मश्रुतिरपि वाजसनेयकविहितसंन्यासाश्रमधर्मादिपरिसंख्यार्था। स्वप्रदेशानुक्तधर्मप्रतिक्षेपार्थेति यावत्। **मननस्य यज्ञादिश्रुतिविरुद्धतया विधातुमयोग्यत्वादित्यादि।** अयमर्थः — निदिध्यासनस्य स्वाश्रमधर्मनिरपेक्षतया सर्वाश्रमधर्माङ्गकविद्यायामाश्रमधर्मदृष्टान्तेन मननस्य विधातुमयोग्यत्वात्, अथ मुनिरिति मुनिशब्दो मननविधायकत्वायोगेन प्राप्तपाण्डित्यानुवादीति मौनमनूद्यत इति फलं स्यादिति। एवं हि क्रमः — किमस्मिन् वाक्ये मौनं विधीयते उतानूद्यते। किं पाण्डित्यमेव मौनम्, उतार्थान्तरं मननरूपमिति। किं मुनिशब्दस्य प्रकृष्टमननशीले व्यासादौ प्रयोगदर्शनमर्थान्तरत्वमुपोद्बलयति, नेति। तथा किं मननं सर्वाश्रमधर्माङ्गकविद्यासहकारितया विद्याङ्गभूतसर्वाश्रमधर्मवद्विधातुं योग्यम्, उत नेति। तदर्थं च विद्या किं सर्वाश्रमधर्माङ्गिका, उत नेति। तदर्थं च विद्यायाः सर्वाश्रमधर्मविरोधोऽस्ति, नेति। किं विद्या सर्वकर्मप्रतिक्षेपिका, नेति। किं वाजसनेयके, 'भैक्षं चरेत्' इति पारिव्राज्यधर्मोपदेशः, छान्दोग्ये, 'कुटुम्बे शुचौ देशे स्वाध्यायमधीयान' इति गार्हस्थ्यधर्मोपदेशश्च स्वस्वप्रदेशानुक्तपरस्पराश्रमधर्मप्रतिक्षेपार्थः, उतानुक्ताश्रमधर्मप्रदर्शनार्थ इति। यदा परस्परप्रतिक्षेपार्थः, तदा विद्यायाः सर्वाश्रमधर्मसापेक्षतया सर्वाश्रमधर्माङ्गकत्वसम्भवात् सर्वाश्रमधर्माङ्गिकायां विद्यायां सर्वाश्रमधर्मवत् मननं विधातुमयोग्यम्, यदि च प्रकृष्टमननशीले व्यासादौ मुनिशब्दप्रयोगदर्शनमर्थान्तरत्वमुपोद्बलयति, तदा पाण्डित्यस्याप्राप्तत्वात् विधेयत्वमिति।

भाष्ये **विद्यासहकारित्वेन गृह्यते** इति। अत एव **विध्यादिवदिति** दृष्टान्तोपादानं सहकार्यन्तरत्वांश एव; न तु विधित्वांशेऽपीति भावः। सहकार्यन्तरविधित्वांशे विध्यादेः दृष्टान्तत्वं वक्तव्यमिति यद्यभिलाषः, तदा विध्यादिवदित्यस्य बाल्यपाण्डित्यवदित्यर्थो वर्णनीयः; तयोर्मौनविध्यादित्वादिति द्रष्टव्यम्।

भाष्ये **पक्षेण प्रकृष्टमननशील** इति । **पक्षेण प्रयोगः** पाक्षिकप्रयोग इत्यर्थः । यद्वा पक्षः परिग्रहः — पक्ष परिग्रह इति धातुः — आदरेण स्वीकारः । तेन हि मननं प्रकृष्यते । प्रकर्षश्च मननस्य स्नेहपूर्वकतया । चिरविहितनायिकानायकविषयस्येव निरन्तरमनुवर्तमानत्वरूप [ पः । तादृशश्च मनन ? ] मुपासनालम्बनस्य शुभाश्रयस्य भगवद्विग्रहादेः पुनः पुनः संशीलनम् । तदपि विद्यानिष्पत्त्यर्थमेव । सति ह्यस्मिन् उपासनकालेऽपि तद्विषयचित्तैकाग्र्यात् विद्या दृढीभवति । यस्योपासनकालेऽपि चेतसि समयान्तरचिन्तितविषयान्तरानुप्रवेशात् न विद्या दृढीभवेदिति भावः ।

भाष्ये **परिपूर्णं परिशुद्धं च विदित्वेति** । ऊहापोहक्षमा धीः पण्डा । साऽस्य सञ्जातेति पण्डितः । तस्य कर्म पाण्डित्यम् । श्रवणमननानन्तरं तदभ्यास-पाटववशात् लब्धया ऊहापोहक्षमया नवनवोन्मेषशालिन्या प्रतिभया श्रुतमतार्थानु-कूल्येन सर्वकालोपनिषत्तात्पर्यप्रतिष्ठापनरूपम् ।

कृत्स्नभावात्तु गृहिणोपसंहारः ३-४-४७.

भाष्ये **यावदायुषं गार्हस्थ्यधर्मेणेति** । यावत् आयुर्यस्येति बहुव्रीहिणा यावदायुश्शब्दः कालपरः । कालाध्वनोरिति द्वितीया ।

**मौनं ज्ञानातिशयरूपमित्यर्थ** इति । 'मौनं वानप्रस्थ' मित्यत्र तु आश्रमवाचिपदान्तरसाहचर्यात् पारिशेष्यात् तत्रोत्तराश्रमपरत्वेऽपीह मौनशब्दस्य ज्ञानातिशयार्थवाचित्वमेवेति भावः । **बाल्यादिप्रधानेऽपीति** । बाल्यादिप्रधाने सत्यपीत्यर्थः । **उपदेशाविशेषादिति** । "तप एव द्वितीयो ब्रह्मचार्याचार्यकुल-वासी तृतीयः" इत्यादिनेत्यर्थः । **बहुवचनमिति** । सैवं बहुवचनमित्यर्थः । **षष्ठ्यन्ताध्याहारप्रसङ्ग** इति । दर्शपूर्णमासादीनां विध्यादिवदित्यर्थः । ननु विध्यादिशब्दः प्रधानवाची, विध्यन्तशब्दोऽङ्गवाची । ततश्च विध्यादिवत् = विध्यादाविव प्रधान इवेत्यर्थ इति वाचस्पत्युक्तौ को दोषः ? इति चेन्न - विध्यन्त-शब्दस्याङ्ग इव विध्यादिशब्दस्य न प्रधाने प्रसिद्धिरिति तात्पर्यात् । **तत्कारिषु प्रयोगादिति** । मुनिशब्दस्येति शेषः । शङ्कते – **तस्य विद्यावत्त्वसिद्धमिति** । निष्पन्नविद्यस्य शुभाश्रयमननं सिद्धमेव; तदभावे विद्यानिष्पत्तेरभावादित्यर्थः ।

**प्रारब्धविद्यविषयत्वादिति ।** निष्पन्नविद्यविषयत्वाभावादित्यर्थः । **ब्राह्मणशब्दश्च न जातिवाचीति ।** पूर्वपक्षे ब्राह्मणशब्दस्य जातिवचनत्वात् 'कथं ब्राह्मण' इत्यत्र यथा न विधेयत्वम्, एवम् "अथ मुनिः" इत्यत्रापीति पूर्वपक्षे उपन्यस्तब्राह्मणशब्दजातिवचनत्वस्य सिद्धान्ते अप्रतिक्षेपात् ब्राह्मणशब्दस्य जातिवाचित्वं परेषां सिद्धान्तेऽप्यभिमतमिति मत्वा इदं दूषणमुक्तमिति द्रष्टव्यम् । न च कल्पतरौ ब्राह्मणः = ब्रह्माहमस्मीति साक्षात्कारवानित्यर्थ उक्त इति वाच्यम् – तस्याधुनिकत्वात् ।

**तृतीयसूत्रव्याख्यानमप्ययुक्तमिति ।** भास्करीयमिति शेषः । **पारिव्राज्यप्रस्तावादिति ।** पारिव्राज्यस्य प्रकृतत्वादित्यर्थः । **मौनस्य परस्तात् गार्हस्थ्यस्येति ।** दहरविद्यायां छान्दोग्ये – "मौनमित्याचक्षते ब्रह्मचर्यमेव तत्" इति मौनोपदेशानन्तरं सर्वान्ते, "स खल्वेवं वर्तयन्" इति गार्हस्थ्येनोपसंहारादित्यर्थः । **द्वितीयसूत्रनिर्वाहस्योत्तरं दत्तमिति ।** परमतदूषणावसर इति शेषः ॥

इति सहकार्यन्तरविध्यधिकरणम् ।

---

## [ १३ ] अनाविष्काराधिकरणम्

**अनाविष्कुर्वन्नन्वयात् ३-४-४९.**

भाष्ये **बालस्य यत् स्वभावानाविष्करणरूपं कर्मेति ।** न चानाविष्करणस्याभावरूपस्य कथं बाल्यशब्दार्थत्वमिति शङ्कनीयम् – आविष्करणविरोधिक्रियाविशेषस्यैवानाविष्करणशब्दार्थत्वात् । **एतदाश्रमनिष्ठस्य विशेषतो नियमदर्शनादित्यर्थ इति ।** ब्रह्मविद्यानिष्ठस्येत्यर्थः ॥

इति अनाविष्काराधिकरणम् ।

## (१४) ऐहिकाधिकरणम्

ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् ३ ४-५०.

भाष्ये **ऐहिकमभ्युदयफलमुपासनमप्रस्तुतप्रतिबन्ध** इति। अयमत्रान्वयः— अभ्युदयफलमुपासनम् प्रस्तुतप्रतिबन्धे ऐहिकं भवतीति। **अभ्युदयफलं** मुक्तिव्यतिरिक्तफलमित्यर्थः। "एवं मुक्तिफलानियम" इति मुक्तिफलकचिन्तान्तरस्य प्रस्तोष्यमाणत्वादिह तद्व्यतिरिक्तमुपासनं सर्वं विवक्षितम्। **ऐहिकम्** इह जन्मनि भवम्। ऐहिकमित्यस्यैव विवरणमनन्तरमिति। अस्मिन्नेव जन्मनीत्यर्थः। न च सौत्रस्य ऐहिकशब्दस्य साध्यनिर्देशपरत्वे किमैहिकफलोपासनं स्वसाधनपुण्यकर्मानन्तरमेवोत्पद्यत इत्यैहिकशब्दस्य पक्षविशेषणत्वस्फोरकटीकाविरोध इति वाच्यम् — टीकागतैहिकशब्दस्य ऐहिकामुष्मिकसाधारणफलमात्रलक्षकस्य सौत्रैहिकपदात् भिन्नत्वात्। ऐहिकशब्दं हि लोके इह जन्मनि भवेऽपि प्रयुञ्जते; इह लोके भवेऽपि प्रयुञ्जते। सौत्रस्त्वैहिकशब्दः इह जन्मनि भवे वर्तते। तत्रैव प्रसिद्धिप्राचुर्यात्। अत एव योगसिद्ध्यधिकरणे (४-२ १२.) कारीर्यभिचारादेरैहिकत्वमेव; स्वर्गस्यामुष्मिकत्वमेव; पशुपुत्रादिरूपस्य फलस्यासति प्रतिबन्धे ऐहिकत्वम्, सति तु प्रतिबन्धे आमुष्मिकत्वमिति व्यवस्थापयन्ति। तत्रैहिकत्वं नाम एतज्जन्मभोग्यत्वम्; आमुष्मिकत्वं नाम जन्मान्तरभोग्यत्वम्; न त्वैहलौकिकत्वं पारलौकिकत्वं वा; पशुपुत्रादेः पारलौकिकत्वाप्रसिद्धेः। ततश्च सौत्रस्यैहिकशब्दस्य साध्यनिर्देशपरत्वमेव युक्तम्। पक्षविशेषणत्वाभ्युपगमे ऐहिकपदस्य ऐहिकफलसाधनोपलक्षकत्वं वक्तव्यम्। तत्राप्यामुष्मिकफलोपासनसङ्ग्रहाय लक्षणपरत्वमाश्रयणीयम्। साध्यवाचि च पदमध्याहर्तव्यम्। तस्य साध्यनिर्देशपरत्वे उपासनरूपस्य पक्षस्य प्रकृतत्वादेव नाध्याहारमपेक्षत इति सामञ्जस्यमस्ति।—

केचित्तु — अस्मिन् जन्मनि संभवतीत्येतावन्मात्रं न साध्यम्; येनेदं साध्यसमर्पकं स्यात्। किन्तु साधनानुष्ठानकालाव्यवहितोत्पत्तिकत्वम्। अत एव हि पुण्यानन्तरमेवोत्पद्यत इति भाष्यम्। अतश्च सर्वथा साध्यवाचिपदमध्याहर्तव्यमेव। ततश्च प्रकृतिमण्डलान्तर्वर्तिभोगफलकस्य। इहशब्दो हि सन्निकृष्टार्थवचनः।

मुक्तप्राप्यभगवल्लोकापेक्षया प्राकृतभोगस्थानभोगोपकरणानां सन्निकृष्टत्वेनैहिकशब्द-वाच्यत्वोपपत्तेः । न चैवं स्वर्गेऽप्यैहिकपदप्रयोगापत्तिः, एतादृशार्थविवक्षया प्रयोगे दोषाभावात् ॥ इति ऐहिकाधिकरणम् ।

---

## [ १५ ] मुक्तिफलाधिकरणम्

एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ३·४·५१.

**ऐहिकोपासनविषयत्वाभावमात्रे विरोध** इति । असन्मते मुक्ति-व्यतिरिक्तफलकोपासनविषयत्वात् पूर्वाधिकरणस्य ऐहिकोपासनमात्रविषयत्वम् । परमते तु सर्वविषयत्वमिति विरोध इत्यर्थः । **तद्देहपात** इति । विद्यादेहपात इत्यर्थः । **आपरोक्ष्ये तारतम्यसंभवादिति** । साध्यतारतम्याभावेऽपि साधनतार-तम्यसत्त्वात् विलम्बाविलम्बरूपानियम उपपद्यत इति भावः ॥

इति मुक्तिफलाधिकरणम् ।

---

इति तात्पर्यचरणारविन्दचञ्चरीकैः वात्स्यानन्तार्यसेवासमधिगतशारीरक-मीमांसाभाष्यहृदयैः परकालमुनिकृपालब्धपारमहंस्यैः श्रीमदीशोपनिषद्भाष्यकारैः श्रीमद्रङ्गरामानुज-मुनिभिः अनुगृहीतायां श्रुतप्रकाशिका व्याख्यायां भावप्रकाशिकायां तृतीयस्याध्यायस्य चतुर्थः पादः ॥ अध्यायश्च समाप्तः ॥

---

श्रीमते रङ्गरामानुजमहादेशिकाय नमः ॥
श्रीभूसमेतश्रीनिवासपरब्रह्मणे नमः ॥
शुभमस्तु श्रीरस्तु ॥



श्रीः

श्रीमते रङ्गरामानुजमहादेशिकाय नमः ।

श्रीभगवद्रामानुज श्रीमन्निगमान्तमहादेशिक श्रीमद्रङ्गरामानुजमुनिभ्यो नमः ।

# अथ चतुर्थेऽध्याये प्रथमः पादः ।

## ( १ ) आवृत्त्यधिकरणम् ।

——: ❀ :——

आवृत्तिरसकृदुपदेशात् ४ १-१.

**साध्यसाधनभावसंबन्धज्ञापनार्थमि**ति । द्वयोरपि संबन्धिनोरेकान्याय-प्रतिपाद्यत्व एव एकप्रतीत्युपारोहः सुशक इति भावः । **कर्मयोगापेक्षया च साध्यत्वमस्तीति । इतिर्हेतौ । चो** भिन्नक्रमः । कर्मयोगापेक्षया च साध्यत्व-सत्त्वाच्च अत्र चिन्ता युक्तेत्यर्थः । **सकृत् कृतं शास्त्रार्थ** इति पाठः ।

भाष्ये **असकृदावृत्तौ प्रमाणाभावा**दिति । अत एव पूर्वतन्त्रे प्रयाजादीनि फलभूमार्थिना पुनःपुनः प्रयोज्यानीति, "क्रतुवद्वाऽनुमानेनाभ्यासे फलभूमा स्यात्" इति पूर्वपक्षं कृत्वा, "सकृद्वा कारणैकत्वात्" इति सकृदनुष्ठानेनैव कार्यसिद्धेरङ्गमात्रावृत्तौ फलभूयस्त्वे प्रमाणाभावाच्चानावृत्तिरिति (११-१ ५.) सिद्धान्तितमिति भावः । अत एव, "कर्मण्यारम्भभाव्यत्वात् कृषिवत् प्रत्यारम्भं फलानि स्युः" इति (११-१ ३.) न्यायेन फलभूमार्थतया काम्यानामावृत्तिवत् वेदनस्यापि आवृत्तिरिति शङ्का परास्ता ; मोक्ष-रूपफले तारतम्याभावात् । भाष्ये **न चावघातादिव**दिति । 'व्रीहीनवहन्ती' ति श्रुतस्यावघातस्य, दृष्टे संभवति अदृष्टकल्पनाया अन्याय्यत्वादिति न्यायेन क्रत्वपेक्षित-तण्डुलनिष्पत्त्यर्थत्वात्, तण्डुलनिष्पत्तेश्चावघातावृत्तिमन्तरेणासंभवात् अश्रुताप्यवघाता-वृत्तिः कार्येति, "क्रियाणामर्थशेषत्वात् प्रत्यक्षे तन्निवृत्त्याऽपवर्गः स्यात्" (११-१-४) इति साधितम्; तद्वदिति भावः । भाष्ये **उपासीत उपसंहितव** इति । ननु छागपशुन्यायेन संवर्गविद्यागतस्य, 'यस्तद्वेद यत्, स वेद' ति वेदनशब्दस्य 'यां देवतामुपास्से'

इति उपसंहारवशात् उपासनारूपत्वपर्यवसानमस्तु नाम। न तावन्मात्रेण आनन्द-वल्ल्याद्युक्तब्रह्मवेदनानामावृत्तिः सिध्यति; विद्याभेदात; न हि प्रतिवसन्तं ज्योतिष्टोमस्यावृत्तिविधानात् द्वादशाहादीनामावृत्तिः सिध्येदिति चेत् — भ्रान्तोऽसि, कचिद्विद्याविशेषे आवृत्तेः श्रवणात् अन्यत्र विद्यान्तरेऽपि आवृत्त्या भवितव्यमिति यदि प्रतिपाद्येत, तदेदं चोद्यं स्यात्; नैवमत्र प्रतिपाद्यते। अपि तु विदिना उपक्रान्तस्योपासिना सिद्धवत्कृत्य अनुवादरूपात् अन्यार्थदर्शनरूपात् लिङ्गात् वेदान्तेषु वेदनशब्दः आवृत्तवेदनपरः। यथा, 'न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्त' इति सुकृतस्यापि पाप्मशब्दपरामर्शरूपात् लिङ्गात् वेदान्तेषु पाप्मशब्दः सुकृतदुष्कृतसाधारण इत्युक्तौ ईदृशोपालम्भस्याप्रसक्तेः।

**'यस्तद्वेदे'** ति। अत्र वक्तव्यं सर्वं लघुसिद्धान्ते प्रतिपादितम्; तत्रैव द्रष्टव्यम्। भाष्ये **समानार्थेष्विति**। मोक्षसाधनविधिष्वित्यर्थः। **छागो वा मन्त्र-वर्णादिति न्यायोऽभिप्रेत** इति। ननु 'छागस्य वपायाः' इतिं मन्त्रस्य नित्य-तयाङ्गत्वप्रतीतेः तदङ्गत्वं मा बाधीति सामान्यवाचिपशुशब्दस्य, मान्त्रवर्णिकछाग-रूपविशेषपर्यवसानं युक्तम्। इह तु नानाप्रकरणाम्नातानां वेदनध्यानोपासनादि-मोक्षसाधनविधीनामेकार्थपर्यवसायित्वस्यानपेक्षिततया कथमत्र छागपशुन्यायावतारः। न च कासाञ्चिद्विद्यानामावृत्त्यनपेक्षाणामेव मोक्षसाधनत्वे मोक्षसाधनध्यानादिविधीना-मननुष्ठानलक्षणाप्रामाण्यप्रसङ्ग इति वाच्यम् — प्रपत्तिवत् आवृत्तिनिरपेक्षविद्यायाः महाविश्वासशाल्यधिकारविशेषविषयतोपपत्त्या ध्यानपर्यवसायित्वस्य वेदनादिविधी-नामनावश्यकत्वादिति चेन्न — अनन्यथासिद्धप्रमाणबलेन प्रपत्तावधिकारिविशेष-परिकल्पनेऽपि वेदनविधिस्थले तादृशाधिकारिविशेषकल्पकाभावेन वेदनविधीना-मेकार्थपर्यवसानस्यावश्यं वक्तव्यत्वेन छागपशुन्यायप्रवृत्तौ दोषाभावात्।

**उपदेशक्रियाया** इति। उपदेशक्रियामात्रस्यावृत्तिर्विवक्षिता; न तु श्रवणादिविशिष्टोपदेशक्रियाया इत्यर्थः। ततश्च 'श्रोतव्यो मन्तव्यो निदिध्यासि-तव्य' इत्युपदेशक्रियाया आवृत्तिरस्तीति भावः। **द्विस्त्रिः प्रत्ययमात्रेणेति**। द्विस्त्रिवेदनैरपि कृतार्थत्वादित्यर्थः। **ज्ञानवेदनशब्दान्वितेति**। इदं वाक्यम्, **श्रवणमनननिदिध्यासनानामावृत्तिरपेक्षिता न वेति विचारयन्ति, तदयुक्त-**

मित्यस्यानन्तरं पठितं चेत्, सुसङ्गतमिव भाति । पाठो निरीक्ष्यः । ननु अपरोक्षार्थविषयकप्रत्ययावृत्तेस्तदापरोक्ष्यं ब्रूमः । अतो न ज्योतिष्टोमवाक्यार्थप्रत्ययावृत्तौ व्यभिचार इत्यत आह — **एकश्चेन्द्र** इति । **भेदवासना चे**दिति । अन्यस्य वक्तुमशक्यत्वादिति भावः । **कल्पनापोहेने**ति । भेदसत्यत्वकल्पनाव्युदासपूर्वकभेदमिथ्यात्वनिश्चयायेत्यर्थः । प्रतिपन्नोपाधिस्थनिषेधप्रतियोगित्वरूपमिथ्यात्वप्रतीतावुपाधिप्रतीतिर्नान्तरीयकेति भावः । वाक्यार्थज्ञानार्थश्रवणादिविधिदूषणप्रसङ्गादन्तःकरणविलयरूपज्ञानार्थसमाधिविधिं दूषयति । **समाधिविधिश्चानुपपन्न** इति । बन्धनिवर्तकस्य वाक्यार्थज्ञानस्य त्वदभिमतान्तःकरणविनाशरूपसमाधिविरुद्धत्वादिति भावः । (?) **मुक्तस्य सर्वज्ञत्व** इत्याक्षेपश्च, **ननु मुक्तस्य आनन्दाधिक्य** इत्याक्षेपश्च प्रासङ्गिक इति नाशङ्का कार्या । केचित्तु अत्र कानिचिद्वाक्यानि पतितानीति मन्यन्ते । **रश्मींस्त्वं पर्यावर्तया**दिति । इदं च पुत्रं प्रति । कौषीतकीवाक्यम् । हे पुत्र! रश्मीनादित्यस्याभेदेन पर्यावर्तयात् = पर्यावर्तयतादित्यर्थः । उपास्स्वेति यावत् । **अहंग्रहोपासने**ति । प्रत्यगात्मोपासनेत्यर्थः ।

इति आवृत्त्यधिकरणम् ।

## ( २ ) आत्मत्वोपासनाधिकरणम् ।

**आत्मेति तूपगच्छन्ति ग्राहयन्ति च ।। ४-१-३.**

**व्यतिकरोपदेशज्ञापनाये**ति । पूर्वाधिकरणे, 'आत्मेत्येवोपासीते' ति विद्युपास्योर्व्यतिकरोपदेशज्ञापनार्थोपात्तवाक्यस्थितात्मशब्दार्थनिरूपणं क्रियत इत्यर्थः । वस्तुतस्तु, 'त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि भगवो देवते' 'आत्मेत्येवोपासीत' इत्यादीनां व्यतिकराणामुपदेशरूपत्वमुखेन दृष्टिविधित्वाभावज्ञापनायेत्यर्थः । **पूर्वप्रकृते**ति । जगत्कारणतयोपास्यतया चाध्यायत्रयप्रतिपादितस्य वस्तुनो वेदान्तवाक्यस्थात्मशब्दार्थात्मत्वं निरूप्यते समर्थ्यत इत्यर्थः । ततश्च कथमस्याधिकरणस्य शब्दार्थनिरूपणपरत्वमिति शङ्कापि निरस्ता । **अहमर्थसामानाधिकरण्ये**नेति । अहंत्वेनेत्यर्थः । अथवेत्यादिपक्षाभिप्रायेणाह **किमुपास्यं**

**ब्रह्मेति** । **अन्यत्वेनोपास्य**मिति । शरीरशरीरिभावरूपसम्बन्धशून्यत्वेनोपास्य-मित्यर्थः । **पृथक्त्वानुसन्धानविधिविरोध** इति । 'पृथगात्मानं प्रेरितारञ्च मत्वे' ति पृथक्सिद्धत्वानुसंधानस्यापृथक्सिद्धविशेषत्वरूपशरीरत्वानुसंधानविरुद्धत्वा-दिति भावः । यद्वा **पृथङ्मत्वे**ति पृथक् पक्त्वेत्यादिवत् मननक्रियायामन्वेति । ततश्च आत्ममननं प्रेरितृमननञ्च पृथग्भूतं कार्यमित्यर्थः पर्यवसन्नः । ततश्च आत्म-प्रेरित्रोरेकमननानुप्रवेशो व्यावर्तितो भवति । अतो जीवपरयोः शरीरात्मभावानु-सन्धानस्य नावकाशः । शरीरात्मभावानुसन्धाने हि द्वयोरप्येकस्यां मननक्रियायामनु-प्रवेशप्रसङ्गेन पृथङ्मननं न भवेदिति विरोध इति भावः । **ब्रह्मोपासनानि विहितानी**ति । शाण्डिल्यविद्यायाम्, 'सर्वं खल्विदं ब्रह्म' इति सामानाधिकरण्य-निर्देशः 'एष म आत्मे' ति व्यधिकरणनिर्देशश्च । तत्र न दृष्टिविधित्वशंका; व्यतिरेकोक्तिविरोधात् । अतो न तत्रायं विचार उपयुक्त इति भावः । वस्तुतस्तु पृथक्सिद्धत्वरूपानात्मत्वानुसन्धानस्य मोक्षसाधनतया विहितत्वात् अनात्मत्वमेव प्रामाणिकम् । 'आत्मेत्येवोपासीते' त्येतत्तु अभ्युदयफलकदृष्टिविधिरूपं भविष्यतीति पूर्वपक्षिणो भावः । **अहंशब्दार्थतात्पर्यविवक्षये**ति । अहंशब्दार्थस्य प्रकृतित्व-विवक्षायां प्रकृतेरेवास्तिक्रियाकर्तृत्वात् उत्तमपुरुष इत्यर्थः । अत एव 'यदग्ने! स्यामहं त्वम्; त्वं वा स्या अहम्' इति प्रकृत्याश्रयः पुरुषो भवतीति, 'युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः' इति सूत्रे प्रतिपादितमिति द्रष्टव्यम् । **युक्तमिति दर्शितं भवती**ति । क्रियान्वयात् प्रागेव, 'विष्णवे शिपिविष्टाय' इत्यादौ सामानाधिकरण्यस्थले परस्पराभेदान्वयाभ्युपगमादिहाप्यभेदान्वयानन्तरं तस्मिन्न-भेदे अस्तित्वान्वयसम्भव इति भावः ।

**प्रामाणिकत्वादिति परिहारायोगा**दिति । संसारिणः संसारित्वापोहेन ईश्वरात्मत्वप्रतिपादनेऽपि ईश्वरस्य संसार्यात्मत्वप्रतिपादनानभ्युपगमात् नेश्वराभावप्रसङ्ग इति चेति परिहारान्तरमभ्युपन्यस्तम् । तथापि प्रामाणिकत्वादित्ययं परिहारः परिहासपदम् । बाधस्य तर्केऽनुगुणत्वादित्यत्र तात्पर्यमिति द्रष्टव्यम् । 'तत् त्वमेव, त्वमेव तदि'तीश्वरस्यापि संसार्यात्मत्वप्रतिपादनाच्चेत्यपि द्रष्टव्यम् । **शास्त्रभीरुत्वा ल्लोकस्ये**ति । श्रवणे न प्रवृत्तिः स्यादिति शेषः । स्वामिसख्यमहिषवैषम्यं शङ्कते—

**यदि प्रबोधेऽपी**ति । **जीवस्य हेयार्हत्वमेव निवर्तत** इति । स्वप्ने तु धर्मिद्वयं धर्मद्वयञ्च निवर्तत इति भावः । **शुक्तिरूप्येश्वरयोरि**ति । न च रूप्यस्वरूपस्य नाशात् कथमवैषम्यमिति वाच्यम् — अधिष्ठानमेवाध्यस्तस्वरूपमित्यभ्युपगमात् शुक्तिस्वरूपस्य चानाशाद्वैषम्यमिति भावः ।

इति आत्मत्वोपासनाधिकरणम् ।

---

## (३) प्रतीकाधिकरणम् ।

---

**न प्रतीके न हि सः ४-१-४.**

**ब्रह्मणः प्रतीको दृष्टिविशेषण**मिति । ब्रह्म स्वतन्त्रेणोपास्यम्; प्रतीको दृष्टिविशेषणमित्यर्थः ।

**ब्रह्मदृष्टिरुत्कर्षात् ४-१-५.**

भाष्ये **भृत्ये तु राजदृष्टिरभ्युदयाये**ति । स्यादिति शेषः । इदमुपलक्षणम् । 'मनो ब्रह्मेत्युपासीत' इत्यादौ मनआदिशब्दानां प्राथम्यात् तस्य मुख्यार्थत्यागस्यानुचितत्वात् ब्रह्मशब्दस्येतिशब्दशिरस्कत्वेन स्वार्थात् प्रच्यावनस्यापेक्षितत्वाच्च, 'आदित्यं ब्रह्मोपास्त' इत्यादौ द्वितीयानिर्देशाच्च मनआदौ ब्रह्मदृष्टिरेव युक्तेति द्रष्टव्यम् ।

**तदभावप्रसङ्गाभावादि**ति । प्रतीकाभावप्रसङ्गाभावादित्यर्थः । यद्यपि ब्रह्मशरीरत्वमात्रं न स्वरूपोपमर्दकम्; उक्तरीत्या अनुपमर्देनापि शरीरत्वसंभवात् — तथापि न तन्मात्रमात्मत्वेनोपास्यत्वप्रयोजकम् । ब्रह्मस्वरूपत्वस्यैव ग्राह्यत्वेन उपास्यत्वप्रयोजकत्वात् । प्रतीकादेः ब्रह्मस्वरूपत्वापत्तौ प्रतीकाभावप्रसङ्गस्यावर्जनीयत्वात् प्रसङ्गादिति चेन्न — जडस्य मनआदेः ब्रह्मस्वरूपत्वापत्तेरत्यन्तासत्त्वेन तस्य प्रतीकाभावप्रसङ्गहेतुत्वस्याप्रसक्तेरित्यत्र तात्पर्यात् ।

**वासो ददात्यन्नो ददाती**ति । "वासो ददात्यन्नो ददाती" त्यत्र किं वानं तक्षणं च कृत्वा वासः अवश्यं निष्पाद्यैव दातव्यम्, उत यथासिद्धमेव दातव्य-

मिति संशये वानतक्षणक्रियायां सत्यां वासोनश्शब्दयोः प्रयोगदर्शनात् क्रियानिमित्तकौ वासोनश्शब्दौ क्रियामेव दानाङ्गतया विधत्तः । तस्मात् दानं कुर्वता तन्तून् वृक्षांश्चोपादाय वानं तक्षणञ्च कर्तव्यमिति प्राप्ते — जात्यन्वयव्यतिरेकानुविधानात् जातिशब्दावेतौ । जातिस्तु क्रियाभिव्यङ्ग्येति क्रियोत्तरकाले शब्दप्रयोगः । न तु वासोनश्शब्दयोः क्रियावचनत्वम् । अतो वानतक्षणक्रिययोरचोदितत्वात् नानुष्ठानमिति सप्तमे (७-२-११.) स्थितम् । **ब्रह्मणश्चोदितत्वाभावादिति** । मनो ब्रह्मेत्यादौ ब्रह्मेत्युपासनमात्रं विधीयते ; न त्वात्मा । तथापि यस्य यन्मात्रतयोपासनं विहितम्, तत् तन्मात्रतयैव प्रतिपत्तव्यम् । 'यावद्वचनं वाचनिक' मिति न्यायात् नाधिकमध्याहर्तव्यम् । अतिप्रसङ्गादिति भावः । **ब्रह्मसामानाधिकरण्य**ञ्चेति । ब्रह्मण उपास्यत्वश्रवणात् ब्रह्मोपासने सर्वत्र आत्मत्वस्य सत्यत्वादिवदनुवृत्ततायाः पूर्वाधिकरणे समर्थितत्वादित्यर्थः । **इतिकरणवैयर्थ्यं हेतुरिति** । शुक्तिकां रजतमिति प्रत्येतीति वाक्यसमानाकारत्वादिति भावः । **प्रतीकगतद्वितीयादिविभक्तिरपीति** । "य एतदेवं विद्वानादित्यं ब्रह्मेत्युपास्ते", "यः सङ्कल्पं ब्रह्मेत्युपास्ते" इत्यादावादित्यसङ्कल्पादिपुल्लिङ्गशब्देषु द्वितीयाया असंदिग्धत्वादिति भावः । **हेतुरिति** प्रतीकस्यैव स्वतन्त्रोपास्यत्वं ब्रह्मणो दृष्टिविशेषणत्वमित्येवंरूपे अधिकरणार्थे इति शेषः । आदित्यादेः दृष्टिविशेषणत्वे ब्रह्म आदित्य इत्युपास्ते ब्रह्म सङ्कल्प इत्युपास्त इत्येवं प्रथमतः उपास्यं ब्रह्म द्वितीयान्तेन निर्दिश्य दृष्टिविशेषणानामादित्यादीनां प्रथमान्तेन पश्चाच्च निर्देशप्रसङ्ग इत्यर्थः । अतः प्रतीकगतद्वितीयाविभक्तिः प्रथमनिर्देशश्च मनआदेः स्वतन्त्रोपास्यत्वं ब्रह्मण उपास्यविशेषणत्वमित्येवंरूपाधिकरणप्रतिपाद्येऽर्थे हेतुरित्यर्थः ॥

इति प्रतीकाधिकरणम् ।

---

## (४) आदित्यादिमत्यधिकरणम्

**आदित्यादिमतयश्चाङ्ग उपपत्तेः ४-१-६.**

**देवताया उत्कर्षादिति** । ननु, '**ब्रह्मदृष्टिरुत्कर्षात्**' इति ब्रह्मण एवोत्कर्षाद् दृष्टिविशेषणत्वमुक्तम्; न त्वादित्यादिदेवतायाः, येनेयमाक्षेपिकी सङ्गतिः

स्यादिति चेन्न — ब्रह्मणः सर्वज्ञत्वफलप्रदत्वादिना मनआद्यपेक्षयोत्कृष्टत्वात् तद्दृष्टि र्मनआदौ कर्तव्येत्युक्ते, आदित्यादीनामपि उद्गीथाद्यपेक्षया देवतात्वादिना उत्कृष्टत्वात् आदित्यादिदृष्टिरुद्गीथादौ कर्तव्येति सिद्धमेवेति भावः । **फलसाधनतया विहितत्वात् प्रधानस्य कर्मण** इति । साङ्गस्येति शेषः । ततश्चोद्गीथकर्माङ्गभूतोद्गीथादीनामपि फलवत्त्वमस्तीति भावः । **देवताप्रीतिरवान्तरव्यापारमात्रमिति** । अतिथिभोजनेनातिथिप्रीतिवदिति भावः । 'फलमत उपपत्ते' रिति न्यायेन परमात्मन एव फलप्रदत्वेन इतरासां देवतानां भोजनेनातिथिवत् कर्मभिः प्रीतानामपि फलप्रदत्वासंभवेनाप्रधानत्वादिति भावः । **ब्रह्ममतिवदादित्यादिमतयोपीति चशब्दार्थ** इति ग्रन्थो राद्धान्तव्याख्याने उत्कृष्टश्चेत् सुश्लिष्ट इव भाति । न च तत्रापि चशब्दोऽवधारण इति भाष्येण विरोधः शङ्कनीयः, तस्य निपातत्वेन नानार्थत्वात् तथापि व्याख्यानोपपत्तेः; सूत्रस्यानेकार्थसूचकत्वादिति द्रष्टव्यम् । ननु उद्गीथादीनां कर्माङ्गतया फलसाधनत्ववत् आदित्यादेरपि देवतारूपेण फलसाधनत्वमविशिष्टमिति कथं पूर्वपक्ष इत्यत आह **मनो ब्रह्मेत्युपासीतेत्यादिना, अफलसाधनेभ्य** इति । न विद्यते फलं येषां त इत्येवं बहुव्रीहिणा अफलशब्दो फलसाधनवचन इति भावः । **अर्यम्णे चरुं निर्वपेदिति** । यद्यादित्यादेः अर्यम्णे चरुं निर्वपेत् स्वर्गकाम इत्यादिविध्यन्तरविहितेषु कर्मसु फलप्रदत्वसंभवेपि अस्मिन्नुपासनाप्रकरणे देवतात्वाभावेन फलप्रदत्वाभावात् तत उद्गीथादेरेव फलवत्कर्माङ्गत्वात् उत्कृष्टत्वमुच्येत, तदाप्युद्गीथादावेवादित्यादिदृष्टिर्विधेया, अङ्गानङ्गसमभिव्याहारवतीनां विद्यानामङ्गेषु अनङ्गदृष्टिरूपत्वे प्रधानकर्मप्रयुक्ताङ्गाश्रयत्वात् स्वनन्त्रफलानामपि तासां अधिकृताधिकारतया पृथक् प्रवृत्तिर्न कल्पनीयेति प्रयुक्तिलाघवात्, अन्यथा प्रयुक्तिकल्पनागौरवं स्यादिति द्रष्टव्यम् ।

**उद्गीथादीनां क्रियारूपाणा**मिति पाठः । **कर्मसमवायितयेति** क्वचित्पाठो लेखकानवधानविबन्धनः । उद्गीथादीनां स्वत एव गीतिक्रियारूपत्वात्; फलं तथाऽनुक्तश्चेति द्रष्टव्यम् । युक्त्यन्तरमाह — **इयमेवर्गिति** 'इयमेवर्गग्निः साम' इत्युक्त्वा तद्धेतुसमर्पके, 'तदेतदेतस्यामृच्यध्यूढं साम' इति वाक्ये पृथिव्यग्न्योः ऋक्सामशब्दप्रयोगः पूर्ववाक्ये पृथिव्यग्न्योः ऋक्सामदृष्टिं ज्ञापयति । आरोप्य-

वाचिशब्देनैवाधिष्ठानव्यवहारस्य लोके दर्शनादिति भावः। **न राज्ञि क्षत्तृशब्द** इति। अध्यस्ते राज्ञि नाधिष्ठानवाचिक्षत्तृशब्दप्रयोगोऽस्तीति भावः। **तत्र क्षत्त्रध्यासाभावादिति** क्वचित् पाठो दृश्यते। न तस्य सामीचीन्यं पश्यामः। **कर्मणो वीर्यवत्तरत्वं श्रुतमिति**। 'यदेव विद्यया करोती'ति विद्यया क्रियमाणस्यैव वीर्यवत्तरत्वश्रवणात् आदित्यादेश्चाक्रियमाणत्वादिति भावः। **उद्गीथादिकर्मस्वतिशय उपपद्यत** इति। 'भूतभाव्युपयोगं हि वस्तु संस्कार्यमिष्यते'। उद्गीथादीनाञ्च क्रियात्वात् ज्योतिष्टोमाद्युपकारस्य तैः करिष्यमाणत्वाच्च तान्येवोद्गीथादीन्यादित्यादिमतिभिः संस्क्रियेरन्नित्यर्थः। **कर्मणो ह्यपूर्वसन्निकर्ष** इति। उद्गीथादिकर्मण इत्यर्थः। ततश्च सप्रयोजनत्वादादित्यादिमतिभिः संस्कार्यत्वमुपपद्यत इति भावः॥

ननु उद्गीथादिकर्मणो नापूर्वसन्निकर्षः। प्रधानस्यैवापूर्वसन्निकृष्टत्वादित्याशङ्क्याह **असाधितस्य करणत्वायोगा**दिति। अङ्गाननुगृहीतस्य प्रधानस्यापूर्वकरणत्वासंभवेन अङ्गानामपूर्वसन्निकृष्टत्वमस्तीति भावः। **कर्मस्वतिशयावहत्वादिति**। उपासनस्योद्गीथादिकर्मसु अतिशयावहत्वात् उद्गीथादिकर्मण एव स्वतन्त्रोपास्यत्वमिति भावः। युक्त्यन्तरमाह **आदित्यादिः प्रधान**मिति। प्रधानशब्दस्य नित्यनपुंसकलिङ्गतया तथानिर्देशः। तदेवोपपादयति **कर्मफलस्ये**त्यादिना। **ऋचि पृथिवीत्वं विधेयमवगत**मिति। पृथिव्या हि ऋक्त्वेऽवधार्यमाणे इयमृगेवेत्यक्षरन्यासः स्यादिति भावः। **पृथिव्यामृक्शब्दो लाक्षणिक** इति। 'तदेतदेतस्याम्' इति वाक्य इति शेषः। **सम्बन्धमात्र**मिति। पृथिव्यग्न्योः ऋक्सामशब्दवाच्याध्यस्तत्वलक्षणसम्बन्धोऽस्तीति भावः। **न तूत्कर्ष**मिति। नाध्यस्तमपेक्षत इत्यर्थः। तथा चाध्यस्तवाचिशब्दत्वाभावेऽपि अधिष्ठानवाचिशब्देन अध्यस्ते लक्षणया प्रयोग उपपद्यत इति भावः। **कर्मस्वतिशयाधायकत्वेनेति**। कर्मस्वनुष्ठितेषु परमात्मप्रीतिरूपातिशयाधाने आदित्यादिदेवताप्रीतेर्द्वारत्वादिति भावः। यद्यप्ययं ग्रन्थः पुरोवादग्रन्थेषु न दृश्यते — तथापि योग्यतानुसारादेवमुक्तमिति द्रष्टव्यम्। **न हि द्वितीयाविभक्त्यर्थोऽनन्वित** इति। लोकेष्वित्यस्य द्वितीयया विपरिणाममात्रेणैव 'वाचं धेनुमुपासीत', 'योषितमग्निं ध्यायीते'त्यादिवत्, 'लोकान् पञ्चविधं सामोपासीते'त्युक्तौ विरोधाभावादिति भावः। **कल्पयितृकतेनेति**। कल्पना-

श्रितत्वात् गोदोहनादिवदिति भावः । **पृथिव्येव ऋक् नान्यदस्तीति**। अयमर्थः—पृथिव्येव ऋगित्युक्ते नान्या ऋगिति वाक्यशेषरूपं विवरणं संपद्यत इति ॥

इति आदित्यादिमत्यधिकरणम् ।

---

## (५) आसीनाधिकरणम्

आसीनः सम्भवात् ४-१-७.

**आसनसमर्थनहेतोरैकाग्र्यस्येति** । अनन्तराधिकरणयोरप्रासङ्गिकत्वेऽपि आसननियमनसमर्थनहेतोश्चित्तैकाग्र्यस्य अस्मिन्नधिकरणे समर्थ्यमानत्वादनन्तराधिकरणप्रतिपादितेषु अङ्गावबद्धोपासनेषु कर्मतन्त्रेषु ऋत्विक्कर्मसु आसननियमसमर्थनासम्भवेनाव्यवहिताधिकरणसङ्गत्यभावात् परमप्रकृतेनैव सङ्गतिरित्यर्थः । अङ्गावबद्धोपासनपर्युदासेनेतरेषूपासनेषु आसननियमनचिन्तनात् अनन्तराधिकरणेनापि सङ्गतिः कथञ्चित् फलतीति बोद्धव्यम् । **आद्याधिकरणे समर्थितत्वादिति** । "तद्रूपप्रत्यये चैका सन्ततिश्चान्यनिःस्पृहा" इत्यैकाग्र्यस्य समर्थितत्वमभिप्रेतं द्रष्टव्यम् । परोक्तसूत्रार्थं दूषयति **उपासनसम्भवादित्यतोपीति** ।

**तदवश्यम्भावादिति** । आसनस्यावश्यम्भावादित्यर्थः । ननु "विविक्तदेशे तु सुखासनस्थः" इति कैवल्योपनिषदि श्रवणात् कथं पूर्वपक्षोत्थितिरिति चेन्—सूत्रकृता शङ्करादिभिश्चान्यैस्तद्वचनावाक्यस्य क्वाप्यनुपात्तत्वात् सर्वव्याख्यानाधिकरणे अस्मदीयाचार्यैरप्यनुदाहृतत्वाच्च कैवल्योपनिषत् न संप्रतिपन्नेति केचिन्मन्यन्ते । केचित्तु, तस्य दहरविद्याविशेषविषयत्वेन सर्वविद्यासाधारणत्वाभावादनुपन्यास इति प्रतिपद्यन्ते ॥

स्मरन्ति च ४-१-१०.

**चेलाजिनकुशोत्तरम्** । चेलं सर्वोत्तरम्; अजिनं कुशापेक्षया उत्तरम्; कुशा भूतलापेक्षया उत्तरा इत्यर्थः ॥

यत्रैकाग्रता तत्राविशेषात् ४-१-११.

"समे शुचौ शर्करावह्निवालुकाविवर्जिते शब्दजलाश्रयादिभिः ।
मनोनुकूले न तु चक्षुःपीडने गुहानिवाताश्रयणे प्रयोजयेत् ॥"

इति वचनम् । शर्कराः = सूक्ष्मपाषाणाः । **आसनसहपठित** इति । आसनाङ्गभूत इत्यर्थः । एकाग्रतातिरिक्तदेशकालविशेषाश्रवणादेकाग्रतानुकूलासनानुकूलदेशादिविशेषस्य ध्यानापेक्षितत्वमित्युक्ते एकाग्रतापेक्षितस्य देशविशेषाद्यङ्गकस्यासननियमस्यापेक्षितत्वं किं वक्तव्यमित्यर्थः ।

**उक्तप्रकारेणे**ति । कैमुतिकन्यायेनेति भावः ॥

इति आसीनाधिकरणम् ।

---

## [ ६ ] आप्रयाणाधिकरणम्

आप्रयाणात् तत्रापि हि दृष्टम् ४-१-१२.

भाष्ये **एकस्मिन्नेवाहनि शास्त्रार्थस्य कृतत्वादि**ति । इदमुपलक्षणम् । ध्यानेन दर्शनसमानाकारभक्तिरूपध्याने निष्पन्ने शास्त्रार्थस्य कृतत्वान्न तत ऊर्ध्वमुपासनं कार्यमित्यर्थः । 'स खल्वेवं वर्तयन् यावदायुषम्' इति श्रुतिस्तु कर्मणामेव यावज्जीवमनुष्ठेयत्वमाह ; न तु विद्याया इति पूर्वपक्ष्यभिप्रायः । **तत्रापि हि दृष्टमि**ति । यावज्जीवं कर्मानुष्ठानस्यापुनरावृत्तिफलकत्वमुच्यमानं विद्यां प्रति स्वरूपोपकारकत्वेनैवोपपादनीयमिति तदुक्तिसामर्थ्यात्, विद्याया अपि यावज्जीवमनुष्ठेयत्वं तत्र विवक्षितमुन्नीयत इति तद्बलात्, 'प्रायणान्तमभिध्यायीते'ति श्रुत्यन्तरदर्शनाच्च दर्शनसमानाकारापत्त्यनन्तरमपि यथाश्रुतं यावज्जीवमुपासनमनुष्ठेयमिति भावः । एतेन, 'प्रायणान्तमभिध्यायीते'ति श्रुत्यनुसारात् प्रायणशब्दस्य मरणे प्रसिद्धेश्च आप्रायणादिति सूत्रपाठो युक्त इति निरस्तम् । "प्रयाणकाले मनसाऽचलेन" इत्यादिस्मृतिप्रसिद्धेः प्रयाणशब्दस्यापि समानत्वात् ।

**उपाधेरनि(नु)वृत्तत्वादिति** । ब्राह्मणदेहावच्छिन्नत्वस्यैवोपाधित्वेन तस्य अनि(नु)वृत्तेरित्यर्थः । **मुक्तस्य न मुमुक्षेति** । जीवन्मुक्तस्येत्यर्थः ।

**प्रीतेश्च यथाशास्त्रमनुष्ठानजन्यत्वादिति** । ननु 'वेदनं ध्यानविश्रान्त' मित्युक्तरीत्या छागपशुन्यायेन दर्शनसमानाकारभक्तिरूपापन्नज्ञानस्यैव शास्त्रार्थत्वाच्च दर्शनसमानाकारज्ञाननिष्पत्तिपर्यन्तमावृत्तिः भाष्यकृतापि पूर्वपक्षेऽभ्युपगन्तव्येति चेत्, सत्यमभ्युपगन्तव्या साक्षात्कारपर्यन्तावृत्तिः; तथापि साक्षात्कारफलकत्वेन नोपासनस्य तावत्पर्यन्तत्वम्; अपितु परमपुरुषप्रीतिसाधनतया दर्शनसमानाकारस्य चोदितत्वात् तावतैव च शास्त्रार्थस्य कृतत्वात् न तत ऊर्ध्वमुपासनमनुष्ठेयमिति पूर्वपक्षणं युक्तमिति भावः ॥

इति आप्रयाणाधिकरणम् ॥

---

## (७) तदधिगमाधिकरणम्

तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ४-१-१३.

**पेटिकासङ्गतिमिति** । साधनपेटिकाफलपेटिकयोः सङ्गतिमित्यर्थः । विद्यास्वरूपशोधनस्य फलाध्यायसङ्गतिं परिहरति **उपायभूतेति** । **अश्लेषविनाशप्रतीतिसंशयाभावादिति** । अश्लेषविनाशौ प्रतीयेते न वेति संशयस्य वक्तुमशक्यत्वादित्यर्थः । भाष्ये **शास्त्रविरोधादिति** । नाभुक्तमिति शास्त्रेण कर्मणां भोगैर्नाश्यत्वावगत्या विरोधात् तयोः विद्याफलत्वकल्पनं नोपपद्यत इत्यर्थः ।

**पूर्वं शरीरपातानन्तरं कर्मक्षय उक्त** इति । साम्पराये तर्तव्याभावादित्यत्रेति शेषः । **कर्मफलभोगावश्यम्भावेऽपीति** । कर्मणां फलभोगावश्यम्भावेऽपि उपभोगेन सर्वकर्मक्षये ब्रह्मज्ञानं मोक्षमुत्पादयतीति पूर्वपक्षिणोक्त इत्यर्थः । **तथा चेदिति** । देशकालादिसापेक्ष इत्यर्थः । **अविद्यानिवृत्तेरनित्यत्वप्रसङ्गादिति** । ननु ज्ञानव्यतिरिक्तदेशकालाद्यपेक्षत्वान्नानित्यत्वप्रसङ्ग इति चेन्न - ज्ञानव्यतिरिक्तासंभावना-विपरीतभावनारूपप्रतिबन्धकाभावसापेक्षत्वेन अविद्यानिवृत्तेरनित्यत्वतादवस्थ्यात् ।

**अन्येत्वित्यादि** । **अत एव सुकृतदुष्कृते** इत्यादि । उत्तराघविनाशे विधूननादेरसंभवादित्यर्थः । **उत्तराघस्येति** । अभक्ष्यभक्षणादिक्रियारूपकर्मण इत्यर्थः; न तु क्रियाजन्यादृष्टरूपकर्मण इति मन्तव्यम् । तदतिरिक्तशक्तेरभावात् । **विपाकहेत्विति** । विपाको नरकादिरुच्यते । **विशेषोपादानवैयर्थ्यं स्यादिति** । विपाकविघातस्याभ्युपेतत्वेन लेपांशविघात इति वचनस्यायुक्तत्वादिति भावः । शङ्कते **विपाकशक्तेः श्लेषस्त्विष्ट** इति । **अश्लेषवचने संकोचः स्यादिति** । ननु कथमत्राश्लेषवचनसंकोचः । ब्रह्मविद्याश्लेषो हि तत्र कार्यानार्जकत्वम् । ततश्चोत्पन्नस्याप्यस्य ब्रह्मविदि कार्यानार्जकत्वात् अश्लेषवचनं सुश्लिष्टम् । न ह्यश्लेषवचनस्यानुत्पत्तिवचनत्वम्; पुष्करपलाशजलदृष्टान्तविरोधादिति चेत् — उच्यते । न हि निषिद्धकर्मजन्यपापस्याश्लेषं श्रुतिर्ब्रवीति, येनायमुपालम्भः स्यात् । किन्तु 'एवंविदि पापं कर्म न श्लिष्यत' इति निषिद्धकर्मणोऽभक्ष्यभक्षणादेरेवाश्लेषं ब्रवीति । तस्य च कर्मणो ब्रह्मणि अश्लिष्टत्वं हि ब्रह्मविदि पापानार्जकत्वमेव; न तु पापोत्पत्तिमभ्युपगम्य ब्रह्मविदि लेपमात्रानार्जकत्वमिति संकोच आश्रयणीय इत्यभिप्रायात् । नन्वेवम्, 'क्षीयन्ते चास्य कर्माणी' त्यादिश्रुत्यनुसारेण पूर्वाघविनाशोऽपि अभक्ष्यभक्षणादिनिषिद्धकर्मविनाश एव स्यादिति चेन्न — तेषां कर्मणां क्षणिकतया तदानीमेव नष्टत्वेन तत्राघविनाशश्रुतेः निषिद्धकर्मजन्यपापविनाशपरत्वेन(ऽपि ?) 'पापं कर्म न श्लिष्यत' इत्यादौ निषिद्धकरणस्यैव तन्निष्ठकार्यानार्जकत्वरूपाश्लेषस्य वक्तव्यत्वात् । न च **अवस्थाचतुष्टयं क्रियोत्तीर्णशक्तिविषयमित्युत्तरग्रन्थविरोध** इति वाच्यम्-तस्याप्यत्रैव तात्पर्यात् ॥ इति तदधिगमाधिकरणम् ।

## (८) इतराधिकरणम्

इतरस्याप्येवमसंश्लेषः पाते तु ४-१-१४.

**एवमिति** न्यायातिदेश इति। न त्वसंश्लेषातिदेशः। तस्य प्रतिज्ञयैव निर्दिष्टत्वादिति भावः। 'सर्वे पाप्मानः' इत्यत्र पाप्मशब्दस्य सुकृतसाधारण्यकोटि-बीजं प्रकटयति **न सुकृतं न दुष्कृत**मिति। सुकृतदुष्कृते निर्दिश्य, 'सर्वे पाप्मान' इति निर्देशः पाप्मशब्दस्य सुकृतसाधारण्यमवगमयति, नेति पर्यवसितोऽर्थः। **उक्तन्याय**मिति। पूर्वाधिकरणाभिप्रेतन्यायमित्यर्थः। **पूर्वसूत्रानुकृष्टव्यपदेश-शब्दार्थ**मिति। व्यपदेशं प्रदर्शयतीत्यर्थः। अत्र एवंशब्देन पूर्वसूत्रे आभि-प्रायिकफलविरोधित्वन्यायात् कण्ठोक्तत्द्व्यपदेशोप्यतिदिष्टः। तद्व्यपदेशो हि तस्य फलत्वव्यपदेशः। तत्र(स्य?)ह्यत्रासत्त्वशंका प्राप्ता – 'एवंविदि पापं कर्म न श्लिष्यते। तद्यथैषीकातूलमग्नौ प्रोतं प्रदूयेत, एवं ह्यस्य सर्वे पाप्मानः प्रदूयन्ते' इति पापानामेव श्रवणात् एवंशब्दानुकृष्टस्तद्व्यपदेशो न सम्भवतीति। अतः तच्छङ्कां व्युदसितुं एवंशब्दानुकृष्टव्यपदेशसिद्ध्यर्थम्, उभे सुकृतदुष्कृते निर्दिश्य, 'सर्वे पाप्मानो निवर्तन्त' इति साधारण्येन सुकृतस्यापि मुमुक्ष्वनिष्टत्वाविष्करणात्, 'सुकृतदुष्कृते धूनुत' इति वाक्येन अनिष्टत्वाविष्करणाच्च अनिष्टफलत्वरूपप्रवृत्ति-निमित्तसत्त्वात्, 'सर्वे पाप्मानः प्रदूयन्त' इति सुकृताश्लेषविनाशस्यापि विद्याफलत्व-व्यपदेशोऽस्तीति प्रदर्शयतीति भावः। भाष्ये **सुकृतस्यापि शास्त्रीयत्वादिति**। ज्योतिष्टोम[दर्श?]पूर्णमासादीनां शास्त्रीयत्वेन परस्परानुपमर्दकत्ववदिति भावः। न च, 'तत्सुकृतदुष्कृते धूनुत' इति विशिष्य सुकृतस्यापि विनाशश्रवणात् कथ-मभ्यधिकाशङ्केति वाच्यम्—तस्य शरीरपातानन्तरभाविसुकृतनाशविषयत्वादिति भावः॥

इति इतराधिकरणम्।

## ( ९ ) अनारब्धकार्याधिकरणम्

अनारब्धकार्ये एव तु पूर्वे तदवधेः ४-१-१५.

भाष्ये उतानारब्धकार्ययोरेवेति । विद्यायोनिशरीरानारम्भकयोरित्यर्थः । भाष्ये विद्याफलस्याविशेषश्रवणादिति । 'तस्य तावत्' इति श्रुतेः — एतावन्मेचिरम्, यावत् भुञ्जानस्येत्यत्रैव क्षेपीयस्त्वप्रतिपादनपरत्वेनावधिपरत्वाभावात् । इतरथा अवधेश्चिरत्वस्य च प्रतिपादने वाक्यभेदप्रसङ्गादिति भावः । यावन्न विमोक्ष्ये अथ सम्पत्स्ये इति । यावत् प्रारब्धकर्मणा न विमोक्ष्यते, अथ संपत्स्यत इत्यर्थः । पुरुषव्यत्ययश्छान्दसः । न चावधिपरत्वे चिरत्वावधित्वरूपार्थद्वयप्रतिपादनेन वाक्यभेदप्रसङ्ग इत्युक्तमिति वाच्यम् — वाक्यान्तरसिद्धचिरतानुवादेनावधिमात्रप्रतिपादनपरत्वात्तस्य वाक्यस्येयदोषः । मिथ्यात्वेन बाधितत्वा(बाधा?)दिति । न च यतो ज्ञानमज्ञानस्यैव निवर्तकमिति ज्ञानस्य अज्ञानमात्रनिवर्तकत्वेनाज्ञानकार्यभूतप्रारब्धकर्मानिवर्तकत्वात् तस्य कर्मणः स्वोपादानभूताविद्यानिवृत्तिप्रतिबन्धकत्वमस्तीति वाच्यम् — अज्ञानवत् तत्कार्यस्यापि निवर्त्यत्वस्य वक्तव्यत्वात्, इतरथा ज्ञाननिवर्त्यत्वरूपमिथ्यात्वस्याभावप्रसङ्ग इति भावः ॥

इति अनारब्धकार्याधिकरणम् ।

## ( १० ) अग्निहोत्राधिकरणम्

अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ४-१-१६.

भाष्ये अनिच्छतोऽनुष्ठाने प्राप्त इति । निष्फलकर्मणि चिकीर्षाया अभावादित्यर्थः । यद्यग्निहोत्रादीनां फलत्वम्, तर्हि अश्लेषो नोपपद्यत इति भावः । यज्ञेनेत्यादिश्रुते दर्शनसमानाकारविद्योदयात् प्राक् तादर्थ्येन विधानार्थतयाप्युपपत्तेर्विद्योत्पत्त्यनन्तरं यावज्जीवमग्निहोत्रादेरनुष्ठेयत्वे प्रमाणाभावादित्यर्थः । समुच्चयवादो निरवकाश इति । सर्वापेक्षेति सूत्रं विद्याङ्गत्वपरम्, सहकारित्वेन चेति सूत्रं फलविरोधिनिरसनेन समुच्चयपरमिति यादवमतानवकाश इत्यर्थः ।

अतोऽन्याऽपि ह्येकेषामुभयोः ४-१-१७.

**उत्तराघं विषयः स्यादिति**। इदमुपलक्षणम्। प्रारब्धव्यतिरिक्तपूर्वोत्तरसुकृतदुष्कृतानां विनष्टाश्लिष्टतया उपायनश्रुतेर्निर्विषयत्वमित्येव क्षेपाभिप्रायः। अत्रोपायनस्य विनष्टाश्लिष्टपूर्वोत्तरसुकृतदुष्कृतसजातीयोत्पत्तिरूपत्वेन विनाशाश्लेषयोरुपायनवचनेनाविरोधादिति परिहाराभिप्रायः। अयमर्थः, 'तदधिगम उत्तरपूर्वाघयोः' इत्यत्र सम्यग्विवृतस्तत्रैवानुसन्धेयः।

यदेव विद्ययेति हि ४-१-१८.

**परेत्वित्यादि**। **ततो[ऽपि]वरं ज्ञानाख्यकार्यायेति**। न च तथासति कार्यपदं व्यर्थमिति वाच्यम् — यस्य ज्ञानस्य सुकृताश्लेषेरादकत्वम्, तस्मा एव ज्ञानायेति स्फोरकत्वे साफल्यात्।

**अन्येत्वित्यादि**। **विद्यासहकारिणामिति**। विद्योत्पत्तेः प्राचीनानि नित्यनैमित्तिकानि विद्योत्पत्त्यर्थानि अपवर्गार्थानि च; तदनन्तरभावीनि च विद्यासमप्रधानानि विद्यासहकारीणीति तेषां मर्यादा। **प्रहाणसम्भावनाया इति**। 'तत्सुकृतदुष्कृते धूनुत' इति धूननसम्भावनाया इत्यर्थः। विद्यासहकारिणो विद्यया धूननासम्भवात् पूर्वपक्षानुत्थितेरिति भावः। **काम्यव्यतिरिक्तेति**। काम्येषु कर्मसु मोक्षार्थत्वासम्भवात् सिद्धान्तानुत्थितेरिति भावः। **स्वाधिकारार्थानामिति**। नियोगार्थानामित्यर्थः। **अपवर्गार्थत्वायोगादिति**। ततश्च, 'न हास्य कर्म क्षीयते' इति श्रुतेर्विद्यासहकारिविषयत्वमेव वक्तव्यम्। ततश्च पूर्वपक्षसिद्धान्तावपि तद्विषयावेवोचिताविति भावः। **विद्वत्संबन्ध्याश्रमविषयत्वेनेति**। विदुषा यावज्जीवमग्निहोत्रादीनि कर्तव्यानि, न वेत्येवं विचारो युक्त इति भावः। **विनियोगवचनमिति**। सुहृत्सङ्क्रमणवचनमित्यर्थः। **विद्याङ्गकर्मसमृद्ध्यर्थे** (र्थमि ?) ति। मोक्षस्थाने विद्यां निवेशयाम इत्यर्थः॥

इति अग्निहोत्राधिकरणम्।

## [ ११ ] इतरक्षपणाधिकरणम्

भोगेन त्वितरे क्षपयित्वाऽथ संपद्यते ४-१-१९.

भाष्ये **तच्छरीरविमोक्षावसानत्वश्रवणा**दिति । 'धूत्वा शरीरमकृतं कृतात्मा' इति श्रुत्यन्तरदर्शनात् तस्य तावदित्येतत् शरीरस्याश्रुनत्वेऽपि शरीरमोक्षावधिपरम्; न च 'धूत्वा शरीर' मित्येतत् प्रारब्धकार्ययावच्छरीरपरम्; एकवचनश्रवणात् । एकत्वाविवक्षाकल्पने प्रमाणाभावात् । 'अस्माच्छरीरात् समुत्थाये' ति श्रुत्यन्तरे अस्मादितिविशेषणेन विद्यायोनिशरीरस्यैव विवक्षितत्वाच्च । अन्यथा तद्वैयर्थ्यापत्तेरिति भावः । **देहस्तदवधिश्च न श्रुता**विति । **तदवधिश**ब्दस्तदवधित्वपरः । देहस्तदवधित्वेन न श्रूयते इत्यर्थः ।

ननु धूत्वा शरीरमिति श्रुत्यन्तरदर्शनात् तदवधित्वनिश्चय इत्यत आह **धूत्वा शरीर**मिति । 'अस्माच्छरीरात् समुत्थाय' इत्यत्रापि शरीरपदं प्रारब्धकार्यशरीरसामान्यपरम; अस्मादिति विशेषणञ्च श्रुतिस्मृतिप्रसिद्धत्याज्यत्वहेत्वनुभवसिद्धहेयताप्रदर्शनार्थमिति भावः ।

**अपरे** त्वित्यादि । **तस्य तावदिति श्रुतिवशेने**ति । तस्यतावदिति श्रुत्या विद्यायोनिशरीरपात एव ब्रह्मसम्पत्तेः श्रवणेन शरीरान्तरे अनेकशरीरारम्भककर्मफलभोगासम्भवेन क्षयायोगात् ज्ञानेनैव प्रारब्धस्य क्षयो वाच्य इत्यर्थः । शिष्टं स्पष्टम् ॥

इति इतरक्षपणाधिकरणम् ।

इति दशोपनिषद्भाष्यकारैः श्रीमद्रङ्गरामानुजमुनिभिः विरचितायां

श्रुतप्रकाशिकाव्याख्यायां भावप्रकाशिकायां

चतुर्थस्याध्यायस्य प्रथमः पादः ॥

---

॥ श्रीमते रङ्गरामानुजमहादेशिकाय नमः ॥

श्रीमते भगवद्रामानुजाय नमः । श्रीमते रङ्गरामानुजमहादेशिकाय नमः ।

श्रुतप्रकाशिकाव्याख्यायां भावप्रकाशिकायां

## चतुर्थाध्याये द्वितीयः पादः

## (१) वागधिकरणम् ।

वाङ्मनसि दर्शनाच्छब्दाच्च ४-२-१.

**यदा लयपरत्वेऽप्युपपद्यत** इति । ननु इन्द्रियान्तरसम्पत्तिवाक्सम्पत्तिवचनयोर्विशेषानुपलम्भात् ' अत एव सर्वाण्यनु ' इति सूत्रे तद्भाष्ये च वाक्सम्पत्तिवचनन्यायस्यैव इन्द्रियसंपत्तावतिदेशाच्च इन्द्रियान्तरवचनस्य कथमुपपादककोटौ निवेश इति चेन्न — 'तस्मादुपशान्ततेजाः पुनर्भवमिन्द्रियैर्मनसि संपद्यमानैः ' इत्यस्य ह्ययमर्थः । उपशान्ततेजाः — उपशान्तौष्ण्यः पुनर्भवम् — पुनर्जन्म उद्दिश्य मनसि संपद्यमानैरिन्द्रियैः सह प्रागमायातीति । अत्र हि पुनर्जन्मोद्दिश्य मनसि इन्द्रियाणां संपत्तिर्न लयरूपा, इन्द्रियाणां मनसि लये हि पुनर्जन्मन एवाभावप्रसङ्गात् । अतस्तत्र संपत्तिशब्दस्य संयोगपरत्वं वक्तव्यमिति वाक्संपत्तिवचनेऽप्यवैरूप्यात् तथात्वं वक्तव्यमिति इन्द्रियसंपत्तिवचनमप्युपपादककोटौ निवेशितमिति भावः । वस्तुतस्तु, ' इन्द्रियैर्मनसि संपद्यमानैः ' इति वाक्यस्य न वाक्संपत्तिवाक्यापेक्षया वैलक्षण्यमस्ति । अथाप्याचार्यैः गुणसूत्राणां सर्वेषामपि प्रकृताधिकरणार्थोपपादकत्वं वक्तव्यमित्यभिनिवेशादुपपादककोटौ निवेशितमिति द्रष्टव्यम् ।

नन्वयं विचारः काकदन्तपरीक्षासदृक्षः, पूर्वोत्तरपक्षयोरर्थभेदाभावात् । वाक्स्वरूपस्य मनसि लयो नास्तीति पूर्वोत्तरपक्षयोः सम्प्रतिपन्नमेव । वाग्वृत्तिनिष्पादनव्यापारस्य मनोनिष्ठस्यैव मनसि लय इति संप्रतिपन्नमेव । न च सिद्धान्त्यभिमतो मनसि वाक्संयोगः पूर्वपक्षिणाऽनभ्युपगत इति शक्यते वक्तुम्; वाचो मनसि संयोगाभावे वाग्वृत्तेर्मनसि लयवार्तायाः अप्यसंभवात् । इयांस्तु विशेषः, वाक्शब्दस्य स्वरूपपरत्वे सम्पत्तिशब्दस्य वाग्वृत्तिनिष्पादनलक्षणमनोव्यापारलयपरत्वम्,

वाक्शब्दस्य वाग्वृत्तिपरत्वे तु संपत्तिशब्दस्य तद्धेतुव्यापारविलयपरत्वमिति । नैतद्विचारस्योपयोगोऽस्ति ; उत्क्रान्तिस्वरूपविशेषपर्यवसायित्वाभावात् । देवदत्तपुत्राभिप्रायेण काञ्च्यां देवदत्तो नष्ट इत्युक्ते — देवदत्तशब्दस्य तत्पुत्रलक्षणयापि समर्थयितुं शक्यते ; नष्टपदस्य विनष्टपुत्रलक्षणामाश्रित्यापि तदर्थः प्रतिपादयितुं शक्यते । नैतावता अर्थे कश्चन विशेषोऽभिहितो भवति । तत्तुल्यश्चायं विचारः । न च मुख्यजघन्ययोरन्यतरस्यामुख्यार्थत्वे समाश्रयणीये जघन्यस्यैव अस्वरसार्थसमाश्रयणन्यायव्युत्पादनार्थमिदमधिकरणमिति वाच्यम् — तस्य पूर्वतन्त्र एव क्षुण्णत्वादिति चेत् — अत्र केचित् — अस्मिन्नधिकरणे वाक्स्वरूपस्य मनसि लय इत्येष प्रधानपूर्वपक्षः; **संपत्तिश्रुतिः कथञ्चिदुपपद्यत** इति अस्मिन् पक्षे अनुशयं प्रदर्शयता भाष्येण पूर्वपक्षान्तरस्य सूचनात् । 'तन्मनः प्राण उत्तरात्' इत्यतिदेशाधिकरणे अधिकाशंकोपपादकभाष्यग्रन्थपरिचयशालिनाम्, 'किमत्र मनसो लय उच्यते, उत संयोग' इति टीकाग्रन्थदर्शिनाञ्च अस्यार्थस्य सुगमत्वात् । यदि ह्यत्र वाग्लयपूर्वपक्षो नाभिमतः स्यात्, तर्हि अतिदेशाधिकरणे भाष्ये मनोलयसाधकाधिकाशंकाकथनं विरुद्धमेव स्यात् । अतः त (अ ?) त्रापि वाक्स्वरूपलयकथनमेव प्रधानपूर्वपक्षः । संपत्तिशब्दस्य व्यापारनिवृत्तिपूर्वकसंयोगार्थकत्वेनाप्युपपन्नत्वात् अप्रकृतौ लयो न युक्त इति सिद्धान्त इत्येव तत्त्वम् । परे तु — वाचो मनसि संयोगाभावे वाग्वृत्तेरपि मनसि लयोक्तिर्न संभवतीत्येतत् सत्यमेव — तथापि सिद्धान्त्यभिमतसंयोगविशेषस्य पूर्वपक्षिणानभ्युपगमात् न पक्षद्वयेऽप्यर्थाविशेष इति वदन्ति । भाष्ये **उपरतेऽपि वागिन्द्रिये मनःप्रवृत्ति**रिति । अत्र मनःप्रवृत्तिसत्त्वाभिधानं वाक्संपत्तिहेतुत्वोपपत्त्यर्थम् । अन्यथा हि तत् प्रलीनवृत्तिकं न संपत्तिहेतुतां भजेतेत्यर्थः । **प्रवृत्तव्यापार**मित्यादिटीकाया अप्यत्रैव तात्पर्यम् ॥

## अत एव सर्वाण्यनु ४-२-२.

भाष्ये **वाचमनु सर्वाणीन्द्रियाणी**ति । अनुशब्दः, "तृतीयार्थे" इति कर्मप्रवचनीयः । वाचा सहेत्यर्थः । न तु पश्चादर्थवाची । तथासति, 'अव्ययं विभक्ती' ति पश्चादर्थेऽव्ययीभावसमासप्रसङ्गात् । तस्य च नित्यसमासत्वेन वाक्याभावात् । तदर्थे च द्वितीयाया अपि दुर्लभत्वाच्च । अतः सहार्थ एवायं कर्मप्रवचनीयः । 'कर्म-

प्रवचनीययुक्ते द्वितीया ' इति द्वितीया । अतः टीकाग्रन्थः कथञ्चिन्नेय इति केचिदाहुः । केचित्तु — वाचमनु = वाचमनुरुध्य संपद्यत इत्यर्थः । अनुशब्दः साधनक्रियावचनः । शाकल्यस्य संहितामनु प्रावर्षदित्यादिवत् । शाकल्यस्य संहितामनुनिशम्य प्रावर्षदित्यर्थप्रत्ययात् प्रवर्षणस्य पश्चाद्भावोऽर्थः सिध्यति । यथा च पुमांसमनु जायत इति पुमनुज इत्यादौ पुमांसमनुरुध्य जायते इत्यर्थप्रत्ययात् ततः पश्चात् जननं सिद्ध्यति — एवमिहापि वाचमनुरुध्य इत्यर्थावगमात् पश्चादित्यप्यर्थतः सिध्यतीत्यभिप्रेत्याचार्यैरित्थमुक्तमिति प्रतिपादयन्ति ॥

इति वागधिकरणम् ।

---

## ( २ ) मनोऽधिकरणम्

---

**तन्मनः प्राण उत्तरात् ४-२-३.**

भाष्ये **अतो मनः प्राणे सम्पद्यत इत्यत्र**त्यादि । अत्र केचिदेवं वर्णयन्ति — पूर्वपक्षे प्राणशब्दे लक्षणा अभ्युपगन्तव्या । तथा संपत्तिवचनस्याप्यस्वारस्यमेव । अप्रकृतित्वात् । न हि प्रकृतिप्रकृतित्वमात्रेण लय उपपद्यते । किञ्च प्राणशब्दस्याब्लक्षकत्वे, ' प्राणस्तेजसी ' त्युत्तरवाक्येऽपि प्राणशब्दस्यावैरूप्येण जलपरत्वे जलस्य तेजसि लय इत्यर्थः स्यात् । न चैतद्युक्तम्; प्रायणकालेषु भूतलयासम्भवात् । किञ्च वाङ्मनसि संपद्यत इति वाक्येऽपि मनश्शब्देन मनःप्रकृत्यहंकारलक्षणायां मुख्यसंपत्तिसम्भव इति पूर्वपक्षस्यापि सम्भवेन तत्समाधानस्य एतदधिकरणसिद्धान्तयुक्त्यापि कर्तुमशक्यत्वात् । तस्मात् श्रुतार्थस्योपपत्तिरस्तीत्येव पूर्वपक्षो वक्तव्यः, न तु लक्षणामादाय पूर्वपक्ष इति । तत्रैवं केचित् समादधते — प्रकृतिविकृत्योरभेदात् अन्नमनसोरभेदः जलप्राणयोश्चाभेदः । ततश्चान्नस्याप्सु लय इत्युक्ते सोपपत्तिकत्वमिति, मनसः प्राणे लय इत्युक्तिरुपपद्यत इति पूर्वपक्षाभिप्रायः । ततश्च **प्राणप्रकृतिभूता अपो निर्दिश्येत्यत्र** भाष्ये **प्रकृति**शब्दः स्वभावपरः । प्राणस्वरूपभूता अपो निर्दिश्येत्यर्थः । ततश्च तयोरभेदादित्यर्थ उक्तो भवति । ततश्च

पृथिवीरूपस्य मनसो जलरूपे प्राणे मुख्यलय उपपद्यत इत्यभिप्रायः । **परम्परया स्वकारण** इति भाष्ये परम्परयेत्यस्य युक्तिपरंपरयेत्यर्थः । टीकापि तदानुगुण्येन नेया। :तथा हि – **किं प्रकृतिविकृतिभावपर**मित्यस्य किं प्रकृतिविकृतिभावप्रतिपादन-मुखेनाभेदपरमित्यर्थः । **स्वकारणे पृथिवीद्वारेणे**त्यादेरयमर्थः – **पृथिवीद्वारेणान्नमयस्य** पृथिवीरूपतयैवान्नमयस्य **स्वकारणे** प्राणशब्दलक्षितासु प्राणनामप्रति-पाद्यास्वित्यर्थ इति । केचित्तु – संपद्यत इत्येतस्य विधिरूपत्वात्, 'न विधौ परश्शब्दार्थः' इति न्यायेन संपत्तिशब्दास्वारस्याश्रयणासम्भवात् संपत्तिशब्दस्य लय एव मुख्यत्वात् यथाकथञ्चित् तत्संभवे तत्त्यागस्यानुचितत्वात् प्राणशब्दस्याब्लक्षणापि सोढव्या । 'प्राणस्तेजसी' त्यत्र वैरूप्यमापतति चेत्, तदपि सोढव्यमेव । अन्यच्च देषान्तरमापतितं सोढव्यमेव । न्यायागतेऽर्थे किं कुर्म इति पूर्वपक्षिण आशय इति वदन्ति ।

**परेत्वि**त्यादि । **वृत्त्युपपत्तिपरत्व** इति । 'वाङ्मनसि दर्शनात् शब्दाच्च' इति सूत्रे वाक्छब्दस्य वृत्तिपरत्वं शब्दशब्दस्य शब्दोपपत्तिपरत्वमित्याश्रयण इत्यर्थः ।

**मनश्शब्दयो**रिति । 'वाङ्मनसि संपद्यते ; मनः प्राणे' इति सप्तम्यन्त-प्रथमान्तमनश्शब्दयोरित्यर्थः । **प्राणशब्दयो**रिति । 'मनःप्राणे, प्राणस्तेजसी' ति सप्तम्यन्तप्रथमान्तप्राणशब्दयोरित्यर्थः। **अहंकारवाचित्वमनोवाचित्वे**ति । वाङ्मन-सीत्यत्र सप्तम्यन्तमनश्शब्दस्याहंकारपरत्वं वदता तदधिकरणपूर्वपक्षिणैव, 'मनः प्राण' इत्यत्र प्रथमान्तमनश्शब्दस्य मनोवाचित्वं वक्तव्यम् । एवम्, 'तन्मनः प्राण उत्तरात्' इत्यधिकरणपूर्वपक्षेऽपि सप्तम्यन्तप्रथमान्तशब्दयोः वैरूप्यमा-श्रयणीयम् । तच्चायुक्तमिति भावः । अभिमतपूर्वपक्षविरोधमेव दर्शयति **मनसोऽहं-कारलीनत्व** इति । यथा मनसः प्राणविलीनत्वे प्राणात् पृथगुत्क्रमणं विरुद्धम् – एवमहंकारविलीनत्वेऽपि विरुद्धमेव । न हि तदानीमहंकारस्य भूतेन्द्रियादिहेतु-भूतस्य ब्रह्माण्डावरणभूतस्योत्क्रमणं सम्भावनापदमिति भावः ॥

इति मनोऽधिकरणम् ।

---

## [ ३ ] अध्यक्षाधिकरणम्

सोऽध्यक्षे तदुपगमादिभ्यः ४-२-४.

भाष्ये वाङ्मनसोरिति क्वाचित्कः पाठः समासान्तविधेरनित्यत्वनिबन्धनः । **तेजश्शब्देन भूतसूक्ष्मांशाः विवक्षिता** इति वाक्यस्यानन्तरम् **उपगमः सम्बन्ध** इति पाठः समीचीनः । **अन्यतरवाचिशब्दनिर्देशे** इति । अन्यतरमात्रवाचिशब्द-निर्देशे इत्यर्थः । भाष्ये **यमुना सागरं गच्छतीति वचो न विरुद्ध्यते, तद्वदिति** । नन्वनेनैव दृष्टान्तेन प्राण उपगमनश्रुतेरेव सद्वारकत्वं किं न स्यात् । किञ्च यथा बाह्येन्द्रियव्यापारोपरमानन्तरमपि मनोव्यापारदर्शनात्, 'वाङ्मनसि संपद्यत' इति श्रुतिः, यथा च बाह्यान्तरज्ञानोपरमानन्तरमपि श्वासादिलक्षणप्राणव्यापार-दर्शनात् 'मनः प्राण' इति श्रुतिः, तथा श्वासादिप्राणव्यापारोपरमानन्तरमपि देहे क्वचिदौष्ण्यलक्षणतेजोव्यापारदर्शनात्, 'प्राणस्तेजसी' ति श्रुतेरपि तत्साम्येन साक्षात्तेजस्संपत्तिपरत्वमेव युक्तमिति चेन्न — यथा, 'वायोरग्निः,' 'अग्नेरापः' इति श्रवणस्य, 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' इत्यस्याविरोधायाग्न्यादि-शब्दस्य अग्न्याद्यवस्थपरमात्मपरत्वम्, एवं आत्मोपगमश्रुत्यनुरोधाय भूतसूक्ष्मवाचि-तेजश्शब्दस्य तच्छरीरकजीवपरत्वेनाविरोधोपपत्तेः ; किञ्च ? 'प्राणस्तेजसी' ति श्रुत्यनुरोधेन जीवोपगमात् प्रागेव तेजस्सम्पत्तौ 'तेजः परस्यां देवतायाम्' इति परदेवतासम्पत्तिश्रवणात् जीवोपगमस्य निरवकाशत्वप्रसङ्गेन क्वचिन्निवेशोऽवश्यम्भाविनि सहोत्क्रमणलिङ्गानुगृहीतात्मोपगमनश्रुत्यनुरोधात् जीवसंपत्त्यनन्तरमेव तेजस्सम्पत्त्युप-पत्तेश्चेति भावः ।

**अश्रुतत्वादिति पूर्वपक्षहेतुमाहुरिति** । यद्यपि 'प्राणस्तेजसी' ति श्रुतेरनतिशङ्क्यत्वात् यथाश्रुते तेजस्येव सम्पत्तिः ; अश्रुतजीवसम्पत्तिपरिकल्पनाया अन्याय्यत्वादिति परैः पूर्वपक्षयुक्तितया श्रुतिरेव वर्णिता — तथापि श्रुत्यनुग्राहकतया परैरश्रुतकल्पनाया अन्याय्यत्वादिति हेतुरप्युपन्यस्त इति कृत्वा तथोक्तमिति द्रष्टव्यम् । अश्रवणमात्रस्य हेतुत्वायोगादिति । एवमेवैममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ती' ति प्रदेशान्तरे श्रवणे विद्यमाने श्रवणसामान्याभावस्य

हेतुत्वायोगादित्यर्थः । सहावस्थानस्य श्रुतिमिति । तत्सहिततयावस्थानं सहावस्थानम् तदाधारत्वेनावस्थानमिति यावत् । न तु सहावस्थानं सामानाधिकरण्यमिति मन्तव्यम्; परैर्जीवाधिकरणकावस्थान एव, 'सविज्ञान' इत्यस्य प्रमाणीकरणादिति द्रष्टव्यम् ।

इति अध्यक्षाधिकरणम् ।

---

## (४) भूताधिकरणम्

नैकस्मिन् दर्शयतो हि ४-२-६.

**अत्र परे** चेत्यादि । **व्याख्यातं त्र्यात्मकत्वादितीति त्र्यात्मकत्वात्तु भूयस्त्वादितीति** पाठः; शांकरभाष्ये तथा दर्शनादिति द्रष्टव्यम् । **अण्व्यो मात्राः** सूक्ष्माः । **दशार्धानां** पञ्चानामित्यर्थः । **जीवसहितप्राणे**ति । ततश्च 'सः = प्राणसम्पृक्ताध्यक्ष' इति परव्याख्यानमनुपपन्नमिति भावः । **तत्र च व्युदसनीये**ति । स्फुटमूलार्थव्युदसनीयशंकाया एव पूर्वपक्षत्वस्योचितत्वादिति भावः । **पुनरारम्भाविषयत्वे**ति । 'अण्व्यो मात्रा विनाशिन्य' इति स्मृतेश्च, 'महदाद्या विशेषान्ताः' इति स्वोदाहृतस्मृतेश्च वैषम्यम्, 'अनुपूर्वश' इति पुनरारम्भवप्रतिपादकपदसम्भवासम्भवाभ्यामिति द्रष्टव्यम् ।

इति भूताधिकरणम् ।

---

## [५] आसृत्युपक्रमाधिकरणम्

समाना चासृत्युपक्रमादमृतत्वञ्चानुपोष्य ४-२-७.

**वस्तुसामर्थ्या**दिति पूर्वेणान्वयः ।

अस्यैव चोपपत्तेरूष्मा ४-२-११.

**स्थूलशरीरस्योष्मा सार्वत्रिक** इति ग्रन्थस्यानन्तरम्, सूक्ष्मदेहस्य सार्वत्रिकत्वादिति शेषोऽध्याहर्तव्यः । **संतापयति स्वं देहमापादतलमस्तक-**

मिति । अग्निशिखाप्रयुक्तः स्थूलशरीरे आपादतलमभिव्याप्तः सन्तापशब्दित ऊष्मा सूक्ष्मशरीरसार्वत्रिकत्वनिबन्धनः; न तु स्थूलशरीरत्वनिबन्धन इत्यर्थः। **अग्निशिखायाः क्रमेणोपसंह्रियमाणत्वादिति** । न चाग्निशिखायाः कात्स्न्यादेवोष्मणः कात्स्न्र्योपपत्तेर्न तस्य सूक्ष्मशरीरकात्स्न्यनिबन्धनत्वमिति वाच्यम् — अग्निशिखाकात्स्न्यस्यापि सूक्ष्मशरीरकात्स्न्यनिबन्धनत्वादित्यभिप्रायः। यद्वा भूतसूक्ष्मान्तर्गततेजोंशातिरिक्ताग्निशिखाया अभावादिति भावः ॥

प्रतिषेधादिति चेत् न शारीरात् स्पष्टो ह्येकेषाम् ४-२-१२.

**हृदयान्निष्क्रामतीत्यर्थ** इति । निष्क्रमितुमुद्युक्तः इत्यर्थः । एतदपि फलितार्थकथनम् । "अथैनमेते प्राणा अभिसमायन्ति स एताः तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामति" इत्युक्तत्वात् । "तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति" इति पठ्यते । अत एतत्सन्दर्भानुसारात्, निर्गममार्गपरिज्ञानेनान्तर्हृदय एव परिभ्रमति । पश्चाद्धृदयाग्रं प्रद्योतते । तेनैष आत्मा निष्क्रामतीत्येवार्थः । तस्यैव स्वरसतः प्रतीतेरिति द्रष्टव्यम् । केचित्तु हृदयाग्रप्रद्योतनं हृदयैकदेशान्निष्क्रान्तस्य मार्गप्रदर्शनायोपयुज्यते । अतो यथाश्रुतार्थेऽपि नानुपपत्तिरित्याहुः । **तेन प्रद्योतेनेत्यादिवाक्यस्येत्या**दिचोद्यस्यायमर्थः — उत्क्रान्तेरविद्वन्मात्रविषयत्वे अर्चिरादिगतिरपि विदुषो न प्रसज्येत । अतः उत्क्रान्तिवचनस्य अविद्वन्मात्रविषयत्वमिति वक्तुं न शक्यत इति । तस्माद्विदुष इत्युक्त [मयुक्त?] मिति शेषः । **सिद्धान्ते तु विद्वद्विषयमेवेद**मिति । एवकारो भिन्नक्रमः । इदमेव वाक्यं विद्वद्विषयमविद्वद्विषयमपि भवतीत्यर्थः । मूर्ध्न इत्यस्य विद्वद्विषयत्वेन पूर्वं व्याख्यातत्वात् ॥

ननु हृदयप्रद्योतनस्य सर्वसाधारण्ये 'तदोकोग्रज्वलन' मित्यत्र भाष्ये अग्रज्वलनस्य विद्यासामर्थ्यलब्धहार्दानुग्रहाधीनत्वप्रतिपादनात् तद्विरोध इति चेत् — शताधिकनाडीविवेचकज्वलनविशेषस्य तदधीनत्वपरत्वप्रतिपादनपरतया विरोधाभावादिति भावः । **इत्यत्रार्थपुत्रवित्तविषयैषणात्रयराहित्यं विवक्षित**मिति । अत्रार्थशब्दः स्वर्गादिलोकपरः, 'ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थाये' ति श्रुतेः । भाष्ये '**अप पुनर्मृत्युं जयती' ति विद्वांसं**

**प्रस्तुत्येति**। संसारतरणरूपफलकीर्तनस्य विद्वद्विषयत्वावश्यम्भावात् **विद्वांस**मित्युक्तम्। **षष्ठ्या अपादानवाचकत्वाच्चेति**। अपादानत्वरूपसम्बन्धस्य शेषत्वेन विवक्षासम्भवादिति भावः। **अग्नेरपां भक्षकत्वानुसन्धान**मिति। 'अग्निर्वै मृत्युः सोऽपामन्नम्' इति अपामन्नत्वोपासनमुक्त्वा, विहितस्य फलमुच्यते—'अपपुनर्मृत्युं जयती'तीति भावः।

**परेत्वित्यादि**। **सगुणविदुषश्चेति**। सगुणब्रह्मोपासकस्येत्यर्थः। (सगुणं ब्रह्मोपासीनस्येत्यर्थः।) 'द्वितीये'ति योगविभागात् समासः। "असामवेदविदुषः," "विशेषविदुषःशास्त्रम्" इत्यादिरामायण – माघकाव्यादिप्रयोगदर्शनात्। तेन विद्वच्छब्दस्य [1]शत्रन्ततया 'न लोकाव्यये'ति कृद्योगषष्ठ्या निषेधात्, शेषलक्षणषष्ठ्याश्च, 'पूरणगुणे'ति सता योगे षष्ठी न समस्यत इति षष्ठीसमासनिषेधात् सगुणं विद्वानिति द्वितीयापक्षे समासप्राप्त्यभावात् नैवं निर्देशो युक्त इति चोद्यं निरस्तम्। सुप्सुपेति वा समासात् साधुरिति केचित्। गम्या(त्या)दिपाठदर्शनात् द्वितीयासमास इति माघव्याख्याने मल्लिनाथेनोक्तम्। तदपि ग्राह्यमेव। **इय(त्य)श्च तेषां सूत्रयोजनेति**। 'सूक्ष्मं प्रमाणत' इति सूत्रयोजनेत्यर्थः। तद्व्यपीतेरिति पूर्वसूत्रयोजनायां तु योजनांशे अत्यन्तदूष्यभावात् तदकथनं न दोषः। **नाडीनिष्क्रमणश्रुतिरूपप्रमाणा**दिति। यद्यपि परभाष्ये प्रमाणत इत्यस्य परिमाणत इत्यर्थः प्रतीयते। एवं हि तद्व्याख्यानम्, "तल्लिङ्गशरीरं स्वरूपतः परिमाणतश्च सूक्ष्मम्। स्वरूपतस्सौक्ष्म्यं नायनस्य महतस्तेजस इव; त्रसरेणोरिव च परिमाणतः सौक्ष्म्यम्; तत्र परिमाणतः सौक्ष्म्यात् नाडीसञ्चारोपपत्तिः। स्वरूपतः सौक्ष्म्यादप्रतिघातपार्श्वस्थानुपलम्भोपपत्तिः" इति—तथापि प्रमाणपदस्वारस्यादियमपि योजना प्रतीयत इति तथोक्तमिति द्रष्टव्यम्। **मृतत्वाभावशङ्कां भ्रमयितुमिति** पाठः। **अर्चिरादिगत्युपपत्त्यर्थ**मितिच्छेदः। **अतद्विषयत्वादनुदाहार्य**मिति। न च—पद्यत इति पदं = गन्तव्यम्; न विद्यते पदं यस्य सोऽपद इत्येवं मुक्तस्यगन्तव्यरहितत्वप्रतिपादनात् कथं तस्य नोदाहर्तव्यत्वमिति शङ्क्यम् – पदशब्दस्य इन्द्रादिस्थानवाचित्वात्॥

इति आसृत्युपक्रमाधिकरणम्।

---

1. नायं क्वसुः; किंतु 'विदेः शतुर्वसुः' इति शतुर्वसुरादेशः। शतैव। क्वसौ तु विविदिवान् विविद्वान् इति रूपद्वयम्, "विभाषा गमहनविदविशाम्" इति। विकल्पात् विदन् विद्वानिति रूपद्वयम्।

## ( ६ ) परसंपत्त्यधिकरणम्

### तानि परे तथा ह्याह ४-२-१४.

भाष्ये **यथाकर्म यथाविद्यमि**ति । यथाकर्मेत्यत्र 'नश्च,' 'नपुंसकादन्यतरस्याम्' इति अजभावे रूपम् ॥

ननु 'वाङ्मनसि संपद्यते ; मनः प्राणे ; प्राणस्तेजसी' ति वाक्यत्रयार्थे क्रमेण, 'नैकस्मिन् दर्शयतो हि' इत्यन्तसूत्रैः विचारिते 'तेजः परस्याम्' इति चतुर्थवाक्यार्थनिर्णायकयोः, 'तानि परे तथा ह्याह,' 'अविभागो वचनात्' इत्यधिकरणयोरारम्भो युक्तः ; तदनन्तरञ्च 'समाना चासृत्युपक्रमात्' इत्यधिकरणस्य वाक्यार्थचतुष्टयस्यापि विद्वदविद्वत्साधारण्यनिर्णायकस्यारम्भ उचितः ; न तु मध्य इत्याशंक्य—समाना चासृत्युपक्रमादिति विद्वदविद्वत्समानत्वनिर्णयस्य सूत्रकृता समानत्वसंशयास्पदमात्र एव कर्तुं युक्ततया 'तेजः परस्यां देवतायाम्' इति वाक्यार्थस्य समानत्वसंशयानास्पदत्वात् तत्साधारण्येन कर्तुमयुक्तत्वमभिप्रेत्य चतुर्थवाक्यार्थनिर्णायकाधिकरणाभ्यां प्रागेव 'समाना चे' त्यधिकरणं निवेशितमिति परिहरति, **पूर्वं समाना चेत्यादि**ना ।

इति परसंपत्त्यधिकरणम् ।

## ( ७ ) अविभागाधिकरणम्

### अविभागो वचनात् ४-२-१५.

उक्तमेवार्थं दृष्टान्तान्तरप्रदर्शनेन विवृणोति **यथा च कञ्चुकोष्णीषवत** इत्यादिना । **तद्राहितस्य च विश्रम इ**ति । तद्राहित्यदशायां विश्रम इत्यर्थः । **सुषुप्तौ जीवमात्रस्ये**ति । न तु प्रळयोत्क्रान्त्योरिव स्थूलसूक्ष्मविशिष्टस्य जीवस्येति भावः । शङ्कते **विशेष्यांशस्ये**ति । सुषुप्तिवदिति भावः ।

'**गताः कलाः पञ्चदश प्रतिष्ठा**' इति । प्रमाणशब्दोदितानीन्द्रियाणि दश ; मन एकम्, सूक्ष्माणि भूतानि पञ्चेति षोडश कलाः सन्ति । तत्र प्राणस्य

पृथिवीविकारत्वात् मनसोऽपि 'अन्नमयं हि सोम्य मन' इति पृथिवीविकारत्वात् द्वयोरप्येकीकरणेन पञ्चदशत्वोक्तिरप्युपपद्यते । प्रतिष्ठा स्वस्वोपादानानीति । 'अवयवेषु वा अज्ञाने वा लयोक्तिवदसंगतेयमुक्तिः । किञ्च परैरेवमनुक्तञ्च । अतो नायं पाठ' इति चोदयन्ति । तान् प्रति वदामः, अन्तःकरणादीनां जीवाविद्यामात्र-कार्यत्वपक्षे तत्त्वज्ञानेन जीवाविद्याया उन्मूलिततया स्वकारणेषु लयासम्भवेऽपि, ईश्वराश्रितमायापरिणाममहाभूतोपसृष्टजीवाविद्याकार्यत्वपक्षे तत्त्वज्ञानेन जीवांशस्य नाशेऽपि उपष्टम्भीभूतमहाभूतांशस्य सत्त्वेन तत्रान्तःकरणादिकलै (लारूपै ?) कदेशस्य लयसम्भवात् । तन्तुद्वयारब्धपटस्य एकतन्तुनाशे तन्त्वन्तरे लयदृष्टेः । परग्रन्थेषु तथा समर्थितत्वाच्च नायथानुवादः । न च उत्तराधिकरणे कलाप्रळयस्य निरव-शेषत्वसमर्थनात् तद्विरोधः स्यादिति वाच्यम् — जीवाविद्याकार्यांश एव निरवशेष-लयप्रतिपादनपरत्वेन विरोधाभावात् । **प्रथम** इति । अधिकरण इति शेषः । **भिद्येते चासां नामरूपे** इति । आसां कलानां नामरूपे शक्त्यात्मके अपि भिद्येते विदीर्येते इत्यर्थः । **अविद्वद्दृष्ट्याऽप्यनवगतत्वादिति** । तेषां अदृश्यत्वेन श्रुत्यैकसमधिगम्यस्यार्थस्य विदुषोत्प्रेक्षितुमशक्यत्वादिति भावः । **प्राकृतप्रळय-विषयतया वाऽर्थवत्त्वादिति** । यद्यप्यात्मज्ञानेन कलाप्रळयं प्रतिपाद्य हि (?) "भिद्येते चासां नामरूपे पुरुष इत्येवं प्रोच्यते । स एषोकलोमृतो भवति" इति श्रुतस्य न सर्वसाधारणप्राकृतप्रळयपरत्वं सम्भवति — तथापि देवमनुष्यादिनामरूपविषयतयाऽर्थ-वत्तया पूर्वदूषण एव तात्पर्यमिति द्रष्टव्यम् । **ईश्वरांशस्य निमित्तकारणत्वा-दिति** । तन्मत इति शेषः ॥

इति अविभागाधिकरणम् ।

---

## (९) रश्म्यधिकरणम्

**रश्म्यनुसारी ४-२-१७.**

**उद्धृताग्नौ प्रदेश** इति । उद्धृतोऽग्निर्यस्मात्प्रदेशादिति बहुव्रीहिः । भाष्ये **अमुष्मादादित्यात् प्रतायन्ते** । सन्तता भवन्ति । आदित्यान्निस्सृता

नाडीषु संबद्धाः नाडीभ्यो निस्सृताः सन्तानभूतास्सत्य अदित्ये सम्बद्धा इति वाक्यार्थः ॥

इति रश्म्यनुसाराधिकरणम्

---

## [१०] निशाधिकरणम्

**निशि नेति चेन्न सम्बन्धस्य यावद्देहभावित्वात् दर्शयति च ४-२-१८.**

**इतर** इत्यादि । **तर्हि निशि मृतस्ये**ति । रश्म्यनुसारेणेति शेषः । इष्टापत्तिमाशङ्क्याह **तस्य रविरश्म्यनपेक्षत्व** इति । निशि ब्रह्मगमनस्य रविरश्म्यनपेक्षत्व इत्यर्थः । **विद्यानिष्पत्त्यभावनिबन्धनत्वाश्रयणेने**ति । अयं भावः — विद्याया निशि मृतविषये न सर्वदा फलाजनकत्वं पूर्वपक्षिणोऽभिमतम्; येन विद्यायाः पाक्षिकफलत्वं प्रसजेत् । किन्तु निशामरणनिन्दाबलात् निशि मृतस्य देहस्य चरमदेहत्वं नास्ति । अप्रारब्धकर्मभिर्वा प्रारब्धकर्मभिरेव वा शरीरान्तरव्यवधानेनेति हि पूर्वपक्षाभिप्रायः । अतो न पाक्षिकफलत्वप्रसङ्ग इति । नन्वेवं चरमत्वमेव नास्तीति पूर्वपक्षे, सिद्धान्तभाष्ये **प्रारब्धकार्यस्य कर्मणः चरमदेहावधित्वादि**ति देहस्य चारम्यं सिद्धवत्कृत्य परिहारो न सङ्गच्छेतेति चेत्, — **चरमदेहावधित्वादि**ति भाष्यस्यायमर्थः । फलभूतदेहावधित्वादस्य कर्मणः इयन्ति शरीराणि फलभूतानीति नियमसत्त्वेन तावद्देहाधिकदेहनिष्पादनासामर्थ्यादिति । अयमेव **यावद्देहभावित्वादि**ति सूत्रखण्डाभिप्रेतार्थ इति द्रष्टव्यम् । **तस्य तु प्रतिज्ञाया**मिति । रश्म्यनुसारीति प्रतिज्ञायामित्यर्थः । **अन्यथा अपेक्षितार्थान्तरप्रतिज्ञाया** इति । निशि मृतस्य मुक्तिः सम्भवतीत्यर्थान्तरप्रतिज्ञायाः, यावद्देहभावित्वादिति हेतोश्चेत्यर्थः ॥

इति निशाधिकरणम् ।

---

## (११) दाक्षिणायनाधिकरणम्

अतश्चायने ऽपि दक्षिणे ४-२-१९.

धूमादिमार्गलिङ्गाभावादिति । दक्षिणायनमृतानां अनन्यथासिद्ध-धूमादिप्रापकप्रमाणाभावादित्यर्थः । भाष्ये **यदा तत्पर्यवैतीति** । यदा = यस्मिन् काले तत् = सोमलोकप्रापकं पुण्यं पर्यवैति = परिक्षीयत इत्यर्थः पैरैर्वर्णितः ॥

योगिनः प्रति स्मर्येते स्मार्ते चैते ४-२-२०.

ननु 'नैते सृती पार्थ जानन्' इत्युपसंहारानुसारेण 'यत्र काले त्वनावृत्तिम्' इत्युपक्रमो बाध्यत इत्येतावति वक्तव्ये, मध्ये 'अग्निर्ज्योतिः' इत्यादिवचनं भाष्ये अयुक्तमित्याशङ्क्य उपक्रमस्य उपसंहारमात्रेणान्यथानयनासम्भवात् महावाक्य-स्वारस्येन बाध्यत्वं वक्तुं मध्यमवाक्यस्याप्युपक्रमविरोधं दर्शयतीत्याह **यत्र काले त्विती**ति । [यत्र काले त्विति ?] य उपक्रमः स बाध्यत इत्यभिप्रायेणेत्यन्वयः । न तु तत् प्रतीकग्रहणमिति मन्तव्यम् । **चतुर्विधेति** । 'आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ' इत्युक्तचतुर्विधेति द्रष्टव्यम् । ततश्च, 'यत्र काले त्वनावृत्ति-मावृत्तिञ्चैव योगिनः' इति आवृत्तिप्रतिपादकवचनमुपपद्यत इति भावः । यत्र काले त्वनावृत्तिमित्यस्य यैरातिवाहिकैर्नीयमानस्यावृत्तिरिति फलितो ऽर्थः ॥

इति दक्षिणायनाधिकरणम् ।

---

इति दशोपनिषद्भाष्यकारैः श्रीमद्रङ्गरामानुजमुनिभिः विरचितायां

श्रुतप्रकाशिकाव्याख्यायां भावप्रकाशिकायां

चतुर्थाध्यायस्य द्वितीयः पादः ॥

॥ श्रीः ॥

॥ श्रीमते रङ्गरामानुजमहादेशिकाय नमः ॥

श्रीमते निगमान्तमहादेशिकाय नमः । श्रीमते भगवद्रामानुजाय नमः ॥

श्रुतप्रकाशिकाव्याख्या भावप्रकाशिका ।

## चतुर्थेऽध्याये तृतीयः पादः

## (१) अर्चिराद्यधिकरणम्

——: ❀ :——

**अर्चिरादिना तत्प्रथितेः ४-३-१.**

शव्यं शवयोग्यमिति । साध्वर्थे यत् । **तस्मै स तत्र विजिहीत** इति । स्वावयवान् विगमय्य छिद्रं करोति, यथा रथचक्रस्य छिद्रमित्यर्थः । नीरन्ध्रतया मार्गमावृत्य स्थितो वायुः स्वावयवप्रहाणे रथचक्रप्रमाणं छिद्ररूपं मार्गं ददातीत्यर्थः । **अन्यत्रे**ति व्याख्येयं पदम् । **क्रमिभेदश्चे**ति । क्रमाश्रयपदार्थानां देवलोकवायुलोकादीनां प्रतिशाखं भेदेनाम्नानादिति भावः । **गुणानन्त्यादुपसंहारो न शक्यत इती**ति । इदमुपलक्षणम्; भेदकाकारस्यापि 'सम्बन्धादेवमन्यत्रापि' इत्येवमादिषु दर्शितत्वादित्यपि द्रष्टव्यम् ।

**अन्येत्वि**त्यादि । **दार्विहोमिके**ति । दर्विहोम इति कर्मविशेषाणां नाम ॥

इति अर्चिराद्यधिकरणम् ।

---

## (२) वाय्वधिकरणम्

**वायुमब्दादविशेषविशेषाभ्याम् ४-३-२.**

**श्रुत्यर्थपठनस्थानप्रवृत्तिमुख्यकाण्डाः क्रमप्रमाणानी**ति । 'वेदं कृत्वा वेदिं' इति श्रौतक्रमः । 'अग्निहोत्रं जुहोति,' 'यवागूं पचति' त्यादौ

अर्थलक्षणप्रयोजनवशात् क्रमः । 'समिधो यजति, तनूनपातं यजती' त्यादौ पाठक्रमेण क्रमः । प्राजापत्येषु पशुगणेषु नियोजनोपकरणादिषु पूर्वपूर्व [ प्रवृत्ति ] क्रमेण उत्तरोत्तरप्रवृत्तिक्रमः । 'सारस्वतौ भवत' इति विहितयोः सरस्वतीदेवत्य-सरस्वद्देवत्ययोः मुख्ययोः क्रमानुरोधेन तदङ्गभूतानां निर्वापादीनां क्रमः । काण्डक्रमो हि स्थानक्रमः । यथा साद्यस्के, 'सह पशूनालभत' इति सहकर्तव्यत्वेन चोदितानामग्नीषोमीयसवनीयानुबन्ध्यानां मध्ये सवनीयस्य स्थानभ्रंशाभावेन तस्यैव पूर्वभावित्वमिति द्रष्टव्यम् । **पञ्चम्यभिहितं संवत्सरदेवलोकयोर्मासादूर्ध्वत्वमिति ।** 'मासेभ्यः संवत्सरम्,' 'मासेभ्यो देवलोक' मिति पञ्चम्योरध्याहृतोर्ध्वशब्दरूपदिक्छब्दयोगनिमित्तत्वात् पञ्चमीनिमित्त दिक्छब्द एव पञ्चमीशब्देनोपचरित इति द्रष्टव्यम् ।

ननु नेयं पञ्चमी ऊर्ध्वादिति (ऊर्ध्वमिति ?) दिक्छब्दयोगनिमित्ता ; अपि तु 'तेऽर्चिषमभिसम्भवन्ती' ति अनुषक्ताभिसंभवनक्रियापादानत्वप्रयुक्ता । अतो नाध्याहृतोर्ध्वशब्दमादायोर्ध्वत्वस्य श्रुतत्वनिर्वाहः । किञ्च क्त्वाश्रुत्यादेः क्रियापौर्वापर्यलक्षणक्रमार्थकत्वात् पञ्चम्या ऊर्ध्वाधरक्रमे पौर्वापर्यक्रमे वा नानुशासनमस्ति । येनोर्ध्वत्वस्य श्रौतत्वं स्यादिति चेन्न — अभिसम्भवनक्रियाया अपादाननिरपेक्षत्वेन 'तेनोर्ध्वमाक्रमत' इति श्रुत्यन्तरानुसारेण च ऊर्ध्वशब्दस्यैवाध्याहर्तव्यतया ऊर्ध्वत्वस्य श्रौतत्वसम्भवादिति तात्पर्यात् । यदि च 'मासेभ्यो देवलोक' मित्यादावभिसंभवनक्रियापेक्षया अपादानपञ्चमी, तदापि देवलोकाद्यभिसम्भवनक्रियां प्रति नियतपूर्वसत्त्वरूपकारकविशेषत्वलक्षणापादानत्वस्य पञ्चम्या अभिधाने क्रियाकारकलक्षणपौर्वापर्यरूपः क्रमो ऽभिहितो भवति । ततश्च मासापादानकाभिसम्भवनक्रियाकर्मत्वे संवत्सरदेवलोकयोः कथ्यमाने मासादूर्ध्वत्वं संवत्सरदेवलोकयोरर्थात् सिध्यतीत्यभिप्रेत्य ऊर्ध्वत्वस्य श्रौतत्वमभिहितमिति द्रष्टव्यम् । एवमुत्तरत्रापि द्रष्टव्यम् । यद्वा आतिवाहिकत्वात् तेषां हेतुपञ्चमीत्वपक्षे तेषां पूर्वसत्त्वरूपं हेतुत्वं श्रुत्युक्तमिति द्रष्टव्यम् ।

**हेतौ कथमर्चिरादौ पञ्चमी प्राप्नोति ।** 'विभाषा गुणे अस्त्रिया' मिति पञ्चमी गुणे हेतावस्त्रीलिङ्गे विहिता । यथा जाड्येन जाड्याद्वा बद्ध इतीति चेत् ;

अत्र केचित् समादधते — नात्र, 'सत्त्वे निविशतेऽपैति' इति लक्षितस्य पारिभाषिकस्य गुणस्य ग्रहणम्; अपितु पराश्रितमात्रस्य ग्रहणम्। तेन अर्चिष इत्यादौ हेतौ पञ्चमी सिद्धेति — तदनिमन्दम् — यद्यपि परतन्त्रस्य गुणस्य ग्रहणम्, तथापि नात्र पञ्चमी प्राप्नोति। अर्चिरादीनां विशेष्यतया स्वतन्त्रत्वेन पराश्रितत्वाभावात् गुणत्वाभावात्। 'यस्य गुणस्य हि भावात्' इत्यत्र गुणशब्देन यावान् पराश्रयविशेषणभूतो द्रव्यादन्यो जात्यादिरर्थोऽस्ति, सर्वोपि गृह्यत इत्युक्तप्रकाराश्रयणेऽपि अर्चिरादीनां विपरीतत्वेन गुणत्वाप्रसक्तेः। सत्यपि च गुणत्वे अर्चिष इत्यत्र पञ्चमी नानेन प्राप्नोति। अस्त्रियामिति प्रतिषेधात्। अर्चिश्शब्दस्य 'इसुसन्तः। अर्चिस्त्रियाम्' इति सूत्रेण स्त्रीनपुंसकयोरनुशासनात् पुल्लिङ्गता नास्त्येव। अत्रत्यश्चार्चिश्शब्दः स्त्रीलिङ्ग एव। 'तेऽर्चिषमभिसम्भवन्ती' ति पूर्वत्र निर्देशात्। नपुंसकलिङ्गे तु अर्चिरित्येव द्वितीयैकवचने रूपं स्यात्। अतः स्त्रीलिङ्ग एवार्चिश्शब्द इति अस्त्रियामिति प्रतिषेधः स्यादेव। न हि परतन्त्रमात्रस्य गुणस्य ग्रहणम्; अपितु पारिभाषिकस्यैव; तदनुरूपत्वेन वृत्त्यादावुदाहरणप्रत्युदाहरणयोर्दर्शितत्वात्। यद्यपि 'यस्य गुणस्य हि भावात्' इत्यत्र पराश्रितस्य भेदकजात्यादेर्गुणशब्देन ग्रहणमिति स्थितम्। लोके उपसर्जनं गुण उच्यते। शुक्लादौ च प्रसिद्धतरो गुणशब्दः। वैशेषिकास्तु रूपरसादयश्चतुर्विंशतिः गुणा इति प्रतिपन्नाः — तथापि इह शास्त्रे 'सत्त्वे निविशते' इत्यादिपरिभाषितस्य गुणस्य ग्रहणम्। यथा वा 'वोतो गुणवचनात्' इत्यत्र। 'कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्ययः' इति न्यायात्। तस्मादेवमत्र परिहारः — 'विभाषा गुणे अस्त्रिया' मित्यत्र विभाषेति योगविभागात् गुणवचनादपि हेतोः स्त्रियामपि क्वचित् पञ्चमी भवति। तेन, 'नास्तीह घटः। अनुपलब्धेः', 'वह्निमान् धूमात्' इत्यादयः प्रयोगा अप्युपपन्ना इत्यलमतिक्षोदेन।

अन्यत्रेति। बृहदारण्यक एव प्रदेशान्तर इत्यर्थः। **वायोरादित्यात् पूर्वत्वं प्रातिपदिकाभिहित**मिति। इदमुपलक्षणम्। 'तेन स ऊर्ध्वमाक्रमते स आदित्यमागच्छती' ति वायुदत्तमार्गस्याऽऽदित्यप्राप्तौ तृतीयया करणत्वश्रवणात्। न चोर्ध्वदेशाक्रमणमात्रे वायुदत्तमार्गस्य करणत्वं श्रुतम्; न

त्वादित्यमण्डलाक्रमण इति वाच्यम् — ऊर्ध्वदेशस्य विशेषाकङ्क्षायां आदित्यमण्डलरूपविशेषपर्यवसानादिति द्रष्टव्यम् ।

**परे** चेत्यादि । **अनन्तरं वायुरि**तीति । 'देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकम्' इति पाठक्रमात् अर्चिरनन्तरमेव वायोर्निवेश इति पूर्वः पक्षः । 'स वायुमागच्छति तस्मै स तत्र परि (वि) जिहीते' इति वायुप्रत्तेन मार्गेण आदित्यगमनश्रवणात् कौषीतकीपाठक्रमं बाधित्वा आदित्यात्पूर्वं वायोर्निवेश इति सिद्धान्तः । सूत्रमप्यादित्यात्पूर्वं वायोर्निवेशपरम्; न तु अब्दानन्तर्यपरमिति वदन्तीति भावः ॥

इति वाय्वधिकरणम् ।

---

## (३) वरुणाधिकरणम्

### तटितोऽधि वरुणः संबन्धात् ४-३-३.

भाष्ये **अग्निलोकस्य अर्चिःपर्यायत्वेने**ति । अर्चिश्शब्देन ज्वालावाचिना तदात्मको ऽग्निरुच्यते, उपचारादिनेति भावः । नन्वत्र 'इसुसोः सामर्थ्ये,' 'नित्यं समासे अनुत्तरपदस्थस्ये' ति षत्वप्राप्त्या अर्चिष्पर्यायत्वेनेति भवितव्यम् । यथा सर्पिष्कुण्डिका, शोचिष्केश इत्यादि, 'अर्चिशुचिविसृविच्छादिभ्य इसिः' इति शोचिरादिवत् अर्चिश्शब्दोऽपि इसिप्रत्ययान्तो व्युत्पादित इति चेत् — अत्राभिधीयते । 'अतः कृकमिकंसे' त्युत्तरसूत्रे कंसग्रहणेन उणादिषु क्वचिद्व्युत्पत्तिकार्यं न भवतीति ज्ञापनेन इसिप्रत्ययान्तत्वाभावादिति वा, कस्कादिषु सर्पिष्कुण्डिकेत्यादिपाठेन इदं षत्वमनित्यमिति ज्ञापनेन वा, अर्चिश्शब्दस्यात्र शब्दस्वरूपपरतया अमुख्यत्वात् 'गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः' इति वा महत्पूर्वः शूद्र इत्यादावात्वादिवत् षत्वं न भवतीति । एवमुत्तरत्रापि **अर्चिःप्रभृतिष्वि**त्यादौ द्रष्टव्यम् । तृतीयस्तु परिहार उत्तरत्र न सम्भवति; अर्थपरत्वेन तत्र मुख्यत्वादिति । **अर्चिष्प्रभृतिष्वि**त्येव बहुषु कोशेषु पाठो दृश्यते । तत्र न किञ्चित् यत्नसाध्यम् ।

अर्चिश्शब्दस्य गौणत्वादिसश्चाप्रत्ययत्वतः ।
अनित्यत्वाच्च मूर्धन्यो न कृतोऽर्चिःपदेऽमुना ॥

इति च सङ्ग्रहश्लोकः । भाष्ये — **आदित्यस्याप्यत्रे**त्यादि । अयमर्थः — पाठात् प्राप्तक्रमः पाठक्रमः । 'अग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स इन्द्रलोकं स प्रजापतिलोक' मिति पाठवशेन वायोर्वरुणस्य यः क्रमः प्राप्तः, तद्बाधेन विद्युत उपरि तेषां निवेशमसमर्थनेन वाजसनेयश्रुत्यनुसारादादित्यस्य वायोरुपरि निवेशोऽस्मिन्नधिकरणे सिषाधयिषित इत्यर्थः । आशंसायां क्तः । **देवलोकशब्दाभिहितात् वायोरुपरि निवेशः सिद्ध** — इति क्वचित् पाठः । तत्र उपरिशब्दयोगे, 'षष्ठ्यतसर्थप्रत्ययेने' ति प्राप्ता षष्ठी, 'ततः पश्चात् व्रजती' ति महाभाष्यप्रयोगेणानित्यत्वज्ञापनात् क्वचिन्न भवतीति न कृतेति द्रष्टव्यम् । वायुमपेक्ष्येत्यर्थविवक्षया ल्यब्लोपे पञ्चमीति वा द्रष्टव्यम् । एवमुत्तरत्रापि ।

भाष्ये **इदानीं वरुणेन्द्रादिभिरि**ति । तदर्थमिति शेषः । **क्रमद्वयभङ्गः स्यादि**ति । आदित्यचन्द्रयोरन्तराळे चन्द्रविद्युतोरन्तराळे वा निवेशे, 'आदित्यात् चन्द्रमसं चन्द्रमसो विद्युतम्' इति श्रौतक्रमस्य च, 'वरुणलोकं स इन्द्रलोकं स प्रजापतिलोकम्' इति पाठक्रमप्राप्तस्य वरुणेन्द्रप्रजापतीनामानन्तर्यस्य च भङ्गप्रसङ्गादित्यर्थः । **तटित्ततोऽप्यधस्तादि**ति पञ्चमी पूर्ववत् द्रष्टव्या । **कथं तटिदुपरि वरुणनिवेश** इति । ननु कथमत्र समासः । अन्यारादिति दिग्योगलक्षणपञ्चम्याः 'षष्ठ्यतसर्थप्रत्ययेन' इति षष्ठ्या बाधात् । अबाधेऽपि पञ्चम्यन्तस्य समासप्राप्त्यभावात् । षष्ठीपक्षे पूरणगुणेत्यव्ययेन षष्ठ्यन्तस्य समासनिषेधात् — उच्यते । षष्ठीसमास एवायम् । पूरणगुणेति निषेधस्तु सत्तव्याभ्यां कृद्भ्यां साहचर्यात् कृदन्तेनाव्ययेनैव; नान्येन । यथा कटस्य कर्तुं कटस्य कृत्वेत्यादि । तथैव वृत्त्यादावुदाहृतत्वात् । अकृदन्ताव्यययोगे तु समासोऽस्त्येव । अत एव भगवान् पाणिनिर्निरदिशत् "अनुर्यत्समया" इति । व्याख्यातञ्च वृत्तिकारादिभिः, "यस्य समया यत्समया" इति । उपायान्तरमप्यस्तीति तद्व्याख्यातृभिरन्यथा परिहृतम् । अनित्यश्चायं समासप्रतिषेध इति पूर्वमसकृदुपपादितम् ।

शिष्टप्रयोगबाहुल्यात् कृदन्ताव्ययसङ्ग्रहात् ।
अनित्यत्वाच्च तस्यैव निर्देशाः साधवो मताः ॥

**अर्थक्रमस्य पाठक्रमा**दिति । मेघोदरवर्तित्वलक्षणसामर्थ्यरूपार्थक्रमस्येत्यर्थः । **तटितो गमयितृत्वाव्यवधानाये**ति । ततश्चन्द्रमसो विद्युतमिति श्रौतक्रमभङ्गोऽपि सोढव्य इति भावः । **तथासति इन्द्रप्रजापत्योर्यथापाठ**मिति । 'स वरुणलोकं स इन्द्रलोकं स प्रजापतिलोकम्' इति पाठानुसारे त्रयाणामव्यवधानसिद्ध्यर्थं तटितः पूर्वं त्रयाणां निर्देशेऽङ्गीक्रियमाणे मेघोदरवर्तित्वरूपार्थक्रमभङ्गप्रसङ्गादित्यर्थः । **तटिदानन्तर्य** इति । वरुणानन्तरं तटित्, तत इन्द्रप्रजापती इत्यभ्युपगम्यमाने कौषीतकीपाठसिद्धस्य वरुणेन्द्रप्रजापतीनां क्रमस्य भङ्गप्रसङ्गादित्यर्थः । अतः क्वचित् कोशेषु, 'स वरुणलोकं स आदित्यलोकं स इन्द्रलोकं स प्रजापतिलोकम्' इति वरुणेन्द्रलोकयोर्मध्ये आदित्यलोकपाठो दृश्यते । स तु न प्रामाणिकः; केषुचित् कोशेषु तथा अनुदाहृतत्वात्; अस्यैव श्रुतप्रकाशिकाग्रन्थस्य साक्षित्वाच्च । तथा हि पाठे सति एतदधिकरणपूर्वपक्षसिद्धान्तयोः असङ्गतिप्रसङ्गाच्च । तथा हि— यदि वरुणलोकानन्तरमादित्यः पठितः स्यात्, तर्हि वरुणेन्द्रप्रजापतीनां त्रयाणामप्यादित्यात् पूर्वत्वमिति पूर्वपक्षस्य कथमुत्थितिः । अत्र हि, 'वायुलोकं वरुणलोकम्' इति पाठक्रमवलम्ब्य वायुलोकानन्तर्यं वरुणलोकस्य वदन् पूर्वपक्षी कथं तुरगारूढस्य तुरगविस्मरणन्यायेन वायुलोकादित्यलोकयोः पाठप्राप्तं क्रमम् आदित्यलोकेन्द्रलोकयोः पाठप्राप्तं क्रमञ्चानादृत्य त्रयाणामादित्यात्पूर्वं निवेश इत्याक्षिपेत् । न च वाय्वादित्ययोरानन्तर्यस्य बाधितत्वात् तत्रैव निवेशनीयानां निवेश इति वाच्यम् — 'आदित्याच्चन्द्रमसम्' इति क्रमस्य इन्द्रप्रजापतिभ्यां बाधितत्वात् । वरुणस्यापि तत्रैव निवेशः किन्न स्यादित्यपि वक्तुं सुशकत्वात् । किञ्च, न हि आनन्तर्यं स्वरसप्रतिपन्नं केनचित् प्रामाणिकेनापोदितञ्चेत्, अतथाभूतेनापि शक्यते अपवदितुम् । तदपि प्रामाणिकमिति चेत्, तर्हि पाठक्रमानुग्रहाय (नुग्राहकतया) आदित्यानन्तरमेव तयोर्निर्देशोऽस्तु । 'आदित्याच्चन्द्रमसमि'ति शब्दस्वरसप्रतिपन्नमानन्तर्यमपि बाध्यताम्; 'वायुलोकादादित्य' मिति प्रतिपन्नस्य वाय्वादित्यक्रमस्य पाठक्रमेण बाधवत् । इतरथा वरुणलोकानन्तरमिन्द्रलोकात् पूर्वमादित्यलोकपाठस्य

निरालम्बनत्वप्रसङ्गात् । अत एव पूर्वतन्त्रे, "अग्नौ सावित्रहोमादिवैशेषिकानुष्ठानानन्तरमेव दीक्षणीयाया अनुष्ठानम् । सावित्रहोमादिपाठानन्तरं दीक्षणीयागुणविधानार्थस्याप्यनुवादस्य दर्शनात् । इतरथा तत्र तत्पाठस्य अत्यन्तानर्थक्यप्रसङ्गात्" इत्युक्तं (५-२-१०) पञ्चमे । अतो वरुणलोकेन्द्रलोकयोर्मध्ये नाऽऽदित्यलोकपाठः कौषीतकयां युक्तः । नचैवमुत्तराधिकरणयादवप्रकाशमतदूषणग्रन्थविरोध इति वाच्यम् — यादवप्रकाशैः तथा पाठस्य कल्पिततया पराभ्युपगममादायैव परो दूषणीय इति न्यायादुपपत्तेरिति युक्तमुत्पश्यामः ।

परे तु — 'आदित्याच्चन्द्रमस' मिति श्रौतक्रमबाधापेक्षया 'स आदित्यलोकं स इन्द्रलोक' मिति पाठक्रमबाधस्यैव युक्तत्वात्, वायुलोकादित्यलोकयोरानन्तर्यस्य व्यवधानसहत्वाच्च त्रयाणामप्यादित्यात्पूर्वं निवेश इति पूर्वपक्षो युक्त एव । अत एव जातेष्टौ पुत्रजननरूपनिमित्तानन्तर्यस्य निमित्तश्रुतिप्राप्तस्य स्तनप्राशनोत्कर्षद्वारा पुत्रविपत्तिसम्पादकत्वेन प्रयोजनविरोधप्रसङ्गात् बाधितत्वे सति — 'जातकर्मानन्तरमपि न जातेष्ट्यनुष्ठानम् । निमित्तस्वरसानन्तर्यस्य बाधितत्वात् । अत आशौचापगमे पूर्वकाले च प्राप्ते कर्तव्यम् इति (४-३-१७) चतुर्थे समर्थनात् तन्न्यायेन बाधितस्य (?) वायुलोकादित्यलोकानन्तर्यस्य बाधितत्वादेव निवेशाकाङ्क्षाणां तत्रैव निवेशो युक्त इति पूर्वपक्षस्य युक्तत्वात् । न च त्रयाणामप्यादित्यात्परत एव निवेश इति पूर्वपक्षः किन्न स्यादिति वाच्यम् — न्यायसामान्ये तस्यापीष्टत्वात् । वायुलोकम्, वरुणलोकम्, आदित्यलोक' मिति प्रथमश्रुतपाठक्रमपरित्यागेन चरमश्रुतस्य, स आदित्यलोकं स इन्द्रलोकं स प्रजापतिलोक' मिति पाठक्रमानुग्रहस्यान्याय्यत्वाच्च । तस्मात् त्रयाणाञ्चाऽऽदित्यात् पूर्वं निवेश इति युक्त एव पूर्वः पक्षः । सर्वकोशेषु दृष्टस्य वरुणेन्द्रलोकमध्ये आदित्यलोकपाठस्य यादवप्रकाशादिभिः आदृतस्यापलापेऽति प्रसङ्गाच्च । न च वरुणेन्द्रान्तराळे आदित्यपाठस्यात्यन्तनिरवलम्बनत्वमिति वाच्यम्— 'अग्निहोत्रं जुहोति यवागूं पचती' तिवत् बाधस्य न्यायप्राप्तत्वादिति वदन्ति ॥

इति वरुणाधिकरणम् ।

---

# [ ४ ] आतिवाहिकाधिकरणम्

आतिवाहिकास्तल्लिङ्गात् ४-३-४.

भाष्ये **अमुकश्च पर्वतपार्श्व**मिति। पार्श्वशब्दस्योभयलिङ्गत्वात् पुल्लिङ्गाभिप्रायेणेत्थमुक्तम्। नपुंसके तु अदकमिति स्यात्। न च 'सैव हि सत्यादयः' इति सूत्रे कल्पतरौ "अमुकं फलं प्रधानस्येत्यगृह्यमाणविशेषत्वात्" इति निर्देशात् अमुकमित्यप्यस्ति रूपमिति वाच्यम् — तस्य व्याकरणस्मृतिविरुद्धतया अप्रामाणिकत्वात्। **लोकशब्दवाच्यत्वमुक्तं स्यादिति**। ततश्च स्तुतितया पर्यवस्येत, मुख्यस्य कालविशेषस्य भोगभूमित्वासम्भवादिति भाव·। **लोकत्वसाधकहेतुरर्थसिद्ध** इति। 'विजिहीर्षत' इति विहरणेच्छाप्रतिपादनादिति भावः। इदञ्च 'विजिहीर्षन' इति काचित्कपाठमभिप्रेत्योक्तम्। पाठान्तरं तु पूर्वमेव व्याख्यातम।

भाष्ये **अतिवाहे परमपुरुषेण नियुक्ता** इति। 'तत्र नियुक्त' इति ठगिति भावः। भाष्ये **उपसंहारे श्रूयमाणं पूर्वेषा**मिति। ननु विशेषविधानस्य शेषप्रतिषेधार्थत्वं लोके दृष्टम्। यथा देवदत्तो वामेनाक्ष्णा पश्यती'ति तदितरनिषेधपरत्वम्। ततश्च कथमस्य इतरेषामपि चेतनत्वगमयितृत्वप्रतिपादकत्वमिति चेन्न — 'स एनान् गमयती'ति वाक्ये पुरुषत्वं गमयितृत्वं सिद्धवत्कृत्यामानवत्वरूपविशेषमात्रप्रतिपादनेन तेषामप्यर्चिरादीनां पुरुषत्वगमयितृत्वावगतेः, ब्रह्मगमयितृत्वविधानपक्षेऽपि त्वदुक्तरीत्या इतरेषां ब्रह्मगमयितृत्वनिषेधे 'विशेषनिषेधे सामान्यस्याभ्यनुज्ञानम्' इति न्यायेन ब्रह्मगमयितृत्वविशेषासंभवेऽपि गमयितृत्वमात्रसिद्धेश्चेति द्रष्टव्यम्।

**मानवगमयितृत्वव्यवच्छेदकत्वा**दिति। वैद्युतस्य गमयितृत्वसिद्धवत्कारेण मानवत्वनिवृत्तिमात्रपरत्वात् वाक्यस्येत्यर्थः। वैद्युते विशिष्य, अयं ब्रह्मगमयिता मानवो नेत्युक्ते, पूर्वेषां मानवत्वं गमयितृत्वं चोक्तमिह भवतीति भावः।

**व्यवच्छेद्यस्यमानवत्वं गमयेदिति**। अर्चिरादेरित्यर्थः।

**अन्येत्वित्यादि**। **अर्थक्रमवशादिति**। वृष्टिरूपैककार्यकारित्वलक्षणार्थक्रमवशादित्यर्थः। **वरुणो निवेशनीय** इति। इन्द्रप्रजापती तु तटितः परस्तात्

निवेशानीशावित्येतत्तु पूर्वपक्षसिद्धान्तयोः समानमिति द्रष्टव्यम् । **वरुणनिवेशपरं व्याख्यात**मिति । पूर्वपक्षसूत्रत्रयेति शेषः । **तमभिप्रवहन्तीति** । तं प्रापयन्तीत्यर्थः । **वृष्टिहेतुत्वलक्षणार्थक्रमसचिवेनेति** । इन्द्रस्यापि मेघवाहनत्वेन वर्षहेतुत्वादिति भावः ॥

आतिवाहिकाधिकरणम् ।

---

## (५) कार्याधिकरणम्

विशेषितत्वाच्च ४-३-७.

भाष्ये **गमयतीति विशेष्यत** इति । बहुवचनान्तलोकशब्दस्य लोकविशेषणमुखेन गमनविशेषणत्वं युज्यत इति भावः । अत एव भाष्ये **लोकविशेषवर्ति**नमित्युक्तम् । भाष्ये **अर्चिरादिना गतोऽभि (गतः प्रत्यभि ?) सन्धत्त** इति । यद्यपि न पूर्वत्रार्चिरादिगतिः प्रस्तुता – तथापि 'आकाशो हवै नामरूपयोर्निर्वहिते' ति ब्रह्मविद्यायाः प्रस्तुतत्वात् । ब्रह्मविदश्चार्चिरादिगतिं सिद्धवत्कृत्य एवमुक्तमिति द्रष्टव्यम् ॥

न च कार्ये प्रत्यभिसन्धिः ४-३-१३.

'प्रपद्ये' इति प्रपत्त्यभिसन्धिः **प्रत्यभिसन्धिशब्देन** विवक्षितः ॥

अप्रतीकालम्बनान्नयतीति बादरायण उभयथा च दोषात् तत्क्रतुश्च ४-३-१४.

**जैमिनिमता**दिति । इदमुपलक्षणम् । बादरिमतादित्यपि द्रष्टव्यम् । उत्तरत्र मतद्वयविशेषप्रतिपादनात् ॥

ननु 'आश्रयान्तरप्रत्ययस्य आश्रयान्तरे प्रतिक्षेपः प्रतीक' इति हि वृद्धाः । तत् कथमुच्यते अप्रतीकालम्बनशब्देन कार्योपासकव्यवच्छेद इत्याशंक्याह – **न चाप्रतीकालम्बनान्नयतीत्यत्रे**ति । बादरिमताद्विशेषमुक्त्वा जैमिनिमताद्विशेषमाह– **गोबलीवर्दन्याया**दिति । जैमिनेरप्युभयविधान् नयतीत्येव परमतात्पर्यम् । आदरातिशयात्तु परब्रह्मोपासीनानामर्चिरादिगतिर्जैमिनिनोक्तेत्यर्थः ॥

([1]प्रतिपत्त्यभिसन्धिरिति परेषां पाठः । न च कार्ये प्रतिपत्त्यभिसन्धिरिति तन्मते सूत्रपाठश्च ॥)

विशेषञ्च दर्शयति ४-३-१५.

भाष्ये पूर्वपक्षोक्तवचनस्य सिद्धान्ते अपरिहृतत्वात् स्वयं तस्यार्थमाह — **ब्रह्मणा सह ते सर्वे इत्यादीति** ।

**परेषामित्यादि** । **परविद्याप्रकरण** इति । कठवल्लीषु, 'तयोर्ध्व-मायन्, ' इति गतिकीर्तनमित्यर्थः । **श्रुतिवाक्ये बलीयसी** इति । प्रजा-पतिश्रुतिः तद्युक्तं वाक्यञ्चेत्यर्थः । **प्रशंसार्थं वा तदिति** । **तत्** सर्वात्मत्व-कीर्तनमित्यर्थः । वाक्यभेदस्तु अस्माकमिष्ट एवेत्याशङ्क्याह **एकवाक्यत्वे संभवतीति भूगतेन प्रदेशान्तरगमनवदिति** । यथा पृथिवीस्थ एव पृथिवीं **देशान्तरद्वारेण** गच्छति । न हि तत्र पृथिवी प्रागप्राप्तेति शक्यते वक्तुम् । यथा वा न्यग्रोधं प्राप्तेन वानरेण अग्रप्रदेशविशेषविशिष्टस्य न्यग्रोधस्यैव प्राप्यत्वम्, तद्वदित्यर्थः । **पयसो दध्याद्यवस्थाप्राप्तिवच्चेति** । यथा प्राप्तस्यैव पयसो दध्याद्यवस्थतया आतञ्चनादिभिः प्राप्तत्वमित्यर्थः । यद्वा दध्याद्यवस्थस्वाभिन्न-स्वरूपप्राप्तिवदित्यर्थः । **बन्धादनिर्मोक्ष** इति । स्वरूपस्यान्यथा कर्तुमशक्यत्वादिति भावः । **उभयथा च दोषादिति पठ्यमानत्वादिति** । एतस्यैव साम्प्रदायि-कत्वेन, "उभयथा अदोषात् तत्क्रतुश्च" इति पाठोऽसाम्प्रदायिक इति भावः ।

**अपरे त्वित्यादि** । **वाक्यभेदप्रसङ्गादिति** । अनावृत्तिसंबन्धस्य एतत्कल्प-संबन्धस्य च बोधनादिति भावः । **परं जैमिनिरित्यनेन न विरोध** इति । परं जैमिनिरित्यनेन सिद्धान्तसूत्रेण अप्रतीकालम्बनानिति सूत्रस्येति भावः । **कार्य-मण्डलातिक्रमरूपा गतिरिति** । उपपद्यते इति शेषः । ननु उपाधिपरिच्छिन्न-ब्रह्मप्रदेशस्य घटावच्छिन्नब्रह्मप्रदेशस्य घटावच्छिन्नाकाशस्थानीयस्य जीवस्य कथं गमनमित्यत्राह — **जीवस्यौपाधिकत्वादिति** । **ब्रह्मकार्यं प्रविशत** इति । प्रवेक्ष्यत इत्यर्थः । **पर्यङ्कविद्यादिकं प्रमाणमिति चेदिति** । न हि परब्रह्मणः पर्यङ्का-

---

1. कुण्डलितं 'न च कार्ये' इति पूर्वसूत्रभावप्रकाशिकान्ते स्थितं स्यात् ।

रूढविग्रहत्वं संभवतीति भावः । **विलक्षणविग्रहयोगस्यैवेति** । 'सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधी' ति विद्युद्वर्णविग्रहयोगस्य कारणत्वसाधकत्वादिति भावः ।

**अन्ये त्वाहुरित्यादि** । **ब्रह्मलोकमिति प्रयोगदर्शनादिति** । उपक्रमोपसंहारस्थब्रह्मलोकशब्दयोरैकार्थ्यस्य वक्तव्यत्वात् ब्रह्मलोकशब्दस्य पृथिव्यन्तरिक्षलोकप्रायपाठेन चतुर्मुखलोकपरत्वस्य वक्तव्यत्वाच्चतुर्मुखलोकस्य ब्रह्मशब्दप्रयोगविषयत्वं सिद्धमिति भावः । **ह्रद्नदीति** । 'तस्य वा एतस्य ब्रह्मलोकस्यारो ह्रदो मुहूर्तो यष्टिहा विरजा नदी तिल्यो वृक्षः' इत्यादिप्रमाणादिति भावः । **अहीनवदिति** । ज्योतिष्टोमप्रकरणश्रुतायाः 'द्वादशाहीनस्ये' ति विहिताया द्वादशोपसत्ताया अहर्गणे उत्कर्षवदिति भावः । **परविद्याव्यतिरिक्तश्रेयःप्रदर्शनार्थत्वसंभवादिति** । ये यज्ञेन दानेन तपसा लोकान् जयन्ति, ते धूमभिसंभवन्तीत्येतत् सर्वेषां परविद्याव्यतिरिक्तश्रेयसां धूमादिमार्गसाधनत्वपरम् ; न तु यज्ञादिमात्रस्येति भावः । **हिरण्यगर्भमेव परं ब्रह्म मन्वानस्येति** । **सर्वमिदमनुपपन्नमि**त्युत्तरेणान्वयः । तदेवोपपादयति, **अब्रह्मविदामित्यादि** ॥

इति दशोपनिषद्भाष्यकारैः श्रीमद्रङ्गरामानुजमुनिभिः विरचितायां

श्रुतप्रकाशिकाव्याख्यायां भावप्रकाशिकायां

चतुर्थस्याध्यायस्य तृतीयः पादः ॥

॥ श्रीमते रङ्गरामानुजमहादेशिकाय नमः ॥



|| श्रीः ||

श्रीमते भगवद्रामानुजाय नमः

श्रीमते रङ्गरामानुजमहादेशिकाय नमः

श्रुतप्रकाशिकाव्याख्या भावप्रकाशिका ||

## चतुर्थेऽध्याये चतुर्थः पादः

## (१) संपद्याविर्भावाधिकरणम्

---

**सम्पद्याविर्भावः स्वेनशब्दात् ४-४-१.**

ननु **अपुनरावृत्तिलक्षणा गतिरुक्ते**ति भाष्यमयुक्तम्; तस्यार्थस्य 'अनावृत्तिः शब्दा' दित्यधिकरणे समर्थयिष्यमाणत्वादित्याशङ्क्याह — **विषयवाक्य** इति। "आप्रयाणात् तत्रापि हि दृष्टम्" इत्यधिकरणविषयवाक्य इत्यर्थः। अर्चिरादिपादगताधिकरणविषयवाक्यपरत्वस्य वक्तव्यत्वे, 'एष देवपथो ब्रह्मपथः एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्त' इति वाक्यं विवक्षितं द्रष्टव्यम् ||

ननु अस्मिन्नधिकरणे आगन्तुकत्वानागन्तुकत्वविचारः किमवस्थाविषयः, उतावस्थावद्द्रव्यविषयः। न तावदाद्यः; विकासरूपावस्थायाः संपत्त्यनन्तरभावित्वस्य सिद्धान्तेऽभ्युपेतत्वात्। न द्वितीयः; असत्कार्यवादानभ्युपगमेनावस्थावतो ज्ञानद्रव्यस्यागन्तुकत्वशङ्काया अभावात्। घटादिष्वप्यवस्थावतो नित्यत्वात् अवस्थासंबन्धस्यैव उत्पत्तिरूपत्वात्। न ह्युत्पत्तावागन्तुकत्वात् स्वर्गसुखाद्वैलक्षण्यं मोक्षसुखे उपलभामहे। किञ्च ब्रह्मानुभवरूपस्यानन्दस्य महापुरुषार्थस्य सत्त्वेन जीवस्वरूपस्यैव साध्यत्वपुरुषार्थत्वप्रतिपादकम्, 'मुक्तः प्रतिज्ञानात्' 'आत्मा प्रकरणात्' इति सूत्रद्वयमप्ययुक्तमिति चेन्न — 'स्वेन रूपेणाभिनिष्पद्यत' इत्यत्र रूपशब्देन ब्राह्मं रूपमपहतपाप्मत्वादिकं विवक्षितमिति, 'ब्राह्मेण जैमिनि' रित्यत्र स्पष्टयिष्यते। तत् सिद्धवत्कृत्य तत् किं ब्राह्मं रूपमागन्तुकम्, उत प्राक्सिद्धमिति विचार्यत इत्यभ्युपगमे दोषाभावात्। आगन्तूनां ज्ञानावस्थाविशेषाणामप्रत्याख्यानात्।

यदुक्तं **किञ्चेत्यादि** — तन्न । अपहतपाप्मत्वादिविशिष्टस्वस्वरूपस्यापि निरतिशयानन्दत्वसमर्थनमात्रपरत्वेन दोषाभावात् । भाष्ये **आत्मनोऽनुकूलत्वमिति** । यम् आत्मानं प्रति यत् अनुकूलत्वेन वेदनीयम्, तत् तस्य सुखमित्यर्थः । आत्मत्वञ्च चैतन्याश्रयत्वम् । ततश्च ज्ञानमात्रात्मवादे न किञ्चिदुपपद्यत इति भावः । **स्वशब्दोऽसाधारण्यपर** इति । आत्मात्मीयज्ञातिधनवाची स्वशब्द इत्युक्तेरात्मीयत्वमात्रवचनोऽयं स्वशब्द इति भावः । **न त्वसाध्यत्वपर** इति । न च स्वशब्दस्यात्मात्मीयज्ञातिधनमात्रवाचित्वेन कथमसाध्यत्वप्रतिपादकत्वशंकेति वाच्यम् — स्वीयवाचिनः सार्वदिक स्वीय [त्व] परत्वसम्भवेन असाध्यत्वप्रतिपादकत्वस्य फलतस्सम्भवादिति भावः । यद्वा आत्मपरोऽयं स्वशब्दः । ततश्च असाध्यत्वं फलतीति भावः । **रूपं साध्यमित्यर्थ** इति ग्रन्थानन्तरमे**वञ्चे**ति प्रतीकग्रहणं दृश्यते । तत् **स्वेनशब्दः कथमित्यत्राहे**ति ग्रन्थात् पूर्वमेव द्रष्टव्यम् । कोशान्तरं वा निरीक्षणीयम् । भाष्ये **यं दशाविशेषमापाद्यत** इति । अभिनिष्पत्तिशब्दवाच्यं यं दशाविशेषमापद्यत इत्यर्थः । ततश्च स्वेनरूपेणाभिनिष्पद्यत इत्यस्यापहतपाप्मत्वादिविशिष्टेन स्वेन रूपेणाभिनिष्पद्यते = धर्मभूतज्ञानेन विषयीक्रियत इत्यर्थः । ततश्च विकासावस्थासम्बन्धरूपोत्पत्तेः धर्मभूतज्ञानगतत्वेऽप्यपहतपाप्मत्वादिगुणाष्टकविशिष्टात्मस्वरूपस्यापरिच्छिन्नानन्दतया पुरुषार्थरूपस्य नोत्पत्तिः । अस्मिन्नधिकरणे अपहतपाप्मत्वादिकं तद्विशिष्टस्वरूपञ्च नागन्तुकम् । अपि तु संसारदशायां धर्मभूतज्ञानस्य कर्मणा प्रतिबद्धत्वात् अपहतपाप्मत्वादिगुणाष्टकविशिष्टात्मस्वरूपविषयीकरणसामर्थ्यं नास्ति ; तिरोधाननिवृत्तौ तु तद्विषयकं भवति ; ततश्च तद्विषयकं ज्ञानं परमुत्पद्यते, नापहतपाप्मत्वादिरूपं तद्विशिष्टस्वरूपं वा इत्येव प्रतिपाद्यते । न तु मुक्तौ धर्मभूतज्ञानस्याप्युत्पत्तिः प्रत्याख्यायते । इयांस्तु विशेषः — संसारदशायां घटादिविषयकं ज्ञानं चक्षुरादीन्द्रियव्यापारसव्यपेक्षम् । मुक्तौ तिरोधानापगमे सर्वविषयकं ज्ञानं न किञ्चिदागन्तुकं कारणमपेक्षत इत्येतदभिप्रायेणैवमागन्तुकरूपसामान्याभाववादः ॥

## मुक्तः प्रतिज्ञानात् ४-४-२.

भाष्ये **तिरोधाननिवृत्तिरत्राभिनिष्पत्तिरुच्यत** इति । न च **कर्मरूपबन्धक्षये विकासरूपाविर्भावो नानुपपन्न** इति सुष्ठूक्तमित्युपसंहारभाष्येण,

**निवृत्ततिरोधानस्य स्वरूपाविर्भाव** एवेत्युक्तमिति, 'ब्राह्मेण जैमिनि' रित्यधिकरणभाष्येण च विरोधः; तिरोधाननिवृत्त्यभिनिष्पत्त्योर्भेदेनोपन्यासादिति वाच्यम्— भावान्तराभावपक्षमादाय निवृत्त्यभिनिष्पत्त्योर्भेदकथनम्; अतिरिक्ताभावपक्षावलम्बनेन भेदोक्तिरिति केचित्। अपरे तु तिरोधाननिवृत्तिरभिनिष्पत्तिरुच्यत इति भाष्यमभेदोपचारनिबन्धनमिति समादधते। भाष्ये **जागरिताद्यवस्थात्रितयविनिर्मुक्त**मित्युक्तमयुक्तम्। 'य एषो ऽक्षिणि पुरुषो दृश्यते,' 'एष स्वप्ने महीयमानश्चरति,' 'तद्यत्रैतत्सुप्तस्समस्तस्संप्रसन्न' इत्यादिना जागरितावस्थायुक्तस्यैव प्रतिपादनादित्याशङ्क्याह — **जागरिताद्यवस्थासूच्यमानास्वि**त्यादिना ॥ (२)

आत्मा प्रकरणात् ४-४-३.

आनन्दश्चेत् विषयसंपर्कनिबन्धन एव। जाग्रत्सुषुप्त्यादौ तथान्वयव्यतिरेकविधानादिति व्याप्तिं दूषयति **आनन्दश्चे**दित्यादिना। भाष्ये **विकासरूपाविर्भावो नानुपपन्न** इति। धर्मभूतज्ञानविकासरूपो ऽपहतपाप्मत्वादिगुणाष्टकाविर्भावो नानुपपन्न इत्यर्थः। गुणाष्टकस्याविर्भावो हि धर्मभूतज्ञानविषयीक्रियमाणत्वमेवेति भावः।

ननु अपहतपाप्मत्वादीनां नित्यसिद्धत्वे बन्धस्यापारमार्थिकत्वं दुर्वारम्। नित्यसिद्धापहतपाप्मत्वं हि सर्वदा पापरहितत्वम्। न च वस्तुतः सर्वदा पापरहिते पाप्मसंबन्धः, तन्मूलकर्तृत्वभोक्तृत्वादिसम्बन्धो वा पारमार्थिकस्सम्भवति। एवञ्च जीवस्य ईश्वरभावो ऽपि दुर्वारः। श्रुतिबोधिताभेदविरोधिबन्धसत्यत्वासम्भवात्। अन्यथा संसारिणि नित्यसिद्धसत्यसङ्कल्पतिरोधानोक्त्ययोगाच्च। न हि — जीवस्य संसारदशायामप्यनुवर्तमानो यत्किञ्चित्कार्यगोचरोस्त्यवितथस्संकल्पः, स तिरोहितः — इति वक्तुं युज्यते। तस्मादीश्वरस्य यत् नित्यसिद्धनिरवग्रहसत्यसङ्कल्पत्वम्, तदेव संसारदशायां जीवस्येश्वराभेदानभिव्यक्त्या स्वकीयत्वेनानवभासमानं तं प्रति तिरोहितमिति समर्थयितव्यम्। नन्वपहतपाप्मत्वं न पाप्मविरहः; येन तस्य नित्यसिद्धत्वेन बन्धस्य मिथ्यात्वप्रसङ्गः; किंतु पापहेतुकर्माचरणे ऽपि पापोत्पत्तिप्रतिबन्धकशक्तियोगित्वम्। एवं सत्यसङ्कल्पत्वमपि शक्तिरूपेण निर्वाह्यमिति नेश्वराभावप्रसङ्ग इति चेन्न — एवं शब्दार्थकल्पने प्रमाणाभावात्। न हि पापजननप्रतिबन्धिका शक्तिः

संसारपरिभ्रमणदशायां पापानुत्पत्त्यर्थं कल्पनीया। तदानीं तदुत्पत्तेरिष्टत्वात्। विद्योदयप्रभृति तु विद्यामाहात्म्यादेवाश्लेषः, 'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्' इति सूत्रेण दर्शितः। तत एवमप्युक्ताश्लेष उपपद्यत इति व्यर्था शक्तिकल्पनेति चेत् —

अत्रोच्यते — अपहतपाप्मत्वं न पापात्यन्ताभाव इति वक्तुं शक्यम्, पाप्मनां स्वरूपेण अत्यन्ताभावप्रतियोगित्वे निःस्वरूपत्वापत्तेः। पारमार्थिकत्वाकारेण अभावप्रतियोगित्वे अभ्युपगम्यमानेऽपि किं तत् पारमार्थिकत्वमिति पर्यालोचने अबाध्यत्वमिति पर्यवस्यति। बाध्यत्वञ्च नात्यन्ताभावप्रतियोगित्वमिति वक्तुं शक्यम्— तत्रापि स्वरूपेण वा पारमार्थिकत्वाकारेण वेति विकल्पग्रासात्। किन्तु ज्ञाननिवर्त्यत्वम्; ततश्च ज्ञाननिवर्त्यत्वरूपाबाध्यत्वाकारेणात्यन्ताभावप्रतियोगित्वं पाप्मनां पर्यवसितम्। ततश्च पाप्मनां ज्ञाननिवर्त्यत्वमिति फलितोऽर्थः। अयं चास्माकमिष्ट एव। किञ्च मुक्तस्य त्वन्मते अपहतपाप्मत्वादिप्रादुर्भाव एव न संभवति। एकजीववादे तावत् तदेकाज्ञानपरिकल्पितस्य जीवेश्वरविभागादिकृत्स्नभेदप्रपञ्चस्य तद्विद्योदये विलयात् निर्विशेषचैतन्यमात्ररूपेणावस्थानमिति न बद्धमुक्तव्यवस्थासंभवः। अनेकजीववादमभ्युपगम्य बद्धमुक्तव्यवस्थाङ्गीकारेऽपि — यद्यपि कस्यचिद्विद्योदये तदविद्याकृतभेदप्रपञ्चस्य विलयेऽपि बद्धपुरुषान्तराविद्याकृतो भेदप्रपञ्चोऽनुवर्तत इति वक्तुं शक्यते — तथापि जीव इवेश्वरोऽपि प्रतिबिम्ब इति पक्षे मुक्तस्य बिम्बभूतशुद्धचैतन्यमात्ररूपेणैवावस्थानौचित्येन प्रतिबिम्बान्तरत्वापत्त्यसम्भवात्। तत्सम्भवे हि कदाचित् जीवरूपप्रतिबिम्बान्तरत्वापत्तेरपि दुर्वारत्वेन अवच्छेदपक्ष इव पुनर्बन्धापत्तेः। अत एवानेकजीववादे अवच्छेदपक्षो नाद्रियते। यदवच्छेदेन मुक्तिः, तदवच्छेदेन अन्तःकरणान्तरसंसर्गे पुनरपि बन्धापत्तेः। अतः प्रतिबिम्बो जीवः, बिम्बस्थानीय ईश्वरः, उभयानुस्यूतं शुद्धचैतन्यमिति पक्षे मुक्तस्य यावत्सर्वमुक्ति सर्वज्ञत्वसर्वेश्वरत्वसत्यकामत्वादिगुणकपरमेश्वरभावाभिव्यक्तिर्वक्तव्या। यथा — अनेकदर्पणेष्वेकस्य मुखस्य प्रतिबिम्बे सति एकदर्पणापनये सति तत्प्रतिबिम्बोऽपि बिम्बभावेनावतिष्ठते; न तु मुखमात्ररूपेण; तदानीमपि दर्पणान्तरसन्निधानप्रयुक्तस्य मुखे बिम्बत्वस्यानपायात् — तथा एकस्य चैतन्यस्य अनेकेषु उपाधिषु

प्रतिबिम्बे सति एकस्मिन् प्रतिबिम्बे विद्योदयेन च तदुपाधिनाशे तत्प्रतिबिम्बस्य बिम्बभावेनावस्थानावश्यम्भावादिति वक्तव्यम् । अयञ्च पक्षो न संभवति, यतो रूपानुपहितस्य प्रतिबिम्बो न युक्तः । सुतरां नीरूपे । अचाक्षुषे अचाक्षुषप्रतिफलनवादस्य परिहास्यत्वादित्यलमतिप्रसङ्गेन ॥

**अन्येत्वित्यादि** । **पापप्रागभावप्रध्वंसाभावात्यन्ताभावेति** । घटात्यन्ताभावस्यैव तत्प्रागभावप्रध्वंसयोरप्यत्यन्ताभावत्वाङ्गीकारात् पापप्रध्वंसवति मुक्ते पापात्यन्ताभावरूपापहतपाप्मत्वासम्भवादित्यर्थः ॥

इति सम्पद्याविर्भावाधिकरणम् ।

---

## ( २ ) अविभागेनदृष्टत्वाधिकरणम्

अविभागेन दृष्टत्वात् ४-४-४.

ननु भाष्ये **साहित्यसाम्यसाधर्म्यावगमा**दित्युक्तिरयुक्ता । साम्यस्यैव साधर्म्यरूपत्वेन साहित्यसाम्यावगमादित्युक्त्यैव चारितार्थ्यादित्यत आह **साम्यसाधर्म्यशब्दाविति** । **भोग्यसाहित्यपरत्वादिति** । काम्यन्त इति कामाः कल्याणगुणाः । ब्रह्मणा सह कल्याणगुणान् सर्वान् अनुभवतीत्यर्थः । भोक्तृसाहित्यपरत्वे तु भोक्तृजीवापेक्षया ब्रह्मणोऽप्राधान्यप्रसङ्गः । ततश्च ब्रह्मणः प्रकारित्वभङ्गप्रसङ्ग इति भावः । ननु भोग्यसाहित्येऽपि कामापेक्षया ब्रह्मणोऽप्राधान्यप्रसङ्ग इति चेन्न — इष्टापत्तेः ।

**विभागशक्तिमत्तया निर्वाहायोगा**दिति । विभागशक्तिमात्रेण स्वपरविज्ञानादेः निर्वाहायोगात् भेदोऽपि वक्तव्य इत्यर्थः । **करणाधीनज्ञानत्वे सतीति** । करणाधीनज्ञानत्वे सति उपरतकरणत्वं स्वपरसंबोधाभावे प्रयोजकम् । मुक्ते करणाधीनज्ञानत्वाभावात् ज्ञानाभावाभावः । **न परस्परैक्यमिति चे**दिति । सुषुप्ताविति शेषः । ननु न सूक्ष्मचित्त्वात् भेदो ऽभ्युपगम्यते ; किन्तु तत्रापि शक्तिमात्रमेव भेदकमित्याशङ्क्याह — **अचितः शक्तिमात्रशेषत्वाभावा**दिति । **नाना-**

वस्थत्वादिति । नानावस्थत्वनदभावरूपभेदकाकारसद्भावात् अचिदपेक्षया भेदसत्त्वे ऽपि चिदीश्वरांशयोर्न भेद इति चेदित्यर्थः । **असंकीर्णतया ( णं ) जानातीति न जगद्व्यापारप्रसङ्ग इति चेदिति** । असङ्कीर्णतया ( तायाम् ) ईश्वरज्ञानविषयतया भेदस्य प्रमाणिकत्वान्न जगद्व्यापारप्रसङ्ग इति भावः ॥

इति अविभागेनदृष्टत्वाधिकरणम् ।

---

## ( ३ ) ब्राह्माधिकरणम्

ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ४-४-५.

**ऋषिद्वयपक्षापेक्षयेति** । मतद्वयमध्ये अन्यतरपरिग्रह इत्यर्थः । **स्वरूपं जडमिति** । ननु जैमिनिमते ज्ञानमात्रस्वरूपत्वमात्मनो मा भून्नाम ; अपहतपाप्मत्वादीनां सद्भावात् । न ह्येतावताऽऽत्मनो जडत्वमङ्गीकृतमित्यत्र किञ्चित् प्रमाणमस्तीति चेन्न – अपहतपाप्मत्वादेः ज्ञानस्वरूपत्वस्य चाभ्युपगमे सिद्धान्ताद्विशेषप्रसङ्गादिति भावः ॥

चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ४-४-६.

**कादाचित्क सुखराहित्यपरमिति** । अत्र चोदयन्ति – यदि अकादाचित्कसुख इति श्रूयेत, तदा नञः कादाचित्कसुखपदेन समासे कादाचित्कसुखराहित्यमर्थः स्यात् । इह तु अकादाचित्कत्वस्य सत्यत्वस्य सुखविशेषणतया कथं कादाचित्कसुखराहित्यमर्थः स्यात् । न ह्यनीलो घटो यस्येति बहुव्रीहिसमाश्रयणेनानीलघट इति निर्घटो देशो वक्तुं शक्यत इति । अत एव सत्यसंकल्प इत्यस्य मोघेन संकल्पेन रहित इति वेत्युत्तरग्रन्थोऽप्ययुक्त इति । अत्र केचित् – **सतीति** पृथक्पदं सप्तम्यन्तम् । सति पृथिव्यादौ वस्तुनि **अकामः** निष्काम इत्यर्थः, एवं सत्यसङ्कल्प इत्यादावपि द्रष्टव्यमित्येवंरूपे निर्वाहे अस्य ग्रन्थस्य तात्पर्यमिति वदन्ति ॥

एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः ४-४-७.

**तत् पूर्वपक्षीकृत्य** हीति । नष्टस्य पुनरुन्मज्जनाभावादित्यर्थः । अन्यपरत्वमिति व्याख्येयं पदम् । जडांशव्यवच्छेद इत्यर्थः । भाष्ये **स्वल्पोऽपि प्रदेशो ऽस्तीति**च्छेदः ।

अन्येषामित्यादि । **सर्वात्मभावेन स्थित एवेति** । मुक्त इति शेषः । ध्रुवस्येति । विभागावधिभूतस्येत्यर्थः ॥

॥ इति ब्राह्माधिकरणम् ॥

## ( ४ ) संकल्पाधिकरणम्

सङ्कल्पादेव तच्छ्रुतेः ४-४-८.

**विज्ञानघन एवेतिवदयोगव्यवच्छेदपर** इति । न च विज्ञानघन एवेत्यत्र **कृत्स्नोप्यात्मा जडव्यावृत्तः स्वप्रकाश** इत्यादिना अन्ययोगव्यवच्छेदपरत्वस्य पूर्वसूत्रे प्रतिपादनात् तद्विरोध इति वाच्यम् — तस्य विशेषणसङ्गतैवकारत्वेन शङ्खः पाण्डर एवेत्यत्र एवकारस्य पाण्डरत्वायोगव्यच्छेदकत्ववत् एतस्यापि विज्ञानत्वायोगव्यवच्छेदपरत्वेन ज्ञानत्वायोगे सर्वत्र व्यवच्छिन्ने तद्व्यतिरिक्तजाड्यव्यवच्छेदस्य फलीभूतस्य प्रतिपादकतया तस्य ग्रन्थस्यान्ययोगव्यवच्छेदे तात्पर्याभावात् । भाष्ये **न च प्रयत्नान्तरसापेक्षत्वाभिधायीति** । मुक्तसंकल्पस्य लौकिकसंकल्पवत् सङ्कल्पत्वेन यत् सापेक्षत्वानुमानं तत् नरशिरःकपालशौचानुमानवदागमबाधितत्वात् न प्रतिरोधीत्यर्थः । इतरथा अगस्त्यादेः समुद्रपानादिवृत्तान्तो ऽसत्यस्स्यादिति भावः । नन्वियं चिन्ता वृथा । यथा मनोरथमात्रोपस्थापितापि स्त्री (?) स्त्रैणानां चरमधातुविसर्गे हेतुः, एवं पित्रादयो ऽप्यस्य सङ्कल्पोपस्थापिताः काल्पष्यन्ते स्वकार्यजाताय । किमर्था सृष्टिरभ्युपेयते । मैवम् — सन्ति हि कानिचिद्वस्तुस्वरूपसाध्यानि कार्याणि दन्तक्षत[1]मणिमालादीनि । कानिचित्

1. मणिमाला — कण्ठे कृतः क्षतविशेषः इति भामतीव्याख्या। कल्पतरु ।

तद्ज्ञानसाध्यानि । यथा उक्तानि चर्मधातुविसर्गरोमहर्षादीनि । तत्र पित्रादेर्मनोरथमात्रोपनीतत्वे ज्ञानमात्रसाध्यानि कार्याणि परं भविष्यन्ति, न तु वस्तुस्वरूपसाध्यानि । न हि स्त्रैणस्य रोमहर्षादिवत् भवन्ति स्त्रीवस्तुसाध्या दन्तक्षतमणिमालादयः । अतः तत्कार्यसकलभोगसिद्ध्यर्थं सृष्टिः कक्ष्यीकार्या ॥

अत एव चानन्याधिपतिः ४-४-९.

**स्वर्गिणां कर्मफलभूतेष्विति** । जक्षणादिष्विति शेषः । न हि स्वर्गिणां तिरश्चां वा जक्षणादीनि पुण्यं पापं वा आर्जयन्तीति भावः । **तयैव श्रुत्या विधिनिषेधागोचरत्वञ्च ज्ञापितमित्यर्थ** इति । यथा पीनत्वकल्प्यस्य रात्रिभोजनस्य पीनत्वोपपादकत्वम्, एवं सत्यसङ्कल्पत्वकल्प्यस्याप्यनन्याधिपतित्वस्य तदुपपादकत्वे नानुपपत्तिरिति भावः । अत एव, 'सूक्तवाकेन प्रस्तरं प्रहरती' त्यत्र प्रस्तरप्रहरणस्यायागरूपत्वेन देवतासम्बन्धासंभवात् देवताप्रकाशकस्य सूक्तवाकस्य तृतीयाश्रुत्या न तच्छेषत्वप्रतिपादनं संभवतीत्याशङ्क्य तृतीयाश्रुत्यवगतसूक्तवाककरणत्वान्यथानुपपत्त्यैव सूक्तवाकप्रतिपाद्यदेवतासंबन्धेन यागरूपत्वं प्रस्तरप्रहरणस्य कल्प्यत इति ( ३-२-५ ) प्रतिपादितमिति भावः । ननु अपहतपाप्मत्वस्य पूर्वं सिद्धतया एतत्सूत्रव्यावर्त्यशंकाया अनुत्थानमित्याशङ्क्याह – **अपहतपाप्मत्वं नामेति** । **अत्रैव स्पष्टं दर्शित**मिति । सूत्र इति शेषः ।

**परेतिवत्यादि** । अतएव सत्यसङ्कल्पत्वादेव न स्वामिनं सङ्कल्पात् सृजति; स्वामिपारतन्त्र्ये स्वसत्यसङ्कल्पत्वविरोधप्रसङ्गात् । अतोऽनन्याधिपतिरिति व्याकुर्वन्तीत्यर्थः ।

**दुःखहेतुविरहेणे**ति । यो यस्मिन् सुखदुःखे आपादयितुं निवर्तयितुञ्च प्रभवति, स तस्याधिपतिरिति भावः । **शेषलक्षणस्ये**ति । प्रोक्षणादौ सुखदुःखापादाननिवर्तनाक्षमस्यापि व्रीह्यादेः शेषित्वादिति भावः । **ब्रह्मणो हि प्रतिष्ठाऽह**मिति । मुक्तस्य धारक इत्यर्थः ॥

॥ इति सङ्कल्पाधिकरणम् ॥

# [ ५ ] अभावाधिकरणम्

द्वादशाहवदुभयविधं बादरायणोऽतः ४-४-१०.

भाष्ये **सङ्कल्पभेदेन सत्रमहीनश्चे**त्युक्तमयुक्तम् । सत्रत्वाहीनत्वयोः, आसीरन्यजतिचोदनानिबन्धनत्वेन संकल्पभेदनिबन्धनत्वाभावात् इति न शङ्क्यम्, सङ्कल्पभेदेन सत्रमहीनश्च भवतीति नान्वयः, येनायं दोषः स्यात्; किंतु उपैतियजतिचोदनाभ्यां द्विरूपत्वे सिद्धे यस्य यादृक्प्रयोगेच्छा स तं प्रयोगमनुतिष्ठतीत्यर्थ इत्याह **सत्रत्वे अहीनत्वे** इत्यादिना । **संकल्पभेदेने**ति भाष्यग्रन्थः, 'प्रायणीयोऽतिरात्रः प्रथममहः पृष्ठ्यष्षडहः त्रयश्छन्दोमाः अविवाक्यमेकमहः उदयनीयोऽतिरात्रश्चरममहः' इत्येवंरूपोऽहर्गणो द्वादशाहः । स चोपैतियजतिचोदनाभ्यां सत्ररूपो ऽहीनश्च । अहीने हि, 'एको द्वौ बहवो वाऽहीनेन यजेरन्' इति कर्तृसंख्यानियमाभावः; तथा, 'न दीक्षिता याजयेरन्' इति याजकेषु दीक्षितत्वप्रतिषेध इत्येवमादयो धर्मा व्यवस्थिताः । सत्रे, 'गृहपतिसप्तदशाः चतुर्विंशतिपरमाः स्वयमृत्विजो ब्राह्मणाः सत्रमुपेयुः' इति सप्तदशसंख्याया अन्यूनत्वनियमः, दीक्षितानामेव परस्परयाजकत्वमित्यादयो धर्मा व्यवस्थिताः । ततश्च यथा द्विरूपत्वं द्वादशाहस्य, एवं मुक्तस्यापि सदेहत्वं विदेहत्वञ्च प्रामाणिकमिति । एवं रूपद्वये प्रामाणिके सति यथेच्छावशेन अहीनसत्रान्यतरप्रयोगपरिग्रहः, एवं संकल्पवशेन सदेहत्वविदेहत्वान्यतरपरिग्रह इत्यर्थः ॥

तन्वभावे सन्ध्यवदुपपत्तेः ४-४-१३.

**तदनुगुणप्रकारपरिक्लृप्तेने**ति । मुक्तसंकल्पाभावेऽपि परमात्मसङ्कल्पात् देहादिसृष्टिरित्यर्थः । ततश्च पूर्वसूत्रे **अतः**शब्दपरामृष्टस्य संकल्पस्य मुक्ताश्रितत्वनियम इति भावः । [1]**साक्षादर्थमाहे**ति तन्वभाव इति सूत्रार्थस्य 'सङ्कल्पादेव तच्छ्रुतेः' इत्यधिकरणविरुद्धत्वात् स नाभिमत इति भावः ॥

---

1. **सार्थत्वमाहेति**. अद्यतनटीकापाठः ।

प्रदीपवदावेशस्तथा हि दर्शयति ४-४-१५.

**प्रवर्तकत्वशक्तियुक्तेत्यर्थ** इति। आत्माभिमानस्य प्रवृत्तिहेतुतया आत्माभिमानानुगुण्येन प्रवृत्त्यानुगुण्यमस्तीति **आत्माभिमानानुगुण**शब्देन प्रवृत्तिशक्तियुक्तत्वं लक्ष्यत इति भावः। आत्माभिमानस्य प्रवृत्तिहेतुत्वमुपपादयति **आत्माभिमानो हि** इत्यादिना। **प्रकाशकत्वशक्तिरुक्ते**ति। घटपटादिबाह्यवस्तुप्रकाशनशक्तियुक्ता ज्ञानव्याप्तिरित्यर्थः ॥

स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि ४-४-१६.

भाष्ये **सम्पत्तिश्च मरणमिति** प्रतिज्ञातार्थोपपादकतया '**वाङ्मनसि सम्पद्यत**' इत्यारभ्य '**तेजः परस्यां देवतायामितिवचनादि**त्यन्तो ग्रन्थः तदेकवाक्यतयापि योजयितुं शक्यते। '**वाङ्मनसि सम्पद्यत**' **इत्यारभ्य** '**तेजः परस्यां देवताया**' – **मिति वचनात् तयोश्चावस्थयोः प्राज्ञप्राप्तिर्निस्संबोधत्वञ्च विद्यते** इत्युत्तरग्रन्थैकवाक्यतामभिप्रेत्याह – **सता सोम्य तदा सम्पन्नो भवतीत्यादिभिरि**ति। पूर्ववाक्यैकवाक्यतामभिप्रेत्याह **ब्रह्मसंपत्तिनिर्बोधत्वयोरित्यादिना**। एवञ्च योजनाद्वयमपि भाष्यकृदभिमतमिति सूचितमिति द्रष्टव्यम्। 'प्राज्ञेनात्मना संपरिष्वक्त' इति वाक्ये ब्रह्मसम्पत्तिनिर्बोधत्वयोः श्रवणात्। **आविष्कृतं ही**ति सूत्रखण्डेनापि द्वयमपि दर्शनीयमिति मत्वा **ब्रह्मसम्पत्तिश्रुतिश्चानुसन्धेये**'ति।

'अभावं बादरिः' इति सूत्रे 'मनसैतान् कामान् पश्यन् रमते य एते ब्रह्मलोके' इति श्रुतौ मनसेति विशेषणसामर्थ्यात् शरीरेन्द्रियाणामभावो ऽवसीयते। यदि हि मनसा शरीरेन्द्रियैश्च विहरेत, तदा मनसेति विशेषणमनर्थकं स्यादिति व्याख्यातम्। 'भावं जैमिनिर्विकल्पामननात्' इत्यत्र तु न विशेषः। 'द्वादशाहवदुभयविधं बादरायणोतः' इति सूत्रे **अत** इत्यस्य मनसैतान् कामानिति श्रुतेः स एकधा भवतीत्यादिश्रुतेश्चेत्यर्थ इति व्याख्यातम्। तस्याविरुद्धत्वात् तमंशमुपेक्ष्य निराकर्तव्यांशमाह **सङ्कल्पादेवे**त्यादिना। **न भोगानुपपत्ति**रिति। पुष्कलभोगस्यानुपपत्तावपि मनोरथमात्रसाध्यस्वाप्नभोगवत् सूक्ष्मभोगो भवत्येवेत्यर्थः। शरीरेन्द्रियादिसद्भावे जाग्रद्वत् पुष्कलभोगः, तदभावे सूक्ष्मभोग इति त्रैवर्णि-

तत्वादिति भावः । **शरीरस्थितेरन्यथासिद्धत्वा**दिति शरीरस्थितिमन्तरेणापि मनस्सिद्धिमात्रेण भोगस्य सिद्धत्वादित्यर्थः ।

**केवलेश्वरप्रयत्नसृष्टत्वे**ति । यद्यपि जाग्रत्स्वप्नावस्थयोः द्वयोरपि स्वसृष्टभोगोपकरणसदसद्भावयोः सिद्धान्तेऽप्यविशेषात्, 'तन्वभावे सन्ध्यवत्, 'भावे जाग्रद्वत्' इति व्यवस्थया निर्देशे किं बीजम् । तन्वभाव इत्यस्य स्वसृष्टतन्वभाव इत्यर्थकल्पनञ्च क्लिष्टमित्यपि परैः सुवचम् — तथापि उक्तदूषणे तात्पर्यम् । **अभिप्रायविरोधज्ञापनार्थ** इति । ननु मुक्तस्य ब्रह्मानुभवेऽन्यानपेक्षत्वेऽपि ब्रह्मानुभवान्यो(दान्यान् उ?)पकरणैरीश्वरसृष्टैर्भोगान् भुङ्क्त इति तन्वभाव इति सूत्रे प्रतिपादनात् विरुद्धाभिप्रायत्वस्यैव आविष्करणात् कथमविरोध इति चेन्न — औदासीन्यदशायामपि भगवान् मुक्तान् भोगं प्रापयतीत्युक्त्या विरुद्धाभिप्रायत्वानापत्तेरिति भावः । **तदधिकारवशात् तदाविष्कृतं** हीति । यत्र द्वितीयदर्शनाभावः प्रतिपाद्यते, 'यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत्', 'यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यती'त्यादौ — तत्र सर्वत्र सुप्तिं वा कैवल्यं वाऽधिकृत्यैव प्रवृत्तेः तद्विषयत्वमेव द्वितीयदर्शनाभावस्येति भावः । नन्विदं त्रिधाभवनादिकं न कैवल्यविषयमित्यत आह — **सगुणविद्याविपाक** इति ।

अन्येत्वित्यादि । **भृत्यादिशरीरवृत्तेरपुरुषार्थत्वा**दिति । मुक्तिदशायां स्वभोगोपकरणत्वेन सृष्टभृत्यादिशरीरवृत्तेरित्यर्थः । **ईश्वरानुसञ्चरणाये**ति । 'कामान्नी कामरूप्यनुसञ्चरन्' इति श्रुतिविहितेश्वरानुवर्तनायेत्यर्थः । **भृत्यादिभावस्यानिष्टत्वात् स्वयमेवाहंकारकारणाभावश्चे**दित्येकवाक्यम् ॥

इति अभावाधिकरणम् ।

---

## (६) जगद्व्यापाराधिकरणम्

---

**जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च ४-४-१७.**

भाष्ये **किं मुक्तस्यैश्वर्य**मिति । ईश्वरस्य कर्म ऐश्वर्यम् । "गुणवचनब्राह्मणादिभ्यः कर्मणि च" इति कर्मणि ष्यञ् प्रत्ययः । राज्ञः कर्म राज्यं प्रजापरि-

पालनमितिवत्। ततश्चायमर्थः – किं मुक्तस्य ईश्वरसाम्यसाधर्म्यादिशब्दैः प्राप्तं यदीश्वरकृत्यं तत् परमपुरुषासाधारणं जगत्सृष्टिस्थितिसंहाररूपं सर्वेशनमपि भवति, उत परमपुरुषानुभवान्तर्गतशरीरसर्गादिविषयमिति। **जगत्सृष्ट्यादि सर्वेश्वरत्वं परमपुरुषानुभवविषयम्**इति त्रीण्यपि व्याख्येयपदानि। **आत्माभिमानानुरूपत्वात्** [इति?]। यः स्वं स्वरूपं स्वातन्त्र्ययोग्यमिति मन्यते, तस्य स्वातन्त्र्यं पुरुषार्थः [इत्यर्थः?]।

**पूर्वपक्षमुक्त्वे**ति। अयं भावः – [1] परमसाम्यश्रुतेर्मुक्तस्य जगत्स्रष्टृत्वादिकमङ्गीकरणीयम्। न च, 'न तत्समश्चाभ्यधिकश्च दृश्यते' इति श्रुतिविरोधात् साम्यं केनचिदेव रूपेणेति संकोचनीयमिति वाच्यम् – साम्यश्रुतिविरोधात् तन्निषेधश्रुतिरेव संसारिषु ब्रह्मसाम्यनिषेधविषयेति सङ्कोचोपपत्तेः। अधिकारवाक्यावगतफलविरोधेन, 'को हि तद्वेद यद्यमुष्मिन् लोकेऽस्ती' त्यादेरिव स्तावकत्वकल्पनौचित्याच्च। अपिच साक्षादेव उपास्यगुणप्राप्तिः फलमवगम्यते, यथाक्रतुरित्यादिश्रुतौ। न च परब्रह्मण्यैश्वर्यमात्रमुपास्यम्; न तु निरङ्कुशं सर्वजगदैश्वर्यम्; अतो मुक्तस्य स्वसङ्कल्पसृष्टकतिपयवस्त्वैश्वर्यसिद्धावपि तत्क्रतुन्याय उपपद्यत इति वाच्यम् – 'सर्वस्य वशी सर्वस्येशानः' 'एष सर्वेश्वरः', 'कारणं तु ध्येयः सर्वैश्वर्यसम्पन्नः' इत्यादिश्रुतिषु निरङ्कुशसर्वैश्वर्यस्योपास्यत्वावगमात्। किञ्च मुक्तस्य सर्वेषु लोकेषु कामसंचारः श्रूयते। न तस्य तत्तल्लोकगतफलभोगार्थत्वकल्पनं युक्तम् – ब्रह्मानन्दमनुभवतोऽपि विषयान्तरलिप्सया सञ्चाराभ्युपगमे तस्य निरतिशयत्वभङ्गापत्तेः। अतो मुक्तस्य नियमनादिलीलार्थ एव लोकसञ्चारः। तस्मात् परमसाम्यतत्क्रतुन्यायसर्वलोकसञ्चारादिप्रतिपादनदर्शनात् मुक्तस्यापि परमेश्वरवत् सर्वजगत्स्रष्टृत्वादिकमङ्गीकर्तव्यम्। न च, 'यस्य यद्गुणप्राप्तिर्यदधीना, तस्य स गुणस्ततो न्यून' इति नियमोऽस्ति। गुरोर्विद्यामधिगतवतां शिष्याणां तद्वदेव व्याख्यातृत्वप्रबन्धनिर्माणादि-

1. इदं न चेत्यतः प्राक्तनं वाक्यं भ्रष्टमिति शिवार्कमणिदीपिकादर्शनेन औचित्यात् योजितम्।

दर्शनात् । [1]दृश्यन्ते च सामन्ताः पार्थिवैश्वर्याधीनैश्वर्यवन्तः पार्थिवेन स्पर्धमानाः तं विजयमाना अपि । तदिह निरतिशयैश्वर्यत्वात् परमात्मनो मा नाम भूवंस्तदधिकाः । तत्समानास्तु भविष्यन्त्येव । अतः ते स्वतन्त्रास्सन्तः जगत्सर्गेऽपि प्रवर्तेरन् । न च सृष्ट्यादिप्रकरणेषु परमात्मन एव प्रकृतत्वात् मुक्तानामसंनिहितत्वाच्च परमात्मन एव सृष्ट्यादिव्यापारः; न मुक्तानामिति वाच्यम् — श्येनप्रकरणे श्येनवत् इषुनामकतोरसंनिहितत्वेऽपि, 'समानमितरत् श्येनेन' इति साम्यवचनात् तदीयवैशेषिकाङ्गानामिषाविव मुक्तानां सर्वेश्वरसाम्यवचनात् तदीयसृष्ट्यादिव्यापाराणां तेषु सिद्ध्युपपत्तेः । किञ्च (७-३-१०. पू. मी.) गावामयनिकस्वर[2]सामवैश्वदेव्यामिक्षाद्यावापृथिव्यैककपालप्रकरणानाम्नातानामपि प्रकरणान्तरा[3]म्नातस्वरसामवारुणैककपालमैत्रावरुण्यामिक्षाणां सामदश्या[4]दिलिङ्गबलात् तदीयधर्मान्तरप्राप्तिवत् सर्वलोकादिसञ्चारादिलिङ्गबलात् मुक्तानामपि ऐश्वर्यजगद्व्यापारप्राप्त्युपपत्तेरिति ।

**जगद्व्यापारवर्जमिति** । "द्वितीयायाञ्च" इति णमुल् । तत्र, 'परीप्सायाम्' इत्येतत् प्रायिकमित्युक्तम्, "अनुदात्तं पदमेकवर्जम्" इत्यत्र वृत्तिव्याख्यातृभिः । यद्वा जगद्व्यापारं वर्जयतीति जगद्व्यापारवर्जम् । कर्मण्यण् । ऐश्वर्यमिति विशेष्यम् । अत एवोत्तरत्र, **जगद्व्यापारवर्जत्वप्रसङ्ग** इत्यादिनिर्देश उपपन्नः । णमुलन्तत्वे तु न भावप्रत्ययः स्यात् । रूपञ्चान्यथा स्यात् । भाष्ये **मुक्तस्यैश्वर्य**मिति । भवितुमर्हतीति शेषः । अतश्च धातुसंबन्धविहितस्य णमुलो नानुपपत्तिर्णमुलन्तत्वपक्षे इति द्रष्टव्यम् । भाष्ये **ततश्चेदं जगदीश्वरत्वरूप**मिति । नन्वनाद्यनन्तकल्पानुवृत्तसर्वप्रपञ्चजन्मादिकारणत्वं ब्रह्मलक्षणम् । मुक्तानां तु स्वमुक्तिप्राचीनकालवर्तिप्रपञ्चकर्तृत्वाभावात् न लक्षणाविरोध इति चेन्न — जगत्सृष्ट्यादिषु वर्तमानानां मुक्तानामैकमत्यनियमाभावात् कस्यचित् सिसृक्षायामन्यस्य सञ्जिहीर्षापि कदाचिद्भवेदिति

1. दृश्यन्त इत्यादि प्रवर्तेरन् इत्यन्तं शिवार्कमणिदीपिकायां नास्ति । कदाचित् तत्र स्थितमेव तत्र मुद्रणे भ्रष्टमपि स्यात्; स्वयं योजितमपि स्यात् ।

2. स्वरसामेति अहर्विशेषनाम ।

3. अष्टरात्रव्यहर्गणे स्वरसामा, अवभृथे वरुणैककपाल, आनूबन्ध्यास्थाने मैत्रावरुण्यामिक्षा

4. सामदृशं समुद्रशस्तोमकत्वमिह ।

किमपि कार्यं न निवर्तेत । न च सर्वेऽपि परमात्माधीना एव जगत्सर्गादौ प्रवर्तन्त इति ऐकमत्यमुपपद्यत इति वाच्यम् — तर्हि तदधीनत्वेन तत्साम्याभावेन साम्यश्रुतेः संकोचनीयत्वावश्यम्भावात्, भोगमात्रसाम्यमादायापि तुलाधृतयोः सुवर्णशिला-शकलयोर्गुरुत्वसाम्ये नाप्यत्यन्तसाम्यव्यवहारवत् साम्यव्यवहारस्य जगत्कारणत्वमन्तरेणा-प्युपपत्तेः न मुक्तस्य जगद्व्यापारप्रवृत्तिरिति भावः । न च तत्क्रतुन्यायविरोधः शङ्कनीयः, कारणत्वविशिष्टस्य ब्रह्मणः प्राप्यत्वाङ्गीकारेण विरोधाभावात् । भाष्ये **तदेकं सन्न व्यभवदिति** । तत् - ब्रह्म एकं-क्षत्रादिपरिपालयितृत्वादिशून्यं सत् न व्यभवत्— विभववन्नाभूत् । कर्मणे न पर्याप्तमासीदिति यावत् । श्रेयोरूपं प्रशस्तं रूपम्, अत्यसृजत — अतिशयेनासृजत् । देवत्रा— देवेष्वित्यर्थः । क्षत्राणि—क्षत्रियाणीत्यर्थः । कानि पुनस्तानि क्षत्रियाणीत्यत्राह—**इन्द्रो वरुण** इत्यादि । **कन दीप्ताविति धातु-रिति** । कन दीप्तिकान्तिगतिष्वित्यस्मात् भौवादिकात् ण्यत् प्राप्तः, "कन्यायाः कनीन च" इति निर्देशान्न भवति । अपितु यदेव भवति ।

**विकारावर्ति च तथा हि स्थितिमाह ४-४-१९**

**सर्वत्र कामचारादयो भवन्तीति** । हर्षोद्रेकात्, "एतत् साम गायन्नास्ते हावु हावु हावु" इत्यादिश्रुतिप्रतिपन्नसामगानवत् हर्षोद्रेकात् यथेष्टं सञ्चरतीत्यर्थः । तथा च "उपस्थितेऽतस्तद्वचनात्" इत्यत्र ब्रह्मोपसम्पत्तिः कामचारे हेतूकृता । अत एव निवृत्ततिरोधानस्य मुक्तस्य परमपदनिलयस्यैव सर्वविभूतियुक्तब्रह्मानुभव-संभवात् सञ्चरणं वृथेति शंकापि पराकृता । हर्षोद्रेकप्रयुक्तचेष्टायाः प्रयोजनोद्देश-प्रवृत्तत्वाभावात् । लब्धसविभूतिकब्रह्मानुभवस्यापि चक्षुरादीन्द्रियजन्यसाक्षात्कारादि-लिप्सया शरीरान्तरपरिग्रहयथेष्टसञ्चाराद्युपपत्तेः । अत्र **विकारावर्तीति** ब्रह्म निर्दिशतः सूत्रकृतोऽयं भावः — अक्षयविनाशशून्यब्रह्मानुभवरूपस्याऽऽनन्दस्य न वृद्धिह्रासौ । सततैकरूपत्वात् ईदृशं ब्रह्मानुभवतो मुक्तस्य नावाप्तव्य आनन्दोऽन्यो-ऽस्ति । येन ब्रह्मानुभवस्य आधिकारिकमण्डलस्थभोगापेक्षया न्यूनता कल्प्येतेति ॥

**भोगमात्रसाम्यलिङ्गाच्च ४-४-२१.**

'ननु, 'सह ब्रह्मणा विपश्चिते'त्यस्य भोग्यसाहित्यपरत्वेन भोगसाम्ये प्रमाणीकरणासम्भवात् [कथमेवम्?] इत्याशङ्क्य भोगसाम्यरूपसायुज्यप्रतिपादक-

श्रुतिवाक्यान्युदाहरति **स एवंविदित्यादिना** । 'पृथिव्यै चैनमग्नेश्च दैवी वागाविशति । सा वै देवी वाक्, यया यद्यदेव वदति तत्तद्भवति । दिवश्चैनमादित्याच्च दैवं मन आविशति । तद्वै दैवं मनः, येनानन्द्येव भवति; अथ न शोचति । अद्भ्यश्चैनं चन्द्रमसो दैवः प्राण आविशति । स वै दैवः प्राणः, यः सञ्चरंश्चासञ्चरंश्च न व्यथते न रिष्यति" इति प्राक्प्रस्तुतदैववाङ्मनःप्राणविज्ञानस्य फलमुच्यते – 'स एवंवित् सर्वेषामात्मा भवति यथैषा देवतैवम् । स यथैता देवताः सर्वाणि भूतान्यवन्ति, एवं हैवंविदं सर्वाणि भूतान्यवन्ती' ति । आत्मा भवति= आत्मवत्पूज्यो भवति । अवन्ति = पालयन्ति तर्पयन्ति । तेनो एतस्यै देवतायै सायुज्यं सलोकतां जयतीति = तेन यथोक्तज्ञानेन एतस्या देवतायाः सायुज्यं सलोकताञ्च प्राप्नोतीत्यर्थः । यद्यप्युदाहृतवाक्यानां न ब्रह्मविद्विषयत्वम्, तथापि तुल्यन्यायतया ब्रह्मविद्विषयेऽपि भोगसाम्ये लिङ्गतया पर्यवस्यतीति भावः ॥

अनावृत्तिश्शब्दादनावृत्तिश्शब्दात् ४ ४-२२.

**एतदैकार्थ्यं स्यादित्यभिप्रायेणे**ति । "पुनर्जन्म न विद्यत" इत्यत्र ब्रह्मणि दुःखालयत्वादिविशिष्टजन्मनिषेधे पर्यवस्यतीति भावः । **अनेनावृत्ति**रिति । जन्मसत्त्वेपि हेयास्पदजन्मनिषेध इत्यभ्युपगमन्यायेन पुनरावृत्तिसत्त्वेऽपि हेयास्पदावृत्तिर्नास्ति । अपितु कामनिमित्त एव सञ्चार इति भावः । **स्वेच्छा वा कर्म वे**त्यस्यायं भावः – मुक्तानां प्राक्तनपुण्यापुण्ययोः विद्यामाहात्म्यात् नाशेऽपि मुक्तिकालकृतभगवद्द्रोहादिपापवशेन, नहुषादेः पदच्युतिवत् अस्यापि पदच्युतिः सम्भाव्यत' इति ।

**सवितृमण्डलादिस्थाधीन(स्थानेषु)भोगोक्ते**रिति । सवितृमण्डलादिगतपरमात्मोपासनायत्तैश्वर्यत्वादितरेषां न निरवग्रहं मुक्तानामैश्वर्यमित्यर्थः । **किमर्थं सूत्रद्वयमिति** चेदिति । सूत्रद्वयस्य कोऽभिप्राय इति चेदित्यर्थः । **निर्विकारपररूपप्राप्तिरनुपपन्ने**ति । अयमर्थः – यथा सगुणब्रह्मोपासकानां सगुणे ब्रह्मणि वस्तुगत्या सदपि विकारावर्तिस्वरूपं न प्राप्यम्, अतत्क्रतुत्वात् – एवं सगुणे ब्रह्मणि स्थितमपि निरवग्रहैश्वर्यं सगुणोपासकानामप्राप्यम्, अतत्क्रतुत्वात् । सत्यकामत्वादिलक्षणैश्वर्यस्योपास्यत्वेऽपि निरवग्रहैश्वर्यविशिष्टमुपासीतेति श्रुत्यभावेन

निरवग्रहत्वांशस्यानुपास्यतया तत्प्राप्त्यभावात् न निरवग्रहैश्वर्यं सगुणोपासकस्येति। **निर्गुणप्राप्तावावृत्तिशंकाया अभावा**दिति। ततश्च सगुणप्राप्तिविषयमेवेति भावः।

अन्येत्वित्यादि। **नावर्तान्तरे पुनरावृत्ति**रिति। न च **इम**मिति शब्दवैयर्थ्यमिति शङ्कनीयम् — अनेकार्थास्पदत्वसूचनार्थत्वेन तत्साफल्यात्। **मुक्तप्राप्यत्वायोगा**दिति। यद्यपि यादवमते, 'आप्नोति स्वाराज्य' मित्यस्य न मुक्तविषयत्वम् — तथापि स्वाराज्यपदस्वारस्यात् मुक्तविषयत्वमभिप्रेत्य एतद्दूषण-मुक्तमिति द्रष्टव्यम्।

**भाष्योक्ताशेषार्थपरामर्शी**ति। अशेषार्थहेतुत्वपरामर्शीत्यर्थः। **सर्वं समञ्जस**मित्येतत् उक्तमिति पदाध्याहारेण उक्तं सर्वं समञ्जसमिति व्याख्याय सर्वशब्दस्यानुदाहृतश्रुत्यादिपरत्वमभिप्रेत्य द्रष्टव्यपदाध्याहारेण व्याचष्टे **सर्वशब्देना-नुदाहृते**ति। ननु परोक्तबाधकप्रमाणतर्काणां भाष्येऽनुपन्यस्तानां परिहारप्रकारस्या-प्रदर्शितत्वात् कथं सर्वसामञ्जस्यं द्रष्टव्यं स्यादित्याशङ्क्याह **उक्तार्थबाधकत्वेने**ति। भाष्योपन्यस्तैरेव न्यायैः परोत्प्रेक्षितानामुत्प्रेक्षिष्यमाणानाञ्च प्रमाणतर्काभासानां परिहारः सुगम इति भावः॥

इति जगद्व्यापाराधिकरणम्॥

---

इति तातयार्यचरणारविन्दचञ्चरीकैः वात्स्यानन्तार्यसेवासमधिगत-

शारीरकमीमांसाभाष्यहृदयैः परकालमुनिकृपालब्ध-

पारमहंस्यैः श्रीमद्ब्रह्मोपनिषद्भाष्यकारैः

षष्टिप्रबन्धनिर्माणालङ्कर्मीणैः

श्रीमद्रङ्गरामानुजमुनिभिः
अनुगृहीतायां श्रुतप्रकाशिकाव्याख्यायां
भावप्रकाशिकायां चतुर्थस्याध्यायस्य
चतुर्थः पादः ॥

॥ भावप्रकाशिका संपूर्णा ॥

शुभमस्तु

---

येनोपनिषदां भाष्यं रामानुजमतानुगम् ।
रम्यं कृतं प्रपद्ये तं रङ्गरामानुजं मुनिम् ॥

श्रीमते रङ्गरामानुजमहादेशिकाय नमः

श्रीमते निगमान्तमहादेशिकाय नमः

श्रीमते सुदर्शनार्यमहादेशिकाय नमः

श्रीमते भगवद्रामानुजाय नमः

श्रीभूसमेतश्रीनिवासपरब्रह्मणे नमः

श्रीरस्तु

